द्रष्टव्यमित्युक्तेः प्रतिज्ञामात्ररूपत्वात् प्रमाणाकाङ्क्षा भवति व्यपदिश्यत इत्युक्ते प्रमाणमेव दर्शितं भवति, अतोऽध्याहारस्य तुल्यत्वेऽपि निराकाङ्क्षायोजना वरमित्यभिप्रायेण व्यपदिश्यत इति पदं पूरकतयाऽध्याहृत्य व्याख्यातं व्योमवच्छब्दफलितं स्वाभाविकमिति । ज्यायानिति वृद्ध—शब्दस्य

भू० "ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्य" इति, अत उपासनार्थम् एवाल्पत्वव्यपदेशः तथा हि "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीते"ति सर्वोत्पत्तिप्रलयकारणत्वेन सर्वस्यात्मतयाऽनुप्रवेशकृतजीवयितृत्वेन च सर्वात्मकं ब्रह्म उपासीतेत्युपासनं विधाय "अथ खलु क्रतुमयोऽयं पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवती"ति यथोपासनं प्राप्यसिद्धिमभिधाय "स क्रतुं कुर्वीतेति गुणविधानार्थमुपासनमनूद्य "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तो वाक्यनादर"इति जगदैश्वर्य्यविशिष्टस्य स्वरूपगुणांश्चोपादेयान् प्रतिपाद्य "एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वे"त्युपासकस्य हृदयेऽणीयस्त्वेन तदात्मतयोपास्यस्य परमपुरुषस्योपासनार्थमवस्थानमुक्त्वा "एष

ज्यादेशे ज्यायः—शब्दनिष्पत्तिः "ज्य च वृद्धस्य चे"ति हि सूत्रं ननु "प्रशस्यस्य श्र"इति तन्निष्पत्तिः, वृद्धिश्च परिमाणाधिक्यमिह विवक्षितं न तु कालाधिक्यम् अत्राणीयस्त्वप्रतिसंबन्ध्याकारपरत्वाज्ज्यायश्शब्दस्य, अतः उपासनार्थमेवेति यतः पृथिव्यादिभ्योऽपि ज्यायस्त्वश्रवणादित्यर्थः । महत्तयाऽवगतस्य वस्तुन उपाध्युक्तिपूर्वकमुक्तं परिमाणमौपाधिकम् असम्भावितोपा-

धिकं परिमाणं स्वाभाविकमिति न्याय इह शिक्षितो भवति, अत्र हि हृदयमल्पत्वोपाधिभूतं श्रुतं न तु ज्यायस्त्वोपाधिः श्रुतः पृथिव्यादयस्त-दुपाधय इति नाशङ्कनीयं, ततोऽपि ज्यायस्त्वश्रवणान्न हि ततोऽधिकपरि-माणत्वं तदुपाधिकं भवितुमर्हति, अणीयस्त्वस्योपासनार्थत्वमुपासनप्रकर-णाविच्छेदेन स्वाभाविकमहत्त्वप्रपञ्चनेनोपपादयति "तथा ह्री"ति, सर्वा-त्मकं ब्रह्मोपासीतेति सर्वात्मकत्वं नोपास्यगुणतयोक्तं, तस्य वाक्यान्तरस्य-त्वात् अतो लक्षणतो धर्मनिर्देशः, तत्प्रयोजनञ्च शान्तिरूपाधिकारिवि-शेषणसिद्धिः भगवदात्मकत्वे हि शास्त्रतोऽवगते रागद्वेषाद्यभावरूपा शमा-दिनिष्पत्तिः स्यात्, यथोच्यते "सर्वभूतात्मके तात! जगन्नाथे जगन्मये । परमात्मनि गोविन्दे मित्रामित्रकथा कुत" इति शास्त्रजन्यज्ञानपूर्वकश-मादिनिष्पाद्यमेवोपासनं श्रुतन्तस्मादेवंविच्छान्तोदान्त उपरतस्तितिक्षुस्स-माहितो भूत्वाऽऽत्मन्येवात्मानं पश्येदिति, तस्मान्नोपासननिष्पाद्यश्शमः किन्तु शमनिष्पाद्यमुपासनं ब्रह्मात्मकत्वं सर्वस्य शास्त्रादवगम्य रागद्वेषा-

मू० स आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षा-ज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यस्सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर" इति अन्तर्हृदये ऽवस्थितस्योपास्यमानस्य प्राप्याकारन्निर्दिश्य एष स आत्मान्तर्हृदय एतद्ब्रह्मेत्येवम्भूतं परं ब्रह्म परम-कारुण्येनास्मदुज्जिजीविषयाऽस्मद्धृदये संनिहितमितीद-मनुसन्धानं विधाय "एतमितः प्रेत्याभिसम्भवितास्मी"ति यथोपासनं प्राप्तिनिश्चयानुसन्धानं च विधाय "इति यस्य स्यादद्धा न विचिकित्साऽस्ती"ति एवंविधप्राप्यप्राप्तिनि-श्चयोपेतस्योपासकस्य प्राप्तौ न संशयोऽस्तीत्युपसंहृतम्, अतः उपासनार्थमर्भकौकस्त्वमणीयस्त्वञ्च ॥

सू० सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

जीवस्येव परस्यापि ब्रह्मणः शरीरान्तर्वर्त्तित्वमभ्युपगतञ्चे तद्वदेव शरीरसम्बन्धप्रयुक्तसुखदुःखोपभोगप्राप्तिरिति चेन्न हेतुवैशेष्यात्, न हि शरीरान्तर्वर्त्तित्वमेव सुखदुःखोपभोगे हेतुरपि तु पुण्यपापरूपकर्मपरवशत्वन्तच्चाऽपहतपाप्मनः परमात्मनो न सम्भवति,

दिरहितस्सन् वक्ष्यमाणगुणकं ब्रह्मोपासीतेत्यर्थः सर्वात्मकं ब्रह्मेत्यनेन उपक्रमस्याणीयस्त्वविरोधित्वं दर्शितं प्रकरणाविच्छेदद्योतनाय। अथ खल्वित्याद्युच्यते उपासनमनूद्यते यथा अग्निहोत्रं जुहोतीति विहितहोमः दध्ना जुहोतीत्यत्र दध्नो होमसाधनत्वविधानार्थं जुहोतिपदेनानूद्यते तथेति भावः। जगदैश्वर्यविशिष्टस्येत्यनेन तज्जलानित्यस्यानुवादः स्वरूपगुणान्—अद्वारकगुणान् न हि ते प्रकृतिपुरुषद्वारकाः। निचाय्यत्वादित्यस्यार्थमाह "एवंभूतमि"ति, सर्वकर्मत्वादिगुणानां द्विरुक्तिरुपास्यतया प्राप्यतया च हृदि स्थितेर्द्विरुक्तिः हृदि स्थितिज्ञापनार्थं सौलभ्यानुसन्धानार्थं चेत्यर्थः। एवमत्र पूर्वत्रोत्तरत्र च विभुत्वाभिधानादर्भकौकस्त्वस्वरूपोपाधिकथनाच्च मध्यगतमल्पत्वमौपाधिकमित्ययमर्थः उक्तो भवति, सू० सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् । ८। शरीरान्तर्वर्तित्वं हृदयवर्त्तित्वं वैशेष्यं—विशेषः भोगप्रसञ्जने सुखग्रहणं सांसारिकसुखस्यादिमध्यावसानेषु दुःखमिश्रत्वेनापुरुषार्थत्वनिक्षेपनिबन्धनम् ।

सू० तथा च श्रुतिः "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीती"ति । सर्वत्रप्रसिद्ध्यधिकरणं समाप्तम् ॥

यदि परमात्मा न भोक्ता एवं तर्हि सर्वत्र भोक्तृतया प्रतीयमानो जीव एव स्यादित्याशङ्क्याह—

अत्त्रधिकरणम् । सू० अत्ता चराचरग्रहणात् ॥ ९ ॥

कठवल्लीष्वाम्नायते "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स" इति–

टी० तथा च श्रुतिः शरीरान्तर्वर्तित्वेऽपि फलसम्बन्धाभावाहेत्यर्थः अधिकरणार्थनिगमनम् अर्थसिद्धम्, अस्मिन्सूत्रे परस्मादन्यस्य जीवस्यानभ्युपगमे परस्य कर्मफलभोक्तृत्वप्रसङ्ग इति चोद्यपरिहर्तृत्वाभिमानेन कैश्चिदेवमुक्तम् आत्मान्तराभावो यद्यनवगतः तदा तन्निबन्धनचोद्यानुदय: अवगतत्वे किं शास्त्रादवगमः? उतास्मद्वाक्यात्? प्रथमे शास्त्रसिद्धात्मान्तराभाववत् परस्य भोक्तृत्वाभावोऽपि शास्त्रसिद्धतया स्वीकार्यः, न ह्यर्द्धजरतीयं न्याय्यं, द्वितीये तु भ्रान्तिसिद्धगगनतलमलिनतादिविकल्पो गगनमिवापारमार्थिकभोक्तृत्वं परमार्थमद्वितीयं परमात्मानं न स्पृशतीति तत्र प्रथमं शिरोऽनभ्युपगमनिरस्तं शास्त्रं जीवपरयोरनन्यत्वं प्रतिपादयतीति प्रतिवादिवाक्यादात्मान्तराभावमवगम्य तथा सति परस्य जीववद्भोक्तृत्वप्रसङ्गात् अयोग्यं जीवपरैकत्वं शास्त्रं न प्रतिपादयितुं शक्नोतीति हि प्रतिपादयितुरभिप्रायः अतोनार्द्धजरतीयम्, अपरमार्थत्वान्न स्पृशतीति वचनव्यक्तिर्दूषणस्य दुष्परिहरतामवगमयति जीववदुपभोक्तृत्वं हि चोदयित्राऽऽपादितं जीवस्य च भोक्तृत्वं त्वन्मते मिथ्या अतो गगने मालिन्यवत् परस्मिन्कल्पितमभोक्तृत्वं न तं स्पृशतीति वदता जीववद्भोक्तृत्वमभ्युपगतं स्यात्, न चांशभेदेन भोगव्यवस्था, वस्तुतो निरंशत्वात् सांशत्वेऽप्युपाधीनां गत्वरत्वया घटे चलति नभस्यल्पत्ववत्सर्वप्रदेशैरौपाधिकदोषान्वयप्रसङ्गात्, अतः परपक्षे भोक्तृत्वप्रसङ्गपरिहारोऽनुपपन्नः, सर्वत्रेतिसूत्रं स्ववाक्यस्यहेतुपरन्तदनन्तरवाक्यस्यहेतुं द्वितीयं तद्व्यतिरेकपरं तृतीयम्, उपसंहारस्यहेतुपरञ्चतुर्थं तत्र शङ्काविशेषपरिहारपरमनन्तरसूत्रद्वयं सूत्रद्वयोक्तहृदयावस्थानप्रयुक्तं चोद्यपरिहारपरन्तदनन्तरसूत्रद्वयमिति सूत्रसङ्गतिः । सर्वत्रप्रसिद्ध्यधिकरणं समाप्तम् ।

अथ उत्तराधिकरणसङ्गतिमाह–

"यदी" ति, सू॰ अत्ता चराचरग्रहणात् । ९ । कठेत्यादि यत्र स

इति यस्मिन् प्रकारे स्थितः यत्प्रकारविशिष्टः तत्प्रकारङ्को वेदेत्यर्थः विषयवाक्ये अत्तेत्यश्रवणादस्याः श्रुतेरेतत्सूत्राविषयत्वशङ्कां परिहर्त्तुमाह—

सू० अत्र ओदनोपसेचनसूचितोऽत्ता किं जीव एव? उत परमात्मे? ति सन्दिह्यते किं युक्तं जीव इति, कुतः भोक्तृत्वस्य कर्म्मनिमित्तत्वात् जीवस्यैव तत्सम्भवात् ।

टी० "अत्रे"ति, यस्येति षष्ठीनिर्दिष्टस्सम्बन्धः ओदनोपसेचनसामर्थ्याददनीयात्तृभावलक्षणविशेषे पर्यवसितः, तस्मादत्ता सूचित इत्यर्थः अग्निरत्ताद इति श्रुतिप्रसिद्धमस्यामुपनिषद्यग्नेः प्रस्तुतत्वं चावलम्ब्य अग्निर्जीवः परमात्मेति शिरस्त्रयं कल्पितम्परैः, चित्याग्नेः प्रकृतत्वेन साक्षादग्निप्रस्तावाभावात् अग्निप्रकरणस्य विच्छिन्नत्वादध्यात्मप्रकरणे विद्याङ्गकर्म्मोपयोगित्वमात्रं विनाऽग्निवैभवप्रतिपादनायोगाच्च तत्परत्वशङ्काया मन्दोत्थानत्वमभिप्रयता भगवता भाष्यकारेण शिरोद्वयं विचारकोटौ निवेशितम् अत्ता जीवः? उत परमात्मे? ति विचारः, तदर्थमिदमत्तृत्वं किं कर्मफलभोक्तृत्वरूपम्? उत जगदुपसंहर्तृत्वरूपं? किमत्र पूर्वप्रस्तुतब्रह्मप्रकरणं विच्छिन्नं नेति, ऋतं पिबन्ताविति किं बुद्धिजीवौ निर्दिश्येते? उत जीवपरौ? पिबन्ताविति निर्देशः किं छत्रिवल्लक्षणया शब्दशक्त्या वा प्रयोज्यप्रयोजकविषयतया नेयः? उत न तं दुर्दर्शं या प्राणेनेति जीवपरयोर्दर्शनं किं लक्षणामापादयति? उत नेति उपक्रमे येयं प्रेत इति प्रश्नः किं जीवविषयः? उत परविषयः? इति यदा जीवविषयः तदानीमुपक्रमविरोधेन तन्दुर्दर्शमित्यादिना ऋतपानादिनिर्देशस्य प्रयोज्यप्रयोजकविषयतापादनायोगात् ऋतं पिबन्ताविति वाक्यस्य बुद्धिजीवपरत्वेन ब्रह्मप्रकरणं विच्छिन्नमितीह प्रतिपन्नमत्तृत्वं कर्मफलभोक्तृत्वरूपमिति अत्ता जीव इति फलितं यदा येयमिति प्रश्नः परविषयः तदानीमुपक्रमानुरोधेन तं दुर्दर्शमित्यादिना ऋतपाननिर्देशस्य प्रयोज्यप्रयोजकविषयतापादनोपपत्तेः ऋतं पिबन्ताविति वाक्यस्य जीवपरमात्मपरत्वे तु ब्रह्मप्रकरणविच्छेदाभावादिह प्रतिपन्नमत्तृत्वं जगदुपसंहर्तृत्वमेवेत्यत्ता परमात्मेति फलितं, भोक्तृ-

त्वस्येति अदनोपसेचनसामर्थ्यावगतस्येति भावः । ततः किमित्यत्राह "जीवस्यैवे"ति, सर्वभूतान्तरात्माऽपहतपाप्मा न कर्मणा वर्धते नो कनीयान् अनश्नन्नन्य इति परस्य भोक्तृत्वं निषिद्धमिति भावः । तत्सम्भवात्कर्मफलभोक्तृत्वसम्भवात्, ब्रह्मक्षत्रशब्दवाच्यानां देहिनां स्त्रीपुंसात्मकत्वात्तत्तद्रूपजीवानां परस्परभोक्तृभोग्यभावस्सम्भवति जीवानां नित्यत्वादेव मृत्युवश्यत्वाभावान्मृत्युर्जीवस्य विधेय इत्यभिप्रायेण मृत्यूपसेचनवादोऽपि सम्भवतीति भावः । राद्धान्तमारभते ।

अत्रोच्यते

सू० अत्ता चराचरग्रहणात् ॥ १० ॥

भू० अत्ता परमात्मैव, कुतः चराचरग्रहणात्—चराचरस्य कृत्स्नस्य अत्तृत्वं हि तस्यैव सम्भवति न चेदङ्कर्मनिमित्तं भोक्तृत्वम् अपितु जगज्जन्मस्थितिलयहेतुभूतस्य परस्य ब्रह्मणो विष्णोः संहर्तृत्वं "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद"मित्यत्रैव दर्शनात्, तथाच मृत्युर्यस्योपसेचनमिति वचनात् ब्रह्म च क्षत्रं च इति कृत्स्नञ्चराचरं जगदिहादनीयौदनत्वेन गृह्यते, उपसेचनं हि नाम स्वयमद्यमानं सदन्यस्यादनहेतुरत उपसेचनत्वेन मृत्योरप्यद्यमानत्वात्तदुपसिच्यमानस्य कृत्स्नस्य ब्रह्मक्षत्रपूर्वकस्य जगतश्चराचरस्यादनमत्र विवक्षितमित्यवगम्यते, ईदृशं चादनमुपसंहार एव ।

टी० "अत्रे"ति, चराचरग्रहणादित्येतद्व्याचष्टे "चराचरस्ये"ति, कृत्स्नचराचरविषयं वा कतिपयविषयं वाऽस्तु ततः किं जीववैलक्षण्यस्य ? उक्तं हि कर्मफलभोक्तृत्वरूपमिदमत्तृत्वमित्यत्राह "न चेदमि"ति, कृत्स्नचराचरविषयम् अत्तृत्वं जीवस्यानुपपन्नमिति भावः । अत्तृत्वं विष्णुकर्तृकं चराचरसं-

हर्तृत्वमिति कथमवगम्यत? इत्यत्र हेतुद्वयमाह "सोऽध्वन"इति, प्रकरणे परमात्मवाचिपदश्रवणं प्रथमो हेतुः। द्वितीयं हेतुमाह "तथा च मृत्युरि"ति, कथं चराचरस्यादनीयत्वसिद्धिः, मृत्यूपसेचननिर्देशो हि मृत्युवश्यत्वाभावाभिप्रायस्सम्भवतीत्यत्राह "उपसेचनं ही"ति, यद्यप्युपसेचन-शब्दो गौण एव निर्वाह्यः तथाऽपि साधारणाकारेणोपचारो न घटते विशेषाकारसम्भवात्, न ह्यग्निर्माणवक इत्युक्तेऽग्निशब्दो द्रव्यत्वाभिप्रायो वर्णनीयः मृत्युरुपसेचनमबाधकश्च इत्युक्ते विशेषाकारोपस्थापनं न स्यात्, अबाधकत्वस्य लोष्टतृणादिसाधारणत्वात् स्वयमद्यमानत्वे सत्यन्यस्यादनहेतुत्वन्तु विशेषाकार इति तेनैवौपचारिकप्रयोगो युक्त इत्यर्थः। साधारणाकारं विहायावान्तराकारेण गौणोऽर्थो वर्णनीय इति न्यायोऽत्र व्युत्पादितः, परस्य जगत्संहारे मृत्व्यपेक्षाऽपि नास्तीत्यस्मदुक्त एवार्थ इति शङ्कां परिहरन् फलितमाह? "अत"इति, कृत्स्नजगत्संहारे मृत्द्यपेक्षाऽभावेऽपि मृत्योरप्यद्यमानत्वं व्यष्टिसंहारस्य तद्द्वारकत्वञ्चाभिप्रेतम। एवं मृत्यूपसेचनत्वसामर्थ्यात् ब्रह्मक्षत्र-शब्दौ कृत्स्नचराचरप्रदर्शनार्थाविति भावः। ततोऽपि किमित्यत्राह? "ईदृशमि"ति, सूत्रार्थमुपसंहरति-

सू० तस्मादीदृशं जगदुपसंहारित्वरूपम्भोक्तृत्वं परमात्मन एव॥

सू० प्रकरणाच्च ॥ ११ ॥

प्रकरणञ्चेदं परस्यैव ब्रह्मणः "महान्तं विभुमात्मानम्मत्वा धीरो न शोचति" "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन" "यमेवैष वृणुते स तेन लभ्यः तस्यैष आत्मा विवृणुते तनुं स्वामि"ति प्रकृतं क इत्था वेद यत्र स इत्यपि हि तत्प्रसादादृते तस्य दुरवबोधत्वमेव प्रस्तुतं पूर्वं प्रत्यभिज्ञायते।

टी० "तस्मादि"ति, सोऽध्वन इत्यादिवाक्ये विष्णोः श्रूयमाणत्वान्मृत्यूपसेचनसामर्थ्यसिद्धचराचरादनीयत्वाच्च कृत्स्नजगदुपसंहर्तृत्वरूप-

मेवेदं भोक्तृत्वमिति नेदं कर्मनिमित्तम्, अतः परमात्मैवात्तेत्यर्थः ॥ सू० प्रकरणाच्च । १० । स्ववाक्यस्यहेतुः पूर्वमुक्तः प्राकरणिकहेतुरत्रोच्यते अस्य सूत्रस्य न "जायते म्रियत" इत्यादिवाक्यं विषयतया परैरुपात्त तदयुक्तं, पित्रादिमरणस्येव परमात्मनो हन्यमानत्वस्य लोकप्रसिद्ध्यभावेन तन्निषेधायोगात् एतत्स्वरूपेण "न जायते म्रियते वा कदाचिदि" ति भगवद्गीतावचनेनास्य वाक्यस्य जीवपरत्वावगमात्, उभौ तौ न विजानीतो नायं हन्ति न हन्यत इत्यनन्तरोक्तहन्तृहन्तव्यताभ्रान्तेः परमात्माश्रयत्वायोगेन जीवपरत्वोपपत्तेश्च अतो "नायमात्मा" "महान्तं विभु" मित्यादिरेव विषयः एकप्रकरणत्वङ्कथमित्यत्राह "क इत्थे" ति, तत्प्रसादादृते तस्य दुरवबोधत्वस्य पूर्वोक्तस्य प्रत्यभिज्ञानादित्यर्थः । केश्चिदेवमुक्तम् "अशरीरं शरीरेष्वनवस्थेष्ववस्थितमि" ति, परमात्मनः शरीरेऽवस्थितिश्रवणात् यस्य ब्रह्म च क्षत्रं चेत्यनेन श्लोकेन शरीरे हृदयप्रदेशे वा परस्य स्थितिरिति जिज्ञास्यते अत एव हि क इत्था वेद यत्र स इति वचनं न पुनः कस्तं वेदेति तदनेन निरस्तं वेदितव्यं प्रश्नानुगुणप्रतिवचनादर्शनात् । ननु अनन्तरमेव दृश्यते– "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टा" विति चेत्सत्यं श्रूयते तत्र स्थानत्वेन किमुक्तं किं सुकृतस्य लोकः ? उत गुहा ? तत्र सुकृतस्य लोक इति शरीरं वाऽन्यद्वा उभयमपि शरीरसम्बन्धिदेशविशेषो न भवतीति तन्नोत्तरम्भवितुमर्हति, न च स्थानमात्रमेव पृष्टम् अशरीरं शरीरेष्वित्यनेनैव तत्सिद्धेः । अथ गुहा स्थानत्वेन निर्दिष्टा साऽपि पूर्वमेव ज्ञातेति न प्रश्नसम्भवः गुहाहितं गह्वरेष्ठं पुराणमिति हि श्रुतं यत्र स इत्येकवचनेन पृष्टे पिबन्ताविति द्विवचनोत्तरं चानुचितम्, अतः क इत्था वेदेति वाक्यस्य यथोक्त एवार्थः । उत्तरसूत्रस्य शङ्कामाह–

अथ स्यान्नायं ब्रह्मक्षत्रौदनसूचितः पुरुषोऽपहतपाप्मा परमात्मा अनन्तरम् "ऋतम्पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेता" इति कर्मफलभोक्तुरेव सहितो-

यस्याभिधानात्, द्वितीयश्च प्राणो बुद्धिर्वा स्यात् ऋतपानं हि कर्मफलभोग एव स च परमात्मनो न सम्भवति बुद्धिप्राणयोस्तु भोक्तृजीवस्योपकरणभूतयोः यथाकथञ्चित्पानेऽन्वयः सम्भवतीति तयोरन्यतरेण सद्वितीयो जीव एव प्रतिपाद्यते, तदेकप्रकरणत्वात्पूर्वप्रस्तुतोऽत्ताऽपि स एव भवितुमर्हतीति, अत्रोच्यते—

टी० "अथ स्या"दिति, प्रकरणविच्छेदं दर्शयति "ऋतं पिबन्तावि"-ति, लिङ्गाद्धि प्रकरणं दुर्बलम् ऋतपानलिङ्गबलात् प्रकरणविच्छेदोऽत्र प्रतिपाद्यते, यस्य ब्रह्म चेति वाक्यापेक्षया महान्तं विभुमित्यादि परमात्मप्रकरणविच्छेदो माभूत् ऋतपानान्वयवाक्यन्तु विच्छिन्नं स्यादिति शङ्कापरिहारार्थमनन्तरमित्युक्तं, महान्तमित्यादिवाक्यानां व्यवहितत्वाद्विच्छेदो युक्तः, न तु यस्य ब्रह्म चेति वाक्येनाव्यवहितस्य ऋतं पिबन्ताविति वाक्यस्येति भावः । द्वयोस्समप्राधान्यशङ्कापरिहारार्थं सद्वितीयस्येत्युक्तम्, अत्र भोक्तृजीवत्व ? कथं द्वितीयस्य च बुद्धिप्राणयोरन्यतरत्वं ? कथं कथं न परमात्मत्व ?-मित्यत्राह "ऋतपानं ही"ति, कर्मफलभोग एवेति न हि सर्वसंहर्तृत्वमुच्यत इतिवत् ऋतपानस्य निर्वाहान्तरं सुवचमिति भावः । ततः किमित्यत्राह "स चे"ति, भवदभिमतस्य कथं तत्सम्भव इत्यत्राह "बुद्धी"ति, यथाकथंचिदिति उपकरणत्वेनान्वय इत्यर्थः । करणे कर्तृत्वोपचारात् पिबन्तावित्युक्तमिति भावः । तयोरन्यतरेण सद्वितीयो जीव एवेति । अयमभिप्रायः यद्यपि प्रयोजककर्त्तरि परमात्मनि उपकरणभूतबुद्धिप्राणयोरन्यतरस्मिंश्च पिबन्ताविति निर्देशस्य क्लिष्टत्वं समानन्तथाऽपि बुद्धिप्राणयोरन्यतरपरिग्रहो न्याय्यः प्रथममेव हि पिबन्ताविति निर्देशेन भोक्ता जीवः प्रतिपन्न इत्यविगीतं, द्वितीयविशेषे हि विप्रतिपत्तिः तत्र गुहावच्छिन्नत्वं सुकृतसाध्यलोकवर्त्तित्वञ्च सर्वगतस्य परस्य स्वरसतो न सम्भवति अप्रकाशप्रकाशरूपार्थपरच्छायातप—शब्दाभ्यामचिदन्तःकरणचेतनोपस्थापनं युक्तन्तत्र

प्रथमत एवानेकैः पदैः स्वरसतः प्रतिपन्नस्य भोक्तुः प्राधान्येन प्रतिपाद्यत्वं यथा न विरुध्यते तथा द्वितीयो वक्तव्यः, द्वितीयस्य परमात्मत्वे भोक्तुः प्राधान्येन प्रतिपाद्यत्वं विरुध्यते उपकरणभूतान्तःकरणस्य द्वितीयत्वे भोक्तुः प्राधान्येन प्रतिपाद्यत्वञ्च विरुध्यत इति । अतः किमत्तुर्जीवभावस्येत्यत्राह "तदेके"ति, ।

सू० गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

भू० न प्राणजीवौ बुद्धिजीवौ वा गुहां प्रविष्टौ ऋतं पिबन्ताविपुच्येते अपि तु जीवात्मपरमात्मानौ हि तथा व्यपदिश्येते, कुतः तद्दर्शनात् अस्मिन् प्रकरणे जीवपरयोरेव गुहाप्रवेशव्यपदेशो दृश्यते परमात्मनस्तावत् "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितङ्गह्वरेष्ठं पुराणम् अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाती"ति जीवस्यापि "या प्राणेन सम्भवत्यदितिर्देवतामयी गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायते"ति कर्मफलान्यत्तीत्यदितिर्जीव उच्यते प्राणेन सम्भवतीति प्राणेन सह वर्त्तते देवतामयी इन्द्रियाधीनभोगा गुहां प्रविश्य तिष्ठन्ती हृदयपुण्डरीकोदरवर्त्तिनी या भूतेभिर्व्यजायत पृथिव्यादिभिर्भूतैः सहिता देवादिरूपेण विविधा जायते, एवञ्च सति ऋतं पिबन्ताविति व्यपदेशः छत्रिणो गच्छन्तीतिवत्प्रतिपत्तव्यः ।

टी० सू० गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् । ११ । ऋतं पिबन्ताविति निर्दिष्टव्यत्वेऽपि गुहां प्रविष्टाविति सूत्रयतोऽयम्भावः द्वितीयस्य पानं पक्षद्वयेऽपि क्लिष्टं बुद्धिप्राणयोरन्यतरपक्ष एव छायातपनिर्देशोलोकशब्दनिर्देशश्च घटताद्गुहाप्रवेशस्तु न कथं चिदपि घटते आत्मा गुहायां

निहितः यो वेद निहितं गुहायां गुहाहितं गह्वरेष्ठं विधूय कविरेतदनुतिष्ठेत् गुहाशयं पूः प्राणिनः सर्वएव गुहाशयस्येति परमात्मनो गुहाप्रवेशव्यपदेशप्रसिद्धिप्राचुर्यात् बुद्धिप्राणयोरन्यतरस्य तादृशप्रसिद्ध्यभावाच्चेति एतमेवाभिप्रायं हृदि निधाय सूत्रे प्रतिज्ञाखण्डं व्याचष्टे "न प्राणजीवावि"ति, जीवपरमात्मानौ हीति सूत्रे हि-शब्दः सौत्रार्थस्य परमसाध्योपपादकत्वसूचक इति भावः । सूत्रे प्रतिज्ञोपपादकं हेतुखण्डं व्याचष्टे "अस्मिन्नि"ति, परमात्मनस्तावदिति गुहाप्रवेशव्यपदेशो दृश्यत इत्यन्वयः तन्दुर्दर्शं द्रष्टुमशक्यं कुतः गूढान्तिरोधायककर्मरूपाविद्यादिना तिरोहितत्वादित्यर्थः गुहाहितं हृदयवर्त्तिनङ्गह्वरेष्ठम् आत्मान्तर्यामिणं परमव्योमनिलयं वा अध्यात्मयोगाधिगमेनेति परोपासनस्य जीवोपासनमङ्गत्वेन विधीयते जीवपरयोरुभयोरपि प्रकरणप्रतिपाद्यमानत्वात् जीवस्यापीति गुहाप्रवेशव्यपदेशो दृश्यत इत्यन्वयः । अदिति-शब्दस्य देवमातरि भूमौ च वेदप्रसिद्धेस्तद्व्यावृत्त्यर्थमवयवशक्त्या जीववाचित्वं दर्शयति "कर्मफलानी"ति, रूढार्थस्य गुहाप्रवेशासम्भवाद्योगपरिग्रह इति भावः । कर्मफल-शब्देन ऋत-शब्दार्थौ निदर्शितो भवति छत्रिणो गच्छन्तीति न्यायेन निर्वाहे लाक्षणिकत्वं स्यादिति मुख्यकल्पनिर्वाहमाह-

सू० यद्वा प्रयोज्यप्रयोजकरूपेण पाने कर्तृत्वं जीवपरयोरुपपद्यते।

सू० विशेषणाच्च ॥ १२ ॥

अस्मिन् प्रकरणे जीवपरमात्मानावेवोपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वविशिष्टौ सर्वत्र प्रतिपाद्येते ब्रह्मयज्ञन्देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेती"ति ब्रह्मयज्ञो जीवः ब्रह्मणो जातत्वात् ज्ञत्वाच्च तन्देवमीड्यं विदित्वा जीवात्मानमुपासकं ब्रह्मात्मकत्वेनानुगस्य इत्यर्थः तथा "यस्सेतुरीजानानामक्षरम् ब्रह्म यत्परम् अभयं तितीर्षतां पारन्नाचिकेतं शकेमही"त्युपास्यः परमात्मा उच्यते

नाचिकेतन्नाचिकेतस्य कर्मणः प्राप्यमित्यर्थः, "आत्मानं रथिनं विद्धि शरीरं रथमेव चे"त्यादिना उपासको जीव उच्यते तथा "विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम्पद"मिति प्राप्यप्राप्तारावभिधीयेते जीवपरमात्मानौ इहापि छायातपावित्यज्ञत्वसर्वज्ञत्वाभ्यान्ताविव ।विशिष्य व्यपदिश्यते ।

टी० "यद्वे"ति, मुख्यत्वेऽप्यस्वारस्यमात्रमस्ति लाक्षणिकत्वादपि तद्वरं बुद्धिप्राणयोरन्यतरपरत्वमिति वा ऽस्वारसं करणत्वेन हि तयोरन्वयः परमात्मनस्तु तत्प्रयोजको हेतुरित्युक्तप्रक्रियया प्रयोजककर्तृतायाः कर्तृत्वविशेषत्वात्तद्वाचित्वे पिबन्ताविति निर्देशः स्वरस इति भावः। पिबन्ताविति निर्देशस्वारस्यमुभयोश्चेतनत्वं घटते उभौ गुहां प्रविष्टाविति निर्देशो हि न दण्डसद्वितीयपुरुषविषयः अपि तु पुरुषद्वयपरः ब्रह्मविदो वदन्तीत्युक्तत्वाच्च जीवसद्वितीयपरमात्मपरत्वं युक्तम् । एवं निर्वाहद्वयेनापि प्रकरणविच्छेदकलिङ्गत्वेन पराभिमतस्य ऋतपानान्वयस्य अन्यथासिद्धिरुक्ता भवति गत्यभावे यदमुख्यन्तत्र द्वयोः प्रतिपन्नयोः प्रकरणानुगुणस्य ग्राह्यत्वं सजातीययोरेव द्विवचननिर्देशार्हत्वं चेति न्यायद्वयमत्र शिक्षितं सू० विशेषणाच्च तत्तद्वाक्योदितविशेषणान्तराणि च प्राप्यत्वप्राप्तृत्वोपास्यत्वोपासकत्वान्तर्भूतानीत्यभिप्रायेण उपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वविशिष्टावित्युक्तं ब्रह्मयज्ञमित्युपासकं वदति शकेम हि उपासितुं प्राप्तुमिति शेषः आत्मानं रथिनमित्यादि शरीराद्युपासनपरिकरसहितो जीव उच्यत इत्यर्थः। इहापि ऋतं पिबन्ताविति वाक्येऽपि अज्ञत्वसर्वज्ञत्वाभ्यामित्यनेन ज्ञाज्ञौ द्वावजाविति वाक्यं स्मारितम् उदाहृतवाक्यैकार्थ्याच्छायातप–शब्दयोरयमेवार्थः विशेषणाच्चेति सूत्रे छायातपत्वरूपविशेषणमपि विवक्षितमिति भावः। उत्तरत्र त्रयाणामेव चैवमित्यादिसूत्रेण वक्ष्यमाणत्वेपि चोद्यस्य बुद्धिस्थत्वात् संग्रहत्वाय तत्पूर्वकं परिहारमाह–

सू० अथ स्यात् "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके' इति जीवस्वरूपयाथात्म्यप्रश्नोपक्रमत्वात्सर्वमिदं प्रकरणं जीवपरमिति प्रतीयत इति, नैतदेवं न हि जीवस्य देहातिरिक्तस्यास्तित्वनास्तित्वशङ्कयाऽयं प्रश्नः तथा सति पूर्ववरद्वयवरणानुपपत्तेः तथा हि पितुः सर्ववेदसदक्षिणक्रतुसमाप्तिवेलायां दीयमानदक्षिणावैगुण्येन क्रतुवैगुण्यं मन्यमानेन कुमारेण नचिकेतसाऽऽस्तिकाग्रेसरेण स्वात्मदानेनाऽपि पितुः क्रतुसाद्गुण्यमिच्छता कस्मै मां दास्यसीत्यसकृत् पितरं पृष्टवता स्वनिर्बन्धरुष्टपितुर्वचनात् मृत्युसदनं प्रविष्टेन स्वसदनात्प्रोषुषि यमे तद्दर्शनात् नच तिस्रो रात्रीरुपोषुषा स्वोपवासभीततत्प्रतिविधानप्रवृत्तमृत्युप्रत्ते वरत्रये आस्तिक्यातिरेकात्प्रथमेन वरेण स्वात्मानं प्रति पितुः प्रसादो वृतः एतच्च सर्वं देहातिरिक्तमात्मानमजानतो नोपपद्यते, द्वितीयेन चवरेणोत्तीर्णदेहात्मानुभाव्यफलसाधनभूताग्निविद्या वृता, तदपि देहातिरिक्तात्मानभिज्ञस्य न सम्भवति अतस्तृतीयेन वरेण यदिदं व्रियते येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीय" इति, अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्व—

टी० "अथ स्यादि"ति, अस्मिन्प्रकरणे जीवपरमात्मनोर्विशेष्यत्वमयुक्तम् उपक्रमस्य जीवपरत्वादित्याह "येयं प्रेत" इति, परिहरति "नैतदि"ति, वरद्वयं किं? तद्वरणानुपपत्तिः कथ? मित्यत्राह "तथा ही"ति,

पितृप्रसादवरणस्य अग्निविद्यावरणस्य च प्रत्येकनिरपेक्षहेतुत्वसूचनार्थम् एतच्च सर्वं तदपीति द्विरुक्तम्, अत्र परमेति अत्र यदिदं क्रियते यद्वरणं क्रियते तत्र वरण इत्यर्थः मोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्व जिज्ञासयेति मोक्षज्ञानाय मोक्षानुबन्धिजिज्ञासयाऽयं प्रश्न इत्यर्थः। येयमित्यादिप्रश्नवाक्ये मोक्षस्वरूपः प्रश्नः कण्ठोक्तः प्रतिवचनप्रकारेणोपासनादिप्रश्नश्चार्थसिद्ध इत्यवगम्यते एवं विभागज्ञापनार्थं विज्ञानाय—

सू० जिज्ञासयाऽयं प्रश्नः क्रियते एवं च येयं प्रेत इति न शरीरवियोगमात्राभिप्रायम् अपि तु सर्वबन्धविनिर्मोक्षाभिप्रायं यथा न प्रेत्य सञ्ज्ञाऽस्तीति, अयमर्थः मोक्षाधिकृते मनुष्ये प्रेते सर्वबन्धविनिर्मुक्ते तत्स्वरूपविषयवादिविप्रतिपत्तिनिमित्तास्तिनास्त्यात्मिका येयं विचिकित्सा तदपनोदनाय तत्स्वरूपयाथात्म्यं त्वयाऽनुशिष्टोऽहं विद्यां जानीयामिति, तथा हि बहुधा विप्रतिपद्यन्ते केचिद्वित्तिमात्रस्यात्मनः स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते, अन्ये वित्तिमात्रस्यैव सतो ऽविद्यास्तमयम्, अपरे पाषाणकल्पस्यात्मनो ज्ञानाद्यशेषवैशेषिकगुणोच्छेदलक्षणं कैवल्यरूपम्, अपरे अपहतपाप्मानं परमात्मानमभ्युपगच्छन्तः तस्यैवोपाधिसंसर्गनिमित्तजीवभावस्योपाध्यपगमेन तद्भावलक्षणमोक्षमातिष्ठन्ते, त्रैय्यन्तनिष्णातास्तु निखिलजगदेककारणस्य अशेषहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य ब्रह्मणः शरीरतया प्रकारभूतस्यानुकूलापरिच्छिन्नज्ञानस्वरूपस्य

परमात्मानुभवैकरसस्य जीवस्यानादिकर्मरूपाविद्यातिरोहितस्वरूपस्याविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते, तत्र मोक्षस्वरूपं तत्साधनं च त्वत्प्रसादाद्विद्यामिति—

टी० "जिज्ञासये"ति, पृथगुक्तिः मोक्षप्राप्तिप्रश्ने प्राप्यप्रापकप्राप्तृप्रश्नोऽप्यन्तर्गत इति भावो दर्शितो भवति, निर्विशेषतापत्तिर्मोक्षश्चेत् वाक्यार्थज्ञानस्योपायता स्यात् उभयलिङ्गं प्राप्यञ्चेत् तथात्वेनोपासनमुपायः स्यात् अतो मोक्षस्वरूपज्ञानं तदनुबन्धिज्ञानापेक्षम् एवं प्रश्नस्य ज्ञातेतरविषयत्वात् प्रतिवचनानुरूप्याच्च यथोक्त एवार्थः प्रेतपदस्य उक्तार्थपरत्वे श्रुत्यन्तरसंवादं दर्शयति "यथे"ति, न प्रेत्य सञ्ज्ञाऽस्तीति श्रुतिः कः पुनर्वाक्यार्थः? न हि मनुष्यमात्रस्य बन्धविनिर्मोक्षसम्भव इत्यत्राह "अयमर्थ"-इति, अस्तिनास्त्यात्मिका अस्ति नास्तीत्येवमादिरूपा विद्यामिति पदस्यद्वितीयान्तकारकपदत्वशङ्कां निवर्त्तयन् व्याचष्टे "जानीयामि"ति, विप्रतिपत्तिं दर्शयति "तथा ही"ति, कारणशोधकगुणप्रतिपादकवाक्यार्थविशिष्टमाह "निखिलजगदेककारणस्ये"त्यादि, अनुकूलापरिच्छिन्नज्ञानस्वरूपस्येति स्वरूप-शब्दो धर्मधर्मिणोस्साधारणः तत्रेत्यादि परावरात्मतत्त्वविज्ञानं ज्ञातव्यपरावरात्मतत्त्वमुपदिश्येत्यर्थः तदपेक्षितांश्च विशेषान् प्राणाग्निविद्यादीन् । अधिकरणार्थमुपसंहरति "अत"इति, अत्तेति सूत्रे स्ववाक्यस्यहेतुरुक्तः प्राकरणिकपूर्ववाक्य—

भू० नचिकेतसा पृष्टो मृत्युः तस्यार्थस्य दुरवबोधत्वप्रदर्शनेन विविधभोगवितरणप्रलोभनेन चैनं परीक्ष्य योग्यतामभिज्ञाय परावरात्मतत्त्वविज्ञानम्परमात्मोपासनं तत्पदप्राप्तिलक्षणम्मोक्षं च "तं दुर्दर्शं गूढमनुप्रविष्टमित्यारभ्य "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम्पदमित्यन्तेन

उपदिश्य तदपेक्षितांश्च विशेषानुपदिदेशेति सर्वं समञ्जसम्
अतः परमात्मैवात्तेति सिद्धम्। अत्त्रधिकरणं समाप्तम्।

टी० स्वहेतुपरं द्वितीयम् अनन्तरवाक्यशङ्कापरिहारपरं तृतीयम् अतस्तत्र च-शब्दाप्रयोगः उपरितनवाक्यस्थहेतुभिस्तृतीयसूत्रार्थोपपादकं चतुर्थमिति सूत्रसङ्गतिः गुहां प्रविष्टावित्यादिसूत्रद्वयमधिकरणान्तरं केचिदाहुः तदयुक्तम् एकप्रकरणस्थवाक्यविशेषविषयाणामधिकरणान्तर-पदान्तराव्यवहितानामुपजीव्योपजीवकभावेन परस्परान्वितार्थप्रतिपाद-कानां सूत्राणां विषयवाक्यभेदे सत्यपि भिन्नाधिकरणत्वाभावात् ईक्षत्यान-न्दमयाधिकरणादिषु "तन्निष्ठस्य मोक्षोपदेशात्", "प्रतिज्ञाविरोधात्तद्धेतु-व्यपदेशाच्च" "मान्त्रवर्णिकमेव च गीयते" इत्यादीनां सूत्राणां पूर्वापरबहु-वाक्यविषयत्वेऽप्यव्यवहितत्वात् परस्परोपजीव्योपजीवकभावेन अन्विता-र्थपरतयाऽपि ह्येकाधिकरण्यम् अदृश्यत्वादिगुणः द्युभ्वाद्यायतनमित्यधि-करणयोस्तु एकप्रकरणस्यानेकवाक्यविषयत्वेऽपि भेद उपपद्यते स्पष्टास्प-ष्टलिङ्गकवाक्यविषयत्वेन एकस्मिन्नादे सङ्गत्यनुपपत्तेरुपजीव्योपजीव-कभावाभावाच्च, न हि यस्मिन्द्यौः पृथिवीत्यादिवाक्यस्य परमात्मपर-त्वमदृश्यत्वादिगुणकस्याक्षरात्परतः परस्य च परमात्मत्वोपपादकं परप्रकर-णेऽपि तच्छेषत्वेन अपरमात्मप्रधानादिप्रतिपादनोपपत्तेः अतः उपजी-व्योपजीवकभावाभावादधिकरणभेदस्तत्र युक्तः, इह तु पूर्ववाक्यप्रतिपन्न-मत्तृत्वं कर्मफलभोक्तृत्वरूपमित्यनन्तरवाक्येन प्रतिपन्ने सति तस्यात्तुः पर-मात्मत्वानुपपत्तेरनन्तरवाक्यस्य परमात्मपरत्वोपपादनमत्तुः परमात्मत्वो-पयुक्तमेव एवमेकप्रकरणस्थवाक्यविषयत्वे सति अधिकरणान्तरपादान्तरा-व्यवहितत्वे च सति परस्परोपयुक्तार्थप्रतिपादकानां सूत्राणामेकाधिकरण्य-मेवोचितम् अन्यथा ईक्षत्यधिकरणादिष्वपि एकैकाधिकरणस्थसूत्राणाम-धिकरणभेदकल्पना प्रसज्येत अतः एकाधिकरण्ये स्थित एवावान्तरशङ्कावि-शेषपरिहारपरं सूत्रद्वयं व्याख्यातव्यं व्याख्यातञ्च भगवता भाष्यकारेण सूत्रभङ्गी च एकाधिकरण्य एवोपपद्यते एतस्मिन् सूत्रे हि-शब्दपञ्चम्यन्त-

पदयोः श्रवणात्, गुहाप्रविष्टयोरात्मत्वसाधकं पञ्चम्यन्तपदम् अस्तुः परमात्मत्वोपपादकतां सूत्रार्थस्य दर्शयति हि-शब्दः सर्वगतस्य ब्रह्मणो गुहावच्छिन्नत्वायोगात् गुहा॰वासौ बुद्धिजीवौ न पर इति गुहां प्रतिसूत्रखण्डः पूर्वपक्षपर इति योजनाऽनुपपन्ना विकारशब्दान्नेति चेत् जीवमुख्यप्राणलिङ्गान्नेति चेत् सम्भोगप्राप्तिरिति चेदिति वत् पूर्वपक्षपरत्वद्योतकनिर्देशाभावात् अर्भकौकस्त्वादिति पूर्वाधिकरणसूत्रेण गुहावच्छेदनिबन्धनशङ्कायाः परिहृतत्वाच्च आत्मानाविति प्रतिज्ञायां हि-शब्दोपपादितायां तद्दर्शनादिति सूत्रखण्डस्य प्रतिज्ञान्तरमध्याहार्यं गुहावच्छेदोऽपि परस्योपपन्न इति अनध्याहरणे योजना सम्भवति चेत् सैव वरं तस्मात् पञ्चम्यन्तपदोपपादितसौत्रार्थस्य परमसाध्योपपादकद्योतको हि-शब्दः, अतश्च औचित्यात् कृतकरत्वात् सूत्रशैल्या च युक्तमेकाधिकरण्यं सूत्रचतुष्टयस्य द्वा सुपर्णाविति वाक्ये,

अन्तराधिकरणम् ।   सू० अन्तर उपपत्तेः ॥ १३ ॥

भा० इदमामनन्ति छन्दोगाः "य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमेतदभयमेतद्ब्रह्मेति, तत्र सन्देहः किमयमक्ष्याधारतया निर्दिश्यमानः पुरुषः प्रतिबिम्बात्मा? उत चक्षुरिन्द्रियाधिष्ठातृदेवताविशेषः? उत जीवात्मा? अथ—

टी० अत्रत्यन्यायातिदेशश्चानुपपन्नः स्थित्यदनाभ्याञ्चेति सूत्रेण निरूपयिष्यमाणस्यैतन्न्यायसापेक्षत्वाभावात्, न चास्याधिकरणस्य तद्वाक्यसापेक्षत्वादिह तत्प्रस्तावः अस्याधिकरणस्य अत्रत्यन्यायातिदेशसापेक्षवाक्यान्तरोपपाद्यत्वे अन्योन्याश्रयणप्रसङ्गात्तस्य वाक्यस्य बुद्धिजीवपरत्वमभ्युपगमवदभिमतं तच्चेह न वक्तव्यं प्रकृतानुपयोगात् ऋतं पिबन्ताविति वाक्यस्य जीवसद्वितीयपरमात्मविषयत्वे वाक्यान्तरस्य बुद्धिजीवपरत्वं कथमुपयुज्यते? तस्य च वाक्यस्य बुद्धिजीवपरत्वं पूर्वन्निरस्तं निरसिष्यते च अतो भाष्य-

सन्दर्शिता सरणिरेव साधीयसी अत्रधिकरणं समाप्तम् । अन्तर उपपत्तेः आन्तराधिकरणम् अत्र सङ्गतिः पूर्वोक्तया दिशा सिद्धेति न कण्ठोक्ता "गूढोऽत्मा न प्रकाशते तं दुर्दर्शं गूढमनुप्रविष्टं क इत्था वेदेति च परमात्मा दुर्दर्शश्चेत् सुदर्शनतया प्रसिद्धत्वेन निर्दिष्टो न परमात्मा भवितुमर्हतीति शङ्कायाः सङ्गतिः, विषयादिकं दर्शयति "इदमित्या"दिना, किमक्ष्याधारतया निर्दिश्यमानः प्रतिबिम्बचक्षुरधिष्ठातृजीवानामन्यतमः? उत परमात्मे? ति तदर्थं किममृतत्वादयो यथाकथंचिज्ज्ञेया? उत मुख्याः? कं ब्रह्मेति प्रकृतमेव ब्रह्म किमुपासनस्थानविधानार्थं निर्दिश्यते? उत नेति किं मध्यस्याग्निविद्यया ब्रह्मप्रकरणं विच्छिन्नम्? उत न किमग्निविद्या ब्रह्मविद्याङ्गम्? उत न किमग्निविद्याफलं ब्रह्मविद्याङ्गत्वानुगुणम्? उत नेति विचारः ।

सू० परमात्मे? ति किं युक्तं प्रतिबिम्बात्मेति, कुतः प्रसिद्धवन्निर्देशात् दृश्यत इत्यपरोक्षाभिधानाच्च, जीवात्मा वा तस्यापि हि चक्षुषि विशेषेण सन्निधानात्प्रसिद्धिरुपपद्यते उन्मीलितं हि चक्षुरुदीक्ष्य जीवात्मनः शरीरे स्थितिगती निश्चिन्वन्ति रश्मिभिरेषोऽस्मिन्प्रतिष्ठित इति श्रुतिप्रसिद्धा चक्षुःप्रतिष्ठो देवताविशेषो वा एष्वेव प्रसिद्धवन्निर्देशोपपत्तेरेषामन्यतम इति प्राप्ते प्रचक्ष्महे—अन्तर उपपत्तेः, अक्ष्यन्तरः परमात्मा कुतः "एष आत्मेति होवाचैतदमृतमेतदभयमेतद्ब्रह्म एतं संयद्वाम इत्याचक्षते एतं हि सर्वाणि वामान्यभि संयन्ति एष उ एव वामनीरेष हि सर्वाणि वामानि नयति एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाती"ति, एषां गुणानां परमात्मन्येवोपपत्तेः ।

टी० यदाननुगुणं तदाग्निविद्याया ब्रह्मविद्याङ्गत्वाभावेन ब्रह्मविद्याप्रकरणाविच्छेदेन पूर्वप्रकृतब्रह्मणा इह परामर्शाभावेन अमृतत्वादी

नाममुख्यतया प्रतिबिम्बादिष्वन्यतम इति सिद्धान्ते यदा त्वनुगुणं तदा- ङ्गत्वेनाग्निविद्याया ब्रह्मविद्याप्रकरणाविच्छेदकत्वाभावेन प्रकृतब्रह्मण इह परामर्श संभवेनामृतत्वादीनां च स्वतः प्राप्तमुख्यत्वसिद्धिः परमात्मेति फलितम्, अपरोक्षप्रसिद्धिर्यौक्तिकप्रसिद्धिः श्रुतिप्रसिद्धिश्चेति यथाक्रमं प्रति- बिम्बजीवादित्यानामनुसन्धेयाः य एष इति पदाभ्यां प्रसिद्धवन्निर्देशः, दृश्यत इत्यपरोक्षाभिधानम् अनेन सङ्गतिरभिप्रेता सन्निधानात्—सन्निधा- नावगमात् जीवस्य देहसन्निधेश्चक्षुष्यवगमादित्यर्थः । तदेव विवृणोति "उन्मीलितं हो"ति, अस्मिन् कर्मणि अस्य सामर्थ्यं दृष्टमित्युक्ते यथा तत्कर्म तत्सामर्थ्यसूचकमित्युक्तं भवति एवमक्षिणि दृश्यत इत्युक्ते देहे जीवावस्थानं चक्षुरधीननिश्चयमित्युक्तं भवतीत्यर्थः उपक्रमानुगुणमन्यन्नेयन्तस्मादमृतत्व- संयद्वामत्वाद्युक्तिः स्तुतिरूपा एष आत्मेतीतिकरणं चार्थात्तात्पर्यद्योतकं देवताविशेषः आदित्यः एष्वेव न तु परमात्मनि राद्धान्ते तु एषां गुणाना- मिति निरुपाधिकामृतत्वादयो न जीवादिषु सम्भवन्तीत्यर्थः । एषामिति उपक्रमस्थमेकलिङ्गमुपरितनानेकगुणविरोधे दुर्बलम् अत एव च नामृतत्वाद्यु- क्तिस्तुतिरिति भाव । इति होवाच इत्यब्रवीदित्यादिष्विति करणमर्थपरमेव दृष्टमिति चानुसन्धेयम् । उपपत्तेः अक्ष्यन्तरः परमात्मेत्यन्वयः तपद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनीव गच्छतीत्यर्थ वादोक्तं सर्पिरुदकादिनि- र्लेपत्वं हेतुं कृत्वा निर्लेपस्य परस्य निर्लेपे चक्षुषि स्थितिरुपपन्नेति वक्तुमयुक्तं काचादिभिस्सलेपे चक्षुषि निर्दोषस्य परस्य स्थित्यनुपपत्तेश्च वक्तुं शक्यत्वात् ॥

सू० स्थानादिव्यपदेशाच्च ॥ १४ ॥

स्रू० चक्षुषि स्थितिनियमनादयः परमात्मन एव "यश्चक्षुषि तिष्ठन्नित्यादिना व्यपदिश्यन्ते य एषोऽक्षिणि पुरुष इति स एव प्रतीयते अतः प्रसिद्धवन्निर्देशश्च परमात्मन्युपपद्यते तत एव दृश्यत इति साक्षात्कारव्यपदेशोऽपि योगिभि- र्दृश्यमानत्वात् उपपद्यते—

सू० सुखविशिष्टाभिधानादेव च ॥ १५ ॥

इतश्चास्याधारः पुरुषोत्तमः 'कं ब्रह्म खं ब्रह्मे'ति-प्रकृतस्य सुखविशिष्टस्य ब्रह्मण उपासनस्थानविधानार्थं संयद्वामत्वादिगुणविधानार्थं च य एषोऽक्षिणि पुरुष इत्यभिधानात् ।

टी० सू० स्थानादिव्यपदेशाच्च अनवस्थितेरिति व्यतिरेकस्य वक्ष्यमाणत्वात् चक्षुषि तिष्ठन्निति श्रुत्यनुरोधेन स्थान-शब्दः स्थितिपरतया व्याख्यातः न तु प्रदेशपरतया सौत्रस्यादि-शब्दस्यार्थमाह "स्थितिनियमने"ति, आदि-शब्दस्य नामरूपान्वयपरत्वेन व्याख्यानमयुक्तं जीवात्मनि सम्भवतस्तस्य परमात्मसाधकत्वाभावादिति भावः । स्थितिनियमनादय इत्यादि-शब्देन धारकत्वादिरभिप्रेतः अस्य हेतोस्सिद्धान्तसाधकत्वं दर्शयति "अतश्चे"ति, अनेन सिद्धान्तसाधकहेतुं वदति पूर्वपक्षहेतोरन्यथा सिद्धिश्च फलिता, तामाह "अतः प्रसिद्धवदि"ति, श्रुतिप्रसिद्धत्वात्प्रसिद्धनिर्देशः पूर्वपक्षिणोक्तोऽस्मिन् पक्षे सम्भवतीति पूर्वपक्षहेत्वन्तरस्य च अन्यथासिद्धिं सूत्राभिप्रेतां दर्शयति "अत एवे"ति, अत एव श्रुतिप्रसिद्धेरेव शास्त्रप्रतिपन्नं हि तत्त्वं योगिभिरुपास्यं दृश्यञ्च यत्तदद्रेश्यमित्युक्त्वा परिपश्यन्ति धीरा इत्युक्तेः, गूढोऽत्मा न प्रकाशते दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरित्युक्तेश्च अतोऽर्थतश्शब्दतश्च श्रुत्यन्तरप्रसिद्धेरिति भावः । यादसां समुद्रादिवत्स्थानितः परमात्मनोऽक्षिस्थानात् परिच्छिन्नत्वशङ्काव्युदासपरत्वं सूत्रस्यायुक्तम् अर्भकौकस्त्वादिति सूत्रेण तस्याः परिहृततया ऽत्र शङ्कानुदयात् अतः साधकान्तरप्रदर्शनपरमिदं सूत्रं प्रसिद्धवन्निर्देशापरोक्षाभिधानरूपपूर्वपक्षयुक्तिद्वयं वात्र्यान्यपरिहृतम् । सू० सुखविशिष्टाभिधानादेव च सुखविशिष्ट-सुखत्वविशिष्टं ढौकयोरिति वत् तद्गुणसारत्वादिति न्यायेन वा धर्मभूतसुखविशिष्टमित्यर्थः कं ब्रह्म ब्रह्मेत्युक्तस्य ब्रह्मणः पुनरभिधानं किमर्थमित्यत्राह "उपासनस्थाने"ति, एतदमृतमेतदभयमेतद्ब्रह्मेति ब्रह्म-शब्देन कं ब्रह्मेत्युक्तस्य ब्रह्मणः प्रत्यभिज्ञानादित्यर्थः । एवकारप्रयोजनमाह–

सू० एवकारो नैरपेक्ष्यं हेतोर्द्योतयति । नन्वग्निविद्याव्यवधानात् कं ब्रह्म खं ब्रह्मेति प्रकृतं ब्रह्म नेह सन्निधत्ते तथा हि अग्नयः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ब्रह्मविद्यामुपदिश्य अथ हैनङ्गार्हपत्योऽनुशशासेत्यारभ्य अग्नीनामुपासनमुपदिदिशुः, न चाग्निविद्या ब्रह्मविद्याङ्गमिति वक्तुं शक्यं ब्रह्मविद्याफलाननन्तर्गततद्विरोधिसर्वायुःप्राप्तिसन्तत्यविच्छेदादिफलश्रवणात्, उच्यते प्राणो ब्रह्मेतदमृतमेतदभयमेतद्ब्रह्मेत्युभयत्र ब्रह्मसंशब्दनात् "आचार्य्यस्तु ते गतिं वक्ते"त्यग्निवचनाच्च गत्युपदेशात् पूर्वं ब्रह्मविद्याया असमाप्तेस्तन्मध्यगताग्निविद्या ब्रह्मविद्याङ्गमिति निश्चीयते । अथ हैनं गार्हपत्योऽनुशशासेति ब्रह्मविद्याधिकृतस्यैवाग्निविद्योपदेशाच्च । किञ्च व्याधिभिः परिपूर्णोऽस्मि इति ब्रह्मप्राप्तिव्यतिरिक्तनानाविधकामोपहतिपूर्वकगर्भजन्मजरामरणादिभवामयाभितप्तायोपकोसलाय एषा सौम्य ते अस्मद्विद्याऽऽत्मविद्या चेति समुच्चित्योपदेशान्मोचैकफलात्मविद्याङ्गत्वमग्निविद्यायाः प्रतीयते ।

टी० "एवे"ति, पूर्वसूत्रद्वयोक्तं हेतुद्वयं व्यतिरेकोक्तिसापेक्षम् अनवस्थितेरसम्भवादिति हि वक्ष्यते अयन्तु हेतुर्व्यतिरेकोक्तिनिरपेक्ष इति भावः प्रकरणविच्छेदं दर्शयन् चोदयति "नन्वि"ति, कथमग्निविद्याव्यवधान?-मित्यत्राह "तथा ही"ति, तर्हि अङ्गाङ्गिभावेनाविरोध इत्यत्राह "न चे"-ति, फलवत्सन्निधावफलं तदङ्गमिति न्यायादिति भावः । अङ्गानामप्यङ्गिफलाविरुद्धफलमुपपद्यत इति शङ्कापरिहारार्थं तद्विरोधीत्युक्तं प्रकरणाविच्छेदेन परिहरति "उच्यत"इति, उभयत्र उपक्रमोपसंहारयोः ब्रह्मसंशब्दनम् अग्निविद्यायाः प्राग् ब्रह्मविद्याया असमाप्तिर्ब्रह्मविद्याधिकृतस्य अग्निविद्योपदेशः तापत्रयातुरस्य तु तच्छान्त्यर्थमुभयोः समुच्चित्योपदेशश्चेति

हेतुचतुष्टयेनाङ्गाङ्गित्वमाह "प्राणोब्रह्मेत्यादि"ना, अथ हैनङ्गार्हपत्योऽनुशशासेत्यत्र एनमित्यन्वादेशेन ब्रह्मविद्याधिकृतत्वे तात्पर्यं सिद्धं शब्दतः प्रकृतस्यैव पुनः परामर्शोऽन्वादेशः, न तु यथाकथं चित् बुद्धिस्थमात्रपरामर्श अत एनमिति निर्देशः श्रुतब्रह्मविद्यस्यैवाग्निविद्याधिकारित्वज्ञापकः समुच्चित्योपदेशादिति समुच्चय—शब्द उपदेष्टव्यत्वविशेषविवक्षया समसमुच्चयपरः । यद्वा सम्बन्धमात्रपरः स चाङ्गाङ्गिभावे पर्यवस्यति फलविरोधमभ्युपगम्य परिहरति—

सू० एवं चाङ्गत्वेऽवगते सति फलानुकीर्त्तनमर्थवाद इत्यवगम्यते, न चात्र मोक्षविरोधि फलं किञ्चिच्छ्रूयते "अपहते-पापकृत्यां लोकीभवति सर्वमायुरेतिज्योग् जीवति नास्या-परपुरुषाः क्षीयन्ते उपवयन्तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्चेत्यमीषां फलानां मोक्षाधिकृतस्यानुगुणत्वात् अपहते-पापकृत्यां ब्रह्मप्राप्तिविरोधिपापं कर्म्म अपहन्ति लोकी भवति तद्विरोधिनि पापे निरस्ते ब्रह्मलोकं प्राप्नोति सर्वमायुरेति ब्रह्मोपासनपरिसमाप्तेर्यावदायुरपेक्षितं तत्सर्वमेति ज्योगजीवति व्याधिभिरनुपहतो यावद्ब्रह्मप्राप्ति-जीवति नास्यापरपुरुषाः क्षीयन्ते अस्य शिष्यप्रशिष्यादयः पुत्रपौत्रादयश्च ब्रह्मविद एव भवन्ति नास्याब्रह्म-वित्कुले भवती"ति श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन श्रूयते, उपवयन्तं भुञ्जामोऽस्मिन् लोके अमुष्मिंश्च वयमग्नयस्त्वमेनमुपभुञ्जामः यावद्ब्रह्मप्राप्ति विघ्नेभ्यः परिपालयाम इति अतोऽग्निविद्यायाः ब्रह्मविद्याङ्गत्वेन तत्सन्निधानाविरोधात्सुखविशिष्टं प्रकृतमेव ब्रह्मेहोपासनस्थानविधानार्थं गुणविधानार्थं चोच्यते । नन्वाचार्य्यस्तु ते गतिं वक्तेति

गतिमात्रपरिशेषणाद्वाचार्य्येण गतिरेवोपदिश्यते इति गम्यते तत्कथं स्थानगुणविध्यर्थतोच्यते? तदधीयते

टी० "एवञ्चे"ति, द्रव्यगुणसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादिति हि कर्ममीमांसासूत्रम् । अथ फलविरोध एव नास्तीत्याह "न चे"त्यादि, श्लोक—उज्ज्वलः अनेन व्याध्याद्यनुपहतत्वं फलितं तदाह "व्याधादिभिरि"ति, कुले ब्रह्मविदुत्पत्तेर्ब्रह्मविद्यानुगुणफलत्वं दर्शयति "नास्ये"ति, भुञ्जामः—भुज पालनाभ्यवहारयोरिति धातोः भुजोऽनवने इत्यात्मनेपदम्, अतः परस्मैपदत्वादियन्धातुः पालनार्थ इत्यर्थः । परिपालयाम इति श्रुतौ उप—शब्दार्थः परिणोपसर्गेण सूचितः । विघ्ननिवारणपर्यन्तः किञ्चित्कारी ब्रह्मविद्यां प्रत्यग्निर्विद्याया अङ्गत्वनिर्वाहक इत्यभिप्रायः उक्तहेतुभिरेकप्रकरणत्वे स्थितेऽपि ब्रह्मणः पुनरव वक्तव्यत्वमुखेन चोदयति "नन्वि"ति, स्थानगुणयोर्विधेयत्वे सति हि तदर्थं पुनर्ब्रह्मणः अभिधानं तत्तु नास्ति पूर्वन्तयोराचार्येण वक्ष्यमाणत्वकथनात् स्थानादिपरवाक्यं न परमात्मविषयमिति अन्यपरमिदं वाक्यमित्यर्थः । परिहरति "तदभिधीयत" इत्यादिना, परिपूर्णोपदेशेऽनुपदेशो वा स्यात् कथं विकलोपदेशसम्भव? इत्याशङ्कां च परिहरन् स्थानगुणविध्यर्थतामुपपादयति—

सू० आचार्य्यस्तु ते गतिं वक्तेत्यस्यायमभिप्रायः ब्रह्मविद्यामनुपदिश्य प्रोषुषि गुरौ तदलाभादनाश्वासमुपकोसलमुज्जीवयितुं स्वपरिचरणप्रीता गार्हपत्यादयो गुरोरग्नयस्तस्मै ब्रह्मस्वरूपमात्रं तदङ्गभूताञ्चाग्निविद्यामुपदिश्य आचार्य्याद्धैव विद्या विदिता साधिष्ठं प्रापदिति श्रुत्यर्थमालोच्य साधुतमत्वप्राप्त्यर्थमाचार्य्य एवास्य संयद्वामत्वादिगुणकं परं ब्रह्म तदुपासनस्थानमर्चिरादिकां च गतिमुपदिशत्विति मत्वाऽऽचार्य्यस्तु ते गतिं वक्तेत्यवोचन्, गतिग्रहणमुपदेश्यविद्याशेषप्रदर्शनार्थमत एवाचार्य्योऽपि अहन्तु ते

तद्वक्ष्यामो" ति अभिधाय यथा "पुष्करपलाश आपो न श्लिष्यन्ते एवमेवं विदि पापं कर्म न श्लिष्यते" इत्युपक्रम्य संयद्वामत्वादिकल्याणगुणविशिष्टं ब्रह्माक्षिस्थानोपास्यमर्चिरादिकाञ्च गतिमुपदिदेश, अतः कं ब्रह्म खं ब्रह्मेति सुखविशिष्टस्य प्रकृतस्यैव ब्रह्मणोऽभिधानाद्‌य-मक्ष्याधारः परमात्मा ॥ ननु च कं ब्रह्म खं ब्रह्मेति परं ब्रह्माभिहितम् इति कथमवगम्यते? यस्येहाक्ष्याधारतयाऽभिधानं ब्रूषे यावता कं ब्रह्म खं ब्रह्मेति प्रसिद्धाकाशलौकिकसुखयोरेव ब्रह्मदृष्टिर्विधीयत इति प्रतिभाति नाम ब्रह्म मनो ब्रह्मेत्यादिवचनसारूप्यात्तत्राह—

सू० अत एव च स ब्रह्म ॥ १६ ॥

टी० "आचार्यस्त्वि" त्यादिना, साधिष्ठ—शब्दः साधुतमत्वशब्देन व्याख्यातः साधिष्ठमिति भावप्रधाननिर्देश इत्यर्थः । गतिग्रहणमिति उपदेश्यविद्याशेषमाचार्यो वक्तीत्याचार्य्यस्तु ते गतिं वक्तेति वदतामभिप्राय इत्यर्थः । तदेवोपपादयति "अत एवे" ति, सूत्रार्थं निगमयति "अत" इति, उपकोशलविषादपरिहारस्यापेक्षितत्वाद्गुरुमुखाच्छ्रवणेन साधुतमत्वायापुष्कलमुपदिष्टत्वाच्च गतिग्रहणस्य प्रदर्शनार्थत्वादित्यर्थः । उत्तरसूत्रशङ्कामाह "ननु चे" ति, यावता प्रत्युत वचनसारूप्यादिति "नाम ब्रह्म मनो ब्रह्मे" तिवद्दृष्टिविशेषणस्य ब्रह्मणः पश्चादुपादानं विशेष्यस्य प्रथमोपादानं च सारूप्यमभिप्रेतं प्राणश्चाहास्मै तदाकाशञ्चोचुरिति प्राणाकाश—शब्दाभ्यामिगमितं न तु ब्रह्म—शब्देन ततोऽपि दृष्टिविधिरिति भावः । तस्याप्युत्तरत्र परिहरिष्यमाणत्वात् सू० अत एव च स ब्रह्म अत एवेत्येतद् व्याचष्टे—

सू० यतस्तत्र "यदेव कं तदेव ख" मिति सुखविशिष्टस्याकाशस्याभिधानम् अत एव ख—शब्दाभिधेयः स आ-

काशः परं ब्रह्म, एतदुक्तं भवति अग्निभिः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेत्युक्ते उप[१]कोसल उवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामीत्यऽस्यायमभिप्रायः न तावत्प्राणादिप्रतीकोपासनमग्निभिरभिहितं जन्मजरामरणादिभवभयभीतस्य मुमुक्षोर्मे सोपदेशाय प्रवृत्तत्वात्, अतो ब्रह्मै वोपास्यमुपदिष्टं तच्च प्रसिद्धैः प्राणादिभिस्समानाधिकरणं ब्रह्म निर्दिष्टन्तेषु प्राण—

टी० "यतस्तत्रे"ति, निगमनवाक्यस्यपुँल्लिङ्गाकाश—शब्दकटाक्षेण सूत्रे स इति निर्देशः, अतः—शब्दः सुखविशिष्टाभिधानपरः । ननु अतः—शब्दः प्रकृतवाची प्राणो ब्रह्म कं ब्रह्मेति वाक्योदितस्य सुखविशिष्टस्य ब्रह्मणः स्थानगुणविध्यर्थमभिधानं हि प्रकृतं पूर्वसूत्रे तदेव सुखविशिष्टाभिधानमत्रात इति परामृश्यते, तत् कथं यदेव खं तदेव कमिति सुखविशिष्टाभिधानम् अतश्शब्दार्थतयोच्यते? उच्यते—सामान्येन सुखविशिष्टाभिधानं हेतुतया अतः—शब्देन परामृश्यते, तत्र सुखविशिष्टाभिधानव्यक्तिविशेषौ वाक्यद्वयस्थाविह सूत्रद्वयेऽप्यर्थवशाद्धेतुभूतौ यथा "नात्मा श्रुतेः" "ज्ञोऽत एवे"त्यत्र श्रुतिमात्रस्यातश्शब्दपरामृष्टत्वेऽप्यर्थसामर्थ्याच्छ्रुतिव्यक्तिविशेषसिद्धिः तद्वदिहापीति भाष्ये यदेव कं तदेव खमिति न वाक्योपादानम्, अपि त्वर्थोपादानं यद्वाव कं तदेव खमिति हि वाक्यं यदेव कं तदेव खमित्यत्राप्यन्योन्यदृष्टिविधिरेवास्तु नान्योन्यव्यवच्छेदकत्वं व्यवच्छेदकत्वे वा कथं ख—शब्दाभिधेयस्याकाशस्य परब्रह्मत्वमिति शङ्काद्वयं हृदि निधायाह "एतदुक्तमि"ति, अग्निभिरित्यादि दृष्टिविधित्वे प्राणो ब्रह्मेत्यस्य ज्ञातत्वं कं च तु खं चेत्यस्याज्ञातत्वं च नोपपद्यते दृष्टिविधित्वेन सर्वस्य ज्ञातत्वादिति भावः । प्राणो ब्रह्मे-

१ उपकोशल इति तालव्यघटितपाठोऽपि दृश्यते ।

त्यस्य ज्ञातत्वेऽप्यन्यस्याज्ञातत्वे च किं वैषम्यम्? आकाशस्य सुखविशिष्टत्वं च कथमि?त्यपेक्षायां विजानाम्यहमिति वाक्यस्याभिप्रायं विवृणोति "अस्यायमि"ति, न तावदित्यादि मुमुक्षोरुपदिष्टत्वात् प्रतीकोपासनव्युदासः, मुमुक्षोः प्रतीकोपासनं न कर्त्तव्यमिति ज्ञानं पूर्वमेव सम्भवति यथा मुमुक्षूपास्यं ब्रह्मेति ज्ञानं सम्भवति तद्वत् शरीरवाचिशब्दस्य शरीरिपर्यन्ताभिधायित्वं च देवमनुष्यादि-शब्देषु व्युत्पन्नमेव तथेत्यादि शरीरं च नियाम्यमिति लोकसिद्धत्वात् ज्ञातमेव यदेष आकाश आनन्द इत्यादिषु श्रुतिषु ब्रह्म-शब्देन विनाऽप्याकाशशब्दस्यानन्दविशेषणत्वेन प्रयोगदर्शनात् तस्य च महत्त्वोपस्थापनेनैवानन्दविशेषणत्वोपपत्तेर्ब्रह्मणोऽपरिच्छिन्नसुखरूपत्वप्रतीतिसम्भवादेवं विचार उपपद्यत इति भावः उपकोशलस्येत्यादि यद्वाव कन्तदेव खं यदेव खं तदेव कमित्यत्र न दृष्टिविधित्वं शङ्कनीयं तथा सति कं च तु खं च न विजानामीत्यस्योत्तरत्वायोगात् न ह्यर्थान्तरदृष्टिविध्यज्ञानस्य दृष्टिविध्यन्तरमुत्तरं भवतीत्यभिप्रायः, एवं कं च तु खं च न विजानामीत्यज्ञानवचनान्मुमुक्षोरुपदिष्टत्वात् अर्थान्तराज्ञानं प्रति दृष्टिविध्यन्तरस्य उत्तरत्वायोगाच्च यद्वाव कमित्यादिवाक्यस्य दृष्टिविधिपरत्वानुपपत्तेरन्योन्यव्यवच्छेदपरत्वं स्थितम्, अस्मद्विद्या आत्मविद्या चेति अग्नीनां वचने पूर्वप्रकृतविद्याया आत्मविद्यात्वावगमाच्च ब्रह्मणो दृष्टिविशेषणत्वशङ्का निरस्ता, तथा च सत्यस्य वाक्यस्यार्थमाह "ब्रह्मण" इति, निगमनवाक्यस्यार्थमाह "अत"इति, उक्तहेतुभिर्दृष्टिविधित्वायोगात् यद्वावकमिति वाक्ये खं कमिति वाक्ये खं कमिति-शब्दयोरन्योन्यव्यवच्छेदकत्वेनापरिच्छिन्नसुखरूपपरब्रह्मपरत्वादुपसंहारस्योपक्रमानुगुण्यस्य न्याय्यत्वात्, प्राणं चेत्युपसंहारवाक्यमुक्तार्थपरमित्यर्थः, प्राणं चेति प्राणो ब्रह्मेत्युक्तार्थस्य निगमनन्तदाकाशं चेति यद्वाव कमित्या-

मू० विशिष्टत्वं जगद्विधरणयोगेन वा प्राणशरीरतया प्राणस्य नियन्तृत्वेन वा ब्रह्मण उपपद्यत इति विजानाम्यहं यत्प्राणो ब्रह्मेत्युक्तत्वात्, तथा सुखाकाशयोरपि ब्रह्मणः

शरीरतया तन्नियाम्यत्वेन विशेषणत्वम्? उतान्योन्यव्यवच्छेदकतया निरतिशयानन्दब्रह्मस्वरूपसमर्पणपरत्वेन वा? तत्र पृथग्भूतयोः शरीरतया विशेषणत्वे वैषयिकसुखभूताकाशयोर्नियामकत्वं ब्रह्मणः स्यादिति स्वरूपावगतिर्न स्यात्, अन्योऽन्यव्यवच्छेदकत्वे अपरिच्छिन्नानन्दैकस्वरूपत्वं ब्रह्मणः स्यादिति अन्यतरप्रकारनिर्दिधारयिषया "कं च तु खं च न विजानामी"त्युक्तत्वात्, उपकोशलस्येममाशयं जानन्तोऽग्नयो "यद्वाव कं तदेव खं यदेव खं तदेव क"मित्यूचिरे, ब्रह्मणस्सुखरूपत्वमेवापरिच्छिन्नमित्यर्थः, अतः प्राणशरीरतया प्राणविशिष्टं यद्ब्रह्म तदेवापरिच्छिन्नसुखरूपं चेति निगमितं, "प्राणञ्च हास्मै तदाकाशं चोचु"रिति ।

दिवाक्यार्थनिगमनन्तदाकाशमित्यत्र प्रकृतपरामर्शिना तच्छब्देन सुखरूपत्वमभिप्रेतं खकयोरन्योन्यव्यवच्छेद्यव्यवच्छेदकत्वे विशेषणयोरन्योन्यविशेषणविशेष्यभावप्रसङ्ग इति चेत्ततः किं नीलोत्पलादौ नीलत्वोत्पलत्वादिधर्माणामन्योन्यविशेषणविशेष्यभावस्याप्रामाणिकत्वात्तत्रानिष्टत्वम् अत्र तु प्रामाणिकत्वान्नानिष्टत्वमिति भावः । कं ब्रह्म खं ब्रह्मेति वाक्यप्रतिपाद्यन्न सुखविशिष्टं ब्रह्मेति शङ्कापरिहारार्थं अत एव च स ब्रह्मेति सूत्रस्योत्थानं, तस्याश्शङ्काया अनेन परिहृतत्वं दर्शयति अतः कं ब्रह्मेति यद्वाव कमित्यादिवाक्यस्यापरिच्छिन्नसुखरूपब्रह्मपरत्वात् निगमनवाक्यस्यापि तदनुगुणार्थत्वात् कं ब्रह्म खं ब्रह्मेति वाक्ये परं ब्रह्मैव प्रकृतमित्यर्थः । ततः किमक्षिपुरुषस्य परमात्मपरत्वे? इति शङ्कायां सूत्रार्थस्य अधिकरणार्थोपपादकत्वं दर्शयति "तदेव चे"ति, अन्यथा वाक्यभेदश्च प्रसजेत सम्भवत्येकवाक्यत्वे वाक्यभेदोऽनुपपन्न इति भावः । इतीति कं ब्रह्मेति

प्रकृतस्यैवात्स्याधारत्वप्रतिपादनादक्षिपुरुषः परमात्मेत्यर्थः सू० श्रुतोपनिषत्कगत्यभिधानाच्च । १७ । श्रुतोपनिषत्कस्येति व्याख्येयं पदं समस्तमपि

सू० अतः कं ब्रह्म खं ब्रह्मेत्यत्रापरिच्छिन्नसुखं ब्रह्म प्रतिपादितमिति परं ब्रह्मैव तच्च प्रकृतं तदेव चात्राक्ष्याधारतयाऽभिधीयते इत्यक्ष्याधारः परमात्मा ।

सू० श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १७ ॥

श्रुतोपनिषत्कस्याधिगतपरमपुरुषयाथात्म्यस्यानुसन्धेयतया श्रुत्यन्तरप्रतिपाद्यमानार्चिरादिका गतिर्या तामपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीमुपकोशलायाक्षिपुरुषं श्रुतवते "ते अर्चिषमभिसम्भवन्ति अर्चिषोऽहरह्नः आपूर्यमाणः पक्षमित्यारभ्य चन्द्रमसो विद्युतन्तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्ते" इत्यन्तेनोपदिशतीत्यतोऽप्ययमक्षिपुरुषः परमात्मा ॥

सू० अनवस्थितेरसम्भवाच्च नेतरः ॥ १८ ॥

व्याख्यानार्थं यस्य निर्दिष्टम् उपनिषत्सु प्रतीकोपासनानामर्चिरादिगतिरहितानामपि विद्यमानत्वात्तद्व्यावृत्त्यर्थं तद्व्याचष्टे "अधिगते"ति, परमपुरुष-शब्देन "तं त्वौपनिषदं पुरुषं विद्मी"ति श्रुतिः स्मारिता, उपासनफलम् अर्चिरादिगतिर्न तु श्रवणफलं तत् कथं श्रुतोपनिषत्कगति? रित्युक्तमित्यत्राह "अनुसन्धेयतये"ति, तर्हि श्रुतब्रह्मण इति वक्तव्ये किमिति साधारणाधिकारश्रुतोपनिषत्कपदोपादान? मित्यत्राह "श्रुत्यन्तरप्रतिपाद्यमाने"ति, छान्दोग्य एव प्रदेशान्तरे "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसम्भवन्तीत्या"दिः वाजसनेयके "य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमित्युपासते तेऽर्चिषमेवाभिसम्भवन्तीत्यादिः, कौषीत-

कीनाम्पर्यङ्कविद्यायां "सोऽग्निलोकमागच्छतीत्यादिः, ताभिः प्रतिपाद्यमानेत्यर्थः, गतिचिन्तनस्य ब्रह्मविद्याङ्गत्वज्ञापकश्रुत्यन्तरज्ञापनार्थं श्रुतोपनिषत्कव्यपदेश इत्यभिप्रायः । अक्षिपुरुषस्याब्रह्मत्वे तत्क्रतुन्यायविरोध इत्यभिप्रायेणाह "अपुनरावृत्ती"ति, अर्चिषमेवेत्यतः पूर्वं "अथ यदु चास्मिञ्छव्यं कुर्वन्ति यदु च ने"ति वाक्यं तत्रास्मिन्नित्येकवचनं जात्यभिप्रायन्तेऽर्चिषमिति बहुवचनानुरोधात् पञ्चाग्निविद्योक्ता गतिरिहानूदिता अपुनरावृत्तिविधानार्थम् सू॰ अनवस्थितेरसम्भवाच्च नेतरः । १८ । अनवस्थितेरिति पदं व्याचष्टे—

भा॰ प्रतिबिम्बादीनामक्षिणि नियमेनानवस्थानादमृतत्वादीनां च निरुपाधिकानान्तेष्वसम्भवान्न परमात्मन इतरः छायादिरक्षिपुरुषो भवितुमर्हति प्रतिबिम्बस्य तावत्पुरुषान्तरसन्निधानायत्तत्वान्न नियमेनावस्थानसम्भवः, जीवस्यापि सर्वेन्द्रियव्यापारानुगुणत्वाय सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति चक्षुषि नावस्थानन्देवतायाश्च रश्मिभिरेषोऽस्मिन् प्रतिष्ठित इति रश्मिद्वारेणावस्थितिवचनाद्देशान्तरावस्थितस्यापीन्द्रियाधिष्ठानोपपत्तेर्न चक्षुष्यवस्थानम्

टी॰ "प्रतिबिम्बादीनामि"ति, असम्भवादिति पदं व्याचष्टे "अमृतत्वादीनामि"ति, असम्भवादित्यनेन अन्तर उपपत्तेरिति सूत्रार्थस्य व्यतिरेक उक्तः, अनवस्थितेरित्यनेन स्थानादिव्यपदेशाच्चेति सूत्रार्थस्य व्यतिरेको दर्शितः, इतरसूत्रोक्तहेतूनां व्यतिरेकोपपादनानपेक्षत्वात्, व्यतिरेकश्चार्थसिद्ध इति वा व्यतिरेको न प्रदर्शितः, अनवस्थानासम्भवौ प्रतिबिम्बादिषु दर्शयति "प्रतिबिम्बस्येत्यादि"ना, सर्वेन्द्रियकन्दभूते स्थानविशेष इति हृदीत्यर्थः "शतञ्चैका च हृदयस्य नाड्यस्सन्ततं सिराभिरित्युक्तप्रकारेण हृदयसम्बन्धनाडीसम्बन्धानीन्द्रियाणीत्यर्थः, एवं विधे हृदि जीवस्यावस्थानं "हृदि ह्ययमात्मे"ति श्रुतेरवगम्यते। ननु "नेत्रस्थं जाग्रतं विद्यात्

कण्ठे स्वप्नं विनिर्दिशेत् । सुषुप्तं हृदयस्थन्तु त्वरीयं मूर्धनि स्थितमि''ति श्रुत्या जीवस्य जागरावस्थायां नेत्रे स्थितिरुच्यते, न चेयं श्रुतिः परमात्मविषया तस्य जाग्रत्स्वप्नसुषुप्त्यसम्भवात्, उच्यते—नेत्रशब्दः सर्वेन्द्रियप्रदर्शनार्थः जाग्रतमित्युक्तत्वात्तदानीं सर्वेन्द्रियव्यापारदर्शनात् अणुपरिमाणस्य जीवस्य नेत्रमात्रवर्त्तित्वे सति शब्दादिज्ञानानुपपत्तेः तत्र स्थितत्वन्नामाधिष्ठातृत्वमात्रमुपसंग्राह्यम् अधिष्ठानस्यापि स्वाधारत्वन्तर्गतत्वात् अणोस्तस्य युगपदेव तत्तदिन्द्रियाधिष्ठानानुपपत्तौ पश्यतः शृण्वतो वा गमनादानोचितपादपाण्याद्यधिष्ठानानुपपत्त्या सर्वेन्द्रियकन्दभूते हृदि स्थितस्य धर्मभूतज्ञानप्रसरणद्वारेणाधिष्ठातृत्वमिति "नेत्रस्थं जाग्रतं विद्यादि''ति श्रुतेरर्थ इत्यभिप्रायेण सर्वेन्द्रियकन्दभूत इत्युक्तं, कण्ठे स्वप्नमिति कण्ठशब्दश्च कण्ठसमीपवर्त्तिनाडीविशेषपरः, "आसु तदा नाडीषु सुप्तो भवती''ति नाडीनां स्वप्नस्थानत्वश्रुत्यविरोधात्, इयञ्च श्रुतिः स्वप्नविषया "यदा सुप्तः स्वप्नं न कथञ्च न पश्यति अथास्मिन् प्राण एवैकधा भवती''त्यनन्तरवाक्यस्य सुषुप्तिस्थानपरत्वात् हृदयस्थमिति हृदयशब्दो हृद्गतपरमात्मपरः सता सोम्य तदा सम्पन्नो भवतीति परमात्मनः सुषुप्तिस्थानत्वावगमात् तत्र च सच्छब्दोहृदयस्थपरमात्मपरः, "आभिः प्रत्यवसृप्य पुरीतति शेते''इति सुषुप्तौ हृदयागमश्रवणात् तुरीयशब्दः उत्क्रान्त्यवस्थजीवपरः "तासां मूर्द्धानमभिनिःसृतैका तयोर्ध्वमायन्नि''ति चरमशरीरोत्क्रान्तावेव मूर्द्धशरीरसम्बन्धश्रवणादवस्थान्तरे तच्छ्रवणाभावाच्च, अतो जीवस्य चक्षुष्यनवस्थितिरुपपद्यते रश्मिद्वारेणेति खद्वादिद्वारकप्रासादशयनवद्रश्मिद्वारकं चक्षुष्यवस्थानमित्यर्थः, चक्षुष्यवस्थानं नाम चक्षुःसम्बन्धित्वं यद्वा यथा विद्यानिष्ठ इत्युक्ते तद्वशीकार उक्तः स्यात्, तथा चक्षुष्यवस्थानमपि तद्वशीकरणान्तर्नियमनं तच्च सद्वारकम्, अतो नावस्थितिरित्यर्थः । असम्भवमाह "सर्वेषामि''ति, जीवानां परमात्मोपासनेनाभयत्वामृतत्वादयो भवन्तीति तद्व्यावृत्त्यर्थं निरुपाधिका इत्युक्तम्, अधिकरणार्थं निगमयति "तस्मादि''ति,

**सू० सर्वेषामेवैषां निरुपाधिकाऽमृतत्वादयो न संभवन्त्येव,**

तस्मादक्षिपुरुषः परमात्मा स्थानादिव्यपदेशाच्चेत्यत्र यश्च-क्षुषि तिष्ठन्नित्यादिना

टी० अन्तर इति सूत्रे स्ववाक्यस्थहेतुरुक्तः श्रुत्यन्तरप्रदर्शनमुखेन स्ववाक्यस्थशङ्कापरिहारपरं द्वितीयसूत्रं, स्ववाक्यस्थशङ्कायां परिहृतायां प्राकरणिकपूर्ववाक्येन परमात्मपरत्वोपपादकं तृतीयं, पूर्ववाक्यस्य ब्रह्मपरत्वोपपादकं चतुर्थं, ततः पाश्चात्यवाक्येन साधकं पञ्चमं, षष्ठन्तु साध्यदार्ढ्याय पूर्वसूत्रद्वयोक्तहेतुव्यतिरेकप्रदर्शकमिति सूत्रसङ्गतिः। यादवप्रकाशीये तु अन्तर उपपत्तेरित्यादिसूत्रत्रयं छायापुरुषव्युदासपरं योजितं, ततोऽपि प्रतिबिम्बस्य जीवस्य च व्युदासपरत्वं युक्तम् अमृतत्वाभयत्वादीनां सर्वव्यावर्त्तनक्षमत्वात् तथाऽभ्युपगतत्वाच्च अत एव च स ब्रह्मेति सूत्रस्य च वैयर्थ्यं प्रसज्येत् अत एव छायानिराकरणहेतुभिरेव जीवोऽपि न भवतीति हि योजितं, पूर्वोक्तहेतुतो जीवव्यावर्त्तनसमर्थो न वा न चेत्तैरेवाक्षिपुरुषस्य परमात्मत्वसाधनमनुपपन्नं तद्व्युदासमर्थाश्चेत्तद्धेतूपादानादेव जीवव्यावृत्तिः सिध्यतीति तदनुवादेन परमात्मत्वसाधनाय सूत्रान्तरप्रणयनवैयर्थ्यमेव स्यात् प्राणो ब्रह्मेत्यादिवाक्यस्य दृष्टिविधिपरत्वव्युदासेन सुखविशिष्टब्रह्मपरत्वसमर्थनं चापेक्षितम्, अपेक्षितविधेरनपेक्षितविधानं च दुर्बलम् । किञ्च यथा ईक्षत्यधिकरणादिषु नाशब्दम् आनन्दमय इति अन्तरिति च परमात्मत्वं साध्यं प्रतिज्ञाते तथा तच्छेषभूतव्यतिरेकप्रतिज्ञानं क्वचित्क्रियते, यथा नानुमानमिति अवान्तरशङ्काविशेषपरिहारः क्वचित्प्रतिज्ञायते यथा विकारशब्दान्नेति अतोऽस्मिंश्चाधिकरणे अन्तर उपपत्तेरिति सूत्र एव परमात्मत्वसाध्यप्रतिज्ञा यथाऽन्तस्तद्धर्मोपदेशात् आकाशस्तल्लिङ्गात् प्राणस्तथानुगमादित्यादिषु आदित्यान्तर्वर्त्याकाशप्राणादीनुद्दिश्य परमात्मत्वं प्रतिज्ञातम्, एवमन्तर-शब्दनिर्दिष्टमुद्दिश्य परमात्मत्वं प्रतिज्ञातमिति हि स्वरसतः प्रतीयते, अतो ब्रह्मणः प्रतिपाद्यत्वन्न पुनः प्रतिज्ञातव्यम्, इह च परमात्मत्वसाध्योपपादकतयोदाहृतस्य पूर्ववाक्यस्य परमात्मपरत्वशैथिल्ये शङ्किते तत्परिहाराय पूर्ववाक्यप्रतिपाद्यस्य परत्वं प्रति-

पाद्यते चेदुच्यते प्रयोजनवत्त्वात् तदभावात्पुनः प्रतिज्ञानं तन्मते विफलम् अन्तर इत्यात्ममात्रं प्रतिज्ञातञ्च परमात्मेति चेत् तत् सूत्रशैलीविरुद्धत्वादमृतत्वादिधर्माणां जीवव्यावर्त्तनमत्वाच्चानुपपन्नं सुखविशिष्टस्येह प्रत्यभिज्ञानुपपत्तिपरिहारपरमत एव चेति सूत्रमिति चेत् न सुखविशिष्टाभिधानादेव चेति सूत्रेणैव पूर्वत्र चात्र ब्रह्मसंशब्दनादीनां तत्प्रत्यभिज्ञोपपत्तीनां विवक्षितत्वात्, न हि न्यायनिबन्धनात्मकसूत्रं प्रतिज्ञामात्रपरं छायापुरुषनिराकरणहेतुतयोक्तानाममृतत्वाभयत्वादीनामक्षिपुरुषे सुखविशिष्टब्रह्मप्रत्यभिज्ञोपपादकत्वायोगात् प्रत्यभिज्ञानुपपत्तिपरिहारपरत्वमयुक्तं, प्रत्यभिज्ञोपपादनप्रकारश्चानुपपन्नः पूर्ववाक्ये "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति प्राणस्य सुखविशिष्टाकाशस्य चोक्तत्वात्, श्रुत्यन्तरे दक्षिणवामयोरक्ष्णोरिन्द्र--शब्दवाच्यप्राणस्य तत्पत्न्याश्च स्थित्यवगमाद्वाक्छक्तिरूपपरमाकाशयत्नाकप्राणोऽयमक्षिपुरुषः पूर्ववाक्योक्तः प्रत्यभिज्ञायत इत्युक्तं, वाङ्मयाज्जातस्य प्राणस्य वाङ्मयपत्नीकत्वायोगादिति श्रुतिव्याकोपस्य ज्योतिरधिकरणे दर्शिततया अस्यार्थस्यानुपपन्नत्वं स्फुटम् । किंच इयन्तावत्सूत्रकारशैली यत्सर्वेष्वधिकरणेषु एकस्मिन्नेव सूत्रे परमसाध्योऽर्थः प्रतिज्ञायते, स्थानादिव्यपदेशाच्चेतीदमपि य एषोऽन्तरक्षिणि पुरुषो दृश्यत इति

सू० छन्नित्यादिना प्रतिपाद्यमानश्चक्षुषि स्थितिनियमनादिकं परमात्मन एवेति सिद्धं कृत्वाऽक्षिपुरुषस्य परमात्मत्वं साधितम् । इदानीं तदेव समर्थ्यते—

टी० श्रुतौ चक्षुष्यस्थानपरिदृश्यमानत्वव्यपदेशात्, परमात्मत्वसाधकमिति व्याख्यातं न्नतोऽप्यन्तर्यामिब्राह्मणविषयतया व्याख्यानं युक्तम् उपजीवकवाक्यादपि उपजीव्यवाक्यप्राबल्यात् 'य एषोऽन्तरक्षिणीति वाक्यं ह्यन्तरादित्यविद्यातुल्ययोगक्षेमन्तत्र च देहविशेषयोगाधीना जीवत्वशङ्का निरस्ता, अतस्तत्रापि प्रसिद्धवन्निर्देशदृश्यत्वव्यपदेशाभ्यां जीवविषयत्वे शङ्कितेऽन्तर्यामिब्राह्मणादिकमेव शरणम्, अत एव ह्यादित्यान्तर्वर्त्तिनो

जीवादन्यत्वसिद्धये भेदव्यपदेशाच्चान्य इति तद्विषयं सूत्रं प्रणीतं, तत्र च नियन्तृत्वादिभिः परमात्मत्वं स्फुटम्, अतः उपजीव्यवाक्यविषयतया व्याख्यानं युक्तम् अनन्तराधिकरणे अन्तर्यामिणः परमात्मत्वसाधनं चास्य सूत्रस्य अन्तर्यामिब्राह्मणविषयतां द्योतयति प्रयुक्तेऽर्थे ऽसिद्धिशङ्कापरिहारो हि यौक्तिकशैली, न च वाच्यन्त्वदुदाहृतवाक्यमप्युपपाद्यत्वाद्दुर्बलमिति तस्य वाक्यान्तरोपजीव्याभावात् तत्खल्वनुग्राहकन्यायमात्रापेक्षम्, अतो न्यायानुगृहीतवाक्यान्तरसापेक्षवाक्यविषयत्वाद्वाक्यान्तरनिरपेक्षवाक्यविषयत्वं वरं, श्रुतोपनिषत्कगत्यभिधानाच्चेत्यत्राक्षिपुरुषविद्याया गतिचिन्तनानुवादेन तदङ्गत्वमुच्यत इत्युक्तम्, तदप्ययुक्तम् अक्षिपुरुषस्य परमात्मत्वनिर्णयात् परमात्मोपासनस्य अनुष्ठेयान्तरं प्रत्यङ्गत्वायोगात् गतिचिन्तनस्य सर्वपरविद्याङ्गत्वाच्च गत्यनुवादस्य प्रयोजनम् अपुनरावृत्तिविधानमित्युक्तं, न त्वङ्गान्तरविधानमतो यथोक्तार्थपराण्येव सूत्राणि, अन्तराधिकरणं समाप्तम् । उत्तराधिकरणसङ्गतिमाह—

अन्तर्य्याम्यधिकरणम् ।

सू॰ अन्तर्य्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ १९ ॥

भा॰ काण्वा माध्यन्दिनाश्च वाजसनेयिनः समामनन्ति "यः पृथिव्यान्तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष त आत्माऽन्तर्य्याम्यमृत" इति एवमप्स्वग्न्यन्तरिक्षवाय्वादित्यदिक्चन्द्रतारकाऽऽकाशतमस्तेजस्सु दैवतेषु च सर्वेषु च भूतेषु प्राणवाक्चक्षुःश्रोत्रमनस्त्वग्विज्ञानरेतःस्वात्मात्मीयेषु च तिष्ठन्तं तत्तदन्तरभूतं तत्तदवेद्यं तत्तच्छरीरकं तत्तद्यमयन्तं कञ्चिन्निर्दिश्य "एष त आत्माऽन्तर्य्याम्यमृत" इत्युपदिश्यते, माध्यन्दिनपाठे तु "यस्सर्वेषु लोकेषु तिष्ठन्

सर्वेषु वेदेषु यस्सर्वेषु यज्ञेष्वि"ति च पर्य्यायाः, यो विज्ञाने तिष्ठन्नित्यस्य पर्य्यायस्य स्थाने य आत्मनि तिष्ठन्निति पर्य्यायः स त आत्माऽन्तर्य्याम्यमृत इति च विशेषः तत्र संशय्यते किमयमन्तर्यामी प्रत्यगात्मा ? उत परमात्मे ? ति किं युक्तं प्रत्यगात्मेति ।

टी० सू० अन्तर्याम्यधिदेवाधिलोकादिषु तद्धर्मव्यपदेशात् । १९ । विषयं शोधयति काण्वेत्यादिना वेदयज्ञ-शब्दौ तदभिमानिदेवताविशेषपरौ गुणक्रियादेरद्रव्यतया शरीरत्वायोगात् अद्रव्यस्यापि शरीरत्वायोगात् अद्रव्यस्याऽपि शरीरत्वमनेनैव प्रयोगेण कल्प्यतामिति चेत् अनन्ययासिद्धस्यैव प्रयोगस्य कल्पकत्वात्, अभिमानिदेवतापरत्वेनापि द्रव्यपरत्वमेवोचितमिति संशयमाह "तत्रे"ति, प्रत्यगात्म-शब्द ऐश्वर्य्ययोगविशेषनिमित्तप्रकर्षादुत्कृष्टजीवपरः समस्तचेतनाचेतनान्तर्यामित्वेन श्रूयमाणस्यापि कथं जीवत्वशङ्कोत्थानम्? उच्यते द्रष्टा श्रोत्रेत्यादिशब्देन करणायत्तज्ञानवत्ताप्रतीतिबलात् तदमृतत्वादिलिङ्गमात्मनि तिष्ठन्नित्यादिव्यतिरेकनिर्देशस्य नियमस्य चामुख्यत्वशङ्कयाधिकरणोत्थानमिति, किमन्तर्यामी जीव? उत परमात्मे? ति प्रथमविचारः तदर्थमात्मनि तिष्ठन्नित्यादिकं मुख्य? मुतामुख्यं तदर्थं द्रष्टृत्वं किं जीवस्यैव? उतान्तर्यामिणोऽपि सम्भवतीति, तदर्थं द्रष्टा श्रोतेति किं करणायत्तज्ञानवत्त्वमुच्यते? उत रूपादिसाक्षात्करण इति तदर्थं रूपादिसाक्षात्कर्त्ता चेत् द्रष्ट्रन्तरनिषेधः किं नोपपद्यते? उतोपपद्यत? इति विचारः नोपपद्यत इति पूर्वःपक्षः उपपद्यत इति सिद्धान्तः, यदा निषेधोऽनुपपन्नः तदा द्रष्टृत्वादिकं करणायत्तज्ञानवत्त्वमिति तस्य जीवात्मन्येव सम्भवात् आत्मनि स्थित्यादिकममुख्यमित्यन्तर्यामी जीव इति स्यात्, यदा निषेध उपपन्नः तदा रूपादिसाक्षात्कारस्य द्रष्टृत्वादेः परमात्मनि सम्भवेन आत्मनि स्थित्यादीनां मुख्यतया नेयत्वादन्तर्यामी परमात्मेति फलितं स्यात् ।

सू० कुतः वाक्यशेषे द्रष्टा श्रोतेति करणायत्तज्ञानताश्रुतेः, एवं द्रष्टुरेवान्तर्यामित्वोपदेशान्नान्योऽतोऽस्ति द्रष्टेति द्रष्ट्रन्तरनिषेधाच्चेत्येवं प्राप्तेऽभिधीयते सू० अन्तर्य्याम्यधिलोकादिषु तद्धर्मव्यपदेशात् । १९ । अधिदैवाधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणोऽन्तर्य्याम्यपहतपाप्मा परमात्मा नारायणः काण्वपाठसिद्धेभ्योऽधिदैवादिमद्भ्यो वाक्येभ्योऽधिकान्यधिलोकादिमन्ति वाक्यानि माध्यन्दिनपाठे सन्तीति ज्ञापनार्थमधिदैवाधिलोकादिषु इत्युभयोरुपादानं तदेवमुभयेष्वपि वाक्येष्वन्तर्य्यामी परमात्मेत्यर्थः, कुतः तद्धर्मव्यपदेशात्—परमात्मधर्मो ह्ययं यदेक एव सन् सर्वलोकसर्वभूतसर्वदेवादीन्नियमयतीति ।

टी० कुत इति प्रत्यगात्मनोऽप्यन्तर्यामित्वेन श्रुतस्य कथं प्रत्यगात्मत्वमिति भावः । तत्र जीवत्वे हेतुमाह "वाक्यशेष" इत्यादिना, ज्ञानस्य करणाधीनत्वोक्त्या नियमनस्य च करणाधीनत्वमर्थसिद्धं परप्रेरणारूपस्य सङ्कल्पस्य मनःकरणकत्वदर्शनात् करणायत्तं ज्ञानमस्तु ततः किमन्तर्यामिणो जीवत्वस्ये? त्यत्राह "एवं द्रष्टुरेवे"ति, तर्हि रूपादिसाक्षात्कार एव द्रष्टृशब्दप्रवृत्तिनिमित्तमस्तु न करणायत्तं ज्ञानमित्यत्राह "नान्योऽतोऽस्ती"ति, रूपादिसाक्षात्कारस्य जीवपरयोस्साधारणत्वात्स न निषेद्धुं, शक्यते करणायत्तज्ञानवत्त्वन्तु जीवस्यैवेति तदन्यस्य निषेद्धुं शक्यमित्यर्थः । प्रतिपर्यायं यच्छब्दावृत्त्या चान्तर्यामिबहुत्वमवगम्यते आत्मनि तिष्ठन्निति व्यपदेशः स्वे महिम्नि स्थित इतिवद्भवति, तदन्तरत्व तं नियन्तृत्वं चात्मेश्वरमिति वद्व्यापकननियामकवस्त्वन्तराभावाभिप्रायेणोच्यते, यमात्मा न वेदेति संसृष्टेन निष्कृष्टस्वरूपाज्ञानमुच्यत इति नेयम् । यत्तु जीवविशेषात् प्रत्यन्तर्यामित्वं तत्त दवेद्यत्वादिकं तदष्टमूर्त्यादेरिव तत्तद्गणाध्यक्षाणां जीवानां तत्तन्नियन्त-

त्वेन सम्भवति। यद्वा आदित्यचन्द्र-शब्दौ मण्डलपरौ सर्वेषु देवेष्वित्यादिशब्दाश्च शरीरमात्रपराः स त आत्मेति निर्देशः शिलापुत्रकस्य शरीरमितिवत्स्यात्, स इति पदं जात्यभिप्रायं तज्जातीयत्वमित्यर्थः, उपक्रमेऽपि य इमं च लोकं परं च लोकमित्यत्र यच्छब्दोजात्यभिप्राय इति भावः । एवं प्राप्त इति सूत्रेऽधिदेवादिलोकादिपदचिह्नितेषु वाक्येष्वित्यनेन सर्वसूत्रेषु तत्तत्पदचिह्नितवाक्यप्रतिपाद्यत्वं विवक्षितमिति गम्यते, अधिदेवाधिलोकपदद्वयोपादानस्य प्रयोजनमाह "काण्वे"ति, ततः किमित्यत्राह "तदेवमि"ति, माध्यन्दिनपाठे अधिलोकाद्यधिकपर्यायश्रवणेन काण्वमाध्यन्दिनयोर्विषयभेदशङ्कायामुभयसाधारणबहुपर्यायप्रदर्शनार्थेन अधिदेवाधि-शब्देन उभयत्रैकविषयत्वप्रत्यभिज्ञानार्थं न्यूनपर्यायेऽपि पाठेऽनुक्तमन्यतो ग्राह्यमितिन्यायेन अधिकपर्यायपाठार्थविवक्षाप्रदर्शनार्थत्वज्ञापनार्थं चोभयपदोपादानमित्यर्थः । एकस्यैव सतः सर्वनियमनं कथ ? मित्यत्राह "तथा ही"ति, यः पृथिव्यामित्यादिकं तस्य प्रश्नस्योत्तरमस्तु ततः किमित्यत्राह "तदेतदि"ति, नियाम्यापरिज्ञानेमोद्यसङ्कल्पे च सर्वनियमनायोगात् सर्वज्ञात्सत्यसङ्कल्पादित्युक्तं सुबालोपनिषदि समानप्रकरणे पुरुष एवेदं सर्वमित्युक्तत्वादाह "पुरुषोत्तमादि"ति, पुरुषोत्तमस्यैव सर्वनिमयनादिसम्भवे श्रुत्यन्तराणि दर्शयति "तथा ही"ति, परमात्मन एवेति अत्र सर्वनियन्तृत्वादितरेषां

भू० तथा ह्युद्दालकप्रश्नः "य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरोयमयतीत्युपक्रम्य तमन्तर्य्यामिणं ब्रूहीति तस्य चोत्तरं यः पृथिव्यां तिष्ठन्नित्यारभ्योक्तं तदेतत्सर्वान् लोकान् सर्वाणि च भूतानि सर्वाणि च दैवतानि सर्वान् वेदान् सर्वांश्च यज्ञानन्तःप्रविश्य सर्वप्रकारनियमनं सर्वशरीरतया सर्वस्यात्मत्वं च सर्वज्ञात्सत्यसङ्कल्पात् पुरुषोत्तमादन्यस्य न सम्भवति तथा "अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा" "तत्सृष्ट्वा तदेवानुप्राविशत् त-

दनुप्रविश्य सच्च त्यच्चाभवदित्यादीन्यौपनिषदानि वाक्यानि परमात्मन एव सर्वस्य प्रशासितृत्वं सर्वस्यात्मत्वमित्यादीनि वदन्ति, तथा सुबालोपनिषदि "नैवेह किञ्चनाग्र आसीत् अमूलमनाधारा इमाः प्रजाः प्रजायन्ते दिव्यो देव एको नारायणः चक्षुश्च द्रष्टव्यं च नारायणः श्रोत्रं च श्रोतव्यं च नारायण" इत्यारभ्य "अन्तःशरीरे निहितो गुहायामज एको नित्यः यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन् यं पृथिवी न वेद यस्यापः शरीर"मित्यादि यस्य मृत्युः शरीरं यो मृत्युमन्तरे सञ्चरन् यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इति परस्यैव ब्रह्मणः सर्वात्मत्वं सर्वशरीरकत्वं सर्वनियन्तृत्वं च प्रतिपाद्यते स्वाभाविकं चामृतत्वं परमात्मन एव धर्मः ।

नियाम्यकोटिनिवेशादस्यैवेत्यवधारणं फलितमिति भावः । एतद्विशद्याय समानप्रकरणोक्तिं दर्शयति "तथा सुबालोपनिषदि"ति, सूत्रविवक्षितं हेत्वन्तरञ्चाह "स्वाभाविकं चे"ति, पूर्वपक्षयुक्तिम् परिजिहीर्षन् दर्शनश्रवणादि-शब्दानां करणायत्तज्ञानवाचित्वं किमार्थ? मुत शाब्द? मिति विकल्पमभिप्रेत्य प्रथमं शिरः प्रतिवदति—

सू० न च परस्यात्मनः करणायत्तद्रष्टृत्वादिकमपि तु स्वभावत एव सर्वज्ञत्वात्सत्यसङ्कल्पत्वाच्च स्वत एव

टी० "न च परस्ये"ति, अदृष्टो द्रष्टा अश्रुतो श्रोता अमतो मन्ता अविज्ञातो विज्ञाते"ति वाक्ये आत्मसाक्षात्कारतदुपायभूतश्रवणमनननिदिध्यासनकर्तृत्वं हि प्रतीयते न तु रूपादिसाक्षात्कार इति शङ्काम्परिहर्तुं

परस्यात्मन इत्युक्तम्, अत्रायमभिप्रायः श्रुत्यन्तरेषु न दृष्टेर्द्रष्टारम्पश्येर्न श्रुतेः श्रोतारं शृणुयाः न मतेर्मन्तारम्मन्वीथाः न विज्ञातेर्विजानीया इति आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिवाक्यैः श्रवणमननादिकर्तृत्वम्परस्य प्रतिषिद्धन्तत्कर्मत्वञ्च श्रुतन्तस्मादिह द्रष्टा श्रोता मन्ता विज्ञातेतिप्रतीयमानं परस्यात्मनः श्रवणादिकर्तृत्वन्तत्प्रतिषेधकश्रुतिविरुद्धं रूपादिसाक्षात्कारकर्तृत्वन्तु पश्यत्यचक्षुस्स शृणोत्यकर्ण इति श्रुत्यन्तरावगतम् अतः श्रवणादिकर्तृत्वप्रतिषेधकश्रुतिविरोधात् रूपादिसाक्षात्कारविधायकश्रुत्यन्तरानुरोधाच्च इह श्रूयमाणा द्रष्ट्रादिशब्दा रूपादिसाक्षात्कारवाचकाः न तु श्रवणमनननिदिध्यासनतत्साध्यदर्शनपरा इति द्रष्टृत्वादिकं न करणायत्तमिति रूपादिभिरपरोक्षव्यवहारानुगुणस्सम्बन्धो न चक्षुराद्यपेक्ष इत्यर्थः । आदि-शब्देन श्रोतृत्वादिकं कर्मेन्द्रियकार्यवक्तृत्वग्रहीतृत्वादिकं च विवक्षितं, करण-शब्दश्च ज्ञानकर्मेन्द्रियसाधारणः किन्तर्हीत्याकाङ्क्षायामाह "अपि तु स्वभावत एवे"ति, द्रष्टृत्वादिकमित्यपीत्यन्वयः, स्वभाव-शब्दो धर्मपरः, स्वरूपस्वभाव-शब्दयोः समभिव्याहारदर्शनात्, एवकारश्चक्षुरादिकरणापेक्षां योगिप्रत्यक्षहेतुभूतप्रकृष्टादृष्टापेक्षाञ्च व्यावर्त्तयति "अदृष्टेन्द्रियानिरपेक्षधर्मभूतज्ञानेनैव भवतीत्यर्थः, परमात्मेच्छासापेक्षमुक्तनित्यसिद्धज्ञानव्यावृत्तिं दर्शयन्हेतुमाह "सर्वज्ञत्वादि"ति, स्वत एव सर्वज्ञत्वादित्यन्वयः स्वत एवेति स्व-शब्दः स्वरूपपरः सत्ताप्रयुक्तत्वादित्यर्थः एवकारः स्वव्यतिरिक्तचेतनान्तरसङ्कल्पादृष्टचक्षुरादिव्युदासपरः । यद्वा न करणायत्तं द्रष्टृत्वादिकम् अपि तु स्वभावत एवेति रूपादिसाक्षात्काराश्रयत्वन्न करणापेक्षम्, अपि तु सत्ताप्रयुक्तमित्यर्थः कुत इत्यत्राह "स्वत एव सर्वज्ञत्वादि"ति, करणानपेक्षसत्ताप्रयुक्तसर्वज्ञत्वस्त्वादित्यर्थः सामान्येनेश्वरज्ञानमात्रस्य हेतुमात्रनिरपेक्षत्वाद्रूपादिविषयज्ञानविशेषोऽपि अदृष्टेन्द्रियरूपहेतुविशेषनिरपेक्ष इति यावत्, सर्वस्य ब्रह्मात्मकत्वात् त्वं च तदात्मक इतिवद विवक्षितविशेषसिद्धये सामान्याकारयोगस्य हेतुतयोपन्यासः, ग्रहीतृत्वगन्तृत्वादिषु कर्मेन्द्रियनैरपेक्ष्यसिद्ध्यर्थमाह "सत्यसङ्कल्पत्वाच्च स्वत एवे"ति, तत्र प्रमाणं दर्शयति—

भा० तथा च श्रुतिः "पश्यत्यचक्षुः स शृणोत्यकर्णः अपाणिपादो जवनो ग्रहीते"ति न च दर्शनश्रवणादि–शब्दाश्चक्षुरादिकरणजन्मनो ज्ञानस्य वाचका अपि तु रूपादिसाक्षात्कारस्य, स च रूपादिसाक्षात्कारः कर्मतिरोहितस्वाभाविकज्ञानस्य जीवस्य चक्षुरादिकरणजन्माऽपरस्य तु स्वत एव "नान्योऽतो ऽस्ति द्रष्टेत्येत"दपि पूर्ववाक्योदितान्नियन्तुर्द्रष्टुरन्यो द्रष्टा नास्तीति वदति

टी० "तथा चे"ति, द्रष्टा श्रोतेत्यत्र उपाध्यनुक्तिपूर्वकदर्शनादिश्रवणात् स्वतस्त्वं सिद्धं निरुपाधिकत्वकण्ठोक्तिश्चास्तीति चार्थः । यद्वा न केवलं यस्सर्वज्ञः सत्यसङ्कल्प इति सामान्यश्रुत्या तत्सिद्धिः, विशेषविषयश्रुतिश्चास्तीति चार्थः । यद्वा स्वाभाविकी ज्ञानबलक्रिया चेति श्रुत्या करणनिषेधोऽर्थसिद्धः, तस्य स्वाभाविकत्वोक्तिबलात्तद्विशेषभूतदर्शनश्रवणादेः करणैरपेक्ष्यमपि सामान्यतस्सिद्धं तदुभयं कण्ठोक्तं चेत्यर्थः । जवनः झटिति दूरस्थसम्बन्धक्षमः अतो विभुत्वाविरोधः एवं दर्शनश्रवणादेरर्थवशात् करणाधीनत्वकल्पनं श्रुतिविरुद्धमित्युक्तम् । अथाचक्षुः पश्यतीति व्याहतं दर्शनश्रवणादिशब्दानां करणायत्तज्ञानवाचित्वादिति शङ्कायां दर्शनश्रवणादिशब्दानां करणायत्तज्ञानवाचितान्निषेधति "न च दर्शने"ति, सर्वप्रयोगानुगतं प्रवृत्तिनिमित्तमाह "अपि त्वि"ति, एवञ्च सति द्रष्टा श्रोतेति रूपशब्दयोस्साक्षात्कर्तेत्यर्थः मन्ता ये मानसमननाख्यविचारविषयास्तेषां साक्षात्कर्ता विज्ञाता बुध्याऽऽध्यवसेया ये तेषां साक्षात्कर्तेत्यर्थः तत्तदिन्द्रियविषयसाक्षात्कारपरत्वात् प्रकरणस्य चक्षुरादिबाह्यकरणमनोबुद्धिरूपान्तःकरणकृत्यविशेषास्साधारणाकारग्रहणविचाराध्यवसायरूपास्तदाश्रयो जीव इति च मोक्षधर्मेऽऽभिहितं यथा "चक्षुरालोचनायैव संशयं कुरुते मनः । बुद्धिरध्यवसायाय साक्षी क्षेत्रज्ञ उच्यत" इति संसारिचेतनज्ञानानां प्रतिनियतकरणसापेक्षत्वं प्रमाणप्रमाणरूपत्वं परोक्षापरोक्षरूपत्वं च

भवति, परमात्मनस्तु तत्तत्करणादिनिरपेक्षाणि तत्तत्करणतत्तद्विषयादि-सर्वपदार्थगोचराणि सम्यङ्निश्चयरूपाणि अपरोक्षात्मकानि ज्ञानानि भवन्तीति वैषम्यं, करणाधीनत्वं शाब्दं माभूत् तथाऽपि व्याप्तिबलात्पर-मात्मनोऽपि दर्शनश्रवणादयः करणैर्विना नोपपद्यन्त इति सिंहावलो-कितकेनाशङ्क्य दर्शनादीनां करणापेक्षायाः कर्मवश्यत्वेन सोपाधिकत्वाच्च व्याप्तिरित्यभिप्रयन्नाह "स चे"ति, कर्मवश्यस्यैव करणापेक्षा न त्वकर्मवश्य-स्येत्यर्थः । उपाधेस्सपक्षानुगतत्वं दर्शितं "कर्म तिरोहिते"ति, परस्य त्वि-ति तु—शब्दोऽकर्मवश्यत्वरूपवैषम्यपरः तेनापक्षवृत्तित्वं दर्शितं भवति। तर्हि द्रष्ट्रन्तरनिषेधः कथमुपपद्यत ? इत्यत्राह "नान्योत"इति, तदेव विवृणोति—

सू० "यं पृथिवी न वेद यमात्मा न वेदेत्येवमादिभिर्वाक्यैः पृ-थिव्यात्मादिनिशाम्यैरनुपलभ्यमान एव नियमयतीति यत्पू-र्वमुक्तं तदेवाहृष्टो द्रष्टाऽश्रुतः श्रोतेति निगमय्य नान्योऽ-तोऽस्तीत्यादिना तस्य नियन्तुर्नियन्त्रन्तरन्निषिध्यते एष त आत्मा स त आत्मेति च त इति व्यतिरेकविभक्तिनिर्दि-ष्टस्य जीवस्यात्मतयोपदिश्यमानोऽन्तर्य्यामी न प्रत्यगात्मा भवितुमर्हति

सू० न च स्मार्त्तमतद्धर्माभिलापाच्छारीरश्च ॥ २० ॥

स्मार्त्तं—प्रधानं, शारीरो—जीवः स्मार्त्तं शारीरश्च नान्त-र्य्यामी अतद्धर्माभिलापात्—तयोरसम्भावितधर्माभिला-पात् स्वभावत एव सर्वस्य द्रष्टृत्वं सर्वस्य नियन्तृत्वं सर्व-स्यात्मत्वं स्वत एवामृतत्वं च तयोर्न सम्भावनागन्यमर्हति एतदुक्तम्भवति यथा स्मार्त्तमचेतनं सर्वज्ञत्वसर्वनियन्तृत्व-सर्वात्मत्वादिकं नार्हति तथा जीवोऽप्यतद्धर्मत्वादिति

टी० यं पृथिवीत्यादि"ना, निगमय्येति अदृष्टो द्रष्टा पृथिव्यादिनि-

याम्याद्दृष्टस्तन्नियन्तृरूपद्रष्टेत्युक्तार्थनिगमनमित्यर्थः, यः पृथिव्यामित्यादिपर्यायेषु द्रष्टृत्वमार्थेन्निगमनवाक्ये नियन्तृत्वमार्थं गर्भितं विशिष्टस्य प्रकृतत्वे सति सामान्यनिर्देशावगतोऽपि इतरनिषेधः प्रकृताकारविशिष्टेतरविषयो दृष्टः, यथा अस्मिन् ग्रामे देवदत्त एव पुरुषो नाऽन्य इत्युक्ते न पुरुषमात्रं निषिध्यते किन्तु नैवंविधोऽन्यः पुरुष इति बुद्धिस्थस्वातन्त्र्यादिविशिष्टपुरुषान्तरन्निषिध्यते, अन्यथा प्रमाणविरोधात् अतो नान्योऽस्ति द्रष्टेत्यात्रातशब्दस्वारस्यवशात् प्रकृतयथोक्तलक्षणं द्रष्ट्रन्तरन्निषिध्यते ततश्च परमात्मनाऽप्यवेद्यस्तन्नियामकः कोऽपि द्रष्टा नास्तीत्यर्थः स्यात् अपवादकाभावात्, व्यतिरेकनिर्देशस्वारस्यसिद्धिमाह "एष त"इति, एतत्पादाद्याधिकरणे शब्दविशेषादिति व्यतिरेकनिर्देशो हेतुतयोक्तः, तस्य, प्रदर्शनार्थत्वात् तदुपजीवनेन व्यतिरेकनिर्देशो हेतुरुक्तः एष त इति सर्वपर्यायानुवृत्तः षष्ठीनिर्देशोऽत्र विवक्षितः पर्यायविशेषस्यसप्तमीनिर्देशस्तु उभयेऽपीति सूत्रविवक्षित इति विशेषः । सू० न च स्मार्त्तमतद्धर्माभिलापाच्छारीरश्च, अक्षरार्थमाह "स्मार्त्तमित्यादि"ना, के पुनस्तदसम्भाविता धर्मा? इत्यत्राह "स्वभावत एवे"ति, प्रधानस्यान्तर्यामित्वं प्रसक्त्यभावेऽपि किमर्थं सूत्रेण तन्निरसन? मित्यत्राह "एतदुक्तमि"ति, पूर्वसूत्रे धर्मा उक्ताः, अस्मिन् सूत्रेऽपि प्रकृतिपुरुषयोरसम्भाविता धर्मा उक्ता इति सूत्रस्य पौनरुक्त्यमाशङ्क्य परिहरति—

सू० अमीषाङ्गुणानां परमात्मन्यन्वयः प्रत्यगात्मनि व्यतिरेकश्च सूत्रद्वयेन दर्शितः,

निरपेक्षं च हेत्वन्तरमाह

सू० उभयेऽपि हि भेदेनैनमधीयते ॥ २१ ॥

उभये माध्यन्दिनाः काण्वाश्च अन्तर्यामिणो नियाम्यत्वेन वागादिभिरचेतनैस्समममेनं शारीरमपि विभज्याधीयते "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद

यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्य्याम्यमृत” इति माध्यन्दिनाः, “यो विज्ञाने तिष्ठन्नित्यादि च काण्वाः परमात्मनियाम्यतया तस्माद्विलक्षणत्वेनैनमधीयत इत्यर्थः ।

टी० “अमीषामि”ति, निरपेक्षं चेति पूर्वं व्यतिरेकनिर्देशसापेक्षहेतुरुक्तः, अयन्तु वक्ष्यमाणो निरपेक्ष इत्यर्थः सू० उभयेऽपि हि भेदेनैनमधीयते, अत्रैकैकवस्तुषु परिपूर्णत्वेन नियन्तृतया स्थितिज्ञापनार्थं यच्छब्दावृत्तिः, स त इति व्यतिरेकनिर्देशो देवादिशब्दानां च शरीरमात्रपरत्वं चास्वरसन्तत्त्वापवादकाभावेऽनुपपन्नम्, आत्म-शब्दस्य स्ववाचित्वे तिष्ठन्नित्यादयोऽप्यस्वरसाः, यो विज्ञाने तिष्ठन्निति काण्वपाठैकार्थ्यात् आत्म-शब्दस्य स्ववाचित्वमयुक्तं प्रश्नवाक्यस्य चास्वारस्यमिति भिदा, यच्छब्दावृत्तिरेकत्वेऽपि सम्भवतीति भावोऽनुसन्धेयः, हिर्हेतौ, न हि भेदशब्दोऽत्र श्रूयत इत्यत्राह “परमात्मनियाम्यतये”ति, भेदकधर्मश्रवणात् भेदेन व्यपदेशस्सिद्ध इत्यर्थः, न केवलं व्यतिरेकनिर्देशादीनामपवादाभावः किन्तु तदस्वारस्यापवादोऽप्यस्तीति भावः । सुबालोपनिषदुक्तविशेषणैस्तदेकविषयतां स्मारयन् अधिकरणार्थमुपसंहरति “अत”इति, अस्मिन्नधिकरणे कैश्चिच्चतुर्धा विचारो दर्शितः, पृथिव्याद्यभिमानी देवताविशेषो वा, योगसिद्धो वा, परमात्मा वा, अर्थान्तरं वे,ति तत्रार्थान्तरमिति पक्षस्त्वसम्भवनिरस्तः, ऐश्वर्यविशेषयोगस्य उत्कृष्टादृष्टजन्यत्वाविशेषाद्देवतास्वेव योगसम्भवाच्च शिरोऽन्तरभेदकल्पनं विफलं कार्यकरणवत्त्वं[1] जीवत्वे हेतुतयोक्तं तदयुक्तं पृथिव्यादिष्वेकैकस्य शरीरत्वावगमात् चक्षुरादीनां प्रत्येकं शरीरत्वावगमाच्च तत्कृतजीवत्वशङ्काया आनन्दमयाधिकरणे व्युदस्तत्वाच्च तेन जीवत्वशङ्काऽनुदयात् भूतेन्द्रियादीनां सङ्घातरूपेण शरीरेण उपकरणोपकरणित्वलक्षणसम्बन्धो हि जीव-

१ कारणवत्त्वमिति पा० ।

त्त्वसाधकः अदृष्टत्वश्रवणेन प्रधानत्वशङ्काव्युदासपरं द्वितीयसूत्रं व्याख्यातं तच्चायुक्तम् अदृष्टोद्रष्टा अश्रुतः श्रोतेत्यादिवाक्ये अद्रष्टृश्रोत्रादिपदानां द्रष्टृश्रोत्रादिपदान्तरितानामेव श्रूयमाणतया प्रधानपरत्वशङ्कानुदयात्

**सू० अतोऽन्तर्य्यामी प्रत्यगात्मनो विलक्षणोऽपहतपाप्मा परमात्मा नारायण इति सिद्धम् । समाप्तमन्तर्याम्यधिकरणम् ॥**

न ह्येकपदश्रवणेन वाक्यार्थनिर्धारणं पूर्वपक्षेऽपि घटते प्रधानस्य सर्वविधकारणत्वेऽपि नियन्तृत्वमुपचारतोऽपि न शक्यशङ्कं, न हि घटादीन्प्रति मृत्तिकाया नियन्तृत्वम्, अतः स्मार्तोपन्यासो दृष्टान्ततयैव घटते. अत एव न च स्मार्त्तमतद्धर्माभिलापाच्छारीरश्चेत्येवमन्तमेकं सूत्रम्, अन्यथार्थवैघट्यात् वैघट्यं च प्रधानशङ्कानुदय एव पृथिव्यादिनियन्तॄणां जीवानामिव ईश्वरस्यापि सर्वनियन्तुर्नियन्त्रन्तरापेक्षयाऽनवस्थायां प्रसक्तायान्नियन्तृनियाम्ययोरभेदेन तत्परिहार इत्यपि दुरुक्तम् अनवस्थाप्रसङ्गाभावात्, युक्त्या कल्पनायां ह्यनवस्थानं न श्रुत्याऽभ्युपगमे श्रुतिर्हि न तत्समश्चाभ्यधिकश्च दृश्यत इत्यादि नियन्त्रन्तरं प्रतिषेधति, न चानवस्थाया भेदप्रयुक्तत्वादभेदेन तत्परिहार इति वाच्यं, श्रुतभेदनिबन्धनचोद्यस्य श्रुतविरुद्धाभेदकल्पनया परिहारानुपपत्तेः । कयोरभेदः? न तावत्पृथिव्यादेः परमात्मनश्च जडाजडयोरैक्याभावात्, नापि जीवेन पृथिव्यादिवन्नियाम्यतयाऽवगतस्य तस्य तेनैव न्यायेन परमात्मनैक्यासम्भवात् पक्षपातस्याहेतुकत्वाच्च, परमात्मसामानाधिकरण्यभेदनिषेधौ ह्युभयत्र साधारणौ । किञ्च पृथिव्यादेः स्वव्यतिरिक्तज्ञानप्रकाश्यत्वे ज्ञानस्यापि स्वव्यतिरिक्तज्ञान[1]सापेक्षत्वेनानवस्थाप्रसङ्गात् तत्परिहारार्थं जडाजडयोरैक्यं किन्न स्यात्, ज्ञानस्य स्वप्रकाशत्वेनानवस्थानुदयात् मिथ्यासत्यजडाजडयोस्तयोः स्वभावविरोधाच्चेति चेत्सर्वनियन्तुरीश्वरस्यापि आत्मेश्वरतया नियन्त्रन्तराभावेन अनवस्थित्यभावाद्वैयार्हतदनर्हयोस्स्वभावविरोधाच्च न जीवेश्वरयोरैकत्वं युक्तं धारणादाव-

१ स्वव्यतिरिक्तज्ञानप्रकाश्यत्वेनेति पा. ।

प्यनवस्थापरिहारोऽनुसन्धेयः । किञ्च भेदो हि ज्ञायते कथमभेदेनानवस्थापरिहार? इत्थं प्रतीयमानोऽपि भेदो मिथ्या, न च जडाजडयोरैक्य प्रसङ्गः नियाम्यपृथिव्यादिमिथ्यात्वाद्धि पृथिव्यादेः परस्य च भेदमिथ्यात्वं जीवपरयोस्तु स्वरूपैक्यात् भेदमिथ्यात्वम्, अत एव च नानवस्थेति चेत् स्यादेवानवस्था जीवपरैक्येऽपि पृथिव्यादिकं प्रति जीवस्येव तदेकीभूतस्यापि ब्रह्मणो नियन्त्रन्तराकाङ्क्षाया निवारकाभावात्, यथा पृथिव्यादेर्जीवस्य च नियन्तृनियाम्यभावमिथ्यात्वेऽपि तस्येश्वरं प्रति नियाम्यत्वमपारमार्थिकं सम्भवति तथा जीवं प्रति नियन्तुः परमात्मनोऽप्यपरमार्थनियन्तृत्वादेवान्यं प्रत्यपरमार्थभूतनियाम्यत्वशङ्कां को वारयेत्, नियन्त्रन्तरनिषेधकं प्रमाणं निवारकमिति चेत् यदि प्रमाणबलादनवस्थापरिहारः तर्हि नियन्तृनियाम्यभावपारमार्थ्यमाश्रित्यैव सा परिह्रियतां प्रमाणान्तराबाधेन निर्वाहे सम्भवति बाधाश्रयणायोगात्, अत एव नान्योऽतोऽस्ति द्रष्टेत्यपि परमात्मैवाविद्याकल्पितभेदेन नियन्ता नियाम्यश्च भवतीति न परमार्थिकद्रष्ट्रन्तरनिषेधपरं, किन्तु नियन्त्रन्त[1]निवारणपरं विशिष्टे प्रकृते सति इतरनिषेधस्य तत्तुल्यतरविषयत्वदर्शनात्, कथं प्रमाणान्तराप्राप्तनियन्तृनियाम्यभावादिकं विधाय शास्त्रं तदेव प्रतिषेद्धुमलं कथमेकस्मिन् शरीरे प्रत्यगात्मद्वित्वमिति चेत् ? काऽत्रानुपपत्तिः? बहुत्वे प्रत्यक्त्वं हीयेतेति चेत् किं प्रत्यगात्मद्वित्वमात्रेऽनुपपत्तिः ? उतैकस्मिन् शरीरे ? न प्रथमः सर्वेषामात्मनामहमिति प्रत्यक्त्वेव स्वात्मानुभवदर्शनात्, न द्वितीयः, एकस्मिन् शरीरे चक्षुराद्यभिमानिनां देवानां प्राणसंवादे अहं श्रेयसे विवदमाना इत्यनेकेषां प्रत्यक्त्वेन स्वात्मानुभवदर्शनात् तत्र प्रत्यक्त्वमेव सत्यं भेदो मिथ्येति चेत् भेदस्सत्यः प्रत्यक्त्वं मिथ्या किं न स्यात्, उभयोरपि ह्यबाधस्तुल्यः, नेह नानास्तीत्यादिकं भेदबाधकमिति चेत् तर्हि तत्त्वमसि अयमात्मेत्यादिकं प्रत्यक्त्वबाधकं कि न स्यात् परागर्थो हीदंबुद्धिगोचरः अयमिति निर्देशः प्रत्यक्त्वाविरोधि प्रत्यक्त्वस्य प्रमाणसिद्धत्वादिति चेत् नेह नानेत्यादिक-

२ नियन्तृरूपद्रष्ट्रन्तरनिवारणपरमिति पा० ।

मपि तत एव प्रमाणवशादात्मबहुत्वाविरोधि अतो बहुत्वस्य पराक्त्वव्याप्यत्वाभावात् व्याप्तिशून्यस्तर्काभासोऽयम् अतोऽन्तर्यामिविद्याया यथोक्त एवार्थः । अन्तर्याम्यधिकरणं समाप्तम् ॥

द्रष्टृत्वादिचेतनधर्मैर्नियन्तृत्वादिपरमात्मधर्मैश्च सहितेन अदृष्टो द्रष्टा अश्रुतो श्रोतेत्याद्युक्तेनादृश्यत्वेन परमात्मपरत्वमुक्तं पूर्वाधिकरणे, चेतनधर्मादिरहितकेवलादृश्यत्वप्रतिपादकं वाक्यं प्रधानपरमेव भवितुमर्हति रूपादिमत्पृथिव्यादिगतदृश्यत्वनिषेधस्य धर्म्यन्तरप्रतिपत्तौ गौरवेण पृथिव्यादिकारणत्वस्यप्रधानोपस्थापकत्वादिति शङ्कोत्थानात्सङ्गतिः, इयमुत्तरत्र पूर्वपक्षोपन्यासे व्यक्तीभविष्यति ।

अदृश्यत्वाधिकरणम् । सू० अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २२ ॥

भा० आथर्वणिका अधीयते "अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रन्तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मन्तदव्ययं यद्भूतयोनिम्परिपश्यन्ति धीरा" इति, तथोत्तरत्राक्षरात् परतः पर" इति तत्र सन्दिह्यते—

टी० सू० अदृश्यत्वादिगुणको धर्मोक्तेः, अदृश्यत्वादिगुणक—शब्देन अक्षरं पुंल्लिङ्गनिर्देशेन अक्षरात्परतः परश्च द्वयमपि विषयीक्रियत इत्यभिप्रायेण वाक्यद्वयं विषयतयोपाददानस्संशयञ्च दर्शयति "अथे"त्यादिना, अद्रेश्यमग्राह्यम्—इन्द्रियादृश्यमनुमानाद्यवेद्यं चक्षुरदृश्यमिन्द्रियान्तरादृश्यं वा । यद्वा अद्रेश्यं—ज्ञानेन्द्रियाविषयः अग्राह्यं—पाण्यादिकार्य्यहानोपादानाद्यविषयः ।

भा० किमिहादृश्यत्वादिगुणकमक्षरम् अक्षरात् परतः परश्च प्रकृतिपुरुषौ? उतोभयत्र परमात्मैवे?ति, किं प्राप्तं प्रकृतिपुरुषाविति, कुतः, अस्याक्षरस्यादृष्टोद्रष्टेत्यादाविव न द्र-

ष्टृत्वादिश्चेतनधर्मविशेष इह श्रूयते अक्षरात् परतः पर इति च सर्वस्मादिकारात् परभूतादक्षरादस्मात्परः क्षेत्रज्ञः समष्टिपुरुषः प्रतिपाद्यते ।

टी० किमिहेति अदृश्यत्वादिगुणकाक्षरस्य प्रकृतित्वमक्षरात्परतः परस्य जीवत्वं च शङ्क्यते न तूभयोरुभयात्मकत्वम्, उभयत्र–वाक्यद्वयेऽपि अदृश्यत्वादिगुणकमक्षरात्परतः परश्च प्रधानपुरुषौ? उत परमात्मे?ति विचारः तदर्थं पृथिव्यादिसम्बन्धितया दृष्टं दृश्यत्वादिकन्निषिध्यमानं किं पृथिव्यादिसजातीयमचेतनमेवाश्रयमुपस्थापयति? उत नेति, किम् ऊर्णनाभिदृष्टान्तोपादानमचेतनाश्रयोपस्थापकत्वमुपबृंहयति? उत नेति किमक्षरात्सम्भवतीह विश्वमिति विश्व-शब्दश्चिदचिदात्मकप्रपञ्चमुपस्थापयति? उताचेतन?मिति, अचेतनोपस्थापकत्वे सत्यूर्णनाभिदृष्टान्तस्य चाचिदाश्रयोपस्थापकतोपबृंहकतया निषिध्यमानं दृश्यत्वादिकमचिदुपस्थापकमित्यदृश्यत्वादिगुणकं प्रधानं ततः परश्च जीव इति स्यात् यदा विश्व--शब्दः चिदचिदात्मकजगदुपस्थापकः तदोर्णनाभिदृष्टान्तस्य चाचेतनोपस्थापकत्वानुपबृंहकत्वान्निषिध्यमानदृश्यत्वादिकमपि नाचेतनोपस्थापकमिति अदृश्यत्वादिगुणकः परमात्मा तत[1]श्च परान्तरासम्भवात् अक्षरात्परतः परश्च परमात्मेति फलितं, कुत इति अदृष्टृ–शब्दस्य अर्हार्थीयतृजन्तपदविशेषणतया "धातुसम्बन्धे प्रत्ययाः" इति स्मृतिवशेनार्हार्थविश्रान्तिरवगम्यते अद्रेश्यमिति च पदं कृत्यप्रत्ययान्तत्वादर्हार्थन्तथा चाद्रेश्यत्वादिकं पूर्वाधिकरणे परमात्मधर्मतयाऽवगतमिति नाक्षरं प्रकृतिः अत एवाक्षरात्परतः परश्च न समष्टिपुरुषः, न हि परमात्मनोऽन्यत् परं विद्यत इति शङ्कायामदृश्यत्वादिगुणस्य प्रकृतित्वमुपपादयति "अस्याक्षरस्ये"ति, अन्तर्यामिविद्यायामपि न केवलमदृष्टत्वं परमात्मत्वसाधकं किन्तु द्रष्टृत्वादिसचिवम् इह तु तत्साचिव्याभावाददृश्यत्वं नाचिद्व्यावर्त्तकमित्यर्थः

१ परमात्मनश्चेति पा० ।

अदृष्टो द्रष्टेत्यादिना सङ्गतिश्चाभिप्रेता तथाप्यक्षरात्परतः परो न जीवः न ह्यक्षरात्पर इत्युक्तं किन्तु परतः पर इति शङ्कायां तस्य समष्टिपुरुषत्व-मुपपादयति "सर्वस्मादि"ति, सर्वस्माद्विकारभूतादक्षरादिति समानविभक्तिनिर्देशस्वारस्यात्, परतोऽक्षरादिति सामानाधिकरण्यमिति भावः चेतनधर्मविशेषाश्रवणेऽप्यदृश्यत्वं साधारणतया न निर्णायकम्, अतोऽनुकूलयुक्तिर्वक्तव्या दृष्टान्तश्चेतनकारणत्वानुगुण इत्यत्राह–

श्रु० एतदुक्तम्भवति रूपादिमत् स्थूलरूपाचेतनपृथिव्यादिभूताश्रयं दृश्यत्वादिकं प्रतिषिध्यमानं पृथिव्यादिसजातीयसूक्ष्मरूपाचेतनमेवोपस्थापयति तच्च प्रधानमेव तस्मात्परत्वञ्च समष्टिपुरुषस्यैव प्रसिद्धन्तदधिष्ठितञ्च प्रधानं महदादिविशेषपर्य्यन्तं विकारजातं प्रसूत इति, तच्च दृष्टान्ता उपन्यस्यन्ते "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्व"मिति अतोऽस्मिन् प्रकरणे प्रधानपुरुषावेव प्रतिपाद्येते इत्येवं प्राप्तेऽभिधीयते–अदृश्यत्वादिगुणको धर्मोक्तेः, अदृश्यत्वादिगुणको ऽक्षरात्परतः परश्च परमपुरुष एव कुतः तद्धर्मोक्तेः यस्सर्वज्ञस्सर्वविदित्यादिना सर्वज्ञत्वादिकास्तस्यैव धर्माः उच्यन्ते तथा हि यया तदक्षरमधिगम्यत इत्यादिना ऽदृश्यत्वादिगुणकमक्षरमभिधाय तथाऽक्षरात्सम्भवतीह विश्वमिति तस्माद्विश्वसम्भवञ्चाभिधाय यस्सर्वज्ञः सर्वविद् यस्य ज्ञानमयन्तपः तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायत इति ।

टी० "एतदुक्तमि"ति, तदन्यार्थेनजुपश्लिष्टा अब्राह्मणादयश्शब्दा हि ब्राह्मणादिप्रत्यासन्नसजातीये क्षत्रियादौ वर्तन्ते न त्वश्वपश्वादौ वा अबालाकृशशब्दादयः प्रत्यासन्नावस्थान्तराश्रये तस्मिन्नेव धर्मिणि वर्तन्ते न तु धर्म्यन्तरे सन्निकृष्टबोधनस्य न्याय्यत्वात्, एवमदृश्यत्वादिगुणाना धर्मिविशेषाकाङ्क्षायां निषेध्यमानदृश्यत्वस्याचिदाधारत्वेन अचेतने प्रतिपन्ने तस्यैव सूक्ष्मावस्थस्यादृश्यत्वादौ च सम्भवति विजातीयधर्म्यन्तरकल्पने गौरवप्रसङ्गात् तत्परत्वाश्रयणमयुक्तमिति भावः । दृश्यत्वादिनिषेधाद्रूपादिवदचेतनत्वमपि निवर्त्तेत इत्यत्राह "तच्चे"ति, न दृश्यत्वादिव्याप्यमचेतनत्वम्मन आदौ व्यभिचारादिति भावः । अदृश्यत्वादिगुणकस्य प्रधानत्वसमर्थनमुपजीव्य अक्षरात्परतः परस्य जीवत्वमाह "तस्मादि"ति, यथोर्णनाभिरिति चेतनदृष्टान्तः कथमित्यत्राह "तदधिष्ठितत्त्वे"ति अनधिष्ठितत्वेऽपि दृष्टान्तोऽस्ति यथा पृथिव्यामिति चेतन सन्निधिमात्रापेक्षत्वे दृष्टान्तः यथा स त इति । पूर्वपक्षमुपसंहरति "अत"इति, राद्धान्ते अदृश्यत्वेति परात्परम्पुरुषमिति वाक्यं स्मारयति परपुरुष इति कस्य धर्मोक्तिरित्यपेक्षाम्पूरयति "तद्धर्मोक्ते"रिति, नन्वक्षरम्प्रकृतिः सर्वज्ञस्तु स्वसन्निधानात्प्रकृत्युपकारकः प्रकृष्टपुण्यो जीवस्तदवस्थोपलक्षितो मुक्तो वेति शङ्कायामाह "तथा ही"ति, तस्मादिति अक्षर—शब्दः प्रकृताक्षरपर इति भावः ॥

सू० भूतयोनेरक्षरस्य सर्वज्ञत्वादि प्रतिपाद्यते पश्चादक्षरात्परतः पर इति च प्रकृतमदृश्यत्वादिगुणकं भूतयोन्यक्षरम्

टी० "भूतयोनेरक्षरस्ये"ति, सार्वज्ञ्यादेर्धर्मिविषयापेक्षायामप्रकृत एव धर्मी स्वीकार्यः, उपक्रमप्रतिपन्नपरित्यागेनाप्रतिपन्नकल्पनायोगात् भूतयोनिमिति तस्मादेतदिति कारत्वप्रत्यभिज्ञानाच्च अतो यस्सर्वज्ञः तस्मादेतदिति यत्तच्छब्दौ प्रकृताक्षरविषयौ, ततश्चाक्षरस्य कारणत्वमनूद्य सृष्टिस्थित्युपयोगित्वेन सार्वज्ञ्यादि विधीयत इत्यर्थः । ननु भूतयोनित्वलिङ्गम्

१ न तु पश्वादौ श्वपचादौ वेति पा० ।

त्यभिज्ञानादक्षरात्परत इति श्रुतिप्रत्यभिज्ञानं प्रबलम्पञ्चम्यन्ताक्षरपद-वाच्यं हि प्रधानमतस्तदेव यथा तदक्षरमित्यत्रापि प्रतिपाद्यम्, अतस्तद-नुवादेन सार्वज्ञ्यादिविधानमयुक्तमिति चेन्न केवलश्रुतिप्रत्यभिज्ञानादपि ये-नाक्षरं पुरुषं वेद सत्यमिति पूर्वोक्तस्य भूतयोनित्वलिङ्गानुगृहीतस्याक्षरश्रु-तिप्रत्यभिज्ञानस्य प्रबलत्वात् । ननु भूतयोनिम् अक्षरात्सम्भवतीत्युपादान-मुच्यते यस्सर्वज्ञस्सर्वविदिति निमित्तम् अतो लिङ्गानुगृहीतत्वमसिद्धं न चैतावता अक्षरात्परतः अक्षरं पुरुषमिति श्रुतिप्रत्यभिज्ञानयोस्तुल्यत्वम् "अक्षरात्परत इति प्रत्यभिज्ञानस्योर्णनाभिदृष्टान्तानुगृहीतत्वेन प्राबल्या-दिति नैवमूर्णनाभिदृष्टान्तस्याचिद्विशिष्टब्रह्मकारणत्वेऽप्युपपत्तेः, न चैता-वता प्रत्यभिज्ञानयोस्तुल्यत्वम् अक्षरम्पुरुषमिति प्रत्यभिज्ञानस्य प्रथमभा-विनः प्रबलतया पञ्चम्यन्ताक्षर-शब्दस्य तदनुरोधेन वर्णनीयत्वात्, अतो भूतयोन्यक्षरमेवाक्षरं पुरुषमित्युच्यते पुरुषत्वात् कारणत्वेन प्रत्यभिज्ञानाच्च अक्षर-शब्दवाच्यस्स एव सर्वज्ञत्वादिगुणकः, तथा च सत्यक्षरात्सम्भवति तस्मादेतद्ब्रह्मेति पञ्चम्योर्वैरूप्यं न स्यात्, निमित्तोपादानाभेदे सत्येव एक-विज्ञानेन सर्वविज्ञानप्रतिज्ञानमुपपद्यते अक्षरं न परमात्मा । अक्षरादपि परस्य प्रतिपन्नत्वादित्यत्राह "पश्चादि"ति परत्वेन व्यपदिश्यते प्रथमान्तेन पर-शब्देन व्यदिश्यपदिश्यत इत्यर्थः प्रकृतमदृश्यत्वादिगुणकमिति अदृ-श्यत्वादिगुणकत्वेन प्रकृतत्वादित्यर्थः । "अपाणिपादत्वेन सर्वगतत्वेन पु-रुष-शब्दवाच्यत्वेन च प्रकृतं हि भूतयोन्यक्षरम् अपाणिपादं नित्यं विभुं सर्वगतत्वेनेदं प्रपूरणं पुरुषेण सर्वं येनाक्षरम्पुरुषं वेदेति चाक्षरात्परतः परस्य दिव्योऽह्यमूर्त्तः पुरुष इति पुरुष-शब्दसामानाधिकरण्यदर्शनात् अमूर्त्तश-ब्देनापाणिपादत्वप्रत्यभिज्ञानात् बाह्याभ्यन्तर इत्यनेन सर्वगतत्वप्रत्य-भिज्ञानाच्च भूतयोन्यक्षरमेव अक्षरात्परतः पर इत्यर्थः । सर्वज्ञस्य भूतयो-न्यक्षरात्परत्वशङ्काव्युदासाय भूतयोन्यक्षरस्यैव सार्वज्ञ्यादिगुणत्वोपपादनं स्मारयति–

**सू० सर्वज्ञमेव परत्वेन व्यपदिश्यते, अतोऽक्षरात्परतः पर**

इत्यक्षर-शब्दः पञ्चम्यन्तः प्रकृतमदृश्यत्वादिगुणकमक्षरं नाभिधत्ते तस्य सर्वज्ञस्य विश्वयोनेस्सर्वस्मात्परत्वेन तस्मादन्यस्य परत्वासम्भवादतोऽत्राक्षर-शब्दो भूतसूक्ष्ममचेतनं ब्रूते ॥

इतश्च न प्रधानपुरुषौ,

सू० विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ । २३ ॥

विशिनष्टि हि प्रकरणं प्रधानाच्च पुरुषाच्च भूतयोन्यक्षरं व्यावर्त्तयतीत्यर्थः ।

टी० "सर्वज्ञमेवे"ति, नन्वक्षरशब्दार्थवैरूप्यपरिहाराय भूतयोन्यक्षरात्सर्वज्ञत्वादिगुणकः पर इत्यभ्युपगन्तव्यमित्यत्राह 'अतोऽक्षरादि'ति, प्रकृतमदृश्यत्वादिगुणकमिति अदृश्यत्वादिगुणकमक्षरमेव येनाक्षरम्पुरुषमिति पूर्वस्मिन्सन्निकृष्टवाक्ये प्रकृतन्तदेव प्रोवाचेति वक्तव्यतया प्रतिपादितमिति तस्यैव प्राधान्येन प्रतिपाद्यत्वमवगम्यते अतोऽक्षरपुरुष एव अक्षरात्परतः परत्वेन उच्यत इत्यभ्युपेत्यम् अन्यस्य प्रतिपाद्यत्वमुक्त्वार्थान्तरस्य प्रतिपादनायोगात्, अतोऽक्षरपुरुषो न पञ्चम्यन्ताक्षरशब्दोक्तः अपि त्वक्षरात्परतः पर एवेत्यभिप्रायः। अत इत्यभिप्रेतं हेतुं विवृणोति "तस्ये"ति, सर्वज्ञस्य विश्वयोनेरिति अक्षरात्सम्भवतीह विश्वन्तस्मादेतद् ब्रह्म नामरूपमन्नं च जायत इत्युभयत्र कारणत्वप्रत्यभिज्ञानात् भूतयोन्यक्षरमेव सर्वज्ञमिति न सर्वज्ञस्तदपेक्षया पर इत्यभिप्रायः, सर्वस्मात् परत्वेन तस्मादन्यस्य परत्वासम्भवादिति भूतयोन्यक्षरमभिधायानन्तरमेव "यस्मात्परं नापरमस्ति किञ्चि"दिति समाभ्यधिकनिषेधस्य उपक्रमावगतत्वादित्यर्थः भूतयोन्यक्षरादनन्यत्वेन सर्वज्ञस्य ततः परत्वासम्भवः उपक्रमविरोधेनाक्षरादर्थान्तरस्य परत्वासम्भव इत्युक्तं भवति, अक्षरादिति किमुच्यत इत्यत्राह "अतोऽत्रे"ति, अतः यस्य परमात्मधर्मोक्तिः स हि परमात्मा प्रथ-

मान्तराक्षरशब्दनिर्दिष्टस्य तद्धर्मेश्रवणात् पञ्चम्यन्ताक्षर-शब्दनिर्दिष्टस्य तदभावाच्चेत्यर्थः, अक्षर-शब्दयोर्भिन्नविषयत्वमुपपन्नम्, अस्मिन्नेव प्रकरणे तपसा चीयते ब्रह्म इति ह स्म यद् ब्रह्मविदो वदन्ति तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते इत्यत्र ब्रह्मशब्दयोर्भिन्नविषयत्वदर्शनात् यत्तु समानविभक्तिनिर्देशस्वारस्यात् सामानाधिकरण्यमिति तन्न परशब्दस्य पञ्चम्यन्तपदसापेक्षत्वात्, तत्स्वारस्यार्थं च न सामानाधिकरण्यम् । किञ्च परतोऽक्षरादिति न निर्दिष्टम् अक्षरात्परतः पर इति हि क्रमः तत्स्वारस्याच्च न सामानाधिकरण्यम् सू० विशेषणभेदव्यपदेशाभ्यां च नेतरौ वि-शेषण-शब्दं व्याचष्टे "विशिनष्टी"ति, कस्मात्किमित्यत्राह "प्रदाना-दि"ति, कैर्धर्मैरित्यत्राह-

सू० एकविज्ञानेन सर्वविज्ञानोपपादनादिभिः, तथा ताभ्यामस्या-क्षरस्य भेदश्च व्यपदिश्यते अक्षरात्परतः पर इत्यादिना, तथा हि "स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपु-त्राय प्राहेति सर्वविद्याप्रतिष्ठाभूता ब्रह्मविद्या प्रक्रान्ता परविद्यैव च सर्वविद्या प्रतिष्ठा तामिमां सर्वविद्या-प्रतिष्ठां विद्याञ्चामुं वाऽथर्वादिगुरुपरम्परयाऽङ्गिरसा प्राप्तां जिज्ञासुः शौनको ह वै महाशालोऽङ्गिरसं विधिव-दुपसन्नः पप्रच्छ-कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञा-तम्भवतीति ब्रह्मविद्यायाः सर्वविद्याऽऽश्रयत्वात् ब्रह्मविज्ञा-नेन सर्वविज्ञातम्भवतीति कृत्वा ब्रह्मस्वरूपमनेन पृष्टं तस्मै सहोवाच द्वे विद्ये वेदितव्ये इति, ह स्म यद्ब्रह्म-विदो वदन्ति परा चैवापरा चेति ब्रह्मप्रेप्सुना द्वे विद्ये वेदितव्ये ब्रह्मविषये परोक्षापरोक्षरूपे द्वे विज्ञाने उपादेये

इत्यर्थः, अत्र परोक्षं शास्त्रजन्यं ज्ञानम्। अपरोक्षं योगजन्यं ज्ञानन्तयोर्ब्रह्मप्राप्त्युपायभूतमपरोक्षज्ञानम् ।

टी० "एके"ति, भेदव्यपदेशशब्दं व्याचष्टे "तत्रे"ति, हेतुद्वयं विवरीतुमाह "तथा ही"ति, न केवलं विशेष्यवाचिना ब्रह्मविद्या-शब्देन विशेषणवाचिना सर्वविद्याप्रतिष्ठामिति शब्देनाऽपि ब्रह्मविषयत्वं सिद्धमित्यत्राह "परविद्यैव चे"ति, परब्रह्मविषया विद्यापरविद्या सर्वविद्याप्रतिष्ठात्वं ज्ञातव्ये ब्रह्मणि कृत्स्नज्ञातव्यान्तर्भावात् ब्रह्मज्ञाने कृत्स्नविषयज्ञानान्तर्भूतानीत्यर्थः। ब्रह्म जिज्ञासमानेन ब्रह्म हि प्रष्टव्यं कस्मिन्नु भगव इति प्रश्नस्य कथं ब्रह्मविषयत्वमित्यत्राह "ब्रह्मविद्याया"इति, द्वे विद्ये इति विद्याद्वयं भिन्नविषयत्वेन इतरैर्व्याख्यातं, तत्र केश्चित्परविद्या परमात्मविषया अर्थान्तरविषया चापरविद्येति केश्चित् कर्मज्ञानमपरविद्या ब्रह्मज्ञानं परविद्येत्युक्तं, केश्चित् अपरमात्मज्ञानमपरविद्या परमात्मज्ञानं परविद्येत्युक्तं तद्वारयत्यर्थं व्याचष्टे "ब्रह्मणेऽस्तुने"ति, ब्रह्मैव विषयश्चेत् द्वयोरपि को भेद? इत्यत्राह "परोक्षापरोक्षरूपे"ति, तस्येत्यादि स तपोऽतप्यत ओदनपाकं पचतीति वत् द्वे विद्ये वेदितव्ये इत्युक्तिः तत्र फलितमर्थमाह "उपादेये इत्यर्थः" इति, किं परोक्षं किमपरोक्षमित्यत्राह "तत्रे"ति, ब्रह्मैव विषयश्चेत् प्रथमेनैवालमित्यत्राह "तयोरि"ति, उपायभूतम्–अव्यवहितोपायभूतं तस्यापि निष्फलत्वमन्त्यवाक्येनावगम्यत इत्यत्राह–

मू० तच्च भक्तिरूपापन्नं "यमेवैष वृणुते स तेन लभ्य" इत्यत्रैव विशेष्यमाणत्वात्तदुपायश्चागमजन्यं विवेकादिसाधनसप्तकानुगृहीतं ज्ञानं "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"ति श्रुतेः, आह च भगवान् पराशरः "तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने! आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यत" इति

तत्र परा ऋग्वेदो यजुर्वेद इत्यादिना धर्मशास्त्राणीत्यन्तेन आगमोत्थं ब्रह्मसाक्षात्कारहेतुभूतं परोक्षज्ञानमुक्तं साङ्गस्य सेतिहासपुराणस्य सधर्मशास्त्रस्य समीमांसस्य वेदस्य ब्रह्मज्ञानोत्पत्तिहेतुभूतत्वात् "अथ परा यया तदक्षरमधिगम्यते" इत्युपासनाख्यं ब्रह्मसाक्षात्काररलक्षणं भक्तिरूपापन्नं ज्ञानमुच्यते यत्तदद्रेश्यमित्यादिना परोक्षापरोक्षरूपज्ञानद्वयविषयस्य परस्य ब्रह्मणः स्वरूपमुच्यते यथोर्णनाभिस्सृजते गृह्णते चेत्यादिना यथोक्तस्वरूपात् परस्माद् ब्रह्मणो–

टी० "तच्च भक्तिरूपे"ति, तर्हि किं प्रथमेनेत्यत्राह "तदुपायश्चे"ति, साधनसप्तकं शास्त्रजन्यं ज्ञानं चोभयमप्युपासनात्मकज्ञानस्य हेतुरिति यावत्। एतद्वैशद्यायाह "आह चे"ति, अनेन विद्याद्वयस्य भिन्नविषयत्वोक्तिरूपबृंहणाविरुद्धेति दर्शितं भवति, विवेकाच्च उत्थितमित्यर्थः यथोक्तलक्षणे ज्ञानद्वयेऽपि किं वाक्यं? किं विषय?मित्यपेक्षायामागमोत्थज्ञानं तत्रेत्यादिवाक्येनोक्तमित्याह "तत्रे"ति, वेद एव हि ब्रह्मज्ञानहेतुः धर्मशास्त्रादिकीर्त्तनं किमर्थं न चात्रागमोत्थत्वं ज्ञानस्य शाब्दं प्रतीयत इत्यत्राह "साङ्गस्ये"ति, सपरिकरस्यागमस्य तज्ज्ञानहेतुत्वादपरा विद्येत्यर्थः, तत्रापरा ऋग्वेद इत्यादिवाक्यस्यागमोत्थज्ञानविषयत्वं पूर्वोक्तोपबृंहणवचनेन द्विधा ज्ञानं तथोच्यते इत्यनेन स्पष्टीकृतम्। अथेत्यादिवाक्यस्य विवेकजन्यज्ञानविषयत्वमाह "अथे"ति, उक्तमित्यन्वयः, यत्तदित्यादिवाक्यस्य विषयमाह "यत्तदि"ति, यथोर्णनाभिरिति भूतयोनित्वविवरणमित्यर्थः। तपसा चीयत इत्यादिकं व्याचष्टे–

श्रु० ऽक्षरात् कृत्स्नस्य चेतनाचेतनात्मकप्रपञ्चस्योत्पत्तिरुक्ता विश्वमिति वचनान्नाचेतनमात्रस्य तपसा चीयते ब्रह्म ततो-

ऽन्नमभिजायते अन्नात्प्राणो मनस्सत्यं लोकाः कर्मसु चामृत"मिति ब्रह्मणो विश्वोत्पत्तिप्रकार उच्यते तपसा ज्ञानेन यस्य ज्ञानमयं तप इति वक्ष्यमाणत्वात्, चीयते—उपचीयते बहु स्यामिति सङ्कल्परूपेण ज्ञानेन ब्रह्म सृष्ट्युन्मुखं भवतीत्यर्थः, ततोऽन्नमभिजायते अद्यत इत्यन्नम् विश्वस्य भोक्तृवर्गस्य भोग्यभूतं भूतसूक्ष्ममव्याकृतं परस्माद् ब्रह्मणो जायत इत्यर्थः प्राणमनःप्रभृति च स्वर्गापवर्गरूपफलसाधनभूतकर्मपर्यन्तं सर्वं विकारजातं तस्मादेव जायते, यस्सर्वज्ञस्सर्वविदित्यादिना सृष्ट्युपकरणभूतं सार्वज्ञ्यसत्यसङ्कल्पत्वादिकमुक्तम् सर्वज्ञात्सत्यसङ्कल्पात्परस्मात् ब्रह्मणोऽक्षरादेतत् कार्याकारं ब्रह्म नामरूपविभक्तं भोक्तृभोग्यरूपं च जायते।

टी० "ब्रह्मण"इत्यादिना, विश्वस्य भोक्तृवर्गस्येत्यनेनैतद्वाक्यस्थसत्य-शब्दो व्याख्यातो भवति, सत्य-शब्दवाच्यस्य भोक्तृवर्गस्येत्यर्थः फलसाधनभूतकर्मपर्यन्तमिति लोकाः स्वर्गादयः कर्मसु चामृतं कर्मस्वायत्तममृतम् अमृतत्वसाधनभूतं कर्मेत्यर्थ इति भावः । पुनः सर्गाभिधानपौनरुक्त्यमाशङ्क्याह "यस्सर्वज्ञ"इति, यथा "दध्ना जुहोती"ति वाक्ये जुहोतिपदेन अग्निहोत्रं जुहोतीति विहितं होममनूद्य दध्नस्तत्साधनत्वं विधीयते तथा कारणानुवादेन सर्वज्ञत्वादिगुणविधानमित्यर्थः । भोक्तृभोग्यरूपञ्च जायत इत्यनेनान्न-शब्दो व्याख्यातो भवति अद्यतेऽत्ति च भूतानीति ह्यन्नशब्दनिर्वचनम् । द्वितीयखण्डार्थमाह "तदेतत्सत्यमि"त्यादिना, परस्येति कारणत्वशङ्कितदोषव्यावृत्त्यर्थमुक्तमित्यभिप्रायः । मन्त्रेष्वित्यादि केचित्सत्यकामपदं चतुर्मुखलोककामपरं व्याचक्षत इति तद्व्युदासार्थमाह "सार्वज्ञ्ये"ति, कमनीयत्वाय कल्याणगुणाकरत्वमुक्तम् अक्षरं पुरुषं स्वतः सत्यं कामयमाना इति

भू० तदेतत्सत्यमिति परस्य ब्रह्मणो निरुपाधिकसत्यत्वमुच्यते मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा सन्ततानि तान्याचरत नियतं सत्यकामा" इति सार्वज्ञ्यसत्यसङ्कल्पत्वादिकल्याणगुणाकरमक्षरं पुरुषं स्वतस्सत्यं कामयमानास्तत्प्राप्तये फलान्तरेभ्यो विरक्ता ऋग्यजुस्सामाथर्वसु कविभिर्दृष्टानि वर्णाश्रमोचितानि त्रेताग्निषु बहुधा सन्ततानि कर्माण्याचरतेति एष वः पन्था इत्यारभ्य एष वः पुण्यस्सुकृतो ब्रह्मलोक इत्यन्तेन कर्मानुष्ठानप्रकारं श्रुतिस्मृतिचोदितेषु कर्मस्वेकतरकर्मवैधुर्येतरेषामनुष्ठितानामपि निष्फलत्वमयथानुष्ठितस्य चाननुष्ठितसमत्वमभिधाय "प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापियन्ती"त्यादिना फलाभिसन्धिपूर्वकत्वेन ज्ञानविधुरतया चावरं कर्माचरतां पुनरावृत्तिमुक्त्वा "तपश्श्रद्धे ये ह्युपवसन्ती"त्यादिना पुनरपि फलाभिसन्धिरहितं ज्ञानिनाऽनुष्ठितं कर्म ब्रह्मप्राप्तये भवतीति प्रशंस्य "परीक्ष्य लोका"नित्यादिना केवलकर्मफलेषु विरक्तस्य यथोदितकर्मानुगृहीतं ब्रह्मप्राप्त्युपायभूतं ज्ञानं जिज्ञासमानस्य चाचार्योपसदनं विधाय

टी० "तदेतत्सत्यं येनाक्षरं पुरुषं वेद सत्यं पुनश्च तदेतत्सत्यमिति पूर्वापरयोर्ब्रह्मवाचित्वेन प्रयुक्तसत्य-शब्दैकार्थ्यादिति भावः । बहुधेति अधिकारमन्त्रफलभेदेन त्रेताऽग्नित्रयम् अग्नित्रयमिदं त्रेतेति नैघण्टुकाः आचरतेतीति उच्यत इति पूर्ववाक्यादनुषङ्गः, एष इत्यादि एकतरकर्मवै.

धुर्येऽपीतरेषां निष्फलत्वमित्यनेन "यस्याग्निहोत्रमदर्शपूर्णमासमनाग्रयण-मतिथिविवर्जितं च हुतमवैश्वदेवमि"त्यस्यार्थोऽभिप्रेतः, अयथाऽनुष्ठितस्या-ननुष्ठितसमत्वं चेत्यनेन "अश्रद्धया अविधिना हुतमासप्तमान्तस्य लोकान् हिनस्तीत्यस्यार्थउक्तः । इदं त्रिवर्गफलसाधनकर्मविषयमुक्तम् प्लवा ह्येते अदृढा इति तत् प्रकरणत्वाच्च "हाभिक्रमनाशोऽस्तीति मोक्षसाधनकर्मणां यथोक्तविपरीतत्वप्रतिपादनाच्च प्लवा ह्येतइत्यादि अष्टादशोक्तम् अष्टा-दशस्मृत्युक्तम् ।

श्रु० "तदेतत्सत्यं यथा सुदीप्तादि"त्यादिना "सोऽविद्याग्र-न्थिं विकिरतीह सोम्ये"त्यन्तेन पूर्वोक्तस्याक्षरस्य भूत-योनेः परस्य ब्रह्मणः परमपुरुषस्यानुक्तैः स्वरूपगुणैः सह सर्वभूतान्तरात्मतया विश्वशरीरत्वेन विश्वरूपत्वं तस्माद्वि-श्वसृष्टिं च विस्पष्टमभिधाय "आविस्सन्निहितमि"त्या-दिना तस्यैवाक्षरस्याव्याकृतात्परतोऽपि पुरुषात्परभूतस्य परस्य ब्रह्मणः परमव्योम्नि प्रतिष्ठितस्यानवधिकातिशया-नन्दस्वरूपस्य हृदयगुहायामुपासनप्रकारमुपासनस्य च परभक्तिरूपत्वमुपासीनस्याविद्याविमोक्षपूर्वकं ब्रह्मसाम्यं ब्रह्मानुभव फलं चोपदिश्योपसंहृतम्, अत एवं विशेषणा-द्भेदव्यपदेशाच्च नास्मिन् प्रकरणे प्रधानपुरुषौ प्रतिपाद्येते, भेदव्यपदेशोऽपि हि ताभ्यां परस्य ब्रह्मणोऽत्र विद्यते । "दिव्यो ह्यमूर्त्तः पुरुषस्स बाह्याभ्यन्तरो ह्यजः अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात्परतः पर" इत्यादिभिः ।

टी० श्रुतेरपि प्रदर्शनार्थमिदं श्रुतिस्मृतिचोदितं कर्मेत्यर्थः । यद्वा षोडशर्त्विक्पत्नीयजमानरूपाष्टादशपुरुषेषु विहितम् । यद्वा "नव ग्राम्यान् पशूनालभते नवारण्यान् उभयान् पशूनालभत" इति श्रुत्युक्ताष्टादशपशुह-

विष्कं कर्मेति यज्ञ-शब्दः कर्मसामान्यवाचि येषु पुरुषेषु स्मृतिविहितमपरं कर्मफलाभिसन्धिमत् एतच्छ्रेयोयेऽभिनन्दन्ति ते पुरुषा जरामृत्यू अपियन्तीत्यन्वयः, ब्रह्मप्राप्तये भवतीत्यनेन सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतस्स पुरुषोऽव्ययात्मेत्यस्यार्थ उक्तः, परीक्ष्य लोकानित्यादिवाक्ये गुरूपसत्तिविषयनियमविधिः अन्यन्यायसिद्धार्थानुवादरूपं तृतीयाखण्डार्थमाह "तदेतत्सत्यं यथे"त्यादिना, भूतयोन्यक्षरस्याक्षरात्परतः परस्य चानन्यत्वसिद्धये प्रथमतृतीयखण्डयोरैकार्थ्यप्रत्यभिज्ञापकविशेषणानि दर्शयति

सू० अक्षरादव्याकृतात्परो यः समष्टिपुरुषः तस्मादपि परभूतोऽदृश्यत्वादिगुणकोऽक्षरशब्दाभिहितः परमात्मेत्यर्थः, अश्नुत इति वा न क्षरतीति वा ऽक्षरं तदव्याकृतेऽपि स्वविकारव्याप्त्या वा महदादिवन्नामान्तराभिलापयोग्यक्षरणाभावाद्वाऽक्षरत्वं कथञ्चिदुपपद्यते

पूर्वोक्तस्येत्यादिपदैः, पूर्वोक्तस्यैवेह प्रतिपाद्यत्वोपपादकानि पदान्तराणि तदक्षरमधिगम्यते "भूतयोनिं परिपश्यन्ति" तथा "अक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ती"ति वाक्ययोरेकविषयत्वं दर्शितम् अक्षरस्य भूतयोनेरिति तपसा चीयते ब्रह्म तपो ब्रह्म परामृतमित्यनयोरेककण्ठ्यं दर्शितं परस्य ब्रह्मण इति तस्मादेतद् ब्रह्मेत्यवगतकार्यब्रह्मव्युदासार्थः पर-शब्दः, तेनेदं पूर्णं पुरुषेण पुरुष एवेदं सर्वमित्यनयोरेकविषयत्वाभिप्रायेण परमपुरुषस्येत्युक्तं, तत्र, यस्मात् परं नापरमस्तीत्युक्त समाभ्यधिकराहित्यसूचनार्थः परम-शब्दः, अक्षर पुरुष-शब्दाभ्यां येनाक्षरं पुरुषमिति द्वितीयखण्डैकार्थ्यं च दर्शितं भवति, अत्र हि तथाऽक्षराद्विविधास्सोम्य भावाः प्रजायन्ते तत्र चैवापियन्तीत्युक्त्वा दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तर इति प्रकृतकारणाक्षरपरामर्शितच्छब्देनाक्षरात्परतः परस्य सामानाधिकरण्यात् भूतयोन्यक्षरमेवाक्षरात्परतः पर इत्यवगम्यते न हि तस्मादक्षरात्पर इत्युक्तम् अपि त्वक्षरात्पर इति पश्चादपि "एतस्माज्जायते प्राणः एष सर्वभूतान्तरात्मा तस्मादग्निस्समिधश्च सूर्य इ-

त्यारभ्य अतस्समुद्रा ओषधयः इत्यन्तेषु वाक्येषु तमेव तदेतच्छब्दैः परामृश्य एतेषु भूतेषु तिष्ठते ह्यन्तरात्मेत्युक्त्वा पुरुष एवेदं सर्वमित्यभिधानात्, भूतयोन्यक्षर ब्रह्म–शब्दवाच्यः पुरुष एवाक्षरात्परतः पर इति प्रतीयते अनुक्तैः स्वरूपगुणैरित्यनेन दिव्यो ह्यमूर्त्तः पुरुष इत्याद्युक्ताः दिव्यत्वामूर्त्तत्वविभुत्वादयोगुणाः विवक्षिताः, विश्वरूपत्वं विश्वप्रकारत्वं तदेव विश्वशरीर–शब्देन विशेषितं तदुपपादकं सर्वभूतान्तरात्मतयेति पदम् अन्तःप्रविश्य नियन्तृत्वादस्य विश्वं शरीरतया प्रकार इत्यर्थः, अनेन पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा अतश्च सर्वा ओषधयो रसाश्च एतेषु भूतेषु तिष्ठते ह्यन्तरात्मा पुरुष एवेदं सर्वमिति श्रुत्यर्थोऽनुसंहितः तस्माद्विश्वसृष्टिं चेत्यनेन तस्मादग्निस्समिधश्च सूर्यः सोमः पर्जन्य ओषधय इत्याद्यर्थ उक्तः, विस्पष्टमित्यनेन प्रथमतृतीयखण्डयोः पौनरुक्त्यपरिहारः पूर्वोक्तसृष्टिप्रपञ्चनपरत्वान्न पुनरुक्तिरित्यभिप्रायः । चतुर्थखण्डार्थमाह "आविरि"ति, आविस्सन्निहितं योगिनामपरोक्षं सन्निहितं तस्यैव प्रथमद्वितीयखण्डप्रतिपादितस्य अव्याकृतादिति अक्षरात्परतः परस्येति तृतीयखण्डप्रतिपादितस्येति । अथ तदेतदक्षरं ब्रह्मेति वाक्यमभिप्रयन्नाह "परस्य ब्रह्मण" इति, यस्सर्वज्ञस्सर्वविद् यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष व्योमन्यात्मा प्रतिष्ठित इत्यस्यार्थमाह "परमव्योम्नि प्रतिष्ठितस्ये"ति, यस्यैष महिमा भुवी"ति लीलाविभूत्यन्वय उक्तः । दिव्ये व्योम्नीति त्रिपाद्विभूतिरुक्ता ब्रह्मपुरे इति शब्दः एतत्सत्यं ब्रह्मपुरमितिवन्न कर्मधारयः ब्रह्मपुरे आत्मा प्रतिष्ठित इति व्यतिरेकनिर्देशात्, तद्विज्ञानेन परिपश्यन्ति धीराः आनन्दरूपममृतं यद्विभातीति वाक्यं हृदि निधायाह "अनवधिकातिशये' ति, हृदयगुहायामुपासनप्रकारमिति एतद्यो वेद निहितं गुहायामिति गुहायामिति पूर्वखण्डावसाने हृदयगुहायामुपासनं विहितं तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धीत्यारभ्य "प्रणवो धनुः शरो ह्यात्मा आत्मानमरणिं कृत्वा" इत्यादिभिरुपासनस्य प्रकार उक्त इत्यर्थः, हृदयागुहासम्बन्ध्युपासनस्यैव प्रकारोपदेशोऽयं न तूपासनान्तरस्येति इदमवगतं गुहाचरन्नाम महत्पदं प्रतिष्ठितोऽन्तर्हृदये सन्निधाय पद्मकोशप्र-

तीकाशं सुषिरं चाप्यधोमुखं हृदयं तद्विजानीयाद्विश्वस्यायतनं महदिति चतुर्थखण्ड एव तस्योपासनस्य हृदयगुहासम्बन्धित्वावगमात् पाटक्रमा-दर्थक्रमस्य प्रबलत्वात् षष्ठखण्डे प्रतिपन्नमर्थमाह "उपासनस्य चे"ति, "यमेवैष वृणुते तेन लभ्य" इति हि तत्रोक्तम् अर्थक्रमेण तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीति पञ्चमखण्डस्थवाक्यं हृदि निधायाह "ब्रह्मसममि"ति, भोगमात्रेण साम्यमित्याह "ब्रह्मानु-भवफलमि"ति, अविद्याविमोकपूर्वकमित्यनेन पुण्यपापे विधूयेत्यस्यार्थ-उक्तः। ननु पञ्चमखण्डे साम्यापत्तिरूपस्सगुणमोक्ष उक्तः, षष्ठे तु मुक्तात्मानः सर्वमेवाविशन्तीति परब्रह्मप्राप्तिरूपपरममोक्ष उक्तः वेदान्तविज्ञानेति म-न्त्रेण तस्य क्रमभावित्वमुक्तं परे ऽव्यये सर्व एकीभवन्तीति परममोक्षस्यै-क्यापत्तिरूपत्वमुक्तं यथा नद्य इति विशेषप्रहाणमुक्तं ब्रह्मैव भवतीत्यै-क्यापत्तिनिगमनमिति नैवं तथाहि सर्वमेवाविशन्तीति न निर्गुणप्राप्तिः सर्व-शब्दस्य निर्गुणवाचित्वाभावात् किन्तु ब्रह्मविभूतिभूततद्व्याप्यस-मस्तजगदनुभवोक्तिः ते सर्वगं सर्वतः प्राप्य धीरा इति सर्वगस्य ब्रह्मणः प्राप्तिरुक्तत्वात् सर्वग-शब्देन सर्वशब्दवाच्यस्य ब्रह्मव्याप्यविभूतित्वा-वगमाच्च वेदान्तविज्ञानेति तु वाक्यं चरमशरीरावसाने ब्रह्मप्राप्ति-प्रतिपादकमिति वक्ष्यते, गतिः कलाः पञ्चदश प्रतिष्ठा इति मन्त्रश्च मुक्तात्मपरित्यक्तदेहेन्द्रियतदभिमानिदेवतादीनामितरचेतनाचेतनवत्प्रलये परमात्मनि लयपरः न तु मोक्षपरः, मुक्तौ कला-शब्दोक्तभूतेन्द्रियाणां परमात्मनैक्यापत्त्यभावात् पृथिव्यादिषु लय एव परमात्मनि लय इति चेत् अमुक्तदेहस्यापि पृथिव्यादिषु लयादस्य वाक्यस्य मुक्तविषयत्वं न स्यात् एकस्मिन्मुक्ते सत्यग्न्यादिदेवताश्च न परमात्मनि लीयन्ते, अत-श्चेदं वाक्यं न मुक्तस्य परमात्मैक्यापत्तिपरं यथा नद्य इति तु वाक्यं मुक्तस्य ब्रह्मप्राप्तेः कर्मकृतनामरूपप्रहाणपूर्वकत्वपरं ब्रह्मैव भवतीति पूर्वोक्तसाम्यापत्तिनिगमनपरं ब्रह्मपर्यन्तस्वात्माविर्भावपरं वा अतो यथोक्त एवार्थः, एवं सौत्रहेतुद्वये विशेषणम् प्रपञ्चितम्। उपपादितं हेतुं हेत्वन्तरेण सहानुवदन् साध्यार्थेन घटयति "अत एवमि"ति, भेदव्यपदेशस्योपादानं

तस्य प्रपञ्चनाकाङ्क्षाजननार्थम् । अथ भेदव्यपदेशं प्रपञ्चयति "भेदव्यपदेशोऽपि ही"ति, अक्षर-शब्दस्याव्याकृतवाचित्वं कथ ? मित्यपेक्षायां प्रोक्षणीव्यवसंयोगादिति न्यायमभिप्रेत्यावयवशक्तिं दर्शयति "अश्नुत"इति, अश्नुत इत्यवयवार्थः किमव्याकृते सम्भवती ? त्यत्राह "अव्याकृतेऽपी"ति, स्वविकारव्याप्येति कार्याकारेण विकृतमंशं विकृतादन्यः कारणांशः सूक्ष्मतया व्याप्नोतीत्यर्थः, अत एवेदमव्यवहृदर्थेहुय नाशङ्कनीयं यदुच्यते इहायं सर्वज्ञ-शब्दः कस्मिंश्चिद्देवताविशेषे रूढः न तु यौगिकः, अन्यथा सर्ववित्छब्दपौनरुक्त्यात्, तस्मात् ब्रह्मण उत्पत्तिः श्रूयते तस्मादेतद् ब्रह्म नामरूपमन्नञ्च जायत इति इह ब्रह्म शब्दवाच्यश्च परमपुरुषः येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यामिति पुरुष एवेदं सर्वं तपो ब्रह्म परामृतमिति ब्रह्मपुरुष-शब्दयोरेकविषयत्वावगमादिति तत्र पुरुषाक्षरशब्दयोस्सामानाधिकरण्यादक्षरस्य भूतयोनित्वश्रवणात् पुरुषउपादानम् अक्षरात्परतः परश्च सर्ववित्त्वादियोगान्निमित्तम् एवं च अक्षरात् सम्भवति अक्षरात्परत इति अक्षर-शब्दयोर्विरूपार्थता च न स्यादिति तत्र तावन्निमित्तोपादानभेदोऽनुपपन्नः तथा सति निमित्तान्तरस्य स्थितत्वेन ब्रह्मविज्ञानेन सर्वविज्ञानानुपपत्तेः, न च कार्यविषयतया सर्व-शब्दसङ्कोचान्निमित्तान्तरस्थित्युपपत्तिः उपादानभूतस्यैव ब्रह्मणो निमित्तत्वं वदतां निमित्तान्तरं च निषेधतां वाक्यानां भूयस्त्वात्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं चोपक्रमावगतत्वात्प्रबलम्, अक्षरपुरुषस्य यस्मात्परं नापरमिति समाभ्यधिकनिषेधश्च उपक्रमावगतः तेन तत्परकं निमित्तान्तरमनुपपन्नम् अस्यामेवोपनिषदि "रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिमिति रुक्मवर्णपुरुषस्यैव कर्तृत्वयोनित्वश्रवणाच्च, न निमित्तोपादानभेदः, अन्नादिप्रपञ्चकारणत्वप्रत्यभिज्ञानाच्च न सर्वज्ञाक्षरपुरुषयोर्भेदः "यस्सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः तस्मादेतत् ब्रह्म नाम रूपमन्नं च जायत इति सर्वज्ञस्य तथात्वं श्रूयते "तपसा चीयते ब्रह्म ततोऽन्नमभिजायत" इति ब्रह्मणश्च तथात्वं श्रूयते "तपसा चीयते ब्रह्म यस्य ज्ञानमयं तप" इति तपश्शब्दवाच्यज्ञानवत्त्वं सर्वज्ञस्य ब्रह्मणश्चावगम्यते ब्रह्मपुरुष-श-

द्वयोश्चैकविषयत्वं दर्शितम् । एवं सर्वज्ञ-शब्दवाच्यस्य ब्रह्म-शब्दनिर्दिष्टपुरुषस्य चान्नादिकारणत्वतद्रूपयोगिसार्वज्ञ्यादिगुणयोगेनानन्यत्वाविमित्तोपादानभेदो विध्वस्तः, तदभेदे च सति तथाऽक्षरात् सम्भवति तस्मादेतत् ब्रह्मेति पञ्चम्योर्वैरूप्यं च न स्यात् "ब्रह्म वनं ब्रह्म स वृक्ष आसी"दिति श्रुत्यन्तराविरोधश्च स्यात् तपसा चीयते यस्सर्वज्ञः इति मन्त्रयोः प्रतिपन्नस्य सर्वज्ञस्य ब्रह्मणश्च कारणतयाऽनन्यत्वात्, मिथः । कार्यकारणभावशङ्का निरस्ता । किञ्च अस्यामुपनिषदि अक्षरब्रह्म-शब्दौ कारणे कार्ये च प्रयुक्तौ "अक्षरात्सम्भवति अक्षरात्परतः परः तपसा चीयते ब्रह्म तस्मादेतद् ब्रह्मे"ति तत्र पुरुष-शब्दसमानाधिकरणावक्षरब्रह्म-शब्दौ किं कारणविषयौ? उत कार्यविषयौ? इति विशये नास्त्यक्रमः क्रमेणेत्युक्त्वा "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यामित्युक्तत्वात् कारणविषयाविति निश्चीयते, ततश्च कारणपुरुषादन्यस्य परत्वासम्भवात् भूतयोन्यक्षरमेवाक्षरात्परतः परः । किञ्च येनाक्षरं पुरुषं वेद सत्यं प्रोवाचेत्यक्षरपुरुषस्य वक्तव्यत्वप्रतीतेः तस्यैव प्राधान्यात् स एवाक्षरात्परतः परश्च भवितुमर्हति अन्यस्य प्रतिपाद्यत्वं प्रतिज्ञायार्थान्तरप्रतिपादनव्याघातात्, भूतयोन्यक्षरधर्माणामक्षरात्परतः परे दर्शनात् तस्य च स इति प्रकृताक्षरपुरुषपरामर्शितच्छब्दसामानाधिकरण्याच्चाक्षरात्परतः पर एवाक्षरपुरुषः । किञ्च यथा भूतयोन्यक्षरस्य पुरुषत्वम् अक्षरं पुरुषमिति पुरुष-शब्दसामानाधिकरण्यादवगम्यते तथा अक्षरात्परतः परस्य च पुरुषत्वं दिव्यो ह्यमूर्त्तः पुरुष इति पुरुष-शब्दसामानाधिकरण्यादवसीयत इति तयोरनन्यत्वसिद्धिः, ब्रह्म-शब्दवाच्याक्षरपुरुषादन्यः सर्वज्ञ इह प्रतिपाद्यते चेत् "स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठा"मित्युपक्रमविरोधश्च स्यात्, अक्षरपुरुषस्सर्वज्ञादपरश्चेत् । अथ परा यया तदक्षरमधिगम्यत इत्यक्षरविद्यायाः परविद्यात्वकथनं विरुध्येत । अक्षरपुरुषः परमकारणं न चेत् उपासते पुरुषं ये ह्यकामाः परात्परं पुरुषमुपैति दिव्यमिति परमपुरुषस्योपास्यत्वप्राप्यत्वश्रवणविरोधः, परमकारणस्यैव ह्युपास्यत्वप्राप्यत्वे वेदान्तप्रसिद्धे परमकारणं चेदक्षरपुरुषस्तस्मादन्यस्य परत्वमनुपपन्नं "स कारणं करणाधिपाधिपो न चास्य कश्चि-

र्जनिता न चाधिप इति कारणान्तराधिपत्यन्तरनिषेधात्, एवञ्च सति सर्वज्ञशब्दरूढ्यनुगुणं न पुरुष-शब्दो नेयः अपि तु पुरुष-शब्दरूढ्यनुगुणं सर्वज्ञ-शब्दो नेयः, ततश्च तस्य पशुपतिपरत्वमयुक्तं दिव्यो ह्यमूर्त्तः पुरुषः रुक्मवर्णं कर्त्तारमीशं पुरुषं परात्परं पुरुषमित्यादिवाक्यानाम् आदित्यवर्णं तमसः परस्तात् आदित्यवर्णं तमसस्तु पारे त्रिपादस्यामृतं दिवि पुरुष एवेदं सर्वम् इति पुरुषनारायणोत्तरनारायणैकार्थ्यप्रतीतेः, "नित्यं विभुं सर्वगतं सुसूक्ष्ममित्यनेन अणोरणीयान् महतो महीयानित्यादिकठवल्ल्यैकार्थ्यावगमात्तत्र च "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद"मिति श्रवणाच्च पद्मकोशप्रतीकाशं पुरुष एवेदं सर्वमिति नारायणानुवाकसुबालोपनिषदैकार्थ्यावगमाच्च परमपुरुषपरत्वसिद्धिः, ब्रह्मरुद्रयोर्नारायणसृज्यत्ववादिश्रुतिविरोधश्चान्यथा स्यात्, अतस्सर्वज्ञ-शब्देन सर्वेषां धर्मिणां ज्ञातृत्वमुक्तं सर्वविच्छब्दस्तु तत्तद्वस्तुगतसर्वप्रकारवेदित्वपरः, धर्मिमात्रज्ञानादपि तद्गतप्रकारकार्त्स्न्यज्ञानं हि ज्ञातुः प्रकर्षापादकम् अतसंज्ञवृक्षमात्रज्ञानं हि सर्वेषां सम्भवति सकृच्चक्षुस्संप्रयोग एव तद्गतशाखापत्रफलसङ्ख्यादिज्ञानं ह्यक्षहृदयाभिज्ञस्यैव सम्भवति । यद्वा सर्वं विन्दन्तीति सर्ववित् सर्वस्वामीत्यर्थः, लब्धधनो हि धनस्वामी भवति अतस्सर्वज्ञत्वादिगुणको निमित्तोपादानभूतः सर्वस्मात्परतः परमपुरुष एव ॥

सू० रूपोपन्यासाच्च ॥ २४ ॥

सू० "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदाः वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मे"तीदृशं रूपं सर्वभूतान्तरात्मनः परमात्मन एव संभवति, अतश्च परमात्मा । अदृश्यत्वादिगुणकाधिकरणं समाप्तम् ॥

वैश्वानराधिकरणम् ।

सू० वैश्वानरस्साधारणशब्दविशेषात् ॥ २५ ॥

इदमामनन्ति छन्दोगाः "आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूही"ति प्रक्रम्य यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति तत्र संदेहः किमयं वैश्वानर आत्मा परमात्मेति शक्यनिर्णयः? उत ने? ति, किं प्राप्तम् अशक्यनिर्णय इति, कुतः वैश्वानर-शब्दस्य चतुर्ष्वर्थेषु प्रयोगदर्शनात्, जाठराग्नौ तावत् "अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोती"ति महाभूततृतीये च "विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमन्हामकृण्वन्नि"ति, देवतायां च "वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्री"रिति परमात्मनि च "तदात्मन्येव हृदयेऽग्नौ वैश्वानरे प्रास्यत् स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयत इति च वाक्योपक्रमादिषूपलभ्यमानान्यपि लिङ्गानि सर्वानुगुणतया नेतुं शक्यानीति ।

टी० सू० रूपोपन्यासाच्च सर्वभूतान्तरात्मन इति सर्वभूतान्तरात्मसम्बन्धितयोच्यमानमीदृशं रूपं परमात्मन एव सम्भवतीत्यर्थः, निर्विशेषवादे तावदिदं सूत्रत्रयमनुपपन्नम् अभावरूपाणामप्यदृश्यत्वादीनां गुणत्वव्यवहारात् सर्वज्ञत्वादिधर्मव्यवहाराच्च, प्रथमसूत्रं विरुद्धं व्यावर्तकधर्मापारमार्थ्ये व्यावृत्त्यपारमार्थ्यात् भूतयोन्यक्षरस्य प्रधानव्यावृत्त्यसिद्धेश्च भेदमिथ्यात्वे भेदव्यपदेशेन परमात्मत्वसाधनमप्ययुक्तं शारीराद्भिनष्टि प्रधानाद्भेदं व्यपदिशतीति द्वितीयसूत्रार्थवर्णनमप्यनुचितं विशेषणभेदव्यपदेशयोरेकैकस्यैव शारीरप्रधानव्यावर्त्तनक्षमत्वात्, दिव्यत्वामू-

र्त्तृत्वपुरुषत्वादयो हि कार्त्स्न्येन प्रधानस्यापि न सम्भवन्ति अक्षरात्परतः पर इति जीवव्यावृत्तिरपि हि प्रतीयते, स कारणं करणाधिपाधिप इति वत् अक्षरात्परो हि जीवः विशेषण-शब्दस्य दिव्यो ह्यमूर्त इति श्लोकोक्तार्थमात्रविषयत्वं चायुक्तं सङ्कोचकाभावात्, एकविज्ञानेन सर्वविज्ञानाभिधानादीनां भूतयोन्यक्षरस्य चिदचिद्व्यावृत्तिमूलकत्वाद्विशेषण-शब्देन वक्तुं युक्तं न तु धर्म-शब्देन, न ह्येकविज्ञानेन सर्वविज्ञानाभिधानं नाम परमात्मगतो धर्मः, अतस्तादृशं विशेषणजातं द्वितीयसूत्रेण विवक्षितं भवितुमर्हति न तु प्रथमेन, रूपोपन्यासाच्चेति सूत्रस्य पुरुष एवेदमिति वाक्यप्रतिपन्नसर्वात्मकत्वप्रतिपादनपरत्ववर्णनमनुपपन्नं पूर्वसूत्रयोरन्यतरविवक्षितैकविज्ञाननिबन्धनसर्वविज्ञानान्तर्गतत्वात्सर्वात्मभावस्य, न च त्रैलोक्यशरीरहिरण्यगर्भोत्पत्तिः अग्निर्मूर्धेत्यादिवाक्यप्रतिपाद्या अजायतेत्यध्याहारप्रसङ्गात्, "एतस्माज्जायते प्राणः" "तस्मादग्निः समिधश्चे"ति, प्रकरणवशादध्याहार इति चेन्न अवान्तरप्रकरणस्य भूतयोन्यक्षरविषयमहाप्रकरणविरोधे दुर्बलत्वात्, सर्वभूतान्तरात्मत्वलिङ्गबाधितत्वाच्च तद्धि परमकारणस्य लिङ्गं न तु कार्यस्य न च कारणस्य विग्रहवत्त्वानुपपत्त्या हिरण्यगर्भपरत्वाश्रयणम् अनन्तरं वैश्वानराधिकरणएव त्रैलोक्यशरीरकस्य परमात्मताया उपपादयिष्यमाणत्वात् "यस्याग्निरास्यं द्यौर्मूर्धे"त्यादिस्मृतिप्रसिद्धं च भगवतः त्रैलोक्यशरीरत्वं यदि क्वचिद्धिरण्यगर्भस्य त्रैलोक्यशरीरत्वमवगम्यते, तदानीमपि परमात्मात्मकत्वेनैव तस्य तथात्वं वर्णनीयं सृष्टिं ततःकरिष्यामि त्वामाविश्य प्रजापते तवान्तरात्मा मम च ये ये चान्ये देहिसंज्ञिताः इति चतुर्मुखस्य भगवदनुप्रवेशतदन्तरात्मकत्वावगमात्, अतः परमात्मन एव त्रैलोक्यशरीरत्वम् अग्निर्मूर्धेत्यादिनाऽभिधीयते, अतः सूत्राणां यथोक्त एवार्थः । अदृश्यत्वादिगुणकाधिकरणं समाप्तम् ।

एवं त्रैलोक्यशरीरत्वेन परमात्मत्वे साधिते तादृशशरीरत्वं तद्व्यतिरिक्तस्यापि श्रूयत इति शङ्कोत्थानात् सङ्गतिः सू॰ वैश्वानरस्साधारणशब्दविशेषात् २५ । विषयमाह "इदमि"ति, अध्येषि=इक् स्मरणे स्मरसि उपास्स इत्यर्थः । यद्वा इण् गतौ गत्यर्था बुध्यर्थाः अवगच्छसी-

त्यर्थः, यद्यपि को न आत्मा किं ब्रह्मेत्यात्मब्रह्म-शब्दाभ्यामुपक्रमादुपसंहारस्य च तदानुगुण्येन नेयत्वाच्च सन्देहोदयः तथाऽपि समानप्रकरणे वाजसनेये अग्निवैश्वानर-शब्दाभ्यामुपक्रमात् संशयः संभवतीत्यभिप्रायेणाह "तत्र सन्देह" इति, शक्यनिर्णयत्वाशक्यनिर्णयत्वे सन्देहशिरसी कृते तच्च साधारण-शब्दस्य सूत्रस्थत्वनिबन्धनम् । ननु प्रयोगसाधारण्यं हि वैश्वानर-शब्दस्य साधारणत्वम् । अक्षर-शब्दोऽपि हि प्रकृतिपुरुषेश्वरसाधारणः प्रयुज्यते अक्षरात्परतः परः क्षरं प्रधानममृताक्षरं हरः यया तदक्षरमधिगम्यत इत्यादि, ततश्च अक्षरमम्बरान्तधृतेरित्यत्रापि शक्यनिर्णयत्वाशक्यनिर्णयत्वे सन्देहविषयतया वक्तव्ये तथा च न कृतं किन्तु प्रधानं वा जीवो वा परमात्मावेति विचारः कृतः, इहापि तथैव संशयो वक्तव्य इति नैवं तत्र हि प्रयोगसाधारण्यातिरिक्तः प्रकृतिपुरुषयोरन्यतरविषयत्वनिर्धारकः पूर्वपक्षहेतुर्विद्यते अतस्तथा सन्देह उपपद्यते, इह तु प्रयोगसाधारण्यस्यैव पूर्वपक्षहेतुत्वात्तस्य च जाठरभूततृतीयदेवतास्वन्यतमनिर्धारकत्वाभावात्तस्य परमात्मलिङ्गादर्शने तद्विषयत्वनिर्णयप्रतिबन्धकत्वात् त्रेताकल्पनादीनामनिर्धारकत्वस्य वक्ष्यमाणत्वाच्च शक्यनिर्णयत्वाशक्यनिर्णयत्वे संशयविषयतयोक्ते । नन्वेवं सति संशयलक्षणाप्रामाण्यं पूर्वपक्षितं स्यात् तच्चायुक्तं प्रथमे काण्डे वेदप्रामाण्यस्य समर्थितत्वमुपजीव्यारब्धत्वाच्छारीरकस्य अतोऽर्थविशेषपरत्वं पूर्वपक्षीकर्तव्यं न त्वशक्यनिर्णयत्वं, नैवं चतुर्ष्वर्थेष्वन्यतमानिर्धारणेऽपि सर्वथा कस्मिँश्चिदर्थे प्रमाणमेवेदमिति सामान्यतः प्रामाण्यनिश्चयस्यानपोद्यत्वात्, तद्धि नित्यनिर्दोषवाक्यतया स्थापितं, विधि-शब्दस्य मन्त्रत्वे भावस्यादिति न्यायेन प्रामाण्यसिद्धिः किमयं वैश्वानरात्मा परमात्मेति शक्यनिर्णयः? उत? न तदर्थमात्मब्रह्म-शब्दोपक्रमो वैश्वानरस्य ब्रह्मभावमवगमयति? ने?ति तदर्थमग्नि-शब्दसामानाधिकरण्यत्रेताकल्पनप्राणाहुत्यधारत्वानि किं वैश्वानरस्य ब्रह्मभावविरोधिनी? उत ने? ति, किमेषोऽग्निर्वैश्वान इत्यग्नि-शब्दोऽग्निमात्रपरः? उताग्न्यवस्थापरमात्मपर? इति अग्नि-शब्दस्याग्निमात्रपरत्वे अग्निशब्दसामानाधिकरण्यादीनां ब्रह्मभावविरोधितया आत्मब्र-

ह्म-शब्दोपक्रमस्याऽपि ब्रह्मभावावगमकत्वाभावेनाशक्यनिर्णय इति पूर्वपक्षः अग्नि-शब्दस्य परमात्मपरत्वे अग्नि-शब्दसामानाधिकरण्यादीनां ब्रह्मभावाविरोधितया आत्मब्रह्म-शब्दोपक्रमस्य ब्रह्मभावावगमकत्वोपपत्तेर्वैश्वानरः परमात्मेति शक्यनिर्णय इति राद्धान्तः, वैश्वानर-शब्दस्य चतुर्ष्वर्थेष्विति जीवपरसाधारणात्म-शब्दसद्भावेऽप्यात्म-शब्दस्य वैश्वानरमात्मानमिति वैश्वानर-शब्दविशेषितत्वाद्वैश्वानर-शब्दस्य च जीव मात्रे प्रयोगाभावादिह जीवविषयत्वशङ्का न सम्भवति, न हि गो-शब्द विशेषितस्य चतुष्पाच्छब्दस्याश्वादिपरत्वशङ्का सम्भव इत्यभिप्रायेण पञ्चस्वित्यनुक्तिः, विश्वस्मा अग्निमिति विश्वस्मै भुवनाय विश्वभुवनोपकारार्थं वैश्वानरं महाभूततृतीयं अह्नां केतुम् आदित्यं अकृणवन्नित्यर्थः, वैश्वानरस्येति सुमतिः-शोभनमतिः सुमतौ स्याम तद्विषयभूतास्स्याम अभितः श्रीर्यस्य सोऽभिश्रीः "श्रियमिच्छेद्धुताशनाद्" इति उक्तत्वात्,हिकमित्यव्ययं प्रयोगसाधारण्यातिरिक्तेषु त्रेताग्निकल्पनादिष्वात्मब्रह्म-शब्दादिषु च प्रतीयमानेषु कथं शक्यनिर्णयत्वतदभावसन्देहोक्ति? रित्यत्राह "वाक्योपक्रमे"ति, काल्पनिकं त्रेतारूपत्वं सर्वत्र सम्भवति ब्रह्माग्नि-शब्दौ मिथः प्रतिबन्धकत्वादनिर्धारकौ अन्नादनरूपं फलञ्च सर्वत्रोपपन्नमित्यभिप्रायः ॥

सू० एवं प्राप्ते अभिधीयते-

वैश्वानरस्साधारणशब्दविशेषात् ॥ २५ ॥

वैश्वानरः परमात्मा कुतः साधारणशब्दविशेषात् विशेष्यत इति विशेषः साधारणस्य वैश्वानर-शब्दस्य परमात्मासाधारणैर्धर्मैर्विशेष्यमाणत्वादित्यर्थः, तथा हि औपमन्यवादयः पञ्चेमे महर्षयः समेत्य "को न आत्मा किं ब्रह्मेति विचार्य "उद्दालको ह वै भगवन्तोऽयमारुणिस्संप्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छामे-त्यु"द्दालकस्य वैश्वानरात्मविज्ञानमवगम्य तमभ्याजग्मुः

स चोद्दालक एतान्वैश्वानरात्मजिज्ञासूनभिलक्ष्याऽऽत्मनस्य तत्त्वाकृत्स्नवेदित्वं मत्वा तान्होवाच अश्वपतिर्वै भगवन्तोऽयं कैकयस्संप्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छामेति, ते चोद्दालकषष्ठास्तमश्वपतिमभ्याजग्मुः स च तान्महर्षीन् यथार्हं पृथगभ्यर्च्य न मे स्तेन इत्यादिना यक्ष्यमाणो ह वै भगवन्तोऽहमस्मीत्यन्तेनात्मनो व्रतस्थतया प्रतिग्रहयोग्यतां ज्ञापयन्नेव ब्रह्मविद्भिरपि प्रतिषिद्धपरिहरणीयतां विहितकर्मकर्तव्यतां च प्रज्ञाप्य यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि व सन्तु भवन्त इत्यवोचत् ते च मुमुक्षवो वैश्वानरमात्मानं जिज्ञासमानास्त्वमेवात्मानमस्माकं ब्रूहीत्यवोचन् तदेवं

टी० "एवं प्राप्ते" इति, साधारणशब्दविशेषादित्येतद्व्याचष्टे "विशेष्यत" इति, विशेष इति, नेदं विशेष–शब्दस्याप्रत्ययार्थव्याख्यानम् अपि तु साधारणशब्दविशेषादिति समासान्तर्गतषष्ठीव्याख्यानम् कर्मणि षष्ठी न तु कर्त्तरीत्यर्थः, विशेष इति कृदन्तं पदं कर्मार्थषष्ठीनिमित्तमिति अभिप्रायेण विशेषपदोपादानम् । यद्वा विशेष्यत इति विशेष इति घञः कर्मार्थतामाह "साधारणशब्द एव विशेष" इति, कर्मधारयः किं केन विशेष्यत ? इत्यत्राह "साधारणस्ये" ति, धर्म–शब्दो लिङ्गपरः विशेष्यमाणत्वादितिफलितार्थ उक्तः, नाभिधानिकः । के पुनरसाधारणा धर्मा ? इत्यत्राह "तथा ही" ति, को न आत्मा किं ब्रह्मेति किं–शब्दद्वयमात्मत्वब्रह्मत्वयोर्द्वयोरपि ज्ञातव्यत्वाभिप्रायम् आत्मब्रह्म–शब्दवाच्यधर्म्यैकत्वानेकत्वजिज्ञासया वा किं–शब्दद्वयप्रयोगः, विषयवाक्ये न मे स्तेन इत्यादेः प्रयोजनमाह "आत्मन" इति, फलितानि साधकलिङ्गानि दर्शयति "तदेवमि" ति, मुमुक्षुभिः पृच्छ्यमानत्वमात्मत्वं ब्रह्मत्वं ब्रह्म–शब्दस्थाने वैश्वानरशब्द-

प्रयोगः फलनिर्देशश्च वैश्वानरस्य परमात्मत्वसाधकलिङ्गानीत्यर्थः । द्युमूर्धत्वादिविशिष्टतारूपधर्मस्यास्मिन् सूत्रे अनुक्तिस्तस्यानन्तरसूत्रोक्तत्वात् ।

भा० को न आत्मा किं ब्रह्मेति जीवात्मनामात्मभूतं ब्रह्म जिज्ञासमानैस्तज्ज्ञमन्विच्छद्भिर्वैश्वानरात्मज्ञसकाशमागम्य पृच्छ्यमानो वैश्वानरात्मा परमात्मेति विज्ञायते आत्मब्रह्म-शब्दाभ्यामुपक्रम्य पश्चात्सर्वत्रात्मवैश्वानर-शब्दाभ्यां व्यवहाराच्च ब्रह्म-शब्दस्थाने निर्दिश्यमानो वैश्वानर-शब्दो ब्रह्मैवाभिधत्त इति विज्ञायते किञ्च "स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त" इति च वक्ष्यमाणं वैश्वानरात्मविज्ञानफलं वैश्वानरात्मानं परं ब्रह्मेति ज्ञापयति ।

इतश्च वैश्वानरः परमात्मा—

सू० स्मर्यमाणमनुमानं स्यादिति ॥ २६ ॥

द्युप्रभृतिपृथिव्यन्तमवयवविभागेन वैश्वानरस्य रूपमिहोपदिश्यते तच्च श्रुतिस्मृतिषु परमपुरुषरूपतया प्रसिद्धं तदिह तदेवेदमिति स्मर्यमाणं प्रत्यभिज्ञायमानं वैश्वानरस्य परमपुरुषत्वे अनुमानं लिङ्गमित्यर्थः, इति-शब्दः प्रकारवचनः इत्थंभूतं रूपं

टी० सू० स्मर्यमाणमनुमानं स्यादिति स्मर्यमाण-शब्दस्य विशेष्यं दर्शयन् सूत्रं व्याचष्टे "द्युप्रभृती"ति, लिङ्गमित्यर्थ इति, अनुमान-शब्दः करणार्थल्युडन्तः श्रुतिलिङ्गवाक्येत्यादिसूत्रपठितलिङ्गपरश्चेति भावः । अनुमान-शब्देन हेतुत्वसिद्धेरिति शब्दवैयर्थ्यमित्यत्राह "इति-शब्द" इति,

इति-शब्दार्थेनान्वितं वाक्यार्थमाह "इत्यमि"ति, परमपुरुषरूपत्वेन प्रसिद्धिं दर्शयति "श्रुती"ति, परमात्मपरत्वेन साधितत्वात् अग्निर्मूर्धेत्यादिवाक्यमुदाहृतम् इह द्यौर्मूर्धत्वेन श्रूयते उदाहृतवाक्ये अग्निर्मूर्धेति तत् कथमैकार्थ्य? मित्याह "अग्निरिहे"ति, परमात्मनस्तथाविधरूपवत्त्वे स्मृतिमुदाहरति "स्मरन्ति चे"ति, यस्याग्निरास्यमित्यत्राग्नि-शब्दः प्रसिद्धाग्निपरः द्यौर्मूर्धेति पृथगुक्तेः श्रुतिस्मृतिष्वभिज्ञातस्य रूपस्य प्रत्यभिज्ञा-

भू० प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वे अनुमानं स्यात्, श्रुतिस्मृतिषु हि परमपुरुषस्येत्थं रूपं प्रसिद्धं, यथा आथर्वणे "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मे"ति, अग्निरिह द्युलोकः "असौ वै लोकोऽग्नि"रिति श्रुतेः, स्मरन्ति च मुनयः "द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेते"ति, यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नम" इति च, इह च द्युप्रभृतयो वैश्वानरस्य मूर्धाद्यवयवत्वेनोच्यन्ते तथा हि तैरौपमन्यवप्रभृतिभिर्महर्षिभिः आत्मानमेवं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहीति पृष्टः केकयस्तेभ्यो वैश्वानरात्मानमुपदिदिक्षुर्विशेषप्रश्नान्यथानुपपत्त्या वैश्वानरात्मन्येतैः किञ्चित् ज्ञातं किञ्चिदज्ञातमिति विज्ञाय ज्ञाताज्ञातांशबुभुत्सया तानेकैकं पप्रच्छ, तत्र

यमानत्वं दर्शयति "इह चे"ति, नन्वत्राग्निर्मूर्धेत्यादाविव द्युप्रभृति-

पृथिव्यन्तानां मूर्धादिपादान्तावयवत्वेन संभूयोपदेशो न दृश्यत इति शङ्कायां विप्रकीर्णप्रतिपादनहेतुमाह "तथा ही"ति, विशेषप्रश्नान्यथाऽनुपपत्त्येति न ह्यात्मब्रह्मादि–शब्दैः प्रश्नः कृतः वैश्वानर–शब्देन हि प्रश्नः, अनेन द्युप्रभृतीनामपूर्वनामनिर्देशहेतुश्चोक्तो भवति अज्ञातांशः सर्वोऽपि हि उपदेष्टव्यः, गुणनामधेयानीति द्यौर्नक्षत्रादितेजस्विनीति सुतेजाः प्रकाशकस्यादित्यस्य विश्वं रूपं प्रकाश्यं तस्मात् आदित्यो विश्वरूपः, वायुर्विविधगतिस्वभावत्वात् पृथग्वर्त्मा आकाशो भूतान्तरेभ्यो

सू० औपमन्यव कं त्वमात्मानमुपास्स इति पृष्टे दिवमेव भगवो राजन्निति तेन चोक्ते दिवि तस्य पूर्णवैश्वानरात्मबुद्धिं निवर्तयन्वैश्वानरस्य द्यौर्मूर्धेति चोपदिशंस्तस्या वैश्वानरांशभूताया दिवस्सुतेजा इति गुणनामधेयं प्राचिख्यपत्, एवं सत्ययज्ञादिभिरादित्यवाय्वाकाशपृथिवीनामेकैकेनैकैकमुपास्यमानतया कथितानां विश्वरूपः पृथग्वर्त्मा बहुलो रयिः प्रतिष्ठेत्येकैकगुणनामधेयानि वैश्वानरात्मनश्चक्षुः प्राणः सन्देहर्बस्तिपादावयवत्वं चोपदिष्टम्, संदेहो मध्यकाय उच्यते अत एव भूनद्युमूर्धत्वादिविशिष्टं परमपुरुषस्यैव रूपमिति वैश्वानरः परमपुरुष एव ॥

पुनरप्यनिर्णयमेवाशङ्क्य परिहरति

सू० शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ॥ २७ ॥

यदुक्तं वैश्वानरः परमात्मेति निश्चीयत इति तन्न शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च जाठरस्याप्यग्नेरिह प्रतीय-

मानत्वात् शब्दस्तावत् वाजिनां वैश्वानरविद्याप्रकरणे स एषोऽग्निर्वैश्वानर इति वैश्वानरसमानाधिकरणतया ऽग्निरिति श्रूयते अस्मिन्प्रकरणे च "हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीय" इति वैश्वानरस्य हृदयादिस्थत्याग्नित्रयकल्पनं क्रियते

महत्त्वात् बहुलः आपो वेगवत्त्वाद्रयिः रयो हि वेगः इकारान्तत्वं छान्दसं रैक्वपधनप्राप्तिहेतुत्वाद्वा रयिः, पृथिवी प्राण्याधारत्वात् प्रतिष्ठेतिभावः श्रुतिस्थसन्देह-शब्दं व्याचष्टे "सन्देहो मध्यकाय"इति, मध्यं हि पूर्वापरांशसाधारण्यात् कुत्रानुप्रविष्टमिति संदिह्यते एतज्ज्ञापयितुं मध्यकाय इति व्याख्यातं न तु नाभिरिति गुणनामधेयानीत्यनेनान्यदपि प्रयोजनं फलितं न केवलं नामधेयानि अपि तु गुणनामधेयानि तत्तद् गुणकत्वं मूर्धादित्वेनोपदिष्टानां द्युप्रभृतीनामनुसन्धेयमित्यर्थः । अत्रायमभिप्रायः वाजसनेयके मूर्धभूताया दिवो तिष्ठात्वमुक्तं न तु सुतेजस्त्वं चक्षुर्भूतस्यादित्यस्य सुतेजस्त्वमुक्तं न तु विश्वरूपत्वं न चैतावता विद्याभेदः, तत्तन्नामधेयोपस्थापितगुणेष्वेव तात्पर्यसंभवादतीत्य स्थितत्वं हि दिवोऽतिष्ठात्वं तच्च सर्वोत्कृष्टत्वं तच्च नक्षत्रादि तेजश्शालित्वरूपमित्येकगुणत्वेन फलितमित्यविरोधः । आदित्यस्य च सुतेजस्त्वफलरूपं विश्वरूपत्वं तद्धि विश्वरूपकत्वं विश्वप्रकाशकत्वम् अतोऽनर्थान्तरतया फलितम्, अतो न विद्याभेद इति, एतदभिप्रायेण गुणनामधेयानीत्युक्तं परमात्मनः त्रैलोक्यशरीरत्वविषयं द्यां मूर्धानमित्यादिस्मृतिवचनं स्वमूलत्वेन वैश्वानरविद्यायाः परमात्मविषयत्वं कल्पयतीति व्याख्यानमनुपपन्नं, स्मृतिवचनं हि स्वमूलत्वेन श्रुतिं कल्पयति न तु वैश्वानरविद्यामेव कल्पयितुं प्रभवति, श्रुत्यन्तरसम्भवेन कल्पकस्यान्यथासिद्धत्वात्, अस्ति हि अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यावित्यादिश्रुतिस्तन्मूलतया सम्भाव्यमाना तस्मादाभ्यां श्रुतिस्मृतिभ्यामैकार्थ्यप्रत्यभिज्ञानमेवास्मिन् सूत्रे हेतुतया विवक्षितं स्मर्यमाण-शब्दस्य प्रत्यभिज्ञायमानोप-

स्थापकः तर्कपादे अनुस्मृतेश्चेत्यत्रानुस्मृति-शब्दस्य प्रत्यभिज्ञापरत्वेन सूत्रकारैः प्रयुक्तत्वात् ॥

उत्तरसूत्रमवतारयति "पुरनपी"ति, ।

भा० तद्यदुक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात् प्राणाय स्वाहेत्यादिना प्राणाहुत्याधारत्वं च वैश्वानरस्यावगम्यते, तथा वैश्वानरस्यास्मिन्पुरुषेऽन्तः प्रतिष्ठानं वाजसनेयिनः समामनन्ति "स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदे"ति अतोऽग्नि-शब्दसामानाधिकरण्यादग्निचेतापरिकल्पनात्प्राणाहुत्याधारभावादन्तःप्रतिष्ठानाच्च वैश्वानरस्य जाठरत्वमपि प्रतीयत इति नैकान्ततः परमात्मत्वमिति चेत् ।

टी० अर्थचतुष्टये प्रयोगसाधारण्यादनिर्णयः पूर्वमुक्तः, इदानीं तु विशेषकधर्माणां ब्रह्म-शब्दादीनां तत्तदनुरूपविशेषकाच्छब्दादेः प्रतिरोधादनिर्णयो विवक्षितः सू० शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते ॥ २७ ॥ नेति पदं व्याचष्टे "यदुक्तमि"त्यादिना, श्रुत्यन्तरस्थहेत्वोरुभयोर्दूरस्थत्वात् तौ कण्ठोक्तौ एतत्प्रकरणस्थमग्नित्रयकल्पनं प्राणाहुत्याधारत्वं चादि-शब्दोपात्तं सन्निकृष्टत्वात् एतदभिप्रायेण वाजिनां वैश्वानरविद्याप्रकरणे वाजसनेयिनः समामनन्तीति चोक्तम्, अस्मिन् प्रकरणे चेति च-शब्देन वाजिनामप्यस्तीति सूचितम् अग्नित्रयकल्पनं क्रियत इति अग्नित्रयकल्पनेन होमाधारत्वमात्रं फलितं, होमाधारत्वविशेषमाह "तद्यदुक्तमि"ति, अग्नि-शब्दनिर्देशसहितमन्तः प्रतिष्ठानं विवक्षितम् अन्तःप्रतिष्ठत्वमात्रं हि परस्यापि सम्भवति स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेदेति हि श्रूयते उक्तहेत्वनुक्रमेण पूर्वपक्षत्वेन शङ्कितमर्थमुप-

सू० तन्न तथा दृष्ट्युपदेशात् पूर्वोक्तस्य त्रैलोक्यशरीरस्य परस्य ब्रह्मणः वैश्वानरस्य जाठराग्निशरीरतया तद्विशिष्टोपासनस्योपदेशात्, अग्नि–शब्दादिभिर्हि न केवलो जाठरः प्रतिपाद्यते अपि तु जाठराग्निविशिष्टः परमात्मा, कथमिदमवगम्यत ? इति चेत् असम्भवात्–जाठरस्य केवलस्य त्रैलोक्यशरीरत्वासम्भवात् त्रैलोक्यशरीरतया प्रतिपन्नवैश्वानरसमानाधिकरणो जाठरविषयतया प्रतीयमानोऽग्नि–शब्दो जाठरशरीरतया तद्विशिष्टं परमात्मानमेवाभिदधातीत्यर्थः, यथोक्तं भगवता "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधमि"ति जाठरानलशरीरो भूत्वेत्यर्थः, अतस्तद्विशिष्टस्योपासनमत्रोपदिश्यते ।

संहरति "अत"इति, शब्दादिभ्य इत्यादिसूत्रखण्डं जाठरशङ्कामात्रपरं न तु देवताभूतपरम् अन्तः प्रतिष्ठानोपन्यासाद्धेत्वन्तराणां च तत्साहचर्यात्, यद्यपि देवतायाः अग्निर्वाग्भूत्वा मुखं प्राविशदिति मुखे प्रवेशोऽवगम्यते तथापि पुरुषेऽन्तः प्रतिष्ठितत्वं न स्वरसं जाठरस्य हि तत्स्वरसतः प्रतीयते सोऽग्रभुग् विभजंस्तिष्ठन्नाहारमजरः कविः सन्तापयति स्वं देहमापादतलमस्तक"मिति कृत्स्नदेहव्याप्तत्वात् तस्य भूततृतीयस्य तु पुरुषेऽन्तः प्रतिष्ठितत्वं तदेकदेशभूतजाठरद्वारकमिति वक्तव्यम् अतस्तच्च क्लिष्टम् अतोऽन्तःप्रतिष्ठानसहचरैर्हेतुभिर्जाठरभावशङ्कित इह सूत्रे, अत एव हि देवताभूततृतीययोस्सूत्रान्तरेण व्युदासः न त्वेतस्मिन्नेव सूत्रे

सू० किं च पुरुषमपि चैनमधीयते वाजसनेयिनः "स एषोऽग्निर्वैश्वानरो यत्पुरुष इति, न हि जाठरस्य केवलस्य पुरुषत्वं पर-

त्मन एव हि निरुपाधिकं पुरुषत्वं यथा सहस्रशीर्षा पुरुषः पुरुष एवेदं सर्वमित्यादौ ॥

सू० अत एव न देवताभूतं च ॥ २८ ॥

उक्तेभ्य एव हेतुभ्यो देवतायाश्च तृतीयस्य महाभूतस्यापि न वैश्वानरत्वप्रसङ्गः ।

खण्डान्तरे कृतः, एवं शङ्कितं जाठरविषयत्वं परिहरति "तन्ने"ति, हेत्वाकाङ्क्षायां सौत्रखण्डान्तरस्थं हेतुवाचिपदमुपादत्ते "तथा दृष्ट्युपदेशादि"ति,। यस्याग्निश्शरीरमिति श्रुत्यभिप्रायेणाह "जाठराग्निशरीरतये"ति, उपासन-शब्देन सौत्रदृष्टि-शब्दव्याख्यानम्, "आत्मा वा अरे द्रष्टव्यः तस्मिन् दृष्टे परावर इति श्रौतप्रयोगात् वैश्वानरमुपास्त इति चात्र श्रूयते । ननु दृष्टि-शब्दो ऽतस्मिंस्तथात्वानुसन्धानपरः किन्न स्यात्, नैवं परमार्थविषयत्वे सम्भवत्यपरमार्थविषयत्वाश्रयणायोगात् द्युमूर्धत्वादिकं हि जाठरेऽत्यन्तबाधितम्, अत एव हि न मनोब्रह्मेत्यादिदृष्टिमात्रतुल्यत्व-शङ्का, तत्तुल्यत्वं च गत्यन्तरे सम्भवत्ययुक्तं जाठराग्निशरीरतयेत्यनेन परमार्थविषयसम्भवश्च दर्शितः, उत्कृष्टे परमात्मन्यपकृष्टाग्निदृष्ट्ययोगाच्च न परस्मिन्नग्निदृष्टिः, अग्नौ परमात्मदृष्टिपरत्वं तु परमात्मत्वसमर्थनपरसूत्रतात्पर्यविरुद्धम्, अतः परमात्मलिङ्गानां जाठरलिङ्गानां च दर्शनाद्विशिष्टोपासनपरत्वमभ्युपगन्तव्यं यथा प्रतर्दनविद्यायामिति वाक्यार्थः विशिष्टप्रतिपादने सिद्धे हि विशिष्टोपासनपरत्वमित्यत्राह "अग्निशब्दादिभिर्हि"ति, आदि-शब्देन प्राणाहुत्याधारत्वादिकं गृह्यते, जाठरः

सू० साक्षादप्यविरोधं जैमिनिः ॥ २९ ॥

भू० वैश्वानरसमानाधिकरणस्याग्नि-शब्दस्य जाठराग्निशरीरतया तद्विशिष्टस्य परमात्मनो वाचकत्वं तथैव परमात्मन उपास्यत्वं चोक्तं, जैमिनिस्त्वाचार्यो वैश्वानर-शब्दवदग्नि-शब्दस्यापि परमात्मन एव साक्षात्-अव्यवधा-

नेन वाचकत्वे न कश्चिद्विरोध इति मन्यते, एतदुक्तं भवति यथा वैश्वानर-शब्दः साधारणोऽपि परमात्मासाधारणधर्मविशेषितो विश्वेषां नराणां नेतृत्वादिना गुणेन परमात्मानमेवाभिदधातीति निश्चीयते एवमग्नि-शब्दोऽप्यग्रनयनादिना येनैव गुणेन योगाज् ज्वलने वर्त्तते तस्यैव गुणस्य निरुपाधिकस्य काष्ठागतस्य परमात्मनि सम्भवादस्मिन् प्रकरणे परमात्मासाधारणधर्मविशेषितः परमात्मानमेवाभिधत्त इति ।

प्रतिपाद्यते—ज्ञाप्यत इत्यर्थः, अग्नि-शब्दस्त्रेताकल्पनादिलिङ्गान्वितेन वाक्येन परमात्मा अभिधीयत इति वार्थः, तदा त्रेताकल्पनादिना अग्निद्वारा परमात्मा विशेष्यते । असम्भवादिति पदस्याकाङ्क्षां दर्शयति "कथमि"ति, केवलाग्नौ प्रसिद्धस्य कथं तद्विशिष्टपरत्वमित्यर्थः, जाठरस्य त्रैलोक्यशरीरत्वासम्भवोऽस्तु ततः किमग्नि-शब्दस्य विशिष्टपरत्व? इत्यत्राह "त्रैलोक्ये"ति, जाठरविषयतया प्रसिद्धस्य शब्दस्य तद्विशिष्टे परमपुरुषे प्रवृत्तिं स्मृत्या द्रढयति "यथोक्तामि"ति, सूत्रखण्डमवतारयति "किञ्चे"ति, अपि चेत्यत्र विभक्तश्च-शब्दो हेतुसमुच्चयार्थ इति भावः । न केवलमग्नित्वं पुरुषेऽन्तः प्रतिष्ठितत्वं च किन्तु पुरुष-शब्दवाच्य-

सू० यस्त्वेतमेवं प्रादेशमात्रमभिविमानमित्यपरिच्छिन्नस्य परस्य ब्रह्मणो द्युप्रभृतिपृथिव्यन्तप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कथमुपपद्यते? तत्राह

सू० अभिव्यक्तेरित्याश्मरथ्यः ॥ ३० ॥

उपासकाभिव्यक्त्यर्थं प्रादेशमात्रत्वं परमात्मन इत्याश्मरथ्य आचार्यो मन्यते, द्यौर्मूर्धा आदित्यश्चक्षुर्वायुः प्राण आकाशो मध्यकाय आपो बस्तिः पृथिवी पादाविति

द्युप्रभृतिप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कृत्स्न-मिदमभिव्याप्तवतो विगतमानस्य द्यभिव्यक्तेरेव हेतो-र्भवति ।

तयाऽप्यधीयत इत्यभिप्रायेणाह "पुरुषमपि चे"ति, पुरुषत्वं–पुरुषश-ब्दवाच्यत्वं, निरुपाधिकमिति जीवस्य पुरुष–शब्दवाच्यत्वं द्वाविमौ पुरुषौ लोके प्रधानपुरुषावेतावित्यादिषु प्रधानादिपदान्तरसमभिव्याहारादर-त्वाद्युपाधिनाऽऽश्रीयते न तु स्वतः, अतः पुरुष–शब्दवाच्यत्वं परमात्मन एव निरुपाधिकम्, अतो जाठरस्य पुरुषत्वं दूरतो निरस्तमिति भावः । स एषोऽग्निर्वैश्वानरो यत् पुरुष इति प्रसिद्धवन्निर्देशात्तस्य च प्रापकप्रमाण-सापेक्षत्वात् परमात्मन एव निरुपाधिकपुरुषत्वविषयां प्रमाणतः प्रसिद्धिं दर्शयति "यथे"ति, अग्नि–शब्दः त्रेताकल्पनादिलिङ्गत्रयं जाठरविषय-त्वसाधकं शङ्कितं, तत्र पुरुष–शब्दस्त्रैलोक्यशरीरत्वासम्भवरूपमेकं लिङ्गं च परमात्मविषयत्वसाधकमुक्तं, तत्र तथा दृष्ट्युपदेशादित्यनेनाग्नि–शब्द-लिङ्गत्रययोरन्यथासिद्धिर्दर्शिता, असम्भवलिङ्गपुरुष–शब्दयोरनन्यथासिद्धेः तया प्राबल्यं स्थितम् । अत एव पुरुषमपि चैनमधीयत इति सूत्रखण्ड नान्तःप्रतिष्ठानमात्रपरिहारपरं तथा दृष्ट्युपदेशादित्यनेनैवान्तःप्रतिष्ठा-नस्य हेत्वन्तराणां चान्यथासिद्धेर्दर्शितत्वादसम्भवहेतौ च सति अन्तः प्रतिष्ठानस्य दुर्बलत्वान्निरुपाधिकपुरुषत्वश्रवणे सति हेत्वन्तराणामपि दुर्ब-लत्वाच्च अतो यथोक्तावेव शङ्कापरिहारौ ॥ सू० अत एव न देवता भूतं च २८ जाठरप्रसिद्धिशङ्का पूर्वसूत्रे परिहृता तद्व्यतिरिक्तार्थद्वयशङ्का अत्र परिह्रियते देवताभूततृतीययोर्जाठरवत् परिच्छिन्नत्वाभावात् त्रैलो-क्यशरीरत्वोपपत्तिः, देवताया अधिष्ठातृतया त्रैलोक्यशरीरत्वं महाभूत-तृतीयस्य च त्रिवृत्कृतस्य त्रैलोक्यरूपेण परिणतत्वात् समुदितस्य द्या-वापृथिव्यादयो मूर्धपादाद्यवयवाः स्युः अतस्त्रैलोक्यशरीरत्वकल्पनोपप-त्तिरित्यसम्भवापेक्षयाऽधिकाऽऽशङ्का उक्तेभ्य एव हेतुभ्य इति आत्म–शब्दब्र-ह्मपुरुष–शब्दनिर्देशासङ्कुचितफलावाप्तिसर्वपापप्रदाहादयः सर्वे हेतवः

तयोरनुपपन्ना इति परिहार इत्यभिप्रायः ॥ सू० साक्षादप्यविरोधं जैमिनिः । सूत्रार्थस्य सङ्गतत्वाय पूर्वोक्तमनुवदति "वैश्वानरे"ति, तथादृष्ट्युपदेशादित्यनेन सङ्गतिरित्यर्थः । अक्षरार्थमाह "जैमिनिरि"ति, अग्निवैश्वानर-शब्दयोरुभयोरपि साक्षात् परमात्मप्रतिपादकत्वपरमिदं सूत्रं परैर्व्याख्यातं तद्व्यावृत्त्यर्थमाह "वैश्वानरशब्दवदि"ति, वैश्वानर-शब्दस्य पक्षभूतस्य बह्वर्थसाधारणस्याग्नि-शब्दसामानाधिकरण्येन विना जाठरविषयत्वनिश्चयायोगात् तदुपपादकत्वेन ह्यग्नि-शब्दः प्रकृतः, अत उपपादकस्यैवान्यथासिद्धिर्वक्तव्या न तूपपाद्यस्य, उपपादकान्यथासिद्धौ ह्युपपाद्यं स्वयमेव न भवति, अत उपपादकाग्नि-शब्दस्यैव जाठरविशिष्टपरमात्मविषयत्वमुक्तं तथा दृष्ट्युपदेशादिति, अत इहापि तस्यैवाग्नि-शब्दस्य प्रकारान्तरेण परमात्मपरत्वमुच्यत इति वैश्वानर-शब्दो दृष्टान्ततयोदाहर्तव्यः तस्य च तथात्वं सिद्धं वैश्वानर-शब्दस्तावत् परमात्मनि प्रयुक्तः, न च क्लृप्तामेव रूढिमाश्रित्यापर्यवसानाद्वैश्वानरशरीरकः परमात्माऽभिधेयः अग्नि-शब्देनैवाग्निशरीरके परमात्मन्यभिहिते अग्निर्वैश्वानर इत्येकवाक्यस्थवैश्वानर-शब्दस्याग्निशरीरवाचित्वे पुनरुक्तिप्रसङ्गात् न चाव्यवधानेन परमात्मनि रूढ्यन्तरं कल्प्यम् अवयवशक्त्यैव प्रयोगेऽन्यथासिद्धे प्रोक्षणीन्यायेन समुदायशक्तिकल्पनानुपपत्तेः, अतोऽग्नि-शब्दसमानाधिकरणवैश्वानर-शब्दस्यावयवशक्त्या परमात्मविषयत्वे वाक्यान्तरेष्वप्येकप्रयोजकत्वायावयवशक्त्यैव वृत्तिरास्थेयेत्यभिप्रायेणाव्यवधानेन वाचकत्वे वैश्वानर-शब्दो दृष्टान्ततयोक्तः वैश्वानर-शब्दवदिति, साक्षादिति व्याख्येयपदं साक्षाच्छब्दस्य विशदतरत्वेऽपि प्रयोगात्तद्व्यावृत्त्यर्थमाह "अव्यवधानेने"ति, वैश्वानर-शब्दस्यावयवशक्त्या वृत्तिः कथं? न तावदयं शब्दः 'भिदादिभ्योऽञ' "ऋष्यन्धकवृष्णिकुरुभ्यश्चे"त्यनुशासनानुसारेण भिदाद्यञन्तः ऋष्यणन्तो वा तयोरपत्यार्थत्वात् परमात्मनश्च विश्वानरसञ्ज्ञं कञ्चित् प्रत्यपत्यत्वाभावात् विश्वानर-शब्दस्य पुरुषसमष्टिवाचकत्वेऽपि तदपत्यत्वायोगात्, भिदाद्यञन्तत्वमृष्यणन्तत्वं चायुक्तम् अतो गुणान्तरयोगो वक्तव्यः, तत्र वैश्वानर-शब्दस्य केन गुणेन

वृत्तिः? तद्वदग्नि-शब्दः केन गुणयोगेन वर्तते? तेन तस्य परमात्मन्यव्यवधानेन वृत्तिः? कथमित्यत्राह "एतदुक्त्मि"ति, नेतृत्वादिनेति आदि-शब्देन विश्वैर्नरैर्नेयत्वं प्राप्यत्वं विवक्षितम् अग्रनयनादिनेति आदि-शब्देनाग्रत्वेन प्राप्यत्वं विवक्षितं यथा निराहुः-वैश्वानरः कस्मात् विश्वान्नरान्नयतीति विश्व एनं नरा नयन्तीति वा विश्वानर एव वैश्वानरः राक्षसो वायस इतिवत् रक्ष एव हि राक्षसः वय एव हि वायसः, यथाचाग्निः कस्मात् अग्रणीर्भवति अग्रं नीयते अग्रं नयति नमयति सन्नमनोक्तो प्रसन्नो भवतीति स्थूला दृष्टिर्विधिरिति । अव्यवधानमाह "तस्यैवे"ति, काष्ठागतस्येति अग्निशब्दावयवार्थस्य ब्रह्मणि पुष्कलत्वात् ब्रह्म-शब्दरूढिर्न त्याज्या ब्रह्म-शब्दावयवार्थपौष्कल्यस्याग्नावसम्भवादग्नि-शब्दरूढिरेव त्याज्येति भावः । परमात्मासाधारणशब्दधर्मविशेषित इति उपक्रमाद्यानुगुण्याच्च ब्रह्म-शब्दः प्रबलः । अग्नि-शब्दस्तु तदनुगुणार्थो नेय इति भावः । नन्वग्निशरीरकतयाऽनुसन्धाने साक्षादेवाग्रनयनादिगुणकत्वानुसन्धाने च विद्याभेदस्स्यात् न च वाच्यमेकस्यामेव विद्यायामेकस्मिन् कर्मणि व्रीहियवयोरिवाग्नि-शब्दशरीरकत्वस्याग्रनयनादिगुणकत्वस्य च विकल्पेन प्राप्तिः, विकल्पश्च तयोस्तुल्यबलत्वादवर्जनीयः अग्निशरीरकत्वपरिग्रहे रूढ्यपरित्यागादविलम्बः अर्थानुपपत्त्या परमात्मपर्यन्तत्वनिर्णय इति विशेष्यप्रतिपत्तिर्विलम्बिता, अग्रनयनादिगुणकत्वपक्षे रूढार्थानुपपत्त्याऽवयवार्थप्रतिपत्तिर्विलम्बिता अवयवशक्त्युपस्थापितगुणस्य विशेष्यप्रतिपत्तिस्त्वविलम्बिता गुणस्याद्वारकतयाऽन्वयसम्भवात्, अतः पक्षद्वयेऽपि विलम्बाविलम्बसाम्यात्तुल्यबलत्वमिति विकल्पयति एकेनैव वाक्येन वैकल्पिकार्थद्वयविधानानुपपत्तेः व्रीहियवयोर्हि वाक्यभेदेन प्राप्तिः उच्यते-नात्र विद्याभेदप्रसङ्गः अस्य सूत्रस्य ब्रह्माग्नि-शब्दयोस्तुल्यताप्रतिक्षेपपरत्वेनोपास्याकारपरत्वाभावात् तथा हि ब्रह्माग्नि-शब्दयोर्द्वयोरपि रूढार्थद्वयाविरोधेन निर्वाहः पूर्वमुक्तः रूढार्थविरोधाभ्युपगमेनान्यतरस्य यौगिकत्वे ग्राह्येऽपि न ब्रह्माग्नि-शब्दयोस्तुल्यत्वादशक्यनिर्णयत्वं वाच्यम् उपक्रमाद्यानुगुण्यादग्नि-शब्दावयवार्थस्य ब्रह्मणि पुष्कलतया च

ब्रह्म—शब्दप्राबल्यात्तद्विपरीतोऽग्नि—शब्दो दुर्बलत्वाद्यौगिक इति हि सूत्रतात्पर्यम् । एवं वा अस्यां विद्यायामग्निशरीरत्वानुसन्धानमेव सूत्रकारमतं तथा दृष्ट्युपदेशादिति दर्शितं, जैमिनिमतं तु सामान्येन परमात्मपरतया तात्पर्यलिङ्गैरवगतेषु प्रकरणेष्वर्थान्तररूढशब्दानां परमात्मपरत्वे अवश्यं भाविनि सति अवयवशक्त्या साक्षादेव तत्परत्वं वर्णनीयमित्येवंरूपं नैतत् प्रकरणविशेषमात्रविषयम् अस्य च न्याय्यस्य सामान्येनोपजीव्यतया यत्र क्वचिदुक्तत्वे सति अत्र परमात्मपर्यन्तनिर्वाहप्रसङ्गादिहाभ्यधायि । न त्वेतद्विद्याया असाधारणत्वात्, अत एव ह्यवयवशक्त्या आकाश—शब्दो व्याख्यातः, सामान्येनोपजीव्यस्य न्याय्यस्येहाप्युपजीव्यत्वाद्विद्याभेद इति चेन्न चिदचिद्विशेषासाधारणलिङ्गान्वितेषु वाक्येषु तच्छरीरत्वाश्रयणस्य न्याय्यत्वेनास्य न्यायस्य चिदचिदसाधारणलिङ्गरहितवाक्यविषयत्वात्, अत्र च जाठरलिङ्गान्युपलभ्यन्ते अत एव हि सूत्रकारः तथादृष्ट्युपदेशादिति स्वमतमुक्तवान् यथा न द्वितीयेति कृत्वा अवघातादीनां व्रीहिविशेषत्वं चिन्तितं तदुज्जाठरलिङ्गाभावेन तद्विशिष्टत्वासम्भवेऽपि परमात्मपरत्वं सिध्यतीति अन्वारुह्य दर्शितं जैमिनिमतम्, अतो न विद्याभेदः ॥ उत्तरसूत्रशङ्कामाह "यस्त्वेतमि"ति सू० अभिव्यक्तेरित्याश्मरथ्यः, परिच्छिन्नत्वं महाभूततृतीयदेवतयोरेव सम्भवतीति शङ्कापरिहारार्थमिदं सूत्रम् अभिव्यक्त्यर्थं—बुद्धिसौकर्यायेत्यर्थः परिच्छिन्नत्वे हि बुद्धिसौकर्यं स्यात् । उक्तमर्थं विवृणोति "द्यौर्मूर्धे"त्यादिना, द्युप्रभृतिप्रदेशेत्यादिना प्रादेशमात्र—शब्दो व्याख्यातः, अभिविमानमित्यत्राभि—शब्दं व्याचष्टे "कृत्स्नमभिव्याप्तवत" इति, विमान—शब्दं व्याचष्टे "विगतमानस्य".

सू० मूर्द्धप्रभृत्यवयवविशेषैः पुरुषविधत्वं परस्य ब्रह्मणः किमर्थ? मिति चेत् तत्राह—

सू० अनुस्मृतेर्बादरिः ॥ ३१ ॥

तथोपासनार्थमिति बादरिराचार्यमन्यते "यस्त्वेतमेवमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु

सर्वेष्वात्मस्वन्नमत्ती"ति ब्रह्मप्राप्तये ह्युपासनमुपदिश्यते एतस्मेवमिति उक्तप्रकारेण पुरुषाकारमित्यर्थः सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु वर्तमानं यदन्नं भोग्यं तदत्ति सर्वंच वर्त्तमानं स्वत एवानवधिकातिशयानन्दं ब्रह्मानुभवति। यत्तु सर्वैः कर्मवश्यैरात्मभिः प्रत्येकमनन्यसाधारणमन्नं भुज्यते तन्मुमुक्षुभिस्त्याज्यत्वादिह न गृह्यते, यदि परमात्मा वैश्वानरः कथं तर्ह्युरःप्रभृतीनां वेद्यादित्वोपदेशः यावता जाठराग्निपरिग्रह एवैतदुपपद्यत इत्यचाह—

सू० सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३२ ॥

अस्य परमात्मन एव वैश्वानरस्य द्युप्रभृतिपृथिव्यन्तशरीरस्य समानराधनभूतायाः उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसम्पादनायायमुरःप्रभृतीनां वेदित्वाद्युपदेश इति जैमिनिराचार्यो मन्यते तथा हि परमात्मोपासनोचितमेव फलं प्राणाहुत्याग्निहोत्रसम्पत्तिं च दर्शयति श्रुतिरियं स य इदं विद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक् तत्स्यात् अथ य एतदेवं तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त इति ॥

सू० आमनन्ति चैनमस्मिन् ॥ ३३ ॥

एनं परमपुरुषं द्युमूर्धत्वादिविशिष्टं वैश्वानरमस्मिन् उपासकशरीरे प्राणाहुत्याधारत्वाय आमनन्ति च "तस्य

ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजा" इत्यादिना, अयमर्थः यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्त इति त्रैलोक्यशरीरस्य परमात्मनो वैश्वानरोस्योपासनं विधाय

ति, उत्तरसूत्रस्य शङ्कामाह "मूर्धप्रभृती"ति, प्राकृतमूर्द्धादिद्रव्यावयवत्वमप्राकृतरूपस्य परमात्मनो न सम्भवति अपि तु देवताया एव सम्भवतीत्यभिप्रायः सू० अनुस्मृतेर्बादरिः, प्राकृतमूर्धाद्यवयववत्वासम्भवपरिहारार्थत्वाभिप्रायेण सूत्रं व्याचष्टे "तथे"त्यादिना, अनुस्मृतिः–उपासनम् उपासनार्थं पुरुषविधत्वमित्यर्थः कथमुपासनार्थत्वं? बुद्ध्यारोहार्थत्वं किं न स्यादित्यत्राह "यस्त्वेत"मिति, उदाहृतवाक्ये पुरुषविधत्वमुपास्याकारतया न प्रतीयत इत्यत्राह "एतमेवमि"ति, अत्र मुक्तिफलवाचिशब्दः क? इत्यत्राह "सर्वेष्वि"ति, अन्न–शब्दस्य प्रसिद्धान्नपरत्वानुपपत्तिमाह "यस्त्वि"ति, एवं परमात्मनो द्युप्रभृतिप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वे पुरुषविधत्वे च प्रयोजनमुखेन भूततृतीयदेवताव्युदासः कृतः । अथोत्तरसूत्रस्य जाठरशङ्काव्युदासकत्वं दर्शयन् तदवतारयति "यदी"ति, यावता प्रत्युतेत्यर्थः सू० सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति । कस्य सम्पत्तिः? सा च कीदृशी? त्यपेक्षायामाह "अस्ये"ति, सम्पत्तिः–सम्पादनम् अतस्मिन् तत्कल्पनं, तथा हि दर्शयतीति सूत्रखण्डं व्याचष्टे "तथे"ति, परमात्मोपासनोचितमेव फलमिति अग्निहोत्रसम्पत्तेः परमात्मसमाराधनार्थत्वं तस्य सर्वेषु लोकेषु इत्याद्युक्तफलविशेषं ज्ञापयतीति भावः । स य इदमित्यादि इदमविद्वान् इदम् उरःप्रभृतीनामग्निहोत्रोपकरणतामजानन् यः अग्निहोत्रं प्राणाहुतिं जुहोति अनुतिष्ठतीत्यर्थः एतदेवं विद्वानित्यत्राप्येवमर्थः सर्वेष्वात्मसु हुतं भवतीति सर्वात्मकभगवदाराधनेन सर्वमाराधितं भवतीति हुतप्रकर्षोक्तिः, अस्याग्निहोत्रस्य परमात्माराधनत्वज्ञापनार्थं तदङ्गकपरोपासनफलं दर्शयति "तद्यथेषीके"ति, परस्यात्मनो द्युप्रभृतिशरीरकत्वमयुक्तम् उपासकस्य मूर्धाद्यवयवानामेव द्युप्रभृतित्वेनोपा-

सन्निधानादिति शङ्कायामाह सू० आमनन्ति चैनमस्मिन् ॥ ३३ ॥ एनमिति पदं व्याचष्टे "द्युमूर्धत्वादी"ति, अन्वादेशविषयो ह्येनादेशः, अन्वादेशः अन्वाख्यानं तस्मादेनमिति पदमुक्तधर्मोपेतमुक्तधर्मिणं परामृशतीति भावः उपासकशरीरे द्युमूर्धताद्यनुसन्धानं परमात्मनो द्युमूर्धत्वादेर्न विरोधि उभयस्यापि विहितत्वात् अत उपासकशरीर एव द्युमूर्धत्वाद्यवयववत्त्वमित्यवधारणकल्पनमयुक्तमित्यर्थः एनमित्यत्र गर्भितमर्थं विवृण्वन् उभयस्य विहितत्वमुपपादयति "अयमर्थ"इत्यादिना, ब्रह्मप्राप्तिं च फलमुपदि-

भू० सर्वेषु लोकेष्वित्यादिना ब्रह्मप्राप्तिं च फलमुपदिश्य अस्यैवोपासनस्याङ्गभूतं प्राणाग्निहोत्रं तस्य ह वा एतस्येत्यादिनोपदिशति, यः पूर्वमुपास्यतयोपदिष्टो वैश्वानरस्तस्यावयवभूतानग्न्यादित्यादीन् सुतेजोविश्वरूपादिनामधेयानुपासकशरीरे मूर्धादिपादान्तेषु सम्पादयति मूर्धैव सुतेजाः उपासकस्य मूर्धैव परमात्ममूर्धभूता द्यौरित्यर्थः, चक्षुर्विश्वरूपः आदित्य इत्यर्थः, प्राणः पृथग्वर्त्मा वायुरित्यर्थः, सन्देहो बहुलः उपासकस्य मध्यकाय एव परमात्ममध्यकायभूत आकाश इत्यर्थः, वस्तिरेव रयिः अस्य वस्तिरेव तदवयवभूता आप इत्यर्थः, पृथिव्येव पादौ अस्य पादावेव तत्पादभूता पृथिवीत्यर्थः, एवमुपासकस्स्वशरीर एव परमात्मानं च लोकशरीरं वैश्वानरं सन्निहितमनुसंधाय स्वकीयानुरोलोमहृदयमन आस्यानि प्राणाहुत्याधारस्य परमात्मनो वैश्वानरस्य

श्येति फलवत्सन्निधावफलं तदङ्गमिति न्यायात् ब्रह्मप्राप्तिफलकत्वेनोक्तस्य वैश्वानरोपासनस्य प्राणाग्निहोत्रमङ्गमित्यभिप्रायः । कथं प्राणाग्निहोत्रस्याफलत्वम्? अथ एतदेवं विद्वान् तदग्रेषीकतूलमित्यादिना तस्य

हि फलं श्रूयत इति चेन्न प्राणाहुतिमात्रस्य सर्वपापनिवृत्तिपूर्वकापरिच्छिन्नफलहेतुत्वायोगात् अङ्गभूतस्यापि प्राणाग्निहोत्रस्याङ्गिद्वारा मुक्तिरेव फलमिति ज्ञापयितुं यस्त्वेतमेवमित्यादिनोक्तवैश्वानरोपासनफलान्तर्गतानिष्टनिवृत्त्यंशस्योक्ततया अङ्गिफलविरोधिफलाश्रवणेन तस्य ह वा इत्यादिवाक्यप्रतिपन्नस्याङ्गिभावस्यानपोदितत्वात् तस्य ह वा इत्यादिवाक्य-

सू० वेदिर्बर्हिर्गार्हपत्यान्वाहार्यपचनाहवनीयानग्निहोत्रोपकरणभूतान् परिकल्प्य प्राणाहुतेश्चाग्निहोत्रत्वं परिकल्प्यैवंविधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरमाराधयेदिति उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्य इत्यादिनोपदिश्यते, अतः परमात्मा पुरुषोत्तम एव वैश्वानर इति सिद्धम् ॥ समाप्तं वैश्वानराधिकरणम् ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये प्रथमस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

स्यार्थमाह "यः पूर्वमि"ति, अवान्तरवाक्यानि प्रत्येकं व्याचष्टे "मूर्धे"-त्यादिना, अधिकरणार्थप्रतिपत्तिसौकर्यार्थं पूर्वसूत्रविषयवाक्यार्थं क्रमप्राप्तमेतत्सूत्रार्थेन सङ्गतमुपन्यस्यति "एवमि"त्यादिना । अधिकरणार्थमुपसंहरति "अत"इति, अभिव्यक्तिरनुस्मरणीयत्वं द्युप्रभृतिषु मूर्धत्वादिसम्पादनं मस्तकचिबुकान्तराले परस्य स्थितेर्जाबालश्रुत्या प्रतिपादनमिति अभिव्यक्तेरित्यादिसूत्रचतुष्टयार्थं इतरैरुक्तः—तन्मते सूत्राणां परिहरणीयशङ्काया अभावाद् वैयर्थ्यमेव स्यात्, अतो यथोक्त एवार्थः । वैश्वानराधिकरणं समाप्तम् ॥

इति श्रीहारीतकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदराजाचार्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां प्रथमस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

# अथ श्रीभाष्ये

प्रथमाऽध्याये तृतीयः पादः आरभ्यते ।

द्युभ्वाद्यधिकरणम् । **सू० द्युभ्वाद्यायतनं स्वशब्दात्** ॥ १ ॥

भा० आथर्वणिका अधीयते "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैस्तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुरि"ति । तत्र संशयः किमयं द्युपृथिव्यादीनामायतनत्वेन श्रूयमाणो जीवः? उत परमात्मे? ति किं युक्तं जीव इति, कुतः "अरा इव रथनाभौ संहता यत्र नाड्यस्स-

टी० एवमस्पष्टजीवलिङ्गकानि वाक्यानि परमात्मपरत्वेन निर्णीतानि अथ स्पष्टजीवलिङ्गकानि विचार्यन्त इति पादसङ्गतिः । पूर्वस्मिन्नधिकरणे द्युपृथिव्यादिसम्बन्धिनः परमात्मत्वमुक्तम्, द्युपृथिव्यादिसम्बन्धित्वं परमात्मव्यतिरिक्तस्य दृश्यत इति शङ्कया अनन्तराधिकरणारम्भ इत्यवान्तरसङ्गतिः । यद्वा अदृश्यत्वादिगुणक इत्यधिकरणे त्रैलोक्यशरीरत्वेन परमात्मत्वे साधिते तच्छरीरकत्वमपरमात्मनोऽपि दृश्यत इति शङ्कायां वैश्वानराधिकरणं प्राप्तम् । अथास्यामेवोपनिषदि कतिपयवाक्यानां परमात्मव्यतिरिक्तपरत्वशङ्कायामदृश्यत्वादिगुणकचिन्तनस्यासमाप्तिबुद्ध्या तृतीयपादाद्याधिकरणारम्भ इत्यवान्तरसङ्गतिः, अत्र निरसनीयजीवलिङ्गानां स्पष्टत्वादिदमधिकरणमदृश्यत्वादिगुणकनिरूपणात्पृथक्कृत्य तृतीयपादे निवेशितम् । पादभेदस्य स्पष्टास्पष्टजीवलिङ्गतानिबन्धनत्वात्—

सू० द्युभ्वाद्यायतनं स्वशब्दात्—द्वाद्यायतनमित्येतावति वक्तव्येऽपि द्युभ्वादीत्युक्तेरयं भावः ऊर्ध्वा अधराश्चेतिकोटिद्वयान्तर्गतालोकाः तत्प्रदर्शनार्थौ द्युभू—शब्दाविति । विषयमाह "आथर्वणिका"इति, । तत्रेति ।

किं द्युपृथिव्याद्यायतनं जीवः? उत परमात्मे? ति विचारः । तदर्थं यस्मिन्द्यौरित्यादिवाक्यजातं किमदृश्यत्वादिगुणकप्रकरणाद् भिन्न? मुताभिन्नम्? तदर्थं मनःप्राणादिसम्बन्धः किमुपकरणोपकरणित्वलक्षणः? उताधाराधेयभावलक्षणः? । तदर्थं द्युपृथिव्याद्यायतनत्वामृतसेतुत्वादिधर्माः किं कर्मफलात्तुर्जीवस्य सम्भवन्ति? उतानश्नत? इति । यदा कर्मफलात्तुर्भवन्ति तदा मनआदिसम्बन्धस्य करणतद्वत्तारूपतया तस्य परप्रकरणविच्छेदकत्वेन द्युभ्वाद्यायतनं जीवस्स्यात्, यदाऽमृतसेतुत्वादयोऽनश्नतो धर्मास्तदा मनआदिसम्बन्धस्य आधाराधेयभावरूपत्वेन परप्रकरणाविच्छेदाद् द्युपृथिव्याद्यायतनं परमात्मेति फलितं स्यात् । अरा इवेत्यादेरनन्तरश्लोकस्य द्युभ्वाद्यायतनविषयत्वं दर्शयन् जीवलिङ्गमाह "पूर्ववाक्ये"ति, लिङ्गान्तरमाह "पुनरपि स एव"इति, । ततः किमित्यत्राह "नाडीसम्बन्ध"इति, नाडीनामिन्द्रियसम्बन्धित्वेन जीवस्य ज्ञानप्रसरहेतुत्वात् । "ताभिः प्रत्यवसृप्य पुरीतति शेते तयोर्ध्वमायन्नमृतत्वमेति । विष्वङ् ङन्या उत्क्रमणे भवन्ती"त्यादिश्रुतिभिर्जीवस्य नाडीसंयोगप्रसिद्धेश्च तत्सम्बन्धो जीवलिङ्गमिति भावः । देवादिरूपेणेति बहुधा—शब्दविवरणम् । अन्तरादित्यविद्यायामकर्मकृतस्वेच्छागृहीतदिव्यविग्रहयोगस्समर्थितः न तु देवादिसजातीयरूपैर्बहुधाजायमानत्वं बहुधा—शब्दार्थइति सूत्रकारेण निरूपितम् अतस्तस्य जीवत्वशङ्का युक्तेतिभावः । "यस्मिन्द्यौरिति पूर्वश्लोके जीवधर्मं दर्शयति । अस्मिन्नपी"ति, । ननु कथं मनःप्राणसम्बन्धस्य जीवत्वसाधकतयोपन्यासः, स हि परस्य सम्भवतीति सर्वत्र प्रसिद्धोपदेशादित्यत्रोक्तम्, सत्यम् तथाऽपि मनःप्राणैरुपकरणोपकरणित्वलक्षणसम्बन्धस्य स्वरसतः प्रतीतेः तस्य चापवादाभावे सति कार्यकरत्वेन प्रागुक्तनिर्वाहायोगाच्च युक्ता शङ्का । अतो नाडीसम्बन्धबहुधाजायमानत्वमनःप्राणाधारणत्वजीवलिङ्गैः पूर्वपक्षोत्थानं युक्तम् । तत्रैव श्लोके द्युपृथिव्याद्यायतनत्वरूपपरमात्मलिङ्गं च दृश्यते इत्यत्राह "एवं जीवत्वे निश्चिते"इति । द्वयोरपि जीवपरयोर्लिङ्गप्रतिभासेन विरोधादन्यतरलिङ्गभङ्गेऽवश्यं भाविनि यल्लिङ्गस्योत्तरश्लोकप्रतिपन्नलिङ्गद्वयानुगुण्य

तल्लिङ्गानुसारिण्यर्थनिर्णये कर्तव्ये सतीत्यर्थः । यथाकथञ्चित्सङ्गमयितव्यमिति जीवस्य द्युपृथिव्याद्याधारत्वं स्वरूपेण वा कर्मद्वारा वा मुक्तावस्थायां विकसितेन ज्ञानेन वा सम्भवतीति भावः । द्युपृथिव्यादीनामित्यादि । सेतु-शब्दस्य सलिलनिरोधके प्रसिद्धत्वेनामृतस्य निरोधकत्वप्रसङ्गेन रूढार्थानुपपत्तौ सत्यामस्वारस्यसाम्यात्तमुभयथा व्याचष्टे "सिनोतेरि"ति सेतुरिव वेति च प्रथमनिर्वाहे रूढिपरित्यागादस्वारस्यम् द्वितीये त्वगत्याद्रूढार्थगतगुणयोगपरत्वादस्वारस्यम् । गुणयोगफलितमर्थमाह "संसारे"ति । श्येनसादृश्याद्यागे श्येन-शब्दवत् सेतुसादृश्यात्परमात्मनि सेतु-शब्दः-॥

सू० "एषोन्तश्चरते बहुधा जायमान" इति परस्मिन् श्लोके पूर्ववाक्यप्रस्तुतं द्युपृथिव्याद्यायतनं यच्चेति पुनरपि सप्तम्यन्तेन परामृश्य तस्य नाड्याधारत्वमुक्त्वा पुनरपि "स एषोऽन्तश्चरते बहुधा जायमान"इति तस्य बहुधाजायमानत्वञ्चोच्यते नाडीसम्बन्धो देवादिरूपेण बहुधाजायमानत्वञ्च जीवस्यैव धर्मः । अस्मिन्नपि श्लोके "ओतं मनस्सह प्राणैश्च सर्वैरि"ति प्राणपञ्चकस्य मनसश्चाश्रयत्वमुच्यमानं जीवधर्म एव, एवं जीवत्वे निश्चिते सति द्युपृथिव्याद्यायतनत्वादिकं यथाकथञ्चित्सङ्गमयितव्यमिति एवं प्राप्ते प्रचक्ष्महे-

सू० द्युभ्वाद्यायतनं स्वशब्दात् ॥

द्युपृथिव्यादीनामायतनं परं ब्रह्म कुतः स्वशब्दात् । परब्रह्मासाधारणशब्दात् "अमृतस्यैष सेतुरि"ति, परस्य ब्रह्मणोऽसाधारणश्शब्दः । "तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते इति सर्वत्रोपनिषत्सु स

एवामृतत्वप्राप्तिहेतुश्च श्रूयते । सिनोतेश्च बन्धनार्थत्वात्सेतुः अमृतस्य प्रापक इत्यर्थः सेतुरिव वा सेतुः, नद्यादिषु सेतुर्हि कूलस्य प्रतिलम्भकः । संसारार्णवपारभूतस्यामृतस्यैव प्रतिलम्भक इत्यर्थः । आत्म—शब्दश्च निरुपाधिकः, परस्मिन् ब्रह्मणि मुख्यवृत्तः । आप्नोतीति ह्यात्मा स्वेतरसमस्तस्य नियन्तृत्वेन व्याप्तिस्तस्यैव सम्भवति अतस्सोपि तस्यैव शब्दः । "यस्सर्वज्ञस्सर्वविदि"त्यादयश्चोपरितनाः परस्यैव ब्रह्मण शब्दाः नाड्याधारत्वं तस्यापि सम्भवति । सन्ततं सिराभिस्तुलम्बत्याकोशसन्निभमित्यारभ्य । "तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः" इति श्रवणात् बहुधा जायमान इत्यपि परस्मिन् ब्रह्मणि सङ्गच्छते । "अजायमानो बहुधा विजायते तस्य धीराः परिजानन्ति योनिमि"ति देवादीनां समाश्रयणीयत्वाय तत्तज्जातीयरूपसंस्थानगुणकर्मसमन्वितः स्वकीयं स्वभावमजहदेव स्वेच्छया बहुधा विजायते परः पुरुष इत्यभिधानात् । स्मृतिरपि । "अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायये"ति मनः प्रभृतिजीवोपकरणाधारत्वं च सर्वाधारस्य परस्यैवोपपद्यते ॥

इतश्च परमपुरुषः—

## सू० मुक्तोपसृप्यव्यपदेशाच्च ॥ २ ॥

अयं द्युपृथिव्याद्यायतनभूतः पुरुषः संसारबन्धान्मुक्तैरपि

प्राप्यतया व्यपदिश्यते । "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमि"ति । संसारबन्धाद्विमुक्ता एव हि विधूतपुण्यपापा निरञ्जना नामरूपाभ्यां विनिर्मुक्ताश्च, पुण्यपापनिबन्धनाचित्संसर्गप्रयुक्तनामरूपभाक्त्वमेव हि संसारः । अतो विधूतपुण्यपापैर्निरञ्जनैः प्रकृतिसंसर्गरहितैः परेण ब्रह्मणा परमं साम्यमापन्नैः प्राप्यतया निर्दिष्टो द्युपृथिव्याद्यायतनभूतः पुरुषः परं ब्रह्मैव परब्रह्मासाधारणशब्दादिभिः परमेव ब्रह्मेति प्रसाध्य प्रत्यगात्मासाधारणशब्दाभावाच्चायं पर एवेत्याह—

टी० विहङ्गयोर्हि निपत्यादानं साम्यम् । "अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मेति श्रुत्यनुसारेणात्म-शब्दं व्याचष्टे । "आत्मशब्दश्चे"ति । आत्म-शब्दो न व्याप्तृमात्रवाची किन्तु व्याप्तृविशेषवाची योगरूढत्वात्, न हि गगनादिष्वात्म-शब्दप्रयोगः, अतो नियन्तृरूपव्याप्तृविशेषवाचीत्यर्थः । अमृतस्यैष सेतुः आत्मानं "यस्सर्वज्ञस्सर्वविदित्यादयः स्वशब्दा इत्यर्थः । परोक्तहेतुनिर्वाहमाह "नाड्याधारत्वमि"त्यादिना, नाड्याधारत्वं हृदयद्वारा परमात्मनस्सम्भवतीत्यर्थः । अजायमान इति जन्मनो हेतुविशेषः फलविशेषश्चेति भावः । तद्विशद्यायाह । "स्मृतिरपी"ति, ॥ सू० मुक्तोपसृप्यव्यपदेशाच्च । नामरूपप्रहाणमात्रं प्रलयदशायामप्यस्तीति तद्व्यावृत्त्यर्थं विधूतपुण्यपापत्वपूर्वकत्वं नामरूपप्रहाणस्य दर्शयितुं श्रुतिवाक्यद्वयोपादानम् उपात्तश्रुतिवाक्ये बन्धान्मुक्त इति

शब्दस्याश्रुतत्वात् मुक्तिप्रतिपादनं दर्शयति "संसारबन्धना"दिति, वाक्यद्वयोक्तविशेषणान्याह "विधूते"ति, । मुक्तत्वमुपपादयति "पुण्यपापे"ति, । वाक्यद्वयोक्तविशेणानि विशदीकुर्वन् सूत्रार्थं परमसाम्येन घटयति "अत"इति, निरञ्जन-शब्दव्याख्यानं प्रकृतिसंसर्गरहितैरिति पदं परमं साम्यमिति । येन गुणेन साम्यं तस्यापरिच्छिन्नत्वं परमसाम्यं न तु सर्वथा साम्यम् । उत्तरसूत्रमवतारयति । "परब्रह्मे"ति, । पूर्वमन्वय उक्तः, अथ तद्दार्ढ्याय व्यतिरेक उच्यत इत्यर्थः ।

## सू० नानुमानमतच्छब्दात्प्राणभृच्च ॥ ३ ॥

श्रु० यथाऽस्मिन् प्रकरणे प्रतिपादकशब्दाभावात् प्रधानं न प्रतिपाद्यम् एवं प्राणभृदपीत्यर्थः । अनुमीयत इत्यनुमानं परोक्षं प्रधानमुच्यते अनुमानप्रमितत्वादानुमानमिति वा अतच्छब्दात्=तद्वाचिशब्दाभावादित्यर्थः । अर्थाभावे यदव्ययमित्यव्ययीभावः ॥

इतश्चायं न प्रत्यगात्मा

## सू० भेदव्यपदेशात् ॥ ४ ॥

"समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इत्यादिभिर्जीवाद्विलक्षणत्वेनायं व्यपदिश्यते अनीशया=भोग्यभूतया प्रकृत्या मुह्यमानश्शोचति जीवः । अयं यदा स्वस्मादन्यं सर्वस्येशं प्रियमाणम् । अस्य-ईश्वरस्य महिमानं च निखिलजगन्नियमनरूपं पश्यति तदा वीतशोको भवति-

टी० सू० नानुमानमतच्छब्दात्प्राणभृच्च । सूत्रसङ्गतेर्बुद्धिस्थत्वाय प्रथमं सङ्गच्छमानं सूत्रस्य वाक्यार्थमाह । "यथे"ति, । मुक्तोपसृप्यत्वेऽ-

भिहिते प्रधानशङ्कानुदयेन तस्य व्युदसनीयत्वाभावात्तदुपन्यासो दृष्टान्ततयेति भावः । किमत्र प्रधानोपस्थापकं पद? मित्याकाङ्क्षायां व्याख्येयं पदं व्याचष्टे "अनुमीयत"इति, । "कृत्यल्युटोबहुलमि"ति बहुलग्रहणात् कर्मणि ल्युडिति भावः । अनुमानेति । "शेष"इत्यणप्रत्यये आदिवृद्धौ च सत्यामानुमानमिति रूपं भवति तद्व्यतिरिक्तवाचिशब्दादिति प्रतीतिशङ्कानिवृत्त्यर्थमतच्छब्दादिति पदं व्याचष्टे "तद्वाची"ति, । अर्थाभावे यदव्ययमिति न सूत्रोपादानम् । अपि त्वर्थोपादानं सूत्रस्य द्राघीयस्त्वात् । अयमभिप्रायः अतच्छब्दादिति बहुव्रीहिस्तावदऽनुपपन्नः तदा तच्छब्दरहितादिति स्यात् ततश्च विशेष्यान्तरं हेतुतयाऽन्वेष्टव्यं । तच्चानुपलम्भहतं तत्पुरुषत्वे नञस्तत्पदेन शब्दपदेन वा समासस्स्यात् । तत्र प्रथमे असः क इत्यपेक्षायां प्रकृतात्परमात्मनोऽन्यत्प्रधानं जीवो वा यद्यतच्छब्दार्थस्तदा प्रधानपुरुषवाचिशब्दादित्युक्तं स्यात्, ततश्चासिद्धिः प्रतिज्ञातार्थविरोधश्च स्यात् । असः प्रधानादिव्यतिरिक्तः परमात्मा चेत् । तद्वाचिशब्दादित्युक्ते स्वशब्दादित्यनधिकार्थत्वं स्यात्, तथा च सति नानुमानमत एव प्राणभृच्चेत्यार्जवेन शक्ये सूत्रप्रणयने कुटिलोक्तिर्विफला स्यात् । नञस्तच्छब्दपदेन समासपक्षेऽपि तद्वाचिशब्दव्यतिरिक्तशब्दादित्युक्तं स्यात् तदा तच्छब्दः । प्रधानजीवपरश्चेत्तद्वाचिशब्दव्यतिरिक्तशब्दादित्युक्तं भवति । तत् स्वशब्दादित्यनधिकार्थं तच्छब्दः परमात्मपरश्चेत् तद्वाचिशब्दव्यतिरिक्तादिति हेतुः प्रतिज्ञातार्थविरुद्धार्थः स्यात् । अतः पारिशेष्यादर्थाभावेऽव्ययीभाव इति । इतश्चायं न प्रत्यगात्मेति प्राणभृत्प्रतिषेधकसूत्रानन्तर्यात्तदनन्तरसूत्रस्याऽपि प्राणभृत्प्रतिक्षेपस्साध्य इत्यर्थः, अयं शब्दो द्युभ्वाद्यायतनात्मविषयः मुक्तोपसृप्यसूत्रविषयवाक्ये "पश्यते रुक्मवर्णमि"त्युक्तं जुष्टं यदा पश्यतीति तत्तुल्यार्थतया बुद्धिस्थवाक्यान्तरप्रतिपन्नहेतुमाह । सू० भेदव्यपदेशात् । समाने वृक्ष इति मन्त्रे अन्यशब्दार्थो भेदव्यपदेश–शब्देन विवक्षितः । अत्रान्य–शब्दस्य द्युभ्वाद्यायतनविषयत्वं कथ? मिति शङ्कायां मन्त्रं व्याचष्टे । "अनीशये"ति, स्त्रीलिङ्गसामर्थ्यात् । प्रकृतेर्विशेष्यत्वमुक्तम् । अन्य–शब्दसामर्थ्यलब्धं प्रति

योगिनं निर्दिशति । "स्वस्मादि"ति, । ईश-शब्दसामर्थ्यप्राप्तमीशितव्यं मानान्तरानुरोधेनाह । "सर्वस्ये"ति, जुष्ट-शब्दं व्याचष्टे । "प्रियमाणमि"ति, । आदिकर्मणि क्तः इति भावः । समुच्चेतव्यसामर्थ्यप्राप्तश्च शब्द-इत्यभिप्रायेणाह "महिमानञ्चे"ति, इति-शब्दार्थमाह "निखिलजगन्नियमनरूपमि"ति, । इति-शब्दो बुद्धिस्थप्रकारपरः । ईश-शब्दश्रवणान्नियमनरूपप्रकारो बुद्धिस्थ इति भावः । यत्तदोर्नित्यसम्बन्धादाह "तदे"ति, । इति-शब्दः कालसम्बन्धरूपप्रकारवाची अतस्तदर्थस्तदा शब्दविवक्षितो वा स्यात् द्रष्टृत्वसमानाधिकरणं मुह्यमानत्वादिकं दृश्यत्वसमानाधिकरणं जुष्टत्वादिकमन्यत्वं च व्यपदिशन्तीयं श्रुतिः "तमेवैकं जानथे"ति ज्ञेयतया निर्दिष्टं द्युभ्वाद्यायतनमात्मानमन्य-शब्दवाच्यत्वेन प्रत्यभिज्ञापयन्ती तस्य जीवत्वं वारयतीति वाक्यार्थः । द्वितीयचतुर्थसूत्रविषयाभ्यां "यदा पश्यः पश्यते जुष्टं यदा पश्यतीति वाक्याभ्यामदृश्यत्वादिगुणकविषयस्य । "यद् भूतयोनिं परिपश्यन्ती"ति वाक्यस्य समानार्थत्वात् । बुद्धिस्थप्रकरणमेव हेतुं स्थित्यदनाभ्यां पूर्वमेवाह । सू० प्रकरणात् । भाष्ये अस्य सूत्रस्य साध्यनिर्देशाभावः प्रकरणाख्यस्य हेतोः प्राणभृत्प्रतिक्षेपे परमात्मसाधने च सामर्थ्यात् पूर्वत्रोत्तरत्र चान्वयो भविष्यतीत्यभिप्रायनिबन्धनः । उत्तरसूत्रव्याख्याने ह्युभयमपि साध्यत्वेन निर्दिश्यते । अदृश्यत्वादीत्यस्मिन्नधिकरणे "विशेषणभेदव्यपदेशाभ्यां च नेतरावि"ति सूत्रव्याख्यानावसरे तथाहीत्यादिनोपसंहृतमित्यन्तेन भाष्येण प्रकरणस्य परब्रह्मपरत्वं प्रतिपादितमित्यर्थः । पूर्वमेवास्य प्रकरणस्य परमात्मपरत्वं साधितञ्चेत्किमेतदधिकरणारम्भेणे?त्यत्राह । "नाडीसम्बन्धे"ति, । प्रकरणस्य लिङ्गेन बाधः परिहृत इत्यर्थः । नाड्याधारत्वं तस्यापि सम्भवतीत्यादिना भाष्येणास्याधिकरणस्य लिङ्गबाधपरिहारपरत्वं हि दर्शितम्, अनुक्तं प्रधानभूतं हेतुमाह । सू० स्थित्यदनाभ्यां च । "अल्पाच्तरमि"ति स्थितिशब्दस्य पूर्वनिपातः । अभ्यर्हितं पूर्वं प्रयोक्तव्यमिति वा । अभ्यर्हितत्वं परमात्मप्रत्यभिज्ञापनेन प्रकरणाविच्छेदहेतुत्वात् स्थितेः भाष्ये श्रुतिक्रमेण व्या-

ख्यानम् न पुनस्सूत्रक्रमेण अस्मिन्मन्त्रे जीवस्याऽपि प्रस्तुतत्वात् । "यस्मिन्द्यौरि"ति मन्त्रोऽपि तत्प्रतिपादकः स्यात्

## सू० प्रकरणात् ॥ ५ ॥

भू० प्रकरणञ्चेदं परस्य ब्रह्मण इति "अदृश्यत्वादिगुणको धर्मोक्तेरि"त्यत्रैव दर्शितम्, नाडीसम्बन्धबहुधाजायमानत्वमनःप्राणाधारत्वैश्च प्रकरणविच्छेदाशङ्कामाचमच पर्यहार्ष्म ॥

## सू० स्थित्यदनाभ्यां च ॥ ६ ॥

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो ऽभि चाकशीती"-त्येकस्य कर्मफलादनमन्यस्य च कर्मफलमनश्नत एव दीप्यमानतया शरीरान्तःस्थितिमात्रं प्रतिपाद्यते तत्र कर्मफलमनश्नन्दीप्यमान एव सर्वज्ञोऽमृतसेतुः सर्वात्मा द्युभ्वाद्यायतनं भवितुमर्हति न पुनः कर्मफलमदन् शोचन्प्रत्यगात्मा अतो द्युभ्वाद्यायतनं परमात्मेति सिद्धम् ॥

द्युभ्वाद्यधिकरणं समाप्तम् ॥

टी० अत्रादन—शब्दवाच्यभोगोपकरणमनःप्राणसम्बन्धदर्शनादित्यत्राह "तत्र कर्मफलमि"ति, । सर्वज्ञोऽमृतसेतुरित्यादिविशेषणानि प्राकरणिकतयोक्तानि । उभयोः प्रस्तुतत्वेऽपि सार्वज्ञ्यादिसमानाश्रयत्वात् स्वयंयोग्यत्वान्मनःप्राणसम्बन्धादेः परमात्मन्यमुख्यत्वाभावाच्च द्युभ्वाद्यायतनत्वं परमात्मधर्म इत्यर्थः । जीवान्वयायोग्यत्वमाह "न पुनरि"ति, ॥ कर्मफलमनश्नन्निति कर्मफलमदन्निति च सौत्रहेत्वनुवादः । शोचन्नित्यनेन भेदव्यपदेशादिति सौत्रहेतोरिहान्वयोऽभिप्रेतः । "शोचति मुह्यमान"इति हि तद्विषयवाक्यं तदपि प्रत्य

गात्मपरत्वप्रतिक्षेपद्वारा परमात्मपरत्वसाधकम् । व्यतिरेकस्यान्वयशेषत्वादिति भावः । अस्मिन् सूत्रे परमात्मपरत्वं श्रुत्या साध्यं । प्रत्यगात्मपरत्वप्रतिक्षेपस्त्वार्थ इति न वाक्यभेदः । "अभिचाकशीती"ति पदस्य दीप्यमानत्वे हि मन्त्रस्य तात्पर्यमवगम्यते ॥ जीवस्यात्तृत्वं तदुपयोगितया प्रतीयते । ननु कथं द्वासूपर्णेति मन्त्रस्य जीवपरमात्मभेदपरत्वम् अन्तःकरणजीवपरो ह्ययं मन्त्रः । पैङ्गिरहस्यब्राह्मणेनास्य मन्त्रस्य तथा व्याख्यातत्वात् । तथाहि "तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम् अनश्नन्नन्यो अभिचाकशीतीति "अनश्नन्नन्योऽभिपश्यति ज्ञः तावेतौ सत्त्वक्षेत्रज्ञावित्यत्र । स्वाद्वत्तीत्येतदन्तस्य वाक्यस्य सत्त्वपरत्वम् । अनश्नन्नित्यादेः क्षेत्रज्ञपरत्वं च प्रतीयते । न च सत्त्वक्षेत्रज्ञ–शब्दौ जीवपरमात्मपराविति वाच्यम् ॥ तयोश्शब्दयोरन्तःकरणजीवपरतया प्रसिद्धत्वात् । तदेतत्सत्त्वं येन स्वप्नं पश्यति । "अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः तावेतौ सत्त्वक्षेत्रज्ञाविति सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणजीव–शब्दाभ्यां पैङ्गिश्रुत्यैव व्याख्यातत्वाच्च येन पश्यतीति करणत्वप्रतीतेः सत्त्वं ह्यन्तःकरणं स्वप्नद्रष्टृत्वाच्च क्षेत्रज्ञो हि जीवः । अतोऽयं मन्त्रो ऽन्तःकरणजीवपर इति उच्यते । न तावज्जीवपरमात्मपरत्वमस्यापवदितुं शक्यते अनेन मन्त्रेण तुल्यार्थतया प्रत्यभिज्ञायमाने "समाने वृक्षे पुरुषो निमग्न"-इत्यनन्तरे मन्त्रे जीवपरयोः प्रतिपन्नत्वादस्य मन्त्रस्य तदैकार्थ्याच्च "समानं वृक्षं परिषस्वजाते" । "समाने वृक्षे पुरुषो निमग्न"इति तयोरैकार्थ्यं हि प्रतीयते । समाने वृक्षे इति मन्त्रे च पुरुषो जीवः, अन्तःकरणस्य पुरुषशब्दवाच्यत्वाभावात्, शोचति मुह्यमानः पश्यति वीतशोक इति पदानामस्वारस्यप्रसङ्गाच्च, अन्यश्च परमात्मा ईशशब्दोक्तत्वात् स्वविषयज्ञानेन वीतशोकत्वहेतुत्वाच्च । न केवलमनन्तरमन्त्रैकार्थ्यात् द्वासुपर्णेति मन्त्रस्य जीवपरमात्मपरत्वं किन्तु स्वाद्वत्ति अनश्नन्नन्य इति भोक्तृत्वा भोक्तृत्वश्रवणाच्च तदवसीयते । चक्षुःश्रोत्रादीनां द्रष्टृत्वश्रोतृत्वादिवत् अन्तःकरणस्यापि करणत्वादेव भोक्तृत्वं हि न सम्भवति जीवस्य च वृक्षशब्दोक्तदेहपरिष्वङ्गदशायामेवानश्नत्त्वमपि नोपप-

द्यते । तर्हि पैङ्गिश्रुतेः कोऽर्थः उच्यते सत्त्वं बद्धजीवः । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुष्वि"ति नामानुशासनाज्जन्तुपरत्वावगतेः । जन्तुश्च चेतनः । "प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिण"इति नामपाठात् । "वन्यान्विनेष्यन्निव दुष्टसत्त्वानि"ति प्रयोगात् "न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः सत्त्वं प्रकृतिजैर्मुक्तं यदेभिस्स्यात्त्रिभिर्गुणैरि"ति दर्शनाच्च क्षेत्रज्ञ-शब्दश्चात्र परमात्मपरः । अर्थान्तरप्रसिद्धाकाशप्राणादिशब्दवदर्थानुपपत्त्या परमात्मपरत्वोपपत्तेः । "विष्णोर्नामसहस्रं मे" इत्युपक्रम्य "क्षेत्रज्ञोऽक्षर एव च"ति प्रयोगात् । क्षेत्रं जानातीत्यवयवार्थस्य तस्मिन्नेव पुष्कलत्वाच्च मोक्षधर्मे । "ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा प्रविशन्ति द्विजश्रेष्ठ क्षेत्रज्ञं निर्गुणात्मकं सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वत"इति । तत्रैव "विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः ॥ एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखं । क्षेत्राणि च शरीराणि ज्ञानानि च शुभाशुभे । तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यत"इति प्रयोगात् ॥ तत्रैव कपिलासुरिसंवादे । ज्ञानानामासुरे क्षेत्रे क्षेत्रज्ञो द्रष्टा शुचिरुपेक्षकः । ज्ञातृको बुध्यमानाप्रतिबुद्धयोः परममृतं विदित्वा निरवयवमनामयमस्माद्दुःखाद्विमुच्यत एवेति । बुद्ध्यमानाप्रतिबुद्ध-शब्दाभिहितयोश्चिदचितोः परस्य क्षेत्रज्ञ-शब्देनाभिधानात् तत्रैव "पञ्चविंशन्तितत्त्वानि वर्ग-शब्देनोक्त्वा "एतस्माद्वर्गादपवृत्तोऽपवर्गदः क्षेत्रज्ञः शुचिरुपेक्षको बुध्यमानाप्रतिबुद्धयोः परस्तादि"ति ॥ तत्रैव अन्यदुदकमन्यत् पुष्करपर्णं तथाऽन्यत्क्षेत्रमन्यः पुरुषः पञ्चविंशकः अन्यश्चास्मात्क्षेत्रज्ञ इति पुनस्तत्रैव । एवमासुरे अन्यद्वृक्षमन्यः पुरुषः पञ्चविंशन्तितत्त्वमन्योऽस्मात्क्षेत्रज्ञ इति पञ्चविंशात् परस्मिन् क्षेत्रज्ञ-शब्दप्रयोगात् सनत्कुमारनारदसंवादे च ॥ "पश्यः पश्यति पश्यन्तमपश्यन्तं च पश्यति । पश्यन्तं पश्य पश्यत्वात्पश्यापश्ये न पश्यति"इति श्लोकमुक्त्वा ॥ प्रकृतिं क्षेत्रं क्षेत्रज्ञं चापरः ॥ क्षेत्रज्ञः षड्विंशकोऽवपश्यति न तु पञ्चविंशकः क्षेत्रज्ञश्च प्रकृतिर्वापरं क्षेत्रज्ञं पश्यती"तिप्रयोगाच्च । अत्र ह्यात्म-शब्दवत् । क्षेत्रज्ञ-शब्दस्य जीवपरसाधारणस्य ।

पञ्चविंशतिपरक-शब्दविशेषितस्य जीवपरमात्मविषयत्वदर्शनाच्च ॥ "योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते । यः करोति च कर्माणि स भूतात्मा [1]प्रचक्षत" इति प्रयोगाच्च ॥ येन स्वप्नं पश्यतीत्यत्र येनेतीत्थंभावे तृतीया ॥ येन विशिष्टः परमात्मा स्वप्नं पश्यतीत्युच्यते। ततश्च काठिन्यवान् बिभर्तीति पृथिवीद्वारा काठिन्यवत् । स्वप्नद्रष्टृत्वं जीवद्वारा परमात्मविशेषणं भवतीति न विरोधः ॥ शारीरशब्दश्च । तस्यैव एव शारीर आत्मेतिवदत्रैव स्वव्यतिरिक्तसमस्तचिदचिच्छरीरके परमात्मन्युपपद्यते उपद्रष्टेति निरुपाधिकद्रष्टृत्वं च तस्यैवोपपद्यते एवं शारीर उपद्रष्टेति पदद्वयेन परस्य क्षेत्रज्ञ-शब्दवाच्यत्वमुपपादितं भवति । अतो द्वासुपर्णेति मन्त्रो जीवपरमात्मपरः । अधिकरणार्थमुपसंहरति "अत" इति, इह केश्चिदेवं पूर्वपक्षितं । द्युभ्वाद्यायतनस्य सेतुत्वश्रवणात् सेतोश्च पारवत्त्वेन परस्य च अनन्तमपारमित्यपारत्वश्रवणात् द्युभ्वाद्यायतनं प्रधानं वायुर्वा जीवो वा स्यात् एषां धारकत्वयोगादिति । तदयुक्तं पारवदर्थापस्थापकस्य सेतुत्वव्यपदेशस्य पूर्वपक्षहेतोरस्मिन्नधिकरणे परिहृतत्वे सत्युत्तरत्र "परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्य" इत्यधिकरणे सेतुत्वव्यपदेशस्य पूर्वपक्षहेतुत्वेनोपन्यासायोगात् न हि परिहृतस्य हेतोः पुनः परिहारो न्याय्यः कृतकरत्वापत्तेः । अत्र सेतोः परिच्छिन्नत्वं पूर्वपक्षशङ्काबीजं तत्र तु कूलान्तरप्रापकत्वमिति मुखभेदोऽस्तीति चेन्न कूलान्तरप्रापकत्वं च सेतोः कूलावधिकत्वनिबन्धनमिति परिच्छिन्नत्वे परिहृते तस्या ऽपि परिहृतत्वात् । परिहारहेतुसाम्याच्च विधरणार्थतयैव ह्युभयत्र परिहारः, अत उत्तरत्र पूर्वपक्षबीजतयोपन्यासान्यथानुपपत्त्या अस्मिन्नधिकरणे सेतुत्वव्यपदेशः सूत्रकारेण पूर्वपक्षबीजतया विवक्षितः । प्रधानवाय्वाशङ्का चानुपपन्ना । तमेवैकं जानथात्मानमित्यात्मशब्दश्रवणात् गौणश्चेन्नात्मशब्दादित्यत्र आत्मशब्दस्याचिद्व्यावर्तकतोपपादनाच्च अचेतनशङ्कोत्थानासम्भवात् स्वशब्दस्य सदायतनास्सत्प्रतिष्ठा इति सद्विद्यावाक्यविषयत्वं चायुक्तम् । अपक्षधर्मत्वात् सद्विद्यावाक्यं हि नात्र श्रूयते इह तदैकार्थ्यं हेतुतया विवक्षितमिति चेत् । तर्हि विगीतस्य

[1] स भूतात्मेति चोच्यते इति पा० ।

हेतुतयोपन्यासो न घटते । द्युपृथिव्याद्यायतनप्रतिपादकवाक्यस्य परमात्मप्रतिपादकवाक्यान्तरैकार्थ्यं हि पूर्वपक्षिणो विमतिपदम्, द्वितीयसूत्रस्य च अन्या वाचो विमुञ्चथेति श्रवणात् वाग्विमुक्तैर्ज्ञेयत्वव्यपदेशपरत्वमयुक्तं । नामरूपाद्विमुक्तः परात्परं पुरुषमुपैतीति वाक्यस्य विमुक्ति-शब्दार्थस्य उपैति-शब्दार्थस्य च स्वरसतः प्रत्यभिज्ञापकत्वान्मुक्तोपसृप्यव्यपदेशस्य । विमुञ्चथेति श्रुतस्य वाक्कर्मकस्य मुचिधातोः प्रत्ययविपरिणामेन अवाक्कर्मकमुक्तप्रत्यभिज्ञानं ह्यस्वरसम् उपसृप्य-शब्दस्य ज्ञेयवाचित्वं चास्वारसिकं स्वारसिकार्थानुपपत्त्यभावे अस्वरसार्थौचित्यातिशयाभावे वा ऽस्वरसार्थस्वीकारोऽनुपपन्नः प्राणभृच्चेति सूत्रपृथक्त्वकल्पनं चायुक्तं हेतुवैधर्म्याभावात् उभयव्यावर्तकहेतूपादानवतैकेन सूत्रेणोभयव्युदासदर्शनाच्च यथा विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ अत एव न देवताभूतं चेति च उपरितनसूत्रोक्तहेतूनां नानुमानमिति प्रतिज्ञायामनन्वयात् पृथग्योगकरणमिति चेन्न नानुमानमित्युपादानस्य दृष्टान्तार्थत्वात् दृष्टान्तार्थत्वाभावेऽपि जीवव्यावर्तकानामुत्तरसूत्रहेतूनां किं पुनर्न्यायेन प्रधानव्यावर्तकत्वाच्च भेदव्यपदेशादिति सूत्रस्य च तमेवैकं जानथेति वाक्यविषयत्वादपि । जुष्टं यदा पश्यत्यन्यमीशमिति वाक्यविषयत्वमुचितं व्यपदेशशब्दस्वारस्यात् कर्मकर्तृभावो हि भेदगमकः, अन्य-शब्दश्च भेदाभिधायकः द्वा सुपर्णेति वाक्यस्य च बुद्धिजीवपरत्वपक्षोऽनुपपन्नः । प्राणभृच्चेति जीवव्यावृत्तिं प्रतिज्ञाय बुद्धिव्यावृत्त्युपपादनस्यासङ्गतत्वात् जीव एवोपाधिव्यवच्छेदविरहितः परमात्मा भवतीति नासङ्गतिरिति चेन्न वृत्त=शब्दविवक्षितदेहोपाधिपरिष्वङ्गेनायमेवानश्नतोऽन्यस्य स्थितेर्हेतुतयोपन्यासायोगात् अनश्नन्नित्यनेन प्रतीयमानस्याप्युपाधिपरिष्वङ्गस्यापारमार्थ्यं विवक्षितमिति चेत् तर्ह्यनेन वाक्येन अपरमार्थोपाध्यन्वयो न प्रतिषिद्धः स्यात् किं त्वनुमतस्स्यात् द्युभ्वाद्यायतनं न प्राणभृत् स्थित्यदनाभ्यामित्युक्ते परमार्थतोऽनश्नतस्तथा स्थितेरपरमार्थतोऽत्तृत्वाच्चेत्युक्तं भवति अपरमार्थोपाध्यवच्छिन्नात्मत्वमेव हि त्वन्मते जीवत्वं ततश्च जीवव्यावृत्तिं प्रतिज्ञाय जीवत्वाविरुद्धतदुपपादकहेतूपन्यासो न घटते उपाधिमि-

थ्यात्वमेवाधिकरणप्रतिपाद्यमिति चेत् तर्हि स्वशब्द–मुक्तोपसृप्यत्व–भेद-व्यपदेशादिहेतवो न घटन्ते तेषां मिथ्यात्वसाधकत्वाभावात् भवत्पक्षे विश्वमिथ्यात्वस्य प्रथमाधिकरणसिद्धत्वेन इहोपाधिमिथ्यात्ववर्णनवैयर्थ्यात् च द्वासुपर्णेति मन्त्रार्थस्य च हेतुत्वोक्तिरयुक्ता अत्रोपाधिमिथ्यात्वाप्रतीतेः, न ह्येकवृक्षाधिरूढयोः पक्षिणोर्मिथोर्विरुद्धाकारयोर्भेदेऽभिहिते वृक्षमिथ्यात्वमुक्तं भवति। यदपि कैश्चिद् उत्प्रेक्षितं द्युभ्वाद्यायतनमित्यादिसूत्रद्वयमात्मविषयत्वप्रतिपादकं नानुमानमतच्छब्दादिति प्रधानव्युदासपरं प्राणभृच्चेति सूत्रं जीवव्यावृत्तिपरम् अन्यत्सूत्रत्रयं मुक्तव्युदासकमिति तदयुक्तं तथाहि आद्यस्य सूत्रद्वयस्य निरसनीयशङ्काभावात्तत्प्रणयनवैयर्थ्यं स्यात्, न च तृतीयसूत्रं प्रधानव्यावृत्तिपरं मुक्तोपसृप्यतया व्यपदिष्टस्यात एव जीवादपि व्यावृत्तस्य प्रधानत्वशङ्कानुदयात् अत आनुमानोपादानं दृष्टान्तार्थम्, अत एव पृथग्योगकरणं चानुपपन्नमित्युक्तम्, अतस्तृतीयसूत्रं व्यतिरेकेण जीवव्यावृत्त्युपपादनपरं तद्विज्ञानेन परिपश्यन्ति धीराः आनन्दरूपममृतं यद्विभाति यद्यदात्मविदो विदुरिति भेदव्यपदेशेन मुक्तव्यावृत्तिपरं चतुर्थसूत्रमित्यप्ययुक्तं मुमुक्षुभिर्ज्ञातव्यत्वं मुक्तव्यावर्तकं न वा प्रथमे तमेवैकं जानथेति वाक्यादेव मुक्तव्यावृत्तिसिद्धेः, भेदव्यपदेशादिति वाक्यान्तरविषयसूत्रप्रणयनवैयर्थ्यं, द्वितीये सुतरां वैयर्थ्यं तमेवैकं जानथेति वाक्योदितज्ञातृज्ञेयभाववत् परिपश्यन्तीत्यादिवाक्योक्तद्रष्टृदृश्यभावस्यापि मुक्तव्यावर्तनासामर्थ्यात्, अतो यथोक्त एव सूत्राणामर्थः ॥ द्युभ्वाद्यधिकरणं समाप्तम् ॥

भूमाधिकरणम् । **सू० भूमा संप्रसादादध्युपदेशात् ॥ ७ ॥**

**भा० इदमामनन्ति छन्दोगाः "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पमि"ति अत्रायं भूमशब्दो भावप्रत्ययान्तो व्युत्पाद्यते तथा हि पृथ्वादिषु बहु–शब्दः पठ्यते ततः "पृथ्वादिभ्य इमनिज्वे"ति**

इमनिच्प्रत्यये कृते "बहोर्लोपो भू च बहोरि"ति प्रकृतिप्रत्यययोर्विकारे भूमेति भवति भूमा—बहुत्वमित्यर्थः, अत्र चायं बहु—शब्दो वैपुल्यवाची न संख्यावाची यत्रान्यत् पश्यति तदल्पमिति अल्पप्रतियोगित्वश्रवणात्, अन्यशब्दनिर्दिष्टधर्मिप्रतियोगिप्रतिपादनपरत्वादेव धर्मिपरश्च निश्चीयते न धर्ममात्रपरः, तदेवं भूमेति विपुल इत्यर्थः, वैपुल्यविशेष्यश्चेहात्मेत्यवगतः "तरति शोकमात्मविदि"ति प्रक्रम्य भूमविज्ञानमुपदिश्य आत्मैवेदं सर्वमिति तस्यावोपसंहारात्. अत्र संशय्यते, किमयं भूमगुणविशिष्टः प्रत्यगात्मा? उत परमात्मे?ति किं युक्तं प्रत्यगात्मेति कुतः श्रुतं ह्येवमेव भगवद्दृशेभ्यस्तरति शोकमात्मविदित्यात्मजिज्ञासयोपसेदुषे नारदाय नामादिप्राणपर्यन्तेषु उपास्यतयोपदिष्टेषु अस्ति भगवो—

टी० सू० भूमा संप्रसादादध्युपदेशात् परमात्म प्रकरणाविच्छेदेन परमात्मपरत्वं साधितं तर्हि जीवप्रकरणाविच्छेदेन जीवपरत्वमिति शङ्कोत्थानात् सङ्गतिः, इयं प्रमाणद्वारिका पूर्वं ओतं मनस्सह प्राणैश्च सर्वैरिति प्राणसम्बन्धिनः परमात्मत्वमुक्तम्, अत्र प्राणसम्बन्धिन एव हिंसायोग्यत्वश्रवणाज्जीवत्वं प्रतीयत इत्यर्थद्वारा च सङ्गतिः। विषयमाह "इदमि"ति, भूम—शब्दस्य रूढितोऽवयवशक्त्या वा जीवपरमात्मोपस्थापकत्वसम्भवे हि प्रत्यगात्मा वा परमात्मा वा भूम—शब्दवाच्य इति संशयोदयः, अन्यथा भूम—शब्दस्य कोऽर्थ इति हि वक्तव्यम् अतो विशेषविषयसंशयसम्भवप्रदर्शनाय भूम—शब्दव्युत्पत्तिप्रकारमनुसरन्विचारविषयसंशयसिद्धिं दर्शयति "अत्रायं भूमशब्द"इति, भावप्रत्ययान्तत्वमुपपादयति "तथा ही"ति, आकृतिगणत्वव्यावृत्त्यर्थं पठ्यत इत्युक्तं बहोरि-

त्यादि बहु-शब्दात् परस्य प्रत्ययस्यादेरचो लोपः आदेः परस्येति सूत्रवशात् बहु-शब्दस्य भूशब्दादेशश्चेत्येवं प्रकृतिप्रत्ययोर्विकारः बहवः पुरुषा राजसुताहो एक एव तु "द्व्येकयोर्द्विवचनैकवचने" "बहुषु बहुवचन"मितिसङ्ख्यायामपि प्रयोगो दृश्यते अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यद् इति वैपुल्येतिप्रयोगोऽस्ति तस्मात्सङ्ख्याव्यावृत्त्यर्थमाह "अत्र चायमि"ति, कथं वैपुल्यपरत्वमित्यत्राह "यत्रान्यदि"ति, । ननु सङ्ख्यावाचिशब्दप्रतियोगित्वादल्प-शब्दोऽपि सङ्ख्यापरः स्यात् । नैवं बहुशब्दस्य सङ्ख्याविपुलत्वयोः प्रयोगदर्शनादल्प-शब्दस्य सङ्ख्यायां प्रयोगादर्शनाच्चानन्यथासिद्धाल्पशब्दानुगुणार्थो बहु-शब्द इति धर्मिपरत्वमुपपादयति "अल्पे"ति, धर्मवाचिभूमशब्दप्रतियोगित्वादल्प-शब्दोऽपि धर्मपरः स्यादिति चेन्न तत्राऽपि धर्मिवाचिषष्ठ्यन्तशब्दान्तराभावात् यत्र नान्यत् पश्यतीति श्रुतेश्च, न हि धर्ममात्रे ज्ञाते धर्मिस्वरूपं ज्ञातं भवतीति । एवं सिद्धमर्थमाह "तदेवमि"ति, । वैपुल्यविशेष्यः क इत्याकाङ्क्षायामाह "वैपुल्ये"ति, कथमात्मनो विशेष्यत्व? मित्यत्राह "तरती"ति, उपक्रमोपसंहारयोरात्मशब्ददर्शनादित्यर्थः अत्रेति किं भूमा प्रत्यगात्मा? उत परमात्मा तदर्थं किं प्राण-शब्दनिर्दिष्टे प्रत्यगात्मनि प्रश्नप्रतिवचनसमाप्त्या भूम-शब्दस्तत्र पर्यवसितः? उतातिरिक्तविषयः? किम् एष तु वा अतिवदति यः सत्येनातिवदतीति प्राणातिवादिनोऽङ्गतया सत्यवचनं विधत्ते? उत सत्यशब्दवाच्यपरोपासकस्यातिवादित्वं वदति? किमस्मिन् वाक्ये प्राणातिवादिनः प्रत्यभिज्ञास्ति? नेति? तु-शब्दः किं प्रत्यभिज्ञाविरोधी नेति यदा तु-शब्दः प्रत्यभिज्ञाविरोधी न भवति तदा प्राणातिवादिनः प्रत्यभिज्ञासम्भवात् एष तु वा इति वाक्यं तदङ्गभूतसत्यवचनविधिपरमिति प्राणातिरिक्तवस्त्वभावात् भूम-शब्दः प्राणे पर्यवसित इति भूमा प्रत्यगात्मेति पूर्वपक्षः । यदा तु-शब्दः प्रत्यभिज्ञाविरोधी भवति तदा प्राणातिवादिनः प्रत्यभिज्ञानाभावेन सत्येनातिवदतीति वाक्यस्य सत्योपासकातिवदनपरत्वेन प्राणातिरिक्तवस्तुसद्भावेन प्रश्नप्रतिवचनसमाप्तावपि भूम-शब्दस्य प्राणपर्यवसितत्वाभावात् भूमा परमात्मेति राद्धान्तः ॥

सू० नाम्नो भूयः अस्ति भगवो वाचो भूय इत्यादयः प्रश्नाः "वाग्वाव नाम्नो भूयसी मनो वाव वाचो भूय" इत्यादीनि च प्रतिवचनानि प्राणात् प्राचीनेषु दृश्यन्ते, प्राणे तु न पश्यामः, अतः प्राणपर्यन्त एवायमात्मोपदेश इति प्रतीयते, तेनेह प्राण-शब्दनिर्दिष्टः प्राणसहचारी प्रत्यगात्मैव न वायुविशेषमात्रं, प्राणो ह पिता प्राणो ह मातेत्यादयश्च प्राणस्य चेतनतामवगमयन्ति पितृहा मातृहेत्यादिना सप्राणेषु पितृप्रभृतिषूपमर्दकारिणि हिंसकत्वनिमित्तोपक्रोशवचनात् तेष्वेव विगतप्राणेष्वत्यन्तोपमर्दकारिण्यप्युपक्रोशाभाववचनाच्च हिंसायोग्यश्चेतन एव प्राण-शब्दनिर्दिष्टः

टी० 'तेने'ति, तेन—आत्मजिज्ञासया प्रक्रान्ते प्रकरणे प्राणपर्यन्तोपास्योपदेशेन हेतुनेत्यर्थः प्राण-शब्दः कथमात्मनि वर्तत इत्यत्राह "प्राणसहचारी"ति, इतरव्याख्यातृषु कैश्चित् पञ्चवृत्तिः प्राणः प्राणशब्दवाच्य इत्युक्त्वा तत्प्रकरणाविच्छेदेन भूमा प्राण इति पूर्वपक्षं कृत्वा प्रकरणविच्छेदेन भूमा परमात्मेत्युक्तं कैश्चिच्च पञ्चवृत्तिप्राणस्य प्राणशब्दवाच्यत्वमभ्युपगम्य पूर्वपक्षे सिद्धान्ते च तत्प्रकरणाविच्छेदं वदद्भिः भूमा प्रत्यगात्मेति पूर्वपक्षं कृत्वा परमात्मेति सिधान्तितं तदुभयमाशङ्क्याह "न वायुविशेषमात्रमि"ति उपक्रान्तस्यात्मोपदेशस्य प्राणपर्यन्तत्वसिद्धेः प्राणस्य चात्मत्वयोगादिति भावः । हेत्वन्तरमाह "प्राणो हे"ति, न हि केवलं देहस्य वायुविशेषस्य वा पितृत्वादिकं वेदान्तिषु कश्चित् अभ्युपगच्छति । हेत्वन्तरमाह "पितृहे"ति, अत्र प्रकरणे सप्राणेषु हिंसके हिंसानिमित्तोपक्रोशवचनं दृश्यते अप्राणेषु हिंसके हिंसानिमित्तोपक्रोशाभावश्च

सू० अप्राणेषु स्थावरेष्वपि चेतनेषूपमर्द्दभावाभावयोर्हिंसातदभावदर्शनादयं हिंसायोग्यतया निर्द्दिष्टः प्राणः प्रत्यगात्मैवेति निश्चीयते, अत एव चारनाभिदृष्टान्ताद्युपन्यासेन प्राण-शब्दनिर्द्दिष्टः पर इति न भ्रमितव्यं परस्य हिंसाप्रसङ्गाभावात्, जीवादितरस्य तद्भोग्यभोगोपकरणभूतस्य कृत्स्नस्याचिद्वस्तुनो जीवायत्तास्थितित्वेन प्रत्यगात्मन्येवारनाभिदृष्टान्तोपपत्तेश्च, अयमेव च प्राण-शब्दनिर्द्दिष्टो भूमा अस्ति भगवः प्राणाद् भूय इति प्रश्नस्यादो वाव प्राणाद् भूय इति प्रतिवचनस्य चाभावाद्भूमसंशब्दनात् प्राक्प्राणप्रकरणस्याविच्छेदात । किञ्च प्राणवेदिनोऽतिवादित्वमुक्त्वा तस्यैव

टी० दृश्यते लोके च सजीवनिर्ज्जीवशरीरयोरुपमर्द्दकारिषूपक्रोशतदभावौ दृश्येते, न हि निष्क्रान्तात्मनः केवलस्य शरीरस्य वा हिंस्यत्वम् अपि त्वचिद्विशिष्टस्यैव चेतनस्य तस्मात्सप्राणनिष्प्राणविषयोपमर्द्दतदभावयोः सजीवनिर्जीवशरीरोपमर्द्दनिमित्तहिंसातदभावश्रवणाद्धिंसारूपत्वं प्राण-शब्दवाच्यस्य जीवत्वसाधकमित्यर्थः उपक्रोशतदभावौ पञ्चवृत्ति प्राणवत्त्वतद्रहितत्वनिबन्धनौ स्यातां, न तु सजीवत्वनिर्ज्जीवत्वकृतावित्यत्राह "अप्राणेष्वि"ति, स्थावरेष्वपि चेतनेष्विति ओषधिवनस्पतयो यच्च किञ्चित् प्राणभृत् स आत्मानमाविस्तरां वेद शरीरजैः कर्मदोषैर्याति स्थावरतां नर इत्यादिश्रुतिस्मृतिभिः स्थावराणां ज्ञातृत्वकर्मफलभोक्तृत्वावगमात्तेषां चेतनत्वं वेदास्तान् स्मृतिवचनानि च प्रमाणयद्भिरभ्युपेत्यमिति भावः । प्रक्रान्तस्यात्मोपदेशस्य प्राणपर्यन्तत्वं मातृत्वपितृत्वादिकं हिंसायोग्यत्वं चेति त्रितयं जीवत्वसाधकं पूर्वपक्षे, सिद्धान्ते तु पितृत्वादिकं हिंसाकर्मत्वं च द्वयमेव जीवत्वसाधकमिति भिदा, अरनाभिदृष्टान्तपूर्वकसर्वाधारत्वोपन्यासेन प्राण-शब्दनिर्द्दिष्टः परमात्मेति प्रतीयत इत्यत्राह "अत

एवे''ति, दृष्टान्तादीत्यादिशब्देन धारकत्वं प्राण–शब्दनिर्दिष्टस्य मुख्य-प्राणत्वशङ्कानिरासहेतुरेव परमात्मत्वशङ्काया अपि निरासहेतुरिति सूचयत्येवकारः। कुत इत्यत्राह ''परस्ये''ति, हिंसाया अभावो मुक्तस्याप्यस्तीति तद्व्यावृत्त्यर्थं हिंसाप्रसङ्गाभावादित्युक्तम्। तर्ह्यनेनाभिदृष्टान्तः कथमित्यत्राह ''जीवादितरस्ये''ति, एवं हिंसायोग्यत्वं पञ्चवृत्तिप्राणात् परमात्मनश्च व्यावर्त्तकमित्युक्तं भवति, एवं जीवः प्राण-शब्दवाच्योऽस्तु ततः किं भूमविशिष्टस्य जीवत्व? इत्यत्राह ''अयमेव चे''ति, प्रकरणाविच्छेदं हेतुमेवमाह ''अस्तिभगव''इति, प्रश्नप्रतिवचनाभावः प्रकरणाविच्छेद हेतुः तदविच्छेदो भूमविशिष्टस्य जीवत्वहेतुरित्यर्थः तु–शब्दस्य प्रकरणविच्छेदकत्वमाशङ्क्याह ''किन्त्वे''ति, ॥

सू० एष तु वा अतिवदतीति प्रत्यभिज्ञाप्य यस्सत्येनातिवदतीति तस्य सत्यवदनं प्राणोपासनाङ्गतयोपदिश्यते उपादेयस्य सत्यवदनस्य शेषितया पूर्वनिर्दिष्टप्राणयाथात्म्यविज्ञानं यदा वै विजानात्यथ सत्यं वदतीत्युपदिश्य तत्सिद्ध्यर्थं च मननश्रद्धानिष्ठाप्रयत्नानुपदिश्य तदारम्भाय च प्राप्यभूतप्राण–शब्दनिर्दिष्टप्रत्यगात्मस्वरूपस्य सुखरूपताज्ञानमुपदिश्य तस्य च सुखस्य विपुलता भूमा त्वेव विजिज्ञासितव्य इत्युपदिश्यते, तदेवं प्रत्यगात्मन एवाविद्याविमुक्तं रूपं विपुलसुखमित्युपदिष्टमिति तरति शोकमात्मविदित्युपक्रमाविरोधश्च, अतो भूमगुणविशिष्टः प्रत्यगात्मा, यत एवं भूमगुणविशिष्ट अत एवाहमर्थे प्रत्यगात्मनि अहमेवाधस्तादहमुपरिष्टादित्यारभ्य अहमेवेदं सर्वमिति प्रत्यगात्मनो वैभवमुपदिशति, एवं प्रत्यगात्मत्वे निश्चिते सति तदनुगुण-

टी० एष तु वा अग्निहोत्री यस्सत्यं वदतीत्यत्र अग्निहोत्रिवत् प्राणातिवादिनः प्रत्यभिज्ञानात्तस्यैव तदङ्गतया सत्यकथनमुक्तमित्यर्थः कथं जीवस्वरूपस्य विपुलसुखत्वं ? तद्धि शोकप्रचुरमित्यत्राह "अविद्यावियुक्तं रूपमिति उपक्रमे तरति शोकमात्मविदिति शोकाविष्टत्वं जीवस्य प्रतिपन्नं तत् कथं विपुलसुखत्व ? मित्यत्राह "उपक्रमाविरोधश्चे"ति, बद्धो हि स शोकः मुक्तस्वरूपं विपुलसुखमित्यर्थः । अहं-शब्दनिर्द्देशं च हेतुमाह "यत एवमि"ति, कथमहंशब्दनिर्द्देशः प्रत्यगात्मत्वसाधक इत्यत्राह "अहमर्थं प्रत्यगात्मनी"ति, अहमर्थस्य प्रत्यगात्मत्वादित्यर्थः । तदनुगुणतयेति स्वमहिमप्रतिष्ठितत्वादिपराणि वाक्यान्यस्वरसं योजनीयानीत्यर्थः । सूत्रं व्याचष्टे "भूमे"ति, शुद्धस्वरूपाभिप्रायेण सूत्रे संप्रसादनिर्द्देशः कृतः, संप्रसाद-शब्दस्य प्रत्यगात्मपरत्वं कथ ? मित्यत्राह "एष"-इति, हेतुवाचिपदेषु संप्रसाद-शब्दो व्याख्यातः पदान्तरद्वयम्-

सू० तया वाक्यशेषो नेतव्य इति, एवं प्राप्ते ऽभिधीयते सू० भूमा संप्रसादादध्युपदेशात्, संप्रसादः भूमगुणविशिष्टो न प्रत्यगात्मा अपि तु परमात्मा, कुतः संप्रसादादध्युपदेशात् संप्रसादः-प्रत्यगात्मा एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इत्युपनिषत्प्रसिद्धेः, संप्रसादात् प्रत्यगात्मनोऽधिकतया भूमविशिष्टस्य सत्य-शब्दाभिधेयस्योपदेशादित्यर्थः सत्य-शब्दाभिधेयं च परं ब्रह्म, एतदुक्तं भवति यथा नामादिषु प्राणपर्यन्तेषु पूर्वपूर्वाधिकतयोत्तरोत्तराभिधानात्पूर्वेभ्य उत्तरेषाम् अर्थान्तरत्वम् एवं प्राण-शब्दनिर्दिष्टात्प्रत्यगात्मनो ऽधिकतया निर्दिष्टस्सत्यशब्दाभिधेयस्तस्मादर्था-

टी० व्याचष्टे "संप्रसादादि"ति, न हि प्राणकथनानन्तरं भूमविशिष्टस्याधिकत्वं श्रूयत इत्यत्राह "सत्यशब्दाभिधेयस्ये"ति, सत्य-शब्दात्

पश्चात्प्रकरणविच्छेदाभावेन सत्य-शब्दवाच्य एव भूमविशिष्ट इति भावः भूम-शब्दविशिष्टः सत्य-शब्दाभिधेयोऽस्तु ततः किं तस्य भूम्नः परमात्मत्वसिद्धे? रित्यत्राह "सत्य-शब्दाभिधेयं चे"ति, सत्य-शब्दाभिधेयस्य तु-शब्दापेतातिवादिशब्देनाधिकतयोपदेशोऽस्तु, आधिक्यस्य च प्राण-शब्दवाच्यजीवप्रतियोगिकत्वं कथं? न हि मनो वाव वाचो भूय इत्यादिवत् पञ्चम्यन्तः प्राण-शब्दः श्रुतः, अतो न सत्यस्य प्राण-शब्दवाच्याऽजीवादर्था-

न्तरभूत एव सत्य-शब्दनिर्दिष्ट एव भूमेति सत्याख्यं परं ब्रह्मैव भूमेत्युपदिश्यत इति, तदाह वृत्तिकारः भूमा त्वेवेति, भूमा ब्रह्म नामादिपरम्परया आत्मन ऊर्ध्वमस्योपदेशादिति प्राण-शब्दनिर्दिष्टादधिकतया सत्यस्योपदेशः कथमवगम्यत? इति चेत् "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवती"ति प्राणविदोऽतिवादित्वमुक्त्वा "एष तु वा अतिवदति यः सत्येनातिवदती"ति सत्यवेदित्वेनातिवादिनं तु-शब्देन पूर्वस्मादतिवादिनो व्यावर्तयति, अत एव

टी० न्तरत्वज् अपि तु पूर्वनिर्द्दिष्टाया आशाया अधिकतयोपदिष्टः प्राण एव सत्य-शब्दवाच्यः परिशुद्धप्रत्यगात्मस्वरूपस्याऽपि "सत्यं चानृतं च सत्यमभवदित्यादाविव सत्य-शब्दवाच्यत्वं सम्भवेदित्यत्राह "एतदुक्तं भवती"ति, पूर्वनिर्द्दिष्टादूर्ध्वमभिधानं हि पूर्वनिर्द्दिष्टप्रतियोगितयोत्तरोत्तराणामधिकतयाऽर्थान्तरत्वे हेतुः। तस्य हेतोः सपक्षे व्याप्तिं दर्शयति "यथे"ति, एवं-शब्देन हेतुरभिप्रेतः, उत्तरोत्तरनिर्द्दिष्टानां पूर्वपूर्वनिर्द्दिष्टादधिकतया अर्थान्तरप्रतिपादनप्रकरणत्वात् प्राण-शब्दान्निर्द्दिष्टादूर्ध्वं निर्द्दिष्टस्सत्यश-

भू० एष तु वा अतिवदतीत्यत्र प्राणातिवादिनो न प्रत्यभिज्ञा अतोऽस्यातिवादित्वनिमित्तं सत्यं पूर्वातिवादित्वनिमित्ता-

त्प्राणादधिकमिति विज्ञायते। ननु च प्राणवेदिन एव सत्यवदनमङ्गत्वेनोपदिष्टम्, अतः प्राणप्रकरणाविच्छेद इत्युक्तं, नैतद्युक्तं तु-शब्देन ह्यतिवाद्येवान्यः प्रतीयते न तु तस्यैवातिवादिनः सत्यवदनाङ्गविशिष्टतामात्रम्, "एष तु वा अग्निहोत्री यः सत्यं वदती"त्यादिष्वग्निहोत्र्यन्तराप्रतीतेः, प्रतीतस्यैवाग्निहोत्रिणः सत्यवदनाङ्गविधानमिति क्लिष्टा गतिराश्रीयते, अत्र त्वतिवाद्यन्तरत्वनिमित्तं सत्यशब्दाभिधेयम्

टी० ब्दवाच्यस्तस्मात् प्राणादधिकतया अर्थान्तरभूत एवेत्यर्थः ततः किं भूम-शब्दस्य वाच्यस्य परमात्मत्व? इत्यत्राह "सत्य-शब्दे"ति, अनेन पूर्वं सूत्राक्षरयोजनायामुक्तस्य सत्य-शब्दाभिधेयस्येति पदस्याभिप्रायो विवृतोभवति तदाहेति पूर्वनिर्द्दिष्टादधिकतयोत्तरोत्तरनिर्द्देशप्रकरणत्वात् प्राण-शब्दावाच्याज्जीवादूर्ध्वमुक्तः सत्य-शब्दवाच्य उपास्यो भूमा ततोऽधिकं परं ब्रह्मेति वृत्तिकारग्रन्थस्यार्थः, आत्मन ऊर्ध्वमित्यनेन प्राण-शब्दनिर्द्दिष्टस्य जीवात्मत्वं वृत्तिकाराभिमतं न तु पञ्चवृत्तिप्राणपरत्वमित्यवगतम् अतः प्राण-शब्दवाच्यस्य जीवत्वमाश्रित्यैव पूर्वपक्षसि-

मू० परं ब्रह्म प्रतीयते सत्य-शब्दस्य सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिषु परस्मिन् ब्रह्मणि प्रयुक्तः, अतस्तन्निष्ठस्यातिवादिनः पूर्वस्मादधिकत्वं सम्भवतीति वाक्यस्वरससिद्धमन्यत्वं न बाधितव्यम्, अतिवादित्वं हि वस्त्वन्तरात्पुरुषार्थतया अतिक्रान्तस्योपास्यवस्तुवादित्वं नामाद्याशापर्यन्तोपास्यवस्त्वतिक्रान्तस्योपास्य प्राण-शब्दनिर्दिष्टप्रत्यगात्मवादित्वात्प्राणविदोऽतिवादित्वं तस्यापि सातिशयपुरु-

षार्थत्वात् निरतिशयपुरुषार्थतयोपास्यपरब्रह्मवादिन एव साक्षादतिवादित्वमिति एष तु वा अतिवदति यस्सत्येनातिवदतीत्युक्तं सत्येनेतीत्थंभूतलक्षणे तृतीया, सत्येन परेण ब्रह्मणोपास्येनोपलक्षितो योऽतिवदतीत्यर्थः, अत एवैवं शिष्यः प्रार्थयते "सोऽहं भगवः सत्येनातिवदानी" ति आचार्यश्च सत्यं त्वेव विजिज्ञासितव्यमित्याह "आत्मनः प्राण"-इति च, प्राण-शब्दनिर्दिष्टस्यात्मन उत्पत्तिरुच्यते अतः तरति शोकमात्मविदिति प्रक्रान्त आत्मा प्राण-शब्दनिर्दिष्टोऽन्य इति गम्यते । यत्तूक्तमस्ति भगवः प्राणाद्भूय इति प्रश्नस्यादौ वाव प्राणाद्भूय इति प्रतिवचनस्य चादर्शनात्प्रक्रान्त आत्मोपदेशः प्राणोपदेशपर्यवसानो गम्यत इति, तदयुक्तं न हि प्रश्नप्रतिवचनाभ्यामेवार्थान्तरत्वं गम्यते

टी० दुन्तवर्णनम् वृत्तिकाराभिमतमिति ज्ञापनं वृत्तिकारग्रन्थोपादानफलम् । एवमधिकतयोपदेशसिद्धवत्कारेण सत्यस्य प्राणादधिकतया अर्थान्तरमुक्तम् । अथ प्राणप्रतियोगिकार्थान्तरत्वहेतुत्वेनोक्तोऽधिकतयोपदेश एव कथं? सत्यवचनं हि प्राणोपासनाङ्गतयोपदिष्टमित्युक्तमिति पराभिप्रायं शङ्कते "प्राण-शब्दे"ति, तु-शब्देन प्रकरणविच्छेदाच्चाङ्गविधिरिति प्रतिवदति "स वा एष" इति, व्यावर्तयति-अधिकतया व्यावर्तयतीत्यर्थः पूर्वनिर्दिष्टादुत्तरनिर्दिष्टस्याधिकत्वोपदेशपरप्रकरणत्वादिति भावः । उपासकाधिक्यात् तन्निमित्तोपास्याधिक्यं वक्तुं तु-शब्दस्वारस्येनोपासकवैलक्षण्यमुक्तं तु-शब्दो ह्यसङ्कुचितवृत्तिः धर्मधर्मिणोरविशेषेण भेदकः । ननु कथं तु-शब्दस्वारस्यादतिवाद्यन्तरप्रतिपत्तिः? एतच्छब्दसामर्थ्येन पूर्वोऽतिवादी हि प्रत्यभिज्ञायत इति अत्राह "अत एवे"ति, प्रकृतप्रकृष्यमाणसाधारण एतच्छब्दः, नायमेकान्ततः प्रकृतमभिनिविशते पाश्चात्ययद्वृत्तप्रतिनिर्देश-

रूपत्वाच्च नायं प्रकृतपरः, तु-शब्दस्वारस्यं च प्रकरणविच्छेदकम् अतः पूर्वातिवादिनः प्रत्यभिज्ञानास्तीति अतिवाद्यनन्तरं प्रतिपन्नमित्यर्थः अतिवाद्यन्तरप्रतिपत्तिरस्तु ततः किं सत्यस्य प्राण-शब्दवाच्यादधिकत्व? इत्यत्राह "अतोऽस्ये"ति, तु-शब्दः पूर्वातिवादिनोऽतिशयितोपास्यान्तरविशिष्टमेवातिवाद्यन्तरं भिनत्ति स्वोपास्यवस्त्वाधिक्यं ह्यतिवादनिमित्तम् । अतः प्राणातिवादिनोऽतिवदननिमित्तात्तदुपास्यात् प्राणादपि तदुत्तरवाक्यनिर्दिष्टस्य सत्यातिवादिनोऽतिवदननिमित्तं तदुपास्यं सत्यमधिकमित्यर्थः अग्निहोत्रिवाक्यदृष्टान्ते तु-शब्दस्य व्यभिचारं हृदि निधायातिवाद्यन्तराप्रतिपत्तिमुखेन चोदयति "ननु चे"ति, परिहरति नैतद्युक्तमि"ति, अग्निहोत्रिवैषम्यं वदंस्तु-शब्दस्वारस्यादतिवाद्यन्तरप्रतिपत्तिमाह "तु-शब्देने"ति, अग्निहोत्रिवाक्यदृष्टान्तेन दार्ष्टान्तिकस्य सत्यातिवादिवाक्यस्य वैषम्यं वक्तुं दृष्टान्ते स्वारस्यहानिमाह "एष त्वि"ति, अग्निहोत्र्यन्तराप्रतीतेरपि अतिवादिस्थानीयोऽग्निहोत्री उपासनस्थानीयमग्निहोत्रं द्रव्यदेवतास्थानीयमुपास्यम् अत्र अग्निहोत्र्यन्तराप्रतीतिरग्निहोत्रान्तराप्रतीतेः, सा च द्रव्यदेवताविशेषाप्रतीतेः, सा च सत्यवचनशब्दस्य दध्यादिद्रव्यदेवताविशेषोपस्थापनासामर्थ्यात् एवमग्निहोत्र्यन्तरसमर्पकशब्दाभावात्तत्र तु-शब्दस्वारस्यं भग्नमित्यर्थः, इहापि तर्ह्यतिवाद्यन्तराप्रतीतेरग्निहोत्रिन्यायो भवतीत्यत्राह "अत्र त्वि"ति, अत्र त्वदिवाद्यन्तरत्वनिमित्तमुपासनान्तरं तद्धेतुभूतमुपास्यान्तरं च प्रतीयते इह तत्समर्पणसमर्थस्य सत्य-शब्दस्य सद्भावात्तु-शब्दस्वारस्यं न भञ्जनीयम् अतः अतिवाद्यन्तरं सिद्धमित्यर्थः । किंच न परं द्रव्यदेवतोपस्थापकशब्दाभावादग्निहोत्रान्तराप्रतीतिः किन्तु कर्मस्वरूपोपस्थापक-शब्दाभावाच्च न हि जुहोत्यादिपदान्तरं श्रूयते न च श्रूयमाणो वदतिशब्दो जुहोतीत्यर्थः अतश्चाग्निहोत्रान्तराप्रतीतेरग्निहोत्र-शब्दः स्वजातीयव्यक्तिमलभमानः प्रकृतमेवाग्निहोत्रमवलम्बते इह तु न परमुपास्यान्तरसमर्पणक्षमस्सत्यशब्द-एव सत्यन्त्वेव विजिज्ञासितव्यमित्युपासनान्तरोपस्थापकशब्दश्च श्रूयते अत उपासनान्तरप्रतीतेरुपासकान्तरप्रतीतिसद्भावाद-

तिवादिशब्दस्तद्विषयो भवितुमर्हतीति तु-शब्दस्वारस्यं न भञ्जनीयम् अतः प्रकरणविच्छेद इति चाभिप्रायः तु-शब्दस्य धर्मिभेदकत्वे सिद्धे सत्य-शब्दस्योपास्यान्तरसमर्पकत्वं सत्य-शब्दस्योपास्यान्तरसमर्पकत्वे तु-शब्दस्य धर्मिभेदकत्वमित्यन्योन्याश्रयमाशङ्क्य सत्य-शब्दस्योपास्यान्तरपरत्वप्रसिद्धिं दर्शयति "सत्यशब्दस्ये"ति, ततः किमित्यपेक्षायां तु-शब्दस्वारस्यफलितमर्थमाह "अत" इति, न हि तु-शब्दस्य धर्मिभेदकत्वस्वारस्यं सत्य-शब्दापेक्षं सत्य-शब्दस्योपास्यान्तरसमर्पणक्षमत्वं श्रुतिसिद्धं न तु-शब्दापेक्षं सत्यशब्दस्य न जीवपरसाधारण्यं परस्यैव निरुपाधिकसत्यत्वात्, साधारण्येऽपि विलक्षणोपास्य वाचकत्वत्वमपि सम्भवति तथा सति न तु शब्दस्वारस्यभङ्गः, अतो ऽन्योन्यसापेक्षत्वाभावान्नान्योन्याश्रय इति अभिप्रायेण पूर्वस्मादधिकत्वं सम्भवतीति वाक्यस्वरससिद्धमन्यत्वं न बाधितव्यमित्युक्तं, प्राणोपासकस्यासाधारणमतिवादित्वं नातिवाद्यन्तरं सहते अतो ऽतिवादिशब्दस्वारस्यार्थन्तु-शब्दस्वारस्यभङ्ग इत्यत्राह "अतिवादित्वं ही"ति, न हि प्राणातिवादिन्येवातिवादिशब्दो रूढः क्लृप्तावयवशक्त्यैव लब्धे स्वार्थावबोधने नष्टावयवनामत्वं प्रत्याचष्टे हि सूत्रकृदिति दर्शितात्प्रोक्षणीष्वर्थसंयोगादिति सूचितात् प्रोक्षणीनयादवयवशक्त्या स्वार्थबोधे सम्भवति रूढिकल्पनाऽयोगात् अतो न प्राणातिवादिन्येवातिवादिशब्दस्वारस्यमित्यर्थः । अतिक्रान्तस्वोपास्यवस्तुवादित्वमतिवादिशब्दप्रवृत्तनिमित्तमितीममर्थं प्राणातिवादिनि दर्शयति "नामादी"ति, अस्य- प्रवृत्तिनिमित्तस्य परमात्मोपासक एव पुष्कलत्वात् तस्मिन्नेव अतिवादि-शब्दो मुख्य इति यस्सत्येनाति वदतीति वदत आचार्यस्याभिप्राय इत्याह "तस्यापी"ति, तु-शब्दस्यातिवादिशब्दस्योभयस्याप्यस्मत्पक्ष एव स्वारस्यमिति भावः । सत्यमुपास्यं चेत् स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति इति वक्तव्यं न तु सत्येनेतीति शङ्कायां तृतीयाया अर्थमाह "सत्येने"ति, सत्यवदनपक्ष एव तृतीयाऽनुपपत्तिः, उपसर्गवैयर्थ्यं चेति भावः । उपास्यान्तरत्वमुपपादयति "अत एवैवमि"ति, अत एव-सत्यशब्दस्योपास्यान्तरपरत्वादेव सोऽहं भगवस्सत्येनातिवदा-

नीति शिष्यः प्रार्थयते न तु प्राणेनातिवदानीतीत्यर्थः आचार्यश्चेति सत्यं त्वेव विजिज्ञासितव्यमित्याह न तु प्राण एवेतीत्यर्थः । यद्वा अतिवादिशब्दस्य यौगिकत्वमुपपादयति "अत एवैवमि"ति, अतिवादि-शब्दस्य यौगिकत्वादेव हि अतिवदानीत्याख्यातनिर्देश इत्यर्थः । यद्वा अतिक्रान्तस्वोपास्यवस्तुवादित्वस्यैवातिवादिशब्दप्रवृत्तिनिमित्तत्वादेव हि शिष्यप्रार्थनमित्यर्थः ।

प्रमाणान्तरेणापि तत्सम्भवात्, उक्तं च प्रमाणान्तरम् अस्ति भगवः प्राणाद् भूय इत्यपृच्छतो ऽयमभिप्रायः नामादिष्वाशापर्यन्तेष्वचेतनेषु पुरुषार्थभूयस्तया पूर्वपूर्वमतिक्रान्तेष्वप्युत्तरोत्तरेषूपदिष्टेषु तत्तद्वेदिन आचार्येणातिवादित्वं नोक्तं प्राणशब्दनिर्दिष्टप्रत्यगात्मयाथात्म्यवेदिनस्तु पुरुषार्थभूयस्त्वातिशयं मन्वानेन स वा एष एवं पश्यन्नेवम्मन्वान एवं विजानन्नतिवादी भवतीत्यतिक्रान्तवस्तुवादित्वमुक्तम्, अतो ऽत्रैवात्मोपदेशः समाप्त इति मत्वा शिष्यो भूयो न पप्रच्छ, आचार्यस्त्विदमपि सातिशयं मत्वा निरतिशयपुरुषार्थभूतं सत्य-शब्दाभिधेयं परं ब्रह्म एष तु वा अतिवदति यस्सत्येनातिवदति

टी० अयमर्थः पूर्वोक्तार्थफलम् आचार्यश्चेति अत एवेत्यनुषङ्गः अतिक्रान्तस्वोपास्यवस्तुवादित्वस्यैवातिवादिशब्दप्रवृत्तिनिमित्तत्वादेव हि सत्यशब्दाभिधेयं सत्यं त्वेव विजिज्ञासितव्यमित्युपास्यतयोक्तमित्यर्थः । किंच सत्यवदनमङ्गतया विहितं चेत् सत्यं संपाद्यमित्युक्तं स्यात् तदानीं विजिज्ञासितव्यशब्दास्वारस्यं भवेत्, सत्यं विजिज्ञासितव्यं वदनार्थं ज्ञातव्यमित्यर्थ इति चेत् अध्याहारप्रसङ्ग इति भावः । सूत्राभिप्रेतेन हेत्वन्तरेणाप्यधिकृतयोपास्यान्तरत्वमुपपादयन् संप्रसादादभ्युपदेशं विवृणोति

सू० इति स्वयमेवोपचिक्षेप, शिष्योऽपि परमपुरुषार्थरूपे परस्मिन् ब्रह्मण्युपक्षिप्ते तत्स्वरूपतदुपासनयाथात्म्यबुभुत्सया सोऽहं भगवस्सत्येनातिवदानीति प्रार्थयामास ततो ब्रह्मसाक्षात्कारनिमित्तातिवादित्वसिद्धये ब्रह्मसाक्षात्कारोपायभूतं ब्रह्मोपासनं सत्यं त्वेव विजिज्ञासितव्यमित्युपदिश्य तदुपायभूतं ब्रह्ममननं मतिस्त्वेव विजिज्ञासितव्येत्युपदिश्य श्रवणप्रतिष्ठार्थत्वान्मनस्य मननोपदेशेन श्रवणमर्थसिद्धं मत्वा श्रवणोपायभूतां ब्रह्मणि श्रद्धां "श्रद्धा त्वेव विजिज्ञासितव्येत्युपदिश्य तदुपायभूतां च तन्निष्ठां" निष्ठा त्वेव-विजिज्ञासितव्येत्युपदिश्य तदुपायभूतां तदुद्योगप्रयत्नरूपां

टी० "आत्मन" इति, पूर्वपक्षयुक्तिमनुवदति "यत्त्वि" ति, परिहरति "तदयुक्तमि" ति, उक्तं चेति प्रश्नप्रतिवचने हि लिङ्गं तदभावेऽपि तु—शब्दश्रुतिरात्मनः प्राणोत्पत्तिश्च लिङ्गमिति प्रमाणान्तरमुक्तमित्यर्थः तत्र प्रश्नाभावः किंनिबन्धन? इत्यत्राह "अस्ती" ति, पुरुषार्थभूयस्त्वातिशयं मन्वानेन आत्मोपदेशस्य तत्त्व[1]पर्यन्तत्वं मन्वानेनेत्यर्थः स्वयमेवोपचिक्षेपेति भगवद्गीतायामपि "तस्माद्योगी भवार्जुने" ति, जीवात्मयोगं परिसमाप्य "योगिनामपि सर्वेषां मद्गतेनान्तरात्मना

सू० कृतिमपि "कृतिस्त्वेव विजिज्ञासितव्येत्युपदिश्य श्रवणाद्युपक्रमरूपकृतिसिद्धये प्राप्यभूतस्य सत्यशब्दाभिहितस्य ब्रह्मणः सुखरूपता ज्ञातव्येति" सुखं त्वेव विजिज्ञासितव्यमित्युपदिश्य निरतिशयविपुलमेव सुखं परमपुरुषार्थरूपं भवतीति तस्यैव ब्रह्मणः सुखरूपस्य निरतिशय-

१ तत्पर्यन्तत्वमिति पा० ।

विपुलता ज्ञातव्येति भूमा त्वेव विजिज्ञासितव्य इत्युपदिश्य निरतिशयविपुलसुखरूपस्य ब्रह्मणो लक्षणमिदमुच्यते "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे"ति, अयमर्थः अनवधिकातिशयसुखरूपे ब्रह्मण्यनुभूयमाने ततोऽन्यत्किमपि न पश्यत्यनुभविता ब्रह्मस्वरूपतद्विभूत्यन्तर्गतत्वाच्च कृत्स्नस्य वस्तुजातस्य, अत ऐश्वर्यापरपर्यायविभूतिगुणविशिष्टं निरतिशयसुखरूपं ब्रह्मानुभवंस्तद्व्यतिरिक्तस्य वस्तुनोऽभावादेव किमप्यन्यन्न पश्यति अनुभाव्यस्य सर्वस्य सुखरूपत्वादेव दुःखं च न पश्यति तदेव

टी० "श्रद्धावान् भजते यो मां स मे युक्ततमो मत"इति परमात्मोपासनं भगवानेव ह्युपक्षिप्तवान् तद्वदिति भावः। ततो ब्रह्मेति ब्रह्म॰ साक्षात्कारनिमित्तेत्यनेन यथा वै विजानात्यथ सत्यं वदतीत्यस्य वाक्यस्यार्थ उक्तो भवति, विजानाति—शब्दः साक्षात्कारपरः न तु शास्त्रजन्यज्ञानपरः "यदा वै मनुते अथ विजानाती"ति जानात्यर्थस्य मननसाध्यत्वावगमात् सत्यं वदति सत्यमतिवदतीत्यर्थः अतिवादस्य प्रकृतत्वात्। यदा ब्रह्म साक्षात्करोति तदाऽतिवदति तस्मादतिवादित्वनिमित्ततत्साक्षात्काराय तदुपायभूतं सत्योपासनं कुर्यादित्यर्थः, श्रवणोपायभूतां ब्रह्मणि श्रद्धामिति श्रवणमनननिदिध्यासनप्राप्तिविषयो हि ब्रह्म तद्विषयश्रद्धा च तच्छ्रोतुं मन्तुं द्रष्टुं प्राप्तुं च भवति तत्र श्रवणोपायभूतां श्रद्धामित्यनेन श्रोतुं श्रद्धा विवक्षिता श्रद्धा त्वरा तदुपायभूता च तन्निष्ठामिति तस्मिन् ब्रह्मणि निष्ठा ब्रह्मैव श्रोतव्यं नान्यदिति व्यवसायो निष्ठा श्रोतव्यत्वनिश्चये हि श्रोतुं त्वरा भवति तदुद्योगप्रयत्नरूपां कृतिमिति उद्योग—शब्दवाच्यप्रयत्नशब्दवाच्यप्रयत्नरूपां कृतिमित्यर्थः सा च श्रोतव्यान्तरेषु हेयत्वानुसन्धानेन मनसो नियमनरूपा अन्यस्मिन्नुपादेयबुद्ध्या प्रवणमनस्कस्य हि ब्रह्मैव श्रोतव्यं नान्यदित्यध्यवसायो न भवति श्रवणादीति जिज्ञासितव्यपुरुषार्थत्वे तस्य निरतिशयत्वे च ज्ञाते सति मनसः सातिशयपुरुषार्थान्तरवैमुख्यकरणं

ह्वि सुखं यदनुभूयमानं पुरुषानुकूलं भवति । ननु चेद-मेव जगद् ब्रह्मणोऽन्यतया अनुभूयमानं दुःखरूपं परिमि-तसुखरूपं च भवत्कथमिव ब्रह्मविभूतित्वेन तदात्मकतया अनुभूयमानं सुखरूपमेव भवेत् । उच्यते कर्मवश्यानां क्षेत्रज्ञानां ब्रह्मणो ऽन्यत्वेनानुभूयमानं कृत्स्नं जगत्तत्-त्कर्मानुरूपं दुःखं च परिमितसुखं च भवति अतो ब्रह्म-णोऽन्यत्वेनानुभूयमानम् अन्यतया परिमितसुखत्वेन दुःख-त्वेन च जगदनुभवस्य कर्मनिमित्तत्वात् कर्मरूपाविद्या-

टी० सम्भवतीत्यभिप्रायः, निरतिशयपुरुषार्थत्वावगमश्च शास्त्रादे-वापातप्रतीतिदशायां भवति याद्दच्छिकसज्जनसंवादादिना च सिध्यति यदा वै श्रद्दधात्यथ मनुते यदा वै निस्तिष्ठत्यथ श्रद्दधाति यदा वै क-रोत्यथ निस्तिष्ठतीति मननादीनां श्रद्धाद्यानन्तर्यश्रवणात्, भाष्ये तेषामु-पायोपेयभाव उक्तः । यदा वै सुखं लभत इति श्रुतौ लाभ–शब्दो बुद्धिवाची लभतेः प्राप्त्यर्थत्वादित्यभिप्रायेण सुखरूपता ज्ञातव्येत्युक्तम् । न हि श्रव-णादेः पूर्वमेव निरतिशयसुखप्राप्तिरुपपद्यते सत्यव्यतिरिक्तविषयाणि जि-ज्ञासितव्यपदानि सम्पाद्यत्ववाचीनि यत्र नान्यदिति वाक्येऽन्यदर्शनश्रव-णादिनिषेधात्, दृश्यमिथ्यात्वशङ्का स्यादिति तद्व्युदासाय तस्य वाक्यार्थो-

विमुक्तस्य तदेव जगद्विभूतिगुणविशिष्टब्रह्मानुभवान्त-र्गतं सुखमेव भवति यथा पित्तोपहतेन पीयमानं पयः पित्ततारतम्येनाल्पसुखं विपरीतं च भवति तदेव पयः पित्तानुपहतस्य सुखायैव भवति यथैव राजपुत्रस्य पितु-र्लीलोपकरणमतथात्वेनानुसन्धीयमानं प्रियत्वमनुपगतं तथात्वानुसन्धाने प्रियतमं भवति तथा निरतिशयानन्द-स्वरूपस्य ब्रह्मणो ऽनवधिकातिशयासङ्ख्येयकल्याणगु-

णाकरस्य लीलोपकरणं तदात्मकं चानुसन्धीयमानं जगन्निरतिशयप्रीतये भवत्येव, अतो जगदैश्वर्यविशिष्टमनवधिकातिशयसुखरूपं ब्रह्मानुभवँस्ततोऽन्यत् किमपि न पश्यति दुःखं च न पश्यति एतदेवोपपादयति वाक्यशेषः "स वा एष एवं

टी० स्यार्थमाह "अयमर्थ" इति, अर्थस्वभावादनुभूयमान इत्यध्याहारः कृतः, न हि ब्रह्मसद्भावाद्दुःखरूपवस्त्वन्तरादर्शनं भवति ततोऽन्यत् सुखरूपात् ब्रह्मणोऽन्यत् न पश्यति दुःखरूपं तद्व्यतिरिक्तं च किञ्चिन्न पश्यतीत्यर्थः, यो वै भूमा तत्सुखमित्युक्तनिरतिशयसुखरूपब्रह्मलक्षणपरत्वाद्वाक्यस्य, तत्र दुःखदर्शनाभावहेतुरनवधिकातिशयसुखरूपत्वम् अनवधिकातिशयसुखरूपत्वाद्दुःखं न पश्यतीत्यर्थः । अन्यदर्शनाभावे हेतुमाह

पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषां सर्वेषु लोकेषु अकामचारो भवती"ति स्वराट्—अकर्मवश्यः अन्यराजानः=कर्मवश्याः तथा न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति च—

टी० "ब्रह्मस्वरूपे"ति, कृत्स्नस्य वस्तुजातस्येति स्वरूपान्तर्गताः ज्ञानादिगुणाः विभूत्यन्तर्गतं जगदखिलमित्यभिप्रायः, अभिप्रेतहेतुसमुच्चयार्थश्च—शब्दः । ननु यत्रेति पदं ब्रह्मपरं न तु विभूतिपरं न च तद्विषयं पदान्तरमस्ति अतो ब्रह्मस्वरूपतद्विभूत्यन्तर्गतत्वादित्ययुक्तम्, अस्तु वा तद्वाचिशब्दः नान्यत् पश्यतीति अयुक्तं विभूतिर्हि ब्रह्मणोऽन्येति शङ्कायामुक्तं विवृणोति "अत ऐश्वर्ये"ति, अतः ब्रह्मणः सुखरूपतायाः कृत्स्न-

विभूतेस्तदन्तर्भावस्य च प्रामाणिकत्वात्, विभूतिविषयो गुणः विभूतिगुणः स एव ऐश्वर्यापरपर्यायं नियमनं तद्विशिष्टं ब्रह्म न हीशितव्यज्ञानं विनैश्वर्यविशिष्टानुभवसम्भवः निरूपकेण विना निरूप्यज्ञानायोगादिति भावः । यद्वा अत्रैवोपनिषदि "स भगवः कस्मिन् प्रतिष्ठित" इति स्वे महिम्नि प्रतिष्ठित इति यदि वा न महिम्नीति गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानि नाहं ब्रवीमि अन्यो ह्यन्यस्मिन् प्रतिष्ठित इति श्रूयते अत्र स्वे महिम्नि प्रतिष्ठित इत्युक्ते हस्त्यादीनां नियाम्यानां महिम-शब्दवाच्यत्वात् तत्प्रतिष्ठितत्वशङ्कायां यदि वा न महिम्नीति हस्तिहिरण्यादिमहिमनिष्ठत्वं निषिद्धं तदेव शङ्काबीजमुपन्यस्य व्युदस्यति "गो अश्वमि"त्यादिना, अस्य महिमानमिति वीतशोकः "एतां विभूतिं योगं च" इत्यादिश्रुतिस्मृतिषु परमात्मनो महिमवत्त्वावगमादिह न महिमनिषेधः अपि तु विभूतिरूपमहिमप्रतिष्ठितत्वनिषेध इत्यवगम्यते, अतो महिमविभूत्यादिशब्दाश्च न स्वरूपमात्रपराः विभूतिर्भूतिरैश्वर्यमित्यैश्वर्यपर्यायत्वात् इति महिमापह्नवशङ्काव्युदासायैश्वर्यापरपर्यायेत्युक्तम् । इदानीं विभूतिरेव गुणः

निरतिशयसुखरूपत्वं च ब्रह्मणः आनन्दमयोऽभ्यासादित्यत्र प्रपञ्चितम् । अतः प्राणशब्दनिर्दिष्टात्प्रत्यगात्मनोऽर्थान्तरभूतस्य सत्य-शब्दाभिधेयस्य ब्रह्मणो भूमेत्युपदेशाद्भूमा परं ब्रह्म ॥

## सू० धर्मोपपत्तेश्च ॥ ८ ॥

अस्य भूम्नो ये धर्मा आम्नायन्ते तेऽपि परस्मिन्नेवोपपद्यन्ते एतदमृतमिति स्वाभाविकममृतत्वम्

टी० गुण-शब्दो विभूतेरपृथक्सिद्धाभिप्रायः विभूत्या गुणेश्चेतिवार्थः विभूतिगुणविशिष्टेति यच्छब्द एव विशिष्टब्रह्मपर इति भावः पूर्वं विभूत्यन्तर्गतत्वादिति अन्वयहेतुरुक्तः । व्यतिरेकरूपं हेतुमाह "तद्व्या-

तिरिक्तस्ये''ति, विशिष्टब्रह्मणोऽन्यदर्शनं निषिध्यते न त्वन्यदर्शनमित्यर्थः । विभूतिविशिष्टं ब्रह्मानुभाव्यं चेद् विभूतेः दुःखरूपत्वदर्शनाद्दुःखादर्शनमनुपपन्नमित्यत्राह "अनुभाव्यस्ये''ति, सर्वस्य—सर्वविभूतिकस्येत्यर्थः पूर्वाभिप्रेतादेव हेतोरित्येवकाराभिप्रायः सर्वस्य—सुखरूपत्वम् कथम्? आत्मगुणविशेषो हि सुखमित्यत्राह "तदेव हि सुखमि''ति, अनुकूलत्वं नाम स्वतदृष्टत्वं तच्चानिष्टनिवृत्तिरूपतयेष्टसाधनतया च विनापीष्टत्वम्, । अनुभवविरोधेन चोदयति "ननु चे''ति, न ह्येकमेकदैव सुखदुःखात्मकविरुद्ध-

सू० स्वे महिम्नीत्यनन्याधारत्व स एवाधस्तादित्यादि स एवेदं सर्वमिति सर्वात्मकत्वम् आत्मनः प्राण इत्यादि प्राणप्रभृति सर्वस्योत्पादकत्वमित्यादयो हि धर्माः परमात्मन एव । यत्तु अहमेवाधस्तादित्यादिना सर्वात्मकत्वमुपदिष्टं तद्भूमविशिष्टस्य ब्रह्मणोऽहंग्रहेणोपासनमुपदिश्यते "अथाऽतो ऽहङ्कारादेश इत्यहंग्रहोपदेशोपक्रमात्, अहमर्थस्य प्रत्यगात्मनोऽपि ह्यात्मा परमात्मेत्यन्तर्यामिब्राह्मणादिषूक्तम्, अतः प्रत्यगर्थस्य परमात्मपर्यवसानात् अहंशब्दोऽपि परमात्मपर्यवसायीति प्रत्यगात्मशरीरकत्वेन परमात्मानुसन्धानार्थोऽयमहंग्रहोपदेशः ।

टी० स्वभावालिङ्गितमिति युज्यते न हि निम्बपत्रं कस्यचिन्मधुरं भवति, न च सर्पः कस्यचिदनुकूलबुद्धिबोध्यो भवति, न च जगतः शक्यं दुःखरूपत्वमपह्नोतुं तस्य सर्वैरभ्युपगन्तव्यत्वात्, इतरथा तज्जिहासया ब्रह्मजिज्ञासानुपपत्तेः, अतः परिशेषात् सुखरूपत्वमेवेत्युक्तमित्यभिप्रायः स्वतोऽपरिच्छिन्नसुखरूपस्याप्युपाधितोऽन्यथा रूपसम्भवादविरोध इति परिहरति "उच्यत'' इति कर्म तत्तिरोधानकृतम् अब्रह्मात्मकत्वज्ञानं चोपाधिः ततः किमित्यत्राह—

मू० परमात्मनः सर्वशरीरतया सर्वात्मत्वात् प्रत्यगात्मनोऽप्यात्मा परमात्मा तदेव अथात आत्मादेश इत्यादिना आत्मैवेदं सर्वमित्यन्तेनोच्यते, एतदेवोपपादयितुं प्रत्यगात्मनोऽप्यात्मभूतात्परमात्मतः सर्वस्योत्पत्तिरुच्यते "तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मनः प्राण आत्मनः आकाश" इत्यादिना उपासकस्यान्तर्यामितया अवस्थितात्परमात्मनः सर्वस्योत्पत्तिरित्यर्थः, अतः परमात्मनः प्रत्यगात्मशरीरकत्वज्ञानप्रतिष्ठार्थमहंग्रहोपासनं कर्त्तव्यं, तस्माद्भूमविशिष्टः परमात्मेति सिद्धम् । भूमाधिकरणं समाप्तम् ॥

टी० "अतो ब्रह्मणा"इति, स्वतोमधुरस्यापि दोषसम्बधादननुकूलत्वे अनुकूलबुद्धिविषयस्य केनचित् सम्बन्धित्वज्ञानादनुकूलत्वे च दृष्टान्तद्वयमाह "पित्तोपहतेने"ति, दार्ष्टान्तिकेऽपि तादृक्त्वमाह "तथे"ति, यत्र नान्यदिति वाक्यस्यार्थं निगमयति "अत" इति, एतत्—औपाधिकदुःखरूपतायास्तद्विगमेऽनवस्थानं स वा एष इति रत्यादिशब्दानां प्रीतिपरत्वे व्यधिकरणबहुव्रीहिः अनुकूलविषयपरत्वे साक्षाद् बहुव्रीहिः आत्मशब्दो विभूतिगुणविशिष्टब्रह्मपरः

अक्षराधिकरणम् । **सू० अक्षरमम्बरान्तधृतेः ॥ ९ ॥**

मू० वाजसनेयिनो गार्गिप्रश्ने समामनन्ति "सहोवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमि"त्यादि, तत्र संशयः किमेतदक्षरं प्रधानं? जीवो वा? उत परमात्मे? ति, किं युक्तं प्रधानमिति कुतः "अक्षरात्परतः पर"इत्यादिष्वक्षर-

शब्दस्य प्रधाने प्रयोगदर्शनादस्थूलत्वादीनां च नच सम-न्वयात् यथा तदक्षरमधिगम्यत इत्यादिषु परस्मिन्नप्य-क्षरशब्दो दृश्यत इति चेन्न प्रमाणान्तरप्रसिद्धश्रुति-प्रसिद्धयोः प्रमाणान्तरप्रसिद्धस्य प्रथमप्रतीतेः, प्रतीतपरि-ग्रहे विरोधाभावात्

टी० रतिः-स्रक्चन्दनादिजन्या प्रीतिः क्रीडा उद्यानादिजन्या, मिथुनं स्त्रीसम्भवानन्दः विभूतिजन्यः एवं सर्वविधसुखानुभव उक्तः स्व-राड् भवति अन्यराजानस्ते क्षय्यलोका इति च परमात्मप्रतिक्षेपः प्रतीयत इत्याशङ्क्याह "स्वराडि"ति, अन्यराजानः स्वराडिति पदद्वयेन उपाधित-द्विगमौ दर्शितौ दुःखरूपतया प्रतिपन्नस्याऽपि स्वतः सुखरूपत्वे श्रुति-माह "न पश्य"इति, सर्वं पश्यति न तत्र दुःखं पश्यति सुखरूपता-मेव पश्यतीत्यर्थः, उदाहृतवाक्ये विभूत्यादिविशिष्टस्या-

सू० किंच यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या इत्या-रभ्य सर्वस्य कालत्रितयवर्त्तिनः कारणभूताकाशाधारत्वे प्रतिपादिते कस्मिन् नु खल्वाकाश ओतश्च प्रोतश्चेत्या-काशस्यापि कारणं तदाधारभूतं किमिति पृष्टे प्रत्यु-च्यमानमक्षरं सर्वविकारकारणतया तदाधारभूतं प्रमाणा-न्तरभूतं प्रसिद्धं प्रधानमिति प्रतीयते, अतोऽक्षरं प्रधानम् इति प्राप्ते-उच्यते

टी० नन्दरूपत्वमस्पष्टमिति तद्विशदयन्नाह "निरतिशये"ति, तदात्मानं स्वयमकुरुत तस्मात्तत्सुकृतमुच्यत इति यद्वैतत्सुकृतं रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति आनन्दो ब्रह्मेति व्यजानात् आन-न्दाद्ध्येव खल्विमानि भूतानि जायन्त इति च वाक्येषु कार्यकारणावस्थ-विभूत्यादिविशिष्टस्यैव आनन्दत्वं हि स्फुटतरम् । सूत्रार्थमुपसंहरति "अ-

त'' इति, सू० धर्मोपपत्तेश्च कस्य धर्मा इत्याकाङ्क्षां पूरयन् व्याचष्टे ''अ-स्ये''ति, पूर्वपक्षयुक्तिं परिहरति ''यस्त्वि''ति अहंग्रहेणोपासनम् अहमर्थशब्दयोः परमात्मपर्यन्तत्वबुद्ध्योपासनं तर्ह्यतस्मिँस्तद्बुद्धिः स्यादित्यत्राह ''अहमर्थस्ये''ति, न केवलमन्तर्यामिब्राह्मणादिषु अस्मिन् प्रकरणेऽपि सर्वात्मत्वमुक्तमिति दर्शयिष्यन् तत्प्रतिपादकस्य अथात आत्मादेश इति वाक्यस्यार्थमाह ''परमात्मन''इति, उपासकात्मनोऽप्यात्मत्वं

## सू० अक्षरमम्बरान्तधृतेः ॥ ६ ॥

भू० अक्षरं परं ब्रह्म कुतः अम्बरान्तधृतेः, अम्बरस्य—आकाशस्य अन्तः पारभूतम् अव्याकृतमम्बरान्तः तस्य धृतेः तदाधारतयाऽक्षरस्योपदेशादिति यावत्, अयमर्थः कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेत्यत्राकाश—शब्दनिर्दिष्टं न वायुमदम्बरम् अपि तु तत्पारभूतमव्याकृतम् अतस्तस्याव्याकृतस्याप्याधारत्वेनोच्यमानमक्षरं नाव्याकृतं भवितुमर्हतीति

टी० फलितमित्युक्तम् । अथ कण्ठोक्तमिति दर्शयितुं कण्ठोक्तिमद्वाक्यस्यार्थमाह ''एतद्वै''ति, विजानत इति पदस्य षष्ठ्यन्तत्वज्ञापनाय व्याचष्टे ''उपासकस्ये''ति. पूर्वपक्षयुक्तिं परिहरन्निगमयति ''अत''इति, अधिकरणार्थमुपसंहरति ''तस्मादि''ति, भूमाधिकरणं समाप्तम्

सू० अक्षरमम्बरान्तधृतेः पूर्वाधिकरणे स्वे महिम्नि प्रतिष्ठितत्वमुक्तं, तत्तु परमात्मतत्वव्यतिरिक्तस्य श्रूयत इति शङ्कया सङ्गतिः वर्णो वा परमेश्वरो वेति विचार इति परैर्यदुक्तं तदयुक्तं वर्णानां ह्रस्वत्वाद्दीर्घत्वाद्यनुपपत्तेः स्नेह लोहित्यच्छायादिधर्माप्रसङ्गाच्चेत्यभिप्रायेणाच्छायमित्यन्तं विषयवाक्यमुपात्तं प्रसङ्गाभावेऽपि प्रतिषेधस्संभवति यथा नान्तरिक्षे न दिवीत्यग्निचयन-

भू० न चाकाश—शब्दनिर्दिष्टो न वायुमानिति कथमवगम्यते? उच्यते यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा-

द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतं चेत्युक्ते त्रैकाल्यवर्त्तिनो विकारजातस्याधारतया निर्दिष्ट आकाशो न वायुमदाकाशो भवितुमर्हति तस्यापि विकारान्तर्गतत्वात्, अतोऽत्राकाश-शब्दनिर्दिष्टं भूतसूक्ष्ममिति प्रतीयते ततस्तस्यापि भूतसूक्ष्मस्याधारभूतं किमिति पृच्छ्यते "तस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे"ति, अतस्तदाधारतया निर्दिश्यमानमक्षरं न प्रधानं भवितुमर्हति। यत्तु श्रुतिप्रसिद्धात् प्रमाणान्तरप्रसिद्धम्

टी० निषेध इति चेन्न निषेधस्य प्रसक्तविषयतया एव स्वतःप्राप्तत्वात्, गत्यन्तराभावे ह्यप्रसक्तविषयत्वाश्रयणं नान्यदा। संशयमाह "तत्रे"ति, अक्षरं प्रधानं वा जीवो वा परमात्मा वेति संशयः तदर्थं लौकिकप्रमाणविषये शाब्दप्रतीतिशैघ्र्यमस्ति नेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति अत्राकाश-शब्दः निर्दिष्टः किं भूताकाशः? उताव्याकृताकाश? इति धारणं च किं सत्तामात्रेण? उत प्रशासनेनेति च

सू० प्रथमं प्रतीयत इति तन्न अक्षर-शब्दस्यावयवशक्त्या स्वार्थप्रतिपादने प्रमाणान्तरानपेक्षणात्, सम्बन्धग्रहणदशायाम् अर्थस्वरूपं येन प्रमाणेनावगम्यते न तत्प्रतिपादनदशायामपेक्षणीयम्, एवं तर्ह्यक्षर-शब्दनिर्दिष्टो जीवोऽस्तु तस्य भूतसूक्ष्मपर्यन्तस्य कृत्स्नस्याचिद्वस्तुन आधारत्वोपपत्तेः, अस्थूलत्वाद्युच्यमानविशेषणोपपत्तेश्च अव्यक्तमक्षरे लीयते यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं "क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यत इत्यादिषु प्रत्यगात्मन्यप्यक्षर-शब्दप्रयोगदर्शनादित्यचोत्तरः॥

टी० च यदा प्रतीतिशैघ्र्यमस्ति आकाशशब्दवाच्यश्च भूताकाशः धारणं च सत्तया स्यात् तदा तद्धारणस्य प्रधाने ऽसम्भवात्तद्धारकमक्षरं प्रधानं, यदा आकाश-शब्दवाच्यो ऽव्याकृताकाशः धारणं च सत्तामात्रेण तदा जीवेऽपि तत्सम्भवात्तद्धारकमक्षरं जीवः, यदा शब्दप्रतीतिशैघ्र्यस्य लौकिकप्रमाणगोचरत्वमप्रयोजकम् आकाशशब्दवाच्यश्चाव्याकृताकाशः धारणं प्रशासनेन तदा तस्य जीवेष्वसम्भवात्तदाधारभूतमक्षरं परमात्मेति राद्धान्ते फलफलिभावः । सिद्धान्ती शङ्कते "यथा तदक्षरमि"ति, अथवा

सू० सा च प्रशासनात् ॥ १० ॥

भू० सा चाम्बरान्तधृतिरस्याक्षरस्य प्रशासनादेव भवतीत्युपदिश्यते, "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्द्धमासा ऋतवः सम्वत्सरा" इति विधृतास्तिष्ठन्ती"त्यादिना प्रशासनं प्रकृष्टं शासनं न चेदृशं शासनं स्वशासनाधीनसर्व्ववस्तुविधरणं बद्धमुक्तोभयावस्थस्यापि प्रत्यगात्मनः सम्भवति, अतः पुरुषोत्तम एव प्रशासिचक्षरम् ॥

टी० पार्श्वस्थचोद्यं तदा परस्मिन्नित्युपलक्षणं जीवेऽपीति द्रष्टव्यं "कूटस्थोऽक्षर उच्यत" इत्यादिदर्शनात् । परिहरति "न प्रमाणान्तरे"ति, अनुमानस्य प्रत्यक्षमात्रापेक्षा, श्रुतेस्तु व्युत्पत्त्यादौ उभयापेक्षाऽस्ति अत आनुमानिकादक्षराच्छ्रुतिप्रतिपन्नस्य विलम्ब इति लौकिकालौकिकयोर्लौकिकस्य प्रसिद्धिप्राचुर्यात्प्राबल्यं श्रुतिलिङ्गादिष्वपि हि शीघ्रधीहेतुत्वात् प्राबल्यमिति भावः । ननु "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यत्र आकाशशब्दस्य भूताकाशे प्रसिद्धिप्राचुर्येऽपि ब्रह्मविषयत्वं दर्शितम् अत्राप्यक्षरशब्दे तथा किं न स्यादित्यत्राह "प्रतीते"ति, अक्षर-

शब्दस्य प्रधाने प्रयोगदर्शनात् अस्थूलत्वाद्यन्वयात् परब्रह्मणि प्रसिद्धत्वे सत्यपि प्रमाणान्तरप्रसिद्ध्या प्रथमप्रतीतस्य परिग्रहे विरोधाभावादाकाश-कारणप्रश्नस्योत्तरत्वेनोच्यमानत्वाच्च प्रधानपरत्वमित्यर्थः । राद्धान्तमाह "अक्षरमि"त्यादिना, अम्बरान्त-शब्दं केचिद् बहुव्रीहितया व्याचक्षते अम्ब-रम्-आकाशः अन्तः-अवसानम् एषां तेषां पृथिव्यादीनां धृतेरिति हेत्वर्थ इति तत् प्रधानव्यतिरेकप्रतिज्ञायामकिञ्चित्करमित्यभिप्रायेण षष्ठीतत्-पुरुषं व्याचष्टे "अम्बरस्य-आकाशस्ये"ति, अन्तः शब्दोऽवधिवचनः कार्य-स्यास्याम्बरस्य देशतः कालतश्चावधिः कारणं नियतपूर्वभाविनः कारण-त्वात्कार्यं प्रति कारणतत्त्वानामावरणतया बहिर्विद्यमानत्वाच्च अतोऽम्ब-रान्तशब्दो ऽव्याकृतवाचीति भावः । न ह्यत्राम्बरान्तवाचिशब्दः श्रूयत इत्यत्राह "अपमर्थ"इति, नन्विति व्युत्पत्तिसिद्धार्थलङ्घनमयुक्तम् अपवादा-भावादित्यर्थः । परिहरति "उच्यत"इति, अर्थविरोधान्न वायुमदम्बरग्रहण-मित्यर्थः, न हि स्वयं विकारान्तर्भूतः कृत्स्नविकारजातस्याधारो भवितुम-र्हतीति । यत्त्वित्यादिना पूर्वपक्षयुक्तिमनूद्य परिहरति "तच्चे"ति, रूढिशक्त्या अवयवशक्त्या वा शब्देन स्वार्थप्रतिपादनं स्यात् तत्र वक्ष्यमाणपरिहारस्य पक्षद्वयसाधारण्येऽपि प्रोक्षणीष्वर्थसंयोगादिति न्यायेन अवयवशक्त्या अर्थ-प्रतिपादनसम्भवे समुदायशक्तिकल्पनाऽयोगात् अयमक्षर-शब्दो न रूढ्या वर्तत इत्यभिप्रेत्य यौगिकत्वपक्षे परिहार उच्यते तत्र व्युत्पन्नानां पदा-वयवानां संहत्य स्वार्थप्रतिपादने किं प्रमाणान्तरापेक्षा? उत तत्तत्प्रतिपदा-वयवव्युत्पत्तिवेलायामिति विकल्पं हृदि निधाय प्रथमे कल्पे परिहारमाह "अक्षर-शब्दस्ये"ति, अवयवशक्तिर्वा र्थप्रतीतिकारणमपि न प्रमाणान्तरमपे-क्षितं, न हि दण्डिशब्दः स्वार्थप्रतिपादने दण्डदेवदत्तग्राहिप्रत्यक्षापेक्षः द्वितीयं परिहरति 'सम्बन्धे"ति, पदावयवानां व्युत्पत्तौ प्रमाणान्तरापे-क्षाऽस्त्येव प्रतिपादनदशायां तु न तदपेक्षा यथा चक्षुरादीनां तिमिरादिदोषा-पनयनस्यौषधाद्यपेक्षत्वेऽपि घटादिपरिच्छित्तौ न भेषजग्राहिप्रमाणापेक्षा यथाहुः 'अर्थबोधेऽनपेक्षत्वात् मानान्तरमनादृतम् । व्युत्पत्त्युपायभूतं यत्तच्च तन्मात्रवर्त्तित्वि"ति व्युत्पन्नानां पदावयवानां प्रतिपादनकालेऽपि व्युत्पत्त्य-

पेक्षितमानान्तराकाङ्क्षाऽस्ति चेत् दण्डिनमाहूय गामानयेत्यादिवाक्या- नामसन्निकृष्टार्थविषयाणां प्रत्यक्षसान्निध्याभावेन स्वार्थाप्रतिपादकतया गवानयनादिप्रवृत्त्युच्छेदप्रसङ्गः, अलौकिकार्थप्रतिपत्त्यनुपपत्त्या शास्त्रवैय- र्थ्यप्रसङ्गाच्च, अतो मानान्तरापेक्षाभावात्तन्निबन्धनमर्थप्रतिपत्तौ प्राथम्य- चार[1]म्यरूपवैषम्यं नास्तीत्यर्थः । किञ्च यौगिकानां शब्दानामवयवार्थयो- गिवस्तुसामान्यप्रतिपादने किं मानान्तरापेक्षा? उत विशेषपर्यवसाने? इति विकल्पे प्रथमे शिरसि परिहारो ऽक्षर—शब्दस्येति ग्रन्थेन फलितः, द्वितीये तु विशेषपर्यवसानस्य प्राकरणिकलिङ्गाद्यधीनत्वान्न मानान्तरापेक्षेति च सम्बन्धेत्यादिग्रन्थेऽर्थसिद्धं न तत्प्रतिपादनदशायामपेक्षणीयमिति ह्युक्तं विशेषपर्यवसाने सति प्रतिपादनं निराकाङ्क्षं भवति अत्र परमा- त्मलिङ्गं दर्शितम्, अपि च अवयवार्थपौष्कल्यं यत्र सम्भवति तदेव यौगिकशब्देन स्वरसतः प्रतीयते यथेश्वरशब्दो लौकिकपार्थिवादिषु सत्स्व- प्यलौकिकमीश्वरं शीघ्रं प्रत्याययति, अतश्च न क्षरतीत्यवयवशक्ति- परमात्मानमेव शीघ्रमुपस्थापयति, एतदुक्तं भवति प्रतिपाद्यस्य लौकिका- लौकिकप्रमाणगोचरत्वं शाब्दप्रतीतिविलम्बाविलम्बयोरप्रयोजकं धर्मा- धर्मेश्वरादिशब्दैः शौक्ल्यादिभ्यः पार्थिवादिभ्योऽप्यलौकिकार्थे प्रतिपत्ति- शैघ्र्यस्य दर्शनात् अत एव प्रयोगप्राचुर्याद्यधीनं प्रसिद्धितारम्यमेव तयोः प्रयोजकं यौगिकशब्दानां च असङ्कुचितावयवार्थगोचरत्वेन स्वतोवासित- त्वात् तद्रुत्येव प्रसिद्ध्यतिशयात् प्रतीतिशैघ्र्यमिति । नन्ववयवशक्त्याऽर्थप्रति- पादनेऽपि प्रधानस्यानेकप्रमाणगम्यतया अभ्यस्तत्वादस्ति प्रथमावगतिः यथा गोशब्दस्य सामान्यनिमित्तत्वेऽपि गोशब्दोच्चारणात् स्वाभ्यस्ता- यामेव गवि प्रथममेव प्रतीतिः, तदसत् प्रधानस्यानेकप्रमाणगम्यत्वान- भ्युपगमात्, न हि प्रत्यक्षेण जगत्कारणभूतं सूक्ष्मं वस्तु निरीक्ष्यते, नापि श्रुतिविरोधिनोऽनुमानस्य तत्र प्रामाण्यं सम्भवतीति वक्ष्यते, ततश्च श्रुति- रेव तत्रापि प्रमाणं वक्तव्यं, तथाच श्रुतिप्रसिद्धात् परमात्मनः प्रमा-

१ पि. वैपर्यरूपवैषम्यमित्यर्थः ।

शान्तरप्रसिद्धस्य प्रधानस्य प्रथमप्रतिपत्तिरित्यसिद्धम् । किंच प्रथमप्रतीतस्यापि प्रधानस्य विरोधेन त्यक्ष्यतैव, विरोधश्चात्र स्पष्टः एकस्यैवाधाराधेयभावानुपपत्तेः । उत्तरसूत्रशङ्कामाह "एवं तर्ही"ति, अव्यक्तमत्तर इत्यव्यक्तस्य पृथगुपादानादक्षरशब्दो जीवपरः न प्रधानपर, इति ज्ञापनायाऽव्यक्तमुपात्तम् । सू० सा च प्रशासनात्, ननु नात्राम्बरान्तधृतेः परमात्मप्रशासनाधीनत्वं साक्षात्कृतमिति शङ्कां परिजिहीर्षन् कतिपयवस्तुशासनस्य जीवेऽपि सम्भवात्तद्व्यावृत्तिं दर्शयन् प्रशासन-शब्दं व्याचष्टे "प्रकृष्ट"मिति, क्वचिदप्यप्रतिहतत्वेन विषयप्रकर्षाच्छासनस्य प्रकर्षः, प्रकर्षस्य निवारकाभावाच्छासनस्याम्बरान्तविषयत्वमपि सिध्यतीति हृदयम् । ततः किमित्यपेक्षायां प्रकृतेः परमात्मशासनकर्मत्वे हेत्वन्तरं च द्योतयन् जीवव्यावृत्तिसिद्धं दर्शयति "न चेदृश"मिति स्वशासनाधीनसर्ववस्तुविधरणमिति । अयमभिप्रायः न केवलं शासनप्रकर्षात् अनपोदितात्प्रकृतेः प्रशासनकर्मत्वसिद्धिः, किन्तु सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्तीत्यादिश्रुत्यन्तरेषु शासनकर्मापस्यापकसर्वशब्दासङ्कोचाच्च तत्सिद्धिः । किञ्च सत्यशब्दनिर्दिष्टोऽनिर्वचने "तानि हवा एतानि त्रीण्यक्षराणि सत्यमिति तद्यत् तत्सदमृतम् अथ यन्ति तन्मर्त्यम् अथ यद्यन्तेनोभे यच्छतीति मर्त्य-शब्दवाच्याचेतनस्य तन्नियाम्यत्वं च प्रतीयते मर्त्यशब्दो हि अवयवशक्त्या पूर्वपूर्वावस्थाभाज्यचेतने वर्तत न शरीरमात्रे द्यावापृथिव्यादीनां तन्नियाम्यत्वाभावप्रसङ्गात् । किञ्च यस्याऽव्यक्तं शरीरं यस्या-

## सू० अन्यभावव्यावृत्तेश्च ॥ ११ ॥

सू० अन्यभावः-अन्यत्वं प्रधानादिभावः अस्याक्षरस्य परमपुरुषादन्यत्वं वाक्यशेषे व्यावर्त्यते तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्तृविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ एतस्मिन् नु खल्वक्षरे गार्ग्याकाश-

श्रोतश्च प्रोतश्चे''ति अत्र द्रष्टृत्वश्रोतृत्वाद्युपदेशादस्याक्षरस्याचेतनभूतप्रधानभावो व्यावर्त्यते सर्वैरदृष्टस्यैव सतस्सर्वस्य द्रष्टृत्वाद्युपदेशाच्च प्रत्यगात्मभावो व्यावर्त्यते, अत इयमन्यभावव्यावृत्तिरस्याक्षरस्य परमपुरुषतां द्रढयति, एवं वाऽन्यभावव्यावृत्तिः अन्यस्य सद्भावव्यावृत्तिरन्यभावव्यावृत्तिः यथैतदक्षरमन्यैरदृष्टं सदन्येषां द्रष्टृ च सत् स्वव्यतिरिक्तस्य समस्तस्याधारभूतम् एवमनेनादृष्टमेतस्य द्रष्टृ च सदेतस्याधारभूतमन्यन्नास्तीति वदन् नान्यदतोऽस्ति द्रष्टित्यादिवाक्यशेषोऽन्यस्य सद्भावं व्यावर्तयन् अस्याक्षरस्य प्रधानभावं प्रत्यगात्मभावं च प्रतिषेधति । किंच

टी० क्षरं शरीरं यस्य मृत्युश्शरीरमिति प्रधानस्य परशरीरत्वश्रवणादत्यन्तनियाम्यस्यैव शरीरत्वाच्च नियाम्यत्वसिद्धिः । इह च कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति पृष्टे एतद्वै तदक्षरं गार्गीत्यारभ्य एतस्मिन्नु अक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेत्यक्षरेणाव्याकृतस्य धारणं श्रूयते अतः शासनस्य प्रकर्षाच्छ्रुत्यन्तरानुग्रहाच्चाम्बरान्तधृतिरपि प्रशासनाधीनेति सौत्रश्च–शब्दो ह्यर्थतया हेतुवाचीत्यभिप्रायेणाह ''अत''इति, अम्बरान्तधृतिः प्रशासनादेव सिध्यतीति यतः तत एवेत्यर्थः ''प्रशासितारं सर्वेषां विद्यात्तु पुरुषं पर''मिति उत्तमः पुरुषस्त्वन्य इत्यादिवचनाभिप्रायेण पुरुषोत्तम एव प्रशासितृक्षरमित्युक्तम् ।

मू० एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ता इति श्रौतं स्मार्तञ्च यागदानहोमादिकं सर्वं कर्म यस्याज्ञया प्रवर्तते तदक्षरं परब्रह्मभूतः पुरुषोत्तम एवेति विज्ञायते। अपि च

यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद् भवति यो वा एतदक्षरं गार्गि विदित्वाऽस्माँल्लोकात् प्रैति स कृपणः अथ एतदक्षरं गार्गि विदित्वाऽस्माँल्लोकात्प्रैति स ब्राह्मण इति यदज्ञानात्संसारप्राप्तिः यज्ज्ञानाच्चामृतत्वप्राप्तिस्तदक्षरं परं ब्रह्मैवेति सिद्धम् । अक्षराधिकरणं समाप्तम् ॥

टी० एवं प्रधानपुरुषव्यतिरेकौ सूत्रद्वयेन पृथगुपपादितौ । अथैकसूत्रेण प्राकरणिकाक्षरमवाक्यविषयेणोभयव्यतिरेकमाह सू० अन्यभावव्यावृत्तेश्च व्यावर्त्यते निवर्त्यते निवर्तकधर्मः प्रतिपाद्यत इत्यर्थः, ततश्च सूत्रस्थव्यावृत्ति–शब्दो व्यावर्तकधर्मपर इति दर्शितं स्यात्, तेन विषयवाक्यानुगुण्यं सूत्रस्य स्यात् तत्र ह्यन्यनिवर्तकधर्मो द्रष्टृत्वादिरवगम्यते द्वितीययोजनाया अपेक्षितत्वात् नान्यदतोऽस्तीत्यादिकमुदाहृतम् । अस्मिन्वाक्ये प्रधानव्यावृत्तिसिद्धिं दर्शयति "अत्रे"ति, अत्र अदृष्टमिति वाक्ये द्रष्ट्रादिशब्दाः रूपशब्दप्रभृतिबाह्यार्थविषयाणां मनस्याध्यवसेयाद्यन्तःकरणविषयाणां च साक्षात्कर्तृवाचकाः शासनस्य शासितव्यवस्तुदर्शनसाकाङ्क्षत्वात् न दृष्टेर्द्रष्टारं न श्रुतेः श्रोतारं न मतेर्मन्तारमित्यादिना परस्य श्रवणमननादिकर्तृत्वनिषेधेन तेषामयोग्यत्वात् पश्यत्यचक्षुस्स शृणोत्यकर्ण इति रूपादिसाक्षात्कर्तृत्वश्रवणाच्च । जीवव्यावृत्तिं दर्शयति "सर्वैरि"ति, सर्वैः योगिभिः सर्वस्येति रूपतदाश्रयादिष्वेकैकवर्गकार्त्स्न्यपरस्सर्वशब्दः अस्यासङ्कुचितवृत्तितया द्रष्टृ–शब्देन सर्वसाक्षात्कारस्याभिहितत्वे सत्यादिशब्दोपात्तश्रोतृत्वादीनां निर्विषयत्वप्रसङ्गात् सर्वैरदृष्टत्वादिमात्रं प्रधानादीनामपि सम्भवतीति तद्व्यावृत्त्यर्थम् अदृष्टस्यैव सतस्सर्वस्य द्रष्टृत्वाद्युपदेशाच्चेत्युक्तम् । अदृष्टत्वादिविशेषितं द्रष्टृत्वादिकं प्रत्यगात्मव्यावर्तकमित्यर्थः प्रत्यगात्मानः सर्वे प्रत्येकं स्वस्वाहं प्रत्य-

ईक्षतिकर्माधिकरणम् । **सू० ईक्षतिकर्मव्यपदेशात्सः ॥ १२ ॥**

सू० आथर्वणिकाः सत्यकामप्रश्नेऽधीयते "यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" इति, अत्र ध्यायतीक्षति-शब्दावेकविषयौ ध्यानफलत्वादीक्षणस्य यथाक्रतुरस्मिँल्लोके पुरुष इति न्यायेन ध्यानविषयस्यैव प्राप्यत्वात् ।

यत्रेद्याः रूपादिविज्ञातारश्च, परस्तु रूपादिज्ञानवेलायां योगिभिरपि स्वस्वरूपवद्रूपादिवच्च न ज्ञायते निष्ठान्तैः पदैः तत्तद्विषयप्रतिपत्तिवेलायां परमात्मनोऽनवगतत्वं विवक्षितम् । अश्रुतं—शब्दश्रवणदशायामज्ञातम् । अमतं—स्थाणुपुरुषाद्यर्थविचारदशायां तद्विषयवदप्रतिपन्नम् । अविज्ञातम्—अध्यवसायदशायां घटादिवत् स्वस्वरूपवच्चानवगतम् । अत एव हि विशेषितं द्रष्टृत्वादिकं परमात्मासाधारणम् । यद्वा रूपशब्दाद्यर्थवेदिभिस्सर्वैरवेद्यत्वेन विशेषितं तत्तदर्थद्रष्टृत्वं समुच्चित्य चिदचिद्व्यावर्तकमित्यर्थः अन्यभावव्यावृत्तेरित्युक्तहेतोस्साध्याविशिष्टत्वशङ्कां च शमयन्निगमयति "अत" इति, इयं व्यावर्तकधर्मान्वयरूपा व्यावृत्तिः परमपुरुषत्वं साधयति अतः साध्याविशिष्टत्वव्युदासः, अस्यां योजनायां प्रधानपुरुषव्यावर्तकसकलधर्मवाचिवाक्यानि विषयीभूतानीति चिदचिद्व्यावृत्तिः कण्ठोक्ता स्यात् च-शब्द उक्तहेतुसमुच्चये । मुखान्तरेण सूत्रं योजयति "एवं वे" ति, अक्षरार्थमाह "अन्यश्चे" ति, नान्यदित्यादिवाक्यस्य सूत्रविषयत्वं हृदि निधाय तस्यार्थमाह "यथैतदि" ति, यथा अस्मिन् ग्रामे देवदत्त एव पुरुषो नान्य इत्युक्ते न पुरुषमात्रनिषेधोऽपि तु प्रस्तुततुल्यपुरुषान्तरनिषेधः स्यात् पुरुषान्तराणां प्रमाणसिद्धतया निषेद्धुमशक्यत्वात्, एवमिहापि द्रष्ट्राद्यन्त-

राणां प्रामाणिकत्वात् प्रकृततुल्यद्रष्ट्रादिनिषेधपरमिदं वाक्यमित्यभिप्रायेण प्रकृतगुणविशिष्टत्वमुक्तम् । आधारभूतमिति समस्तस्य प्रशासनेनाधारभूतमित्यर्थः । निषेधविषयं दर्शयति "एवमि"ति, एतस्य अक्षरस्य आधारभूतं प्रशासनेन धारकम् । एवं परमात्मनोनियन्तृतया आधारभूतद्रष्ट्रन्तराभावादधिकनिषेधपरमिदं वाक्यं व्याख्यातम् । एवं वा एतस्येति पदं व्यतिरिक्तस्य समस्तस्येति पदं प्रकृतजगत्परम् । अक्षराद्न्यत् समस्तजगतः प्रशासनेन धारकं तेनादृष्टं द्रष्टृ नास्तीत्यर्थः तदा समनिषेधपरो वाक्यशेषः स्यात् । ननु नान्यदतोऽस्ति द्रष्ट्रिति वाक्यं द्रष्टॄणां पुरुषाणां ब्रह्मतादात्म्येन अतादात्म्यकत्वनिषेधपरं किं न स्यात् न ऐक्यविधानस्याप्रकृतत्वात्, ऐक्यविधिशेषो हि भेदनिषेधः, व्यतिरेकस्यान्वयशेषत्वात्, यदि क्वचिदैक्यविधानाभावेऽपि भेदनिषेधः संभवति तत्र तु निर्वाहान्तरासम्भवादभ्युपगन्तव्यः इह तु गत्यन्तरसम्भवादैक्यविध्यभावे भेदनिषेधपरत्वाश्रयणमयुक्तम् । किञ्च कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेत्युपक्रम्य एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेत्युपक्रमोपसंहाराभ्यां प्रकरणस्य परमात्मनो विश्वाधारकताप्रतिपादनपरत्वमवगम्यते न त्वैक्यपरत्वं धारकत्वे अभिहिते तस्यापि धारकान्तरशङ्का स्यात् लोके धारकाणामपि धार्यत्वदर्शनात् यथा कारणानामपि कार्यत्वदर्शनेन परमात्मनोऽपि जगत्कारणत्वेनान्यकार्यत्वशङ्कायां तद्व्यावर्त्तनेन परमकारणत्वसिद्धये "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिप"इति करणान्तरनिषेधः परमकारणत्वापेक्षितत्वात् क्रियते एवमिहापि परमात्मनः परमाधारत्वसिद्धये धारकरूपद्रष्ट्रन्तरनिषेधोऽपेक्षितः भेदनिषेधस्तु प्रकृतार्थानपेक्षितः अपेक्षितविधेरनपेक्षितविधानदौर्बल्यमविगीतं किञ्च नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोत्रिति द्रष्टृश्रोत्रादीनां पृथक् पृथग् भेदनिषेधश्च विफलः द्रष्टुरेव श्रोतृत्वसम्भवात् यथा "तदेवाग्निस्तद्वायुः" "ज्योतींषि विष्णुर्भुव

सू० परं पुरुषमित्युभयत्र कर्मभूतस्यार्थस्य प्रत्यभिज्ञानाच्च तत्र संशय्यते किमिहापरं पुरुषमिति निर्दिष्टो जीवसमष्टिरू

पाण्डाधिपतिश्चतुर्मुखः? उत सर्वेश्वरः पुरुषोत्तमः? इति किं युक्तं समष्टिक्षेत्रज्ञ इति कुतः "स यो ह वै तद् भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति" प्रक्रम्यैकमात्रं प्रणवमुपासीनस्य मनुष्यलोकप्राप्तिमभिधाय द्विमात्रमुपासीनस्यान्तरिक्षलोकप्राप्तिमभिधाय त्रिमात्रमुपासीनस्य प्राप्यतया अभिधीयमानो ब्रह्मलोकोऽन्तरिक्षात्परोजीवसमष्टिरूपस्य चतुर्मुखस्य लोक इति विज्ञापयते ॥

टी० नानि विष्णु"रित्यादिष्वग्निवायुज्योतिर्भुवनवनगिरिदिशादीनामन्योन्यभिन्नजातीयतया तेष्वन्यतमस्य ब्रह्मात्मकत्वोपदेशेऽपि तदन्यस्य ब्रह्मात्मकत्वासिद्ध्या प्रत्येकं ब्रह्मात्मकत्वोपदेशस्सफलः, एवं द्रष्टृश्रोतृमन्त्रादीनां भिन्नजातीयत्वाभावात् पृथग्भेदनिषेधवैयर्थ्यं न च वाच्यं ब्रह्मदाशा ब्रह्मदासा इत्यादौ दाशेष्वेव दासत्वकितवत्वादिसम्भवेऽपि पृथक् तादात्म्योपदेशवदिहाप्युपपद्यत इति दाशेभ्योभिन्नजातीयानामपि दासकितवादीनां सम्भवेन श्रुतिवाक्यस्यपदानां तद्विषयत्वोपपत्तेः, अन्यथा तत्रापि

सू० तद्गतेन चेक्ष्यमाणस्तल्लोकाधिपतिश्चतुर्मुख एव "एतस्माज्जीवघनात्परात्परम्" इति च देहेन्द्रियादिभ्यः परादेहेन्द्रियादिभिः सह घनीभूताज्जीवस्य व्यष्टिपुरुषात् ब्रह्मलोकवासिनः समष्टिपुरुषस्य चतुर्मुखस्य परत्वे नोपपद्यते, अतोऽत्र निर्दिश्यमानः परः पुरुषः समष्टिपुरुषः चतुर्मुख एव, एवं चतुर्मुखत्वे निश्चिते अजरत्वादयो यथाकथञ्चिन्नेतव्याः ॥

टी० वैयर्थ्यप्रसङ्गस्य दुर्निवारत्वात् अत इदं वाक्यं प्रकृततुल्यद्र- ष्ट्रन्तरनिषेधपरम् अन्यस्य सद्भावं व्यावर्तयन्निति सूत्रस्थैरन्यभावव्यावृत्ति- शब्दैः श्रुतिवाक्यस्था अन्यदस्ति नेति शब्दाः प्रत्यभिज्ञाप्यन्त इति भावः व्यावर्तयन्निति अन्तेनाचार्यै उक्तः। फलितमाह "अस्यान्तरस्ये"ति, अस्यां योजनायां सूत्राक्षरानुरूप्यं दर्शितं नियन्तृरूपधारकान्तरराहित्यमेव कण्ठोक्तं भवति चिदचिद्व्यावृत्तिरर्थसिद्धा स्यात् च-शब्दः पूर्वव्रोक्त- समुच्चयपरः अपि त्वनुक्तसमुच्चयपर इत्यभिप्रायेण च-शब्दार्थमाह "कि- ञ्चे"ति, अन्वायत्ता इति पदं देवमनुष्यपितृसाधारणम् अन्वायत्ता- अनुवशा इत्यर्थः द्वितीयान्तपदानां प्रशंसन्तीनेनान्वयः, वाक्यप्रतिपन्ना- र्थस्य परमात्मलिङ्गतां दर्शयति "श्रौतं स्मार्तं चे"ति, च-शब्दः समु- च्चेतव्यं हेत्वन्तरमाह "अपि चे"ति, उदाहृतवाक्यसिद्धं हेतुं वदन्नधि- करणार्थमुपसंहरति "यदज्ञानादि"ति, नान्यदतोऽस्ति द्रष्टेति वाक्यस्य ब्र- ह्मव्यतिरिक्तद्रष्टृमात्रनिषेधपरत्वमयुक्तं तथासति हि ब्रह्मैव द्रष्टृ नान्य- दित्युक्तं स्यात् तत् परमते विरुद्धं ब्रह्मणो द्रष्टृत्वानभ्युपगमात् तन्म- तेनैतदन्तरं द्रष्टेति हि वक्तव्यं यदि द्रष्टृमिथ्यात्वमात्रपरं तदा अतोऽन्य- दिति निर्देशवैयर्थ्यं द्रष्टृ नास्तीत्येतावता तन्मिथ्यात्वसिद्धेः। ननु ब्रह्मैव द्रष्टेत्यर्थः ततश्च ब्रह्मणि द्रष्टृणां कल्पितत्वं सिध्यतीति चेन्न अयमेव पुरुषः नान्योऽतोऽस्ति पुरुष इत्युक्तेः पुरुषत्वमित्यस्मिन् कल्पितमित्य- र्थाप्रतीतेः एतत्तुल्यपुरुषान्तरनिषेधो हि प्रतीयते अतो ब्रह्मणोऽन्यो द्रष्टृ वर्गो मिथ्येत्यर्थ इति चेन्न अदृष्टो द्रष्टेति पूर्ववाक्ये ब्रह्मण एव द्रष्टृत्व- प्रतिपादनात् ब्रह्मव्यतिरिक्तस्यैव द्रष्टृत्वमिति वक्तुमयुक्तत्वात् द्रष्टृमि- थ्यात्वे ब्रह्मणोऽपि मिथ्यात्वप्रसङ्गात् तस्मिन् परिनिर्होर्पिते सति अदृष्टो द्रष्टेति पूर्ववाक्यप्रतिपाद्यस्याब्रह्मत्वप्रसङ्गाच्च ब्रह्मणो द्रष्टृत्वेऽपि ब्रह्म- व्यतिरिक्ताभावान् न मिथ्यात्वमिति चेत् तर्हि परमार्थतो ज्ञातृत्वमभ्यु- पगतं स्यात्। यत्तु भास्करेणोक्तं प्रधानव्यावृत्तिरनेन सूत्रेण क्रियते प्रधानस्य प्रशासितृत्वसम्भवेऽपि द्रष्टृत्वाभावात् प्रधानव्यावृत्तिरिति तदयुक्तं द्रष्ट-

विशेषो हि प्रशासिता शिंशुमा¹त्वसम्भवेऽपि वृत्तत्वासम्भववत् प्रशासितृत्वसम्भवेऽपि द्रष्टृत्वासम्भवः कथमुच्यते प्रधानस्येश्वरत्वसम्भवेऽपि चेतनत्वं न सम्भवतीतित्यनुन्मत्तः कोऽब्रवीति, अन्तराधिकरणं समाप्तम् ॥

सू· ईक्षतिकर्मव्यपदेशात्सः अत्र स इत्युक्तिरस्मिन् पादे सर्वाधिकरणेषु साध्यप्रतिज्ञानुवृत्त्यर्थो यथा प्रथमपादे "भेदव्यपदेशाच्चान्य" इत्यन्य-शब्दोक्तिः यथा च द्वितीये "अत एव च स ब्रह्मेति" ब्रह्म-शब्दोक्तिः यथा चतुर्थे "वदतीति चेन्न प्राज्ञो हि प्रकरणादि"ति प्राज्ञ-शब्दोक्तिश्च तद्वत् पूर्वमदृष्टं द्रष्टृति परमात्मनो द्रष्टृत्वमुक्तं तर्हीक्षतिकर्मत्वेनोक्तो न परमात्मेति शङ्कया सङ्गतिः । यद्वा पूर्वाधिकरणे अर्थविरोधेनाकाशशब्दस्याम्बरान्तपरत्वमुक्तं तथा अन्तरिक्ष-शब्दस्य न मुखान्तरेण निर्वाहस्तवच इति शङ्कया सङ्गतिः । यद्वा आकाश-शब्दस्य अम्बरान्तपरत्ववत् ब्रह्मलोक-शब्दस्य नान्यथा निर्वाहोऽस्तीति शङ्कया सङ्गतिः स सामभिरुन्नीयते एतत्साम गायन्नास्ते इतिवत् ।

भा० इति प्राप्ते प्रचक्ष्महे ईक्षतिकर्मव्यपदेशात्सः १२ ईक्षतिकर्म सः—परमात्मा कुतः व्यपदेशात् व्यपदिश्यते हीक्षतिकर्म परमात्मत्वेन तथा हि ईक्षतिकर्मविषयतयोदाहृते श्लोके तमोङ्कारेणैवा²यतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं चेति परं शान्तमजरमभयममृतमिति हि परमात्मन एवैतद्रूपम् "एतदमृतमेतदभयमेतद् ब्रह्मे-

टी० सामगानसहितैरित्यर्थः । यद्वा सान्त्ववादयुक्तैरातिवाहिकैरुन्नीयत इत्यर्थः, परैरीक्षतिकर्मणः परमात्मत्वं व्यवस्थाप्य ध्यायतेस्ततो भिन्नविषयतया पूर्वपक्षं कृत्वा एकविषयतया सिद्धान्त उक्तः, तदनुपपन्नमित्यभिप्रायेणाह "अत्र ध्यायती"ति, यथोपासनफलप्राप्तिन्यायात् ध्यायतिकर्मैवेक्षतिकर्म एकत्र परं पुरुषम् अन्यत्र परात्परं पुरुषमिति च श्रूयते

१ शिंशपात्वसम्भवेऽपीति तु युक्तम् ।
२ तमोङ्कारेणैवायनेनान्वेतीति पा· ।

अतो न विषयैक्यमित्यत्राह "परं पुरुषमि"ति, यत्र पञ्चम्यन्तपदं नास्ति तत्राप्यर्थसामर्थ्यात्तत् प्राप्नोतीति भावः । यादवप्रकाशीये तु जीवो हि ध्यातव्यः तस्मात् पर ईक्षितव्यस्तु मुक्तजीव इति पूर्वपक्षितं तदप्यनेनाऽयुक्तमिति दर्शितम् अभिध्यातव्याज्जीवात् परो मुक्तजीव इत्युक्ते बद्धजीवो

भू० त्येवमा"दिश्रुतिभ्यः "एतस्माज्जीवघनात्परात्परमि"ति च परमात्मन एव व्यपदेशः, न चतुर्मुखस्य, तस्याऽपि जीवघन-शब्दगृहीतत्वात्, यस्य हि कर्मनिमित्तं देहित्वं स जीव-घन इत्युच्यते चतुर्मुखस्याऽपि तच्छ्रूयते "यो ब्रह्माणं विद-धाति पूर्वमि"त्यादौ यत्पुनरुक्तमन्तरिक्षलोकस्योपरि नि-र्दिश्यमानो ब्रह्मलोकश्चतुर्मुखलोक इति प्रतीयते ॥

टी० ध्यातव्य इत्युक्तं स्यात् बद्धावस्थजीवध्यानान्मुक्तावस्थस्य प्राप्तिरित्यनुपपन्नं तस्माद् ध्यायतीक्षत्योरुभयोरपि चतुर्मुखविषयत्वमेव पूर्वपक्षीकर्तुं युक्तम् । संशयमाह "तत्रे"ति, किं ध्यायतीक्षतिकर्म चतुर्मुखः? उत परमात्मा? तदर्थं शान्तत्वाजरत्वादयः किं मुख्याः? उतामुख्याः? तदर्थं किं जीवघन-शब्देन चतुर्मुखव्यतिरिक्तस्य ग्रहणम्? उत तस्याऽपि ग्रहणम्? मिति किमत्र ब्रह्मलोक-शब्दश्चतुर्मुखस्थानपरः? उत परम-व्योमपरः? किमीक्षतिकर्मविषये वाक्ये "यत्तत्कवयो वेदयन्त"इति वैष्णवं पदं प्रत्यभिज्ञाप्यते नेति यदा प्रत्यभिज्ञानासम्भवात् ब्रह्मलोक-शब्दस्य चतुर्मुखलोकपरत्वं यदा च जीवघन-शब्देन चतुर्मुखस्याग्रहणं तदा शा-न्तत्वादीनाममुख्यत्वाद् ध्यायतीक्षतिकर्म चतुर्मुखस्यात्, यदा वैष्णवपद-प्रत्यभिज्ञानेन ब्रह्मलोक-शब्दः परमव्योमवाची यदा च जीवघन-शब्देन चतुर्मुखस्यापि ग्रहणं तदानीं शान्तत्वाजरत्वादीनां मुख्यत्वाद्ध्यायतीक्षति-कर्म परमात्मेति सिद्धान्तः, चतुर्मुखस्येति भूम्यन्तरिक्षक्रमप्राप्तश्चतुर्मुख-लोक इत्यर्थः । ततः किमित्यत्राह "तद्गतेन चे"ति, जीवघनात् परात् पर-मिति निर्देशः कथमुपपद्यत? इत्यत्राह "एतस्मादि"ति, जीवघनपर-

शब्दयोः सामानाधिकरण्येनोपपद्यते इत्यर्थः, ब्रह्मणः समष्टिपुरुषत्वं देवतिर्यग्भावाद्यपेक्षया अजरत्वादयो यथाकथञ्चित् नेतव्या इति चिरकालस्थायित्वाभिप्रायेण वा चतुर्मुखस्यैव परिशुद्धावस्थस्वरूपपरत्वेन वा निर्वाह इति भावः । अत एवोपक्रमे परं चापरं चेति निर्देशश्च कृतनिर्वाहः सिद्धान्ते परमात्मन एवैतद् रूपमिति एतद्रूपं नपुंसकान्तशब्दनिर्दिष्टं स्वरूपं चतुर्मुखपरत्वे हि पुंलिङ्गान्तता स्यात् । यद्वा एतद्रूपम् एतद्वाक्यप्रतिपादितं रूपम् ॥

सू० अतस्तत्रस्थश्चतुर्मुख इति तदयुक्तं, यत्तच्छान्तमजरममृतमभयमि"त्यादिनेक्षतिकर्मणः परमात्मत्वे निश्चिते सति ईक्षितुः स्थानतया निर्दिष्टो ब्रह्मलोको न क्षयिष्णुश्चतुर्मुखलोको भवितुमर्हति किञ्च "यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह्वैव स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकमि"ति सर्वपापविनिर्मुक्तस्य प्राप्यतयोच्यमानं न चतुर्मुखस्थानम्, अत एव चोदाहरणश्लोके इममेव ब्रह्मलोकमधिकृत्य श्रूयते "यत्तत्कवयो वेदयन्त" इति कवयः—सूरयः सूरिभिर्दृश्यं च वैष्णवं पदमेव ॥

टी० एवममर्थद्वयेऽप्यनुगुणं श्रुत्यन्तरवाक्यमाह "एतदमृतमि"ति अनेन स इति सौत्रपदस्य प्रयोजनं दर्शितं भवति, अधिकारादेव साध्यप्रतिज्ञासिद्धेस्तस्य प्रयोजनं हि वक्तव्यं शान्ततमजरममृतमभयमिति व्यपदेशस्य कथं परमात्मसाधकत्वमित्यपेक्षायां श्रुत्यन्तरेषु परमात्मनः तादृक्त्वेन प्रसिद्धेरिति वक्तव्यम् अतस्तथात्वेन श्रुत्यन्तरप्रसिद्धिद्योतनं स इति पदस्य प्रयोजनमिति । व्यपदेश—व्दविवक्षितं हेत्वन्तरमाह

सू० "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इत्येवमादिभ्यः, न चान्तरिक्षात्परश्चतुर्मुखलोकः मध्ये स्वर्गलोका-

दीनां बहूनां सद्भावात्, अतः "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्मादिद्वानेतेनैवायतनेनैकतरमन्वेती"ति प्रतिवचने यदपरं कार्यं ब्रह्म निर्दिष्टं तदैहिकामुष्मिकत्वेन द्विधा विभज्यैक–

टी० "एतस्मादि"ति, कथं चतुर्मुखस्यैतद्रूपदेशासम्भव ? इत्यत्राह "तस्यापी"ति, कथं तस्य जीवघन–शब्दगृहीतत्व? मित्यत्राह "यस्य ही"ति, कर्मकृतदेहं दर्शयति "चतुर्मुखस्यापी"ति, सशरीरत्वादेव हि चतुर्मुखत्वमिति भावः। ननु कथं "यो ब्रह्माणमि"ति, श्रुत्या चतुर्मुखदेहस्य कर्मनिमित्तत्वावगमः न ह्यत्र कर्मसम्बन्धः श्रूयते उच्यते कारणवाक्येषु "ब्रह्म वा इदमेक एवाग्र आसीदि"त्यारभ्य "यान्यन्यानि देवक्षत्राणि इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान"इति, सृज्यतया श्रुतानामिन्द्रवरुणसोमयमादीनां कर्मवश्यत्वमवतिष्ठते एवमेव चतुर्मुखस्याप्यपवादश्रुत्यभावात्सृज्यत्वेन स्वतः प्राप्तकर्मवश्यत्वमवतिष्ठत, इति आदि–शब्देन "यो वै वेदांश्च प्रहिणोति तस्मा"इति पादो विवक्षितः तेनोपदेशसापेक्षज्ञानप्रसरतया सङ्कुचितस्य ज्ञानत्वं स्वतः प्राप्तम् इन्द्रविरोचनादीनामुपदेशसापेक्षतया हि सङ्कुचितज्ञानत्वावगमः, भगवतस्सान्दीपनिप्रभृतिगुरूपदेशादिसापेक्षत्वं लीलात्ववचनैरपोदितत्वान्न ज्ञानसङ्कोचसाधकम् इन्द्रविरोचनादीनामिव चतुर्मुखस्यापवादरहितमुपदेशसापेक्षत्वं सङ्कुचितज्ञानत्वसाधकमिति तेनाऽपि सङ्कुचितकर्मसम्बन्धसिद्धिः, एवं सृज्यत्वादुपदेशसापेक्षज्ञानप्रसरत्वाच्च कर्मवश्यत्वाच्चतुर्मुखस्य जीवघनशब्दगृहीतत्वसिद्धिः यत्पुनरिति अनूदितं पूर्वपक्षहेतुं परिहरति "तदयुक्तमि"ति, परमात्मलोकत्वे हेतुत्रयमाह "यत्तदि"त्यादिना, कवयः सूरय इति कवयः क्रान्तदर्शिनः अकर्मवश्यत्वादसङ्कुचितज्ञानाः सूरयश्च ज्ञानाधिकाः प्रसिद्धाः अतोऽयंवशात्सूरिवत्यभिज्ञानमित्यर्थः। ततः कि?मित्यत्राह "सूरिभिरि"ति, एवमादिभ्य इति आदि–शब्देन "तद्विप्रासो विपन्यवः" "यत्र ऋषयः प्रथमजा ये पुराणाः यत्र पूर्वे साध्याः सन्ति देवाः"

इत्यादिवाक्यानि विवक्षितानि, अजरत्वादिभिर्विशिष्टपरमात्मभावस्य स्थानत्वात् सर्वकर्मविनिर्मुक्तस्य प्राप्यस्थानत्वात् सूरिभिर्दृश्यत्वप्रत्यभिज्ञानाच्च न चतुर्मुखलोक इत्यर्थः लोकक्रमप्रत्यभिज्ञानभङ्गस्यास्वरसत्वमाशङ्क्याह "न चे"ति, अस्वारस्यं तुल्यमित्यर्थः। ननु नास्माकं व्यवहितत्वादस्वारस्यम् अन्तरिक्ष–शब्दस्य ब्रह्मलोकादर्वाचीनलोकानां प्रदर्शनार्थत्वात् ब्रह्मलोकस्य प्राकृतलोकद्वयसाहचर्यात् प्राकृतलोक एव स्यादित्यत्राह "अत एतद्वै सत्यकामे"ति, अतः–उदाहृतबहुवाक्यस्वारस्यानुगुण्यात् 'परं चापरं च ब्रह्म यदोङ्कार' इति सामानाधिकरण्यं वाच्यवाचकभावनिबन्धनम् ओङ्कारवाच्यं परापररूपं ब्रह्मेति वा परापररूपब्रह्मवाचक ओङ्कार इति वार्थः अनन्तरम् एतेन एकतरमिति पदाभ्यामोङ्कारस्य ब्रह्मणश्च निर्देशात् अयनेन–उपायभूतेन एकतरम् कार्यकारणब्रह्मणोरन्यतरत् यदपरं कार्यं ब्रह्मेति चतुर्मुखलोकस्यापरब्रह्म–शब्दवाच्यत्वमेव युक्तं न तु परब्रह्मलोकत्वं "कार्यं बादरिः" कार्यात्यये परं जैमिनिरि"ति,

सू० मात्रं प्रणवमुपासीनानामैहिकं मनुष्यलोकावाप्तिरूपं फलमभिधाय द्विमात्रमुपासीनानामामुष्मिकमन्तरिक्षशब्दोपलक्षितं फलं चाभिधाय त्रिमात्रेण परब्रह्मवाचिना प्रणवेन परं पुरुषं ध्यायतां परमेव ब्रह्म प्राप्यतयोपदिशतीति सर्वं समञ्जसम्। अत ईक्षतिकर्म परमात्मा। ईक्षतिकर्माधिकरणं समाप्तम्॥

टी० तस्य कार्यलोकत्वव्यपदेशात् ततः पृथगेव परब्रह्मव्यपदेशाच्चेति दर्शितं कार्यब्रह्म–शब्देन ऐहिकामुष्मिकत्वेन द्विधा विभज्येति उपरि पृथक्फलत्वेन कीर्तनाद्विभागोऽभिमत इत्यर्थः। परापर–शब्दयोः कार्य कारणपरत्वात् कार्यलोकस्य प्राकृतत्वं सिद्धमिति कारणब्रह्मलोकस्याप्राकृतत्वमकार्यत्वादेव सिद्धम्, अतः प्राकृताप्राकृतरूपेण प्राप्यलोकविभागः प्राकृतेऽप्यैहिकामुष्मिकरूपेण विभागः श्रुत्यभिमतः उपरि पृथ-

कफलत्वेन कीर्तनाविशेषात् अत ऐहिकामुष्मिकविभागोक्तिः प्राकृताप्राकृत-विभागस्य प्रदर्शनार्थत्वमाह "आमुष्मिकमि"ति, चतुर्मुखलोकस्याप्यन्त-

दहराधिकरणम् । **सू० दहर उत्तरेभ्यः ॥ १३ ॥**

मू० इदमामनन्ति छन्दोगाः "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्त-स्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमि"ति तत्र संदेहः किमसौ हृदयपुण्डरीकमध्यवर्ती दहराकाशो महाभूतविशेषः? उत प्रत्यगात्मा? अथ परमात्मेति? किं तावद्युक्तं महाभूतविशेष इति, कुतः आकाश-शब्दस्य भूताकाशे प्रसिद्धिप्रकर्षात्, तस्मिन्यदन्तस्तदन्वेष्टव्यमि-त्यन्वेष्टव्यान्तरस्याधारतया प्रतीतेश्च, इत्येवं प्राप्तेऽभि-धीयते—

टी० रिक्तशब्दोपलक्ष्यत्वे संग्राहकमामुष्मिकत्वमस्ति चतुर्मुखलो-कव्यतिरिक्तोपलक्षणे संग्राहकाकारो नास्तीति वैषम्यमभिप्रेतम् अन्तरि-क्ष-शब्दोल्लिखितमिति उपलक्षणतया व्यवधानपरिहारस्तुल्यः संग्राहक-लाभो ह्यधिक इति भावः । परं पुरुषं ध्यायतामिति परं पुरुषमभि-ध्यायीतेति वाक्यं स्मारितं तेन चतुर्मुखलोकप्राप्तिस्तत्क्रतुन्यायविरोधः सूचितः, परमेव ब्रह्मेति चतुर्मुखलोकस्य प्राप्यत्वे परात्परं पुरिशयं पुरुषमीक्षत इति फलवचनस्यपुरुष-शब्दविरोध एवकाराभिप्रेतः, एवं कार्यब्रह्मान्तर्गतस्य चतुर्मुखलोकस्य ततः पृथक्करणं परब्रह्म-शब्दावि-षयस्य तस्य परमात्मप्राप्तेः प्राप्यत्वाश्रयणं तत्क्रतुन्यायविरोधः फल-

मू० सू० दहर उत्तरेभ्यः, दहराकाशः परं ब्रह्म कुतः उत्तरेभ्यो वाक्यगतेभ्यो हेतुभ्यः "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्क-

ल्प" इति निरुपाधिकात्मत्वमपहतपाप्मत्वादिकं सत्य-
कामत्वं सत्यसङ्कल्पत्वं चेति दहराकाशे श्रूयमाणा
गुणा दहराकाशं परं ब्रह्मेति ज्ञापयन्ति ॥

टी० वचनविरोधश्चेत्यनेकयुक्तिभिः प्राकृतलोकद्वयसाहचर्ये निर-स्तम्, आदावेव परं चापरं चेति प्राप्यविभागस्याभिहितत्वात् प्राकृतसाह-चर्ययुक्तिरुपक्रमोन्मीलिता चेत्युक्तं भवति, सर्वं समञ्जसमिति परपक्ष-स्यानुपपत्तयः स्वपक्षे न सन्ति उपलक्षणतया व्यवधानपरिहारः समानः "अजरमभयं" "परात्परं पुरिशयं पुरुषं" "यदा पादोदरस्त्वचा विनिर्मुक्तः" "यत्तत्कवयो वेदयन्त" इत्यादीनि च वाक्यानि स्वरसानीति वैषम्यमित्यर्थः अधिकरणार्थमुपसंहरति "अत" इति, ईक्षतिकर्माधिकरणं समाप्तम् ॥

सू० दहर उत्तरेभ्यः, पूर्वाधिकरणे परात्परं पुरिशयं पुरुषमित्युक्तस्य परमात्मत्वं साधितम्, अत्र पुरिशयस्याकाश-शब्दवाच्यस्यापरमात्मत्वं निरस्यते इति सङ्गतिः, पूर्वं ब्रह्मलोक-शब्दस्य परमात्मस्थानपरत्वमुक्तं तद्वदिहापि ब्रह्मलोक-शब्दब्रह्मपुर-शब्दयोः स्थानपरत्वं स्यादिति शङ्कया सङ्गतिः पूर्वत्रान्तरिक्ष-शब्दस्य प्रसिद्धान्तरिक्षपरत्वं व्यावर्त्तितम् एवं दहराकाश-शब्दस्य प्रसिद्धाकाशादन्यपरत्वमुच्यत इति सङ्गतिः तर्हि अक्षरमम्बरान्तधृतेरित्यस्यानन्तरं दहराधिकरणं प्राप्तम् उभयत्राकाश-शब्दस्य विषयवाक्येषु श्रुतत्वात् ईक्षतिकर्मेत्यधिकरणं दहराधिकरणानन्तर्य-मर्हति तत्र ह्यन्तरिक्ष-शब्दः श्रूयते न त्वाकाशशब्द इति चेन्न अक्षरेक्षतिक-र्माधिकरणयोः आकाशान्तरिक्ष-शब्दवाच्यादर्थान्तरस्य परमात्मत्वनिर्णयेन परस्परसङ्गत्यतिशयात् दहराधिकरणे त्वाकाश-शब्दवाच्यस्यैव परमात्मत्वं विवक्षितमित्यस्य पूर्वाधिकरणद्वयानन्तरत्वं युक्तम् विषयादिकं दर्शयति "इदमि" त्यादिना, परस्मिन्नन्वेष्टव्यान्तरप्रतीत्यनुपपत्तेः पक्षान्तरद्वयेऽप्यु-पमानोपमेयभावाद्यनुपपत्तेश्च संशयः किं दहराकाशो भूताकाशः? उत जीवः? अथ परमात्मे? ति तदर्थमन्वेष्टव्यान्तरनिर्देशः किं दहराकाशस्य

भा० "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामा-

स्तेषां सर्वेषु लोकेषु कामचारो भवती'त्यादिना "यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते" इत्यन्तेन दहराकाशवेदिनः सत्यसङ्कल्पत्वप्राप्तिश्चोच्यमाना दहराकाशं परं ब्रह्मेत्यवगमयति ।

टी० परमात्मत्वविरोधि? उत न? तस्मिन्यदन्तरिति निर्द्देशः किं दहराकाशस्यगुणजातविषयः? उतार्थान्तरपरः? "एष आत्मे"ति वाक्योक्तमपहतपाप्मत्वादिकं किं प्रजापतिवाक्योक्तजीवधर्मः? उत न?जीवधर्मत्वेऽपहतपाप्मत्वादिश्रुतिस्वारस्यमस्ति?नेति?विचारः यदा तस्मिन्यदन्तरिति निर्द्देशोऽर्थान्तरपरः तदन्वेष्टव्य–शब्दस्य विषयत्वाभावेन दहराकाशस्य भूताकाशत्वं स्यात् यदा एष आत्मेति वाक्योक्तगुणाष्टकस्य प्रजापतिवाक्योक्तजीवधर्मत्वे स्वारस्यमस्ति तदानीम् "एष आत्मे"ति वाक्यस्य जीवविषयतया दहराकाशो जीवः स्यादिति पूर्वपक्षे फलफलिभावः यदा "तस्मिन्यदन्तरि"ति, गुणजातविषयोक्तिः तदाऽन्वेष्टव्य–शब्दस्य गुणजातविषयत्वाद्दहराकाशोभूताकाशातिरिक्त इति स्यात्, यदा 'एष आत्मे''ति वाक्यस्य प्रजापतिवाक्योक्तजीवधर्मविषयत्वे स्वारस्यं नास्ति तदा स्वरसतोगुणाष्टकविशिष्टपरमात्मप्रतिपादकतया दहराकाशः परमात्मा स्यात् इति राद्धान्ते फलफलिभावः, आकाश–शब्दस्य क्वचित्परमात्मपरत्वं दृष्टमिति तद्व्यावृत्त्यर्थं प्रसिद्धिप्रकर्षादित्युक्तम् "एष आत्माऽपहतपाप्मा" इत्यादिभिरस्याकाशस्य परमात्मगुणेषु श्रूयमाणेषु सत्सु कथं प्रसिद्धिप्राचुर्यात् भूताकाशत्वेन प्रत्यवस्थानमित्यत्राह "तस्मिन् यदन्तरि"ति, एतच्चोत्तरत्राथमादित्यादिना व्यक्तीभविष्यति। राद्धान्तमाह "एवं प्राप्त"इति, न हि परस्यात्मधर्माणामुत्तरत्वाधरत्वादिकमस्ति तस्माद्धेतोरुत्तरत्वं वाक्यद्वारकमित्याह "वाक्यगतेभ्य"इति, उत्तरेभ्य इत्युक्ते चतुर्थ्यन्तत्वशङ्का माभूदिति पञ्चमीस्फुटीकरणाय हेतुभ्य इत्युक्तं "षष्ठी हेतुप्रयोग"इति नियमः प्रयोजनतया हेतुत्वविवक्षायां न सर्वदा यथा "अल्पस्य हेतोर्बहु हातुमिच्छन्नि"ति, उत्तरवाक्यगतहेतुं दर्शयति "एष"इत्यादिना निरुपाधिकात्मत्वमिति जीवस्यापि व्यावर्तनक्षमात्मत्वमित्यभिप्रायेण निरुपाधिक–

मू० "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश" इत्युपमानोपमेयभावस्य दहराकाशस्य भूताकाशत्वे नोपपद्यते, हृदयावच्छेदनिबन्धन उपमानोपमेयभाव इति चेत् तथा सति हृदयावच्छिन्नस्य द्यावापृथिव्यादिसर्वाश्रयत्वं नोपपद्यते। ननु च दहराकाशस्य परमात्मत्वेऽपि बाह्याकाशोपमेयत्वं न संभवति "ज्यायान् पृथिव्या ज्यायानन्तरिक्षादि"त्यादौ सर्वस्माज्ज्यायस्त्वश्रवणात् नैवं दहराकाशस्य हृदयपुण्डरीकमध्यवर्त्तित्वप्राप्ताल्पत्वस्य निवृत्तिपरत्वादस्य वाक्यस्य, यथा अधिकजवेऽपि सवितरि इषुवद् गच्छति सवितेति वचनं गतिमान्द्यनिवृत्तिपरम्, अथ स्यात् "एष

शब्दः, देवादिकतिपयशरीरविशेषानवच्छिन्नत्वं निरुपाधिकत्वम्, अपहतपाप्मत्वादेरपि निरुपाधिकत्वमभिप्रेतम् । यद्वा आकाशस्यापि स्वकार्यव्याप्त्या यौगिक आत्म-शब्द उपपन्न इति शङ्काव्यावृत्त्यर्थो निरुपाधिक-शब्दः यौगिकत्वाश्रयणं च क्लिष्टं स्वतः शरीरप्रतिसम्बन्धिनियन्तृरूपव्याप्तरि ह्यात्म-शब्दप्रयोग इति भावः । अपहतपाप्मत्वादिकमित्यादि-शब्देन

मू० आत्माऽपहतपाप्मे"त्यादिना दहराकाशो न निर्दिश्यते दहरोस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यमिति दहराकाशान्तर्वर्तिनस्ततोऽन्यस्यान्वेष्टव्यत्वेन प्रकृतत्वादिह "एष आत्माऽपहतपाप्मे"ति तस्यैवान्वेष्टव्यस्य निर्देष्टुं युक्तत्वात्, स्यादेतदेवं यदि श्रुतिरेव दहराकाशं तदन्तर्वर्तिनं च न व्यभाङ्क्ष्यत् व्यभाङ्क्षी तु सा, तथा हि "अथ यदस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरो-

ऽस्मिन्नन्तराआकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यमि''ति ब्रह्मपुर-शब्देनोपास्यतया सन्निहितपरब्रह्मणः पुरत्वेनोपासकशरीरं निर्दिश्य तन्मध्यवर्ति च तदवयवभूतं पुण्डरीकाकारमल्पपरिणं हृदयं परस्य ब्रह्मणो वेश्मतया अभिधाय सर्वज्ञं

सत्यकामत्वादिग्रहणे शक्येऽपि गुणानां विधिनिषेधरूपेण द्वैविध्यज्ञापनाय सत्यकामत्वादेः पृथगुपादानम् उपमानेति एकस्यैवोपमानोपमेयभावो न घटत इत्यर्थः । उपमानोपमेयभावस्य हृदयावच्छेदनिबन्धनत्वमाशङ्क्य परिहरति "हृदये''त्यादिना, अत एवेदमपि नाशङ्कनीयं "रामरावणयोर्युद्धं रामरावणयोरिवे''तिवदुपमानशून्यताज्ञापनपरं वाक्य-

सू० सर्वशक्तिमाश्रितवात्सल्यैकजलधिमुपासकानुग्रहाय तस्मिन्वेश्मनि सन्निहितं सूक्ष्मतया ध्येयं दहराकाश-शब्देन निर्दिश्य तदन्तर्वर्ति चापहतपाप्मत्वादि स्वभावतो निरस्तनिखिलहेयत्वसत्यकामत्वादि स्वाभाविकानवधिकातिशयकल्याणगुणजातं च ध्येयं तदन्वेष्टव्यमित्युपदिश्यते, अत्र

मिति यावच्छब्दानुपपत्तेः अंशभेदोक्तेश्च न्यूनपरिमाणस्येव अधिकपरिमाणस्यापि न मध्यमपरिमाणेन साधर्म्यं युक्तमिति चोदयति "ननु चे''ति अन्यूनपरिमाणत्वमात्रं साधर्म्यमिति परिहरति "नैवमि''ति, अथ स्यादिति, यद्यपि यावान्वा अयमाकाश''इति मध्यगतवाक्यस्याकाश एव प्रथमनिर्दिष्टत्वादासन्नत्वाच्च एष इति परामर्शनीयः तथाऽप्युपक्रमे "तस्मिन् यदन्तस्तदन्वेष्टव्यमि''त्यन्वेष्टव्यतया प्राधान्येनावगत्वात् "आत्मा वा अरे द्रष्टव्यः सोऽन्वेष्टव्य''इत्यादिष्वात्मनोऽन्वेष्टव्यत्वनिश्चयादिहाप्यन्वेष्टव्यस्य तदन्तर्वर्तिनः आत्मत्वावगमात् "एष आत्मे''ति तदन्तर्वर्तिनोऽन्वेष्टव्यस्यात्मनः परामर्शः, अत आत्माधिकरणतयाऽवगत्वेन तद्ग्र-

निरिक्तत्वाद्युपपत्त्यनुरोधेन भूताकाश एवायं दहराकाश इत्यर्थः । पूर्वपक्षेऽन्वेष्टव्यान्तरस्याधारतया प्रतीतिश्चेत्यनेन वाक्येनाभिप्रेतोऽर्थे इहार्थः स्यादित्यादिना कण्ठोक्तो भवति परिहरति "स्यादेतदि"ति, ब्रह्म-पुर-शब्दार्थमाह "उपास्यतये"ति, न केवलं ब्रह्मणः सर्वव्यापित्वाच्छरीरेण साधारणं सम्बन्धमात्रम् अपि तूपासनस्थानभूतहृदयाधारत्वात् सम्बन्धविशेषश्च विद्यते ब्रह्म-शब्दश्च परस्मिन्मुख्यः अतो ब्रह्मपुरं शरीरमित्यर्थः, अत्रेदमपि अर्थसिद्धं दहराकाशो जीव इति पूर्वपक्षस्य साधकतया ब्रह्मपुर-शब्दनिर्द्देशः परैरुक्तः तदयुक्तमिति कथमुच्यते ब्रह्मणः सर्वविकारसाधारणत्वादसाधारणेन व्यपदेशस्य युक्तत्वाज्जीवस्य भोगोपकरणतया सम्बन्धविशेषसद्भावाज्जीवशरीरमेव ब्रह्मपुरमिति तद्विधेयपुराधिपो जीव इति शङ्कितं तदयुक्तं मुख्यार्थस्य स्वतो ग्राह्यत्वात् परमात्मन उपास्यत्वाय शरीरान्तरवस्थानस्य "निचाय्यत्वादेवमि"त्यत्र दर्शिततया सम्बन्धविशेषसद्भावाच्च जीवसाधकत्वशङ्कानुत्थानादिति

सू० तदन्वेष्टव्यमिति तच्छब्देन दहराकाशं तदन्तर्वर्तिनः गुणजातं च परामृश्य तदुभयमन्वेष्टव्यमित्युपदिश्यते "यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्मे"त्यनूद्य तस्मिन् दहरपुण्डरीकवेश्मनि यो दहराकाशो यच्च तदन्तर्वर्ति गुणजातं तदुभयमन्वेष्टव्यमिति विधीयत इत्यर्थः, दहराकाश-शब्दनिर्द्दिष्टस्य परब्रह्मत्वं तदस्मिन् यदन्तरिति निर्द्दिष्टस्य च तद्गुणत्वं तच्छब्देनोभयं परामृश्योभयस्याप्यन्वेष्टव्यतया विधानं च कथमवगम्यत ? इति चेत् तदवहितमनाः शृणु "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश" इति दहराकाशस्यातिमहत्तामभिधाय

अल्पपरिमाणमित्यनेन दहरं पुण्डरीकमित्यत्र दहर-शब्दो व्याख्यातो भवति। सत्यकामत्वसत्यसङ्कल्पत्वसिद्धान् गुणानाह "स्वाभाविके"ति, ननु

आकाश-शब्दवाच्यस्य गुणित्वेन तस्य ध्येयत्वं वक्तव्यं तेन विना गुणध्यानायोगात् तच्छब्दस्य तदन्तर्वर्तिपरत्वान्नाकाशाभिधायित्वं गुणिनो ध्येयत्वे कथिते गुणानां ध्येयत्वमर्थसिद्धं स्यात् न तु गुणानां ध्येयत्वे कथिते गुणिनो ऽन्तर्भावः, अतोऽन्वेष्टव्यमितिपदं गुणिपरं न तु गुणपरमित्यत्राह "अत्रे"ति, तच्छब्द एवोभयपरामर्शीत्यर्थः । ननु यच्छब्दनिर्दिष्टं हि तच्छब्देन परा-

सू० "उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणी"ति प्रकृतमेव दहराकाशमस्मिन्निति निर्दिश्य तस्य सर्वजगदाधारत्वमभिधाय "यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिंत्समाहितमि"ति पुनरप्यस्मिन्निति तमेव दहराकाशं परामृश्य तस्मिन्नस्योपासकस्येह लोके यद् भोग्यजातमस्ति यच्च मनोरथमात्रगोचरमिह नास्ति सर्वं तद् भोग्यजातमस्मिन् दहराकाशे समाहितमिति निरतिशयभोग्यत्वं दहराकाशस्याभिधाय तस्य दहराकाशस्य देहावयवभूतहृदयान्तर्वर्तित्वेऽपि देहस्य जराप्रध्वंसादौ सत्यपि परमकारणतया अतिसूक्ष्मत्वेन निर्विकारत्वमुक्त्वा

मृश्यते यच्छब्दस्त्वन्तर्वर्तिपरः नाकाशपरः, तत् कथमुभयपरामर्शित्वं तच्छब्दस्ये? ति शङ्कायामस्य वाक्यस्य परीक्षार्थपरत्वं च व्युदस्यन् तच्छब्दस्य उभयपरामर्शित्वमाह "यदिदमस्मिन्नि"ति, तस्मिन् दहरपुण्डरीकवेश्मनि यदन्तर्गतं दहराकाशाख्यं वस्तु तदन्वेष्टव्यमिति परैरुच्यते तच्छब्दस्येति 'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्मे'त्यनूद्येत्यादिना अथ-

सू० तत एवैतत्सत्यं ब्रह्मपुरमिति तमेव दहराकाशं सत्यकारणतया सत्यभूतं ब्रह्माख्यं पुरं निखिलजगदावासभूतमित्युपपाद्य-

मर्थः यदिदं पुण्डरीकं वेश्म तस्मिन् दहराकाश इति दहराकाशस्य पुण्डरीकवेश्माधारत्वस्योक्तत्वात् पुनरपि तस्मिन् यदन्तरिति आकाशस्य पुण्डरीकवेश्माधारत्वकथनवैयर्थ्यं स्यादिति तस्मिन् यदन्तरिति गुणविषयत्वे तु न वैयर्थ्यं पूर्वमनुक्तत्वात्, अतो ऽपेक्षितविधेरनपेक्षितविधानं दुर्बलम्, अत्र दूषणान्तराणि अप्यभिप्रेतानि अभ्यर्हितदहराकाशं विहाय व्यवहितपुण्डरीकवेश्मपरामर्शोऽनुपपन्नः । किञ्च पुलिङ्गशब्दनिर्दिष्टस्य दहराकाशस्य यदिति नपुंसकलिङ्गान्तपदेन परामर्शानुपपत्तिश्च तस्मिन् यदन्तरिति वाक्यं दहराकाशस्य पुण्डरीकवेश्माधारकत्वप्रतिपादनपरं चेत् अनन्तरवाक्यस्य तदाक्षेपपरतया व्याख्यानं चानुपपन्नं परमात्मनोऽन्तर्वर्ति तत्कारणं सूक्ष्मं किमपि न सम्भवतीति किं तत्र विद्यत इति वाक्येनाक्षिप्य द्यावापृथिव्यादिकार्यस्य तदन्तर्वर्तितया समाधानमिति हि परैर्वर्ण्यते दहराकाशः पुण्डरीकवेश्मवर्तीत्युक्ते किमत्राक्षेप्यं तथा अस्मिन् कामाः समाहिताः "अथ य इहात्मानमनुविद्य-

सू० अस्मिन्कामास्समाहिता इति दहराकाशमस्मिन्निति निर्दिश्य काम्यभूतांश्च गुणान् कामा इति निर्दिश्य तेषां दहराकाशान्तर्वर्तित्वमुक्त्वा तदेव दहराकाशस्य काम्यभूतकल्याणगुणविशिष्टत्वं तस्यात्मत्वं च ॥

व्रजन्त्येतांश्च सत्यान्कामानि"ति गुणानां तदन्तर्वर्तित्वमुक्त्वा गुणगुणिनोरुभयोरप्युपासनतत्फलप्रतिपादकोपरितनवाक्यस्वारस्यभङ्गश्च भवेत् अतः परोक्तार्थो ऽनुपपन्नः इत्यभिप्रायः, दहरोऽस्मिन्निति वाक्यं व्याचष्टे "तस्मिन् दहरे"ति, पुँल्लिङ्गयच्छब्दाध्याहारेण योजनायां यच्छब्दद्वयनिर्दिष्टमुभयं तच्छब्देन प्रति निर्दिश्यत इत्यभिप्रायेण यो दहराकाशः यच्च तदन्तर्वर्तिगुणजातं तदुभयमित्युक्तम् । यद्वा पुलिङ्गयच्छब्दानध्याहारेण दहरोऽस्मिन्नित्यादेरेकवाक्यत्वं मन्वान आह "तस्मिन् दहरे"ति, श्रुतिवाक्ये अन्तःशब्दोऽन्तर्वर्तिपरः अस्मिन् वर्तमानो दहराकाशस्तदन्तर्वर्ति च यत्तदुभयमन्वेष्टव्यमिति वाक्यस्यार्थ इत्यर्थः "त्यदा-

दीनि सर्वाणि नित्यमि''ति पुँल्लिङ्गनपुंसकलिङ्गयोर्यच्छब्दयोरेकशेषः ''नपुंसकमनपुंसकेनैकवच्चान्यतरस्यामि''ति नपुंसकान्तत्व—

सू० एष आत्माऽपहतपाप्मेत्यादिना सत्यसङ्कल्प इत्यन्तेन स्फुटीकृत्य यथा ह्येवेह प्रजा अन्वाविशन्तीत्यारभ्य ॥

टी० मेकवचनान्तत्वं च, तस्मादाकाशतदन्तर्गतान्वेष्टव्यमिति गुणपरं पुन्नपुंसकान्तयच्छब्दद्वयार्थविषयं तदिति पदमित्यभिप्रायः। एवं तदन्वेष्टव्यमिति तत्पदेनैवात्मनोऽप्युक्त्वाऽन्वेष्टव्यतया प्राधान्यावगतिरन्वेष्टव्यस्यात्मत्वप्रसिद्धिश्चोपपन्नेति चोद्यपरिहारः सिद्धः दहराकाशेति विवक्षितार्थस्य प्रामाणिकत्वे सिद्धे हि क्लिष्टनिर्वाहाश्रय उपपद्यते तस्माद् दहराकाशस्य परब्रह्मत्वे तदन्तर्वर्तिनो गुणजातत्वे तयोरन्वेष्टव्यत्वे च प्रमाणं च वक्तव्यमित्यर्थः। प्रतिवक्ति ''तदवहिते''त्यादिना तदन्वेष्टव्यं यावान्वा अयमाकाश इति वाक्ययोर्मध्ये किं तदत्र विद्यत इति वाक्यं श्रूयते परमात्मनोऽन्तर्वर्तिनः कस्यचिदसम्भवात् किं तदत्र विद्यत इति वाक्यमाक्षेपपरमित्याहुः परे प्रश्नपरमिदं वाक्यमित्युचितं बुभुत्साख्यापनमात्रं प्रश्नः अनुपपत्त्युद्घाटनेनार्थाक्षेपपूर्वकं परिहारबुभुत्साख्यापनं चोद्यम् अबुभुत्सितपरिहारेण वक्त्रा प्रतिषेधः प्रतिक्षेपः कुतस्तु खलु सोम्यतिवत् न प्रतिक्षेपपरमिदम्

सू० तेषां सर्वेषु लोकेषु कामचारो भवतीत्यन्तेन तदिदं गुणाष्टकं तद्विशिष्टं दहराकाशशब्दनिर्दिष्टमात्मानं चाविदुषामेव तद्व्यतिरिक्तभोग्यसिद्धये च कर्म कुर्वतामन्तवत्फलावाप्तिमसत्यसङ्कल्पत्वं चाभिधाय

टी० परिहारस्य वक्ष्यमाणत्वात् न केवलः प्रश्नः अनुपपत्तेर्विद्यमानत्वात् सर्वान्तरस्य परमात्मनोह्यन्तरभूतं तत्त्वान्तरमसम्भावितम् अनुपपत्त्युद्घाटनमुखेनाक्षेपस्य कण्ठोक्त्यभावात् न केवलं चोद्यमित्युचितम् अतो विनयं प्रकाशयता शिष्येणानुपपत्तिमभिप्रेत्य तामस्फुटं ब्रुवता बुभुत्साख्यापनं क्रियत इति प्रश्नवाक्यतुल्यं फलतश्चोद्यपरमिदं वाक्यं

तच्छब्दनिर्दिष्टयोराकाशतदन्तर्वर्तिनोरन्तर्वर्तिविशेषानवगमादुक्तानुपपत्तिगर्भस्तदन्तर्वर्त्यंशविषयः प्रश्नः किं तदत्रेति स ब्रूयात् आचार्यो ब्रूयादित्यर्थः, प्राकरणिकानामिदमेतच्छब्दानामाकाशपरामर्शपरत्वार्थं तस्याव्यवहितत्वज्ञापनार्थं शब्दतो ऽर्थतश्चाकाशस्य प्राधान्यज्ञापनार्थं च यावान्वा अयमित्यादि प्रदर्श्यते इदं वाक्यं दहराकाशस्याल्पत्वनिवृत्तिपरमित्यभिप्रायेणातिमहत्त्वामित्युक्तं प्रकृतमेवेति । अन्तर्वर्ति अन्वेष्टव्यम् आकाश-शब्दव्यवहितत्वाच्चेदं शब्दविषय इति भावः। दहराकाशस्यानुगत्यविच्छेदं दर्शयति "तमेवे"ति, अस्येति व्याख्येयम् उपासकस्येति व्याख्यानम् इदं-शब्दः षष्ठ्यन्तो बुद्धिस्थपर इत्यर्थः, अन्वेषणविजिज्ञासयोः कर्तृत्वेन उपासको हि बुद्धिस्थः अस्येहास्ति नास्तीति अस्तित्वनास्तित्वयोः सप्रतियोगिकत्वावगमानन्तरं चोदयितुरनुभाषणवाक्ये सर्वे च कामा इत्यनुभाषणाद्यच्छब्दो भोग्यजातपर इत्यभिप्रायः। फलितमर्थमाह "निरतिशयभोग्यत्वमि"ति, यथा समुद्रे गोष्पदपल्वलादीनामन्तर्भाववचनात् समुद्रस्यानवधिकजलौघत्वं सिद्ध्यति एवं सर्वं तदस्मिन् समाहितमित्यनेन निरतिशयभोग्यत्वसिद्धिरित्यर्थः। ननु कथमस्य वाक्यस्यामुख्यार्थत्वमाश्रीयते? जीवभोग्यवस्तूनामाधारत्वमुक्तं किं न स्यात्, उच्यते अस्येतिपदं तावन्न ब्रह्मपरं यच्चास्य नास्ति सर्वमस्मिन् समाहितमिति व्याघातात्, न च जीवमात्रपरं जीवविशेषकस्योपासकस्य बुद्धिस्थत्वात् उपासकस्य स्वर्गपश्वादिकं न भोग्यमिति तदाधारत्वकथनमनुपपन्नं तस्य च ब्रह्मैव प्राप्यं तस्यापरिच्छिन्नत्वमितरफलान्तवत्त्वं चेहैवानन्तरमुच्यते अत निरतिशयभोग्यतापरत्वम् अन्वेष्टव्यतोपयुक्तत्वाच्च निरतिशयभोग्यतापरत्वं युक्तम्। नन्वानन्दत्वस्य स्वरूपनिरूपकधर्मतया सर्वविद्यानुयायित्वादर्थसिद्धमिति निरतिशयभोग्यत्वं न पृथग् वाच्यं नैवं स्वरूपनिरूपकस्य सत्यत्वस्यात्र पृथगुक्तत्वात् अपेक्षितेष्वर्थेषु अनुक्तस्य ह्यन्यतो ग्राह्यत्वं न तूक्तपरित्यागेनान्यतो ग्राह्यत्वं युक्तम् अतो यथोक्त एवार्थः, "अथ तं चेत् ब्रूयुरि"त्यादि चोद्यपरिहारवाक्यानामर्थं हृदि निधायाह "तस्य दहराकाशस्येति, अस्मिँश्च यदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि भूतानि सर्वे

च कामाः यदैनं जराऽवाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यत इति चोद्यं किं तदत्र विद्यत इति प्रश्नस्य प्रतिवचनम् अस्मिन् कामाः समाहिता इति वक्ष्यते मध्ये चोद्यान्तरमिदमुत्थितं शरीरान्तर्वर्तिनि दहराकाशे सर्वद्यावापृथिव्यादिकं स्थितं चेद्देहप्रध्वंसे तदन्तर्गतस्याकाशस्याऽपि हृत्पुण्डरीकस्येव प्रध्वंससम्भवात् तस्य द्यावापृथिव्याद्याश्रयत्वमनुपपन्नं देहप्रध्वंसेऽपि द्यावापृथिव्याद्यवस्थानात् अस्थिरत्वादेव निरतिशयभोग्यत्वं च अनुपपन्नमिति, एवं चोद्योत्थानबीजं सूचयति "देहावयवभूतहृदयान्तर्वर्तित्वेऽपी"ति, यदैनं जराऽवाप्नोति एतच्छब्दः पूर्वप्रकृतं व्यवहितमपि ब्रह्मपुराख्यं शरीरं परामृशति जरादिस्पर्शाभिधानत्वात् न तु तदन्तर्वर्तिपरामर्शी तस्य सत्यत्वस्य वक्ष्यमाणत्वादित्यभिप्रायेण देहावयवेत्युक्तं चोद्यपरे श्रुतिवाक्ये सर्वं समाहितमिति द्यावापृथिव्याद्युपलक्षितभोग्यभोगोपकरणभोगस्थानाधारत्वमनूदितं सर्वाणि भूतानीति सूर्याचन्द्रमसौ नक्षत्राण्युपलक्षितभोक्तृवर्गाधारत्वमनूदितं सर्वे च कामा इति निरतिशयभोग्यत्वमनूदितं पुरोवादिवाक्यानुगुणत्वादनुवादिवाक्यस्य ननु सर्वशब्दसङ्कोचेन जीवभोग्याधारपरमिदं वाक्यं मुख्यत्वोपपत्तेरिति नैवम् अमुख्यत्वं सोढव्यं प्रथमश्रुतसर्व-शब्दसङ्कोचस्यायुक्तत्वात् पुरोवाद्यानुरूप्यसिद्धरूपासकफलस्य निरतिशयतया वक्ष्यमाणत्वानुगुणत्वाच्च, न च गुणाष्टकविषयोऽयं चोद्यवाक्यस्थः काम-शब्दः अस्मिन् कामा इति तस्य वक्ष्यमाणस्य पूर्वमुक्तत्वायोगात् उक्तानुभाषणरूपत्वाच्चास्य वाक्यस्य, अतः सर्वे च कामा इति निरतिशयभोग्यत्वानुवादः, न जीर्यति न हन्यत इत्यनेन प्रतिवचनवाक्येनार्थसिद्धमाकारमाह। "परमकारणतयाऽति सूक्ष्मत्वेने"ति, कार्याद्वाय्वादेः कारणमाकाशादिकं हि सूक्ष्मं तत एव वाय्वादिविकारेऽप्याकाशस्य न तादृशविकारसम्भव इति तत्तत्कारणतत्त्वान्तरात्मनो निरतिशयसूक्ष्मत्वान्निर्विकारत्वमिति भावः। तत एवेति श्रुतिवाक्यस्थसत्य-शब्दस्य निर्विकारत्वमर्थ इति भावः। षष्ठीतत्पुरुषव्यावृत्त्यर्थमाह "ब्रह्माख्यमि"ति, सत्य-शब्दसामानाधिकरण्याद्ब्रह्मैतशरीरमित्यभिप्रायः। पुर-शब्दविषयत्वहेतुं गुणमाह "निखिलजगदि"ति, सत्यं ब्रह्मपुरमित्यन्तमवान्तरचोद्यपरिहारपरम्

अस्मिन् कामा इति तु प्रथमचोद्यप्रतिवचनं दहराकाशमस्मिन्निति निर्दिश्येति अव्यवहितैतत्सत्यं ब्रह्मपुरमित्यादिशब्दोपस्थापितत्वादस्येति भावः। गुणानां काम-शब्दवाच्यत्वमुपपादयति "काम्यभूतानि"ति, अवयवशक्त्येत्यर्थः । समाहिता इति पदस्यार्थमाह "दहराकाशान्तर्वर्तित्व"मिति, एवं दहराकाशस्य कामवैशिष्ट्यमुक्तं तदेवेति को दहराकाशः? स च कैः कामैः

सू० "अथ य इहात्मानमनुविद्य प्रव्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवतीत्यादिना दहराकाश-शब्दनिर्दिष्टमात्मानं तदन्तर्वर्तिनश्च काम्यभूतानपहतपाप्मत्वादिकान् गुणान् विजानतामुदारगुणसागरस्य तस्य परमपुरुषस्य प्रसादादेव सर्वकामावाप्तिसत्यसङ्कल्पता चोच्यते अतो दहराकाशः परं ब्रह्म तदन्तर्वर्ति चापहतपाप्मत्वादिकाम्यगुणजातं तदुभयमन्वेष्टव्यं विजिज्ञासितव्यमिति चोच्यत इति निश्चीयते तदेतद् वाक्यकारोऽपि स्पष्टयति "तस्मिन्यदन्त"रिति कामव्यपदेश इत्यादिना अत एभ्यो हेतुभ्यो दहराकाशः परमेव ब्रह्म

टी० विशिष्ट इत्यपेक्षायाम् एष आत्मेति वाक्यं गुणविशेषविशिष्टधर्मविशेषप्रतिपादकमित्यर्थः, अपहतपाप्मेत्यादिवाक्ये सत्यकाम-शब्दो न कामनायास्सत्यत्वपरः, अमोघाशत्वस्य सत्यसङ्कल्पशब्देनापि सिद्धत्वात् नापि भोगानां सत्यत्वपरः, इच्छाविशेषवाचकतया व्युत्पन्नस्य काम-शब्दस्य भोगवाचित्वाभावात्, नापि काम्यन्त इति व्युत्पत्त्या गुणमात्रपरः कतिपयगुणान्तराणां पृथगुक्तत्वात् असङ्कुचितावयवार्थसम्भवे गोबलीवर्दन्यायेनानुक्तगुणविषयतया सङ्कोचायोगाच्च, अतो भोग्यभोगोपकरणभोगस्थानोपरूपानित्याः काम्या अस्य सन्तीत्युच्यते तदक्षरे परमे व्योमन्नित्युक्तनित्यविभूतिविशिष्टत्वं सत्यकाम-शब्दार्थः, स्फुटीकृत्येति आकाङ्क्षितगुणगुणिविशेषप्रदर्शनं स्फुटीकारः । गुणगुणिनोभयोरप्युपास्यत्वं फलवाक्ये दर्शयि-

ष्यन् मध्यगतवाक्यानामर्थं वदति "यथा ह्येवे"ति, यथा ह्येवेह प्रजा अन्वाविशन्ति यथाऽनुशासनं यं यमन्तमभिकामा भवन्तियं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति तद् यथेह कर्मचितो लोक" इत्यादि प्रथमस्य यथा शब्दस्य तथोपजीवन्तीत्यन्वयः, इह लोके प्रजाः यथाऽनुशासनं राजशासनं यथा तथा अन्वाविशन्ति लभन्ते । किमित्यत्राह "यं यमन्तमि"ति, अन्तः फलं साधनानुष्ठानावसानभावित्वात् यं यमन्तं फलं क्षेत्रजनपदादिकं प्रति अभि कामाः—अभ्यर्थिनो भवन्ति तत्तत् फलं तथोपजीवन्तीति लौकिकराजसेवादिप्रवृत्त्या लौकिकफलभोगावुक्तौ । तस्य क्षयित्वमाह "तद्यथेह कर्मचितो लोक"इति, अलौकिकफलस्यापि तद्वत्क्षयित्वमाह "एवमेवामुत्रे"ति, दहराकाशतद्गुणोपासकानामन्तवत् फलभाक्त्वमाह "तद्य इहात्मानमननुविद्ये"त्यादिवाक्येन, अननुविद्य—अनुपास्य व्रजन्ति परलोकमिति शेषः, भाष्ये कर्म कुर्वतामिति तद्यथेह कर्मचित इत्यादिश्रुत्यर्थोऽभिप्रेतः अकामचार—शब्दार्थमाह "असत्यसङ्कल्पत्वञ्चे"ति, अनाविर्भूतगुणाष्टकत्वं विवक्षितम् । अथ य इहात्मानमनुविद्येति अत्रात्मानमेतांश्च सत्यान्कामानिति दहराकाशतदन्तर्वर्ति—शब्दार्थानुवादः कामचारो भवतीति सत्यसङ्कल्पत्वपर्यन्तगुणाष्टकाविर्भावो विवक्षितः एतांश्च सत्यान्कामानिति वाक्ये कामशब्दोऽपहतपाप्मत्वादिगुणाष्टकपरः न तु सत्यकामपदोक्तकामपरः एतांश्चेत्येतत्—शब्दस्य प्रकृतगुणविषयतया काम—शब्दस्य काम्यन्त इत्यवयवशक्त्या वृत्त्युपपत्तेः, अस्मिन्कामाः समाहिता इति वाक्यस्थकाम—शब्दैकार्थ्याच्च सत्य—शब्दविशेषितत्वं प्राकृतनिर्विशेषणकाम—शब्दार्थप्रत्यभिज्ञाविरोधि सत्यकामपदवाच्यप्रत्यभिज्ञापकं चेति चेन्न ततः पूर्वं श्रुतस्यैतच्छब्दस्य प्रकृतगुणपरामर्शक्षमतया पश्चाच्छ्रुतस्य सत्य—शब्दस्य तदनुविधायित्वात्, त इमे सत्याः कामा इति प्रकृतानां कामानां सत्य—शब्दविशेषितत्वाच्च अनेन श्रुत्यर्थोपन्यासेन पूर्वप्रस्तुतशङ्कायाः परिहृतत्वं दर्शयति "अतो दहराकाश"इति, ननु उपक्रमानुगुणमुपसंहारो वर्णनीयः तत् कथमुपसंहारानुगुणमुपक्रमार्थवर्णनमिति चेन्न उपक्रमावगतस्य तदन्तर्वर्तिनोऽन्वेष्टव्यत्वस्य बाधाभावात् उपसंहा-

रावगतस्य आत्मनोऽप्यन्वेष्टव्यत्वमित्यस्य उपक्रमे विवक्षितत्वमात्रं ह्युक्तं न तु ह्युपक्रमावगतप्रहाणम् । ननु ह्युपक्रमवाक्यमन्तर्वर्तिन एव अन्वेष्टव्यत्वपरं स्यात् आत्मनो अन्वेष्टव्यत्वं तु उपसंहारवाक्यादेव अवगतं स्यात् किं क्लिष्टनिर्वाहेणेति चेन्न फलवाक्यगतोपासनानुवादस्य पुरोवादस्य चैकरूपताया अवश्याभ्युपगन्तव्यत्वात्, न ह्यप्राप्तं गुण्युपासनमनुवदितुं शक्यं न च "अथ य इहात्मानमि"ति वाक्यं विशिष्टविधिपरं गुणांशस्य प्राप्तत्वात्, नापि गुणानुवादेन गुण्युपासनविधायकम् उभयानुवादेन फलप्रतिपादनपरत्वात् अतोऽप्राप्तस्यानुवादायोगात् फलवाक्यानूदितस्य गुण्युपासनस्य गुणोपासनस्येव तदन्वेष्टव्यमिति वाक्येनैव विहितत्वमवश्याभ्युपगन्तव्यमिति दहराकाशगुणाष्टकयोरुभयोरप्युपासनं तदन्वेष्टव्यमिति विहितम् । अथान्तर्वर्तिनः कामत्वं संप्रदायतो द्रढयति "तदेतदि"ति सूत्रार्थमुपसंहरति "अत एतेभ्य" इति,

इतश्च दहराकाशः परं ब्रह्म

## सू० गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १४ ॥

भा० "तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दत्यनृतेन हि प्रत्यूढा"इति, एतमिति प्रकृतं दहराकाशं निर्दिश्य तत्राहरहस्सर्वेषां क्षेत्रज्ञानां गमनं गन्तव्यस्य तस्य दहराकाशस्य ब्रह्मलोक—शब्दनिर्देशश्च दहराकाशस्य परब्रह्मतां गमयतः, कथमनयोरस्य परब्रह्मत्वसाधकत्वमित्यत आह "तथा हि दृष्टमि"ति, परस्मिन् ब्रह्मणि सर्वेषां क्षेत्रज्ञानामहरहः सुषुप्तिकाले गमनमन्यत्राभिधीयमानं दृष्टम् "एवमेव खलु

टी० सू० गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च, अहरहर्गच्छन्त्य इति सुषुप्तौ गमनं विवक्षितं तच्च पृथक्प्रतिपत्तिव्यवहारानर्हतया स्थिति निर्गमनं पृथक् प्रतिपत्त्यर्हतापत्तिः कथमनयोरिति कथं श्रुतिषु परमात्मधर्मत्वेन अन्वयदर्शनाद्वा जीवादिप्रतिपादकवाक्येष्वदर्शनेन जीवादिष्वसम्भावितत्वाद्वा गतिशब्दयोः परमात्मसाधकमित्यर्थः तथा हि दृष्टमि''ति सूत्रखण्डं परमात्मपरसपक्षभूतवाक्येष्वन्वयदर्शनभूतपरं व्याचष्टे ''तथा हीति, गतेः श्रुत्यन्तरप्रसिद्धिं दर्शयति ''परस्मिन्नि''ति, शब्दस्यान्यत्र प्रसिद्धिं दर्शयति ''तथे''ति, लिङ्गं चेति सूत्रखण्डं जीवादिप्रतिपादकविपक्षभूतवाक्येष्वदर्शनरूप–

भा० सोम्येमाः सर्वाः प्रजास्सति संपद्य न विदुः सति संपद्यामह'' इति, सत आगम्य न विदुः स त आगच्छामह इति, तथा ब्रह्मलोक–शब्दस्य परस्मिन् ब्रह्मणि दृष्टः ''एष ब्रह्मलोकः सम्राडिति होवाचे''ति मा भूदन्यत्र ब्रह्मणि गमनदर्शनम् एतदेव तु दहराकाशे सर्वेषां चेतनानां प्रलयकाल इव निरस्तनिखिलदुःखानां सुषुप्तिकाले ऽवस्थानं श्रूयमाणमस्य परब्रह्मत्वे पर्याप्तं लिङ्गं तथा ब्रह्मलोक–शब्दस्य समानाधिकरणवृत्त्या अस्मिन् दहराकाशे प्रयुज्यमानो ऽस्य ब्रह्मत्वे प्रयोगान्तरनिरपेक्षं पर्याप्तं लिङ्गमित्याह ''लिङ्गं चे''ति,

टी० व्यतिरेकाद् गतिशब्दयोः साध्यसाधकत्वपरं व्याचष्टे ''मा भूदि''ति, तत्र गतेः श्रुत्यन्तरेऽन्वयदर्शननैरपेक्ष्येण साधकत्वमाह ''एतदेव त्वि''ति, श्रूयमाणमिति निधिदृष्टान्तसचिवमिति भावः । तथेति तत्र गतेरित्यादेर्वाक्यस्योदाहृतत्वादत्र निधिदृष्टान्तस्य श्रुतत्वान्निधिदृष्टान्तावगतपरमपुरुषार्थभावस्येति योजनान्तरे अनन्तरमेवोच्यमानत्वाच्च निधिदृष्टान्तश्च परम–

सू० निषादस्थपतिन्यायाच्च षष्ठीसमासात्समानाधिकरणसमासो न्याय्यः, अथवा अहरहर्गच्छन्त्य इति न सुषुप्तिविषयं गमनमुच्यते, अपि त्वन्तरात्मत्वेन सर्वदा वर्तमानस्य दहराकाशस्य परमपुरुषार्थभूतस्योपर्युपरि अहरहर्गच्छन्त्यः सर्वस्मिन् काले वर्तमानाः तमजानन्त्यस्तं न विदन्ति न लभन्ते यथा हिरण्यनिधिं निहितं तत्स्थानमजानानास्तदुपरि सर्वदा वर्तमाना अपि न लभन्ते तद्वदित्यर्थः, स्वयमेवमन्तरात्मत्वेन स्थितस्य दहराकाशस्योपरितन्नियमितानां सर्वासां प्रजानामजानतीनां सर्वदा गतिरस्य दहराकाशस्य परब्रह्मतां गमयति, तथा ह्यन्यत्र परस्य ब्रह्मणोऽन्तरात्मतयाऽवस्थितस्य स्वनियाम्याभिः स्वस्मिन् वर्तमानाभिः प्रजाभिरवेदनं दृष्टं यथा अन्तर्यामिब्राह्मणे

पुरुषार्थत्वज्ञापकः, अतो दृष्टान्तानुगृहीतमहरहर्गमनमेकं पर्याप्तं लिङ्गमित्यर्थः, शब्दस्य च न्यायविशेषानुगृहीतस्य श्रुत्यन्तरोऽन्वयनिरपेक्षं साध्यसाधकत्वमाह "तथा ब्रह्मलोके"ति, ननु कथं ब्रह्मलोक-शब्दस्य समानाधिकरणवृत्तित्वावगमः? व्यधिकरणवृत्तावपि तदेव हि शब्दरूपमिति शङ्का—

सू० "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानम् अन्तरो यमयति अदृष्टो द्रष्टा अश्रुतः श्रोते"ति च मा भूदन्यत्र दर्शनं स्वयमेव त्वियं निधिदृष्टान्तावगतपरमपुरुषार्थभावस्यास्य हृदयस्थस्योपरि तदाधारतयाऽहरहस्सर्वदा सर्वासां प्रजानामजानतीनां गतिरस्य परब्रह्मत्वे पर्याप्तं लिङ्गम्

टी० यां विवक्षितमनुग्राहकं दर्शयति "निषादे"ति, "एतया निषादस्थपतिं याजयेदि"त्यत्र कर्मधारयपरिग्रहे निषादजातीयस्य स्थपतेरग्निविद्ययोरसम्भवेन स्वतो निरधिकारत्वात्, षष्ठीसमासपरिग्रहे च त्रैवर्णिकान्तर्भूतस्थपतिकटाक्षेणापि निषादस्थपति-शब्दनिर्वाहसम्भवात् षष्ठीसमासपरिग्रहेणापशूद्राधिकरणन्यायानुरोधो युक्त इति प्राप्तेऽभिहितं "स्थपतिर्निषादः स्याच्छब्दसामर्थ्यादि"ति अयमर्थः षष्ठीसमासपक्षे निषादसम्बन्धविशिष्टोऽभिधेयः कर्मधारयपक्षे निषादत्वविशिष्टः तत्र षष्ठ्या अश्रवणान्निषादप्रातिपदिकेन विभक्त्यर्थो लक्षणीयः, न चेदं युक्तं श्रौतार्थपरिग्रहे विरोधाभावात्, न चाग्निविद्याराहित्यं दोषः द्रव्यवदेतदुपयोग्यग्निविद्ययोरपि यथाकथञ्चित् आर्जनस्य विध्यनुमतिसम्भवात्, तस्मात् कर्मधारयएव न्याय्य इति, एतन्न्यायानुगृहीतो ब्रह्मलोक-शब्दः श्रुत्यन्तरेऽन्वयनिरपेक्षः परमात्मत्वसाधक इत्यर्थः। तर्हि "स सामभिरुन्नीयते ब्रह्मलोकमि"त्यत्र कथं ब्रह्मलोक-शब्दस्य वैयधिकरण्यम्? उच्यते नयतिः प्राप्तिवचनः नित्यप्राप्तस्य ब्रह्मणः प्राप्तिर्नामानुभवः, स च परात्परं पुरुषमीक्षत इत्युक्तः, अतो ब्रह्मानुभवः पुनर्न वक्तव्य इति उन्नीयत इत्युत्पूर्वनयतिरुपरिस्थितिप्राप्तवाची न बुद्धिवाची, प्राप्यश्च लोक इति वैयधिकरण्यम्, अत्र तु तादृशानुपपत्त्यभावात् सामानाधिकरण्यमिति ब्रह्मलोक-शब्दस्य चतुर्मुखलोकपरत्वशङ्कानिवर्तकलिङ्गमहरहर्गमनं, न हि प्रजाः प्रत्यहं चतुर्मुखलोकं गच्छन्तीत्येदर्थपरं, लिङ्गं चेति सूत्रखण्डमन्यैर्व्याख्यातं तदानीं गतिब्दयोः परस्परोपपाद्योपपादकभावेन समुच्चित्य परमात्मत्वसाधकत्वं स्यात् न त्वेकैकस्य ततोऽपि परं प्रत्येकं पर्याप्तलिङ्गसिद्धिरित्यभिप्रायेण तदनादृत्यैवं व्याख्यातं, गतिशब्दमात्रस्य योजनान्तरमाह "अथवे"ति, पूर्वयोजनायां दृष्टान्तएवोपरिशब्दान्वयः अत्र तु दार्ष्टान्तिकेऽपि दहराकाशस्योपरीति धर्म्यैक्याभिप्रायेणैवमुक्तम्, अन्तरात्मतया स्थितत्वेन ह्याधारः न तु उपासकानुग्रहतया स्थितत्वेन उपरि तन्नियमितानामिति अस्मिन् प्रकरणे सत्य-शब्दनिर्वचनावगतं हि चेतनाचेतनयोर्नियन्तृत्वं परस्य य आत्मानमन्तरो यमयतीत्यादिश्रुत्यन्तरप्रसिद्धं चेत्यभिप्रेतम्। अस्य परब्रह्मत्वे पर्याप्तं लिङ्गमिति लिङ्गमित्यस्यैवार्थः॥

सू० इतश्च दहराकाशः परं ब्रह्म—

## सू० धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १५ ॥

"अथ य आत्मे"ति प्रकृतं दहराकाशं निर्दिश्य "स सेतुर्विधृतिरेषां लोकानामसम्भेदाये"त्यस्मिन् जगद्विधरणं श्रूयमाणं दहराकाशस्य परब्रह्मतां गमयति जगद्विधरणं हि परस्य ब्रह्मणो महिमा "एष सर्वेश्वर एष सर्वभूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाये"ति "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इत्यादिभ्यः, स चायं तस्य परस्य ब्रह्मणो धृत्याख्यो महिमाऽस्मिन् दहराकाश उपलभ्यते अतो दहराकाशः परं ब्रह्म ॥

## सू० प्रसिद्धेश्च ॥ १६ ॥

सू० आकाश—शब्दस्य परस्मिन् ब्रह्मणि प्रसिद्धः, "को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्" "सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्त" इत्यादिषु अपहतपाप्मत्वादिगुणसनाथा प्रसिद्धिर्भूताकाशप्रसिद्धेर्बलीयसीत्यभिप्रायः ।

सू० धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ अस्य=परमात्मनः महिमा धृतिः तस्याऽस्मिन्=दहराकाशे उपलब्धेरित्यर्थः, धृतिः=विधृतिः अतो दहराकाशः परं ब्रह्मेति भूताकाशादन्यत्वे तात्पर्यं भूताकाशत्वं प्रतिक्षिप्तमिति हि वक्ष्यते, स एव वस्तुगत्या परमात्मेति परं ब्रह्मेत्युक्तम् सू० प्रसिद्धेश्च प्रसिद्धिप्राचुर्यं हि भूताकाश इत्यत्राह "अपहते"ति, पूर्वसूत्रचतुष्टयकृत्यं वदन्नुत्तरेषां सूत्राणां कर्तव्यमाह "एवं तावदि"ति, पूर्वोक्तहेतूनां

स्वरसतो जीवव्यावर्तनक्षमत्वेऽपि वक्ष्यमाणशङ्काप्रतिक्षेपानन्तरमेव स्वारस्य-स्यानपोद्यत्वसिद्धिरतो भूताकाशत्वव्युदसने तात्पर्यमिति भावः, तत्परत्वे व्युदस्ते हेत्वन्तरेण जीवपरत्वमाशङ्क्योक्तहेतुभिरेव तन्निरासः क्रियतेऽन-न्तरसूत्रेण उपक्रमत इत्यनेन अनन्तरसूत्रं नाधिकरणान्तरमिति सूचितम्, अविच्छेदप्रतीतेः सू० इतरपरामर्शात्स इति चेन्नासम्भवात् ॥

स्रु० एवं तावद्दहराकाशस्य भूताकाशत्वं प्रतिक्षिप्तम्। अथेदानीं दहराकाशस्य प्रत्यगात्मत्वमाशङ्क्य निराकर्तुमुपक्रमते ॥

## सू० इतरपरामर्शात् स इति चेन्नासम्भवात् ॥१७॥

यदुक्तं वाक्यशेषवशाद्दहराकाशः परं ब्रह्मेति तदयुक्तं वाक्यशेषे परस्मादितरस्य जीवस्यैव साक्षात्परामर्शात् "अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुप-सम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाच एतदमृतमभयमेतद् ब्रह्मे"ति, यद्यपि दहरोऽस्मिन्नन्तर आकाश इति हृदयपुण्डरीकमध्यवर्तितयोपदिष्टस्याकाशस्योपमानोपमेयभावाद्यसम्भवाद्भूताकाशत्वं न सम्भवति तथाऽपि वाक्यशेषवशात् प्रत्यगात्मत्वं युक्तमाश्रयितुम्, आकाश-शब्दोऽपि प्रकाशादियोगाज्जीव एव वर्तिष्यत इति चेत् तत्रोत्तरं नासम्भवादिति, नायं जीवः, न ह्यपहत-पाप्मत्वादयो गुणा जीवे सम्भवन्ति ।

इतर-शब्दस्य प्रतिसम्बन्धिसापेक्षत्वात्त्वादाह "परस्मादि"ति, जीवस्यैवेति दहराकाशस्य परमात्मत्वं वदतोऽपि अस्य वाक्यस्य जीवपरत्वं

## सू० उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १८ ॥

स्रु० उत्तरात् प्रजापतिवाक्यात् जीवस्यापहतपाप्मत्वादिगु-

णयोगो निश्चीयते चेत् एतदुक्तं भवति प्रजापति-
वाक्यं जीवपरमेव तथाहि "य आत्माऽपहतपाप्मा वि-
जरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः
सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च
लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य वि-
जानाती"ति प्रजापतिवचनमैतिह्यरूपेणोपश्रुत्यान्वेष्टव्या-
त्मस्वरूपजिज्ञासया प्रजापतिमुपसेदुषे मघवते प्रजाप-
तिर्जागरितस्वप्नसुषुप्त्यवस्थं जीवात्मानं सशरीरं क्रमेण
शुश्रूषुयोग्यतापरिचित्तिविषयोपदिश्य तत्र तत्र भोग्यमप-
श्यते परिशुद्धात्मस्वरूपोपदेशयोग्याय तस्मै मघवते

टी० संप्रतिपत्तमिति एवकाराभिप्रायः, साक्षात्परामर्शादिति न जी-
वसम्बन्धिलिङ्गद्वारा परामर्शः किन्तु तद्वाचकशब्देन परामर्शः तस्मादि-
त्यर्थः "अथ य एष इत्येतच्छब्दो हि प्रकृतपरामर्शी, अतः पूर्ववाक्येष्वपि
जीव एव प्रतिपाद्यत इति परामर्श-शब्दाभिप्रायः जीवपरामर्शसहकारिणी
तदन्तर्वर्त्यन्वेष्टव्यान्तरप्रतीतिश्च जीवत्वहेतुरनुसन्धेयः, अणोर्जीवस्य वि-
पुलतरप्रसिद्धाकाशोपमेयत्वसर्वाधारत्वाद्यनुपपत्तेर्भूताकाशप्रतिक्षेपयुक्तिभि-
रेव जीवत्वशङ्काऽपि प्रतिक्षिप्तेत्यत्राह "यद्यपी"ति, उपमानोपमेयभावाद्य-
स्वारस्यं वाक्यशेषवशात्सोढव्यमिति भावः । 'न ह्यपहतेति परामर्शान्यथा-
सिद्धेर्वैयर्थ्यमाणत्वादपहतपाप्मत्वादिश्रुतिस्वारस्यमनपोदितमिति भावः ।
सू० उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १८ ॥ सूत्रे शङ्काखण्डस्यार्थमाह
"उत्तरादि"ति, उत्तरवाक्यानुसारेण दहरवाक्येऽपि जीवस्यैवेति निश्ची-
यत इत्यर्थः । किमिदं प्रजापतिवाक्यं तत्रापहतपाप्मत्वादिः प्रतीतोऽपि
परमात्मन एव स्यादित्यत्राह "एतदुक्तमि"ति, जीवपरमेवेति स उत्तमः
पुरुष इत्यनेन परमात्मपरत्वं न शङ्क्यं तदुक्तिः प्रासङ्गिकीति भावः । मघ-
वत इति यद्यपि विरोचनोऽपि प्रजापतिमुपासदत् तथाऽपि छाया-

पुरुषाधिगममात्रतृप्ततया अपक्रान्तोऽतस्तदनुक्तिः, इन्द्र एवार्थतत्त्वबुभुत्सया स्थित इति सच्छिष्यत्वात्तन्निर्देशः । खण्डपञ्चकस्यार्थं संक्षेपेणाह "जागरिते"ति, नाहमत्र भोग्यं पश्यामीत्यस्यार्थमाह "तत्र तत्र भोग्यमपश्यत" इति, य आत्मेत्यादिप्रजापतिवाक्यं परिशुद्धजीवस्वरूपाभिप्रायं सच्छ्रुत्वा पश्चादुपसन्नयोरिन्द्रविरोचनयोः प्रजापतिरुपदिशति "य एषोऽक्षिणि पुरुषो दृश्यत इति नेहाक्षिपुरुषः परमात्मा एतत्त्वेव ते भूयोऽनुव्याख्यास्यामी"त्युपक्रम्य स्वप्नाद्यवस्थाभिधानात्, न चेह जीवस्याक्षिणि स्थितिरुपदिश्यते किन्तु अक्षिविकाराविकाराभ्यां जीवस्य स्थितिगती निश्चीयेते, अतोऽक्ष्णोः जीवस्थितिगतिसूचकत्वादक्षिणि दृश्यत इत्युक्तम्, अस्मिन् कर्मणि अस्य सामर्थ्यं दृष्टमितिवत् । ततश्च गृहे स्थित्वा निर्गच्छन् पुरुषो यथा गृहादन्यः एवं शरीरे स्थितिगतिमानात्मा देहातिरिक्त इत्युक्तं भवति, अमृतमिति निरतिशयसुखरूपत्वम् अभयमिति दुःखासंभिन्नत्वं ब्रह्मेत्यसङ्कुचितज्ञानतया बृहत्त्वं ब्रह्मात्मकत्वं वोक्तम् । एवं प्रजापतिहृदयानभिज्ञानेन छायापुरुष उपदिष्ट इति मत्वा पुनः पप्रच्छतुः कतम एष इत्यादिना सर्वेष्वेतेषु नेत्रादिस्थानेषु परिख्यायते कतम एष इत्यर्थः पुनश्चाक्षुषदेहस्यानात्मत्वमिदन्तयाऽवभासनात् अन्वयव्यतिरेकाभ्यां च दर्शयितुम् उदशरावब्राह्मणेन केवलदेहस्य वसनाभरणाद्यलङ्कृतदेहस्य च च्छायादर्शने प्रजापतिनियोगः तयोस्तद्दर्शनं चोक्तं, यथा वसनाभरणादिरन्वयव्यतिरेकाभ्यामनात्मा एवं चाक्षुषत्वादिदंकारगोचरत्वाच्च देहोऽनात्मेति प्रजापतेरभिसन्धिः, विरोचनोऽपक्वकषायत्वात्तावता तृप्तो जगाम, इन्द्रस्तु प्रजापतेरभिसन्धिमजानन्नपि देहस्यामृतत्वाभयत्वानुपपत्तिं दृष्ट्वा नाऽहमत्र भोग्यं पश्यामीति पुनरुपससाद, प्रजापतिस्तु जाग्रद्दशायां वसनादीनामिव जीवाच्छरीरस्यापगमाभावाद्व्यतिरेको दुर्दर्श इति मत्वा स्वाप्नदेहाभिमानिन आत्मनश्शयानदेहव्यतिरेकस्य स्ववगमत्वात् स्वप्नावस्थामुपपदिदेश तदभिप्रायानभिज्ञ इन्द्रः स्वप्ने अमृतत्वाभयत्वानुपपत्तिं जानन् नाऽहमत्र भोग्य पश्यामीत्युपासदत्, बाह्याभ्यन्तरदेवत्वमनुष्यत्वरागद्वेषाद्यौपाधिकाकारकालुष्यविरहेण स्वयं प्रकाशमात्मानं दर्शयितुं

सुषुप्त्यवस्थामुपादिशत् तदानीमपीन्द्रस्तदभिप्रायाज्ञानेनामृतत्वाभयत्वाद्यनुपपत्त्या नाऽहमत्र भोग्यं पश्यामीत्युपसन्नोऽभूत्, एवमनतिस्फुटं गहनमुपादिशतः प्रजापतेस्तात्पर्यमुक्तं शुश्रूषुयोग्यतापरिचित्तिषयेति मघवन्मर्त्यं वा इदं शरीरमित्यादिना निष्कृष्टात्मस्वरूपं स्फुटतरमुपादिक्षत् । तदुपदेशप्रकारमाह ''शरीरस्याधिष्ठानतामि''त्यादिना । अथ मुक्त्यवस्थोपदेशं दर्शयति ''एवमेवैष सम्प्रसाद''इति, एवमित्यादिकमुपाददानस्यायमभिप्रायः अस्माच्छरीरादित्यादिवाक्यस्य परोक्तार्थो दार्ष्टान्तिकवाक्याननुगुणत्वादिदोषविध्वस्त इति, तथाहि शरीरात्समुत्थानं नाम श्रवणमननध्यानाभ्यासरूपविवेकः स्वेन रूपेणाभिनिष्पत्तिर्नाम प्रपञ्चविलापको वृत्तिरूपसाक्षात्कारः तेन परं ज्योतिर्भवति उपसम्पद्येति निर्देशो मुखं व्यादाय स्वपितीतिवदिति केचिद्व्याचक्षते तदयुक्तं समुत्थान-

सू० ''मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतत्वस्याशरीरस्यात्मनोऽधिष्ठानमि''ति शरीरस्याधिष्ठानतामात्मनश्चाधिष्ठातृतामशरीरस्य च तस्यामृतत्वस्वरूपतां चोक्त्वा ''न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत'' इति कर्मारब्धशरीरयोगिनः तदनुगुणसुखदुःखभागित्वरूपानर्थं तद्विमोचे च तदभावमभिधाय ''एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत''इति जीवात्मनः स्वरूपमेव शरीरविमुक्तमुपदिदेश ''स उत्तमः पुरुषः स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरमि''ति प्राप्यस्य परस्य ज्योतिषः पुरुषोत्तमत्वं निवृत्ततिरोधानस्य परं ज्योतिरुपसंपन्नस्य प्रत्यगात्मनो ब्रह्म-

लोके यथेष्टभोगावाप्तिं प्रियाप्रियावियुक्तकर्मनिमित्तश-रीराद्यपुरुषार्थाननुसन्धानं चाभिधाय स यथा प्रयोग्य आचरणे युक्त एवमस्मिन् शरीरे प्राणो युक्त इति यथो-क्तस्वरूपस्यैव संसारदशायां कर्मतन्त्रं शरीरयोगं

टी० शब्दस्य विवेकवाचित्वाभावात् शरीरविषयो विवेक इति पञ्चमी न घटते तस्या द्वितीयार्थत्वाभावात् शरीरादात्मनो विवेकश्चेत् आत्मानमित्यध्याहारः "तयोर्ध्वमायन्नमृतत्वमेती"त्यादिश्रुत्यन्तरैकार्थ्य-प्रत्यभिज्ञाविरोधश्च शरीराभिमानादुत्थानमिति चेत् शरीर-शब्दस्य लक्ष-णा शरीरादात्मनः उत्थानं विवक्षितं चेत् सशरीरस्य तत्सम्भवान्मोक्षस्य चा-शरीरतालक्षणत्वादस्य वाक्यस्य मोक्षविषयत्वं न स्यादिति चेत् अर्चिरा-दिमार्गगमनस्य सूक्ष्मदेहसापेक्षत्वात्तेन गतवत एव सवासनसर्वहेयप्रहाणात्त्व मुख्यार्थपरत्वे सत्येव मुक्तिविषयत्वोपपत्तेः, ल्यबन्तपदस्याविवक्षितक्रमत्वं च क्लिष्टं गत्यभावद्योतकं सम्पद्याविर्भाव इति सूत्रविरोधश्च न ह्यावि-र्भूय सम्पत्तिरिति सूत्रितं भेदप्रविलयातिरेकेण परज्योतिर्भावात्मकार्था-न्तरासम्भवात् परं ज्योतिरुपसम्पद्येति निर्द्देशवैयर्थ्यं च परज्योतिर्भावो नाम न धर्मान्तरं निर्विशेषवस्तुन्युत्पद्यते न चाविर्भवति । ननु परज्योति-र्भावो नाम अद्वितीयत्वं तेन निवर्तकज्ञानसद्वितीयत्वव्युदास इति चेन्न सम्पत्ति-शब्दस्येतरनिवृत्तिवाचित्वाभावात्, न हि घटो भवतीत्युक्ते दण्ड-चक्रादिद्वितीयनिवृत्तिरुक्ता भवति, उपसम्पत्तेः सकर्मकत्वप्रतीतिस्वारस्य-विरोधश्च, अस्य वाक्यस्यैवमर्थमपरत्वे दृष्टान्तोपस्थापकपूर्ववाक्यविरोधश्च स्यात्, पूर्वं हि अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इत्युक्त्वा अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरिति वाय्वादीनां कर्मकृतशरीराभावेन प्रियाप्रि-यानन्वयं दर्शयित्वा तद्यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपस-म्पद्य स्वेन रूपेणाभिनिष्पद्यन्त इत्युक्तं, न हि वाय्वादीनामाकाशात्स-मुत्थानं नाम विवेकज्ञानरूपम् अपि तु स्थितिवेलायां स्वकार्यकरणायोर्ध्व-देशेऽभिवृद्धिः, पर-शब्दो वाय्वादीनां कारणवस्तुवाची, ज्योतिः-शब्दस्तु

कारणानां कार्योत्पादनद्वारेण तदभिव्यक्तिहेतुतया प्रयुक्तः, वाय्वादीनि च स्वकारणद्रव्यमुपगम्य कार्यावस्थां हित्वा कारणसदृशेन रूपेण विशिष्टानि भवन्ति वायुर्ह्यावहप्रवहादिरूपेण सप्तविधत्वं हित्वा वायुत्वमात्रेणावतिष्ठते विद्युच्च विद्युत्त्वं हित्वा तेजस्त्वेन अभ्रस्तनयित्नू चाभ्रत्वादिप्रहाणेन स्वकारणभूतरूपेण, एवं जीवश्च मार्गविशेषेण गत्वा परं ब्रह्म प्राप्य संसार्यवस्थाप्रहाणेन परमात्मतुल्यरूपेणाविर्भवतीत्येवमर्थे सति हि दृष्टान्तदार्ष्टान्तिकवाक्यसामञ्जस्यं भवति अस्य वाक्यस्य सुषुप्तिविषयत्वे ऽप्युक्तदूषणानतिवृत्तिरनुसन्धेया यतः अस्माच्छरीरादित्यादिति वाक्यं न मुक्तस्य जीवस्य स्वरूपैक्यप्रतिपादकम् अत एव नासम्भवादिति सूत्रकारेण भेदनिर्द्देशो न जीवपरयोर्वास्तवभेदाभिप्रायः, अपि तु व्योम्नि मालिन्यादिकमिव परस्मिन्नविद्याकल्पितजीवभावमपनेतुं जीवस्वरूपवैलक्षण्याभिप्राय इतीदमपि निरस्तं जैवं स्वरूपमपनिनीषोर्भेदनिर्द्देशे किं फलं यावद्भेदनिर्द्देशेन ईश्वरस्यासंसारित्वमप्रतिपन्नं न तावत्तदैक्यापत्तिः पुरुषार्थः स्यात् अतस्तद्रूपापत्तेः पुरुषार्थत्वाय तस्यासंसारित्वप्रतिपत्तये भेदनिर्द्देश इति चेत् तर्हि पश्चाच्चिकीर्षितेनैक्यावबोधनेन तस्य संसारितया तदैक्यापत्तेरपुरुषार्थत्वं को वारयेत् अविद्यानिवृत्तौ तत्कल्पितापुरुषार्थत्वं निवर्तत इति चेत् पुरुषार्थत्वप्रतिपत्ते र्जीववैलक्षण्यप्रतिपत्तिमूलकत्वाद्वैलक्षण्य निवृत्तेः पुरुषार्थत्वप्रतिपत्तिरपि निवर्तेत अनभिरूपे अभिरूपताबुद्धौ निवृत्तायां तस्मिन् स्पृहणीयताबुद्धिनिवृत्तिवत् ततश्च

सू० युग्यशकटयोगदृष्टान्तेनाभिधाय "अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणी"ति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वागथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रमथ यो वेदेदं

मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुरिति" चक्षुरादीनां करणत्वम्

टी० तद्भावापत्तिरपुरुषार्थ एव स्यात्। किञ्च ऐक्यमुपदिदिक्षोर्भेदवादमुखेन असंसारित्वं दर्शयतः प्रतारकत्वं च स्याद् भेदवादो ऽनुवादरूपः प्रतिषेधार्थः क्रियत इतीदमत्यन्तमयुक्तं जीवपरयोर्नियन्तृनियाम्यतादिलक्षणभेदस्यालौकिकत्वात् अतः श्रुतिसूत्रासामञ्जस्यम्, एवं मृषावादिनां स्थितम्। स उत्तमः पुरुष इति शब्देन परमात्मपरत्वशङ्कायां तत्परिहारायाह "प्राप्यस्य परस्य ज्योतिषः पुरुषोत्तमत्वमि"ति, जीवस्य प्राप्यतया पुरुषोत्तमप्रसङ्गः न तु प्रकरणप्रतिपाद्यतयेति भावः स उत्तमः पुरुष इति यदुपसंपद्यते स उपसदनीयः पुरुष उत्तमः पुरुष इति यदुपसंपद्यते स उपसदनीयः पुरुष उत्तम इत्यर्थः, स तत्र पर्येतीति सः =उपसंपत्ता तत्र=परमात्मनि पर्येति=तं परितोऽनुभवति। यद्वा अनुसंचरति कामरूप्यनुसञ्चरन् येन येन धाता गच्छतीति श्रुत्यन्तरात्। ननु य उपसम्पद्याभिनिष्पद्यते स उत्तमः पुरुष इति युक्तं तच्छब्देन प्रथमानिर्दिष्टप्रकृतपरामर्शस्वारस्यात् स तत्र पर्येतीत्यनन्तरवाक्यस्यप्रथमान्ततच्छब्दैकार्थत्वप्रतीतेश्च नैवम्, उपसम्पत्तव्यस्यापि प्रकृतत्वात् प्रथमानिर्दिष्टेतरविषयत्वे तच्छब्दस्वारस्याभावे ऽप्युत्तमपुरुष–शब्दयोरुभयोरपि स्वारस्याच्च, न ह्युत्तमपुरुष–शब्दो जीवेश्वरसाधारणः पुरुषत्वमपि हि भगवत्येव स्वरससिद्धं केवल एकवचनान्तः पुरुष–शब्दोऽपि हि भगवत्येव हि स्वरसः कुत उत्तमपुरुष–शब्दः उत्तमः पुरुषस्त्वन्य इति स्मृत्यर्थस्य झटिति प्रत्यभिज्ञानाच्च एवं च सति स तत्रेति सप्तम्यन्ततच्छब्दस्याव्यवहितोत्तमपुरुषपरामर्शित्वं च स्यात् न तु व्यवहितपरज्योतिःपरामर्शास्वारस्यं ननु स उत्तमः पुरुष इति मुक्तस्य ब्रह्मात्मकत्वपरं स्यात् तदा तच्छब्दस्वारस्यं च स्यात् प्रकृताप्रहाणात् नैवं स तत्रेत्यनन्तरवाक्ये स इति पदस्य वैयधिकरण्येन जीवपरामर्शे रीतिभेदेनास्वारस्यापातात्, तदपि पदं समानाधिकरणमस्त्विति चेन्न तत्रेति परमात्मनो वैयधिकरण्येनोपादानात्

तत्रेति पदस्य स्वस्मिन्नित्यर्थोऽपि क्लिष्टः, अतो यथोक्तार्थविषयं स उत्तमपुरुष इति वाक्यम्। नोपजनं स्मरन्नित्यस्यार्थमाह "प्रियाप्रिये"ति, अनुभूतस्य हि स्मरणं पूर्वम् असुखात्मकतया दुःखात्मकत्वेन ह्यनुभूतं न तथा स्मरति कृत्स्नस्य भगवदात्मकत्वेन अनुभाव्यत्वादित्यर्थः प्रयोग्यः युग्यः आचरणं शकटम्। "अथ यत्रैतदि"त्यादिश्रुतेरर्थमाह "चक्षुरादीनामि"ति, आकाशं प्रकाशकम् आलोकादिप्रकाशमानं रूपं वा प्रकाशयति यस्स चाक्षुषः चक्षुरुपकरणकः। तत्फलितमर्थमाह "तत एवे"ति, इति वेदितीति एतदुक्तं भवतीत्यनेनान्वयः "आविर्भूतस्वरूप" इति सूत्रखण्डं व्याचष्टे "आविरि"ति, तु-शब्दसिद्धमर्थमाह "आविर्भूतस्वरूपस्यापी"ति, आविर्भूतस्व-

सू० रूपादीनां ज्ञेयत्वमस्य च ज्ञातृत्वं प्रदर्श्य तत एव शरीरेन्द्रियेभ्योऽस्य व्यतिरेकमुपपाद्य "स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके" इति तस्यैव विधूतकर्मनिमित्तशरीरेन्द्रियस्य मनः-शब्दाभिहितेन दिव्येन स्वाभाविकेन ज्ञानेन सर्वकामानुभवमुक्त्वा "तं वा एतं देवा आत्मानमुपासते तस्मात्तेषां सर्वे च लोका आप्ताः सर्वे च कामा इत्येवंविधमात्मानं ज्ञानिनो जानन्तीत्यभिधाय सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाचेत्येवंविधमात्मानं विदुषः सर्वलोकसर्वकामावाप्त्युपलक्षितं ब्रह्मानुभवं फलमभिधायोपसंहृतम्, अतस्त्वपहतपाप्मत्वादिगुणको ज्ञातव्यतया प्रक्रान्तो जीव एवेत्यवगतम्, अतो जीवस्यापहतपाप्मत्वादयः सम्भवन्ति अतो दहरवाक्यशेषे श्रूयमाणस्य जीवस्यापहतपाप्मत्वादिगुणसम्भवात्स एव दहराकाश इति निश्चीयत इति

चेदिति तत्राह "आविर्भूतस्वरूपस्त्वि"ति, पूर्वमन्रुततिरोहितापहतपाप्मत्वादिगुणकः स्वस्वरूपः पश्चाद्विमुक्तकर्मबन्धः शरीरात्समुत्थितः परं ज्योतिरुपसम्पन्नः आविर्भूतस्वरूपः सन्नपहतपाप्मत्वादिगुणविशिष्टस्तच प्रजापतिवाक्येऽभिधीयते दहरवाक्ये त्वतिरोहितस्वभावापहतपाप्मत्वादिविशिष्ट एव दहराकाशः प्रतीयते आविर्भूतस्वरूपस्यापि जीवस्यासम्भावनीयास्सेतुत्वसर्वलोकविधरणत्वादयस्सत्यशब्दनिर्वचनावगतं चेतनाचेतनयोर्नियन्तृत्वं दहराकाशस्य परब्रह्मतां साधयन्ति, सेतुत्वसर्वलोकविधरणत्वादय आविर्भूतस्वरूपस्यापि न सम्भवन्तीति ज-

टी० रूपस्य प्रजापतिवाक्योक्तत्वात् दहराकाशस्य स्वत एवापहतपाप्मत्वादिप्रतिपादनात्तच्छरीरान्तस्थितस्यैव गुणाष्टकप्रतिपादनान्मुक्तेष्वसम्भावितसर्वलोकविधरणादिश्रुतेश्च दहराकाशः परं ब्रह्मेत्यर्थः ॥

भा० जगद्व्यापारवर्जमित्यत्रोपपादयिष्यामः । यद्येवं दहरवाक्ये "अथ य एष सम्प्रसाद इत्यादिना जीवप्रस्तावः किमर्थ? इति चेत् तत्राह—

## सू० अन्यार्थश्च परामर्शः ॥ १९ ॥

दहराकाशस्यैवापहतपाप्मत्वजगद्विधरणत्वादिवन्मुक्तस्य तदुपसम्पत्त्याऽपहतपाप्मत्वादिकल्याणगुणविशिष्टस्वाभाविकरूपप्राप्तिकथनेन तद्धेतुस्वरूपं परमपुरुषासाधारणं गुणमुपदेष्टुं प्रजापतिवाक्योक्तस्य जीवस्यात्र परामर्शः ॥

टी० उत्तरसूत्रशङ्कामाह "यद्येव"मिति, किमर्थं इति दहरवाक्ये जीवप्रस्तावो न प्रष्टृप्रतिवक्तृभावेन तथा श्रवणाभावात्, नाप्यङ्गोपासनवि-

षयतया दहरविद्यायामुपासनविध्यन्तराभावात्, अतः प्रकृतोपासनकर्मत्वेनैव जीवपरामर्शः अन्यथा तत्प्रतिपादनवैयर्थ्यात् प्रकृतोपासनकर्मत्वे च दहराकाशो जीवः स्यादित्यभिप्रायः । सू० अन्यार्थश्च परामर्शः ॥

भू० प्रजापतिवाक्ये च मुक्तात्मस्वरूपयाथात्म्यविज्ञानं दहरविद्योपयोगितयोक्तं ब्रह्म प्रेप्सोर्हि जीवात्मनः स्वस्वरूपं च ज्ञातव्यमेव स्वयमपि कल्याणगुण एव सन्ननवधिकातिशयासंख्येयकल्याणगुणगणं परं ब्रह्मानुभविष्यतीति ब्रह्मोपासनफलान्तर्गतत्वात्स्वस्वरूपयाथात्म्यविज्ञानस्य, सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् स तत्र पर्येति जक्षत्[1] क्रीडन्नित्यादिकं प्रजापतिवाक्ये कीर्त्यमानं फलमपि दहरविद्याफलमेव ॥

टी० दहरविद्यैव मोक्षोपायश्चेत्कथं जीवोपासनविधिः? कथं च तस्य फलकथन? मित्यत्राह "प्रजापतिवाक्ये चे"ति, परमात्मोपासने परस्य रूपं हि वेद्यं तत्कथमनुपास्यजीवात्मविज्ञानोपयोग? इति शङ्कायां तदुपयोगित्वमुपपादयति "ब्रह्म प्रेप्सोरि" ति, ब्रह्मणः प्रेप्सितव्यत्वे जीवात्मस्वरूपस्य कथं ज्ञातव्यत्व? मित्यत्राह "स्वयमपी"ति, प्राप्यान्तर्भावात्तस्य ज्ञातव्यत्वम् ।

## सू० अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २० ॥

भू० दहरोऽस्मिन्नित्यल्पपरिमाणश्रुतिराराग्रोपमितस्य जीवस्यैवोपपद्यते न तु सर्वस्माज्ज्यायसो ब्रह्मण इति चेत् तत्र यदुत्तरं वक्तव्यं तत् पूर्वमेवोक्तं निचाय्यत्वादेवमित्यनेन, अतो दहराकाशोऽनाघ्रानाविद्याद्यशेषदोषगन्धस्स्वाभाविकनिरतिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यपरिमितोदारगुणसागरः पुरुषोत्तम एव ॥

---

१ यद्यपि सर्वपुस्तकेषु जक्षन् क्रीडन्नित्येव पाठ उपलभ्यते तथाऽपि जक्षत्यादयः षडित्यादिना अभ्यस्तत्वविधानात् नुम् न भवतीति जक्षदित्येव युक्तः पाठो यद्येष औपनिषदसम्प्रदायसिद्धः ।

टी० अतस्तज्ज्ञानं दहरविद्योपयोगीत्यर्थः । ननु तर्हि विशेषणत-योपास्यत्वाज्जीवस्य ज्ञातव्यत्वे वक्तव्ये प्राप्यान्तर्भावात् ज्ञातव्यतोक्तिः किं-निबन्धना ? उच्यते "आत्मेति तूपगच्छन्ती"ति वक्ष्यमाणस्य जीवात्मवेदनस्य प्राप्यान्तर्भावनिबन्धनत्वं हि व्यतिरेकस्तद्भावभावित्वादित्यत्र वक्ष्यते तस्मादिति । ननु जीवात्मज्ञानं दहरविद्याङ्गं चेत् कथं पृथक्फलकीर्तनं "फलवत्सन्निधावफलं तदङ्ग"मिति हि न्याय इत्यत्राह "सर्वांश्चे"ति, अङ्गिनः फलमेवाङ्गे कथितमित्यर्थः ॥

भू० प्रजापतिवाक्ये निर्दिष्टस्तु घ्नन्ति त्वेवैनं विच्छादयन्तीत्ये-वमादिभिरवगतकर्मनिमित्तदेहपरिग्रहः पश्चात्परं ज्यो-तिरुपसम्पद्याविर्भूतापहतपाप्मत्वादिगुणकस्वस्वरूप इति न दहराकाशः ।

इतश्चैतदेवम् ।

## सू० अनुकृतेस्तस्य च ॥ २१ ॥

तस्य दहराकाशस्य परस्य ब्रह्मणोऽनुकारादयमपहतपा-प्मत्वादिगुणको विमुक्तबन्धः प्रत्यगात्मा न दहराकाशः तदनुकारः—

टी० अनेन सूत्रेण उपसंहारगतहेतुः प्रत्युक्तः । अथोपक्रमगतं हेतुं प्रतिवक्ति सू० अल्पश्रुतेरिति चेत्तदुक्तम् । अर्भकौकस्त्वादित्यस्य सूत्रस्य विषयवाक्ये सर्वं खल्वित्यादौ अणीयान्व्रीहेर्वा यवाद्वेति वाक्यं नोप-क्रमस्थम्, उपक्रमे हि तत्र सर्वात्मत्वमवगतम् आकाशात्मत्वं च उपसंहारे च ज्यायस्त्वमवगतम्, अतोऽल्पश्रुतिस्तदनुरोधेन वर्णितेति युक्तं, दहरवि-द्यायां तूपक्रम एव अल्पत्वं श्रुतमिति तदनुरोधेन यावान्वा अयमि-

भू० तत्साम्यं, तथा हि प्रत्यगात्मनो विमुक्तस्य परब्रह्मानुकारः श्रूयते "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं

ब्रह्मयोनिं तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती"ति अतोऽनुकर्ता प्रजापतिवाक्यनिर्दिष्टः अनुकार्यं ब्रह्म दहराकाशः ॥

टी० त्यादिकं नेयम्, उपसंहारे च जीवपरामर्शस्तद्गुणम्भक इत्यधिका शङ्का आकाशोपमानत्वसर्वाधारत्वनिरतिशयभोग्यत्वनिरुपाधिकगुणाष्टकगतिशब्दविधरणत्वफलविशेषपरमहावाक्यस्वारस्यदर्शनाज्जीवपरामर्शकोपसंहार एव परमात्मनिर्द्देशमिश्रत्वाच्च परनिर्द्देशमिश्रोपसंहारस्योत्तम्भकत्वायोगादुपक्रममात्रं महावाक्यस्वारस्यबाध्यमित्यधिकः परिहारः, उपसंहारे जीवपरामर्शात् परमात्मनिर्देशमिश्रतया परिहाराच्च प्राणस्तथाऽनुगमादित्यधिकरणाद्वैषम्यम् एवमुपक्रमोपसंहारगतहेतुनिरसना-

## सू० अपि स्मर्यते ॥ २२ ॥

भा० संसारिणोऽपि मुक्तावस्थायां परमसाम्यापत्तिलक्षणः परब्रह्मानुकारस्स्मर्यते "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति चे"ति केचित् "अनुकृतेस्तस्य च" "अपि स्मर्यते" इति सूत्रद्वयमधिकरणान्तरं "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती"त्यस्याश्श्रुतेः परब्रह्मपरत्वनिर्णयाय प्रवृत्तं वदन्ति तत्तु "अदृश्यत्वादिगुणको धर्मोक्तेः" "द्युभ्वाद्यायतनं स्वशब्दा"दित्यधिकरणद्वयेन तस्य प्रकरणस्य परब्रह्मविषयत्वप्रतिपादनात् "ज्योतिश्चरणाभिधानादि"त्यादिषु परस्य ब्रह्मणो भारूपत्वावगतेश्च पूर्वपक्षानुत्थानादयुक्तं सूत्राक्षरवैरूप्यं च, दहराधिकरणं समाप्तम् ॥

टी० नन्तरं वक्ष्यमाणयोः सूत्रयोः परमप्रकृतार्थेन सङ्गतिः न त्ववान्तरार्थविशेषेणेति दर्शयितुं परमप्रकृतदहराकाशस्यार्थविरोधेन जी-

वादन्यत्वं स्फुटयति "अतो दहरे"ति, यद्वा इह वाक्यशेषसहकृताल्पत्वश्रुतेरल्पत्वं स्वाभाविकमित्यधिकमित्यधिकाशङ्का; न हि शाण्डिल्यविद्यायां वाक्यशेषसहकृताल्पत्वश्रुतिः प्रकरणरूपवाक्यशेषापेक्षयाऽपहतपाप्मत्वादि लिङ्गं प्रबलमित्यधिकः परिहारः। वस्तुसामर्थ्यं दर्शयति अनाघ्रातेत्यादिना, अत्र ज्ञानशक्त्यादयस्सत्यसङ्कल्पत्वफलिनत्वादुक्ताः॥ एवमुपक्रमोपसंहारनिर्वाहः प्रमाणान्तरेण परमात्मात्मनोरपहतपाप्मत्वादीनां स्वाभाविकत्वास्वाभाविकत्वे सिद्धे ह्युपपद्यते अन्यथा "अनुक्तमन्यतो ग्राह्य"मिति न्यायाद्दहरवाक्येऽपि मुक्तावस्थस्य गुणाष्टकान्वयो विवक्षितः स्यादिति शङ्कायामाह सू० अनुकृतेस्तस्य च। अतथाभूतस्य तथाभावाभिनयशङ्काप्रतिक्षेपार्थमाह "तदनुकारस्तत्साम्यमि"ति, तद्वृत्तिरिहानुकारो विवक्षितः तेन तन्मूलभूतं गुणसाम्यमपि लक्षितं भवति, सारे तु स्वच्छन्दवृत्तिरूपस्तदनुकारः श्रूयत इत्युक्तिर्गुणसाम्योपलक्षणार्था। सू० अपि स्मर्यते, साम्यमुपैति इत्युक्ते केन धर्मेण साम्यमित्यपेक्षापूरणार्थं मम साधर्म्यमागता इति वचनमुपात्तम्। परैः कृतमधिकरणभेदमनूद्य दूषयति केचिदित्यादिना, भारूपत्वश्रवणात् प्राकृतज्योतिष्ट्वशङ्कानिवृत्त्यर्थमधिकरणारम्भो युक्त इत्यत्राह "ज्योतिश्चरणाभिधानादित्यादिष्वि"ति, एकप्रकरणस्यानेकाधिकरणनिरूप्यत्वं ह्यधिकाशङ्कायां सत्यामुचितम् अत्र तदभावादयुक्तमित्यभिप्रायः। हेत्वन्तरमाह "सूत्राक्षरे"ति, अनुकृतिरनुभानमिति हि परैरुक्तं तदयुक्तं करोतिभात्योरेकार्थत्वाभावात्। तस्य चेति श्रुतिप्रतीकोपादानमित्युक्तं तदप्ययुक्तं यदेव विद्ययेति हीतिवदितिकरणाभावात्॥ तस्यानुकृतेरित्यन्वये स्वारसिकेऽपि तत्प्रहाणेनार्थवर्णनं च क्लिष्टम्। यादवप्रकाशीये तु अनुकृतिः अनु-शब्दस्य करणमित्युक्तं तदयुक्तं यथा "स्वरूपं शब्दस्याशब्दसंज्ञे"ति परिभाषासिद्धं व्याकरणे शब्दस्वरूपोपादानम् एवमस्मिन् शास्त्रे परिभाषाया अभावात् शब्दस्वरूपविवक्षायामितिकरणस्य दर्शितत्वाच्च "अन्तस्तद्धर्मोपदेशात्" "आकाशस्तल्लिङ्गा"दित्यादिष्विव प्रतिज्ञाखण्डाभावः च-शब्दवैयर्थ्यं चेति दूषणद्वयं सर्वसाधारणमभिप्रेतं दहराकाशो भूताकाशः तदन्तर्वर्ती जीव इति पूर्वपक्षं कृत्वा दहराकाशः

परमाकाशः तदन्तर्वर्ती परमात्मेति सिद्धान्तितं तत्र तावत्पूर्वपक्षस्थितिरनुपपत्ता भूताकाशान्तर्वर्तित्वस्य जीवासाधारणत्वाभावात् यस्य वायुः शरीरं य आकाशे तिष्ठन् यस्याकाशश्शरीरमित्यन्तर्यामिब्राह्मणे भूताकाशान्तर्वर्तिनः परमात्मत्वनिश्चयात्, सिद्धान्ते च "किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्य"मिति प्रश्नस्य प्रतिवचनसामञ्जस्यं न भवति न तावत् उभे अस्मिन् द्यावापृथिवी इत्यादिवाक्योक्तद्यावापृथिव्यादिकं तदन्तर्वर्तीति प्रतिवचनं युक्तं तस्य विजिज्ञास्यत्वाभावात्, न ह्यन्तर्वर्तिमात्रविषयः प्रश्नः किन्तु उपास्यभूतान्तर्वर्तिविषयः, अस्मिन् कामास्समाहिता इति च नोत्तरम् अस्मिन्निति पदं तावत् प्रकृतब्रह्मपुरविषयम् "एतत्सत्यं ब्रह्मपुरमस्मिन् कामास्समाहिता" इति हि श्रूयते परमाकाश एव ब्रह्मणःपुरं शरीरस्य ब्रह्मपुरत्वं तत्सम्बन्धादौपचारिकमिति षष्ठीतत्पुरुषं वदद्भिर्ब्रह्मपुरशब्दो दहराकाशसंज्ञकपरमाकाशपर इति व्याख्यातं, ततश्चास्मिन्निति परमाकाशनिर्देशः स्यात्, एवं च सति काम—शब्दः किं परमात्मपरः? उत तद्गुणपरः? उत द्यावापृथिव्यादिपरः? न प्रथमः बहुवचनान्तत्वात् "आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामा"निति भेदनिर्देशाच्च, न द्वितीयः परमात्मगुणाधारतया प्रतीयमानस्य परमात्मत्वापत्त्या अस्मदीयपक्षपरिग्रहः स्यात्, न हि परमात्मगुणानां धर्मी परमाकाशः, न तृतीयः उपास्यरूपतदन्तर्वर्तिप्रश्नस्योत्तरत्वायोगात् अन्तर्वर्तिप्रश्नस्योत्तरम् एष आत्मेति वाक्यमिति चेन्न एकवचनान्तस्यैतच्छब्दस्य ब्रह्मपुरविषयत्वेन तदन्तर्वर्तिविषयत्वायोगात् परमाकाशशरीरः परमात्मैवैतच्छब्देन परामृश्यत इति चेत् तदप्ययुक्तं परमाकाशान्तर्वर्तिविषयप्रश्नप्रतिवचनस्य परमाकाशविशिष्टविषयत्वायोगात्, न हि गृहविशिष्टस्य गृहमधिकरणम् एष इति पदं न प्रकृतविषयं किन्तु बुद्धिस्थविषयमिति चेत् प्रकृतपरामर्शित्वस्वारस्यभङ्गः, स च प्रकृतपरामर्शित्वसम्भवे ऽनुपपन्नः किन्तदत्रेति वैयधिकरण्येन प्रश्नस्य एष आत्मा परमाकाशशरीरक आत्मेति सामानाधिकरण्येनोत्तरं ततश्च तदन्तर्वर्तित्वं फलितमिति चेन्न वैयधिकरण्येन प्रश्नस्य वैयधिकरण्येन प्रतिवचने सम्भवति सामानाधिकरण्येन प्रतिवचनकल्पनायोगात्

असम्भवे हि तथा निर्वाह उपपद्यते न केवलं परमाकाशशरीरस्य हृदयान्तर्वर्तित्वम् एतत्प्रकरणपर्यालोचनविरुद्धं संवादिप्रमाणान्तराभावविध्वस्तं च यो वेद निहितमिति वाक्यमन्यथासिद्धं परमे व्योमन् सो ऽश्नुत इत्यन्वयसम्भवात् शाण्डिल्यविद्यायां च आकाशात्मा "एष म आत्मान्तर्हृदय" इत्यादिवाक्यैराकाशवत्सूक्ष्मस्वच्छव्यापिस्वरूपस्य हृदि वर्तमानत्वमुच्यत इत्यन्यथासिद्धम् अतो ऽनुपपन्नमिदं, दहराधिकरणं समाप्तम् ॥

प्रमिताधिकरणम् । **सू० शब्दादेव प्रमितः ॥ २३ ॥**

**भा० कठवल्लीषु श्रूयते**

**अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।**
**ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥**

**एतद्वै तत् ।**

**अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।**
**ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ॥**

**एतद्वै तत् ।**

**अङ्गुष्ठमात्रः पुरुषो ऽन्तरात्मा**
**सदा जनानां हृदये सन्निविष्टः ।**
**तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकाम्**
**धैर्येण तं विद्याच्छुक्रममृतमिति ॥**

**तत्र सन्दिह्यते किमयमङ्गुष्ठमात्रप्रमितः ।**

टी० सू० शब्दादेव प्रमितः अल्पश्रुतेरिति चेदित्यत्राल्पपरिमाणत्वं भगवत इत्युक्तम् अथाल्पपरिमाणत्वविशेषः परमात्मव्यतिरिक्तस्य दृश्यत इति शङ्कया सङ्गतिः शुक्रममृतमित्यन्तं विषयवाक्यमुपाददानस्यायं भावः अङ्गुष्ठप्रमितत्वमात्रं श्रुतं न तु स्थानविशेषः, न चोपासनम् अतः परमात्मपरत्वानादरेण जीवपरत्वं शङ्क्यत इति पूर्वपक्षं केचिदाहुः तदयुक्तं सदा

जनानां हृदये सन्निविष्टः तं विद्याच्छुक्रममृतमित्यनन्तरवाक्ये स्यानोपासनावगमात् तदनवगमस्य हेतुत्वकथनायोगादिति ।

भू० प्रत्यगात्मा? उत परमात्मे? ति किं युक्तं प्रत्यगात्मेति, कुतः जीवस्यान्यत्राङ्गुष्ठमात्रत्वश्रुतेः, "प्राणाधिपः सञ्चरति स्वकर्मभिरङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितोय" इति, न चान्यत्रोपासनार्थतया ऽपि परमात्मनोऽङ्गुष्ठमात्रत्वं श्रूयते एवं निश्चिते जीवत्वे ईशानत्वं शरीरेन्द्रियभोग्यभोगोपकरणापेक्षयाऽपि भविष्यति इति प्राप्ते ब्रूमः—शब्दादेव प्रमितः अङ्गुष्ठप्रमितः परमात्मा कुतः ईशानो भूतभव्यस्येति शब्दादेव, न च भूतभव्यस्य सर्वस्येशितृत्वं कर्मपरवशस्य जीवस्योपपद्यते ।

टी० परमात्मनोऽङ्गुष्ठपरिमितत्वानुपपत्तेर्जीवस्य सर्वेशानत्वानुपपत्तेश्च संशयः, अङ्गुष्ठप्रमितः किं प्रत्यगात्मा? उत परमात्मेति? तदर्थमीशानत्वं किं देहेन्द्रियाद्यपेक्षं? उत सर्वापेक्ष? मिति उपक्रमावगतं प्रमितत्वं किमीशानत्वलिङ्गस्वारस्यविरोधि? उत अविरोधी? ति, तत्प्रमितत्वं किं जीवे समञ्जसम्? उतोभयत्रासमञ्जस? मिति ।

भू० कथं तर्हि परमात्मनोऽङ्गुष्ठमात्रत्व? मित्यत्राह—

## सू० हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २४ ॥

परमात्मन उपासनार्थमुपासकहृदये वर्तमानत्वादुपासकहृदयस्याङ्गुष्ठप्रमाणत्वात्तदपेक्षयेदम् अङ्गुष्ठप्रमितत्वमुपपद्यते जीवस्याप्यङ्गुष्ठप्रमितत्वं हृदयान्तर्वर्तित्वात्तदपेक्षमेव तस्याराग्रमात्रत्वश्रुतेः, मनुष्याणामेवोपासकत्वसम्भावनया

शास्त्रस्य मनुष्याधिकारत्वान्मनुष्यहृदयस्य च तत्तदङ्गुष्ठप्रमितत्वात्खरतुरगभुजगादीनामनङ्गुष्ठप्रमितत्वेऽपि न कश्चिद्दोषः, स्थितं तावदुत्तरत्र समापयिष्यते ॥

टी० यदा जीवे समञ्जसं तदानीं स्वसामञ्जस्यसिद्ध्यर्थमुपक्रमावगतं प्रमितत्वमीशानत्वलिङ्गस्वारस्यविरोधीति ईशानत्वस्य देहेन्द्रियाद्यपेतत्वादङ्गुष्ठप्रमितो जीव इति पूर्वः पक्षः, यदोभयत्र प्रमितत्वमसमञ्जसं तदा प्रत्यगात्मन्यपि स्वारस्यासिद्धेस्तदर्थमीशानत्वलिङ्गस्वारस्यानुपरोधकत्वादीशानत्वं सर्वापेक्षमिति अङ्गुष्ठप्रमितः परमात्मेति राद्धान्ते फलफलिभावः, कृत्वा चिन्तेयं परमात्मनोऽन्यत्राङ्गुष्ठप्रमितत्वश्रवणाभावमभ्युपगम्यानेनैव वाक्येनाङ्गुष्ठप्रमितत्वं किं सिध्यति? उत ने? ति विचार्यते अन्यत्राङ्गुष्ठप्रमितत्वं भगवतः श्रूयते श्वेताश्वतरे "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । हृदा मनीषा मनसाऽभिक्लृप्तो ये एनं विदुरमृतास्ते भवन्ती"ति तैत्तिरीये च "अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः । ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुगि"ति अन्तरात्मत्वं मोक्षप्रदत्वं सर्वस्य जगत ईशत्वमपि हि तत्र श्रुतं, यदा सर्वजगच्छब्दादिकमपि क्लिष्टं कृत्वा तावपि मन्त्रौ विवादास्पदीकृतौ तदानीं न कृत्वा चिन्तेयम् । ननु जीवस्याराग्रमात्रस्याङ्गुष्ठमात्रत्वममुख्यमत उपासनार्थमिति निर्वाह्यं तत्परमात्मपरत्वेऽपि सम्भवति उपासनार्थमल्पपरिमाणत्वं परस्यापि हि श्रुतं तत्कथं जीवत्वशङ्के? त्यत्राह "न चे"ति, प्राणाधिपस्य कर्मवश्यस्याङ्गुष्ठमात्रत्वममुख्यमपि हि श्रुतं न तु परमात्मनः अतो जीवस्य बुद्धिस्थत्वात्तस्य प्रतिपाद्यत्वाशङ्केत्यर्थः, ईशानत्वं कथमित्यत्राह "एवं निश्चित" इति, राद्धान्ते ननु भूतभव्यस्येशान इति वाक्यं तच्च प्रमितत्वलिङ्गाद्दुर्बलं, नैवम् ईशानशब्दस्यैव शब्द शब्देन विवक्षितत्वात् ईशान-शब्दस्य देहेन्द्रियाद्यपेतया सङ्कोचस्य अनुपपत्तिस्फोरणार्थमीशानो भूतभव्यस्येति शब्दादेवेति भूतभव्यशब्दोपादानं, किमीश्वरः? किं जीव? इति विचारे नेश्वरसम्बन्धिलिङ्गान्निर्णयः किं त्वीशत्ववाचिशब्दा-

वेवेत्येवकाराभिप्रायः । यद्वा पूर्वपक्ष्यभिप्रेताया ईशानशब्दान्यथासिद्धेः प्रतिक्षेप एवकाराभिप्रेतः । तं दर्शयति "न च भूतभव्यस्ये"ति, उत्तरसूत्रशङ्कामाह "कथं तर्ही"ति, ॥ सू० हृद्यपेक्षया तु मनुष्याधिकारत्वात् वर्तमनत्वादित्यध्याहारेण योजना । यद्वा हृदीति विषयसप्तमी हृद्विषयापेक्षयेति, सूत्रार्थं वक्तुमर्थसिद्धमर्थमाह "वर्तमानत्वादि"ति यदपेक्षया परस्याङ्गुष्ठप्रमितत्वव्यवहारः तस्य हृदयस्य तत्परिमाणत्वमाह "हृदयस्ये"ति, अङ्गुष्ठमात्रत्वस्यास्वारस्यमुभयत्र तुल्यम् । को भेदः परमात्मपरिग्रहे? इत्यत्राह "जीवस्यापी"ति, अङ्गुष्ठप्रमितस्य जीवत्वपक्षे अङ्गुष्ठप्रमितेशानशब्दयोरुभयोरप्यस्वारस्यं परमात्मत्वपक्षेऽङ्गुष्ठप्रमितशब्दस्यैकस्यैवास्वारस्यमिति भावः । खरतुरगादीनामनङ्गुष्ठत्वेन तद्धृदयानां तत्तदङ्गुष्ठप्रमितत्वाभावादङ्गुष्ठप्रमितत्वमननुयायीति शङ्कायां मनुष्याधिकारत्वादिति पदं व्याचष्टे "मनुष्याणामेवे"ति, अत्राङ्गुष्ठप्रमितस्य जीवत्वमभ्युपगम्यैव जीवस्य परमात्मैक्योपदेशपरतया प्रकरणस्य परमात्मप्रतिपादकत्वं यत्परैरुक्तं तदयुक्तं जीवत्वेश्वरत्वयोरुभयोरपि कल्पितत्वाभ्युपगमात् सर्पभूदलनयोरिव काल्पनिकयोरर्थयोरैक्योपदेशानुपपत्तेः, जीवत्वेशानत्वाद्यनादरेण वस्तुमात्रैक्यपरत्वे ईशानादिशब्दानां लाक्षणिकत्वप्रसङ्गात् प्रासङ्गिकार्थस्य निरूपयिष्यमाणत्वं बुद्ध्वाऽऽह "स्थितं तावदि"ति, ।

देवताऽधिकरणम् । **सू० तदुपर्यपि बादरायणः सम्भवात् ॥२५॥**

भू० परस्य ब्रह्मणोऽङ्गुष्ठप्रमितत्वोपपत्तये मनुष्याधिकारं ब्रह्मोपासनशास्त्रमित्युक्तं, तत्प्रसङ्गेनेदानीं ब्रह्मविद्यायां देवादीनामप्यधिकारोऽस्ति? नास्तीति विचार्यते, किन्तावद्युक्तं नास्ति देवादीनामधिकार इति, कुतः सामर्थ्याभावात्, न ह्यशरीराणां देवादीनां विवेकविमोकादिसाधनसप्तकानुगृहीतब्रह्मोपासनोपसंहारसामर्थ्यमस्ति, न च देवादीनां सशरीरत्वे प्रमाणमुपलभामहे, यद्यपि परि-

निष्पन्नेऽपि वस्तुनि व्युत्पत्तिसम्भावनया वेदान्तवाक्यानि परे ब्रह्मणि प्रमाणभावमनुभवन्ति तथाऽपि देवादीनां

टी० सू० तदुपर्यपि बादरायणस्सम्भवात् ॥ प्रसङ्गात्सङ्गतिमाह "परस्ये"ति, मनुष्याधिकारत्वादित्यत्र मनुष्य-शब्देन तिर्यङ्मात्रं व्यावर्तितम्? उत देवादिरपी?ति बुभुत्सया सङ्गतिरित्यर्थः, किं ब्रह्मविद्यायां देवादीनामधिकारोऽस्ति? नेति विचारः ।

सू० विग्रहवत्त्वप्रतिपादनपरं न किञ्चिदपि वाक्यमुपलभ्यते, मन्त्रार्थवादास्तु कर्मविधिशेषतयाऽन्यपरत्वान्न देवादिविग्रहसाधने प्रभवन्ति, कर्मविषयस्य स्वापेक्षितोद्देश्यकारकत्वातिरेकिदेवतागतं किमपि न साधयन्ति, अत एव तासामर्थित्वमपि न सम्भवति, अतस्सामर्थ्यार्थित्वयोरभावाद्देवादीनामनधिकार इति ॥

टी० तदर्थं किं तेषां साङ्गब्रह्मविद्योपसंहारसामर्थ्यमस्ति? ने?ति तदर्थं किं तेषां विग्रहवत्त्वं सम्भवति? नेति, किं तद्विग्रहप्रतिपादकमन्त्रार्थवादानां तत्परत्वं सम्भवति? ने?ति किं मन्त्रार्थवादानाम् अनुष्ठेयार्थप्रकाशनस्तुतिपरत्वं विग्रहादिविवक्षाविरोधि? उत ने?ति किं विग्रहादिमत्त्वमनुष्ठेयार्थप्रकाशनस्तुत्योरुपयोगि? नेति यदाऽनुपयोगि तदाऽनुष्ठेयार्थप्रकाशनस्तुतिपरत्वस्य विग्रहादिविवक्षाविरोधितया मन्त्रार्थवादानां देवताविग्रहादिपरत्वाभावेन देवानां विग्रहविरहेण सामर्थ्याभावात् तदनधिकार इति फलितं–

सू० एवं प्राप्ते प्रचक्ष्महे सू० तदुपर्यपि बादरायणः सम्भवात् तदुपर्यपि तत्–ब्रह्मोपासनम् उपरि–देवादिष्वपि सम्भवतीति भगवान्बादरायणो मन्यते तेषामर्थित्वसामर्थ्ययोस्सम्भवात् ।

टी० यद्यपयोगि तदाऽनुष्ठेयप्रकाशनस्तुतिपरत्वस्य विग्रहानु-विदिविवक्षानुगुणतया मन्त्रार्थवादानां तत्परत्वेन देवानां विग्रहवत्तया साङ्गब्रह्मविद्योपसंहारसामर्थ्यादस्ति ब्रह्मविद्याधिकार इति फलितं, सामर्थ्याभावादिति अर्थित्वाभावस्याप्युपलक्षणमेतत् । सामर्थ्याभावमुपपादयति "न ही"ति, उपसंहारः अनुष्ठानम्, अशरीरत्वं कथमित्यत्राह "न चे"ति, वेदान्ताः प्रमाणं स्युरित्यत्राह "यद्यपी"ति, प्रयोजनपर्यवसायितयैव हि शब्दस्य प्रामाण्यं, तत्र पूर्वभागवत्त्वमां प्रवृत्तिनिवृत्तिरूपप्रयोजनपर्यवसानात् तत्र तात्पर्यं, ब्रह्मणः पुरुषार्थरूपतया तत्र वेदान्तानां तात्पर्यं देवादीनां विग्रहेषु तथात्वाभावात् न तात्पर्यमिति भावः । पूर्वभागे मन्त्रार्थवादास्तत्र प्रमाणमित्यत्राह—

भू० अर्थित्वं तावदाध्यात्मिकादित्रिविधदुःखाभितापात्परस्मिन् ब्रह्मणि च निरस्तनिखिलदोषगन्धे अनवधिकातिशयासंख्येयकल्याणगुणगणे निरतिशयभोग्यत्वादिज्ञानाच्च सम्भवति, सामर्थ्यमपि पटुतरदेहेन्द्रियादिमत्तया सम्भवति, देहेन्द्रियादिमत्त्वं च ब्रह्मादीनां सकलोपनिषत्सु सृष्टिप्रकरणेषु उपासनप्रकरणेषु च श्रूयते तथा हि "सदेव सोम्येदमग्र आसीत्" "तदैक्षत बहु स्यां प्रजायेये"ति "तत्तेजोऽसृजते"त्यारभ्य सर्वमचेतनं तेजोऽबन्नप्रमुखावस्थाविशेषवद् व्याकृत्य

टी० "मन्त्रार्थवादास्त्वि"ति, मन्त्राश्चार्थवादाश्चेत्यर्थः, अन्यपरत्वादिति अनुष्ठेयार्थप्रकाशनस्तुत्योरन्यपरत्वादित्यर्थः, मा सैत्सीदन्यपरेण मन्त्रार्थवादेन देवताविग्रहादि किं तु कर्मविधिभिस्त्वेव सेत्स्यति कर्मणो द्रव्यदेवतानिरूप्यत्वात्, क्षणध्वंसिनः कर्मणः कालान्तरभाविफलसाधनत्वनिर्वाहाय देवतैश्वर्यस्यापेक्षितत्वात् श्रुतहानेनाश्रुतापूर्वकल्पनायोगाच्चेत्यत आह "कर्मविधयश्चे"ति, अयमभिप्रायः, यद्यपि देवतावत्सु याग-

होमादिकर्मसु देवतैश्वर्याङ्गीकारेणापि फलप्रदत्वनिर्वाहसम्भवः तथाऽपि दानतपःप्रभृतिषु देवतानामभावात् कल्पनीयमेवापूर्वं तथा च समानन्यायतया यागहोमादावप्यपूर्वमेव कल्प्यतां किमर्थवैशसेन। किञ्च तत्रैव कल्पे सर्वकर्मफलभोगनियमाभावाद्देवतानां सृष्टिप्रलयाभ्युपगमाच्च फलप्रदातुरभावात् केषाञ्चित्कर्मणां नैष्फल्यमेव स्यात् । अथ तत्तद्देवताशरीरकः परमात्मा तत्तत्कर्मभिराराधितो नित्यैश्वर्यतया फलप्रद इति मतं तथा सति प्रतिमाप्रतिमेयन्यायः स्यात् यथा प्रतिमोद्देशिभिरुपचारैर्देवताप्रीतिः एवं देवतोद्देशिभिर्द्रव्यत्यागैः परमात्मप्रीतिः स्यात् ततश्च प्रतिमाया इव देवताया अप्युद्देश्यकारकत्वमात्रं विवक्षितं नैश्वर्यमपीत्यनपेक्षितं देवतैश्वर्यं न कल्प्यमिति । उक्तोपजीवनेनार्थित्वाभावमाह "अत एवे"ति, यत एव न विग्रहवत्त्वं देवतानाम् अत एवार्थित्वमपि न सम्भवति दुःखस्य तज्जिहासायाश्च देहसम्बन्धमूलत्वादर्थित्वस्य दुःखजिहासारूपत्वाच्चेत्यर्थः ॥

सू० "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति सङ्कल्प्य ब्रह्मादिस्थावरान्तं चतुर्विधं भूतजातं तत्तत्कर्मोचितभूतशरीरं तदुचितनामभाक् चायमकरोदित्युक्तम्, एवं सर्वत्र सृष्टिवाक्येषु देवतिर्यङ्मनुष्यस्थावरात्मना चतुर्विधा सृष्टिराम्नायते, देवादिभेदश्च तत्तत्कर्मानुगुणब्रह्मलोकप्रभृति चतुर्दशलोकस्थफलभोगयोग्यदेहेन्द्रियादियोगायत्तः, आत्मनां स्वतो देवादित्वाभावात्—

टी० ॥ "तदुपर्यपी"ति, अर्थित्वमुपपादयति "अर्थित्वमि"ति, सामर्थ्यमुपपादयति "सामर्थ्यमपी"ति, पटुतर-शब्दो मनुष्यादिदेहादपि पटुत्वातिशयपरः । प्रमाणाकाङ्क्षायामाह "देहे"ति, तत्त्वोपदेशप्रधानमन्त्रब्राह्मणरूपवेदभागा उपनिषदः, ताश्च द्विविधाः तत्त्वपरा उपासनपराश्चेति, उभयीष्वपि तासु देवतानां विग्रहादिमत्त्वमवगम्यत इत्यर्थः । कानि

तत्त्वप्रतिपादकवचांसि कथं तैर्विग्रहवत्त्वप्रतिपादनमित्यत्राह "तथा ही"ति, "सद्देवेत्यादि नामरूपव्याकरणस्य कण्ठोक्त्या नामरूपाणां चातुर्विध्यस्य प्रमाणसिद्धत्वान्नामरूपव्याकरणश्रुत्यैव देवताविग्रहवत्त्वं सामान्येन सिध्यतीत्यर्थः, इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः नारायणाद्ब्रह्मा जायते इत्यादीनि विशेषोक्तिमन्ती(१) च वाक्यान्यभिप्रेतानि । चतुर्विधसृष्टिराम्नाता भवतु ततः किमित्यत्राह देवादी"ति, उपासनदशायां परमकारणभूतस्य उपास्यस्य लक्षणत्वेन प्राप्यदशायां प्राप्यविशेषणत्वेन विग्रहादिमत्त्वं सिद्धमित्यर्थः । उपासनप्रकरणेषु दर्शयति—

भू० तथा "तद्धोभये देवा असुरा अनुबुबुधिरे ते होचुः इन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणान्तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः तौ ह द्वात्रिंशद्वर्षाणि ब्रह्मचर्य्यमूषतुः तौ ह प्रजापतिरुवाचे"-त्यादिना विस्पष्टमेव शरीरेन्द्रियवत्त्वं देवादीनां प्रतीयते कर्म्मविधिशेषभूतमन्त्रार्थवादेष्वपि "वज्रहस्तः पुरन्दरः तेनेन्द्रो वज्रमुदयच्छ दि"त्यादिभिः प्रतीयमानं विग्रहादिमत्त्वं प्रमाणान्तराविरुद्धं तत्प्रमेयमेव, न चानुष्ठेयार्थप्रकाशनस्तुतिपरत्वाभ्यां प्रतीयमानार्थान्तराविवक्षा शक्यते वक्तुं स्तुत्याद्युपयोगात्तेन विना स्तुत्याद्यनुपपत्तेश्च, गुणकथनेन हि स्तुतित्वं गुणानामसद्भावे स्तुतित्वमपि हीयते ॥

टी० ॥ "तथे"ति, कर्मविधिशेषत्वेनाऽपि सिध्यतीत्याह "कर्मविधी"त्यादिना, तत्र प्रथमसूत्रे सिद्धवस्तुनि तात्पर्यसंभवस्य फलत्वेन सिद्धिरुक्ता, अत्र स्तावकत्वप्रकाशकत्वहेतुतया "फलमत उपपत्ते"रित्यत्र फलसाधनत्वेनेति त्रिधा भेदः आदित्यो यूप इत्यादिव्यावृत्त्यर्थमाह

१ विभागइति पा० ।

"प्रमाणान्तराविरुद्धमि"ति, अन्यपरत्वमनूद्य व्युदस्यति "न चे"त्यादिना स्तुत्याद्युपयोगित्वादित्यत्र आदि-शब्देन अनुष्ठेयार्थप्रकाशनं मन्त्रकृत्य,-मुच्यते मन्त्रार्थवादेष्वित्युद्देशे अनुष्ठेयार्थप्रकाशनस्तुतिपरत्वाभ्यामित्यनूद्देशे चावगतक्रमोऽत्र परित्यक्तः, तत्र कारणं मन्त्रैरपि क्वचित् स्तुतिदर्शनेन स्तुतेर्व्यापकत्वन्दृश्यते हि मन्त्रैः स्तुतिः "न किरिन्द्र त्वदुत्तरो न ज्याया[1]न् अस्ति वृत्रहन् तथाऽर्हन् बिभर्षि सायकानि धन्वन् अर्हन् निष्कं यजतं विश्वरूपमर्हन्निदं दयसे विश्वमम्भुवं न वाओजीयोरुद्रन्त्वदस्ती"त्यादिभि अर्हन् बिभर्षीत्यादिमन्त्रस्य स्तुतिपरत्वं ब्राह्मणेनैवावगम्यते अर्हन् बिभर्षि सायकानि धन्वेत्याह स्तौत्येवैनमेतदिति तेन विना=प्रतीयमानार्थेन विना। तत्र स्तुत्यनुपपत्तिं विवृणोति "गुणकथनेने"ति व्यतिरेकेणोपपादयति "गुणानामि"ति, स्तुतित्वमेव हीयेतेति प्ररोचकत्वमेव हीयेतेत्यर्थः शेषभूतस्य शेषिणं प्रति किंचित्कारोऽपेक्षितः स न सिध्यतीति यावत् । ननु यदि गुणकथनेन स्तुतित्वन्तथा सति गुणकथनाभावे स्तुतित्वहानिः स्यात् न गुणानामसद्भाव इत्यत्राह—

सू० न चासति गुणे कथिते तेन प्ररोचना जायते, अतः कर्म्म प्ररोचयन्तो गुणसद्भावं बोधयन्त्येवार्थवादाः, मन्त्राश्च कर्म्मसु विनियुक्तास्तत्र किञ्चित्करत्वायानुष्ठेयार्थं प्रकाशयन्तो देवतादिगतविग्रहादिगुणविशेषमभिदधत एव तत्र किञ्चित्कुर्वन्ति ॥

टी० ॥ "न चासते"ति, अनेन "नासता स्तुतिरुपपद्यत" इति द्रमिडभाष्यं स्मार्यते। अर्थप्रकाशनानुपपत्तिं विवृण्वन् मन्त्राणां विग्रहादिमत्त्वे प्रामाण्यमुपपादयति मन्त्राश्चे"त्यादिना, द्रव्यदेवते हि कर्मनिरूपके एतद्दैवत्यमिदं कर्मेति प्रतिपत्तौ देवताविशिष्टत्वेन हि कर्मप्रतिपत्तिः "यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेद्वषट्करिष्यन्नि"ति देवता

[1] न ज्यायोऽस्तीति पा० ।

ध्यातव्येति श्रूयते, देवता चेदृशीत्येव प्रतिपत्तव्या निर्विशेषवस्तुनः प्रतिपत्तुमशक्यत्वात्, इन्द्रत्वादिकञ्च न शुद्धात्मस्वरूपस्य विद्यते अतो विग्रहादो विवक्षितत्वं प्रतीतिरालम्बनमात्रमपेक्षितं नार्थसद्भाव इति चेन्न न ह्यतस्मिँस्तद्दृष्टिः फलाय विधीयत अपि तु यथाऽवस्थितकर्मस्वरूपबोधनं हि क्रियते, तस्मादनुष्ठेयार्थप्रकाशकत्वसिध्यर्थम्मन्त्राणां विग्रहादिमत्त्व च प्रामाण्यमस्तीत्यर्थः, अर्थसद्भावाभावेऽपि प्ररोचना दृश्यत इति चेन्न दृष्टसाधनत्वाभावेऽपि बालातुरादिषु विप्रलम्भकवाक्यानां प्रवृत्तिहेतुत्वं दृश्यत इति विधिवाक्यस्याप्ययथाऽर्थत्वप्रसङ्गात्, अपौरुषेयतया निर्दोषविधिवाक्यं निरूपकविषयमिति याथार्थ्यमिति चेत्तर्हि मन्त्रार्थवादानामप्यपौरुषेयतया निरूपकविषयत्वादतस्मिँस्तद्दृष्टिविधानपरत्वाभावाच्च स्वार्थे प्रामाण्यमस्तीति भावः। एवमर्थशिक्षाप्रदर्शनेन प्रयोगप्रकारोऽर्थसिद्धः, विमता इन्द्रादिशब्दाः स्वरूपातिरिक्तपदार्थप्रतीतिहेतवः अपारिभाषिकत्वे सति बोधकत्वात् निर्दोषवाक्यस्थत्वात् विधिपदवत्, विमता चतुर्थी प्रकृत्यतिरिक्तार्थनिष्ठस्वार्था अपारिभाषिकशब्दस्थविभक्तित्वात् दध्नेति विभक्तिवत् विमता सम्प्रदानकारकबुद्धिः शब्दातिरिक्तविषया कारकबुद्धित्वात् करणकारकबुद्धिवत्, विमता मन्त्रार्थवादाः प्रर्थे नातीयमाप्रमाणानि साधकबाधकागोचरार्थबोधकत्वात् विधिवाक्यवत्, विमत-शब्देन "आपो वै शान्ता आदित्यो यूप" इत्यादिव्यावृत्तिः, विमतानि पदानि मुख्यार्थसंसर्गे प्रमाणानि साधकबाधकागोचरार्थप्रतिपादकवाक्यस्थत्वात् विधिपदवत्, विमतानि पदानि परवार्थभूतप्रतीयमानार्थसंसर्गाणि साधकबाधकागोचरार्थप्रतिपादकवाक्यस्थत्वात् विधिपदवत्, न चार्थवादानां वाक्यत्वमसिद्धं प्रवर्त्तकार्थानवबोधकत्वात्, अतः पद-शब्दवाच्या अर्थवादा इति वाच्यम् अर्थवादाः न पद-शब्दवाच्याःतिङ्कारकपदसङ्घातरूपत्वात् विधिवाक्यवत्

मू० अन्यथा इन्द्रादिस्मृत्यनुपपत्तेः, न च निर्विशेषा देवता धियमधिरोहति, तच्च प्रमाणान्तराप्राप्तान् गुणान् स्वयमेव बोधयित्वा तैः कर्म प्ररोचयन्ति गुणविशिष्टं वा प्रका-

प्रयन्ति देवतादिगतविग्रहादिगुणविशेषमभिदधत एव तच प्राप्तांश्चानूद्य तैः प्ररोचनप्रकाशनङ्कुर्व्वन्ति, विरुद्धत्वे तु तद्वाचिभिश्शब्दैरविरुद्धान् गुणान् लक्षयित्वा कुर्व्वन्ति कर्म्मविधेश्च देवतायाः प्रमाणान्तरप्राप्तम् ऐश्वर्य्यमपेक्षितमेव कामिनः कर्त्तव्यतया कर्म्म विधीयमानं स्वयं क्षणप्रध्वंसि कालान्तरभाविनः फलस्य स्वर्गादेस्साधकमपेक्षते, मन्त्रार्थवादयोश्च—

टी० ॥ अर्थवादाः प्रमाणभूतवाक्यरूपाः साधकबाधकागोचरसंसर्गप्रत्यायकतिङन्तकारकपदात्मकत्वात् विधिवाक्यवत्, विमता मन्त्रार्थवादाः प्रतीयमानार्थविवक्षाऽन्विताः साधकबाधकागोचरार्थत्वे सति विधिनैकवाक्यत्वात् प्रयाजादिवाक्यवत्, न च प्रवर्त्तकवाक्यत्वमुपाधिरिति वाच्यं साधिकारविधिवाक्यत्वेन तस्यापि सोपाधिकत्वप्रसङ्गात्, प्रयाजादिविधीनामविवक्षितार्थत्वेऽनुष्ठानविरोधात्साधिकारविधिवाक्यत्वं न विवक्षितार्थत्वे प्रयोजकमिति चेत् अनुष्ठानस्य प्रमाणिकतया हि तद्भङ्गस्यानिष्टता, एवमपवादाभावे सति स्वतस्सिद्धतः प्रमाणभावस्य भङ्गप्रसङ्गात् प्रवर्त्तकवाक्यत्वमप्रयोजकन्तस्मान्निरुपाधिको हेतुः, विगीता अर्थवादाः परमार्थस्वार्थोपस्थापकाः निरूपकपुरुषप्ररोचकत्वात् रसायनाऽऽयुष्यताप्रतिपादकवाक्यवत् कारणदोषबाधकप्रत्ययविरहितत्वाद्वा स्वर्गयागयोः साध्यसाधनभावप्रतिपादकवाक्यवत्, विमता मन्त्रार्थवादाः प्रतीयमानार्थे प्रमाणानि विध्यपेक्षितार्थसमर्थकत्वाच्छागस्य वपाया इति मन्त्रवत् रात्रिसत्रार्थवादवच्च, विमता प्राशस्त्यबुद्धिः प्राशस्त्यहेतुभूतार्थपारमार्थ्यनिबन्धना निरूपकपुरुषाश्रयप्राशस्त्यबुद्धित्वात् औषधविषयप्राशस्त्यबुद्धिवत् इति च, "आपो वै शान्ता आदित्यो यूप इत्यादिषु प्रमाणान्तरसिद्धस्य तद्विरुद्धार्थस्य चाप्युच्यमानत्वाच्च सर्वत्र प्रामाण्यमिति शङ्कायामाह "तत्र प्रमाणान्तरे"ति, बोधयित्वा -विधाय प्ररोचयन्ति अर्थवादाः प्ररोचयन्ति, प्रकाशयन्ति मन्त्राः लक्षयित्वा कुर्वन्तीति प्ररोचनप्रकाशने कुर्वन्तीत्यर्थः । ननु विध्यपेक्षितार्थे

हि तात्पर्यं देवताविग्रहादेर्विध्यपेक्षितत्वं कथमित्यत्राह "कर्मविधेश्चे"ति, फलमत उपपत्तेरित्यधिकरणार्थो बुद्धिसौकर्यार्थमत्र सङ्गमय्य कथ्यते, न चैतदधिकरणासाधारणार्थतया असाधारणस्तु स्तावकत्वानुष्ठेयप्रकाशत्वसिध्यर्थं प्रतीयमानार्थे प्रामाण्यमस्तीत्ययमेवार्थस्स च पूर्वमेवोक्तः कृष्यादेरङ्कुरादिद्वारकत्वमिवाचेतनद्वारकत्वङ्कर्मणः स्यादित्यत्राह–

मू० "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनम्भूतिं गमयति यदनेन हविषा ऽऽशास्ते तदस्या तदृद्धा तदस्मै देवा राधन्नामि"त्यादिषु देवतायाः कर्म्मणाऽऽराधितायाः फलदायित्वन्तदनुगुणञ्चैश्वर्य्यं प्रतीयमानमपेक्षितत्वेन वाक्यार्थे समन्वीयते,

टी० "वायुर्वा"इति, श्रुतहानमश्रुतकल्पनञ्चानुपपन्नं रात्रिसत्रादिष्विवेति भावः। वाक्यार्थे समन्वीयत इति अर्थवादिकार्थानां श्रूयमाणत्वात् तद्विशिष्टे वाक्यतात्पर्यमिति निश्चिते सति रक्तः पटो भवतीति तदुत्थापिताकाङ्क्षत्वेन विधिनैकवाक्यतयाऽन्वयोऽर्थवादानामिति भावः यत्र वाक्यशेषवशादपेक्षितदेवताप्रीतिद्वारकत्वं न सिध्यति तत्रापि यजिसामर्थ्यात्तत्सिध्यति। अर्थवादाभावेऽपि विधिसामर्थ्यात् स्तुतिरेवेत्याह "देवपूजाभिधायिन इति, न च यजि देवपूजासङ्गतिकरणदानेष्विति शाब्दिकानां स्मरणम्भ्रान्तिमूलमिति वाच्यं विध्यपेक्षितार्थसमर्पकतया स्वार्थे प्रमाणभूतत्वान्मन्त्रार्थवादानामस्य स्मरणस्य तन्मूलत्वोपपत्तेः, विमतो विधिप्रत्ययः चेतनप्रीत्यतिरिक्तफलसाधनकल्पननिराकाङ्क्षः चेतनप्रीत्यतिरिक्तफलसाधनवाचकत्वकल्पननिराकाङ्क्षश्च कृतिसाध्यचेतनप्रीत्यवगमकवाक्यस्थत्वात् राजानं सेवेतेति वाक्यस्थविधिप्रत्ययवत्, विमत–शब्देन जुहुयादित्यादिव्यावृत्तिः, जुहुयादित्यादिषु विधिप्रत्ययेषु विधिप्रत्ययत्वलिङ्गेन पूर्वोक्तसाध्यद्वयं समर्थनीयन्तदेवमिति कृत्स्न–शब्देन मन्त्रार्थवादविषयो विवक्षि-

ताः, वाच्यापूर्ववादपक्षे अश्रुतकल्पनं नास्तीति चेन्न वाच्यत्वस्याऽपि कल्प्यमानत्वात्कल्प्यापूर्ववादे अपूर्वमेव कल्प्यं वाच्यपक्षे वाच्यत्वमपि कल्प्यमित्यभिप्रायेण व्युत्पत्तिसमयानवगतमित्युक्तं, तथेत्यादिब्राह्मण–शब्देन विध्युद्देशग्रहणं विध्यर्थवादमन्त्ररूपेण विभागवतामस्मादिभिरनधीतासु अधीतासु च शाखासु तत्राप्यन्यतरप्रकरणेषु प्रसङ्गादनुप्रविष्टानाम्भगवता व्यासेन व्यस्तेष्वव्यस्तेषु च वेदभागेषु विप्रकीर्णानां वाक्यानामर्था इतिहासादिषु सङ्कलय्य कथ्यन्त इति भावः । सङ्कीर्ण–शब्देन नित्यानुमेयश्रुतिमूलत्वोत्सन्नशाखामूलत्वव्युदासः, तदुभयं ह्यनुपपन्नं तत्र यस्तावन्नित्यानुमेयतयाऽभिमतो वर्णसमुदायः स किं वर्णमात्रसङ्घातः? उतानुपूर्वीविशेषविशिष्टः? प्रथमे कचटतपादिवदर्थावबोधकत्वाभावेन वाक्यत्वाभावाद्वाक्यविशेषस्वरूपवेदत्वासिद्धेः स्मृतीनां वेदमूलत्वं न स्यात्, द्वितीये नित्यानुमेयत्वं व्याहतं स्वतःक्रमरहितानां वर्णानामुच्चारणेन विना आनुपूर्वीविशेषविशिष्टत्वायोगात्, उच्चारणयोग्यताऽस्तीति चेन्न उच्चारणयोग्यता नाम पटुतरवागिन्द्रियपुरुषबुद्धिस्थितिः, सा च योग्यता किं वर्णमात्रगता? उतानुपूर्वीविशेषविशिष्टवर्णगता? न प्रथमः, वर्णमात्रस्यार्थानवबोधकतया स्मृतेर्निर्मूलत्वप्रसङ्गात्तस्यामानुपूर्व्यां स्मृतिप्रतिपन्नार्थावबोधनक्षमत्वं वर्णेष्वस्तीति

भा॰ देवपूजाभिधायिनो यजिधातोश्च यागाख्यङ्कर्म स्वाराध्यदेवताप्रधानं प्रतीयते, तदेवं कृत्स्नवाक्यपर्यालोचनया वाक्यादेव विध्यपेक्षितं सर्वमवगतमिति नापूर्वादिकं व्युत्पत्तिसमयानवगतं कर्मविधिष्वभिधेयतया कल्प्यतया चा–

चेत् तेष्वेव वर्णेषु आनुपूर्व्यन्तरे सति चैत्यवन्दनकर्त्तव्यताद्यर्थबोधनक्षमत्वमप्यस्तीति बुद्धस्मृतेरपि वेदमूलत्वप्रसङ्गः, वेदबाह्यतया सम्प्रतिपन्नत्वान्न तस्या वेदमूलत्वानुमानशङ्कोदय इति चेत् मेघसन्देशस्य वेदमूलत्वप्रसङ्गः, प्रवर्त्तकार्थपरत्वाभावान्न वेदमूलत्वानुमितिरिति चेत् "कार्या सैकतलीनहंसमिथुनस्रोतोवहा मालिनी"ति वाक्यस्य वेदमूलत्वप्रसङ्गः आनुपूर्वीविशेषविशिष्टवर्णगता योग्यतेऽत्यप्ययुक्तं पूर्वं केनचिदुच्चारितत्वाभावादानुपूर्व्य-

सिद्धेः, ततश्चानाद्यानुपूर्वीविशिष्टतारूपवेदत्वं दूरोत्सारितम्, आनुपूर्वीविशेषेणोच्चारणयोग्यत्वं वर्णानामनादीति चेत् तच्चैत्यवन्दनप्रतिपादनानुगुणानुपूर्व्या अपि तुल्यम्, अतस्तत्रापि वेदमूलत्वं स्यात्, कर्तृसामान्याभावाच्च तत्र वेदमूलत्वानुमानं श्रुतिस्मृत्यर्थयोस्तुल्यतया कर्तृसामान्यात् स्मृतेर्वेदमूलत्वानुमानमिति चेन्मा भूत्, कर्तृसामान्यं तेन मन्वादिस्मृतीनां वेदमूलत्वेऽनुमिते तुल्यन्यायतया ऽऽपतितं वेदमूलत्वं को वारयेत् स्वावगतार्थप्रतिपादनानुगुणानुपूर्वीविशेषेणानादिसम्बन्धयोग्यवर्णाऽस्तित्वज्ञानं हि सर्वत्र समानन्तज्ज्ञाननियमो बुद्धादीनां ग्रन्थनिर्माणदशायां नास्तीति चेत् न तज्ज्ञानपूर्वकमेवेदानीं रथ्यातृणानि गणयेत् स्वर्गकाम इत्युक्तस्य वाक्यस्य वेदमूलत्वप्रसङ्गः। ननु अनेनैव स्मृत्यवगतार्थविशेषेणावच्छिन्नानुपूर्वीविशिष्टानां वर्णानां वेदत्वमिति चेन्न मन्वादिवाक्यस्यापि तदर्थावच्छिन्नानुपूर्वीविशिष्टवर्णसमुदायात्मकतया वेदत्वप्रसङ्गेन अनुमेयान्तराभावात् नित्यानुमेयश्रुतिमूलत्वासिद्धेरतोनित्यानुमेयश्रुतिमूलत्वमनुपपन्नम् उत्सन्नशाखामूलत्वपक्षेऽपि अधीयमानशाखास्वेव प्रमादात्कतिपयवाक्यानां क्वचित् क्वचिद्देशे प्रलीनत्वात्तन्मूलस्मृतयः प्रणीता इत्यप्ययुक्तं पदवाक्यसङ्ख्यानियमेन बहुभिरध्येतृभिरस्खलितमधीयमानत्वात्, कतिपयवाक्यानां प्रलीनत्वानुपपत्तेः स्मृतीनां मूलभूतशाखाकार्त्स्न्येन काचिदुत्सन्ना तन्मूलाः स्मृतय इत्यप्ययुक्तं, तथाहि शाखाया उत्सादो नाम किं कतिपयदेशेष्विदानीमध्येतृविरहः? उत सर्वदेशेष्वप्यध्येतृविरहः? प्रथमः कल्पोऽभ्युपगतः, न द्वितीयः, तपःप्रभावाधिगतसार्वज्ञ्यानां व्यासादीनां तत्तच्छाखाविशेषाभिज्ञानां तदध्ययनपरित्यागे कारणाभावात्स्वशिष्याध्यापनसम्भवाच्च न चेदानीन्तनशिष्यबुद्धिमान्द्यादधुना तदध्यापनासम्भवः, बहुशाखाध्ययनासामर्थ्येप्यस्मदादेरिव तत्तदेकशाखाध्ययनसमर्थशिष्यसम्भवात्, अतः प्राचीन एव पक्षः परिशिष्यते, ततश्च स्मृतीनां सङ्कीर्णवेदभागमूलत्वमेव युक्तं स्मृतिमूलभूतवेदभागसद्भावे स्मृतिप्रणयनवैयर्थ्यमिति चेन्न तच्छाखाऽध्येतृपुरुषविरहि-

मू० श्रयितव्यं, तथा सङ्कीर्णब्राह्मणमन्त्रार्थवादमूलेषु धर्मशास्त्रेतिहासपुराणेषु ब्रह्मादीनान्देवासुरप्रभृतीनां देहे-

तद्देशेषु तद्युक्तदेशेष्वपि बहुशाखाध्ययनधारणतदर्थनिरूपणनिर्णयासमर्थपुरुषेषु च सफलत्वात्, अतः स्मृतीनां सङ्कीर्णवेदभागमूलत्वं युक्तं, कर्मविधेश्चेत्यादौ भाष्ये इदमर्थसिद्धं, यदुक्तं यागादौ दानादौ च अर्थवैरूप्याश्रयणादर्थवैशसमिति तदसत् सर्वत्राप्यपूर्वकल्पनानभ्युपगमात्, न च फलसाधनताऽनुपपत्तिः कर्मोपजनितप्रीतेः परमात्मन एव तत्सिद्धेः, "वासो ददाति सर्वदैवत्यं वै वासः सर्वा एव देवताः प्रीणाती"त्यादिभिर्दानादीनामपि देवताप्रीतिहेतुत्वावगमाच्च, न च परमात्मप्रीत्या फलसम्भवे देवतैश्वर्यानुपयोगः प्रधानावान्तरापूर्वकल्पनान्यायस्य अन्यत्रापीष्टत्वात् तथाहि पूर्वापरीभूतानामङ्गप्रधानरूपाणामनेकेषां कर्मणां यौगपद्यासम्भवादवान्तरापूर्वद्वारा परमापूर्वनिष्पत्तिरङ्गीक्रियते, एवमेव तत्तत्कर्मजनितप्रीत्यतिशयाभिर्देवताभिः परमात्मन्यखण्डैकप्रीतिजननमातिष्ठामहे, इदमेव च देवतायाः फलानुगुणमैश्वर्यं यत्फलप्रदे परमात्मनि स्वप्रीतिद्वारा प्रीतिजननम्, उक्तं हि भगवता "यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छती"त्यारभ्य "लभते च ततः कामान्मयैव विहितान् हि तानि"ति तेन फलभोगस्यानियतकालत्वेऽपि दोषः, न चैवं सति प्रतिमाप्रतिमेयन्यायेन देवताप्रीतिरनास्थेया "यस्यै देवतायै हविर्गृहीतं स्यात्तान्ध्यायेद्वषट्करिष्यन् साक्षादेव देवताः प्रीणाति तृप्ता एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति त एनं तृप्ता आयुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेन अन्नाद्येन च तर्पयन्ति येचैव देवास्सायं यावानो ये च प्रातर्यावाणस्तानेवोभयांस्तर्पयति त एनं तृप्ताः प्रजया पशुभिस्तर्पयेयु"रिति देवतातृप्तेः श्रुतत्वात्तत्प्रहाणानुपपत्तेः, पितरि प्रीतिमापन्ने सर्वास्तुष्यन्ति देवताः—इति न्यायात् भृत्यप्रीणनेन भूभृत्प्रीणनन्यायाच्च देवताप्रीतेः परमात्मप्रीतिहेतुत्वोपपत्तेश्चेति सूत्रार्थमुपसंहरति "अत"-इति, ननु कथन्देवानां ब्रह्मविद्याऽधिकारः, न ह्यत्रैवर्णिकानान्तेषामुपनयनाभावेनाध्ययनसिद्धस्वाध्यायलब्धविद्यत्वं, न च तेषां विद्याङ्गभूतकर्मानुष्ठानयोग्यत्वम् अग्निनिष्पत्त्यनुपपत्तेः "वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्य आदधीत शरदि वैश्य आदधीत इति त्रैवर्णिकविषयाधानविधिः कथं देवतामधिकरोति अन्यार्षेयस्य चानधिकारोऽधिकरण-

सिद्धः, देवानां देवर्षीणाञ्च मूलभूतऋष्यन्तराभावादृष्यार्षेयतया चानधिकारः, अग्नीन्द्रादीनामग्नीन्द्रादिदेवताभावादग्न्याद्युद्देशेन हविःप्रक्षेपा-

**मू० न्द्रियादयः स्वभावभेदाः स्थानानि भोगाः कृत्यानि च इत्येवमादयस्सुव्यक्ताः प्रतिपाद्यन्ते, अतो विग्रहादिमत्त्वाद् देवादीनामप्यधिकारोऽस्त्येव ॥**

नुपपत्तिश्चेति, उच्यते न तावदुपनयाभावात् साङ्गविद्यानधिकारः, तस्याध्ययनाङ्गत्वात् यज्ञादिकर्मब्रह्मोपासनयोरङ्गत्वाभावात् अध्ययनाभावेऽपि देवतानां सुकृतप्रकर्षेण पूर्वजन्मविशेषाधीतस्वाध्यायतदर्थस्मरणोपपत्तेश्च, पिशाचादयोऽपि हि पूर्वजातिं स्मरन्ति किं पुनर्देवा देवर्षयश्च, न चोपनयनविरहाच्छूद्रादिवद्विद्याकर्मणोरनधिकारः शूद्रादीनामप्युपनयनविरहप्रयुक्तत्वाभावादनधिकारस्य, स खलु तेषां सामर्थ्याभावानुगृहीतशास्त्रनिषेधप्रयुक्त, देवतानां हि विद्याकर्मणो न क्वचित्प्रतिषिद्धे प्राक्तनज्ञानाप्रमोषात् सामर्थ्यं च स्थितं, न चात्रैवर्णिकत्वादग्न्याधानाभावादृष्यार्षेयतया च विद्याङ्गकर्मानधिकारः, मनुष्यकर्तृकाधानस्यैव त्रैवर्णिकस्यार्षेयाधिकारित्वनियमात् किमत्र नियामकम्? इति चेत् "देवा वै सत्रमासत विश्वसृजः प्रथमास्सत्रमासते"त्यादिश्रुतिभिर्देवानां क्रत्वनुष्ठातृत्वदर्शनात्, विशेषत इन्द्रादीनां वृत्रवधादिजनितकल्मषप्रक्षालनाय क्रत्वनुष्ठानस्मरणाच्चेति ब्रूमः । यद्वा ब्राह्मण्यादिकन्देवानामप्यस्ति तत्खल्वदृष्टविशेषसंबन्धरूपन्न तु जातिरूपं ब्राह्मणादिभिर्ब्राह्मण्यादिषूत्पत्तिमात्रं वा अन्यथाऽऽदिकाले ब्रह्मणो मुखबाहूरुप्रभवानां पश्चाद्विश्वामित्रप्रभृतीनाञ्च ब्राह्मण्याद्यभावप्रसङ्गात् सन्तानविशेषप्रसूतत्वञ्च तादृगदृष्टवत्त्वसूचकं सन्तानविशेषोत्पत्तेः प्रकृष्टादृष्टकार्यत्वात् अलौकिकप्रकर्षविशेषकारणत्वाच्च, ईदृशं ब्राह्मण्यादिकं देवतासु सम्भवत्येव, अवगम्यते च तत्, वाजपेयं प्रकृत्य तं वृहस्पतिरुदजयत्तेनायजत तेनेन्द्रमयाजयत् इति वृहस्पतिना इन्द्रेण च वाजपेयस्यानुष्ठितत्वमुक्त्वा तत एव हेतोः स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञ इति वाजपेयस्य ब्रह्मक्षत्राधिकारत्वमुच्यमानं वृहस्प-

तेर्ब्राह्मण्यमिन्द्रस्य क्षत्रियत्वमपि ह्यवगमयति, "ब्रह्मा बृहस्पतिः क्षत्र-मिन्द्रः" इति च श्रूयते तथा "मरुतो वै देवानां विश" इति मरुतो विशः श्रूयन्ते, अतो देवताविशेषाणां ब्रह्मविट्क्षत्रविभागसिद्धेरग्निसम्बन्धो युक्तः, विद्यानुग्राहकं ब्रह्मचर्यादिकञ्च देवानां श्रूयते "एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवासे"त्यादि, अतो विद्याङ्गकर्मगुणपौष्कल्यात् सामर्थ्यसिद्धिः, न च यष्टव्यदेवतान्तराभावाद्यजनाद्यनुपपत्तिः, अग्नीन्द्रा-शब्दप्रवृत्तिनिमित्तानां ज्ञानशक्त्यैश्वर्यविशेषाणां निरुपाधिकाश्रयतया

## सू० विरोधः कर्म्मणीति चेन्नानेकप्रति-पत्तेर्दर्शनात् ॥ २६ ॥

सू० देवादीनां विग्रहादिमत्त्वाभ्युपगमे कर्म्मणि विरोधः प्रसज्यते बहुषु यागेषु युगपदेकस्येन्द्रस्य विग्रहवत्त्वे "अग्निमग्न आवह इन्द्र आगच्छ हरिव आगच्छ इत्यादिना-ऽऽहूतस्य तस्य सन्निधानानुपपत्तेः, दर्शयति चाग्न्यादीनां तत्र तत्रागमनं "कस्य वा ह देवा यज्ञमागच्छन्ति कस्य वा न बहूनां यजमानानां यो वै देवताः पूर्वं परिगृह्णाति स एनाः श्वो भूते यजत" इति अतो विग्रहादिमत्त्वे कर्म्मणि विरोधः प्रसज्यत इति चेन्न, अनेकप्रतिपत्तेर्दर्शनात् ॥

टी० तच्छब्दवाच्यस्य परमात्मनो ऽव्यवधानेन देवताभिराराध्यत्वादग्नीन्द्रादीनान्तु तत्तद् यज्ञभागभागित्वं स्वाराधनप्रीतेन भगवता दत्तं, न तु स्वाभाविकं यथोक्तम्भगवता व्यासेन कृष्णद्वैपायनेन मोक्षधर्मे यज्ञायहाराध्याये "ततस्ते विबुधास्सर्वे ब्रह्मा ते च महर्षयः । "वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन् । तस्मिन् सत्रे तदा ब्रह्मा स्वयं भागमकल्पयत् ॥ देवा महर्षयश्चैव सर्वे भागानकल्पयन् । ते कार्त्तयुगधर्माणो भागाः परमसत्कृताः

प्रापुरादित्यवर्णन्तम्पुरुषन्तमसः परम्" इत्यव्यवधानेन भगवतोयष्टृत्वमुक्तन्तत्र भगवद्वचः "येन यः कल्पितो भागः स तथा समुपागतः प्रीतोहम्प्रदिशाम्यद्य फलमावृत्तिलक्षणं तत्र "यज्ञैर्ये चापि यक्ष्यन्ति सर्वलोकेषु वै सुराः कल्पयिष्यन्ति वा भागात् ते नरा वेदकल्पितान् यो मे यथा कल्पितवान् भागमस्मिन्महाक्रतौ स यथा यज्ञभागार्हो वेदसूत्रे मया कृतः" इति तत्र भगवता यज्ञभागभाक्त्वन्देवानान्दत्तमिति सुष्ठुतरम् अतो देवानां कर्मस्वनधिकाराभ्युपगमेन विद्यामात्रानधिकारवादोऽनुपपन्नः, अतस्माद्ब्रह्मविद्योपसंहारसामर्थ्यं देवानामस्तीति सिद्धं देवानां ब्रह्मविद्याधिकारित्वम् सू० विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्, विग्रहाभ्युपगमे तद्वदार्थवादिके आह्वानागमने चाभ्युपेये तदा युगपदनेककर्मस्वाह्वाने विरोधः शरीराधीनत्वादागमनस्येत्यर्थः, आगमनमात्रे प्रामाणिके सति हि तद्यौगपद्ये विरोध इत्यागमने प्रमाणमाह "दर्शयति चे"ति, नेत्यादिकं व्याचष्टे "तत्रे"ति, दर्शनादित्येतद्व्याचष्टे–

**सू० दृश्यते हि सौभरिप्रभृतीनां शक्तिमतां युगपदनेकशरीरप्रतिपत्तिः ॥**

टी० "दृश्यते ही"ति, "आत्मनो वै शरीराणि बहूनि मनुजेश्वर योगी कुर्याद् बलं प्राप्य तैश्च सर्वां महीं चरेदि"ति भारतवचनादि द्रष्टव्यं, योग्यानुपलम्भस्तु मन्त्रौषधादिभिर्मनुष्याणामिव शक्तिविशेषैर्देवानामपि सम्भवतीति न विरोध इति भावः। ननु यदि देवा इहागत्य हविरदन्ति तर्ह्यन्यत्र मन्त्रार्थवादप्रतिपन्नमग्नेर्हव्यवाहत्वं भज्येत, अवगम्यते च तत् हव्यवाडग्निरजरःपिता न" इति, "अवाड्ढव्याणि सुरभीणि कृत्वा प्रादाः पितृभ्यः स्वधया ते अक्षन्निति अग्रेस्त्रयो ज्यायांसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्ते"त्यादिषु, इह प्रक्षिप्तस्य हविषो लोकान्तरप्राप्तिश्च श्रूयमाणाऽनुपपन्ना अग्निहोत्राहुती प्रकृत्य "ते वा एते आहुती हुते उत्क्रामतः ते अन्तरिक्षमाविशतस्ते अन्तरिक्षन्तर्पयतः ते दिवमाविशतस्ते दिवं तर्पयतस्ते तत आवर्तेते ते इमामाविशत" इति स्मर्यते च अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठ-

ष्ठते आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा" इति तत्र आवर्त्तते इति इह हविषोरावृत्तिश्चानुपपन्ना कथं देवैर्भक्षितस्या वृत्तिः? प्रत्यक्षेण दग्धस्य हविषः कथन्देवैर्भक्ष्यमाणत्वञ्च युक्तमिति उच्यते "अवाङ्कुण्यानि सुरभीणि कृत्वा प्रादाः" इति श्रवणात् अग्निना परिणाम्यमानस्य हविषस्सूक्ष्मं रूपं किमप्यलौकिकं विद्यते इत्यभ्युपेत्यं श्रेयस्साधनत्ववत्, तच्च देवानामिच्छावशादतीव वर्धते तथा हि ब्राह्मणं "यद्वै देवा हविर्जुषन्ते अल्पमप्येकामाहुतिमपि तद्गिरिमात्रं वर्धयन्ते" इति अतोऽपरिमितत्वेन किञ्चिद्भुज्यते किञ्चिन्नीयत इति सर्ववाक्यानुगुण्येन कल्प्यम्। यद्वा इह सन्निधायापि हविर्गृहीत्वा तत्स्वस्थानङ्गत्वा भुञ्जतां को बाधः, हविषोरिहावृत्तिर्नाम तत्फलभूतवृष्ट्यादेरिह सम्भव उपचारादुक्तः । यद्वा "इन्द्र आगच्छ हरिव आगच्छ मेधातिथे अग्निमावह सोममावहे"ति येष्विष्ट्यादिकर्मसु देवताह्वानतदागमने श्रुते तेष्वेव कर्मसु इहागत्य हविरदनमन्यत्र त्वग्निभिर्हविष उन्नयनमिति विभागः ते वा एते आहुती हुते उत्क्रामत इति वाक्यमपि ह्यग्निहोत्राहुतिविषयं न तत्र देवताह्वानागमने । ननु तत्रापि सायंयावप्रातर्यावसंज्ञानान्देवानामागमनं श्रूयते "सायंयावानश्च वै देवाः प्रातर्यावाणश्चाग्निहोत्रिणो गृहमागच्छन्ती"ति सत्यं, ते तु नाग्निहोत्राहुतिभोक्तारः सजूर्देवैस्सायं यावभिरिति सायं समृशन्ति सजूर्देवैः प्रातर्यावभिरिति प्रातः ये चैव देवाः सायंयावानो ये च प्रातर्यावाणस्तानेवोभयाँस्तर्पयन्ती"ति संस्पर्शनमात्रतृप्तिश्रवणात्तेषां हुतहविर्भोक्तृत्वन्तु सूर्यादीनामेव, न च तत्र सूर्यादीनामाह्वानम् अतो देवताह्वानवत्सु कर्मसु इहागत्य हविरदनमन्यत्र हविष उन्नयनमिति विभाग उपपन्नः, अतोऽग्ने हव्यवाहत्वश्रुतिराहुत्योरुत्क्रमणश्रुतिरग्नौ प्राप्ताऽऽहुतिस्सम्यगादित्यमुपतिष्ठत इति स्मृतिश्च चरितार्था, अतोऽनेकशरीरप्रतिपत्त्या देवानां सन्निधानेन न कर्मणि विरोधः, इतरैस्तु "कति देवा" इत्युपक्रम्य "त्रयश्च त्रीणि च शता त्रयश्च त्रिसहस्रे"ति, निरुच्य कतमे त इत्यस्यां पृच्छायाम्महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति निब्रुवन्ती श्रुतिरेकैकदेवताया अनेकरूपतायां प्रमाणत्वेन उपन्यस्ता अत्र त्रयस्त्रिंशतान्देवानाम्प्राधान्यमितरेषान्तद्गुण-

भावश्च प्रतीयते, महिमान एवैषामेत इति हि श्रूयते, महिम-शब्दस्य शरीरवाचित्वेन व्युत्पत्त्यभावात्, एत इति च न शरीरमात्रनिर्देशः अपि तु सशरीरचेतनव्यपदेशः, कति देवा इत्युपक्रमस्यदेव-शब्दसामानाधिकरण्यादेत इति पदस्य, न हि देवशब्दो देहमात्रपरः, न च देव-शब्दनिर्दिष्टा देवा जीवान्तराणां शरीरभूताः शरीरलक्षणस्य सर्वथाऽनुपपत्तेः, कतम एको देव इति पृष्ट्वा प्राण इति प्रतिवचनवाक्येऽपि प्राण-शब्दो न प्रसिद्धप्राणपरः अपि तु परमात्मपरः, अतोऽस्याः श्रुतेरेकैकदेवताया अनेकरूपताप्रतिपादकत्वानुपपत्तिमभिप्रेत्य अत्र सैषा श्रुतिरनुदाहृता व्याख्यात्रन्तरैरनेकप्रतिपत्तेरिति पदस्य युगपदनेकार्थोपलम्भसामर्थ्यपरत्वेन व्याख्यातत्वेऽप्यागच्छन्तीति श्रुत्यक्षरस्वारस्यानुगुणमनेकशरीरप्राप्तिपरतया व्याख्यातं सू० शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्, शब्द-शब्दं विशिनष्टि "वैदिक"इति, अभिप्रेतं हेतुमाह "अनित्यार्थसंयोगादि"ति, हेतुं विवृणोति-

## सू० शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ २७ ॥

सू० विरोध इति वर्त्तते, मा भूत् कर्म्मणि विरोधोऽनेकशरीरप्रतिपत्तेः, शब्दे तु वैदिके विरोधः प्रसज्यते अनित्यार्थसंयोगाद्, विग्रहवत्त्वे हि सावयवत्वेनेन्द्रादेरर्थस्यानित्यत्वमनिवार्यं ततो देवदत्तादिशब्दवदिन्द्राद्यर्थजन्मनः प्राग्विनाशादूर्द्ध्वञ्चेन्द्रादिशब्दानां वैदिकानामर्थशून्यत्वम् अनित्यत्वं वा वेदस्य स्यादिति चेत् न अतः प्रभवात्-अस्मादिन्द्रादिशब्दादेव पुनः पुनरिन्द्राद्यर्थस्य प्रभवात् ।

टी० "विग्रहवत्त्वे ही"ति, अर्थशून्यत्वमनित्यत्वं वेति देवदत्तादिविनाशे देवदत्तादिशब्दस्येवानर्थकत्वम् अनित्यत्वम् अनुच्चार्यमाणत्वम्

नित्यत्वेऽर्थशून्यत्वं विग्रहादिवदिन्द्राद्यर्थस्य यावच्छब्दभावित्वाभावात् अर्थवत्त्वे अनित्यत्वं वा, शब्दस्य यावदर्थभावित्वादर्थानां चानित्यत्वादित्यर्थः । ननु कथमर्थशून्यत्वं शब्दानाम् अतीतानागतभूतभविष्यदादयश्शब्दा हि अर्थसमकालत्वाभावेऽप्यर्थवन्त एव न हि तेषां कदाचिदप्यर्थसमकालत्वसम्भवः, न च तेषामर्थशून्यत्वं यथा विन्ध्यस्थेनोच्चारितो मेरु-शब्दो देशविप्रकर्षेऽप्यर्थवानेवमिन्द्रादिशब्दाश्चेन्द्रादिव्यक्तीनां कालविप्रकर्षेऽप्यर्थवन्तः कस्मान्न भवन्ति, क्वचित् कदाचिदर्थस्य प्रामाणिकत्वं हि शब्दस्यार्थवत्त्वनिबन्धनमिति, उच्यते अनभिज्ञा भवन्तो भाष्यहृदयस्य ये एवं परिचोदयन्ति, एतदपाकरणाय हि शब्दे तु वैदिक इति विशेषितं सौत्रं पदम् इहापीन्द्रादिशब्दानां वैदिकानामित्युक्तम्, अयमभिप्रायः इन्द्र आगच्छ हरिव आगच्छेत्यादिकं मन्त्रजातं वैदिककर्मसु विनियुज्यते तत्र पूर्वमेवेन्द्रव्यक्तौ विनष्टायामिन्द्रशब्दवाच्यव्यक्तेः पाश्चात्ययज्ञकर्मण्यागमनाभावादिन्द्र आगच्छेत्यादिशब्दानामुच्चार्यमाणानामर्थशून्यत्वमनुच्चार्यमाणत्वं वा स्यादिति इन्द्रव्यक्त्यन्तरेणार्थवत्त्वमिति चेत् तद्व्यक्त्यन्तरम्पूर्वव्यक्तिसमानाकारायुधपराक्रमविभूतिकं न वा? प्रथममनुपपन्नं, स्रष्टुः स्वातन्त्र्यस्य अनिवार्यत्वात्सरूपसृष्टिनियमानुपपत्तेर्वैरूप्यसंभवात् ततश्चान्याकारवाचिनामिन्द्रादिशब्दानां प्रवृत्तावाकारान्तरस्य निमित्तत्वायोगादर्थशून्यत्वमवर्जनीयं, द्वितीये तु या व्यक्तिरिन्द्र-शब्दविषयत्वेनाभिमता तस्यां व्यक्तौ तच्छब्दप्रवृत्तिनिमित्तस्य कस्यचिदभावादेव तदवाचकतयाऽर्थशून्यत्वन्तथाऽपि स्रष्टृपुरुषबुद्ध्यधीनसङ्केतवशात् प्रयोगश्चेत् शब्दसङ्केतगोचरस्यार्थसङ्केतयितृपुरुषबुद्ध्यगोचरत्वे सङ्केतानुपपत्तेर्देवदत्तादिशब्दानामिवेन्द्रादिशब्दानां पुरुषान्तरबुद्धिसापेक्षप्रवृत्तित्वाद्बुद्धस्यानपेक्षत्वलक्षणम्प्रामाण्यं न स्यात्, यदि प्रधानकालपरमात्म-शब्दवदेकैकव्यक्तिवाचित्वमिन्द्रादिशब्दानां स्यात्तदा सङ्केतनैरपेक्ष्येण निरपेक्षत्वलक्षणं प्रामाण्यं स्यात्, अतः इन्द्रादीनां प्रधानानामिव नित्यत्वाभावात्तन्नाशेऽर्थशून्यत्वाऽनुच्चार्यमाणत्वयोरन्यतरप्रसङ्गो दुर्वार इति, नातः प्रभवादि-

त्येतद्व्याचष्टे "तच्चे"त्यादिना, शब्दादर्थस्योत्पत्तिः कथं, ततश्चार्थशून्यत्वानित्यत्वपरिहारः कथमित्यत्राह–

भा० एतदुक्तम्भवति–न हि देवदत्तादिशब्दवदिन्द्रादिशब्दाः वैदिकाः व्यक्तिविशेषमात्रे सङ्केतपूर्वकाः प्रवृत्ताः अपि तु स्वभावत एव गवादिशब्दवदाकृतिविशेषवाचित्वेन ततश्चैकस्यामिन्द्रव्यक्तौ विनष्टायामत एव वैदिकादिन्द्र–शब्दान्मनसि विपरिवर्त्तमानादवगतन्द्राच्यभूतेन्द्राद्यर्थाकारो धाता तदाकारमेवापरमिन्द्रं सृजति, यथा कुलालो घट–शब्दान्मनसि विपरिवर्त्तमानात्तदाकारमेव घटमिति, कथमिदमवगम्यते? प्रत्यक्षानुमानाभ्यां–श्रुतिस्मृतिभ्यामित्यर्थः श्रुतिस्तावत् "वेदेन नामरूपे व्याकरोत् सतासती प्रजापति"रिति तथा "स भूरिति व्याहरत् स भूमिमसृजत स भुव इति व्याहरत्

टी० "एतदुक्तमि"ति, धाता तदाकारमेवेति पदे 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदि"ति श्रुतिः "यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिष्वि"त्यादिस्मृतिश्च स्मार्यते, धीस्थस्य शब्दस्य तत्तदाकृतिस्मारकतया हेतुत्वन्तदेव दृष्टान्तेन विशदयति "यथे"ति, मनसि विपरिवर्त्तमानत्वम्–आलोच्यमानत्वं श्रुतिस्मृतिभ्यामिति प्रत्यक्षग्राह्यो वेदः प्रत्यक्ष–शब्दवाच्यः स्वानुरूपवेदानुमापिका स्मृतिरनुमानशब्दवाच्ये यर्थ, सतासती इति विदविती रूपे व्याकरोत्–विविधमकरोदित्यर्थ. । परैस्तु अनित्याच्छब्दाज्जगतः प्रभवानुपपत्तेरनित्यवर्णातिरिक्तो नित्यः शब्दः स्फोटः शब्द इत्येकदेशिमतेन उपन्यस्य तद्वादस्य वर्णानां नित्यत्वं प्रसाध्य वर्णानित्यत्वेऽपि तद्गतजात्या सम्बन्धग्रहणादिकं जगतस्ततः प्रभवादिकं चोपपन्नमित्युक्तं, तदयुक्तम्

दृष्टानुपयोगाद्विरोधाच्च, तथा हि न तावच्छब्दो जगदुपादानं ब्रह्मोपादानत्वाभ्युपगमात्, निमित्तत्वञ्च न दण्डचक्रादिवत्कारकतया किन्तु बुद्धिस्थित्याऽर्थस्मारकतया, तत्र च धर्माधर्मयोरनित्ययोरपि विषमजगदुत्पत्तौ निमित्तत्वमभ्युपगतं दण्डचक्रादीनाञ्चानित्यानामपि निमित्तत्वं दृश्यते किं कर्ममात्रस्यानित्याद्दुत्पत्तिरनुपपन्ना? उत जगद्रूपकार्यविशेषस्य? न प्रथमः दण्डचक्रादीनां घटादिकारणत्वदर्शनात्, न द्वितीयः धर्माधर्मयोर्जगन्निमित्तत्वाभ्युपगमात्, एवं सत्तयोपकारकाणामप्यनित्यानां कारणत्वं यदा सम्भवति तदा स्मर्यमाणतयोपकारकाणां शब्दानामनित्यत्वेऽपि कारणत्वसम्भवः किं पुनर्न्यायसिद्धः, अतो नित्यत्वस्यानुपयोगात् स्फोटवादो न प्रस्तोतव्यः, दूरे तस्य निरसनीयता, वर्णानाञ्च नित्यत्वसमर्थनमत एव निष्फलं, किञ्च नित्यानामपि वर्णानां न वर्णत्वाकारेणार्थवाचित्वं किं त्वानुपूर्वी विशेषविशिष्टपदवाक्यरूपेण विभुतया नित्यतया च देशतः कालतश्च क्रमरहितानामानुपूर्व्या उच्चारणनिबन्धनत्वात्, तस्य च क्षणभङ्गुरत्वात् अर्थावबोधं प्रयोजनमपेक्ष्य वर्णनित्यत्वसाधनं तद्गतजात्यवस्थानवचनं च विफलम्, अर्थावबोधकरूपस्यानित्यत्वस्थितेः, यथोदकाहरणरूपं प्रयोजनमपेक्ष्य पृथिवीस्थिरत्वसमर्थनं, पृथिवीत्वजात्यवस्थानवचनं च नोपयुज्यते पृथिव्या घटरूपेणोदकाहरणसाधनत्वात् पार्थिवावयवरचनाविशेषलब्धरूपस्य घटस्य चानित्यत्वात् तद्वत्। किञ्च वर्णानां नित्यत्वं नाम किमाप्रलयावस्थायित्वम्? उत उभयावधिरहितत्वं? प्रथमे पूर्वोक्तवैयर्थ्यं स्थितं पृथिव्या आप्रलयावस्थायित्वसमर्थनस्य घटेन उदकाहरणेऽनुपयोगात्, द्वितीये शब्दगुणकाकाशसृष्टिप्रलयश्रुतिविरोधः, वर्णानित्यत्वेऽभ्युपगम्यमानेऽपि तद्गतजात्यभ्युपगमश्च विरुद्धः, व्यक्त्यनवस्थाने जात्यवस्थानाऽनु-

ब्रू० सोऽन्तरिक्षमसृजते"त्यादि वाचकशब्दपूर्वकन्तत्तदर्थसंस्थानं स्मरन् तत्तत्संस्थानविशिष्टन्तन्तमर्थं सृष्टवानित्यर्थः स्मृतिरपि "अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा

आदौ वेदमयी दिव्या यतस्सर्वाः प्रसूतय" इति "सर्वेषान्तु स नामानि कर्म्माणि च पृथक् पृथक् । वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे" इति, संस्थाः संस्थानानि रूपाणीति यावत्, तथा "नामरूपञ्च भूतानां कृत्यानां च प्रपञ्चनं वेदशब्देभ्य एवादौ देवादीनां चकार सः" इति, अतो देवादीनां विग्रहवत्त्वेऽपि न वैदिकशब्दानामानर्थक्यं वेदस्यादिमत्त्वं च प्रसज्यते ॥

पपत्तः, महाप्रलये कतिपयव्यक्त्यवस्थानन्तु कारणत्राक्यविरुद्धं "सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयमि"ति हि श्रुतिः, अवधारणाद्वितीयनिषेधौ कथं कतिपयव्यक्त्यवस्थानं जात्यवस्थानं च सहेते । किं च वर्णनित्यत्वादिकं किं बोधकत्वोपयोगितया समर्थ्यते? किं वा जगतः प्रभवोपयोगितया? प्रथमे वर्णनित्यत्वादिकं सर्वमपि अथातो ब्रह्मजिज्ञासेत्यत्रैव वक्तव्यम् अनवबोधकत्वस्य शास्त्रानारम्भहेतुत्वात्, द्वितीये च जन्मादिसूत्रे तत्सर्वं समर्थनीयं लक्षणसिद्ध्युपयोगित्वात् । किञ्च वर्णानित्यत्वादिकं सर्वाधिकरणेषु यथाकथञ्चित् घटयितुं शक्यते अत एतदधिकरणासाधारणार्थानुपयोगात् विरोधाच्चात्र वर्णनित्यत्वादि प्रपञ्चनमयुक्तं "प्रत्यक्षानुमानाभ्यामि"ति, सौत्रपदञ्च अन्यथा व्याख्यातं घटादिनिर्माणस्य शब्दपूर्वकत्वस्य प्रत्यक्षासिद्धत्वात् जगत्सृष्टावप्येवमनुमानादिति तथा सति न तयोस्समुच्चित्य हेतुत्वमेकसाध्ये सिध्यति जगत्सृष्टेः शब्दपूर्वकत्वेऽनुमानस्यैव अव्यवधानेन प्रवृत्तेः प्रत्यक्षस्य व्याप्तिग्रहणोपयिकत्वेन तच्छेषभूतत्वात्, ततश्च प्रत्यक्षानुमानाभ्यामिति द्विवचनं क्लिष्टं स्यात्, न हि दण्डपरशुभ्यां वृक्षः छिद्यत इति व्यपदिश्यते दण्डस्य परशूपकरणत्वात्, अतः प्रत्यक्षमूलानुमानादिति निर्देष्टव्यं, तथा च निर्दिष्टं यदि क्वचिदेवमपि दृष्टं तद्गत्यभावात् स्यादिह च गत्यन्तरसम्भवादयुक्तं, कल्पादिकालीनायाः सृष्टेः शब्दपूर्वकत्वं सृष्टित्वादनुमातुं न शक्यमूककर्तृकघटादिसृष्टौ हेतोरनैकान्त्यात् अतो यथोक्त एवार्थः, एवमर्थद्वारकमनित्यमाशङ्क्य परिहृतमथ

## सू० अत एव च नित्यत्वम् ॥ २८ ॥

भा० यत एवेन्द्रवसिष्ठादिशब्दानां देवऋषिवाचिनान्तत्तदाकारवाचित्वं तत्तच्छब्देन तत्तदर्थस्मृतिपूर्विका च तत्तदर्थसृष्टिः, तत एव "मन्त्रकृतो वृणीते नम ऋषिभ्यो मन्त्रकृद्भ्योऽयं सोऽग्निरिति विश्वामित्रस्य सूक्तम्भवती"त्यादिवसिष्ठादीनां मन्त्रकृत्त्वकाण्डकृत्त्वऋषित्वादौ प्रतीयमानेऽपि वेदस्य नित्यत्वमुपपद्यते ।

टी० शब्दद्वारकमनित्यत्वं परिह्रियते सू० अत एव च नित्यत्वम् उक्तसङ्गतिर्मन्त्रकृतो वृणीते इत्यादिनाऽभिप्रेता यत एवेति अर्थवादानां प्रतीयमानार्थे तात्पर्यमस्तीति चेत् मन्त्रकृत इत्यादिवाक्येष्वपि मन्त्रकृत्त्वे तात्पर्यसम्भवात् अनित्यत्वमिति शङ्का इयमपीन्द्रादिशब्दानामाकृतिवाचित्वात्तत्तच्छब्देन तत्तदर्थस्मृतिपूर्वकतत्तदर्थसृष्ट्या परिहृतेत्यर्थः उक्तशङ्कापरिहारपरं सूत्रं ये न व्याचक्षते तेषाम्मते सूत्रवैयर्थ्यं स्फुटम् ॥ शङ्कायाः परिहृतत्वं स्पष्टयति—

भा० एभिरेव मन्त्रकृतो वृणीत इत्यादिभिर्वेदशब्दैः तत्तत्काण्डसूक्तमन्त्रकृतामृषीणामाकृतिशक्त्यादिकं परामृश्य तत्तदाकारान्तत्तच्छक्तियुतांश्च सृष्ट्वा प्रजापतिस्तानेव तत्तन्मन्त्रादिस्मरणे नियुङ्क्ते, ते च प्रजापतिनाऽऽहितशक्तयस्तत्तदनुगुणन्तपस्तप्त्वा वीर्य्यसिद्धान् पूर्वपूर्ववसिष्ठादिसृष्टान्मन्त्रादीनधीत्यैव स्वरतो वर्णतश्चास्खलितान् पश्यन्ति, अतश्च वेदानां नित्यत्वमेषाञ्च मन्त्रकृत्त्वमुपपद्यते ।

टी० 'एभिरेवे'ति, मन्त्रकृत्त्वं नाम अनधीत्यैव मन्त्राणामस्खलितक्रमस्वरवर्णतया दर्शनं तच्च तत्तन्मन्त्रस्मृतिपूर्वकं प्रजापतिना यथा पूर्वं

सृष्टेस्तत्तन्नामरूपभाग्भिः प्रवाहपरम्परयाऽऽगतैर्वसिष्ठादिभिः क्रियत इति वेदनित्यत्वमन्त्रकर्तृत्वाविरोध इत्यर्थः, नियुङ्क्ते मन्त्रदर्शनानुगुणं तपश्चरतेति नियुङ्क्ते इत्यर्थः, अस्खलितान् पश्यन्ति पूर्वकल्पाधीतवेदमन्त्रत्वप्रत्यभिज्ञानपूर्वकं पश्यन्ति न त्विदम्प्रथमतयेत्यर्थः, श्रुतिरपि ऋषिज्ञानपूर्वकमेव मन्त्राणामनुष्ठानं दर्शयति "यो ह वा अविदितार्षेयच्छन्दोदैवतेन मन्त्रेण यजति याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यते प्रवामीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति अथ यो मन्त्रे मन्त्रे वेद स सर्वमायुरेति, श्रेयाँश्च भवति अयातयामान्यस्य छन्दांसि भवन्ति तस्मादेतानि मन्त्रे मन्त्रे विद्यादि"ति, शौनकादिभिश्च स्मर्यते "दाशतय्योमधुच्छन्दप्रभृतिभिर्दृष्टा" इति, उक्तं च भगवता व्यासेनैव "युगान्तेऽन्तर्हितान्वेदान्सेतिहासान् महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवे"ति, एवमादि चात्र प्रमाणं द्रष्टव्यम् । ननु इतिहासानामप्यपौरुषेयत्वम् वेदानां वा पौरुषेयत्वं प्रसजेदस्मिन् वचने वेदानामितिहाससहपाठेन तुल्ययोगक्षेमत्वादिति चेन्न इतिहास–शब्देन वेद–शब्दान्तर्गतानां पुरावृत्तानां विवक्षितत्वात्, यथा वातरशना ह वा ऋषयः श्रमणा ऊर्ध्वमन्थिनो बभुवुः, पृथुर्वैन्योऽभिषिच्यत उशन्ह वै वाजश्रवसः सर्ववेदसन्ददावित्यादीनि पुरावृत्तानि हि श्रूयन्ते, ततश्च सेतिहासानित्यनेन वेदानामर्थज्ञानेन सह लब्धत्वमुक्तं भवति अतो न प्रबन्धविशेषवाचकोऽयमितिहास–शब्दः, अङ्गेषु धर्मशास्त्रादिषु च सत्स्वपीतिहासमात्रोपादानस्य प्रयोजनाभावात्, तथाऽन्यत्र "ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः शर्वर्यन्ते प्रसूतानां तान्येवैभ्योददात्यज" इति वेददर्शनप्रदानं च स्मर्यते, काठकादिशब्दैश्च कल्पादावृषिभिस्तपसा लब्धवेदभागानां प्रवर्तितत्त्वमुक्तम्भाति, न तावत्कठेनादौ प्रोक्तं काठकमिति वेदपौरुषेयत्ववादिनोऽप्यभीष्टम्, ईश्वरप्रणीतत्वविरोधात् । अथ काठकादिसमाख्याः प्रवचननिमित्ताः न इदानीन्तनप्रवक्तृसंज्ञाभिश्च व्यपदेशप्रसङ्गात्, कठादिभ्यः पूर्वपुरुषसंज्ञाभिश्च समाख्यानप्रसङ्गात्, पूर्वं त्वनेकशाखाध्यायिनः कठादयस्त्वेकैकशाखाऽध्यायिन इति तत्तन्नाम्ना समाख्यानमिति न वाच्यं, सर्वेषां तत्पूर्वपुरुषाणां बहुशाखाऽध्यायित्वनियमस्यामानक

त्वात्, दृष्टविपर्ययेण कल्पनानुपपत्तेश्च । अथ कल्पादिषु प्रथमप्रवचननिबन्धनाः कठादिसमाख्याः तन्निबन्धनत्वं च जगन्नित्यत्ववादे ऽनुपपन्नं प्रथमप्रवचनासंभवात्, अतः काठकादिसमाख्याऽन्यथाऽनुपपत्तिश्च महर्षीणां तपसा दृष्टवेदभागत्वे प्रमाणम्, एवं "यो वै वेदांश्च प्रहिणोति" "ब्रह्मा स्वयंभ्वभ्यानर्षत्" इत्यारभ्य त एतं ब्रह्मयज्ञमपश्यन् वाचा विरूपनित्यया वेदेन रूपे व्याकरोत्" "अनादिनिधना ह्येषा याश्च वेदेषु दृष्टयः वेदशब्देभ्य एवादौ युगान्तेऽन्तर्हितान्वेदानित्यादिवचनैराद्ये कल्पे प्रथमं वेदोच्चारणं यथापूर्वक्रमविशेषविशिष्टं वेदोच्चारणत्वादिदानीन्तनवदित्यादिभिरनुमानैरुपपत्तिभिश्च वेदनित्यत्वस्याप्रकम्प्यत्वात्, तदनुरोधाय मन्त्रकृत्त्वादिपदान्यस्वारस्येन व्याख्यातानि । उत्तरसूत्रशङ्कामवतारयति—

सू० अथ स्यान्नैमित्तिकप्रलयादिष्विन्द्राद्युत्पत्तौ वेदशब्देभ्यः पूर्वपूर्वेन्द्रादिस्मरणेन प्रजापतिना देवादिसृष्टिरुपपद्यतां नाम प्राकृतप्रलये तु स्रष्टुः प्रजापतेः भूताद्यहङ्कारपरिणामशब्दस्य च नष्टत्वात् कथं प्रजापतेः शब्दपूर्विका सृष्टिरुपपद्यते कथन्तरां विनष्टस्य वेदस्य नित्यत्वम् अतो वेदनित्यत्ववादिना देवादीनां विग्रहवत्त्वाभ्युपगमे लोकव्यवहारस्य प्रवाहानादिताऽऽश्रयणीयेति, अत उत्तरं पठति—

**सू० समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ २९ ॥**

कृत्स्नोपसंहारे जगदुत्पत्त्यावृत्तावपि पूर्वोक्तात्समाननामरूपत्वादेव न कश्चिद्विरोधः ।

टी० "अथ स्यादि"ति महाप्रलये तत्तदर्थस्मृतिपूर्वकस्रष्टृसंप्रदायप्रवर्त्तकस्य प्रजापतेस्तत्प्रवर्त्यस्य शब्दस्य चाभावात् शब्दनित्यत्वमिति

प्रपञ्चप्रवाहानादित्वमाश्रयणीयमिति चोद्यपरिहारार्थमिदं सूत्रमित्यर्थः, सू० समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च, पूर्वोक्तात्समाननामरूपत्वादेवेति पूर्वसूत्रद्वयोक्तया तत्तच्छब्देन तत्तदर्थस्मृतिपूर्विकया तत्तदाकृतिविशिष्टवस्तुसृष्ट्या समाननामरूपत्वमुक्तमिति फलितम्, अतः पूर्वोक्तादित्युक्तम्, एवकारेण सूत्रस्थश्च-शब्दोऽवधारणार्थ इति गम्यते, समाननामरूपत्वमनुपपन्नं तत्तच्छब्दस्मृतिपूर्वकतत्तदर्थस्र[1]ष्टुरभावादित्यत आह—

सू० तथा हि स भगवान् पुरुषोत्तमः प्रलयाऽवसानसमये पूर्वसंस्थानं जगत्स्मरन् बहु स्यामिति सङ्कल्प्य भोग्यभोक्तृजातं स्वस्मिन् शक्तिमात्रावशेषं प्रलीनं विभज्य महदादिब्रह्माण्डं हिरण्यगर्भपर्यन्तं यथापूर्वं सृष्ट्वा वेदांश्च पूर्वानुपूर्वीविशेषसंस्थितानाविष्कृत्य हिरण्यगर्भायोपदिश्य पूर्ववदेव देवाद्याकारजगत्सर्गे तं नियुज्य स्वयमपि तदन्तरात्मतयाऽवतस्थे, अतो यथोक्तं सर्वमुपपन्नम्, एतदेव च वेदस्यापौरुषेयत्वं नित्यत्वञ्च यत्पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्यत्वम्।

टी० "तथा ही"ति, स इति श्रुतिप्रसिद्धिं द्योतयति भगवानिति ज्ञानशक्त्यादिवैचित्र्यं, भगवत्पुरुषोत्तम-शब्दाभ्यां सर्वव्यापी च भगवान्महान् प्रभुर्वै पुरुष इत्यादिश्वेताश्वतरवाक्यं स्मारितं शक्तिमात्रावशेषमिति विद्यमानस्यैव भोग्यभोक्तृवर्गस्य भोग्यत्वाद्यनुगुणशक्तिरस्ति न तु तत्कार्यं भोक्तृत्वादिकमिति भावः। चतुर्मुखादेरेव स्वतन्त्रस्रष्टृत्वभ्रमनिरासायाह "स्वयमपी"ति, "तवान्तरात्मा मम च ये चान्ये देहि संज्ञिताः। सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केन चित्क्वचि' दिति चतुर्मुखवचनं "सृष्टिं

[1] स्रष्टुरभावादिति पा०।

ततः करिष्यामि त्वामाविश्य प्रजापते" इति भगवद्वचनं तदनुप्रविश्येति सामान्यविषयां श्रुतिञ्च प्रमाणमभिप्रेत्याह "तदन्तरात्मतये"ति, अनेन चतुर्मुखपरमात्मनोः कर्तृत्ववचसामैकार्थ्यसिद्धिः सर्वमुपपन्नमिति सामान-नामरूपत्वात्तत्कृतवेदनित्यत्वतत्सार्थकत्वान्युपपन्नानीत्यर्थः, शब्दस्य उत्पत्तिविनाशाभ्युपगमेऽपि कथं वेदनित्यत्वसिद्धिरित्यत्राह "एतदेव चे"ति, अक्षराणां पदानां वा नित्यत्वाद्वेदनित्यत्वं चेत् कालिदासादिवाक्यानामपि नित्यत्वप्रसङ्गः वर्णानुपूर्वीनित्यत्वं चेत् तदप्यनुपपन्नं, युगपत्सर्गप्रलयमनभ्युपगच्छद्भिर्वर्णानां विभुत्वाभ्युपगमात् न देशत आनुपूर्वी सम्भवति नित्यत्वाभ्युपगमाच्च न कालतः, तस्मात् उच्चारणगतः क्रम इति तैरभ्युपेयम् उच्चारणं तु उत्पत्तिविनाशवदेवेति क्रमनित्यत्वमप्यनुपपन्नन्तस्मात्पूर्वपूर्वोच्चारणक्रमविशेषो यादृशस्तादृशेनैव क्रमेणोत्तरोत्तरमुच्चार्यत्वं नित्यत्वमित्यस्मदभिमतमेव तैरपि स्वीकर्त्तव्यमित्यभिप्रायेण एतदेवेत्युक्तम् । ननु पूर्वान्ताभावः पुरुषकृतत्वाभावो वा स्यादपौरुषेयता उत्तरान्ताभाव उभयान्ताभावो वा नित्यता, क्रमविशेषेणोच्चार्यत्वन्तु वेदस्य स्वरूपं कथमेषामेकत्वं, सत्य, द्विविधावधिवैधुर्यरूपनित्यत्वमेव वेदे विवक्षितं तथाऽपि पूर्वावधिविधूननं प्राधान्येन सिषाधयिषितं स्वतन्त्रपुरुषविश्रान्तेर्निरसनीयत्वात् तन्निरसने च प्रतिकल्पं तथा भावे न उत्तरावधिवैधुर्यसिद्धेश्च अतो वेदस्य नित्यत्वमपौरुषेयत्वञ्चैकमिति फलितं, तच्चापौरुषेयत्वं नित्यत्वं वा वेदे क्रमविशेषविशिष्टोच्चारणभाक्त्वे पर्यवसितम्, अपूर्वक्रमविशिष्टोच्चारयितृपुरुषसद्भावातिरेकेण अनित्यत्वपौरुषेयत्वयोरभावान्नित्यत्वापौरुषेयत्वयोस्तद्विपरीतरूपत्वाच्च । यद्वा तेनैव क्रमेण सर्वदोच्चार्यमाणत्वमपौरुषेयत्वनित्यत्वयोस्साधकमिति हेतुहेतुमद्भावादभेदव्यपदेशः, एवमेव भगवताऽप्युच्चार्यमाणत्वाद्युगपत्सर्वोत्पत्तिसंहारेऽपि नित्यत्वमुपपन्नमित्यभिप्रायेणाह "तदस्मास्वि"ति, सर्वेश्वरोऽपि पूर्वक्रमविशेषं स्मृत्वोच्चारयति चेत्तत्संस्कारोद्बोधात् पूर्वमज्ञत्वमन्याधीनज्ञानत्वञ्च स्यादित्यत्राह 'इयांस्त्वि"ति, अस्माकं स्वोच्चारणजनितसंस्कारानपेक्षोच्चारणमध्यापयितृसापेक्षम् अध्यापयितृ-

सू० तदस्मासु सर्वेश्वरेऽपि समानम्, इयांस्तु विशेषः संस्कारान-

पेक्षमेव स्वयमेवानुसन्धत्ते पुरुषोत्तमः, कुत इदं यथोक्त-मवगम्यत इति चेत्तत्राह—

पयितृसापेक्षम् अध्यापयितृनिरपेक्षोच्चारणं स्वोच्चारणजनितसंस्कारसापेक्षम् एतदुभयं व्यावर्त्तयति संस्कारानपेक्षं स्वयमेवेति, स्वयमेवेत्यध्यापकोच्चारणजनितसंस्कारापेक्षाव्यावृत्तिः। यद्वा संस्कारानपेक्षमध्यापकोच्चारणस्वोच्चारणजनितसंस्कारानपेक्षमित्यर्थः। स्वतन्त्रस्येश्वरस्य क्रमान्तरापरिकल्पनेन पूर्वक्रमेणोच्चारणे को नियामक? इत्यत्राह "स्वयमेवे"ति, वेदाख्यं शब्दराशिं पूर्वपूर्वक्रमविशिष्टमेव उच्चा[१]रणीयं न तु क्रमान्तरङ्कल्पनीयमिति बहु स्यामितिवत् स्वसङ्कल्पादेव क्रमान्तरमपरिकल्पयन् यथापूर्वमनुसन्धत्ते, न त्वन्यपरतन्त्रतयेत्यर्थः अनुसन्धत्ते=जानातीत्यर्थः स्मरणार्थत्वे संस्कारानपेक्षत्वव्याघातात् ननु संस्कारास्ते ऽभवन्वेदा इति स्मृत्या वेदानामीश्वरस्मृतिविषयत्वमवगम्यते, नैवं संस्कार—शब्दस्य स्मृतिविषयवाचित्वाभावात् स्मृतेः संस्कारकार्यत्वात्तद्विषयोलक्षितलक्षणया प्रतिपाद्यत इति चेत्तर्हि प्रमाणविरुद्धलक्षणायाः प्रमाणानुसारिणी लक्षणा बलीयसीति, ईश्वरस्य च स्वतः सर्वदा सम्यक् सर्वार्थसाक्षात्कारित्वं यः सर्वज्ञस्सर्ववित् पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतिविरुद्धं ज्ञानस्य स्वाभाविकत्वमिन्द्रियादिनैरपेक्ष्यं विविधत्वं विषयवैविध्यात्, परत्वं याथार्थ्यापरोक्षत्वरूपप्रकर्षः अतस्तदनुगुणया लक्षणया भवितव्यं, ततश्च संस्कारा इति संस्कारबोध्या यथापूर्वं बुद्धिस्था इत्यर्थः। यद्वा संस्कारवत्स्वस्मिन्नवस्थिता इत्यर्थः। नन्वीश्वरस्य सर्वज्ञतया शब्दानां सर्वा अप्यानुपूर्व्यः सदा बुद्धिस्था इति सर्ववाक्यानामनाद्यानुपूर्वीविशिष्टतया वेदत्वं स्यात्, पौरुषेयापौरुषेयविभागश्च न स्यात्, नैवम् ईश्वरस्य च सार्वज्ञ्यादेव सर्वविभागसिद्धेः सर्वासामानुपूर्वीणां तद्बुद्धिस्थत्वेऽपि यादृशक्रमविशिष्टशब्दराशेर्याथार्थ्यं स्वरादिनियमवत्त्वं देशकालादिनियमवत्तयैव उच्चार्यत्वं च तमेव शब्दराशिं वेदाख्यं मन्यमानस्तादृशक्रमविशिष्टं तमेव

१ उच्चारयेयम् इति पा० ।

प्रतिब्रह्माण्डसर्गं प्रमाणतया प्रवर्तयति न त्वन्यच्छब्दजातम्, अतो याथार्थ्यसनियमकोच्चार्यत्वाभ्यां वेदावेदविभागसिद्धिः, सर्वदा पूर्वपूर्वक्रमपरामर्शसापेक्षोच्चारयितृकत्वं तन्निरपेक्षवक्तृकत्वं चेति पौरुषेयापौरुषेयवैषम्यमिति न काचिदनुपपत्तिरिति ।

सू० दर्शनात् स्मृतेश्च, दर्शनं तावत्, "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति, स्मृतिरपि मानवी "आसीदिदन्तमोभूतमित्यारभ्य" सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजा अप एव ससर्जादौ तासु वीर्यमपासृजत् "तदण्डमभवद्धैमं सहस्रांशुसमप्रभन्तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" इति, तथा पौराणिकाः "तच सुप्तस्य देवस्य नाभौ पद्ममजायत ।

टी० दर्शनात् स्मृतेश्चेति सौत्रपदद्वयस्य शङ्कामाह 'कुत' इति, युगपत्सर्वस्रष्टा भगवतो यथापूर्वं वेदसम्प्रदायप्रवर्त्तकत्वे च श्रुतिस्मृती दर्शयति "दर्शनन्तावदि"त्यादिना, उदाहृतश्रुतिस्मृतिवाक्येषु सर्वेषु चतुर्मुखस्य भगवता सृष्टत्वं दृश्यते, वेदोपदेशस्तु केषुचिन्न दृश्यते तत्रानुक्तमन्यतो ग्राह्यमिति न्यायाद् वेदोपदेशोऽपि सृष्ट्युपयोगित्वात्सिध्यतीति भावः । सम्प्रदायप्रवर्त्तकसद्भावमात्रे प्रमाणं वा स्यात्तद्वचनजातम् उदाहृतवचनजातं प्रदर्शनार्थमीदृशानि वचनान्तराण्यपि अस्मिन्नर्थे द्रष्टव्यानि यथा "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवञ्च पृथिवीं चान्तरिक्षमथो सुवः" यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये दृश्यन्ते तानि तान्येव तथा भावायुगादिषु" इत्यादिश्रुतिस्मृत्योर्वेदान्तसारे दर्शितत्वात्, "हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते" इत्यनेन पूर्वसृष्टिसारूप्यं प्रतीयते । किञ्च तथाभिमानिनो नीतास्तुल्यास्ते साम्प्रतैरिह देवा देवैरतीतैर्हि रूपैर्नामभिरेव च यस्मिन् योयः पुरा क्लृप्तोयस्मिन् देशे यथा स्थितिः तत्र तस्यानुरूप्येण प्रजासर्गः प्रवर्त्तते

ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः शर्वर्यन्ते प्रसूतानां तान्येवेभ्यो ददात्यज इत्यादि । किञ्च अग्निर्वा अकामयत अन्नादो देवानां स्या''मिति स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत् ततो वै सोऽन्नादोदेवानामभवत् अग्निर्वै देवानामन्नादः तथा इन्द्रो वा अकामयत ज्येष्ठं देवानामभिजयेयमिति स एतमिन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं निरवपत् महाव्रीहीणां ततो वै स ज्येष्ठं देवानामभ्यजयदित्यादिना पूर्वपूर्वाग्नीन्द्रादियजनेन पाश्चात्याग्नीन्द्रादीनामैश्वर्य्यप्राप्तिरित्यवगम्यते प्रथमान्ताग्न्यादिशब्दा यजमानं चेतनं सिषाधयिषितरूपेण निर्दिशन्ति इदानीमिन्द्र पूर्वस्मा इन्द्राय निरवपदित्यर्थः अतः पूर्वपूर्वाग्नीन्द्रादिसरूपतयोत्तरोत्तराग्नीन्द्रादिसृष्टिरित्यवगम्यते । किञ्च कर्मविधानमिष्टप्राप्त्यनिष्टनिवृत्तिफलं पुरुषप्रवृत्तिश्च सुखलिप्सादुःखजिहासामूला रागद्वेषौ च दृष्टानुमितश्रुतसुखदुःखतत्साधनभूतभोग्यतदुपकरणत-

सू० तस्मिन्पद्मे महाभाग वेदवेदाङ्गपारगः ब्रह्मोत्पन्नस्स तेनोक्तः प्रजाः सृज महामते ? तथा परो नारायणो देवस्तस्माज्जातश्चतुर्मुख'' इति, तथा आदिसर्गमहं वक्ष्य इत्यारभ्याच्यते ' सृष्ट्वा नारं तोयमन्तः स्थितोऽहं येन न स्यान्मे नाम नारायणेति कल्पे कल्पे

त्साधनविषयौ न त्वप्रतिपन्नविषयौ अतः पूर्वकल्पावगतेन्द्रादिपदकामनासञ्चितधर्मफलभोगानुगुणोत्तरोत्तरसृष्टिश्च पूर्वपूर्वसृष्टिसजातीया भवितुमर्हति, अतो वेदनित्यत्वं नाम प्रत्युच्चारणपूर्वपूर्वक्रमसुसदृशानुपूर्वीविशिष्टतयोच्चार्यमाणत्वम्, अर्थनित्यत्वं नाम प्रतिसर्गमिन्द्राद्यर्थानां पूर्वपूर्वार्थाकारसुसदृशसंस्थानविशिष्टत्वं, तथाविधार्थप्रतिपादकत्वमेव वेदस्य नित्यार्थसंयोगः । ननु प्रलयदशायामेकस्य प्रतिभातो वेदः कृतकादविशिष्टः स्यादेकस्य प्रतिभातः कुमारसम्भवो हि कृतक इति चेत् उच्यते कृतकादविशिष्टत्वं वदतः कोऽभिप्रायः एकस्य प्रतिभातत्वं कृतकत्वव्याप्तमिति

वा कृतकत्वशङ्काजनकमिति वा न प्रथमः बहुषु सुप्तेषु जायत एकस्य प्रतिपन्ने स्वात्मनि व्यभिचारात्, न ह्यात्मा कृतकः एकस्य प्रतिभातवाक्यत्वं वदतः कोऽभिप्रायः एकस्य प्रतिभातत्वं विवक्षितमिति चेत् किमेकस्य प्रतिभातत्वं नाम एकस्य प्रतिपन्नत्व? मुत एकस्य प्रथमप्रतिपन्नत्वं? न प्रथमः, दृष्टान्तस्य साधनविकलत्वात्, न हि कुमारसम्भवोऽस्माकमन्येषां च कदाचिदप्रतिपन्नः, द्वितीये हेत्वसिद्धिः, पक्षीभूतेषु वेदेषु ह्येकस्य प्रथमप्रतिपन्नत्वं नास्ति सर्गप्रवाहस्यानादित्वात्, यस्य कल्पस्यादौ प्रतिभानं प्रथममिति विवक्षितं ततः पूर्वकल्पेऽपि तेषामेव वेदानां प्रतिभातत्वात् प्राथम्यासिद्धिः, तेषामेव वेदानां तत्तत्पूर्वकल्पेऽपि प्रतिभातत्वं वेदोच्चारणत्वेन लिङ्गेन सिद्धम् । विगीतं वेदोच्चारणं पूर्वाध्ययनसिद्धक्रमविषयं वेदोच्चारणत्वात् सम्प्रतिपन्नवदिति, न च वाच्यं वेदाः कृतकाः कल्पादावेकस्य प्रतिभातत्वात् चतुर्मुखवक्त्रकप्रथमवाक्यवदिति दृष्टान्तस्य साधनविकलत्वात्, चतुर्मुखस्य प्रथमवाक्यं हि स्वतस्सर्वज्ञेन तदन्तरात्मनाऽपि ज्ञायते, कल्पादावेकक्षेत्रज्ञस्य प्रतिपन्नत्वं हेतुरिति चेत् न असिद्धेः, असिद्धिश्च यौगपद्येन प्रवाहतश्चाण्डबाहुल्येन चतुर्मुखतत्सृष्टमहर्षिबाहुल्यात् एकस्मिन् ब्रह्माण्ड इति हेतुर्विशेष्य इति चेत् तर्हि एकस्मिन् गृहे दिवसादावेकस्य प्रतिपन्नत्वादुपाध्यायवक्त्रकप्रथमवाक्यवद् वेदस्य तदुक्तत्वं किं न स्याद् देशकालान्तरवर्त्तिपुरुषप्रतिपन्नत्वात्तेनाप्युपाध्यायेन पूर्वसिद्धतयैव प्रतिपन्नत्वाच्च तदुक्तकत्वस्य बाधितत्वादिति चेत्तुल्यं, तथा हि एकस्मिन्नण्डे कल्पादावेकक्षेत्रज्ञप्रतिपन्नत्वरूपहेतुसिद्धिः कुतः "यो वै वेदांश्च प्रहिणोति तस्मा" इत्यादिश्रुतेरिति चेत्तर्हि सैव श्रुतिर्वेदानां पूर्वसिद्धत्वमवगमयतीति हेतुग्राहकप्रमाणेन बाधितविषयता स्यात्, एकस्य प्रतिभातवाक्यत्वं कृतकत्वशङ्कावहमिति चेत् न आप्ततया परिज्ञातेन तेनैव पुरुषेण

सू० तच्च शयामि भूयः सुप्तस्य मे नाभिजं स्याद्यथाऽब्जम् एवं भूतस्य मे देवि नाभिपद्मे चतुर्मुखः उत्पन्नस्स मया प्रोक्तः प्रजाः सृज महामत" इति, अतो देवादीनामप्यर्थित्वसा-

मर्थ्ययोगाद्ब्रह्मविद्यायां समधिकारोऽस्तीति सिद्धम् । देवताऽधिकरणं समाप्तम् ।

अनादिसिद्धतयोपदिष्टे वाक्ये कृतकत्वशङ्कानुदयादीश्वरेण प्रथमसृष्टाश्चतुर्मुखादयः प्राचीनसुकृतवशादीश्वराप्यवगमानुगुणज्ञानान्विता एव जायन्त इति न शङ्कोदयः । नन्वीश्वरसिद्धौ वेदसम्प्रदायाविच्छेदसिद्धिः तत्सिद्धौ वेदनित्यत्वसिद्धिस्तत्सिद्धौ वेदप्रामाण्यसिद्धिस्तत्सिद्धावीश्वरसिद्धिरिति चक्रकमिति, एवं तर्हि पूर्वमीमांसायामपि वेदप्रामाण्यसमर्थनपरे प्रथमेऽध्याये प्रथमे पादे बाह्यहेतूत्थाप्रामाण्यं निराकृत्य त्रिपाद्याऽवान्तरहेतूत्थाप्रामाण्यनिरासे क्रियमाणे त्वदुक्तं चक्रकम्प्रसजेत् तथाहि "सन्दिग्धे तु वाक्यशेषा" दित्यादिषु अक्ताः शर्करा उपदधातीत्यादिवेदवाक्यानामञ्जनसाधनद्रवद्रव्यविशेषानुपस्थापनेन सन्देहलक्षणाप्रामाण्ये पूर्वपक्षिणोक्ते तेजो वै घृतमित्यादिवाक्यशेषावगतद्रव्यविशेषसिद्ध्या तन्निरासस्सिद्धान्तिना क्रियते, तत्र तेजो वै घृतमित्यादिवाक्यशेषप्रामाण्यसिद्धौ अक्ताश्शर्करा इत्यादिवाक्यविशेषस्य सन्देहलक्षणाप्रामाण्यनिराससिद्धिः, तत्सिद्धौ कृत्स्नवेदप्रामाण्यसिद्धिस्तत्सिद्धौ कृत्स्नवेदान्तर्गतवाक्यशेषप्रामाण्यसिद्धिरिति चक्रकं प्रसज्यत एवेति न प्रसज्यते प्रथमे पादे शब्दस्य स्वतःप्रामाण्यसमर्थनादपवादहेतोश्च अपूर्वक्रमविशेषविशिष्टोच्चारयितृविशेषरूपकर्त्तुः स्मर्तव्यत्वे सति अस्मर्यमाणत्वलक्षणयोग्यानुपलम्भनिरस्तत्वात् वेदप्रामाण्यसिद्धौ तदन्तर्गतवाक्यविशेषस्याभिधानवृत्तिः प्राक्सिद्धप्रामाण्यविरोधिनीव प्रतिभातीति शङ्कामात्रस्य वाक्यशेषादिकृत्स्नपदान्वितवाक्यपर्यालोचनाच्चाभिधानवृत्तिस्तथा प्रतिभातीति परिहारमात्रस्य क्रियमाणत्वादिति चेत्, तदस्मत्पक्षेऽपि समानमिति परितुष्यतामायुष्मता, ये तु अक्ताश्शर्करा इत्यादिवाक्यमात्रस्याप्रामाण्यशङ्का न तु कृत्स्नवेदस्य तावन्मात्रस्य परिहारश्चेति वदन्ति, तन्मतेऽपि इयमेव प्रतिवन्दी, अक्ताः शर्कराः इत्यादिकतिपयवाक्याप्रामाण्येन कृत्स्नाप्रामाण्यशङ्का हि दुर्निवारा वेदत्वाविशेषात्, अक्ताः शर्करा इति वाक्याप्रामाण्यनिरासे कृत्स्न-

वेदाप्रामाण्यशङ्कानिवृत्तिः तन्निवृत्तौ तेजो वै घृतम् इत्यादिवाक्यशेषाप्रामाण्यशङ्कानिवृत्तिः तन्निवृत्तौ अक्ताश्शर्करा इति वाक्यस्य सन्देहलक्षणाप्रामाण्यनिवृत्तिरिति परिहारस्तुल्यः । अधिकरणार्थमुपसंहरति "अत" इति, देवताऽधिकरणं समाप्तम् ।

मध्वधिकरणम् ।

## सू० मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३० ॥

भा० ब्रह्मविद्यायान्देवादीनामप्यधिकारोऽस्तीत्युक्तम्, इदमिदानीं चिन्त्यते, येषूपासनेषु देवता एवोपास्यास्तेषु तासामधिकारोऽस्ति नेति, किं प्राप्तं नास्त्यधिकारस्तेषु मध्वादिष्विति जैमिनिर्मन्यते, कुतः असम्भवात्, न ह्यादित्यवस्वादिभिरुपास्या आदित्यवस्वादयोऽन्ये सम्भवन्ति, न चादित्यवस्वादीनां सतां वस्वादित्वं प्राप्यं सम्भवति प्राप्तत्वात् ।

टी० सू० मध्वादिष्वसम्भवादनधिकारं जैमिनिः, पूर्वाधिकरणे उपासनसामान्ये देवतासामान्यस्याऽधिकारोऽस्तीत्युक्तम् । अथोपासनविशेषे देवताविशेषस्य अधिकारो निरूप्यत इति सङ्गतिः, इममर्थमाह "ब्रह्मविद्यायामि"त्यादिना, इदमधिकरणं न मधुविद्यामात्रविषयम् अपि तु ईदृशसर्ववाक्यविषयम्, अत एव हि मध्वादिष्वित्यादि—शब्दप्रयोग इत्यभिप्रेत्योक्तम् "एषूपासनेष्वि"ति, किं मधुविद्यादिषु या देवतोपास्या तासु किं तस्या अधिकारोऽस्ति नेति विचारः, तदर्थम् य एतदेवममृतं वेदेति यच्छब्दः किं सङ्कोचेन वस्वादिव्यतिरिक्तविषयः? उतासङ्कुचितवृत्ति? रिति किं तस्या देवतायास्तद्विद्योपसंहारसामर्थ्यमस्ति ने? ति किं मधुविद्यायां वस्वादिदेवतामात्रमुपास्य? मुत तदवस्थं ब्रह्मे? ति, किं वसुत्वमात्रं मधुविद्याफलम्? उत ब्रह्मप्राप्तिपर्यन्तवसुत्व? मिति यदा वसुत्वमात्रं फलं तद

वस्वादिदेवतामात्रस्योपास्यत्वेन तस्या देवतायास्तद्विद्योपसंहारसामर्थ्याभावात् यच्छब्दस्य तद्व्यतिरिक्तविषयत्वात्तत्रानधिकार इति, यदा ब्रह्मप्राप्तिपर्यन्तवसुत्वं फलं तदा तदवस्थब्रह्मण उपास्यत्वेन तद्विद्योपसंहारसामर्थ्याद्यच्छब्दस्य तद्व्यतिरिक्तविषयत्वाभावात्तस्या देवतायास्तस्यां विद्यायाम् अस्त्यधिकार इति । ननु तदवस्थब्रह्मण उपास्यतया सिद्धान्तश्चेत् प्रतर्दनविद्यान्यायेन चरितार्थत्वादारम्भवैयर्थ्यं, नैवं तत्र प्रतिपाद्यविशेषस्यैव निरूपितत्वात्, न हीन्द्रस्य तस्यां विद्यायामधिकारोऽस्ति नेति निरूपितम्, अतोऽधिकारनिरूपणार्थमारम्भणीयत्वमिति, किं च तत्रोपक्रममात्रे जीवलिङ्गमवयविनो महावाक्यस्य परमात्मलिङ्गभूयस्त्वादवयवविरोधेऽवयवमात्रस्य दुर्बलत्वाद्राद्धान्त उक्तः, इह तूपसंहारमात्रे परमात्मलिङ्गदर्शनं न तु महावाक्यरूपेऽवयविनि अतो ऽधिकरणमारम्भणीयम् । नन्वेवं सति उपक्रमापेतया उपसंहारदौर्बल्याद्राद्धान्तानुपपत्तेरनारम्भ एव स्यात् नैवम् उपक्रमोपसंहारयोर्मिथोविरोधेन उपक्रमावगतार्थपरित्यागे प्राप्ते हि तत्प्राबल्येन उपसंहारबाधः, इह तूपक्रमावगतार्थपरित्यागहेत्वभावान्नोपसंहारबाधः, कथं तर्हि संशयोत्थानम् अर्थित्वाद्यसम्भवब्रह्मोपनिषत्त्वश्रवणाभ्यां संशयः । असम्भवादिति अर्थित्वसामर्थ्ययोरिति शेषः, कर्तृकर्मविरोधात् सामर्थ्याभाव इत्याह "न ही"ति, प्राप्तफलत्वादर्थित्वाभाव इत्याह "न चे"ति, आदित्यवस्वादय इत्यत्र आदि–शब्देन मरुद्रुद्रसाध्या साध्या विवक्षिताः, वस्वादित्यमरुद्रुद्रसाध्यगणा एकैकं प्रतिदिशमुपरि च स्थित्वा आदित्यं प्रधानमनुभवन्ति वस्वादीनामेवोपास्यत्वं वस्वादित्वस्यैव प्राप्यत्वं च किं श्रूयत इत्यपेक्षायां कर्मकर्तृविरोधं प्राप्तफलत्वञ्च श्रुत्यर्थोपन्यासेन विशदयति—

सू० मधुविद्यायामृग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यस्य रश्मिद्वारेणाप्राप्तस्य रसस्याश्रयतया लब्धमधुव्यपदेशस्यादित्यस्यांशानां वस्वादित्यादिभिर्भुज्यमानानामुपास्यत्वं वस्वादित्वञ्च प्राप्यं श्रूयते "असौ वा आदित्यो देवम-

ध्वित्यु"पक्रम्य "तद्यत्प्रथमममृतन्तद्वसव उपजीवन्ती"-
त्युक्त्वा "स य एतदमृतं वेद वसूनामेवैको भूत्वा अग्नि-
नैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यती"त्यादिना,

टी० मधुविद्यायामि"त्यादिना, ऋग्वेदादीति अग्नौ प्रास्ताऽऽहु-
तिस्सम्यगादित्यमुपतिष्ठत इति वचनार्थोऽभिप्रेतः आदित्यांशानां वस्वा-
दिभिर्भुज्यमानानाम् उपास्यत्वमिति वस्वादिभिर्भोक्तृभिस्सह तद्भो-
ग्यभूता आदित्यांशा उपास्या इत्यर्थः । ननु कथं कर्मकर्तृविरोधः स्वात्म-
विषयमपि ह्यनुसन्धानं सुकरं भूमविद्याधीतायां प्राणविद्यायाञ्च कर्म-
कर्तृविरोधाभावश्च भवदभिमतः, उच्यते न तावत्स्मृतिसन्ततिमात्रम् उपा-
सनं पटादिस्मृतिसन्ततेरपि उपासन–शब्दवाच्यत्वप्रसङ्गात्, अतः प्रकृष्टव-
स्तुविषयस्मृतिसन्ततिरेवोपासनं नामाद्याशापर्यन्तोपासनेषु नामादीनाम-
न्तवत्फलप्रदानामपि प्रकर्षवत्त्वं विवक्षितं, वस्वादीनान्तु स्वस्मात्प्रकृष्ट-
त्वाभावात् स्वापेक्षया प्रकृष्टविषयमुपासनं स्वस्मिन् कर्तुं न शक्यते
प्राणविद्यायामप्यवस्थाभेदेन उपास्यप्रकर्षस्सम्भवति, बद्धावस्थ उपासक
निरतिशयभोग्यं मुक्तावस्थं स्वरूपमुपास्यं, तच्च बद्धादतीव प्रकृष्टमुभयविष-
यपरविद्यास्वपि स्वात्मांशे कर्मकर्तृविरोधोऽप्यवस्थाभेदेनैव प्रतिहृतः, मधु-
विद्यायान्तु वस्वादीनामेव उपास्यत्वं न तु परिशुद्धावस्थानाम्, अतोऽवस्था-
भेदेनापि अविरोधस्य दुर्वचनत्वात्कर्मकर्तृविरोध इति । यद्वा स्वयमेव स्वा-
भीष्टसंप्रदानाशक्तेन फलार्थिना पुरुषेण उपास्यदेवता स्वोपासनप्रीता फला-
र्थिने फलं ददाति, वस्वादीनान्तु स्वोपासनजनितस्वप्रीत्या स्वस्य फलप्रदत्व-
मयुक्तमित्युपासनप्रीणनीयत्वाकारेण कर्मकर्तृविरोधः । यद्वा एकस्यैव फल-
प्रदत्वफलार्थित्वरूपप्रकर्षापकर्षरूपविरोधगर्भत्वात् कर्मकर्तृविरोध इति
स्थिते सामर्थ्याभावः, अतः शक्तत्वाशक्तत्वविशेषप्रीणनीयत्वप्रीणयितृत्वफ-
लप्रदत्वार्थित्वरूपविरोधगर्भत्वात् कर्मकर्तृविरोधः ईदृशविरोधः प्राणवि-
द्यायामपि स्थित एवात्र वक्ष्यमाणन्यायोपजीवनेन परिहार्य इति प्राणवि-
द्यायां ब्रह्मात्मकत्वेन उपासनस्याविवक्षितत्वेऽपि वस्तुतो जीवान्तर्यामिणः

परस्य प्रीतिजननद्वारा स्वर्गार्थयज्ञादेरिव फलप्रदत्वमित्येतावद्वैषम्यं प्रकर्षापकर्षगर्भकर्मकर्तृविरोधस्य ब्रह्मात्मकतया परिहारस्तु समानः, अतः प्राणविद्याऽप्येतन्न्यायसापेक्षेति तत्र विरोधस्यापरिहृतत्वात् तन्निबन्धनसामर्थ्याभावस्यात्र पूर्वपक्षहेतुतया उपन्यास इत्यादिना यथोक्तार्थः सूयत इत्यन्वयः ॥

## सू० ज्योतिषि भावाच्च ॥ ३१ ॥

भा० "तं देवा: ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमि"ति ज्योतिषि परस्मिन् ब्रह्मणि उपासनं देवानां श्रूयते देवमनुष्योभयसाधारणे परब्रह्मोपासने देवानामुपासकत्वकथनं देवादीनामितरोपासननिवृत्तिं द्योतयति अत एषु वस्वादीनामनधिकार इति प्राप्तेऽभिधीयते—

## सू० भावन्तु वादरायणोऽस्ति हि ॥ ३२ ॥

आदित्यवस्वादीनामपि तेष्वधिकारभावं भगवान्वादरायणो मन्यते, अस्ति ह्यादित्यवस्वादीनामपि स्वावस्थब्रह्मोपासनेन वस्वादित्यत्वप्राप्तिपूर्वकब्रह्मप्रेप्सासम्भवः, इदानीं वसूनां सतामपि कल्पान्तरे वस्वादित्वप्राप्तिश्चापेक्षिता भवति, अच हि कार्य्यकारणोभयावस्थब्रह्मोपासनं विधीयते "असौ वा आदित्यो देवमध्वि"त्यारभ्य "अथ तत उर्द्ध्वम् उदेतेत्यतः प्रागादित्यवस्वादिकार्य्यविशेषावस्थं ब्रह्मोपासनमित्युपदिश्यतेऽथात ऊर्द्ध उदेतीत्यादिनाऽऽदित्यान्तरात्मतयाऽवस्थितं कारणावस्थमेव ब्रह्मोपास्यमित्युपदिश्यते तदेवं कार्यकारणोभयावस्थं ब्रह्मो-

पासीनः कल्पान्तरे वस्वादित्वं प्राप्य तदन्ते कारणं परं ब्रह्मैवाप्नोति ।

टी० सू० ज्योतिषि भावाच्च, ततः किमित्यत्राह "देवमनुष्ये"ति, देवा एव ज्योतिरुपासते देवा ज्योतिरेवोपासत इति वा वाक्यभङ्गी स्यात् तत्र न प्रथमकल्पो युज्यते मनुष्याणामनधिकारप्रसङ्गात्, तस्मात् ज्योतिरेवोपास्यमित्यर्थः, अन्यथा विशेषवचनवैयर्थ्यं स्यादित्यभिप्रायः। सू० भावन्तु बादरायणोऽस्ति हि, अक्षरार्थमाह "आदित्येत्यादिना अर्थित्वसामर्थ्याभावं परिहरति "अस्ति ही"ति, स्वावस्थब्रह्मोपासन–शब्देन कर्मकर्तृविरोधः परिहृतः, वस्वादित्वस्य प्राप्तत्वान्नार्थित्वसम्भव इत्यत्राह "इदानी"मिति उपासनस्य ब्रह्मपर्यन्तत्वे फलस्य ब्रह्मप्राप्तिपर्यन्तत्वे च प्रतिपाद्ये सति हि कर्मकर्तृविरोधाभावः प्राप्तफलत्वाभावश्च, तत्कथमित्यत्राह "अत्र ही"ति, आदित्यादिनामतद्रूपविशिष्टजीवशरीरकं ब्रह्म कार्यावस्थन्तदुपासनं विहितमित्याह "असौ वा"इत्यादिना इदानीमित्यादिनामरूपभाजोऽपि सृष्टेः प्राक् आदित्यानाम तद्रूपरहितजीवमात्रस्यान्तर्यामिब्रह्मकारणावस्थं तदुपासनं विधीयत इत्याह "अथ तत ऊर्द्ध उदेते"त्यादिनेति, ब्रह्मोपासनं विहितञ्चेत् कथन्तर्हि तद्विरुद्धफलश्रवणमित्यत्राह "तदेवमि"ति, उदाहृतवाक्ये कार्यकारणावस्थादित्यस्यैव उपासनं वस्वादित्यत्वमात्रफलप्राप्तिश्च प्रतीयते न त्वादित्यादिशरीरकब्रह्मोपासनन्तत्प्राप्तिश्चेत्यत्राह—

भू० "न ह वा अस्मा उदेति न निम्रोचति सकृद्दिवा हैवास्य भवति य एतामेवं ब्रह्मोपनिषदं वेदेति कृत्स्नाया मधुविद्याया ब्रह्मोपनिषत्त्वश्रवणात् ब्रह्मप्राप्तिपर्य्यन्तवस्वादित्वफलश्रवणाच्च वस्वादिभोग्यभूतादित्यांशस्य विधीयमानमुपासनन्तदवस्थस्यैव ब्रह्मण इत्यवगम्यते, अत एवंविधमुपासनमादित्यवस्वादीनामपि सम्भवति, एवं च ब्रह्मण एवोपास्यत्वात् तं देवा ज्योतिषां ज्योतिरित्युपपद्यते तदाह

वृत्तिकार: "अस्ति ह्वि मध्वादिषु सम्भवो ब्रह्मण एव सर्वत्र निचाय्यत्वा"दिति । मध्वधिकरणं समाप्तम् ॥

टी० "न ह वा" इति, ब्रह्मोपनिषदं वेद ब्रह्मविद्यां वेद ब्रह्मोपासनङ्करोतीत्यर्थः, ओदनपाकं पचतीति वत् । उपसंहरति "अत एवमि"ति, अब्रह्मोपासनपरत्वेन यैर्व्याख्यातं तन्मतादप्यस्य प्रामाणिकत्वं दर्शयति "तदाह वृत्तिकार" इति, परे तु मध्वादिष्वसम्भवादित्यादिसूत्रत्रयन्तदुपर्यपीत्यादिभिः सूत्रैरेकाधिकरणं मन्वाना एवं व्याचक्षते ब्रह्मव्यतिरिक्त विषयेषु मध्वादिविद्याविशेषेषु अर्थित्वाद्यसम्भवात् सर्वासु विद्यासु अनधिकारं जैमिनिर्मन्यते कथं क्वचिदनधिकारादन्यत्राप्यनधिकारः । न हि राजसूयानधिकारिणो ब्राह्मणस्य वृहस्पतिसवानधिकार इति शङ्कायाम् आदित्यादिज्योतिषि मण्डलाद्याकारत्वादचेतने सवित्रादिशब्दप्रयोगसम्भवादग्न्यादीनां चाचेतनत्वात् मन्त्रार्थवादयोरन्यपरत्वेन विग्रहादिमत्त्वाभावेन च अर्थित्वसामर्थ्याभावान्नाधिकार इति सूत्रद्वयं व्याख्याय भावन्त्विति तृतीयसूत्रेण मन्त्रार्थवादयोरपि प्रतीयमानार्थे प्रामाण्योपपादनमुखेन अर्थित्वादिसद्भावाद्विद्याधिकारोऽस्तीत्युच्यत इति, तदयुक्तं वृत्तिकारानभिमतत्वात् अध्याहारसापेक्षत्वात् अपेक्षितार्थापरीक्षणायोगात्कृतकरत्वप्रसङ्गादधिकरणान्तरवैरूप्याच्च तत्र वृत्तिकारानभिमतिर्भाष्ये कण्ठोक्त्या दर्शिता तत्र हेतुरितरहेतुजातम्, असम्भवान्मध्वादिष्वनधिकारं मन्यत इति अनध्याहारेण योजनासम्भवेऽपि मध्वादिष्वसम्भवात्कुत्रानधिकार इत्यपेक्षायां सर्वासु विद्यास्वपि अनधिकार इत्यध्याहारेण योजनाऽनुपपन्ना सङ्क्षिप्ता हैवास्य भवति य एतामेवं ब्रह्मोपनिषदं वेदे"ति ब्रह्मविद्यात्वं तदनुगुणफलं चावगम्यते, वस्वादीनामुपास्यत्वं च प्रतीयते कथमिदङ्घटत इति व्युत्पन्नशब्दस्य संशयो भवति, भवति तस्मादियमब्रह्मविद्या ब्रह्मविद्या वेति निरूपणमपेक्षितं तस्यानिरूपितत्वात् बुभुत्सितापरीक्षणं स्यात् तदुपर्यपीति सूत्रेणैव मन्त्रार्थवादयोर्विग्रहादावप्रामाण्यस्य परिहृतत्वेन ज्योतिषीत्यादिसूत्रद्वयस्य अन्यपरत्वशङ्कापरिहा-

रपरत्वेन व्याख्यानस्य कृतकरत्वं च स्यात्, सम्भवादित्युक्तस्यार्थित्वादिसम्भवरूपस्य हेतोरसम्भवत्युदासाधीनात्मलाभत्वादाद्यसूत्रेण परिहृतत्वमवगम्यते, अनन्तरमेव युगपदनेकत्र सन्निधिविरोधादिपरिहारश्च विग्रहादिसिद्धिनिबन्धनत्वादन्यपरत्वस्य परिहृतत्वमवगमयति । यद्याद्यसूत्रेणासम्भवं शङ्कापरिहारौ न विवक्षितौ तर्हि तच्छङ्कापरिहारेण ज्योतिषीत्यादिसूत्रद्वयेनाद्यसूत्रानन्तरेण भवितव्यं स्वपक्षसाधकोपन्यासानन्तरमेव तद्दोःस्थशङ्कापरिहारस्याधिकरणान्तरेष्वपि दृश्यमानत्वात् यथा ईक्षतेर्नाशब्दङ्गाणश्चेन्नात्मशब्दादिति, यथा ज्योतिश्चरणाभिधानात्, छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमादिति, आनुमानिकमप्येकेषामिति, चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च सूक्ष्मन्तु तदर्हत्वात्, इति च ततो भिन्नाधिकरणत्वं युक्तम् अधिकरणभेदमभ्युपगम्य वसुसमुदायस्योपास्यत्वम् एकैकस्य वसोरुपासकत्वं रुद्रादिष्वप्येवं समुदायप्रत्येकभेदादुपास्योपासकभावः, उपास्यत्वं च वस्वादिभोग्यादित्यांशमात्रस्य न तु ब्रह्मणः फलं च वस्वादित्वमात्रमित्यमात्रमिति कैश्चिदुक्तन्तदपवर्गरूपवर्गरूपफलब्रह्मोपनिषत्वश्रवणविरुद्धत्वाद्वृत्तिकारानभिमतमित्यनादरणीयम् ननु तदुपर्यपि मध्वादिष्वसम्भवादित्यधिकरणद्वयेन किं प्रयोजनं देवतानां देवताविशेषाणां च अर्थित्वसामर्थ्यसम्भवनिर्णयान्न मनुष्याणां प्रयोजनं तेन विनाऽप्यमीषामुपासनोपपत्तेः, न च देवतानां किमपि प्रयोजनं तेषां स्वकीयपटुतरदेहादिमत्त्वे अर्थित्वसद्भावे च अधिकरणस्य न्यायनिरपेक्षनिर्णयकत्वादिति उच्यते परं ब्रह्म सामान्येन देवानामप्युपास्यं फलप्रदञ्च देवताविशेषाणामप्युपासनविशेषैरुपास्यं फलविशेषप्रदञ्चेत्येव विद्यैश्वर्यविशिष्टत्वेन मनुष्यैरुपासकैर्ब्रह्मणोऽनुसन्धेयत्वात्तथाऽनुसन्धानमेव प्रयोजनमिति ॥ मध्वधिकरणं समाप्तम् ॥

अपशूद्राधिकरणम् । **सू० शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥३३॥**

श्रु० ब्रह्मविद्यायां शूद्रस्याप्यधिकारोऽस्ति न वेति विचा-

र्थ्यंते, किं युक्तम् अस्तीति अर्थित्वसामर्थ्यप्रयुक्तत्वादधिकारस्य, शूद्रस्यापि तत्सम्भवात् ।

टी० सू० शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि मनुष्यव्यतिरिक्तवस्वादिदेवताविशेषाणामर्थित्वसामर्थ्यसम्भवादधिकारोऽस्तीत्युक्तम्, अथार्थित्वसामर्थ्ययोः प्रयोजकत्वे मनुष्यविशेषाणां शूद्राणामप्यधिकारः स्यादिति शङ्कया सङ्गतिरित्याह "ब्रह्मविद्यायामि"ति, किं ब्रह्मविद्यायां शूद्रस्याधिकारोऽस्ति ने"ति, विचारः तदर्थं तस्य तदुपसंहारसामर्थ्यमस्ति नेति किं ब्रह्मविषयमनोवृत्तिरूपा ब्रह्मविद्याऽनधीतवेदस्याऽपि सम्भवति ने? ति किं वेदादेव ब्रह्मावगति? रुत इतिहासपुराणाभ्यामपि? सम्भवतीति, किं तयोर्वेदोपबृंहणं कुर्वतोरेव ब्रह्मावगतिहेतुत्व? मुत स्वातन्त्र्येण?-ति किं जानश्रुतेः शूद्रेत्यामन्त्रणमितिहासपुराणयोर्नैरपेक्षब्रह्मावबोधकत्वमुपोद्बलयति नेति, किं तत्र शूद्र–शब्दो रूढ्या जातिपरः? उत यौगिकतया शोकवत्पर? इति, यदा रूढः तदा शूद्र–शब्दस्य इतिहासपुराणयोर्नैरपेक्ष्योत्तम्भकतया तयोः स्वातन्त्र्येण ब्रह्मावगतिहेतुत्वात् ब्रह्मविषयस्मृतिसन्ततिरनधीतवेदस्याऽपि सम्भवति सामर्थ्यलाभाच्छूद्रस्याऽधिकार इति पूर्वः पक्षः, यदा शूद्रशब्दो यौगिकस्तदा शूद्रेत्यामन्त्रणस्य इतिहासपुराणयोर्ब्रह्मावबोधनैरपेक्ष्यानवगमकतया स्वातन्त्र्येण ब्रह्मावबोधकत्वाभावाद्वेदादेव ब्रह्मावगतिरित्यनधीतवेदस्य तदसम्भवेन सामर्थ्याभावान्न ब्रह्मोपासनाऽधिकार इति राद्धान्तः । ननु कर्मकाण्डापशूद्राधिकरणे शूद्रस्य वैदिकसर्वकर्मस्वनधिकार उक्तः तत्कथमत्र तत्सम्भव? इत्यत्राह–

सू० यद्यप्यग्निविद्यासाध्येषु कर्मस्वनग्निविद्यत्वाच्छूद्रस्याऽनधिकारः तथाऽपि मनोवृत्तिमात्रत्वाद् ब्रह्मोपासनस्य तत्राधिकारोऽस्त्येव शास्त्रीयक्रियापेक्षत्वेऽप्युपासनस्य तत्तद्वर्णाश्रमोचितक्रियाया एव अपेक्षितत्वाच्छूद्रस्याऽपि स्ववर्णोचितपूर्ववर्णशुश्रूषैव क्रिया भविष्यति "तस्माच्छूद्रो यज्ञेऽन-

वक्लृप्त'' इत्यप्यग्निविद्यासाध्ययज्ञादिकर्म्मानधिकार एव न्यायसिद्धोऽनूद्यते। नन्वनधीतवेदस्याश्रुतवेदान्तस्य ब्रह्मस्वरूपोपासनप्रकारानभिज्ञस्य कथं ब्रह्मोपासनं सम्भवति, उच्यते अनधीतवेदस्याश्रुतवेदान्तवाक्यस्याऽपीतिहासपुराणश्रवणेनाऽपि ब्रह्मस्वरूपतदुपासनज्ञानं सम्भवति, अस्ति च शूद्रस्याऽपीतिहासपुराणश्रवणानुज्ञा ।

टी० "यद्यपी''ति, विद्या=वेदविद्या अध्ययनम्, अग्निराहितः परिहरति "तथापी''ति, ननु विद्यायाः कर्माङ्गत्वं वक्ष्यते तत् कथं साङ्गब्रह्मविद्यायां सामर्थ्यमित्यत्राह "शास्त्रीये''ति, ननु "तस्माच्छूद्रो यज्ञेऽनवक्लृप्त'' इत्यत्र यज्ञग्रहणस्य उपलक्षणार्थत्वात् विद्यायामप्यनधिकारस्सिध्यति, न ह्यसावर्थः श्रुत्येकसमधिगम्यः येन यावद्वचनता स्यात्, परिसंख्या वा किंतु न्यायसिद्धः, न्यायश्च अग्निविद्यासाध्येषु अनग्निर्विद्यस्याऽधिकारानुपपत्तिरूपः कर्मोपासनसाधारणः, अतोऽनधिकार इत्यत्राह "तस्माच्छूद्र'' इति, सत्यमसावनुवादः, नैतावता ब्रह्मविद्याऽनधिकारः, अग्निविद्यासाध्यकर्म्मविषयत्वान्न्यायस्य, यज्ञादिकर्मणामेव अग्निविद्यासाध्यत्वात्, ब्रह्मविद्यायास्तन्निरपेक्षत्वाच्चेत्यर्थः । अत्रायोद्देन्तत्वरं चोक्तं भवति, यज्ञाद्यधिकारो नास्तीत्यनेन उपासनाधिकारोऽनुमतो भवतीत्यभिप्रायेण यज्ञादिकर्मानधिकार एवेत्युक्तं, न्यायसिद्धोऽनूद्यत इति कर्मकाण्डापशूद्राधिकरणन्यायसिद्ध इत्यर्थः। मा भूदग्निविद्यासाध्ययज्ञापेक्षा ब्रह्मविद्यायाः तथाऽपि अध्ययनसाध्यवेदजन्यज्ञानापेक्षाऽस्तीति चोदयति "नन्वि''ति,

सू० "श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रत'' इत्यादौ, दृश्यन्ते चेतिहासपुराणेषु विदुरादयो ब्रह्मनिष्ठास्तथोपनिषत्स्वपि सम्वर्गविद्यायां शूद्रस्यापि ब्रह्मविद्याधिकारः

प्रतीयते शुश्रूषुं हि जानश्रुतिमाचार्य्यो रैक्वः शूद्रेत्यामन्त्र्य तस्मै ब्रह्मविद्यामुपदिशति "आजहारेमाः शूद्र अनेनैव मुखेनालापयिष्यथा इत्यादिना, अतः शूद्रस्याऽप्यधिकारः सम्भवतीति प्राप्ते उच्यते, न शूद्रस्याधिकारः सम्भवति कुतः सामर्थ्याभावात्, न हि ब्रह्मस्वरूपतदुपासनप्रकारमजानतस्तदङ्गभूतवेदानुवचनयज्ञादिष्वनधिकृतस्योपासनोपसंहारसामर्थ्यं सम्भवति, असमर्थस्य चार्थित्वसद्भावेऽप्यधिकारो न सम्भवति

टी० ॥ श्रावयेदिति प्रयोज्याभावे प्रयोजकासिद्धेः प्रयोज्योपादानमर्थसिद्धमिति भावः । न चा"न्नाद्यकामं याजयेदि"ति वत् प्रयोज्यव्यापारविधिः अधिकारविशेषणाश्रवणात्, एतदभिप्रायेण इतिहासपुराणश्रवणानुज्ञेत्युक्तं, यदा चैवं सिद्धं श्रवणं तदा सामर्थ्या[१]दधिकारोऽपि सिद्धः इतिहासपुराणयोस्संशयविपर्ययग्रस्तत्वेऽपि सम्यक् निश्चयानुपपत्तेः, अतो निरपवादश्शूद्रस्याप्यधिकारो ब्रह्मविद्यायां, न च वाच्यं यज्ञादिकर्मणामपीतिहासपुराणेषु प्रस्तावात्तत्राऽपि शूद्राधिकारप्रसङ्ग इति कर्मणामितिहासपुराणेषु सामान्यतः कीर्तनेऽपि विशेषोपदेशाभावाद्वैदिकेषु विशेषोपदेशेषु शूद्रस्यानधिकारस्थितेरिति यदि ब्रूयात्रेदमितिहासपुराणविषयं श्रवणानुज्ञानमर्थज्ञानावधिकं किन्तु 'श्मशानवच्छूद्रपतिताावि'ति प्रतिषिद्धस्य समीपपाठस्य प्रतिप्रसवमात्रमिति चेन्न "य इदं शृणुयादि"त्युपक्रम्य शूद्रस्सुखमवाप्नुयादिति, श्रवणफलनिर्देशात् श्रवणकीर्तने हि यथा योग्यमन्वीयेते "शूद्रयोनावहं जातोनातोऽन्यद्वक्तुमुत्सहे" इत्युक्तं हेत्वन्तरमाह "दृश्यन्ते" चेति, कर्मकाण्डेऽपशूद्राधिकरणेऽनधिकारो निर्णीतश्चेत्किमत्र चिन्तनीयमिति शङ्कायां ब्रह्मोपासनेऽपशूद्राधिकरणन्यायप्रवृत्तौ तत्रापरिहृतामधिकयुक्तिमाह "तथोपनिषत्स्वपि संवर्गे"ति, राद्धान्तमारभ्यते "इतिप्राप्त" इति, संवर्गविद्यावाक्यगतशूद्र-शब्दनिर्वाह एव सौत्रः, अन्यत्पूर्व-

१ सामर्थ्याद्विचारोऽपि पा० ।

पक्षहेतुजातं सूत्रकाराभिप्रेतं स्वयमुपन्यस्तं प्रथमं व्युदस्य पश्चात्सूत्रमवतारयिष्यन् प्रथमम्पूर्वपक्षहेतून् प्रतिक्षिपति "न शूद्रस्ये"त्यादिना, सामर्थ्याभावमुपपादयति "न ही"ति, अर्थित्वं ह्यस्तीत्यत्राह "असमर्थस्य चे"ति, उपासनोपायश्रवणधारणादिक्षमत्वलक्षणं सामर्थ्यन्तस्याऽपि लोकसिद्धमित्यत्राह-

सू० असामर्थ्यं च वेदाध्ययनाभावात्, यथैव हि त्रैवर्णिकविषयाध्ययनविधिसिद्धस्वाध्यायसम्पाद्यज्ञानलाभेन कर्मविधयोऽज्ञानतदुपायादीनपरान्न स्वीकुर्वन्ति तथा ब्रह्मोपासनविधयोऽपि, अतोऽध्ययनविधिसिद्धस्वाध्यायाधिगतज्ञानस्यैव ब्रह्मोपासनोपायत्वाच्छूद्रस्य ब्रह्मोपासनसामर्थ्यासम्भवः ।

टी० "असामर्थ्यञ्चे"ति, अलौकिकसामर्थ्याभावादित्यर्थः, ब्रह्मोपासनविधिना शूद्रस्याऽप्यधिकारः कल्प्यः, यथा रथकारादीनां विधिबलेन तत्तत्कर्माधिकारस्तदपेक्षितमन्त्राध्ययनाधिकारश्च सिध्यतीत्यत्राह "यथैव ही"ति, ज्ञानतदुपायादीनीत्यादि-शब्देन अध्ययनव्रतोपनयनादय उच्यन्ते अपरान् अत्रैवर्णिकगतान् ज्ञानतदुपायादीन्नापेक्षन्ते इत्यर्थः, विधयः स्ववैयर्थ्यपरिहारायानुष्ठातृसापेक्षास्सन्तोऽनुष्ठानस्य ज्ञानपूर्वकतया ज्ञानतद्धेतुभूताध्ययनव्रतोपनयनादीनपेक्षन्ते तत्रानन्यार्थं स्वयं क्लेशसाध्यतया प्रयोजनसाकाङ्क्षं सन्निहितत्रैवर्णिकगतं ज्ञानं क्लृप्तत्वात् कर्मविधिभिस्संबध्यते तेन कर्मविधयोऽत्रैवर्णिकगतज्ञानादिनिराकाङ्क्षत्वात्तदधिकारं न कल्पयन्ति, एवं ब्रह्मोपासनविधयोऽपि त्रैवर्णिकगताध्ययनसिद्धानन्यार्थसाकाङ्क्षज्ञानतो लब्धानुष्ठानतयाऽन्यथासिद्धत्वात् न शूद्राधिकारं कल्पयन्ति, अनन्यथासिद्धं हि कल्पकं, किं चाध्ययनस्याऽपि प्रयोजकतया कल्पनागौरवं स्यात्, "रथकारोऽग्नीनादधीते"त्यादिविधिरध्ययनसिद्धज्ञानत्रैवर्णिकैरनिर्वृत्तानुष्ठानतयानऽन्यथासिद्धत्वात् अधिकारङ्कल्पयतीति वैषम्यं, किं च रथकारादीनां 'रथकारोऽग्नीनादधीते' ति विधिवाक्येनैव अधिकारित्वेन विशेषतः श्रुतत्वा-

तदपेक्षितमन्त्रभागाध्ययनाधिकारमात्रं कल्प्यम् इह तु विशेषतः शूद्राद्युद्देशेन उपासनविधानाभावादुपासनाधिकारस्तदौपयिकाध्ययनाधिकारश्च कल्प्य इति गौरवं स्यात्, अतोऽनधिकार इति, संवर्गविद्यायां शूद्र–शब्दश्च नोपासनाधिकारज्ञापकः रथकारादिशब्दवद्विधिवाक्यगतत्वाभावात् तथा सति ह्यधिकारः कण्ठोक्तः स्यात् शूद्रशब्दोऽह्यर्थवादगतः । नन्वर्थवादस्याऽपि स्वार्थे प्रामाण्यमुक्तं सत्यं, तत्तु बाधकाभावे सति भवति वैदिकविधीनामध्ययनसिद्धस्वाध्यायजन्यज्ञानसापेक्षत्वं बाधकम् अध्ययनस्याऽपि प्रयोजकत्वे गौरवं स्यादित्युक्तं वक्ष्यमाणो रूढिप्रतिकूललिङ्गसद्भावोऽवयवशक्त्यनुकूललिङ्गसद्भावश्च बाधकः, रूढिप्राबल्यमर्थाविरोधाभावेऽनुकूललिङ्गसद्भावे च भवति न त्वर्थविरोधे, अत एव हि गङ्गायां घोष इत्यत्र गङ्गापदस्य लक्षणा, रथकारोऽग्नीनादधीतेत्यत्रापि सौधन्वान ऋभवः शूरचक्षस इति सौधन्वत्वमनुकूललिङ्गं दृश्यते, ब्राह्मणादेश्च शिल्पनिषेधोऽवगम्यते, अतोऽर्थविरोधाच्छूद्र–शब्दस्य रूढिर्दुर्बला अतोनाऽधिकारः, अयञ्चार्थः शुगस्येत्यादिसूत्रेऽभिप्रेत इह प्रतिपत्तिसौकर्यायोक्तः । ननूक्तमितिहासपुराणद्वारा शूद्रस्याऽपि ब्रह्मज्ञानं सम्भवतीत्यत्राह–

सू० इतिहासपुराणे अपि वेदोपबृंहणं कुर्वती एवोपायभावमनुभवतो न स्वातन्त्र्येण, शूद्रस्येतिहासपुराणश्रवणानुज्ञानं पापक्षया.दिफलार्थं नोपासनार्थं, विदुरादयस्तु भवान्तराधिगतज्ञानाप्रमोषाज् ज्ञानवन्तः प्रारब्धकर्म्मवशाच्चेदृशजन्मयोगिन इति तेषां ब्रह्मनिष्ठत्वम् । यत्तु सम्वर्गविद्यायां शुश्रूषोः शूद्रेति सम्बोधनं शूद्रस्याधिकारं सूचयतीति तन्नेत्याह–

**सू० शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥**

शुश्रूषोर्जानश्रुतेः पौत्रायणस्य ब्रह्मज्ञानवैकल्येन हंसोक्ता-ऽनादरवाक्यश्रवणात्तदैव ब्रह्मविदो रैक्वस्य सकाशं प्रत्या-द्रवणाच्छुगस्य सञ्जातेति हि सूच्यते अतः स शूद्रेत्यामन्त्र्य-ते न चतुर्थवर्णत्वेन, शोचतीति हि शूद्रः ।

टी० "इतिहासे"ति, उपबृंहणीयवेदज्ञानाधिकारादुपबृंहणमात्रे-णोपासनोपयोगिज्ञानपौष्कल्यं न सम्भवति न हि व्याख्येयानधिकारिणो व्याख्यानमात्रेण पुष्कलज्ञानसम्भव इति दृष्टसामर्थ्यवैकल्यम्, "इतिहासपु-राणाभ्यां वेदं समुपबृंहये"दिति वेदार्थविशदीकारहेतुतयैव तदवगमवि-धानादङ्गतया विहितस्य स्वतन्त्रतयोपादाने तज्जन्यज्ञानस्य पुस्तकपा-ठादिलब्धवेदार्थज्ञानस्येव शास्त्रविरोधेनादृष्टसामर्थ्यवैकल्यञ्च, अतस्तद-विरोधस्य न्याय्यत्वाच्छ्रावणविध्यवैयर्थ्याच्च शूद्रस्य श्रवणानुज्ञानं पुण्यक-थावगतिद्वारेण पापक्षयार्थं न तूपासनार्थमित्यर्थः, यद्येवं वेदवाक्यार्थज्ञान-मुपासनाङ्गं कथं तर्हि विदुरादीनामुपासनसम्भव इत्यत्राह "विदुरादय-स्त्वि"ति, तेषामप्युपासने प्रथमप्रवृत्तिर्न शूद्रजन्मनि अपि तु पूर्वजन्मसि-द्धैव, पाश्चात्ये तु जन्मनि प्राक्तनज्ञानप्रमोषाभावादवर्जनीयतदनुवृत्तिमा-त्रमेवेत्यर्थः, विदुरादीनामपि इतिहासपुराणश्रवणाद् ज्ञानसिद्धिरिति यदि-तरैरुच्यते तदयुक्तं "धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते वर्णावरत्व सम्प्राप्ताः संसिद्धिं श्रमणी यथे"ति, शौनकवचनविरोधात्, एवमर्थसिद्धः सूत्रकाराभिप्रेतो हेत्वन्तरपरिहार उक्तः । अथ प्रधानयुक्तिपरिहारपरं सूत्र-मवतारयितुमाह "यस्त्वि"ति, शोचितृत्वं शूद्र-शब्दार्थः, तत्र शोककारणं शोककार्यञ्च हेतुत्वेनाह "शुश्रूषोरि"त्यादिना, अनादरवाक्यश्रवणं शोककारणम् आद्रवणं शोककार्यं, शूद्र-शब्दस्य शोचितृत्ववाचकत्वं कथ-मित्यत्राह ।

सू० "शुचेर्दश्च" इति र प्रत्यये धातोश्च दीर्घे चकारस्य दकारे शूद्र इति भवति, अतः शोचितृत्वमेवास्य शूद्रशब्दप्र-योगेण सूच्यते, न जातियोगः, "जानश्रुतिः किल पौत्रा-

यणो बहुद्रव्यप्रदो बह्वन्नप्रदश्च बभूव तस्य धार्म्मिकाग्रेसरस्य धर्म्मेण प्रीतयोः कयोश्चिन्महात्मनोरस्य ब्रह्मजिज्ञासामुत्पिपादयिषतोर्हंसरूपेण निशायामस्याविदूरे गच्छतोरन्यतर इतरमुवाच "भो भो भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समन्दिवाज्योतिराततन्तन्मा प्रसाङ्क्षीस्तत्त्वामा प्रधाक्षीदिति, एवं जानश्रुतिप्रशंसारूपं वाक्यमुपश्रुत्यापरो हंसः प्रत्युवाच "कं वर एनमेतत्सन्तं सयुग्वानमिव रैक्कमात्थेति कं सन्तमेनं जानश्रुतिं स युग्वानं रैक्कं ब्रह्मज्ञ-

टी० "शूचेर्दश्चेती"ति, रप्रत्ययः प्रकरणसिद्धश्चकाराकृष्टः "अमितम्योर्दीर्घश्चे"ति सूत्रे दीर्घश्चेत्यंशोऽनुवर्तत इति भावः । परैर्निरुक्तप्रक्रियया आद्रवणमप्यन्तर्भाव्य शूद्र-शब्दनिर्वाहः कृतः, मुख्यनिर्वाहे सम्भवति सोऽनुपपन्न इति भावः । पाणिनीयनिर्वाहो मुख्यः, तदनन्तरमौणादिकः, ततो नैरुक्तः, तत्रौणादिकनिर्वाहस्य सम्भावितत्वात् स एवात्र कृतः अनादरवाक्यश्रवणस्येव आद्रवणस्यापि शूद्र-शब्दवाच्यत्वं न सूत्रविवक्षितम् उपपादकतयोपादानस्य द्वयोरपि तुल्यत्वात्, शुच एव ह्युपपाद्यत्वं प्रतीयते प्रथमान्तनिर्देशात्, श्रवणाद्रवण-शब्दौ हि पञ्चम्यन्तौ तस्माच्छोक एव शूद्रशब्दप्रवृत्तिनिमित्तम्, अनादरवाक्यश्रवणादीनां वैशद्यार्थमुपन्यस्यति "जानश्रुतिः किले"ति, भल्लाक्ष हंसः समन्दिवा स्वर्गेण समं स्वर्गेऽपि तत्तेजः प्रसृतमित्यर्थः । यद्वा दिवसेन सममित्यर्थः, निशायामित्युक्तत्वात्, मा प्रसाङ्क्षीः मा प्रसक्तः स्याः, मा प्रधाक्षीत्-त्वां मा दहेरित्यर्थः, परो हंस इति श्रुतौ पर-शब्दो हंसवाचीति भावः । हंसान्तरवाक्यस्य अनादरगर्भतां व्यनक्ति "कं सन्तमि"ति, स युक्त्वानमित्यस्यार्थमाह "गुणश्रेष्ठमि"ति, । यद्वा युक्त्वा शकटं तद्वन्तमित्यर्थः ।

मिव गुणश्रेष्ठमेनदात्थ स ब्रह्मज्ञो रैक्व एव लोके गुणव-त्तरो महता धर्मेण संयुक्तस्याप्यस्य जानश्रुतेरब्रह्मज्ञस्य को गुणः यद्गुणजनितं तेजो रैक्वतेज इव मां दहेदित्यर्थः, एव-मुक्तेन परेण "कोऽसौ रैक्व" इति पृष्टो "लोके यत् किं-चित्साध्वनुष्ठितङ्कर्म्म यच्च सर्वं चेत[1]नाङ्गं विज्ञानन्तदुभयं यदीयज्ञानकर्म्मान्तर्भूतं स रैक्व इत्याह, तदेतद्धंसवाक्यं ब्र-ह्मज्ञानविधुरतयाऽऽत्मनिदागर्भन्तद्वत्तया च रैक्वप्रशंसारूपं जानश्रुतिरुपश्रुत्य तत्क्षणादेव क्षत्तारं रैक्वान्वेषणाय प्रेष्य तस्मिन् विदित्वाऽऽगते स्वयमपि रैक्वमुपसद्य गवां षट्शतं निष्कमश्वतरीरथञ्च रैक्वायोपहृत्य रैक्वं प्रार्थयामास अनु म एतां भगवो देवतां शाधि यान्देवतामुपास्स इति त्वदुपास्यां परां देवताम्मामनु शाधीत्यर्थः, स च रैक्वः स्वयोगमहिमविदितलोकवृत्तो जानश्रुतेर्ब्रह्मज्ञानविधुर-तानिमित्ताऽनादरगर्भहंसवाक्यश्रवणेन शोकाविष्टतान्तद-नन्तरमेव ब्रह्मजिज्ञासयोद्योगं च विदित्वाऽस्य ब्रह्मवि-द्यायोग्यतामभिज्ञाय चिरकालसेवां विनाऽर्थप्रदानेन शु-श्रूषमाणस्यास्य यावच्छक्तिप्रदानेन ब्रह्मविद्या प्रतिष्ठिता भवतीति मत्वा तमनुगृह्णन्नस्य शोकाविष्टतामुपदेशयोग्य-ताख्यापिकां शूद्र-शब्देनामन्त्रणेन ज्ञापयन्निदमाह अपाहर त्वं शूद्र तवैव सह गोभिरस्त्विति सह गोभिरयं रथस्तवैवास्तु नैतावता मह्यं दत्तेन ब्रह्मजिज्ञासया शो-काविष्टस्य तव ब्रह्मविद्या प्रतिष्ठिता भवतीत्यर्थः, स च

---

१ सर्वं चेतनगतं विज्ञानमिति पा० ।

जानश्रुतिर्भूयोऽपि स्वशक्त्यनुगुणमेव गवादिकं धनं कन्यां च प्रदाय उपससाद स रैक्वः पुनरपि तस्य योग्यतामेव। ख्यापयन् शूद्र-शब्देनामन्त्र्याह-

टी० "गुणश्रेष्ठमि"ति, प्रकरणसिद्धार्थोक्तिः उपास्स इति मध्यमपुरुषनिर्देशाभिप्रायं व्यञ्जयन्नाह "त्वदुपास्या"मिति, यदुपासनया तवेदृशी प्रशस्तिर्जाता तस्मै ब्रूहीत्यभिप्राय इत्यर्थः। चिरकालेति चिरकालसेवा यावच्छक्तिप्रदानं वा ब्रह्मविद्याप्रतिष्ठाहेतुरित्यर्थः तमनुगृह्णन् न तु रागादित्यर्थः।

मू० "आजहारेमाः शूद्राऽनेनैव मुखेनालापयिष्यथा" इति, इमानि धनानि शक्त्यनुगुणान्याजहर्थ अनेनैव द्वारेण चिरसेवया विनापि मां त्वभिलषितब्रह्मोपदेशरूपवाक्यमालापयिष्यसि इत्युक्त्वा तस्मा उपदिदेश, अतः शूद्र-शब्देन विद्योपदेशयोग्यताख्यापनार्थं शोक एवास्य सूचितो न चतुर्थवर्णत्वम्॥

## सू० क्षत्रियात्वाव[1]गतेश्च ॥ ३५ ॥

बहुदायीति दानपतित्वेन बहुपाक्य इत्यादिना सर्वत एवमेतदन्नमत्स्यन्तीत्यन्तेन बहुतरपक्वान्नप्रदायित्वप्रतीतेस्स ह संजिहान एव क्षत्तारमुवाचे"ति क्षत्तृप्रेषणाद्बहुग्रामप्रदानावगतजनपदाधिपत्याच्चाऽस्य जानश्रुतेः क्षत्रियत्वप्रतीतेश्च, न चतुर्थवर्णत्वं, तदेवमुपक्रमगताख्यायिकायां क्षत्रियत्वप्रतीतिरुक्ताऽधुनोपसंहारगताख्यायिकायामपि क्षत्रियत्वमस्य प्रतीयत इत्याह-

[1] क्षत्रियत्वगतेश्चेति पा०।

## सू० उत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३६ ॥

अस्य जानश्रुतेरुपदिश्यमानायामस्यामेव संवर्गविद्यायाम् उत्तरत्र कीर्त्यमानेनाभिप्रतारिनाम्ना चैत्ररथेन क्षत्रियेणास्य क्षत्रियत्वङ्गम्यते, कथम्? ।

टी० "आजहर्थे"ति, आजहार भवानिति भवच्छब्दाध्याहारेण छान्दसव्यत्ययेन वा श्रुतियोजनेत्यभिप्रायः। यद्यपि दशाश्वमेधानाजहारेत्यादिष्वाङ्पूर्वस्य हरतेरर्थान्तरदर्शनेन नानार्थकत्वसम्भवाद्गातूनां प्रतिगृहीतवानस्मीत्युत्तमपुरुषतया व्याख्यातुं शक्यते तथाऽपि अग्नयेसमिधमाहार्षम्, अश्वमेधेन मध्वाजहार इति दानार्थतया वैदिकप्रयोगप्राचुर्यदर्शनादनेनैव मुखेनालापयिष्यथा इत्यालापनहेतुतया प्रतिसन्धीयमानस्याहरणस्य स्वरसत आलापनसमानकर्तृकता प्रतीतेश्च मध्यमपुरुषत्वेन व्याख्यातम्। सू० क्षत्रियत्वगतेश्च शूद्र-शब्दस्य यौगिकार्थानुकूलहेतुरुक्तः। अथ रूढिसिद्धार्थविरुद्धहेतुरुच्यते सञ्जिहानः आसनमुभ्झन् उत्तिष्ठन्नेवेत्यर्थः उत्तरसूत्रमवतारयति "तदेवमि"ति, सू० उत्तरत्र चैत्ररथेन लिङ्गात्, कथमिमिति चैत्ररथः क्षत्रियश्चेज्जानश्रुतिरपि क्षत्रियः स्यादिति न हि नियम इत्यर्थः उत्तरमाह ।

भा० "अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे" इत्यादिना, "ब्रह्मचारिन्नेदमुपास्महे इत्यन्तेन कापेयाभिप्रतारिणोर्भिक्षमाणस्य ब्रह्मचारिणश्च संवर्गविद्यासम्बन्धित्वं प्रतीयते, तेषु चाभिप्रतारी क्षत्रियः इतरौ ब्राह्मणौ, अतोऽस्यां विद्यायां ब्राह्मणस्य तदितरेषु च क्षत्रियस्यैवान्वयो दृश्यते न शूद्रस्य, अतोऽस्यां विद्यायामन्वितादैकाङ्ग ब्राह्मणादन्यस्य जानश्रुतेरपि क्षत्रियत्वमेव युक्तं न चतुर्थवर्णत्वम्। नन्वस्मिन् प्रक-

रणेऽभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च न श्रुतन्तत्कथमस्याभिप्रतारिणश्चैत्ररथत्वङ्कथं वा क्षत्रियत्वम्? तत्राह "लिङ्गादि"ति, "अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिमित्यभिप्रतारिणः कापेयसाहचर्य्याल्लिङ्गादस्याभिप्रतारिणः कापेयसम्बन्धः प्रतीयते, अन्यत्र च "एतेन वै चैत्ररथङ्कापेया अयाजयन्नि"ति, कापेयसम्बन्धिनश्चैत्ररथत्वं श्रूयते तथा चैत्ररथस्य क्षत्रियत्वन्तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायतेति अतोऽभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च गम्यते, तदेवं न्यायविरोधिनि शूद्रस्याधिकारे लिङ्गं नोपलभ्यते इत्युक्तम्, इदानीं न्यायसिद्धः शूद्रस्याऽनधिकारः श्रुतिस्मृतिभिरनुगृह्यत इत्याह–

टी० "अथ हे"ति, परिविष्यमाणौ सूदेन भोज्यमानौ ब्रह्मचारिणा भिक्षणं कापेयाभिप्रतारिणोस्त्रैवर्णिकत्वलिङ्गमित्यर्थसिद्धम् एकत्र ब्राह्मणक्षत्रियजातिद्वयसम्बन्धितयाऽवगतायामन्यत्राऽपि ब्राह्मणसम्बन्धितया निर्णीतायान्तत्सम्बन्धिपुरुषान्तरविषयसन्देहे सति अल्पप्रायन्यात् तस्य पुरुषस्य ब्राह्मणक्षत्रिययोरन्यतरत्वम्पारिशेष्येण क्षत्रियत्वं च निश्चीयत इत्यर्थः। सौत्रं लिङ्गादिति पदं व्याख्यातुञ्चोद्यमुखेन आकाङ्क्षान्दर्शयति "नन्वि"ति, अभिप्रतारिणः चैत्ररथत्वं तस्य क्षत्रियत्वं च नावगतमित्यर्थः। किमत्र लिङ्गं विवक्षित? मित्यत्राह "अथ हे"ति, कापेयसाहचर्यात्–कापेयसहपाठादित्यर्थः कापेयसहपाठबलेन कापेयसम्बन्धस्सिद्धः तेन तत्पुरोहितकस्य चैत्ररथत्वं सिद्धन्तेन क्षत्रियत्वमवगतमित्यर्थः। उत्तरसूत्रसङ्गतिमाह "तदेवमि"ति, शूद्र–शब्दस्य रूढिसिद्धार्थविरोधिलिङ्गं यौगिकार्थानुगुणलिङ्गं चेत्युभयविधं लिङ्गमपि शूद्रानधिकारज्ञापकमित्यर्थः। इदानीमिति अयमनधिकारः श्रुतिस्मृतिभिरनुगृहीत इत्याहेत्यर्थः।

**सू० संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३७ ॥**

भा० ब्रह्मविद्योपदेशप्रदेशेषूपनयनसंस्कारः परामृश्यते "उप त्वा नेष्ये तं होपनिन्ये" इत्यादिषु शूद्रस्य चोपनयनादि-संस्काराभावोऽभिलप्यते "न शूद्रे पातकं किंचिन्न च संस्कारमर्हती"ति, "चतुर्थो वर्ण एकजाति र्न च संस्कार-मर्हतीत्यादि"षु ॥

**सू० तदभावनिर्धारणे च प्रवृत्तेः ॥ ३८ ॥**

"नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरे"ति शुश्रूषोर्जाबालस्य शूद्रत्वाभावनिर्धारणे सत्येव ब्रह्म-विद्योपदेशप्रवृत्तेश्च न शूद्रस्याधिकारः ॥

**सू० श्रवणाऽध्ययनाऽर्थप्रतिषेधात् ॥ ३९ ॥**

शूद्रस्य वेदश्रवणतदध्ययनतदर्थानुष्ठानानि प्रतिषिध्यन्ते "पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यन्त"स्माच्छूद्रो बहुपशुरऽयज्ञीय" इति बहुपशुः पशुसदृश इत्यर्थः ।

टी० सू. संस्कारपरामर्शातदभावाभिलापाच्च, संस्कारः परामृश्य-तान्ततः किमित्यत्राह "शूद्रस्ये"ति. "न शूद्रे पातकं किंचित्सन्ध्यावन्द-नाद्यभावनिमित्तम्पापं नास्तीत्यर्थः चतुर्थोवर्ण एकजातिः न तु द्विजाति-रित्यर्थः, सू. तदभावनिर्धारणे च प्रवृत्तेः, तच्छब्दस्य पूर्वसूत्रप्रकृतसंस्कार-वाचितायामेतत्सूत्रविषयवाक्यानुगुण्याभावात्तच्छब्दः परमप्रकृतपरामर्शी-त्याह "शूद्रत्वाभावे"ति. सू. श्रवणाध्ययनार्थप्रतिषेधात्, अर्थ-शब्देन तदनु-ष्ठानं विवक्षितम् । पद्यु-जङ्गमं, समीपोच्चारणप्रतिषेधादेव श्रवणाध्ययनप्र-तिषेधोऽर्थसिद्धः । अर्थानुष्ठानप्रतिषेधन्दर्शयति "तस्माच्छूद्र"इति, ननु तत

एव अर्थानुष्ठाननिषेधोऽपि सिद्धः सत्यं, साक्षादेव त्वसौ श्रूयते तत्र किं-प्रमाणात्युपजीवनेनेति पृथगुच्यत इति पशुबाहुल्यत्रत्त्वं यज्ञाद्यर्हत्वौपयिकं कथमनेनायज्ञीयत्वसिद्धिरिति शङ्काव्यावृत्त्यर्थं बहुपशु-शब्दं व्याचष्टे "पशुसदृश इत्यर्थे" इति, ईषदसमाप्तपशुत्वं इति वक्तव्ये सदृशशब्दग्रहण-मीषदसमाप्तेः सादृश्यार्थपर्यवसानज्ञापनार्थं "विभाषा सुपो बहुच पुर-स्तात्त्वि"ति पाणिनीयसूत्रेण ईषदसमाप्तेऽर्थे बहुच्प्रत्ययस्तस्य पुरस्तात् प्रयोगश्च विहितः, अध्ययनादिनिषेधोऽर्थसिद्धोपीत्याह—

सू० अनुपशृण्वतोऽध्ययनतदर्थज्ञानतदर्थानुष्ठानानि न सम्भ-वन्ति, अतस्तान्यपि प्रतिषिद्धान्येव ।

**सू० स्मृतेश्च ॥ ४० ॥**

स्मर्यते च श्रवणादिनिषेधः ।

"अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम् उदाहरणे जिह्वाच्छेदो धारणे शरीरभेद" इति, "न चास्यो-पदिशेद्धर्मं न चास्य व्रतमादिशेदि"ति च, अतः शूद्रस्यान-धिकार इति सिद्धम ॥ ये तु निर्विशेषचिन्मात्रं ब्रह्मैव पर-मार्थः, अन्यत् सर्वं मिथ्याभूतं, बन्धश्चापारमार्थिकः, स च वाक्यजन्यवस्तुयाथात्म्यज्ञानमात्रनिवर्त्यः तन्निवृत्तिरेव मोक्ष इति वदन्ति, तैर्ब्रह्मज्ञाने शूद्रादेरनधिकारो वक्तुं न शक्यते, अनुपनीतस्यानधीतवेदस्य अश्रुतवेदान्तवाक्य-स्याऽपि यस्मात्कस्माच्चिदपि निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थः अन्यत्सर्वं तस्मिन्मिथ्याभूतम्परिकल्पितमिति वाक्याद्वस्तुयाथात्म्यज्ञानोत्पत्तेस्तावतैव बन्धनिवृत्तेश्च, न च तत्त्वमस्यादिवाक्येनैव ज्ञानोत्पत्तिः कार्या न वाक्यान्तरे-

णेति नियन्तुं शक्यं ज्ञानस्यापुरुषतन्त्रत्वात्, सत्यां साम-ग्र्यामनिच्छतोऽपि ज्ञानोत्पत्तेः, न च वेदवाक्यादेव वस्तु-याथात्म्यज्ञाने सति बन्धनिवृत्तिर्भवतीति वक्तुं शक्यं येन केनापि वस्तुयाथात्म्यज्ञाने सति भ्रान्तिनिवृत्तेः ।

टी० "अनुपशब्दवत" इति, "शूद्रो नाधीयीते"ति वाक्यमप्यनुसन्धे-यम् अनेन यज्ञे विशेषनिषेधादन्यत्र वैदिके कर्मणि शूद्रस्याधिकारशङ्का च निरस्ता भवति, सू० स्मृतेश्च, अथ हेत्यादि, अध्ययनादौ प्रायश्चित्तस्मरण-मुपदेशनिषेधस्मरणं चानधिकारज्ञापकत्वात्तदुभयमपि स्मृति–शब्दविवक्षि-तमिति भावः । रथकारोऽग्नीनादधीतेत्यादिषु "रूढिर्योगमपहरती"ति न्यायेन रूढ्यर्थः स्वीकृतः, तदपवादोऽर्थाविरोधः, अनुकूललिङ्गसद्भावे विरो-धिलिङ्गाभावे च रूढेः प्राबल्यं, विरोधिलिङ्गसद्भावस्तदपवाद इत्युक्तं भवति, रथकारोऽग्नीनादधीतेत्यत्रापि सौधन्वान ऋभवः इत्यनुकूलं लिङ्गं ह्युपल-भ्यत इति, अस्मिन्नधिकरणे परेषामनवकाशत्वं दर्शयति "ये त्वि"त्यादिना, अनुपनीतस्यापीति, न हि नायं सर्पः रज्जुरेषेति वाक्यात् भ्रमनिवृत्तिरुपनय-नादिसंस्कारापेक्षेति भावः । तत्त्वमस्यादिव्यतिरिक्तवाक्येन ज्ञानं नोत्पद्यत इति शङ्कायामाह "न चे"ति, अपुरुषतन्त्रत्वे हेतुमाह "सत्यामि"ति-व्यतिरिक्तवाक्येन उत्पन्नमपि ज्ञानं निवर्तकं न भवतीत्यत्राह "न च वेदा-न्तवाक्यादि"ति, येन केनापीति सामान्येनार्थशरीरोक्तिः । पक्षमाह–

श्रु० पौरुषेयादपि निर्विशेषचिन्मात्रं ब्रह्म परमार्थोऽन्यत्सर्वं मिथ्याभूतमिति वाक्यात् ज्ञानोत्पत्तेः, तावतैव भ्रमनिवृत्तेश्च, यथा पौरुषेयादप्याप्तवाक्याच्छुक्तिकारजतादिभ्रान्तिर्ब्रा-ह्मणस्य शूद्रादेरपि निवर्तते, तद्वदेव शूद्रस्यापि वेदवित्सम्प्र-दायावगतवाक्याद्वस्तुयाथात्म्यज्ञानेन जगद्भ्रमनिवृत्तिरपि भविष्यति "न चास्योपदिशेद्धर्म"मित्यादिना वेदविदः शूद्रा-

द्विष्यो न वदन्तीति च न शक्यं वक्तुं तत्त्वमस्यादिवाक्यावगत-ब्रह्मात्मभावानां वेदशिरसि वर्त्तमानतया दग्धाखिलाधिकारत्वेन निषेधशास्त्र[1]स्याकिंचित्करत्वभावात्, अतिक्रान्तनिषेधैर्वा कैश्चिदुक्ताद्वाक्याच्छूद्रादेर्ज्ञानमुत्पद्यत एव, न च वाच्यं शुक्त्यादौ रजतादिभ्रमनिवृत्तिवत् पौरुषेयवाक्यजन्यतत्त्वज्ञानसमनन्तरं शूद्रस्य जगद्भ्रमो न निवर्त्तत इति तत्त्वमस्यादिवाक्यश्रवणसमनन्तरं ब्राह्मणस्यापि जगद्भ्रमानिवृत्तेः, निदिध्यासनेन द्वैतवासनायां निरस्तायामेव तत्त्वमस्यादिवाक्यं निवर्त्तकज्ञानमुत्पादयतीति चेत् पौरुषेयवाक्यमपि शूद्रादेस्तथैवेति न कश्चिद्विशेषः, निदिध्यासनं हि नाम ब्रह्मात्मभावाभिधायिवाक्यं यदर्थप्रतिपादनयोग्यं तदर्थभावना सैव विपरीतवासनां निवर्त्तयतीति दृष्टार्थत्वं निदिध्यासनविधेर्ब्रूषे,

टी० "पौरुषेयादपी"ति, भ्रमनिवृत्तेः—भ्रमनिवृत्तेर्न्याय्यत्वादित्यर्थः, सपक्षमाह "यथे"ति, ततः किमित्यपेक्षायां दृष्टान्तोक्तमर्थं पक्षेऽतिदिशति "तद्वदि"ति, शङ्कान्तरमुक्त्वा परिहरति न चेत्यादिना, वेदशिरसि वेदान्तेनिष्ठत्वात्। यद्वा वेदस्यापि शिरसि निहितचरणत्वादिति यावत् निषेधशास्त्रकिंकरत्वाभावादित्यनेन "दग्धाखिलाधिकारत्वाद् ब्रह्मज्ञानाग्निना मुनिः। वर्त्तमानः श्रुतेर्मूर्ध्नि नैव स्याद्वेदकिंकर" इति नैष्कर्म्यसिद्धिग्रन्थे स्मर्यते। मुखान्तरेण ज्ञानोदयसम्भवमाह "अतिक्रान्ते"ति, प्रत्यक्षविरोधमाशङ्क्य परिहरति न चेत्यादिना, शूद्रस्य निदिध्यासनानधिकारान्न वाक्यार्थज्ञानोत्पत्त्या नः बन्धनिवृत्तिरित्यत्राह "निदिध्यासनं ही"ति, न हि निदिध्यासनमदृष्टद्वारा किंचित्करोति निवर्त्यसत्यत्वप्रसङ्गात्, अदृष्टद्वारा किंचित्क-

१ निषेधशास्त्रकिंकरत्वाभावादिति पा० ।

रत्वे सति हि यज्ञादाविव शूद्रानधिकारः, न च तदस्ति, अतो नायं सर्प इति वाक्येन सर्पमिथ्यात्ववासनायामिव शूद्रादेरपि निदिध्यासनेऽधिकारो न निषेद्धुं शक्यत इति भावः । शूद्रस्य यज्ञादिकर्मानधिकारात्तत्सापेक्षं वाक्यार्थज्ञानं न जायत इत्यत्राह—

सू० वेदानुवचनादीन्यपि विविदिषोत्पत्तावेवोपयुज्यन्त इति शूद्रस्यापि विविदिषायां जातायां पौरुषेयवाक्यान्निदिध्यासनादिभिर्विपरीतवासनायां निरस्तायां ज्ञानमुत्पत्स्यते तेनैवापारमार्थिको बन्धो निवर्त्तिष्यते। अथवा तर्कानुगृहीतात् प्रत्यक्षादनुमानाच्च निर्विशेषस्वप्रकाशचिन्मात्रं प्रत्यग्वस्तु-न्यज्ञानसाक्षित्वं तत्कृतविविधविचित्रज्ञातृज्ञेयविकल्परूपं कृत्स्नं जगच्चाध्यस्तमिति निश्चित्य एवंभूतपरिशुद्धप्रत्यग्वस्तुन्यनवरतभावनया विपरीतवासनां निरस्य तदेव प्रत्यग्वस्तु साक्षात्कृत्य शूद्रादयोऽपि विमोक्ष्यन्त इति मिथ्याभूतविचित्रैश्वर्य्यविचित्रसृष्ट्याद्यलौकिकानन्तविशेषावलम्बिना वेदान्तवाक्येन न किंचित्प्रयोजनमिह दृश्यत इति शूद्रादीनामेव ब्रह्मविद्यायामधिकारः सुशोभनः, अनेनैव न्यायेन ब्राह्मणादीनामपि ब्रह्मवेदनसिद्धेरुपनिषच्च तपस्विनो दत्तजलाञ्जलिः स्यात्, न च वाच्यं नैसर्गिकलोकव्यवहारे भ्राम्यतोऽस्य केनचिदयं लोकव्यवहारो भ्रमः परमार्थस्त्वेवमिति स[1]मर्थिते सत्येव प्रत्यक्षानुमानदृक्तबुभुत्सा जायत इति तत्समर्पिका श्रुतिरप्यास्थेयेति यतो भवभयभीतानां साङ्ख्यादय एव प्रत्यक्षानुमानाभ्यां वस्तुनिरूपणं कुर्वन्तः

१ समर्पिते इति पा० ।

प्रत्यक्षानुमानवृत्तबुभुत्सां जनयन्ति, बुभुत्सायां जातायां प्रत्यक्षानुमानाभ्यामेव विविक्तस्वभावाभ्यां नित्यशुद्धस्वप्रकाशाद्वितीयकूटस्थचैतन्यमेव सत् अन्यत्सर्वं तस्मिन् अध्यस्तमिति सुविवेचम् ।

टी० "वेदानुवचनादीन्यपी"ति, शूद्रस्यापि जन्मान्तरानुष्ठितयज्ञादिकर्मणास्सञ्जातविविदिषस्य शूद्रजन्मनि निदिध्यासनमाप्तवाक्यावगताद्वैतविषयं कर्त्तुं शक्यमिति भावः । मुखान्तरेण ज्ञानसम्भवमाह "अथ वे"ति, तर्कानुगृहीतादिति, त्वदुक्तानां प्रमाणानुपत्तिप्रमेयानुपपत्त्यादीनान्तर्काणामवगमो हि न श्रुत्यपेक्ष इति भावः । सुशोभन इति इतः पूर्वमविद्यमानमीश्वरेशितव्यादिभेदज्ञानं जनयद्वेदान्तवाक्यं हित्वा केवलाद्वैतज्ञानजनकतर्कावलम्बिनामेव ब्रह्मविद्याऽधिकारः सुलभः इत्यर्थः । श्रुतिवैयर्थ्यमनुपपत्त्यन्तरमाह "अनेनैवे"ति, अप्राप्ते हि शास्त्रमर्थवदतः प्राप्तार्थत्वात् भेदज्ञानजनकत्वाच्च ब्राह्मणादेरपि श्रुतिरनादरणीयेत्यर्थः, तपस्विनी-शोचनीया देशकालव्रताद्यनेकनियमवतीति भावः । न चेति नैसर्गिक-शब्दोऽनादित्वपरः प्रसञ्जकत्वेन अपेक्षितेति शङ्काग्रन्थस्यार्थं दूषयति "यत"इति, साङ्ख्यहैरण्यगर्भनैयायिकवैशेषिकबौद्धार्हतादिभिरेव प्रत्यक्षानुमानादिमुखेन वस्तुनिरूपणप्रसक्तमतो न श्रुत्यपेक्षेत्यर्थः ।

सू० एवं भूते स्वप्रकाशे वस्तुनि श्रुतिसमधिगम्यविशेषान्तरं च नाभ्युपगम्यते, अध्यस्तात्तद्रूपनिवर्त्तनी हि श्रुतिरपि त्वन्मते, न च सत आत्मन आनन्दरूपताज्ञानायोपनिषदास्थेया, चिद्रूपताया एव सकलेतरातद्रूपव्यावृत्ततया तद्रूपत्वात्, यस्य तु मोक्षसाधनतया वेदान्तवाक्यैर्विहितं ज्ञानमुपासनरूपं तच्च परब्रह्मभूतपरमपुरुषप्रीणनं तच्च शास्त्रैकसमधिगम्यम्, उपासनाशास्त्रं चोपनयनादिसंस्कार-

संस्कृताधीतस्वाध्यायजनितं ज्ञानं विवेकविमोकादिसाधनानुगृहीतमेव स्वोपायतया स्वीकरोति एवंरूपोपासनाप्रीतः पुरुषोत्तम उपासकं स्वाभाविकात्मयाथात्म्यज्ञानदानेन कर्म्मजनिताज्ञानं नाशयन् बन्धान्मोचयतीति पक्षः तस्य यथोक्तरीत्या शूद्रादेरनधिकार उपपद्यते ॥ अपशूद्राधिकरणं समाप्तम् ॥

टी० "सुविवेचमि"ति, त्वयैव हि युक्तय उपन्यस्ता इति भावः, तर्कागोचरविशेषान्तरसिद्ध्यर्थं श्रुत्यपेक्षेत्यत्राह "एवम्भूत"इति, श्रुतिस्तात्त्विकविशेषानवबोधकत्वमुपपादयति "अध्यस्ते"ति, आनन्दत्वज्ञानाय तदपेक्षेत्यत्राह "न चे"ति, असुखव्यावृत्तिर्ह्यानन्दत्वन्तत्सकलेतरव्यावृत्तिसाधकयुक्त्यैव सिध्यतीत्यर्थः । स्वपक्षे सर्वमुपपन्नमित्याह "यस्य त्वि"ति ॥ अपशूद्राधिकरणं समाप्तम् ॥

भा० तदेवं प्रसक्तानुप्रसक्ताऽधिकारकथाम्परिसमाप्य प्रकृतस्याङ्गुष्ठप्रमितस्य भूतभव्येशितृत्वावगतपरब्रह्मभावोत्तम्भनं हेत्वन्तरमाह –

टी० तदेवमिति, देवादीनामुपासननिरूपणं प्रसक्तमितराधिकरणद्वयमनुप्रसक्तं, परब्रह्मभावोत्तम्भनमिति "ईशानोभूतभव्यस्ये"ति अवगतस्य नियमनस्य जगत्सर्वमेजतीति सर्वविषयत्वतत्कार्यकम्पनज्ञापनादुत्तम्भनमीशान–शब्दस्य

प्रमिताधिकरणम् । **सू० कम्पनात् ॥ ४१ ॥**

भा० अङ्गुष्ठमात्रः पुरुषो मध्यआत्मनि तिष्ठति अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मेत्यनयोर्वाक्ययोर्मध्ये यदिदं किञ्च जग-

त्सर्वम् प्राण एजति निस्सृतं महद्भयं वज्रमुद्यतं ये एतद्वि-दुरमृतास्ते भवन्ति भयादस्याग्निस्तपति भयात्तपति सूर्यः भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम" इति कृत्स्नस्य जगतोऽग्निसूर्यादीनां चास्मिन्नङ्गुष्ठमात्रे पुरुषे प्राणश-ब्दनिर्दिष्टे स्थितानां सर्वेषां ततो निस्सृतानां तस्मात्सं-जातमहाभयनिमित्तमेजनं

टी० अस्वरसनिर्वाहे चिकीर्षिते ऽपि तस्य विरोधीत्यर्थः । नन्व-धिकारनिरूपकं तदुपर्यपीत्याद्यधिकरणत्रयं तृतीयस्य चतुर्थे पादे निवेश्यं, सत्यं, तथाऽपि सङ्गत्यतिशयात् समन्वयाध्याये निवेशितं, मनुष्याधिकार-त्वप्रसङ्गेन तावत् सङ्गतिः स्थिता, कार्यभूतदेवादीनां प्रामाणिकत्वसमर्थनं ब्रह्मणः परमकारणत्वोपयोगि कार्यकारणावस्थादित्यादिचेतनान्तर्यामिण उपास्यत्वं मधुविद्यायामुक्तम् अपशूद्राधिकरणे च संवर्गविद्यायाः पर-मात्मविषयत्वं ज्ञापितम् अतः कारणानुबन्धिनो निरूपणस्य समन्वयल-क्षणसङ्गतत्वात्तत्राप्यस्मिन् पादे मनुष्याधिकारप्रस्तावाच्चाधिकरणत्रयं निवेशितमिति । सू० कम्पनात्, इदं सूत्रं "प्राण एजती"ति वाक्यविषयम-धिकरणान्तरं ये वर्णयन्ति तान् प्रतिक्षिपति "अनयोर्वाक्ययोर्मध्य" इति, पर-मात्मपरत्वेनोपपादितवाक्यद्वयमध्यगतत्वादस्य वाक्यस्य अस्मिन्नेव मन्त्रे "य एतद्विदुरमृतास्ते भवन्ति" इति अमृतत्वप्राप्तिहेतुत्वावगमात् प्राण-शब्दस्य परमात्मवाचकत्वस्यानेकाधिकरणन्यायसिद्धत्वाच्च पूर्वपक्षानुदय इति भावः । प्राणः कम्पनादित्यश्रवणात् सूत्रास्वारस्यं च । ननु प्रकरणात् प्रा-णशब्दश्रुतिर्बलीयसी धूमतेजोजलमरुत्सन्निपातरूपमेघात्मना परिणतस्य वायोरशनिरूपेण विवर्तनाद्वज्र-शब्दश्रुतिश्च तत्साधिका वायुनिमित्तमेव च महद्भयानकं वज्रमुद्यम्यत इति ह्यर्थः, अमृतत्वहेतुता चोपपद्यते, "वायु-रेव व्यष्टिर्वायुः समष्टिरपपुनर्मृत्युञ्जयति य एवं वेदे" ति श्रुतेः । अतोऽधि-

करणान्तरं कार्यमिति, उच्यते पूर्वापरपर्यालोचनेन परमात्मपरतया निर्णीतेषु प्रकरणेषु मुख्यप्राणलिङ्गे तद्वाचकशब्दे सत्यपि परमात्मन एव प्रतिपाद्यत्वम्प्राणस्तथाऽनुगमादित्यत्र निर्णीतम्, अचेतनरूपप्रधानस्याऽपि मोक्षहेतुत्वानुपपत्तिः "स्तन्निष्ठस्य मोक्षोपदेशादि" त्यत्रोक्ता, तत्कथं तत्कार्यैकदेशप्राणज्ञानस्य मोक्षहेतुत्वशङ्कोदयः, वायोरशनिकारणत्वेऽपि प्राण-शब्दस्य वायुमात्रवाचित्वाभावात्तन्मुख्यार्थस्य मुख्यप्राणस्याशनिकारणत्वाभावाच्च वज्र-शब्देन न पञ्चवृत्तिप्राणशङ्का भवति, उद्यत-शब्दोऽप्यशनिशङ्काविरोधी, अशनिर्हि निपतति आयुधमेव ह्युद्यतम्भवति यथा तेनेन्द्रो वज्रमुदयच्छदि" ति अतोऽधिकरणान्तरत्वम् अयुक्तम् । नन्वेवम्परमात्मपरत्वनिश्चयात्त्वत्पक्षेऽपि सूत्रवैयर्थ्यमिति चेन्न उक्तहेतूत्तम्भनरूपप्रयोजनस्य दर्शितत्वात्, सूत्रे च-शब्दाभावोऽनन्तरपूर्वाधिकरणशेषत्वभ्रमानुदयार्थः न त्वधिकरणान्तरत्वात् प्राण इति सप्तम्यन्तपदसामर्थ्यात्स्थितानामित्यध्याहारः कुतो निस्सृतमित्यपेक्षायाम्प्रकृतस्यैवापादानत्वमाह "तत" इति, कुत एजति इत्यपेक्षायाम्प्रकृतस्यैव भयनिमित्तत्वमाह "तस्मादि" ति, भयमागाम्यनिष्टापत्तिज्ञानरूपं दुःखम्, एजनन्तु तत्कार्यं श्रुतिसूत्रयोरभिन्नार्थत्वं ज्ञापयति एजनं कम्पनमिति एजृ कम्पन इति हि धातुः

सू० कम्पनं श्रूयते तच्छासनातिवृत्तौ किं भविष्यतीति महतो भयाद्वज्रादिवोद्यतात्कृत्स्नं जगत्कम्पत इत्यर्थः, भयादस्याग्निस्तपतीत्यनेनैकार्थ्यात् महद्भयं वज्रमुद्यतमिति पञ्च-

प्रत्यवायभयात् स्वस्वकार्येषु प्रवृत्तिः कम्पनन्तथेहाप्यवगम्यते, भयादस्याग्निस्तपतीति तपनं ह्यग्न्यादित्ययोः कार्यं, धावति-शब्द इन्द्रादीनां स्वस्वव्यापारपरः । भयं विवृण्वन् वाक्यं योजयति "तच्छासने" ति, महतो भयादिति-शब्दो न भयानकपरो लक्षणाप्रसङ्गादिति भावः । वज्रादिवोद्यतादिति वज्र-शब्द आयुधपरः, न त्वशनिपरः उद्यत-शब्दविशेषितत्वादिति भावः । वज्रादिवेति इव-शब्देन श्रुतिवाक्ये वज्र-शब्द उपचाराद्वज्रतुल्ये वर्तते अध्याहारादपि गौणवृत्तेरुचितत्वादिति वज्र-शब्दस्य तत्तु-

त्यार्थपरत्वं फलतो दर्शितम् । कथं हेतुत्वावगम? इत्यत्राह "भयादस्ये"ति, कथम्प्रथमायाः पञ्चम्यर्थत्व? मित्यत आह "महद्भयं वज्रमुद्यतमिती"ति, न वज्रं भयदृष्टान्तः दृष्टान्तदार्ष्टान्तिकवै[1]षम्यात्, भयमव्यवधानेन कम्पनहेतुः, वज्रन्तु भयद्वारा तद्धेतुरतो वज्रम्भयहेतुदृष्टान्तः, उद्यताद्वज्रादिव परमपुरुषात् सञ्जातेन भयेन कृत्स्नं जगत् कम्पत इत्यर्थः, तस्मात्संजातमहाभयनिमित्तमिजनमिति पूर्वयन्यैकार्थ्यात्, एवं तर्हि प्रथमान्तपदसामानाधिकरण्यस्वारस्य भङ्ग इव-शब्दा इव-शब्दाध्याहारश्च स्यात्, तदुभयानादरेणार्थवर्णनं किंनिबन्धनमित्यत्राह "भयादस्ये"ति, अनन्तरवाक्ये भयादस्येति भयतद्धेतुवाचिपदयोर्वैयधिकरण्यदर्शनात् भयपदस्य पञ्चम्यन्तत्वदर्शनात् पूर्वापरवाक्ययोरैकार्थ्यस्य न्याय्यत्वाद्दृष्टान्तदार्ष्टान्तिकसामञ्जस्याच्चेत्यर्थः । ननु भय-शब्देन भयानकलक्षणा न्याय्या गङ्गापदादिषु प्रकृत्यंशेन प्रकृतत्यन्तरार्थलक्षणाया दृष्टत्वात् प्रथमाया हेत्वर्थलक्षणा त्वयुक्ता, विभक्तीनां विभक्त्यन्तरार्थे लक्षणाया अदर्शनात्, तच्चानुशासनविरोधात् पाशाधिकरणे ऽपि हि बहुत्वाविवक्षामात्रं न तु विभक्त्यन्तरार्थलक्षणा अतो भयानकं वज्रमिव ब्रह्म यत्तस्मात्कृत्स्नं जगत्कम्पत इत्येव हि योजना युक्ता, अत आह "महद्भयं वज्रमुद्यतमिती"ति, सुपां सुलुगित्यादिसूत्रेण सर्वतो विभक्तिषु प्रथमाया विहितत्वादियम्प्रथमा पञ्चम्यर्थवाचिनीत्यर्थः, वचनव्यत्ययो वा, अयमभिप्रायः योजनाद्वये ऽपि इव-शब्दाध्याहारो वज्र-शब्दस्यामुख्यत्वं वाऽवश्यम्भवेत्, प्रथमाऽन्तयोजनायां प्रथमाविभक्तिस्वारस्यं सामानाधिकरण्यस्वारस्यञ्चाभग्नं स्यात्, भय-शब्दस्य तद्धेतुलक्षणाश्रयणं यत्तच्छब्दाध्याहारः, पदैकवाक्यतायां सम्भवन्त्यां तत्प्रहाणेन वाक्यैकवाक्यभावाङ्गीकार इति त्रयो दोषाः । योजनान्तरे प्रथमायाः पञ्चम्यर्थताश्रयणास्वारस्यं, सामानाधिकरण्यभङ्गश्च द्वौ दोषौ भयपदप्रातिपदिकमुख्यत्वं यत्तच्छब्दानध्याहारः पदैकवाक्यता भयादस्येत्यनन्तरवाक्यैकरूप्यञ्चेति चत्वारोगुणाः, अतो दोषभूयस्त्वगुणलाघवयुक्तनिर्वाहा-

१ वैषम्यादिति पा० ।

दपि दौर्बल्यावगुणभूयस्त्वयुक्तनिर्वाहो वरमिति कृत्स्नजगद्धयावहत्वलक्षणस्य प्रशासनस्य परमात्मधर्मत्वं श्रुत्यन्तरप्रसिद्धोपपादयति—

श्रू० स्यर्थे प्रथमा, अयञ्च परस्य ब्रह्मणः स्वभावः "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः भीषाऽस्माद्वातः पवते भीषोदेति सूर्य्यः भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम" इति परस्य ब्रह्मणः पुरुषोत्तमस्यैवंविधैश्वर्यावगतेः, इतश्चाङ्गुष्ठप्रमितः पुरुषोत्तमः—

## सू० ज्योतिर्दर्शनात् ॥ ४२ ॥

तयोर्द्वयोरेवाङ्गुष्ठप्रमितविषययोर्वाक्ययोर्मध्ये परब्रह्मासाधारणं सर्वतेजसां छादकं सर्वतेजसां कारणभूतमनुग्राहकं चाङ्गुष्ठप्रमितस्य ज्योतिर्दृश्यते "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः तमेव भान्तमनुभाति सर्वन्तस्य भासा सर्वमिदं विभाती"ति, अयमेव श्लोक आथर्वणे परब्रह्माधिकृत्य श्रूयते, परज्योतिष्ट्वञ्च सर्वत्र परस्य ब्रह्मणः श्रूयते यथा "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमि"ति "अथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्यादिषु, अतः अङ्गुष्ठप्रमितः परं ब्रह्म ॥ प्रमिताधिकरणं समाप्तम् ॥

टी० "अयञ्चे"ति, स ज्योतिर्दर्शनात् एतत्प्रकरणहेतुत्वमेव युक्तमिति दर्शयति 'वाक्ययोर्मध्य' इति, न तत्र सूर्य्य इत्यादिमन्त्रे पूर्वार्द्धस्यार्थमाह "सर्वतेजस छादकमि"ति, उत्तरार्द्धस्य पूर्वपादार्थमाह "सर्वतेजसां कारणभूत"मिति, अनुभानं—पश्चाद्भानत्वेन कार्यकारणभावस्सिद्धः

पौर्वापर्यनियमे हि कार्यकारणभावः इति भावः । चतुर्थपादार्थमाह "अनुग्राहकमि"ति, यस्यादित्यो भामुपयुज्य भातीत्यादिश्रुतिश्चानुग्राहकत्वे प्रमाणं ज्योतिर्दृश्यत इति ज्योतिर्दीप्तिः ज्योतिष्मद् भ्राजमानं महस्वदिति प्रयोगात् । ननु कथङ्कारणत्वानुग्राहकत्वे सम्भवतः, तद्धि प्राकृततेजोविजातीयं सजातीयतेजो हि तेजसाङ्कारणमनुग्राहकं च दृष्टं, यथा दीपो दीपान्तरस्य, दीपादिप्रभा च चाक्षुषप्रभाया इति, उच्यते निमित्ततया कारणत्वोपपत्तिः उपादानस्यैव हि साजात्यापेक्षा आहङ्कारिकस्य विजातीयस्याऽपि चक्षुषस्तेजोद्रव्येणाप्यायनं च दृष्टं निमित्तकारणत्वन्तेजःकरणभूतवस्त्वनुग्राहकतया भवति, यथा कालस्य निमित्तत्वं कारणभूतवस्त्वनुग्राहकतया, यथा च सलिलदहनादातपादीनाङ्कुटोत्पत्तौ निमित्तत्वम्मृद्द्रव्यसंयोगेन तत्र किञ्चित्करतया भवति, एवमप्राकृततेजोऽपि प्राकृततेजस उत्पत्तौ तदुपादानद्रव्यानुग्राहकतया निमित्तम्भवतीत्यभ्युपगन्तव्यं प्रमाणबलादुत्पन्नस्याऽपि तेजसः स्वकार्यकारणसामर्थ्यस्य तत्सम्बन्धापेक्षत्वात्तदग्राहकं यथा चाक्षुषरश्मेश्चन्द्रातपादिः, यथा शुष्ककण्ठस्य वाग्व्यवहारे पानीयास्वादनं, यथा मनसो धारणग्रहणस्मरणादिपाटवे सम्यगाहारः, उक्त लक्षणकारणत्वानुग्राहकत्वा भिप्रायेण भगवता पराशरेण मूर्त्तब्रह्मशब्दवाच्यदिव्यविग्रहविशिष्टत्वमुक्त्वा "ततो जगज्जगत्तस्मिन् स जगच्चाखिलम्मुन इत्युच्यते, स जगदिति सामानाधिकरण्यन्धारकत्वनिबन्धनम् अस्य वाक्यस्य परोक्तार्थोऽनुपपन्नः, तथा हि सूर्यादिभिरप्रकाश्यत्वं न पूर्वार्धस्यार्थः भाति–शब्दस्य ज्ञानवाचित्वाभावात्स हि दीप्त्यर्थः भा दीप्ताविति हि धातुः । किञ्च यदि भासयितृत्वं' निषिध्यते तदा ब्रह्मविषयज्ञानहेतुतानिषेध इति च वक्तुं शक्यते इह च भानमेव निषिध्यते न भासयितृत्वं, यदि णिजर्थोऽन्तर्भावनमिष्टन्तदा तत्रेति सप्तमी न घटते कर्मत्वस्यैव प्राप्तत्वादतोऽऽर्थान्तरानुपपत्तेः । "दिवि सूर्य्यसहस्रस्य भवेद्युगपदुत्थिता यदि भास्सदृशी सा स्यात् भासस्तस्य महात्मनः" इति स्मृत्यानुगुण्याच्च तदीयदीप्तिसाक्षात्कारसम्भवे तेजोऽन्तराणामभिभूतत्वमेवात्र प्रतिपाद्यं, तृतीयपादे चाधिष्ठानस्फुरणाधीनमध्यस्यस्फुरणमुच्यत इति चायुक्तं पुँल्लिङ्गान्तस्य तमिति तच्छ-

ब्दस्य चिदचिद्भावर्तकानन्तगुणविशिष्टपरमपुरुषविषयत्वात्तस्मिन्भासमाने ऽध्यासानुपपत्तेरध्यस्तवस्तुस्फुरणायोगात्सर्वज्ञत्वादिगुणको निर्दोषः परमपुरुषो हि मुण्डके प्रकृतः कठवल्ल्याञ्चाकर्मवश्योऽनन्तमहिमा सर्वनियन्ता सर्वाधारो विष्णु-शब्दवाच्यस्सर्वस्मात्परस्स एव पुरुषः प्रकृतः श्वेताश्वतरे च सहस्रशीर्षत्वसहस्राक्षत्वादिमान्स्वाभाविकपरज्ञानशक्त्यादिगुणकः सत्त्वप्रवर्त्तको महापुरुषः प्रकृतः सर्वज्ञत्वादयश्च गुणाः समस्तचिदचिद्भावर्त्तकाः, तैर्विशिष्ट एव तच्छब्देन परामृश्यते न वस्तुमात्रं तच्छब्दस्य प्रकृतपरामर्शित्वस्वारस्यभङ्गात् पुँल्लिङ्गनिर्देशस्य प्रकृतपुरुषविशेषत्वाज्ञापकत्वाच्च अतस्तमेव भान्तमिति तद्दीप्तियोगस्य स्वाभाविकत्वं नित्यत्वमप्रतिहतत्वमितरतेजसान्तद्धेतुकत्वं चोक्तं तमेव भान्तं न भान्तमेवेति ह्यन्वयः तमेवेत्यन्वये सति व्यवच्छेद्यतेजोऽन्तरासम्भवात्तथाऽन्वयेऽपि न विरोधः । यद्यधिष्ठानस्फुरणाधीनमध्यस्तस्फुरणमित्युच्येत तदा तस्य भासा सर्वमिदं विभातीति पुनरुक्तिश्च स्यात्, तस्य वृत्तिरूपज्ञानेन सर्वम्भातीत्यर्थ इति चेत् न भाश्शब्दस्य वृत्तिज्ञानवाचित्वाभावात्, अतो भगवत्तेजसस्सर्वतेजोऽनुग्राहकत्वमेव चतुर्थपादार्थः अतः प्रकरणस्यरुक्मवर्णश्रुतपुरुष-शब्दप्रत्यभिज्ञापितादित्यवर्णश्रुतिप्रसिद्धदिव्यविग्रहद्वारकनिरवधिकदीप्तिविशिष्टोऽनेन मन्त्रेण प्रतिपाद्यते परमात्मपरतया निर्णीतप्रकरणस्थतया प्रत्यभिज्ञायमानत्वाच्च अस्य मन्त्रस्य परमात्मसाधकत्वमित्याह "अयमेव श्लोक" इति, एवं शब्दतः प्रत्यभिज्ञानं हेतुतयोक्तम्, अर्थतः श्रुत्यन्तरप्रत्यभिज्ञानञ्चास्य मन्त्रस्य परमात्मसाधकत्वोपपादकमित्यभिप्रायेणाह "परं ज्योतिष्ट्वञ्चे"ति, आदि-शब्देन तच्छुभ्रं ज्योतिषां ज्योतिः नारायणपरो ज्योतिरित्याद्यभिप्रेतम्, एवं स्वपक्षसाधकतया श्रुत्यन्तरस्यवाक्यत्रयोपादानेनार्थात् परपक्षव्युदासश्च सिद्धः परैः खलु इदं सूत्रम् "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थायेत्यादिवाक्य विषयमधिकरणान्तरं व्याख्यातन्तत्र ज्योतिश्शब्दस्यादित्यपरत्वम्पूर्वपक्षीकृत्य परब्रह्मपरत्वं सिद्धान्तितन्तदयुक्तम्पूर्वपक्षानुत्थानात् ज्योतिश्शब्दाश्रुतिर्हि प्रकरणात् बलीयसी अत उत्थानमिति चेच्च किं ज्योतिःश्रुति-

रादित्यासाधारण्यात्तत्साधिका? उत साधारण्येऽपि प्रवृत्तिनिमित्तभूतप्रकाशकत्वपौष्कल्याद्वा, न प्रथमः "आपो ज्योतिश्च पञ्चमम्" "अग्निर्ज्योतिरहः शुक्लः" "ज्योतींषि शुक्राणि च यानि लोके" "ज्योतींषि विष्णुर्भुवनानि विष्णु'रिति बह्वर्थसाधारणतया प्रयुज्यमानत्वात्. न द्वितीयः नारायणपरो ज्योतिः तच्छुभ्रं ज्योतिषां ज्योतिस्तन्देवा ज्योतिषां ज्योतिरिति नारायण एव प्रवृत्तिनिमित्तपौष्कल्यदर्शनाभित्यभिप्रायेण तन्देवा ज्योतिषामितिवाक्यम् उपात्तं ज्योतिषां ज्योतिरित्युक्त्वात् ज्योतिष्ट्वं तत्प्रकर्षश्च ह्यवगम्यते, अतो ज्योतिश्शब्दस्य साधारण्यं भगवत्येव प्रवृत्तिनिमित्तपौष्कल्यञ्च तेन सिद्धम्, आदित्यासाधारण्याभ्युपगमेऽपि कृतकरत्वज्ञापनाय, अथ यदतः पर इति वाक्यमुदाहृतम् "अथ यदतः परो दिवो ज्योतिर्दीप्यत" इति, एतद्वाक्यविषयेण 'ज्योतिश्चरणाभिधानादि'त्यधिकरणेन ज्योतिश्शब्दश्रुतेः परिहृतत्वात्, तत्र हि पादोऽस्य विश्वा भूतानीति प्रकरणस्थितमपि तदनादृत्य ज्योतिश्शब्दस्य तमःप्रतिद्वन्द्विनि प्रसिद्धतयाऽऽदित्यविषयत्वं परैरेवोक्तम्परिहृतञ्चातः कृतकरत्वं परशब्दविशेषितज्योतिश्शब्दोऽपि नादित्ये रूढः परत्वस्य निरतिशयस्य तस्मिन्नसम्भवादेव, गुणयोगादपि नादित्यप्रतीतिः, उत्थानश्रुतिः त्वा—श्रुतिश्च पूर्वपक्षहेतुरिति चेन्न परब्रह्मविषयत्व एव तयोरुपपत्तेर्वक्ष्यमाणत्वात्, माभूत्तयोः परब्रह्मविषयत्वसम्भवः तथाऽपि नारम्भणीयता "उत्तराच्चेदाविर्भूतस्वरूपस्त्वि"ति सूत्रेण अस्य वाक्यस्य परब्रह्मप्राप्तिप्रतिपादकत्वस्य समर्थितत्वात्, यत्तत्परं ज्योतिरुपसम्पत्तव्यं श्रुतं तत्परं ब्रह्म तच्चापहतपाप्मत्वादिधर्मकन्तदेव च जीवस्य पारमार्थिकं रूपमिति हि तैरुक्तं श्रुतिकृतं विवेकज्ञानं शरीरात्समुत्थानं विवेकज्ञानफलं स्वरूपेणाभिनिष्पत्तिरिति समुत्थानादिति श्रुतिनिर्वाहश्च तैरेव कृतः, अतः कृतकरत्वम्, इह परब्रह्मोपसंपत्त्याऽऽविर्भूतस्वरूपविषयत्वसमर्थनमुपजीव्य दहराकाशस्य परमात्मत्वन्तत्र समर्थितमिति चेन्नर्हि उत्तराच्चेति सूत्रानन्तरं ज्योतिर्दर्शनादिति सूत्रं निवेशयितव्यं हेतुप्रयोगानन्तरमेव हेत्वसिद्धेः परिहरणीयत्वात् अपहतपाप्मत्वादिगुणकस्यात्मनोवक्तव्यत्वेन अनुवृत्तिदर्शनेन हि तदसि-

द्धिरिह परिह्रियते, दृहरस्य तत्रैवोक्तेः अपहतपाप्मत्वादिगुणकमात्मानं प्रस्तुत्य "एतं त्वेव ते भूयोऽनुव्याख्यास्यामी"ति तमाकृष्य तस्य स्वप्नसुषुप्त्याद्युपन्यासक्रमेण परमार्थस्वरूपाविर्भावोपदेशपरमिदं वाक्यमिति तत्रैव तैरेव प्रतिपादनात्तदप्रतिपादने चास्य वाक्यस्याविर्भूतस्वस्वरूपविषयत्वासिद्धेः, अतः कृतकरत्वमन्यथा तत्रैव एतत्सूत्रनिवेशनं वा प्रसजेत् अपरे त्वाहुः शरीरादुत्थानस्य स्वेन रूपेणाभिनिष्पत्तेश्च मध्ये श्रूयमाणा परज्योतिःप्राप्तिर्नामादित्यप्राप्तिः अर्चिरादिमार्गप्रत्यभिज्ञानात् तत्र ह्यादित्यादिप्राप्तिर्मध्ये श्रूयते आदित्यस्य परत्वञ्च अर्चिराद्यपेक्षयेति पूर्वपक्षोत्थानमिति तदप्यत एव निरस्तम्, उत्तराच्चेति सूत्र एवास्य वाक्यस्य परब्रह्मोपसम्पत्त्याऽऽविर्भूतस्वरूपात्मविषयत्वस्य समर्थितत्वादिति । प्रमिताधिकरणं समाप्तम् ॥

सू० आकाशोऽर्थान्तरत्वादिव्यपदेशात्, पूर्वं दहराकाशस्य परब्रह्मत्वे

अर्थान्तरत्वादिव्यपदेशाधिकरणम् ।

## सू० आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४३ ॥

**भा० छान्दोग्ये श्रूयते "आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मे"ति, तत्र संशयः किमयमाकाश-शब्दनिर्दिष्टो मुक्तात्मा? उत परमात्मे?ति, किं युक्तं? मुक्तात्मेति, कुतः?**

टी० साध्यमाने "अल्पश्रुतेरिति चेत्तदुक्तमि"ति सूत्रेणाल्पश्रुतिः परिहृता, अल्पश्रुतिप्रसङ्गेन अङ्गुष्ठप्रमितस्य परत्वं साधितं तत्प्रसङ्गेन अधिकरणत्रयमुक्तम् । अथ पूर्वप्रकृतदहरविद्याया बुद्धिस्थत्वेन तदनन्तरभूतस्य आकाशो ह वै नामेत्यादिप्रकरणस्य जीवपरत्वमाशङ्क्य परिह्रियत इति सङ्गतिः, मुक्तस्य प्रकृतत्वान्मुक्तात्मपरमात्मविषयसंशयमाह "किमयमि"ति, परैस्तु भूताकाशः पूर्वपक्षितः, तथा च सत्यनारम्भणीयतैव स्यादाकाशस्तल्लिङ्गादित्यनेनैव चरितार्थत्वात्, तत्र हि अस्य लोकस्य का गतिरित्याकाश इति होवाचेत्याद्याकाशश्रुत्या भूताकाशपरत्वमाशङ्क्य सर्वभूतकारणत्वज्यायस्त्वपरायणत्वादीनां भूताकाशेऽन्वयानर्हत्वात् बहुश

आकाशशब्दाभ्यासे सत्यपि तद्बाधेन परमात्मपरत्वं निर्णीतम्, इहापि नामरूपयोर्निर्वोढृत्वब्रह्म-शब्दामृतत्वादिभिराकाशस्य ब्रह्मत्वं निश्चीयते इति न वैषम्यं दहराकाशस्य तदन्तर्वर्त्यन्वेष्टव्यान्तरप्रतीतेरन्वेष्टव्यस्यैव तत्रत्यं परमात्मलिङ्गं न तु दहराकाशस्येति शङ्काविशेषसम्भवाद्दहराधिकरणोत्थानं युक्तम्, इह तु न तथा शङ्का दृश्यते। नन्ववकाशप्रदानद्वारा नामरूपनिर्वहणहेतुत्वमाकाशस्य युज्यते, अतः स्ववाक्ये परमात्मलिङ्गाभावो वैषम्यमिति, उच्यते किमत्र स्ववाक्ये परमात्मलिङ्गाभावः स्वरसार्थस्वीकारेण वर्ण्यते? उत क्लिष्टार्थकल्पनया? न प्रथमः, स्वप्रमध्यन्येन निर्बाह्यनामरूपस्याकाशस्य सर्वनामरूपनिर्वोढृत्वानुपपत्तेः तस्य च परमात्मलिङ्गभूतस्य स्ववाक्यस्थत्वेन सर्वाणि ह वा इत्यादिवाक्यादविशेषात्, नापि द्वितीयः, अवकाशप्रदानद्वारा सर्वभूतोत्पत्तिकारणत्वस्याप्याकाशे सम्भावितत्तया स्ववाक्ये परमात्मासाधारणधर्माभावस्य तत्र चात्राविशेषात्।

सू० "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामी"ति मुक्तस्य तन्तरप्रकृतत्वात् "ते यदन्तरे"ति च नामरूपविमुक्तस्य तस्याभिधानात्, नामरूपयोर्निर्वहितेति च स एव पूर्वावस्थयोपलक्षितयिषित:, स एव हि देवादिरूपाणि नामानि च पूर्वमबिभ्रत्

टी० अपरैस्तु ब्रह्म-शब्दस्य मुक्तात्मपरत्वं वदद्भिरेवाकाश-शब्दस्य भूताकाशपरत्वमपूर्वपतितन्त्राप्याकाशविषयनिरूपणस्य कृतकरत्वन्तुल्यम्, अतः परपक्षे पूर्वपक्षानुदय एव, अतः परमात्मलिङ्गानां भूताकाशेऽन्वयानर्हतयाऽऽकाश-शब्दस्य यौगिकार्थे प्राप्ते सत्यनन्तरपूर्ववाक्ये मुक्तात्मनः प्रकृतत्वान्नामरूपनिर्वोढृत्वादिलिङ्गाच्च मुक्तात्मपरमात्मविषयत्वेन संशयोत्थानं युक्तमित्यभिप्रायेण मुक्तात्मपरमात्मविषयत्वेन संशयन्दर्शयति "तत्रे"ति किमाकाश-शब्दनिर्दिष्टो मुक्तः? उत पर-

मात्मे? ति संशयः, तदर्थं धृत्वा शरीरमिति मुक्तस्यानन्तरप्रकृतत्वमाकाश-शब्दस्य मुक्तपरतामवगमय ति ने? ति किं मुक्तस्य नामरूपनिर्वोढृत्वं सम्भवति ने? ति किमत्र नामरूपनिर्वोढृत्वं नामरूपभाक्तया? उत नामरूपव्याकर्तृतये? ति किं ते यदन्तरेति निर्देशः कर्तृतया निर्वोढृत्वमुपपादयति ने? ति यदा नोपपादयति तदा नामरूपभाक्त्वमेव तन्निर्वोढृत्वमिति तस्य बद्धदशायां जीवेऽपि बन्धदशायां सम्भवेन मुक्तात्मनः प्रकृतत्वमाकाश-शब्दस्य मुक्तपरत्वावगमकमित्याकाशो मुक्तात्मेति पूर्वः पक्षः, यदा ते यदन्तरेति निर्देशः कर्तृतया नामरूपनिर्वोढृत्वमुपपादयति तदा नामरूपनिर्वोढृत्वं नाम तत्कर्तृत्वरूपमिति तस्य मुक्तात्मन्यसम्भवान्मुक्तात्मनः पूर्वं प्रकृतेऽप्यस्मिन्वाक्ये मुक्तात्मनोऽवगत्यनुपपत्तेराकाश-शब्दनिर्दिष्टः परमात्मेति राद्धान्तः, ते यदन्तरेति उभयोर्मध्यस्थितत्वात्तदस्पृष्टत्वं फलितम्मध्यस्थस्यान्यतरपक्षपाताभावात्तेन पूर्वात्तमुक्तप्रत्यभिज्ञानादित्यर्थः, मुक्तस्य नामरूपनिर्वोढृत्वङ्कथ? मित्यत्राह "नामरूपे" ति नामरूपयोर्निर्वहितेति श्रुत्यनुवादः न त्वर्थानुवादः, उपलक्षणतयाऽभिमतनिर्वोढृत्वम्पूर्वावस्थायामपि नास्तीत्यत्राह "स एव ही" ति, नामरूपनिर्वोढृत्वम् न नामरूपकर्तृत्वम् अपि तु नामरूपभाक्त्वं, वहनं हि धात्वर्थः उपसर्गाणां नानार्थत्वसम्भवान्नितरां वोढृत्वं निर्वोढृ-शब्दार्थः स्यादिति पूर्वपक्षिणोऽभिप्रायः। तर्हि कथममृतत्वादिक? मित्यत्राह—

सू० तस्यैव नामरूपविनिर्मुक्ता साम्प्रतिक्यवस्था तद्ब्रह्म तदमृतमित्युच्यते आकाश-शब्दस्य तस्मिन्नप्यसङ्कुचितप्रकाशयोगादुपपद्यते। ननु दहरवाक्यशेषत्वादस्य स एव दहराकाशोऽयमिति प्रतीयते तस्य च परमात्मत्वं निर्णीतं, नैवम्प्रजापतिवाक्यव्यवधानात्, प्रजापतिवाक्ये च प्रत्यगात्मनो मुक्त्यवस्थान्तं रूपमभिहितम्, अनन्तरञ्च विधूय पापमिति स एव मुक्तावस्थः प्रस्तुतः, अतोऽचाकाशो मुक्ता-

त्मेति प्राप्त उच्यते "आकाशोऽर्थान्तरत्वादिव्यपदेशात्, आकाशः परब्रह्म कुतः? अर्थान्तरत्वादिव्यपदेशात् अर्थान्तरत्वव्यपदेशस्तावत् "आकाशो ह वै नामरूपयोर्निर्वहिते"ति नामरूपयोर्निर्वोढृत्वं बद्धमुक्तोभयावस्थात्प्रत्यगात्मनोऽर्थान्तरत्वमाकाशस्योपपादयति बद्धावस्थस्त्वयं कर्म्मवश्यो नामरूपे भजमानो न नामरूपे निर्वोढुं शक्नुयात्, मुक्तावस्थस्य जगद्व्यापारासम्भवान्न नितरां नामरूपनिर्वोढृत्वम्, ईश्वरस्य तु निखिलजगन्निर्माणधुरन्धरस्य नामरूपयोर्निर्वोढृत्वं श्रुत्यैव प्रतिपन्नम् "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" "यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयन्तपः तस्मादेतद् ब्रह्म नामरूपपन्नं च जायते" "सर्वाणि रूपाणि विचित्य धीरोनामानि कृत्वाऽभिवदन् यदास्ते" इत्यादिषु अतो निर्वाह्यनामरूपात् प्रत्यगात्मनो नामरूपयोर्निर्वोढाऽयमाकाशोऽर्थान्तरभूतः परमेव ब्रह्म,

टी० "तस्यैवे"ति, साम्प्रतिकीति नामरूपविमोक्षानन्तरकालभाविन्यवस्था तस्य कालस्य प्रकृतत्वात् साम्प्रतिकीत्युच्यते, राद्धान्ते व्यपदेशस्तावदिति प्रदर्श्यत इति शेषः । यद्वा नामरूपयोर्निर्वहितेति व्यपदेश इत्यन्वयः । अर्थान्तरत्व–शब्दस्तदुपपादकधर्मं लक्षयति अर्थान्तरत्वमाकाशस्योपपादयतीति ह्युक्तं भेदकधर्मव्यपदेशादित्यर्थः । नामरूपयोरित्यादि नामरूपनिर्वोढृत्वञ्च स्पष्टं भेदकधर्मः, अवयवशक्त्या निर्वोढृ–शब्दस्य वहनमात्रपरत्वादपि "रूढिर्योगमपहरती"ति न्यायात् कर्तृपरत्वं युक्तमिति भावः । नन्वेवं सति ते यदन्तरेति कथं मुक्तस्यानन्तरमभिधानमित्यत्राह–

मू० तदेवोपपादयति "ते यदन्तरे"ति, यस्मादेवायमाकाशो

नामरूपे अन्तरा—ताभ्याम् अस्पृष्टोऽर्थान्तरभूतः तस्मात्तयोर्निर्वोढाऽपहतपाप्मत्वात्सत्यसङ्कल्पत्वाच्च निर्वहितेत्यर्थः आदि—शब्देन ब्रह्मत्वाऽऽत्मत्वामृतत्वानि गृह्यन्ते निरुपाधिकबृहत्त्वादयो हि परमात्मन एव सम्भवन्ति, तेनाप्याकाशः परस्यैव ब्रह्म, यत्पुनरुक्तम्धूत्वा शरीरमिति मुक्तोऽनन्तरः प्रकृत इति तन्न ब्रह्मलोकमभिसम्भवानीति परस्यैव ब्रह्मणोऽनन्तरप्रकृतत्वात्, यद्यपि अभिसम्भवितुर्मुक्तस्याभिसम्भाव्यतया परब्रह्म निर्दिष्टं तथाऽप्यभिसम्भवितुर्मुक्तस्य नामरूपनिर्वोढृत्वाद्यसम्भवादभिसम्भाव्यं परमेव ब्रह्मात्र प्रत्येतव्यं, किञ्च आकाश—शब्देन प्रकृतस्य दहराकाशस्य अत्र प्रत्यभिज्ञानात् प्रजापतिवाक्यस्याप्युपासकस्वरूपकथनार्थत्वादुपास्य एव दहराकाशः प्राप्यतयेहासंह्रियत इति युक्तम्, आकाश—शब्दस्य प्रत्यगात्मनि न क्वचिद् दृष्टचरः, अतोऽप्याकाशः परं ब्रह्म

टी० ''तदेवोपपादयति ते यदन्तरेती''ति, कर्मकृतनामरूपभाक्त्वाभावात्तयोः स्वेच्छया निर्वोढा परमात्मा, न हि कर्मपराधीनचेष्टितस्य बद्धस्य जगद्व्यापारानुगुणसङ्कल्पादिरहितस्य मुक्तस्य च नामरूपनिर्वोढृत्वं सम्भवतीत्यर्थः, निर्वहितेति श्रुतिस्थपदानुकारः । आदि—शब्दार्थमाह ''आदि—शब्देने''ति, निरुपाधिक—शब्दोऽनवच्छिन्नत्वपरः, उपाधिर्ह्यवच्छेदकः जीवस्य ज्ञानतो बृहत्त्वं तच्च परमात्मप्रसादायत्तं बृहत्त्वादय इति धर्मा इति शेषः, धूत्वेत्यादि ब्रह्मैव लोको ब्रह्मलोकः प्रथमानिर्दिष्टस्याभिसम्भवितुः प्राधान्येन प्राकरणिकत्वस्वारस्येऽपि लिङ्गबलात्प्राकरणिकत्वस्वारस्यभङ्गो युक्त इत्यभिप्रायेणाह 'यद्यपी' ति, अवान्तरप्रकरणेन पूर्ववाक्यस्य जीवस्वरूपपरत्वमभ्युपेत्य परिहृतं, वस्तुतस्तु ब्रह्मलोक-

अप्यनुगृहीतमहाप्रकरणबलात्पूर्ववाक्यमपि न जीवपरं किन्तु तस्य परमप्राप्यभूतपरब्रह्मपरत्वमेवेत्याह "किञ्चाकाश"इति, प्रजापतिवाक्यस्य व्यवधायकत्वशङ्काव्यावृत्त्यर्थमाह "प्रजापतिवाक्यस्ये"ति, हेत्वन्तरमप्याह "आकाश-शब्दश्चे"ति, उत्तरसूत्रमवतारयितुं शङ्कामाह—

भा० अथ स्यात्प्रत्यगात्मनोऽर्थान्तरभूतमात्मान्तरमेव नास्ति ऐक्योपदेशात् द्वैतप्रतिषेधाच्च, शुद्धावस्थ एव हि प्रत्यगात्मा परमात्मा परं ब्रह्म परमेश्वर इति च व्यपदिश्यते, अतः प्रकृतान्मुक्तात्मनोऽभिसम्भवितुर्नार्थान्तरमभिसम्भाव्यो ब्रह्मलोकः, अतो नामरूपयोर्निर्वहिताऽऽकाशोऽपि स एव भवितुमर्हतीति, अत उत्तरं पठति—

सू० सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४३ ॥

व्यपदेशादित्यनुवर्त्तत इति सुषुप्त्युत्क्रान्त्योः प्रत्यगात्मनोऽर्थान्तरत्वेन परमात्मनो व्यपदेशात्प्रत्यगात्म—

टी० "अथ स्यादि"ति, ननु कथमात्मान्तरमेव नास्तीत्युच्यते? * त्रिपादी ह्यन्ययोगव्यवच्छेदपरा, प्रथमपाद एव चिदचिद्विलक्षणवस्तुसद्भावस्समर्थितः, उच्यते सिद्धिस्तावदुभयविधा साधकप्रमाणसंभवाधीना बाधकप्रमाणव्युदासाधीना च बाधकप्रमाणव्युदासेन साधकसत्तायत्ता सिद्धिः स्थेयसी भवति, तदसम्भवे साधकमात्राधीना सिद्धिरस्थिरा, अस्थिरं चासत्कल्पम्, अत्र प्रथमेन पादेन साधकसद्भावायत्तसिद्धौ दर्शितायामप्यैक्योपदेशभेदनिषेधरूपबाधकव्युदसनस्य सूत्रकारैरितः पूर्वमकृतत्वात्साधकाधीनसिद्धेरस्थिरप्रायत्वान्नास्तीत्युक्तिः प्रत्यगात्मनोऽर्थान्तरभूतमात्मान्तरं दृढप्रमाणसिद्धं न भवतीत्यर्थः, चतुर्थपादेऽपि दृशव्यपदेश उक्ताभिप्रायो वेदितव्यः । यद्वा त्रिपाद्या अन्ययोगव्यवच्छेदपरत्वं प्राचुर्यनिबन्धनमिति नानुपपत्तिः, ऐक्योपदेशाद् द्वैतप्रतिषेधाच्चेति मुक्तप्राप्यतयोक्तस्य ब्रह्मलोक-शब्दनिर्वाच्यतया बृहदारण्यके "प्रत्यभिज्ञायमानस्य एकधैवानुद्रष्टव्य

स वा एष महानज आत्मा योऽयं विज्ञानमयः नेह नानास्ति किञ्चनेति जीवेनैक्यप्रतिपादनाद् भेदनिषेधाच्चेत्यर्थः, तत्र "ह्येष ब्रह्मलोकः सम्राडिति होवाचे"ति प्रकरणावसाने तस्य परमात्मनोब्रह्मलोकशब्दनिर्देशोऽवगम्यते च-शब्दः समुच्चये, ऐक्योपदेशभेदनिषेधयोः प्रत्येकं भेदविरोधित्वात् इतरेतरयोगे वा च-शब्दः, ऐक्यस्यामुख्यत्वशङ्कानिवारकत्वात् भेदनिषेधस्य नामरूपयोर्निर्वहितेति पूर्ववत् यथाश्रुत्यनुवादः, अत एव हि नामरूपयोनिर्वोढृत्वमिति स्वग्रन्थे निर्दिष्टमापाततोऽर्थान्तरत्वे प्रतीतेऽपि न तत्सिद्धान्तीकर्त्तव्यमिति शङ्काग्रन्थस्यार्थः सू० सुषुप्त्युत्क्रान्त्योर्भेदेन, सूत्रस्याकाङ्क्षां पूरयति "व्यपदेशादिति वर्त्तत"इति, यथा "अथ शब्दानुशासन"मित्यत्र केषां शब्दानामित्युक्ते समस्तस्याप्यनुशासनपदस्य विभागेनानुषङ्गः तथेहापीति भावः । सूत्रे सुषुप्त्युत्क्रान्त्योरिति सप्तमी । कस्य कस्माद्भेद इत्यत्राह "प्रत्यगात्मन"इति, अर्थान्तरत्वव्यपदेशरूपहेत्वसिद्धिशङ्कापरिहारपरत्वादस्य सूत्रस्यार्थसिद्धं साध्यनिर्देशं दर्शयति—

भा० नोऽर्थान्तरभूतः परमात्मा अस्त्येव, तथा हि वाजसनेयके "कतम आत्मा योऽयं विज्ञानमयः प्राणेष्वि"ति प्रकृतस्य प्रत्यगात्मनः सुषुप्त्यवस्थायामकिंचिज्ज्ञस्य सर्वज्ञेन परमात्मना परिष्वङ्ग आम्नायते "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि"ति तथोत्क्रान्तावपि "प्राज्ञेनात्मनाऽन्वारूढ उत्सृजन् याती"ति, न च स्वपत उत्क्रामतो वाऽस्य किंचिज्ज्ञस्य तदानीमेव स्वेनैव सर्वज्ञेन सता परिष्वङ्गाऽन्वारोहौ सम्भवतः, न च तेचज्ञान्तरेण तस्याऽपि सर्वज्ञत्वासम्भवात् । इतश्च प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मेत्याह—

## सू० पत्यादिशब्देभ्यः ॥ ४४ ॥

अयं परिष्वञ्जकः परमात्मोत्तरच पत्यादिशब्दैर्व्यपदिश्यते "सर्वस्याधिपतिः सर्वस्य वशी सर्वस्येशानस्स न साधुना कर्म्मणा भूयान्नो एवासाधुकर्म्मणा कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय

टी० "अर्थान्तरभूत" इति, अवान्तरार्थप्रतिज्ञात्वात्सूत्रे कण्ठोक्त्यभाव, प्रधानार्थप्रतिज्ञानस्य हि प्रायेण कण्ठोक्तिरुपलभ्यते देहस्य प्राज्ञपरिष्वक्तत्वशङ्काव्यावृत्त्यर्थं विज्ञानमयः प्राणेष्विति प्रकृतस्येत्युक्तम्, उत्सर्जत् शरीरमिति शेषः, तेत्रज्ञान्तरेण परिष्वङ्गान्वारोहौ आशङ्क्याह "नचे"ति, मुक्तावस्थेनात्मनाऽन्वारोह इत्यत्राह "इतश्चे"ति. सू० पत्यादिशब्देभ्यः, सूत्रे पत्यादिशब्देभ्य इति निर्दिष्टत्वात्तदनुरोधाय श्रौतपाठक्रमानादरेण "सर्वस्याधिपतिरि"ति, वाक्यं प्रथममुदाहृतं, सूत्रे च तथा निर्देशः किमर्थ इति चेत्? उच्यते कर्मसंबन्धप्रतिषेधमुखेन सर्वेश्वरत्वादिगुणानां निरुपाधिकत्वज्ञापकस्य "स न साधुना कर्मणा भूयानि"त्यादिवाक्यस्य पूर्वं सर्वस्याधिपतिरिति वाक्यं "पश्चादेष भूताधिपतिरि"ति वाक्यं हेयसम्बन्धराहित्यपरवाक्यस्य तत्पूर्वापरवाक्यानां च तन्त्रेण क्रोडीकरणार्थमभ्यासरूपतात्पर्यलिङ्गज्ञापनार्थं च पत्यादिशब्देभ्य इति निर्देशः, अधिपत्यादिशब्देभ्य इत्यनुक्तिः, पतिं विश्वस्यात्मेश्वरमित्यादिभिरस्य प्रकरणस्य ऐकार्थ्येन विशेष्यस्य परमात्मनो नारायणत्वद्योतनार्था, अत एव ह्ययं परिष्वञ्जकः परमात्मेति भाष्ये निर्देशः, स खलु पतिं विश्वस्येति प्रकरणस्थं "तस्याः शिखाया मध्ये परमात्मा व्यवस्थित" इति परमात्म-शब्दं स्मारयति मुमुक्षूपास्यत्वरूपमहागुणवाचिशब्दत्वात् पत्यादिशब्दैस्सह

भा० "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति एतमेव विदित्वा मुनिर्भवति एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्र-

**जन्ति स वा एष महानज आत्माऽन्नादो वसुदानोऽजरोऽमृतोऽभय आनन्दो ब्रह्मे'ति एते च पतित्वजगद्विधरणसर्वेश्वरत्वादयः प्रत्यगात्मनि मुक्तावस्थेऽपि न कथञ्चित्सम्भवन्ति, अतो मुक्तात्मनोऽर्थान्तरभूतो नामरूपयोर्निर्वहिताऽऽकाशः,**

टी० तमेतमित्यादिवाक्यमुपात्तम् अन्नादः अत्तः, अधिपत्यत्यादिशब्दोक्तानां धर्माणामुक्तव्यावर्तकत्वं दर्शयति 'एते च''ति, मुक्तस्य जगद्व्यापाररहितत्वान्न सम्भवन्तीत्यर्थः । किं जीवमात्रादर्थान्तरत्वे विप्रतिपत्तिः? उत मुक्तादर्थान्तरत्वे? इति विकल्पे प्रथमशिरः पूर्वसूत्रेण प्रत्युक्तम्, अनेन तु द्वितीयं शिर इति विभागः । यद्वा सूत्रद्वयोक्तैर्धर्म्मैर्मुक्तव्यावृत्तिसिद्धिः कथ? मित्यत्राह "एते च''ति, एतच्छब्दः सूत्रद्वयोदाहृतगुणपरः, अतः आदिशब्दे परिष्वङ्गान्वारोहावन्तर्भूतौ सुषुप्त्युत्क्रमणयोः परिष्वङ्गस्यान्वारोहणस्य च जगद्व्यापारान्तर्भूतत्वान्मुक्तस्य तद्रहितत्वाच्च तौ च तस्मिन्न सम्भवतः, एते अकर्मसम्पाद्या इति चाभिप्रायः, "स न साधुना कर्मणा भूयान्''इति श्रुतत्वात्, तेन बद्धात्मन्यसम्भवः मुक्तैश्वर्यस्य जगद्व्यापारवर्जत्वान्मुक्तात्मन्यऽसम्भव इत्यर्थः । एवमनेन सूत्रद्वयेन परमात्मनश्चिदचिद्विलक्षणे प्रमाणदार्ढ्योपपादितत्वादैक्योपदेशभेदनिषेधौ तदनुरोधेन वर्णनीयाविति शङ्काबीजं परिहृतम्भवति, एतावदेवैतदधिकरणकृत्यम्, एवं प्रबलतरभेदश्रुत्यनुरोधेन निर्वाहे कर्त्तव्ये सति ऐक्योपदेशभेदनिषेधयोरमुख्यतयाऽपि निर्वाहे प्राप्ते सूत्रकारैरेव श्रुतितोऽर्थतश्च वक्ष्यमाणं श्रुतिसिद्धं मुख्यं निर्वाहन्तत्र तत्र प्रसङ्गे पूर्वमपि स्वेनोक्तमिह स्मारयति "ऐक्योपदेशस्त्वि''ति, कार्यकारणैक्यनिबन्धनः, न तु जीवेश्वरैक्यनिबन्धन इत्यर्थः तत एव—कार्यकारणैक्यादेव ऐक्योपदेशशेषत्वात्, भेदनिषेधश्रुतिश्च कुतर्कसिद्धकार्यकारणभेदप्रतिषेधपरेत्यर्थः, अत्र भेदनिषेधस्य प्रकारैक्यनिबन्धनत्वमप्यर्थसिद्धं प्रकारप्रकारिभावस्य जगत्कारणत्वनिर्वाहकत्वात्, तत्रारम्भणाधिकरणे कार्यकारणैकत्वसमर्थनं श्रौतं तेनैक्योपदेशस्य मुख्यत्व-

मार्थं सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वम् "अवस्थितेरिति काशकृत्स्न" इत्यत्र वक्ष्यते, तत्राकृतिनयगोचरतया मुख्यत्वसमर्थनञ्चिद्विषयमचिद्विषयञ्च "अंशो नानाव्यपदेशात्" "उभयव्यपदेशादि"त्यधिकरणद्वयेन कृतम् एवं वक्ष्यमाणो मुख्यनिर्वाह इह स्मारितः। पादद्वयोक्तमर्थमभिप्रेत्याह "इत्यनवद्यमि"ति, परैस्तु सुषुप्त्युत्क्रान्त्योरित्यादि सूत्रद्वयं बृहदारण्यके "कतम आत्मा योऽयं विज्ञानमय" इत्यादिप्रकरणविषयमधिकरणान्तरं व्याख्यातं, तत्र चोपक्रमे योऽयं विज्ञानमयः प्राणेष्विति शारीरलिङ्गदर्शनादुपसंहारे च स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेष्विति शारीरापरित्यागान्मध्ये च सुषुप्त्यादिसांसारिकतत्तदवस्थाप्रतिपादनादत्र संसारिस्वरूपं प्रतिपाद्यमिति पूर्वपक्षं कृत्वा सुषुप्त्युत्क्रान्त्योः प्राज्ञाद्भेदव्यपदेशेन पत्यादिशब्दैश्चाऽसंसारिस्वरूपस्य प्रतिपाद्यमिति सिद्धान्त उक्तः। उपक्रमादिषु शारीरलिङ्गकथनमनुवादरूपं तस्य परेण ब्रह्मणैक्योपदेशार्थं कृतं 'योऽयं विज्ञानमयः" "स वा एष महानज आत्मे"ति परमेश्वरेणैकत्वमुपदिश्यते अत ऊर्ध्वं विमोक्षायैव ब्रूहीति पदे पदे प्रश्नादनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इति पदे पदे पुण्येनानन्वागतत्वादिकथनरूपप्रतिवचनाच्चासंसारिस्वरूपप्रतिपादनपरत्वसिद्धिरिति शारीरलिङ्गदर्शनपरिहारश्चोक्तः, एवमधिकरणभेदवर्णनमयुक्तं द्वितीयतृतीयपादान्तर्गताधिकरणान्तरसूत्रवैरूप्यात् निरूपणीयाभावाच्च, न ह्यत्र सूत्रद्वये प्रतिज्ञावाक्यं श्रूयते विवक्षिततत्तत्प्रकरणस्य धर्मिवाचकशब्दाभावात् प्रतिक्षेप्यव्युदासकशब्दाभावाच्च, "ईक्षतेर्नाशब्दम्" "आनन्दमयोऽभ्यासात्" "अन्तस्तद्धर्मोपदेशा"दिति हि सूत्रशैली अतोऽत्र तथाभावाभावादध्याहारः स्यात्, स चानध्याहारेण निर्वाहे सत्य-

सू० ऐक्योपदेशस्तु सर्वस्य चिदचिदात्मकस्य ब्रह्मकार्यत्वेन तदात्मकत्वायत्त इति "सर्वं खल्विदं ब्रह्म तज्जलानित्या-दिभिर्वाक्यैः प्रतिपाद्यत इति पूर्वमेवोक्तं, द्वैतप्रतिषेधश्च तत एवेत्यनवद्यम् ॥

अर्थान्तरत्वादिव्यपदेशाधिकरणं समाप्तम् ॥

## इति श्रीमद्भगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥

नुपपन्नः, इह च पूर्वप्रकृतसाध्यहेतुसमर्थकत्वेऽध्याहारोऽनपेक्षितः, चतुर्थेऽपि पादेऽधिकरणान्तरारम्भेषु धर्मिवाचिपदाश्रवणं न दोषः तस्य प्रधानादेः प्रतिपाद्यत्वव्युदसनपरत्वाद्धर्मिवाचिपदेन नैरपेक्ष्यात्, सू० आनुमानिकमप्येकेषामिति चेन्नेति, तस्य न संख्योपसंग्रहादपि इति च व्युदसनप्रतिज्ञा श्रूयते नेतिपदस्योत्तरत्रानुषङ्गेऽपि न दोषः प्रधानादिपरत्वव्युदासस्य परमात्मपरत्वोपपादनशेषत्वात् परमात्मपरत्वस्य प्राधान्येन प्रतिपिपादयिषिततया सर्वत्र तद्विवक्षायां प्रतिज्ञावाक्यश्रवणात् क्वचिदध्याहारदर्शनेऽपि गत्यन्तरे सम्भवे सति गत्यभाव इव निर्वाहोऽनुपपन्नः, अतः परमात्मपरत्वसमर्थनपराधिकरणवैरूप्यादयुक्तं निरूपणीयाभावाच्चाधिकरणान्तरत्वमयुक्तं, सन्दिग्धे हि न्यायप्रवृत्तिः, यत्रैकस्मिन्वाक्ये प्रकरणे वा परस्परविरुद्धार्थद्वयं प्रधानप्रतिपाद्यतया प्रतीयते तत्र सन्देहे सति न्यायावतारः, इह च तादृशस्संशयविषयो न विद्यते, तथा हि जायस्वप्राद्यवस्थाप्रतिपादकवाक्यानां जीवविषयत्वं न संशयपदं, न च तदपाकर्तुं शक्यम्, अतस्तन्निरूपणपरत्वमधिकरणस्यायुक्तम्, असङ्गो ह्ययमित्यादिवाक्यानां शुद्धस्वरूपपरत्वमपि न सन्देहपदं निरवधिकानन्दनिरङ्कुशैश्वर्यप्रतिपादकानां "स एको ब्रह्मण[1] आनन्दः सर्वस्य वशी सर्वस्येशान" इत्यादिवाक्यानां परमात्मपरत्वेऽपि न संदेहः, अतस्तत्समर्थनमनपेक्षितं समानाधिकरणवाक्यानां ब्रह्मात्मकत्वोपदेशपरत्वेऽपि न संशय इति न तत्समर्थनार्थमधिकरणारम्भोयुक्तः, जीवस्वरूपकथनं ब्रह्मात्मकत्वविधानायानुवाद इत्ययमर्थो निरूपणीय इति चेत् न प्राप्तार्थानां वाक्यानामनुवादकत्वस्याप्राप्तार्थानां वाक्यानां विधायकत्वस्य च स्वत एव स्पष्टत्वात्, न खल्वग्निर्हिमस्य भेषजमिति वाक्यस्य अनुवादकत्वं स्वर्गकामो यजेतेति वाक्यस्य विधित्वं चात्र निरूपणीयम्, अतो जीवस्वरूपकथने प्राप्तविशेषणोक्तेरनुवादत्वं न समर्थनीयम्, अप्राप्त-

१ ब्रह्मलोक आनन्द इति पा० ।

धर्मप्रतिपादनस्य विधित्वं च न साध्यं विहितधर्मप्रतिषेधेन स्वरूपैक्यप्रतिपादनं चानुपपन्नं सूत्राक्षरप्रातिकूल्याच्च नेदं सूत्रद्वयं ब्रह्मात्मकत्वोपदेशसमर्थनपरं, भेदसमर्थनपरत्वं ह्यक्षरस्वारस्यादवगम्यते, न च मृषावाद्यभिमतं ब्रह्मात्मकत्वमस्मिन्प्रकरणे दृश्यते "स वा एष महानज आत्मा योऽयं विज्ञानमयः" "स एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिरितीश्वरतादात्म्यप्रतिपादनपरत्वावगमात्, तन्मतेऽधिष्ठान[1]याथात्म्यं ह्युपदेश्यं, न हीश्वरोऽशेषजगदध्याधिष्ठानमीश्वरस्याऽपि सन्मात्रवस्तुनि कल्पितत्वात्, न हि रज्जुकल्पितसर्पः तत्कल्पितभूदलनाम्बुधाराधिष्ठानम् । किञ्च ईश्वराध्यस्तजीवदर्शनं नेश्वरकर्तृकमीश्वरस्य सर्वज्ञतया स्वरोपिताकारविषयभ्रमानुपपत्तेः, न चान्यकर्तृकम् अधिष्ठानभूतेश्वरस्य संसार्यगोचरत्वाच्च ह्यधिष्ठानानवभासेऽध्यस्तप्रतीतिरुपपद्यते घटस्सन् पटस्सचिति सन्मात्रमेवाधिष्ठानतयाऽनुवृत्तमवभासत इति च तदीयप्रक्रिया । न त्वीश्वरोऽधिष्ठानतया प्रतीयत इति अतस्सर्पभूदलनयोरन्योन्यतादात्म्यापदेशवज्जीवेश्वरतादात्म्योपदेशोऽनुपपन्नः, ईश्वरधर्माश्चाविवक्षिता इति चेत् पदानां लक्षणा । किञ्चाप्राप्तानां धर्माणामनूदित्वासम्भवाद्विहितस्य निषेधायोगादेव सर्वेश्वर एष भूताधिपतिः एष भूतपाल" इति तात्पर्यलिङ्गदर्शनाच्च तेषां धर्माणामविवक्षितत्वं दुर्वचं सिद्धान्त्यभिमततादात्म्यन्तदुपासनञ्चोत्तरत्र निरूपयिष्यते, अतः सूत्राक्षरप्रातिकूल्यात्संशयविषयाभावात् स्वाभिमतार्थशरीरस्यानुपपन्नत्वात्प्रामाणिकतादात्म्यनिरूपणस्यान्यत्र क्रियमाणत्वाच्चाकाश–शब्दनिर्दिष्टस्य परमात्मत्वोपपादकं सूत्रद्वयमिति सिद्धम् । यादवप्रकाशपक्षेऽपि निरूपणीयाभावादनारम्भणीयत्वदोषः स्थितः पूर्वपक्षसिद्धान्तवर्णनप्रकारश्चानुपपन्नः परिष्वङ्गान्वारोहाभ्यां प्राज्ञस्यात्मनश्शारीराद्भेदः स्थित इति विषयशोधकमाद्यं सूत्रं व्याख्याय स प्राज्ञः किं भोक्ता विद्याकर्मातिशयलब्धैश्वर्यो जीवः? उत परः? इति विषये भोक्तुर्विज्ञानमयस्य प्रकरणस्थतया वशित्वेशानत्वादीनां विद्याकर्मलब्धतया जीवत्वमुक्त्वा पत्यादिशब्दानां शाखान्तरे

१ अधिष्ठानतादात्म्यमिति तु युक्तं पाठान्तरम् ।

परमात्मविषयत्वदर्शनादन्यत्र सुषुप्तौ परमात्मनि सम्पत्तिश्रवणाच्च परमात्मत्वं साधितं, तत्र तावदाद्यसूत्रव्याख्यानययुक्तं विषयशोधकत्वमात्रे सूत्रवैयर्थ्यात् पूर्वपक्षपरत्वे शाब्दस्य हेतोर्विरुद्धत्वात् भोक्तुः प्रकृततया कर्माधीनैश्वर्यत्वस्य पूर्वपक्षहेतोरशाब्दत्वाच्च तत्कृताल्पत्वदसनासमर्थभेदानुभापणे प्रयोजनाभावात् सूत्रवैयर्थ्यम् । किञ्च शारीराद्भेदकौ परिष्वङ्गान्वारोहौ प्राज्ञकर्तृकौ श्रूयेते, प्राज्ञत्वं च स्वाभाविकम्प्रतिस्वादयश्च स्वाभाविका एवात्र प्रतिपाद्यन्ते उपाध्यनुक्तेः, तथैव "स न साधुना कर्मणा भूयान्" इत्युपाधिनिषेधाच्च, अतस्तदनाकृत्य पत्यादिशब्दानां शाखान्तरप्रसिद्धपरमात्मसाधकत्वोक्तिरचतुरा । सद्विद्या संवादस्तु यद्यपि प्राज्ञस्य जगत्कारणत्वावगमकः तथाऽपि कारणस्य चिदचिद्विलक्षण्ये तु संवादनिरपेक्षहेतुः प्राज्ञत्वं निरुपाधिकैश्वर्यवत्त्वञ्च यद्यकर्महेतुकं निरङ्कुशैश्वर्यमपि श्रुत्यन्तरसंवादसापेक्षन्तर्हि श्रुत्यन्तरेषु कथमाश्वासः तत्राऽपि संवादान्तरापेक्षणेऽनवस्था स्यात् एतच्छ्रुत्यपेक्षणेऽन्योन्याश्रयः स्यात्, अतोऽधिकरणान्तरत्वकल्पनं तन्निर्वहणं चाऽनुपपन्नम् अतस्सूत्रत्रयम् एकाधिकरणम् ॥ अर्थान्तरत्वादिव्यपदेशाधिकरणं समाप्तम् ॥

इति श्रीहारीतकुलतिलकवाग्विजयसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां प्रथमस्याध्यायस्य तृतीयः पादः ॥ ३ ॥



परगुरवे श्रीइमते रामानुजाय नमः ।

# अथ श्रीभाष्ये

## प्रथमाऽध्याये चतुर्थः पाद आरभ्यते ।

आनुमानिकाधिकरणम् ।

**सू० आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥**

सू० आनुमानिकमप्येकेषामिति चेन्न, शरीररूपकविन्यस्तगृहीतेर्दर्शयति च. प्रथमपादः चिदचिद्विलक्षणकारणत्वायोगव्यवच्छेदपरः, अन्ययोगव्यवच्छेदपरायां त्रिपाद्यामस्पष्टस्पष्टजीवादि[1]प्रतिपादकवाक्यविषयौ द्वितीयतृतीयौ, स्पष्टतरजीवादिप्रतिपादकवाक्यविषयश्चतुर्थ इति पादसङ्गतिर्द्वितीयपादारम्भे कथिता, सूत्रकारैस्तु अन्ययोगव्यवच्छेदस्य त्रिपादीकृत्यत्वश्चतुर्थपादारम्भे कण्ठोक्तम् आनुमानिकमप्येकेषामिति ह्युक्तम्, अतो भाष्यकारश्चतुर्थपादारम्भे त्रिपाद्यर्थस्फुटीकरणमुखेन सङ्गतिं विवक्षन् प्रथमपादार्थानुभाषणपूर्वकं द्वितीयतृतीययोरप्यर्थं वृत्तं दर्शयति–

**भा० उक्तं परमपुरुषार्थलक्षणमोक्षसाधनतया जिज्ञास्यं जगज्जन्मादिकारणं ब्रह्म अचिद्वस्तुनः प्रधानादेश्चेतनाच्च बद्धमुक्तोभयावस्थाद्विलक्षणं निरस्तसमस्तहेयगन्धं सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पं समस्तकल्याणगुणात्मकं सर्वान्तरात्मभूतं निरङ्कुशैश्वर्यमिति, इदानीं कापिलतन्त्रसिद्धाब्रह्मात्मकप्रधानपुरुषादिप्रतिपादनमुखेन प्रधानकारणत्वप्रतिपादनच्छायानुसारीण्यपि कानिचिद्वाक्यानि कासुचिच्छाखासु सन्तीत्याशङ्क्य ब्रह्मैककारणत्वस्थेम्ने तन्निराक्रियते**

---

१ जीवादिलिङ्गकवाक्यविषयाविति पा० ।

टी० "उक्तमि"ति, प्रधानादेरित्यादि-शब्देन प्राणाकाशादिग्रहणं विलक्षणमित्यन्तेन प्रथमपादार्थ उक्तः, वैलक्षण्यञ्चोभयलिङ्गतयेति दर्शयन् द्वितीयतृतीययोरप्यर्थं दर्शयति निरस्तेत्यादिपदैः, समस्त-शब्देन चिद्गतमचिद्गतं च हेयं विवक्षितं, गन्ध-शब्देन मुक्तव्यावृत्तिः, समस्तकल्याणगुणात्मकमिति पदं धर्मिस्वरूपपरं सर्वज्ञमित्यादिपदैर्द्वितीयपादार्थः सूचितः "यस्सर्वज्ञः भारूपः सत्यसङ्कल्प" इत्यादिवाक्यजातं हि तद्विषयः, अन्तर्यामिवैश्वानरद्युभ्वाद्यधिकरणसिद्धमर्थमाह" सर्वान्तरात्मभूतमि"ति "एष सर्वभूतान्तरात्मे"ति, सुबालोपनिषदन्तर्यामिविषयतया श्रूयमाणत्वात् "पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मे"ति, मुण्डकोपनिषद्वाक्यस्य सपक्षत्वेनोपन्यासात् तत्समर्थनाच्च निरङ्कुशैश्वर्यमिति तृतीयपादार्थसूचनम् "एतस्य वा अक्षरस्य प्रशासने गार्गि" "ईशानो भूतभव्यस्य सर्वस्य वशी सर्वस्येशान" इत्यादिवाक्यजातं हि तद्विषयः। वर्त्तिष्यमाणमाह "इदानीमि"ति, प्रधानकारणत्वप्रतिपादनच्छायानुसारीणीति, न केवलं लिङ्गप्रतिपादकानि किन्तु लिङ्गितामेव, प्रधानादीनां जगत्कारणत्वप्रतिपादनशङ्कास्पदानीति, अतो जीवादिविषयतायाः स्पष्टतरत्वमिति भावः। प्रधानपुरुषादिप्रतिपादनमुखेन प्रधानकारणत्वप्रतिपादनच्छायानुसारीणीति प्रधानपुरुषादिस्वरूपप्रतिपादनप्रकारस्तन्त्रार्थप्रत्यभिज्ञापकः, तेन प्रधानकारणत्वप्रतिपादनं फलितमित्यर्थः। ब्रह्मैककारणत्वस्थेम्ने इत्यत्र एक-शब्देन त्रिपाद्या अन्ययोगव्यवच्छेदपरत्वं सूचितं, स्थेम्न इत्यनेन चतुर्थपादार्थः सूचितः पूर्वपादद्वयप्रतिपन्नस्यान्ययोगव्यवच्छेदस्य स्थैर्यमस्मिन् पादे प्रधानादिकारणत्वप्रतिपादनव्युदसने हि कृते भवति, अत्रानन्तरपूर्वाधिकरणे मुक्तादपि वैलक्षण्यमुक्तं तदयुक्तं प्रत्यगात्मनः परस्य निषेधादिति शङ्कयाऽवान्तरसङ्गतिरिति चार्थसिद्धं बद्धमुक्तोभयात्वस्याद्विलक्षणमिति ह्युक्तं विषयमाह—

सू० कठवल्लीष्वाम्नायते "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परम्मनः मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः महतःपरमव्यक्तमव्यक्तात्पुरुषः परः पुरुषान्न परं किञ्चित्सा काष्ठा

सा परा गतिरि"ति, तत्र सन्देहः किं कापिलतन्त्रसिद्धमब्रह्मात्मकं प्रधानमिहाव्यक्त-शब्देनोच्यते? उत ने? ति किं युक्तं प्रधानमिति, कुतः "महतः परमव्यक्तमव्यक्तात्पुरुषः परः" इति तन्त्रसिद्धतत्त्वप्रक्रिया प्रत्यभिज्ञानेन तस्यैव प्रतीतेः, "पुरुषान्न परं किञ्चित्साकाष्ठा सा परा गति"रिति पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधाच्च अतोऽव्यक्तं कारणमिति प्राप्तं, तदिदमुक्तमानुमानिकमप्येकेषामिति चेदिति एकेषां शाखिनां शाखासु आनुमानिकं प्रधानमपि कारणमाम्नायत इति चेत् अत्रोत्तरं नेति, नाव्यक्त-शब्देनाब्रह्मात्मकं प्रधानमिहाभिधीयते कुतः। शरीररूपकविन्यस्तगृहीतेः।

टी० "कठवल्लीष्वि"ति, तन्त्रसिद्धतत्त्वक्रमप्रत्यभिज्ञाभासजनकानि वाक्यानि विषयः, तन्त्रसिद्धक्रमतद्विपर्ययप्रतीतिभ्यां संशयः, सिद्धान्तेऽव्यक्त-शब्दस्य प्रधानवाचित्वाभावादुत ने? ति संशये शिरोऽन्तरं कृतम् अन्यथा उत ब्रह्मात्मकं प्रधानमिति हि शिरोऽन्तरं वक्तव्यं, कठवल्ल्याम् अब्रह्मात्मकप्रधानकारणत्वप्रतिपत्तिरस्ति न वेति प्रथमविचारोऽभिप्रेतः, तदर्थमिन्द्रियेभ्यः परा इत्यत्राव्यक्त-शब्दः किमब्रह्मात्मकप्रधानपर? उत नेति विचारः, तदर्थं किमस्मिन्मन्त्रे तन्त्रसिद्धतत्त्वगणनक्रमप्रत्यभिज्ञानमस्ति? नेति, तदर्थम् अव्यक्तात्पूर्वापरनिर्दिष्टमहत्पुरुष-शब्दाभ्याम्महज्जीवत्वे निर्दिश्येते? उत जीवपरावि? ति किमिहेन्द्रियादि-शब्दैः पूर्ववाक्यस्थरूपकरूपितेन्द्रियादिप्रतिपत्तिरस्ति? नेति, किमत्र परत्वङ्कारणभावेन? उत वशीकार्यतये? ति, यदा कारणभावेन तदा रूपितेन्द्रियादिप्रतिपत्त्यभावेन महत्पुरुष-शब्दयोर्महज्जीवतत्त्वसमर्पकतया तान्त्रिकप्रक्रिया प्रत्यभिज्ञानादव्यक्त-शब्देन अब्रह्मात्मकं प्रधानमुच्यत इति तस्यैव

कारणत्वं प्रतीयत इति पूर्वपक्षः । दृष्टान्ते तु यदा वशीकार्यतया परत्वं विवक्षितं तदा पूर्वरूपितेन्द्रियादिप्रतिपत्त्या महत्पुरुष-शब्दयोर्जीवपरमात्मपरत्वेन तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञानाभावादव्यक्त-शब्दोनाब्रह्मात्मकप्रधानपर इति न तस्यात्र कारणत्वप्रतीतिरिति फलफलिभावः । शङ्काया अनुत्सूत्रत्वमाह "तदिदमुक्तमि"ति, शङ्कानुवादिनं सूत्रखण्डं व्याचष्टे "एकेषामित्यादि"ना, परिहारखण्डं व्याचष्टे–

भा० शरीराख्यरूपकविन्यस्तस्याऽव्यक्तशब्देन गृहीतेः आत्मशरीरबुद्धिमन इन्द्रियविषयेषु रथिरथादिभावेन निरूपितेषु रथरूपणेन विन्यस्तस्य शरीरस्याचाव्यक्त-शब्देन ग्रहणादित्यर्थः, एतदुक्तम्भवति पूर्वत्र ह्या"त्मानं रथिनं विद्धि शरीरं रथमेव च बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरा"नित्यादिना "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद"मित्यन्तेन संसाराध्वनः पारं वैष्णवं पदम्प्रेप्सन्तमुपासकं रथित्वेन तच्छरीरादीनि च रथरथाङ्गत्वेन रूपयित्वा यस्यैते रथादयो वशे तिष्ठन्ति स एवाध्वनः पारभूतं वैष्णवं पदमाप्नोतीत्युक्त्वा तेषु रथादिरूपितशरीरादिषु

टी० "शरीराख्ये"ति, शरीरमेव रूपकविन्यस्तं रूप्यते ऽनेनेति रूपकं दृष्टान्तः, रूपकत्वेन विन्यस्तं रूपितमित्यर्थः, शरीरं हि रथत्वेन रूपितं "शरीरं रथमेव चे"ति । ननु रूपकविन्यस्तशरीरगृहीतेरिति वक्तव्यं विशेषणस्य पूर्वनिपातित्वादिति शङ्कापरिहाराय शरीराख्येत्युक्तम्, अस्मिन् वाक्ये रूपकविन्यस्तं वस्तु प्रधान्येन विवक्षितं विशेषणापेक्षया विशेष्यं प्रधानं अतो रूपकविन्यस्तपदं विशेष्यसमर्पकम् । कीदृशन्तदित्यपेक्षायां शरीराख्यं

१ सिद्धान्ते तु इति पा० ।

रूपकविन्यस्तमिति शरीर—शब्देन तद्विशेष्यते, यथा खण्ड—शब्देन गौः, अतो-रूपकविन्यस्तप्राधान्याभिप्रायः शरीरशब्दपूर्वनिपात इत्यभिप्रायः। कानि कथं रूपितानी? त्यत्राह "आत्मे"ति, रूपकाभिधायि वाक्यं किं रथिरथादिभावेन रूपितानामत्र ग्रहणन्तत्राव्यक्त—शब्देन शरीरस्य ग्रहणमिति च कथमवगम्यते? रथ्यादित्वेन रूपितानाम् अस्मिन् वाक्ये कीर्त्तनं किमर्थं? मित्यत्राह "एतदुक्तमि"ति, आत्मानमित्यादिकं रूपकाभिधायिवाक्यन्तेषामत्र ग्रहणं वशीकार्यतायां प्राधान्यज्ञापनार्थं स्व—शब्दैरेव प्रत्यभिज्ञानाद्रथिरथादिभावेन रूपितानामत्र ग्रहणमिति ज्ञातं, पारिशेष्यादव्यक्त—शब्देन शरीरग्रहणमितीदमर्थजातमुच्यते पूर्वत्र हीत्यादिना, रूपणस्य प्रयोजनमाह "यस्येत"इति, वशीकार्यत्वज्ञापनाय रथिरथादिभावेन रूपणमित्यर्थः । रूपकरूपितानामिह ग्रहणं वशीकार्यतायां प्राधान्याप्राधान्यज्ञापनार्थ-मित्याह—

भा० यानि येभ्यो वशीकार्य्यतायाम्प्रधानानि तान्युच्यन्ते इन्द्रियेभ्यः परा ह्यर्था इत्यादिना, तत्र हयत्वेन रूपितेभ्य इन्द्रियेभ्यो गोचरत्वेन रूपिता विषया वशीकार्यत्वेन पराः, वश्येन्द्रियस्याऽपि विषयसन्निधानादिन्द्रियाणां दुर्निग्रहत्वात्तेभ्यः परम्प्रग्रहत्वरूपितम्मनः मनसि विषयप्रवणे विषयासन्निधानस्याप्यकिञ्चित्करत्वात् ।

टी० "यानि येभ्य इत्या"दिना, ननु वशीकार्यतायाम्प्राधान्यस्य विवक्षितत्वङ्कथमवगम्यते? उच्यते इन्द्रियेभ्यः परा इत्यादिमन्त्रे पर—शब्दस्तावन्नान्यत्वचनः अर्थेभ्यः इन्द्रियादीनाम्भेदस्य लोकसिद्धत्वेन उपदेशवैयर्थ्यात् अतः परशब्दः प्रकर्षपरः प्रकर्षश्च न तावत्कारणत्वनिबन्धनः अर्थानामिन्द्रियकारणत्वाभावादिन्द्रियाणां विषयसिद्ध्यर्थतया तच्छेषत्वात् साध्यत्वलक्षणः प्रकर्ष इति च न वाच्यन्तया सत्यर्थापेक्षया मनसः परत्वायोगात्, न चान्तरङ्गत्वलक्षणः प्रकर्षः इन्द्रियमनोबुद्धीनान्तत्सम्भवेऽपीन्द्रियापेक्षया बाह्यार्थानाम्परत्वायोगात्, अतः पारिशेष्याद् रथिरथादिभाव-

रूपणेन उपासनोपकरणत्वाऽवगमात् तत्रैव "यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सह। तस्येन्द्रियाण्यवशानि दुष्टाश्वा इव सारथेः । यस्तु विज्ञानवान् भवति युक्तेन मनसा सह । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः यस्त्वविज्ञानवान् भवत्यमनस्कः सदा शुचिः । न स तत्पदमाप्नोति संसारञ्चाधिगच्छति । यस्तु विज्ञानवान् भवति समनस्कस्सदा शुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते" इतीन्द्रियादिवशीकारावशीकारयोरर्थानर्थदर्शनात् "यच्छेद्वाङ्मनसी प्राज्ञ इती"न्द्रियादीनां वशीकारदर्शनादस्मिन्मन्त्रे वशीकार्यतायाम्प्राधान्यम्पर–शब्देन विवक्षितमित्यवगम्यते, तत्रार्थादीनामिन्द्रियादिभ्यः परत्वमुपपादयति "तत्रे"ति, । नन्वष्टौ ग्रहाः अष्टावतिग्रहा इति घ्राणजिह्वावाक्चक्षुःश्रोत्रमनोहस्तत्वगिन्द्रियाणां ग्रहत्वङ्गन्धरसनामरूपशब्दकामकर्मस्पर्शनाख्यानां विषयाणामतिग्रहत्वञ्च श्रुतन्तस्माद् ग्रहेभ्य इन्द्रियेभ्योऽतिग्रह–शब्दोक्तानामर्थानाम्परत्वं किं न स्यात्, उच्यते यदि ग्रहेभ्योऽतिग्रहाणाम्परत्वमिह विवक्षितन्तदाऽर्थेभ्यो मनसः परत्वकथनमयुक्तं मनसो ग्रहान्तर्गतत्वादर्थानामतिग्रह–शब्दोक्तत्वाच्च, अतः स्वसन्निधाविन्द्रियाणां दुर्निग्रहत्वापादनमेवार्थानां वशीकार्यत्वे परत्वं तद्वशीकरणं च असन्निधापनं हेयतया ज्ञापनञ्च तेभ्योऽपीति स्वावधानाभावे विषयासन्निधेरकिंचित्करत्वहेतुकं मनसः प्रधान्यं तस्य वशीकरणं नाम तस्य मुहुर्मुहुर्विषयदोषचिन्तनेन तेभ्यो निवर्त्तनं संशीलनम् "अभ्यासेन च कौन्तेय? वैराग्येण च गृह्यते" इति ह्युक्तम् ।

सू० तस्मादपि सारथित्वरूपिता बुद्धिः परा, अध्यवसायाभावे मनसोऽप्यकिञ्चित्करत्वात् तस्या अपि रथित्वरूपित आत्मा कर्तृत्वेन प्राधान्यात् परः, सर्व्वस्य चास्यात्मेच्छायत्तत्वादात्मैव महानिति च विशेष्यते, तस्मादपि रथरूपितं शरीरं परं तदायत्तत्वाज्जीवात्मनस्सकलपुरुषार्थसाधनप्रवृत्तीनान्तस्मादपि परः सर्व्वान्तरात्मभूतोऽन्तर्य्याम्यध्वनः

पारभूतः परमपुरुषः, यथोक्तस्यात्मपर्यन्तस्य समस्तस्य तत्सङ्कल्पायत्तप्रवृत्तित्वात् ।

टी० तस्मादपीति, बुद्धि-शब्दोऽध्यवसायरूपज्ञानविशेषपरः। नत्वन्तःकरणपरः "यदा कर्मगुणोपेता बुद्धिर्मनसि वर्त्तते व्यवसायगुणोपेता तदा सम्पद्यते मन" इत्यादिषु बुद्धि-शब्दस्यान्तःकरणपरत्वन्तत्कार्यभूतस्य व्यवसायस्य पृथग् निर्देशादिभिरवसीयते, इह तु बुद्धि-शब्दस्य भावार्थत्वस्वारस्यात्तदपवादाभावाच्च व्यवसायपरत्वमित्यध्यवसायाभाव-शब्दस्य पुञ्जानस्याभिप्रायः । यद्वा बुद्धि-शब्दोन्तःकरणपरः, इदानीमव्यवसायाभाव इत्यनेन तत्कार्यभूताध्यवसायाभाव इत्युक्तं स्यात्, अल्पास्थिरत्वदुस्साधत्वदुःखमिश्रत्वादिदोषदर्शनेन विषयाणां हेयत्वाध्यवसायो ऽध्यवसाय-शब्देन विवक्षितः, तदभावे ह्यन्यत्र व्यासङ्गादिना क्वचिद्विषये प्रावण्यरहितमपि मनः कदाचित्तत्प्रवणमपि स्यात्, अतो बुद्धेः परत्वन्तस्याश्च वशीकरणं नामविषयदोषदर्शनसंशीलनेन तद्दृढीकरणरूपं मनोनिवर्त्तनपाटवापादनम्, आत्मा कर्तृत्वेन प्राधान्यात् पर इति कर्त्तृत्वेनाध्यवसायाश्रयत्वे बुद्धि-शब्दस्यान्तःकरणपरत्वपक्षे तु उपकरणित्वेनेत्यर्थः । अणोरात्मनः कथम्महच्छब्दविशेष्यत्व? मित्यत्राह "सर्वस्य चे" ति, अस्य सर्वस्येन्द्रियादेरध्यवसायपर्यन्तस्य इन्द्रियाणि जेतव्यानि सम्यगर्थविषयाध्यवसायः सम्पाद्य इत्येवंरूपेच्छायत्तत्वादित्यर्थः, अनेनात्मनो वशीकरणं नामात्मरूपयाथात्म्याध्यवसायप्रावण्यरूपेच्छापादनमेवेति च फलितन्तस्मादपि रथरूपितं शरीरं परमिति, शरीरस्य परत्वं नाम स्वगतगुणोन्मेषानुगुणात्मगतज्ञानापादकत्वं रजस्तमोऽनुदयसत्त्वप्राचुर्यकरपरिशुद्धाहारेण सत्त्वोद्रिक्ततापादनं शरीरस्य वशीकरणमित्यर्थः जीवभेदस्याऽविद्याकल्पितत्वादविद्यासंज्ञमव्यक्तं जीवात् परं तत्कार्यत्वाच्छरीरस्य परत्वमुपचर्यत इति केश्चिदुक्तन्तदयुक्तङ्कारणगतपरत्वस्य कार्य उपचरणे स्वारस्याभावाज्जीवभेदस्याऽविद्याकल्पितत्वाभावाच्च, आत्मपर्यन्तस्य स्वावधिकस्य यद्वा जीवपर्यन्तस्येत्यर्थः, नास्मिन्वाक्ये वशीकार्यतया परत्वे निर्दिष्टः क्रमो

विवक्षितः किन्तूपकरणितया प्राधान्यम् अत एवात्मानं रथिनं विद्धीति शरीरात् पूर्वं निर्दिष्टः उपासनोपकरणकोटिनिवेशः परस्य कथम् अव्यक्तात्परस्य पुरुषत्वमात्रं श्रुतं न परमत्वन्तत्कथमश्रुतपरशब्दाङ्गीकार इत्यत्राह

सू० स खल्वन्तर्यामितयोपासनस्यापि निर्वर्तकः 'परात्तु तच्छ्रुतेरि'ति हि जीवात्मनः कर्तृत्वं परमपुरुषायत्तमिति वक्ष्यते वशीकार्योपासनानिर्वृत्त्युपायकाष्ठाभूतः परमप्राप्यश्च स एव, तदिदमुच्यते पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिरिति, तथा चान्तर्यामिब्राह्मणे "य आत्मनि तिष्ठन्नित्यादिभिस्सर्वं साक्षात्कुर्वन् सर्वं नियमयतीत्युक्त्वा नान्योऽतोऽस्ति द्रष्टेत्यादिना नियन्त्रन्तरं निषिध्यते, भगवद्गीतासु च "अधिष्ठानं तथा कर्त्ता करणं च पृथग्विधम् । विविधाश्च पृथक् चेष्टा दैवं चैवाच पञ्चममिति दैवमच पुरुषोत्तम एव "सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्चेति वचनात्, तस्य च वशीकरणान्तःकरणागतिरेव यथाह 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया तमेव शरणङ्गच्छेति ।

टी० स खल्वि"ति, उपासननिर्वाहकत्वाद्वशीकार्यत्वमित्यर्थः सा काष्ठेति श्रुतिवाक्यखण्डं व्याचष्टे "वशीकार्योपासने"ति, वशीकार्य—शब्द उपायविशेष्यकः रूपितेष्वर्थेषु परत्वेन रूपितस्य पदस्यात्राकथनाद्रूत्यमाणपरिशेषासिद्धिशङ्कां परिहर्त्तुं सा परा गतिरित्यनेनैव पारत्वरूपितपदस्याऽपि प्रतिपादितत्वमाह "परमे"ति, पुरुषान्न परं किञ्चिदित्युपायकोटिकाष्ठाभूतमस्मात्परं न विद्यत इति व्यतिरेक उक्तः, सा काष्ठेत्यनेन अयमेवोपायकाष्ठाभूतइत्यन्वय उक्तः । इन्द्रियादीनामप्युपायभूतत्वमात्र-

मस्तीति तद्भावृत्त्यर्थं परा गतिरिति प्राप्यत्वमुच्यत इत्यर्थः, "यस्मात्परं नापर"मित्यादि श्रुत्यैकार्थ्यावगमात् स्वस्मात् परान्तररहितस्य परमात्मत्वमर्थसिद्धमपि चाभिप्रायः सर्वनियामकादस्मात् परस्याभावेन उपायकाष्ठात्वोपपादनार्थम् अन्तर्यामिब्राह्मणमुपादीयते "तथे"ति, दैवमिति कर्म वा कर्माराध्यमिन्द्रादिकं वा विवक्षितं तस्यादित्यत्राह "दैवमत्रे"ति, न दैवं केशवात्परं श्रूयतामपरं दैवं दुर्विज्ञेयं मयाऽपि च । नारायणस्तु पुरुषोविश्वरूपोमहाद्युतिः । नारायणस्य चाङ्गानि सर्वदैवानि चाभवन् अन्यानि सर्वदैवानि तस्याङ्गानि महात्मन" इत्यादिप्रयोगादित्यभिप्रायः परमपुरुषस्याप्युपासननिर्वर्तकत्वमस्तु कथं सर्वस्मात्परस्यानीश्वरेण संसारिणा वशीकर्त्तुं शक्यत्वं शक्यश्चेत्तत्प्रकारोऽपि क्वचिच्छ्रूयेत न च श्रूयते यच्छेद्वाङ्मनसी प्राज्ञ इत्यादावनुपलब्धेरित्यत्राह "तस्य चे"ति, यच्छेद्वाङ्मनसीत्यादौ तस्य वशीकार्यत्वश्रवणं दर्शयिष्यते । कथमव्यक्त-शब्देन शरीराख्यरूपकविन्यस्ताभिधानं रूपकविन्यस्तान्तराभिधायित्वं किं न स्यादिति शङ्कायामव्यक्त-शब्देन शरीरस्याभिधानं पारिशेष्यादित्याह-

सू० तदेवमात्मानं रथिनं विद्धीत्यादिना रथ्यादिरूपकविन्यस्ता इन्द्रियादयः "इन्द्रियेभ्यः परा ह्यर्था"इत्यत्र स्व-शब्दैरेव प्रत्यभिज्ञायन्ते न रथरूपितं शरीरमिति परिशेषात्तदव्यक्त-शब्देनोच्यते इति निश्चीयते, अतः कापिलतन्त्रप्रसिद्धस्य प्रधानस्य प्रसङ्ग एवेह नास्ति, न चात्र तत्तन्त्र सिद्धप्रक्रियाप्रत्यभिज्ञा इन्द्रियेभ्यः परा ह्यर्था इतीन्द्रियेभ्योऽह्यर्थानां शब्दानां परत्वकीर्त्तनात्, न हि शब्दादय इन्द्रियाणां कारणभूतास्तद्दर्शने अर्थेभ्यश्च परम्मन इत्यपि न तत्तन्त्रे सङ्गतम्, अकारणत्वादेव तथा बुद्धेरात्मा महान्पर इत्यप्यसङ्गतं बुद्धि-शब्देन महत्तत्त्वाभ्यु-

पगमात्, न हि महतोमहान् पर इति सम्भवति महत-आत्मशब्देन विशेषणं च न सङ्गच्छते, अतो

टी० "तदेवमात्मानमि"ति, प्रधानप्रतिपादकत्वमङ्गीकृत्य तस्य ब्रह्मात्मकत्वाब्रह्मात्मकत्वविवादोऽपि क्वचिदस्तीति तद्व्यावृत्त्यर्थं प्रसङ्ग एव नास्तीत्युक्तं, वशीकार्यतया परत्वमुपपादितं कारणत्वेन परत्वस्यानुपपत्तिमाह "न चात्रे"ति, प्रत्यभिज्ञानाभावमुपपादयति "इन्द्रियेभ्य"-इति, तदेव विवृणोति "न ही"ति, अकारणत्वादेवेति, इन्द्रियेभ्यः परा ह्यर्था इत्यत्र तन्त्रप्रक्रियाप्रत्यभिज्ञानव्युदासहेतोरेवेत्यर्थः । अहङ्कारद्वारा बुद्धेर्मनः-करणसम्भवात्, मनसस्तु परा बुद्धिरित्येतत्क्लिष्टगत्या निर्वोढुं शक्यमिति तदनादरेण बुद्धेरात्मेत्यत्रानुपपत्तिमाह "तथे"ति, बुद्धि-शब्देन महत्तत्त्व-मभिधीयतान्ततः किमित्यत्राह "न ही"ति, समष्टिव्यष्टिविभागेन परत्वोपपत्तिरिति चेन्न तत्कल्पनेन निर्वाहस्यास्वरसत्वात् इन्द्रियादिषु चार्थान्तरेषु समष्टिव्यष्टिविभागादर्शनाद्रूपकवाक्ये पृथङ्निर्देशाभावाच्चानुपपत्त्यन्तरमाह "महत आत्म-शब्देने"ति, आत्म-शब्दः स्वतश्चेतनैकान्तः अगत्या क्वचित्तस्यातत्परत्वाश्रयम् अवयवशक्त्या स्वकार्यव्याप्तिपरत्वेऽपि महत्तत्त्वादपि प्रधान एव अवयवार्थप्रकर्षात् महत आत्म-शब्दविशेष्यत्वमयुक्तमित्यर्थः । ननु "उद्बवर्हात्मनश्चैव मनस्सदसदात्मकं मनसश्चामहङ्कारमभिमतान्तर-मीश्वरम्महान्तमेव चात्मानं सर्वाणि त्रिगुणानि चे"ति, स्मृतिसिद्धप्रक्रिया-प्रत्यभिज्ञानान्महच्छब्दोमहत्तत्त्वपरः, न त्वात्मविशेषक इति चेन्न श्रुताविन्द्रियार्थमनोबुद्धिमहतां परत्वस्य चोक्तत्वादहङ्कारस्यानुक्तत्वात् स्मृतौ मनोऽहङ्कारमहतामेवोक्तत्वादिन्द्रियार्थबुद्धीनां परत्वस्य चानुक्तत्वात् श्रुतौ स्मृत्यर्थप्रत्यभिज्ञानाभावान्मनमोऽहङ्कारमुद्बवर्हेत्यस्य तन्त्रप्रक्रियाविरोध-प्रतीतेः पूर्वपक्षिणोत्र परिचोदनस्यायुक्तत्वाच्च । ननु महच्छब्दस्यात्मविशेषणत्वे सति महतः परमिति निर्देष्टुव्यक्तम् अपि त्वात्मन इत्येवनिर्देष्टव्यमिति चेन्न विशेषणवाचिपदेनाऽपि प्रकृतविशेष्याभिधानदर्शनात् देवदत्ताद् यज्ञदत्तः शीघ्रगतिर्योऽयमश्वारूढः

सू० रूपकविन्यस्तानामेव ग्रहणं, दर्शयति च तदेव "एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" "यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञानआत्मनि । ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्तआत्मनी"ति अजितबाह्याभ्यान्तरकरणैरस्य परमपुरुषस्य दुर्दर्शत्वमभिधाय हयादिरूपितानामिन्द्रियाणां वशीकरणप्रकारोऽयमुच्यते यच्छेद्वाङ्मनसी इति वाचं मनसि नियच्छेत्=वाक्पूर्वकाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च मनसि नियच्छेदित्यर्थः, वाक्-शब्दे द्वितीयायाः "सुपां सुलुगिति" लुक् ।

टी० अश्वारूढाद्विष्णुमित्र इति अश्वहुसेवी पुरुषो मूढः मूढादमूढ आदरणीय इत्यादौ रूपकविन्यस्तानामेव ग्रहणमित्येतद् भाष्यमेतदुक्तम्भवतीत्यनेनान्वितम्, इति-शब्दाप्रयोगोऽतिविप्रकर्षात् दर्शयति चेति सूत्रखण्डोपादानं तदेव—वशीकार्यत्वे परत्वमेव एष इत्यादि श्रुतिः न प्रकाशत इत्युक्ते केषामित्यपेक्षायां "यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सह । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः । यस्त्वविज्ञानवान् भवत्यमनस्कस्सदाऽशुचिः । न स तत्पदमाप्नोति संसारञ्चाधिगच्छती"ति, प्राकरणिकवाक्योपजीवनेन न प्रकाशत इत्यस्यार्थमाह "अजितबाह्ये"ति, वाक्छब्दस्सर्वेन्द्रियोपलक्षणार्थ इत्याह "वाक्पूर्वकाणी"ति, । नन्विदमयथाक्षरमिव व्याख्यातं न ह्यत्र वाक्छब्दो द्वितीयान्तो मनश्शब्दश्च सप्तम्यन्तः श्रूयत इत्यत्राह "वाक्छब्द"इति, । ननु वाक्छब्दात् परस्या द्वितीयायास्सुपां सुलुगि"त्यनुशासनेन स्वादेशाश्रयणेन द्वितीयान्तत्वं किं न स्यात् न स्वादेशेऽपि "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्"इति, सूत्रेण वाक्छब्दस्य हलन्ततया सुलोपस्य प्राप्तत्वात् स्वादेशाङ्गीकारेऽपि

लुक्ि पर्यवसानं स्यात्, तत्र द्वितीयास्थाने स्वादेशमाश्रित्य लोपकल्पना-दपि वरं द्वितीयाया एव लुगाश्रयणमिति सप्तम्येकवचनान्तस्य मनश्शब्दस्य दीर्घान्तत्वङ्कुर्यमित्यत्राह-

**भा० मनसीति सप्तम्याश्छान्दसो दीर्घः "तद्यच्छेज् ज्ञान आत्मनि" तन्मनो बुद्धौ नियच्छेत् ज्ञान-शब्देनाऽत्र पूर्वोक्ता बुद्धिरभिधीयते ज्ञान आत्मनीति व्यधिकरणसप्तम्यौ**

टी० "मनसी" इति, सप्तम्याश्छान्दसो दीर्घ इति "ईदूतौ च सप्तम्यर्थे" इति प्रकृतिवद्भावस्मरणनिबन्धनो मनसी इति निर्देशः। नन्वियाडियाजीकाराणामुपसंख्यान"मित्युपसंख्यानवशादीकारान्तत्वसम्भवे कथं छान्दसत्वाश्रयणमिति चेत् उपसंख्यानेन निर्वाहासम्भवादिति ब्रूमः, न हि वाङ्मनसी इत्यत्र वाक् च मनश्चेत्यर्थस्सम्भवति, अचतुरविचतुरेत्यादिस्मरणेनाजन्ततया वाङ्मनसे इति प्राप्तत्वात् । अथ तत्राऽपि छान्दसत्वबलेन समासान्तो नाऽऽद्रियते तथा सति यथोक्तनिर्वाहे कः प्रद्वेषः, न च निर्वाहद्वयतुल्यता पूर्वोक्तस्य प्रकरणानुगुण्यादेकवचनोपपत्तेश्च यच्छेदित्युक्तस्य नियमनस्य सप्तम्यपेक्षा प्रकरणसिद्धा, तद् यच्छेज् ज्ञान आत्मनि ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनीति हि श्रूयते वाक् च मनश्चेत्यर्थोऽभिमतश्चेत्तद्विति पुनः परामर्शश्च न घटते ते इति द्विवचनान्तनया हि निर्देष्टव्यम् अत उक्तनिर्वाह एवोपपन्नः, तद्यच्छेद् ज्ञान आत्मनीति वाक्यम्मनसोऽहङ्कारे नियमनपरं केचिद् व्याचक्षते तदनुपपन्नं मन्वान आह "तन्मनो बुद्धौ नियच्छेदि"ति, अहङ्कारपरत्वमस्वरसं बुद्धिपरत्वन्तु स्वरसमित्यभिप्रायेणाह "ज्ञान-शब्देने"ति, पूर्वोक्ता बुद्धिरनात्मात्मविषयहेयोपादेयताध्यवसायः ज्ञानसामान्यवाचिशब्दस्य ज्ञानविशेषवाचित्वं मुख्यमिति भावः । आत्म-शब्दसमानाधिकरणज्ञान-शब्दस्य बुद्धिपरत्वमयुक्तमित्यत्राह "ज्ञान आत्मनी"ति, आत्म-शब्दस्य स्वतश्चेतनैकान्तत्वादनन्तवाक्यस्यात्मशब्दस्यास्य चैकरूपार्थत्वे स्वारस्याच्च सामानाधिकरण्यमात्रस्वारस्यमुपेक्ष्यमिति भावः । वैयधिकरण्यफलितमाह-

मू० आत्मनि वर्त्तमाने ज्ञाने नियच्छेदित्यर्थः "ज्ञानमात्मनि महति नियच्छेत्" बुद्धिं कर्त्तरि महत्यात्मनि नियच्छेत् तद्यच्छेच्छान्त आत्मनि तं कर्त्तारं परस्मिन् ब्रह्मणि सर्वान्तर्य्यामिणि नियच्छेत्

टी० "आत्मनि वर्त्तमान" इति, सप्तम्यर्थस्य स्फुटीकरणाय वर्त्तमान-पदमध्याहृतं, ज्ञान-शब्दस्याहङ्कारपरत्वाश्रयणं किं शब्दस्वारस्या? द्रुतार्थ-वशात्? न प्रथमः, दत्तोत्तरत्वात्, नाऽऽपि द्वितीयः अर्थसामर्थ्यादर्शनात् मनोमहतोर्मध्यगतत्वम् अर्थसामर्थ्यमिति चेत् यदि शब्दः प्रत्यभिज्ञाना-भावेऽपि ज्ञानशब्दोमनोमहतोर्मध्यगतत्वरूपार्थसामर्थ्यादहङ्कारपरः तर्हि तुल्यन्यायत्वान्मनसस्तु परा बुद्धिरित्यत्रापि बुद्धि-शब्दस्याहङ्कारपरत्वं स्यात्, तदप्यस्त्विति न वाच्यं स्वग्रन्थविरोधात् । अथ बुद्धि-शब्देनाहङ्कारं ब्रूयुः तथाऽपि तन्त्रसिद्धस्याहङ्कारस्य प्रत्यभिज्ञा नोपपद्यते बुद्धि-शब्देन व्यवहाराभावात्, महच्च न तन्त्रसिद्धमिह प्रत्यभिज्ञायते आत्म-शब्देन सामानाधिकरण्यादिति ह्यन्तिमसूत्रव्याख्याने तैरुक्तम् । अथोच्येत तत्र यद्यपि मनो महतोर्मध्यगतो बुद्धि-शब्दस्तथाऽपि नाहङ्कारपरः महच्छब्दस्यात्म-शब्दोपपदपीडितत्वेन महत्तत्त्वाभिधायकत्वाभावादिति तर्ह्यत्रापि सप्तम्यन्तमहच्छब्दस्याप्यात्म-शब्दोपपदपीडितत्वेन महत्तत्त्वोपस्थापकत्वाभावान्मनोमहतोर्मध्यगततत्त्वरूपमर्थसामर्थ्यं न विद्यते, यद्यत्रोपपदं न पीडकन्तर्हि तत्राऽपि पीडनासामर्थ्यात् "मनसस्तु परा बुद्धिरित्यप्यहङ्कार उक्तः स्यात्, ततश्चाधिकरणप्रयासवैयर्थ्यमेव स्यात् तन्त्रप्रक्रियास्थिरत्वसिद्धिरित्यलमनेन । ज्ञानमात्मनीत्यस्यार्थमाह "बुद्धि-मि"ति, वाचोमनसि नियमनम्मनोऽननुगुणप्रवृत्तिवैमुख्यापादनं मनसो बुद्धौ नियमनमध्यवस्यायासगुणप्रवृत्तिताऽऽपादनं बुद्धिरर्थेषु हेयताध्यवसायरूपा तस्या बुद्धेरात्मनि नियमनं नाम स एवोपादेयतया साक्षात्कार्य इत्येतदर्थ-विषयत्वापादनं शान्ते-स्वतः ऊर्मिषट्कप्रतिभटे शान्तआत्मनि महत आत्मनो जीवस्य नियमनं नाम तच्छेषताप्रतिपत्तिः सैव परस्यापि वशीकर-

सम्भवति न तदिति निर्देष्टव्यम् आत्म-शब्दस्य पुँल्लिङ्गत्वात्तच्छब्दस्य चात्मपरामर्शित्वादित्यत्राह–

सू० व्यत्ययेन तदिति नपुंसकलिङ्गता, एवंभूतेन रथिना वैष्णवं पदं गन्तव्यमित्यर्थः, अव्यक्त-शब्देन कथं व्यक्तस्य शरीरस्याऽभिधानं तत्राह–

## सू० सूक्ष्मन्तु तदर्हत्वात् ॥ २ ॥

भूतसूक्ष्ममव्याकृतं ह्यवस्थाविशेषमापन्नं शरीरम्भवति तदव्याकृतमिह शरीरावस्थमव्यक्त-शब्देनोच्यते तदर्हत्वात् तस्याव्याकृतस्याचिद्वस्तुन एव विकारापन्नस्य रथवत्

टी० "व्यत्ययेन त"दिति, नपुंसकलिङ्गतेति अत्र तदिति व्याख्येयं पदं 'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन" इति शाब्देरुक्तलिङ्गव्यत्ययेन तदिति नपुंसकलिङ्गतेत्यर्थः । नन्वस्मिन्मन्त्रे रूपककल्पितानां वशीकरणप्रकार उच्यत इत्युक्तं, तदयुक्तं विषयाणां शरीरस्य चात्र नियमनानुक्तेरिति चेत् न तन्नियमनस्यार्थसिद्धत्वात् विषयाणां नियमनं हि नाम तदसन्निधापनं शरीरस्य नियमनं नाम सात्त्विकाहारेण परिशोधनं, न हि दूरतोऽनुज्झितविषयस्य दुष्टाहारसेवामलिनमनसः इन्द्रियादिनियमनं संभवति, अतोऽर्थसिद्धस्येह कण्ठोक्त्यभावः तन्निमित्तमिदं विषयसन्निधिपरिवर्जनं सात्त्विकाहारसेवनञ्च योगाद्युत्पादनकाले सम्पाद्यं तदानीं वाक्चक्षुरादिकर्मज्ञानेन्द्रियाणां नात्यन्तव्यापारनिषेधः, अत्यन्तनिषेधस्तु योगकाल एव वक्त[1]व्यः, अतो योगकाल एव कर्तव्यस्य नियमनस्यास्मिन् मन्त्रे विधानात् इन्द्रियेभ्य इत्यस्मिन्मन्त्रेऽपि वशीकार्यत्वे परत्वं विवक्षितमिति तन्त्रसिद्धकार्यकारणतत्त्वप्रत्यभिज्ञानाभावात् रूपककल्पितेषु परिशिष्टं शरीरमव्यक्तशब्देनोच्यत इति स्थितम् । उत्तरसूत्रशङ्कामाह "अव्यक्ते"ति,

१ कर्तव्य इति पा० ।

पारिशेष्याच्छरीराव्यक्तशब्दयोरैकार्थ्येऽवश्यंभाविनि सति उपक्रमाधिकरण-न्यायादुपक्रमस्यशरीर-शब्दानुगुणमव्यक्तशब्दे नेये तत्राऽव्यक्तशब्दस्य वृत्तिः कथमित्यपेक्षायामाहेत्यभिप्रायः, सू· सूक्ष्मं तु तदर्हत्वात् द्रव्यैक्यलक्षणसम्बन्धात् कार्ये कारणशब्दोपचार इत्याह "भूतसूक्ष्ममि"ति, कारणभूताव्यक्ते कार्यवाचिशरीर-शब्दोपचारः किं न स्यादित्यत्राह "तदर्हत्वादि"ति, व्याख्येयसौत्रस्तच्छब्दस्तस्येति व्यस्य निर्दिष्टः, सूक्ष्मत्वं स्वशब्देनोपस्थापितं स्थूलावस्थं शरीरमव्यक्तशब्दविषयतया बुद्धिस्थम्, अतस्तथाविधाचिद्द्रव्यपरामर्श इति भावः । अवस्थाद्वयानुगतवस्तुलक्षण-निमित्तमाकारमाह "अचिद्वस्तुन"इति, ज्ञानसङ्कोचविकासरूपविकाराा-पत्तिश्चिद्वस्तुनोऽप्यस्ति तद्व्यावृत्त्यर्थमचिद्वस्तुन एव विकारापन्नस्येत्युक्तम्, अर्हत्वङ्कार्यापेक्षं तद्विशेषप्रकरणसिद्धमभिप्रेत्याह—

भू० पुरुषार्थसाधनप्रवृत्त्यर्हत्वात्, यदि भूतसूक्ष्ममव्याकृतमभ्युपगम्यते कापिलतन्त्रासिद्धोपादाने कः प्रद्वेषः तत्राऽपि हि भूतकारणमेवाव्यक्तमित्युच्यते तत्राह—

## सू० तदधीनत्वादर्थवत् ॥ ३ ॥

परमकारणभूतपरमपुरुषाधीनत्वात्प्रयोजनवद् भूतसूक्ष्मम् एतदुक्तम्भवति न हि वयमव्यक्तं तत्परिणामविशेषांश्च स्वरूपेण नाभ्युपगच्छामोऽपि तु परमपुरुषशरीरतया तदात्मकत्वविरहेण तदात्मकत्वेनैव हि प्रकृत्यादयस्स्वप्रयोजनं साधयन्ति

टी० "पुरुषार्थे"ति, औपचारिकत्वाविशेषेऽपि पुरुषार्थप्रवृत्त्यनर्हतारूपार्थविरोधात् तत एवाव्यक्तस्य वशीकार्य्यत्वायोगाच्च न कारणे कार्योपचाराच्छरीर-शब्दो भूतसूक्ष्मपरत्वेन व्याख्यात इत्यर्थः । यादवप्रकाशीयास्तु सूक्ष्मं शरीरमिह गृह्यते तस्याव्यक्तशब्दार्हत्वात् पूर्वत्राऽपि तदेव रथत्वेन

रूपितं, लोकान्तरप्राप्तेरपि विवक्षितत्वादिति व्याचक्षते तदयुक्तम्, उपक्रमस्थशरीरशब्दस्य स्वरसतस्थूलशरीरप्रतिपत्तिहेतुत्वात् यच्छेद्वाङ्मनसी प्राज्ञ इत्यादिना पुरुषार्थसाधनप्रवृत्तिविशेषप्रतिपादनेन पुरुषार्थसाधनप्रवृत्त्यर्हत्वविवक्षामूलं रथत्वेन रूपणमित्युपगमाच्च, पुरुषार्थसाधनप्रवृत्त्यर्हत्वं हि स्थूलशरीरस्य लोकान्तरप्राप्तिः फलानुभवार्थेति तत्साधनस्य सूक्ष्मदेहस्य नोपायानुष्ठानार्हता, अतोऽव्यक्तशब्दमात्रस्वारस्यादपि उपक्रमस्थशरीर–शब्दस्वारस्यादुपायदशायामुपयोगप्रतीतिस्वारस्याच्च यथोक्त एव सूत्रार्थ इति तदभिप्रायेणाह "रथवत्पुरुषार्थसाधनप्रवृत्त्यर्हत्वा" दिति, उत्तरसूत्रशङ्कामाह "यदी" ति, भूतकारणमेवेति त्वयाऽपि यदभ्युपेतं भूतकारणत्वेन तदेवेति भावः । सू० तदधीनत्वादर्थवत्, न हि प्रयोजनत्वाप्रयोजनवत्त्वे चेदिते प्रधानाङ्गीकारः प्रधानवाददूषणञ्च व्याहतमिति ह्युक्तन्तत् कथम्परिहृतं भवतीत्यत्राह 'एतदुक्तमि' ति, तदात्मकत्वविरहेणेति, नाभ्युपगच्छाम इत्यन्वयः । तदधीन–शब्दस्य प्रवृत्तिमात्रेतादधीन्यपरत्वशङ्काव्यावृत्त्यर्थम्परमपुरुषशरीरतया तदात्मकत्वेनेत्युक्तन्तेन प्रवृत्तौ पराधीनत्वेऽपि सत्तास्थित्योः कुलालानपेक्षदण्डचक्रादिव्यावृत्तिः स्वातन्त्र्येण किं नाभ्युपगम्यत इत्यपेक्षायाम् अर्थस्थितिमाह "तदात्मकत्वेनैव ही" ति, हि–शब्दः प्रमाणप्रसिद्धिद्योतकः स्वप्रयोजनं–स्वकार्यं, प्रकृतेः कार्यं हि महानेव महदादीनामपि तत्तत्कार्यमेव प्रयोजनं पुरुषस्य भोगापवर्गरूपं वा । उक्तमर्थमुपपादयति–

भा० अन्यथा स्वरूपस्थितिप्रवृत्तिभेदास्तेषां न स्युः, तथाऽनभ्युपगमादेव हि तन्त्रसिद्धप्रक्रियानिरसनमिति, श्रुतिस्मृत्योर्हि जगदुत्पत्तिप्रलयवादेषु परमपुरुषमहिमवादेषु च प्रकृतिविकृतिपुरुषास्तदात्मकास्सङ्कीर्त्यन्ते, तथा पृथिव्यप्सु प्रलीयते इत्यारभ्य तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति लीयते महानऽव्यक्ते लीयते अव्यक्तमक्षरे लीयते,

टी० "अन्यथे"ति, अन्यथा—तदात्मकत्वविरहे, स्वरूपस्थितिप्रवृत्ति-भेदास्तेषां न स्युरिति "न तदस्ति विना यत्स्यात् । मयि सर्वमिदं प्रोतं मत्तः सर्वं प्रवर्त्तत इत्यादिभिः स्वरूपस्थितिप्रवृत्तितादधीन्यसिद्धिः, स्वरूपं व्यवहारार्हत्वम्मानसम्बन्धार्हत्वं वा, तस्य कालान्तरावच्छिन्नाकारविरहः स्थितिः प्रवृत्तिः कार्योत्पत्त्यनुगुणव्यापारः, स्वरूपस्थिती न स्यातान्ततश्च प्रवृत्त्यभावः कैमुत्यन्यायसिद्धः यथा शरीरस्यात्मविश्लेष इत्यर्थः, सूत्रेऽर्थवच्छब्दस्तदुपयुक्तार्थतादधीन्यस्याऽपि प्रदर्शनार्थः । अर्थोपयोगित्वात्प्रवृत्तेः प्रवृत्त्युपयोगित्वाच्च स्वरूपस्थित्योरित्यभिप्रायः । पूर्वोक्तव्याघातस्य परिहृतत्वन्दर्शयति "तथाऽनभ्युपगमादेवे"ति, अब्रह्मात्मकप्रधानवाद एव दूष्यः ब्रह्मात्मकं प्रधानं स्वीकृतमिति न व्याहतिरित्यभिप्रायेण प्रक्रियानिरसनमित्युक्तं, हि-शब्दाभिप्रेतन्तदात्मकत्वे प्रमाणन्दर्शयति "श्रुतिस्मृत्योर्ही"ति, प्रलयश्रुतिः "पृथिव्यप्सु प्रलीयत इत्यादिः, महिमप्रवादश्रुतिर्यस्य पृथिवी शरीरमित्यादिः, प्रलयपरत्वं श्रुतेरपि तमः परे देवे एकीभवतीत्येतदन्तत्वात्तदात्मकत्वसिद्धिः तस्मात्तमः संजायत इत्युत्पत्तिप्राक् द्रष्टव्यम्, अप्ययपूर्वकत्वात्सृष्टेः प्रलयश्रुत्युपादानं सृष्टिवाक्यप्रदर्शनार्थं शरीरस्य जीवात्मापेक्षया परत्वङ्कथमिति शङ्कायां जीवस्य शरीराधीनप्रवृत्तित्वात् जीवापेक्षया शरीरस्य परत्वं यथेन्द्रियेभ्योऽर्थानां परत्वमिति परिहारपरं सूत्रमितरैर्व्याख्यातन्तदयुक्तम्, अपेक्षितविधेरनपेक्षितविधानदौर्बल्यात्, न हि वेदान्तिभिः प्रकृतिः स्वरूपेण नाऽभ्युपगम्यते, अतस्तदभ्युपगमतन्निरासयोर्व्याघातः परिहर्त्तव्य इति तत्परिहारापेक्षणमपेक्षिताकरणं स्यात् । ननु शरीरस्य जीवात् परत्वानुपपत्तिशङ्का च परिहर्त्तव्या अतोनानपेक्षितविधानं स्यादिति चेत्, एवन्तर्हीन्द्रियेभ्यः कथमर्थानां परत्व? मिति शङ्कायाश्च परिहर्त्तव्यत्वात्तत्परिहाराय सूत्रान्तरं प्रणेयं स्यात्, सा चार्थवदित्यनेन परिजिहीर्षितेति चेत्तर्हि अर्थवदिति दृष्टान्ततयोक्तिर्न घटते अर्थेभ्यो मनसः परत्वङ्कथमिति शङ्कापरिहाराय सूत्रान्तरवक्तव्यञ्च स्यात्, अर्थमनोबुद्ध्यादीनां परत्वं यथाकथञ्चिद् व्यवहारे प्राधान्यादिविवक्षया निरूप्यत इति न तत्र परिहर्त्तव्यमिति चेत् ।

सू० अक्षरन्तमसि लीयते तमः परे देव एकीभवति" तथा "यस्य पृथिवी शरीरं यस्यापश्शरीरं यस्य तेजःशरीरं यस्य वायुश्शरीरं यस्याकाशः शरीरं यस्याहङ्कारः शरीरं बुद्धिश्शरीरं यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरम् एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" तथा "भूमिरापोऽनलो वायुः खम्मनोबुद्धिरेव च । अहङ्कार इतीयम्मे भिन्ना प्रकृतिरष्टधा । अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत् । एतद्योनीनि भूतानि सर्वाणीत्युपधारय । अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जयमयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवे"ति "व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव चे"ति प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि परमात्मा च सर्वेषामाधारः पुरुषोत्तमः विष्णुनामा स वेदेषु वेदान्तेषु च गीयते इति च ।

## सू० ज्ञेयत्वाऽवचनाच्च ॥ ४ ॥

यदि तन्त्रसिद्धमिहाव्यक्तमविवक्षिष्यत् तदाऽस्य ज्ञेयत्वमविवक्षिष्यत् व्यक्ताव्यक्तविज्ञानान्मोक्षवादिभिस्तान्त्रिकैस्तेषां सर्वेषां ज्ञेयत्वाऽभ्युपगमात्, न चास्य ज्ञेयत्वमुच्यते इति, अतो न तन्त्रसिद्धस्येह ग्रहणम्, सूत्रं वदतीति चेन्न प्राज्ञो हि प्रकरणात् "अशब्दमस्पर्शमरूपमव्ययन्तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तम्महतः परं ध्रुवं निचाय्य तं

मृत्युमुखात्प्रमुच्यत" इत्यऽव्यक्तस्य ज्ञेयत्वमनन्तरमेव वदतीयं श्रुतिरिति चेत्तन्न प्राज्ञः परमपुरुष एव ह्यत्र श्लोके निचाय्यत्वेन प्रतिपाद्यते "विज्ञानसारथिर्य्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ।

टी० अव्यक्तस्य परत्वमपि यथाकथञ्चिन्निरूप्यत इति न सूत्रापेक्षा, केन युक्तिबलेन यथाकथञ्चिन्निर्वाह इति चेत् अर्थमनोबुद्ध्यादीनां यथाकथञ्चित्परत्वनिर्वाहः, केन युक्तिबलेन प्रकरणपारिशेष्याभ्यामाद्यसूत्रविवक्षिताभ्यामव्यक्त–शब्दस्य रूपकविन्यस्तशरीरविषयत्वनिश्चयबलेनेति चेत् तेनैवायमपि निर्वाह आद्यसूत्रेणैव सिद्ध इत्यनपेक्षितविधानं स्यादेव, अतः उक्तार्थपरमेवेदं सूत्रम् सू० ज्ञेयत्वावचनाच्च, "व्यक्ताव्यक्तज्ञविज्ञानादि"ति सांख्यग्रन्थ एव स्ववाक्ये निवेशितः, सू० वदतीति चेन्न प्राज्ञो हि प्रकरणात्, अव्यक्तस्य ज्ञेयत्वमिति व्यक्तधर्मभूतशब्दादिनिषेधानामव्यक्तपर्यवसानस्य न्याय्यत्वान्महतः परत्वोक्तेश्च सामान्येन यत्तच्छब्दनिर्दिष्टमपि कारणमव्यक्तमिति भावः । विज्ञानसारथिरिति, अनेन ज्ञेयस्य प्राज्ञस्य परमपुरुषासाधारणविष्णु–शब्देन प्रकृतत्वं दर्शितम्–

सू० "एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरि"ति प्राज्ञस्यैव प्रकृतत्वात् अत एव पुरुषान्न परं किञ्चिदिति न पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधस्तस्य च परमपुरुषस्याशब्दत्वादयोधर्माः यत्तदद्रेश्यमग्राह्यमित्यादिश्रुतिप्रसिद्धा महतः परमं ध्रुवमित्यपि बुद्धेरात्मा महान् पर इति पूर्वप्रकृताज्जीवात्मनः परत्वमेवोच्यते ॥

**सू० त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ५ ॥**

अस्मिन् प्रकरणे ह्युपायोपेयोपेतृणां त्रयाणामेव चैवमुप-

न्यासो ज्ञेयत्वेनोपन्यासस्तद्विषयश्च प्रश्नो दृश्यते नान्यस्याव्यक्तादेः, तथाहि नचिकेता नाम मुमुक्षुस्सन् मृत्युप्रदत्ते वरत्रये प्रथमेन वरेणात्मनः पुरुषार्थयोग्यताऽऽपादनीमात्मनि पितुस्सुमनस्कतां प्रतिलभ्य

टी० एष सर्वेष्विति, निचाय्येत्युक्तज्ञानस्य दृश्यत इति पदेन प्राज्ञविषयतया प्रकृतत्वं दर्शितम्, अवान्तरचोद्यपरिहारपरेऽस्मिन् सूत्रे परमप्रकृतपूर्वपक्षयुक्तिनिरासश्च अर्थसिद्ध इत्याह "अत एवे"ति, व्यक्तधर्मनिषेधानामव्यक्तपर्यवसानचोद्यस्य अदृश्यत्वाधिकरणे परिहृतत्वमाह "तस्य चे"ति, महतःपरत्वादव्यक्तमिह विवक्षितमित्यत्राह "महत"इति, इन्द्रियादिपरिकरवस्त्वलक्षणप्राधान्यविवक्षातिशयान्महच्छब्देनात्मनिर्देशः प्रकरणस्य प्राज्ञैकपरत्वं नास्ति प्रधानस्याऽपि प्रतिपाद्यमानत्वात्तस्मात् प्राज्ञपरत्वं न प्रधानपरत्वविरोधीत्यत्राह सूत्रकारः, सू० त्रयाणामेव चैवमुपन्यासः प्रश्नश्च, प्रथमश्च-शब्दो हेतुसमुच्चये, द्वितीयश्च-शब्दः प्रश्नोपन्यासयोः समुच्चये, कथमत्र त्रयाणामुपन्यासः? प्रश्नवाक्यं हि मुक्तमात्रविषयमिति शङ्कायां प्रतिवचनप्रकारेण प्रश्नार्थस्य विज्ञेयत्वात् प्रश्नवाक्येऽपि त्रयमपि पृष्टम्भवतीत्यभिप्रायेण प्रश्नस्य पश्चादुक्तिः, अस्मिन्नित्यादित्रयाणामिति पदमग्निजीवपरमात्मपरं परैर्व्याख्यातमिति तद्व्यावृत्त्यर्थमाह "उपाये"ति, एवमुपन्यास इति व्याख्येयं पदम् । एवं-पदं व्याचष्टे "ज्ञेयत्वेने"ति,ज्ञेयत्वावचनाच्चेति पूर्वसूत्रस्यज्ञेयत्वमेवं-शब्देन परामृश्यत इत्यर्थः तदुपपादयति "तथा ही"ति, नचिकेता इत्यादि प्रथमवरवरणं, द्वितीयपादेऽपि अत्ता चराचरग्रहणादित्यधिकरणे विस्तृतत्वादिह प्रतिलभ्येत्यन्तेन सङ्क्षिप्तन्तत्र सङ्क्षिप्तत्वाद् द्वितीयवरवरणं विस्तरेण दर्शयति-

श्रु० द्वितीयेन वरेण मोक्षसाधनभूतां नाचिकेताऽग्निविद्यां वव्रे, "स त्वमग्निंस्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यं स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरे-

णेति, स्वर्ग-शब्देनाच परमपुरुषार्थलक्षणमोक्षोऽभिधीयते अमृतत्वम्भजन्त इति तत्रस्थस्य जन्ममरणाभावश्रवणात् उत्तरत्र च क्षयिफलकर्मनिन्दादर्शनाच्च

टी० "द्वितीयेने"ति, मोक्षोपायभूतामिति नाचिकेताग्निविद्याया मोक्षोपायत्वमङ्गिद्वारा भवति, तच्च तस्याः परमात्मात्मकस्वात्मानुसन्धानगर्भत्वात्, तथा हि तदुभयं श्रूयते "लोकादिमग्निन्तमुवाच तस्मा"-दित्युपक्रम्य "ब्रह्मजज्ञन्देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमे'ति," त्रिना[1]चिकेतस्त्रयमेतद्विदित्वा "य एवं विद्वांश्चिनुते नाचिकेतम् । स मृत्युपाशात् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके" इति वाक्येन परमात्मतदात्मकस्वात्मतदनुसन्धानगर्भाग्निविद्याज्ञानपूर्वकं चिन्वानस्य शोकातिगत्वमुक्तं, यो वा एतां ब्रह्मजज्ञात्मभूतां चितिं विदित्वा चिनुते नाचिकेतं स एव भूत्वा ब्रह्मजज्ञात्मभूतः करोति तद्येन पुनर्न जायत" इति वाक्येन ब्रह्मात्मकचेतनदृष्ट्या वा तादृशदेवताधिष्ठितत्वेन वाऽनुसन्धानपूर्वकमग्निं चिन्वानस्यापुनर्भवहेतुभूतब्रह्मोपासनद्वारा मोक्षप्राप्तिरुक्ता, तृतीयवरवरणश्लोकार्थनिष्कर्षौपयिकतया द्वितीयवरवरणश्लोकमुपादाय तत्र व्याख्येयस्य स्वर्ग्यपदस्य प्रकृत्यंशं व्याचष्टे "स्वर्ग्ये"ति, मोक्ष-शब्दो मोक्षस्थानपरः लोक-शब्दसामानाधिकरण्यात्, भाष्ये तत्रस्थस्येति वक्ष्यमाणत्वाच्च, स्वर्ग-शब्दस्य मोक्षवाचित्वोपपादकः परमपुरुषार्थलक्षण-शब्दः स्वर्ग-शब्दस्य प्रकृष्टसुखोपलक्षणत्वान्मोक्षस्य निरवधिकानन्दरूपत्वाच्च स्वर्ग-शब्द-वाच्यत्वमिति भावः । प्रसिद्धस्वर्गपरत्वं किं न स्यात्? इत्यत्राह "अमृतत्वमि"ति, तत्रस्थस्येतिस्वर्गलोका इति हि बहुव्रीहिः, निरतिशयसुखरूपपरमव्योमस्था इति भावः । मोक्षवाचित्वे हेत्वन्तरमाह "उत्तरत्रे"ति, तृतीयवरवरणप्रश्ने श्वोभावामर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां जरयन्ति तेजः । अपि सर्वं जीवितमल्पमेवेति, तथा जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः

(१) त्रिणाचिकेत इति पा० ।

स एवे''ति तत्र नचिकेतसैव क्षयिफलस्य निन्दितत्वदर्शनात्, क्षयिफलवि-
मुखेन नचिकेतसा क्षयिफलसाधनप्रश्नानुपपत्तेरित्यर्थः । द्वितीयवरवरण-
प्रतिवचनावगतं हेत्वन्तरमाह—

श्रु० त्रि[1]णाचिकेतस्त्रिभिरेत्य संधिं "त्रिकर्मकृत्तरति जन्म-
मृत्यू इति च प्रतिवचनात्तृतीयेन वरेण मोक्षस्वरूपप्र-
श्नद्वारेणोपेयस्वरूपमुपेतृस्वरूपमुपायभूतानुष्ठितकर्मानुगृ-
हीतोपासनस्वरूपञ्च पृष्टं, "येयं प्रेते विचिकित्सा मनुष्ये
अस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वया-
ऽहं वराणामेष वरस्तृतीय" इत्येवम्मोक्षे पृष्टे तदुपदेश-
योग्यतां परीक्ष्योपदिदेश, "तन्दुर्दर्शं गूढमनुप्रविष्टङ्गुहा-
हितं गह्वरेष्ठं पुराणम् अध्यात्मयोगाधिगमेन देवम्मत्वा
धीरो हर्षशोकौ जहाती''ति, तदेवं सामान्येनोपदिष्टे
नचिकेताः प्रीतः सन् देवम्मत्वेत्युपास्यतया निर्दिष्टस्य
प्राप्यभूतस्य देवस्याध्यात्मयोगाधिगमेनेति

टी० "त्रिणाचिकेत''इति "त्रिणाचिकेतः अयं वाव यः पवत" इत्या-
द्यनुवाकत्रयाध्यायी त्रिकर्मकृत्—यजनाध्ययनदानकृत् पाकयज्ञहविर्यज्ञ-
सोमयज्ञकर्ता । त्रिभिरग्निभिर्हेतुभिः संधिं परमात्मोपासनेन सम्बन्धं
प्राप्य जन्ममृत्यू तरतीत्यर्थः । करोति तद्येन पुनर्न जायन्त इत्यनेनैकार्थ्यात्
तृतीयेनेति येयं प्रेत इति मन्त्रस्य देहातिरिक्तजीवस्वरूपमात्रप्रश्नपरत्व-
व्युदासायाह "मोक्षे''ति, अत्रोपायोपेयप्रश्नो गर्भित इति भावः । प्रतिव-
चनप्रकारेण प्रश्नार्थस्यावगन्तव्यत्वात्, प्रेते—परित्यक्तचरमशरीर इत्यर्थः
"न प्रेत्य संज्ञाऽस्ती''ति प्रयोगात्, अन्यथा पूर्ववरद्वयवरणानुपपत्तिर्हेतुः
पूर्वमुक्तत्वादिह न कण्ठोक्तः, इदं च विस्तरेणोपपादयिष्यामः । अस्मिंश्च
प्रकरणे नचिकेतोमरणम्मानुप्राप्तोरिति मरण—शब्दश्चरमदेहवियोगपरः

१ त्रिणाचिकेतस्त्रिभिरिति पुस्तकान्तर पा० ।

उक्तहेतोरेव "पञ्चविंशतितत्त्वज्ञः परमात्मा भवे[1]न्मृतः। स मुक्तस्तत्त्वसन्तानात् परेण समतां व्रजेदि"ति परमात्मसाम्यापन्ने मुक्तेऽमृत-शब्दस्य कपिलासुरिसंवादे प्रयुक्तत्वात्, "देवैरत्रापि विचिकित्सितं पुरे"त्यारभ्य "धृत्या धीरो नचिकेतोऽत्यप्राक्षी"रित्यन्तेनोच्यमानस्य दुरवगमत्वविविधप्रलोभनप्रश्नप्रतिषेधादिकमभिप्रेत्याह "तदुपदेशयोग्यतां परीक्ष्ये"ति, दुर्दर्शं द्रष्टुमनर्हं, कुतः गूढं-गुणत्रयतिरोहितत्वात्, अनुप्रविष्टं-शरीरमनुप्रविष्टं शरीरमनुप्रविष्टं, तत्राऽपि गुहाहितं-हृदयगुहागतं-गह्वरेष्ठं तदन्तर्गते वस्तुनि स्थितं जीवान्तस्थमित्यर्थः "जहातीत्युपदिदेशे"त्यन्वयः, येयं प्रेत इत्यादिवाक्यस्य जीवमात्रप्रश्नपरत्वे परमात्मविषयतया प्रतिवचनवैघट्यं स्यादित्यभिप्रायः। अस्मिन्वाक्ये स्वोक्तम् अर्थत्रितयमपि विशदयति "तदेवमि"ति, अध्यात्मयोग-शब्दः प्राप्तृस्वरूपविषययोगपर इत्यभिप्रयन्नाह—

सू० वेदितव्यतया निर्दिष्टस्य प्राप्तुः प्रत्यगात्मनश्च मत्वा धीरो हर्षशोकौ जहाति इति निर्दिष्टस्य प्राप्यब्रह्मोपासनस्य च स्वरूपविशोधनाय पुनः पप्रच्छ "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतादन्यत्र भूताद् भव्याच्च यत्तत्पश्यसि तद्वदे"ति, एवं सकलेतरातीतानागतवर्त्तमानसाध्यसाधनसाधकविलक्षणे त्रये क्रमेण पृष्टे प्रथमं

टी० "वेदितव्यतये"ति, तन्दुर्दर्शमिति मन्त्रेण त्रितयमप्युक्तं चेत्प्रष्टव्याभावात् पुनः प्रश्नानुपपत्तिरिति शङ्काऽपनोदनाय प्रश्नाकाङ्क्षाप्रयोजने दर्शिते, सामान्येनेति स्वरूपविशोधनाय पुनः पप्रच्छेति च पुनः पप्रच्छेति पाठः उपायोपेयोपेतृणां त्रयाणामपि सामान्येनोपदिष्टत्वात् स्वरूपशोधनाकाङ्क्षाऽपि सर्वसाधारणी, तत्कथमन्यत्र धर्मादिति मन्त्रेण परमात्ममात्रविषयप्रश्न इति शङ्कायां प्रश्नस्य[2] तृतीयविषयत्वमनुभाषणव्याजेन दर्श-

१ भवेत्स्मृतः" इति पा०।

२ त्रितयविषयत्वमिति पा०।

यं त्वदनन्तरमन्त्रस्याऽपि त्रितयविषयत्वमाह "एवं सकलेतरे"ति, काल-त्रयसंबन्धित्वं हि वक्ष्यमाणत्रितयस्याप्यस्ति तत्कथं विलक्षणत्वमिति शङ्का-व्युदासार्थम् इतर—शब्दः, वर्त्तमान—शब्देन कृताकृतशब्दो व्याख्यातः, प्रारब्ध-मसमाप्तं हि वर्त्तमानमुच्यते अन्यत्रेति वैलक्षण्यं विवक्षितं, धर्म—उपायः, धर्मादन्यत्र प्रसिद्धोपायविलक्षण उपाय इत्यर्थः। अधर्मः—धर्मेतर, उपेयः अध-र्मादन्यत्र प्रसिद्धसाध्यविलक्षणं फलमित्यर्थः। अस्मादिति बुद्धिस्थतत्साधको विवक्षितः, स एव उपेता, स हि प्रसिद्धोपेतृसाधकविलक्षणः-साधकावस्थाया-मितरफलविरक्तत्वात्फलदशायामाविर्भूतगुणाष्टकविशिष्टस्वरूपत्वाच्च कृ-ताकृतादिति धर्मादीनां विशेषणं, कृताकृताद्धर्मादेर्विलक्षणं यद्भूताच्च भव्या-च्च धर्मादेर्विलक्षणं यदित्यर्थः। यद्वा धर्मादधर्माच्चान्यत्र यदित्युपासनप्रश्नः पुण्यपापरूपसाधनविलक्षणत्वात् उपासनस्य कृताकृताद् भूताद् भव्याच्चा-न्यत्र यदिति कालापरिच्छिन्नमुपेयं पृष्टमुपेतुरपि चेतनस्य नित्यत्वात् प्राप्या-न्तर्भावाच्च, तत एव तस्याऽपि तन्त्रेण प्रश्नः, तदन्तर्गतञ्च प्राप्तृस्वरू-पमिति हि वक्ष्यते, त्रय इति यत्तच्छब्दौ त्रितयपराविति भावः। ननु धर्माधर्मसाध्यं त्रिकालवर्त्तिवस्तुविलक्षणपरमात्मविषयोऽयं मन्त्रः किं न स्यात्?—उच्यते धर्मादन्यत्रेत्युक्ते तदसाध्यत्वं न प्रतीयते, न ह्यदृष्टादन्य-दृष्टमित्युक्ते सत्यदृष्टासाध्यत्वं दृष्टस्य प्रतीयते, धर्माधर्मादिविलक्षणब्रह्म-विषयप्रश्नः स्यादिति चेन्न, प्रयोजनाभावात् कृताकृतात् भूताद् भव्या-दन्यत्रेत्यनेन कालपरिच्छिन्नार्थविलक्षणं वस्तु पृष्टं स्यात्, ततश्च धर्मा-धर्मवैलक्षण्यप्रश्नो विफल एव धर्माधर्मयोरपि कालपरिच्छिन्नवस्त्वन्तर्गत-त्वात्, अतः इतरोपायोपेयोपेतृविलक्षणत्रयप्रश्नपरत्वमुपपन्नम् ॥

भू० प्रणवं प्रशस्य तद्वाच्यं प्राप्यस्वरूपन्तदन्तर्गतञ्च प्राप्तृ-स्वरूपं वाचकरूपं चोपायं पुनरपि सामान्येन ख्यापयन् प्रणवन्तावदुपदिदेश, "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतदि"त्येवमुपदिश्य पुनरपि

**प्रणवं प्रशस्य प्रथमन्तावत् प्राप्तुः प्रत्यगात्मनः स्वरूपमाह "न जायन्ते म्रियते वा विपश्चिदि"त्यादिना**

टी० प्रणवं प्रशस्येति सर्वे वेदा इत्यादिपादत्रयोक्तपरब्रह्मप्रतिपादकतया प्रशस्येत्यर्थः, तत्ते पदं संग्रहेण ब्रवीम्योमितीति प्रणवेन ब्रह्मप्रतिपादनं ह्युच्यते, प्राप्यस्वरूपमिति, पद–शब्दः पद्यत इति व्युत्पत्त्या प्राप्यवाचीति भावः। तदन्तर्गतं–प्रणववाच्यान्तर्गतं प्रणववाच्यकदेशं प्रणवैकदेशवाच्यो ह्युपेता जीवः। यद्वा प्राप्ये प्रणववाच्ये परमात्मनि प्रकारतयान्तर्गतमित्यर्थः परिशुद्धजीवस्य प्राप्यान्तर्भावात्, पद–शब्दवाच्यान्तर्भूतत्वमितिभावः। वाचकरूपं चोपायमिति उपायोपाय्यतया प्रणवस्योपायत्वं उपायो हि ध्यानं वाचकशब्दश्च वाच्यस्मरणोपायः "ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्" "ओमित्यात्मानं ध्यायथ" "ओमित्येनेनैवाक्षरेण परं पुरुषमभिध्यायीते"ति, ध्यानोपायत्वं हि प्रणवस्यावगम्यते, तपांसि ज्ञानप्रधाना उपरि भागाः। ननु तत्ते पदं सङ्ग्रहेण ब्रवीमीति प्राप्यस्वरूपपरत्वं हि प्रतीयते, तत्कथं त्रितयख्यापने तात्पर्यं कथं ब्रह्मणो जिज्ञास्यत्वे प्रतिज्ञाते तदनुबन्धिनां जिज्ञास्यत्वसिद्धिः, तदुपयुक्तत्वादुत्तरत्र निरूप्यमाणत्वाच्च अर्थतः प्रतिज्ञातत्वसिद्धेरिति चेदिहाऽपि ब्रह्मवेदनोपयुक्तत्वादुत्तरत्र प्रतिपाद्यमानत्वाच्च उपायोपेत्रोरपि प्रतिपाद्यत्वं न केवलमुपयोगादिमात्रात् किन्तु पद–शब्दवाच्यान्तर्भावश्च दर्शितः एतद्ध्येवाक्षरं ब्रह्मेत्यादिवाक्याभिप्रायेणाह "पुनरपि प्रणवं प्रशस्ये"ति, न जायते म्रियते वा इत्यादिमन्त्रद्वयस्य परमात्मपरत्वानुपपत्तिं मन्यमान आह "प्राप्तुः प्रत्यगात्मन" इति, का पुनरनुपपत्तिः? उच्यते इदं मन्त्रद्वयन्तावदेकविषयं "न हन्यते हन्यमाने शरीरे इत्येतद्विवरणरूपत्वाद् द्वितीयमन्त्रस्य हन्ता चेदिति मन्त्रश्च जीवविषय एव लोकस्य परमात्मनि हन्तृहन्तव्यभावप्रतिपत्त्यभावात्तत्प्रतिषेधानुपपत्तेः, परमात्मा हि प्रत्यक्षागोचरः कथं तस्मिन् वध्यतादिप्रतिपत्तिः, अहमेनं हन्मि अयं मां हन्तुम् आगच्छतीति वध्यघातुकभावाभिमानो हि जीवविषय एव देहिनाम्भवति। ननु नास्य जरयैतज्जी-

र्यते न वधेनास्य हन्यत इतिवत् परमात्मन्यपि हननप्रतिषेध उपपद्यते सत्यं, तत्र दहराकाशस्य देहान्तःस्थित्या शङ्कितविकारादिप्रतिषेध उपपद्यते, इह तु लोकसिद्धभ्रान्तिरनूद्य प्रतिषिध्यते "हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीत" इति, परमात्मनि वध्यघातुकभ्रान्तिर्न कस्य चिदप्यस्ति, अतोऽनुवादनिषेधावनुपपन्नौ न जायत इति मन्त्रश्च तेनैकार्थः,

सू० एवं प्रश्नस्य प्रथमं तावत्प्राप्तुः प्रत्यगात्मनः स्वरूपमाह न जायते म्रियते वा विपश्चिदित्यादिना प्राप्यस्य परस्य ब्रह्मणो विष्णोः स्वरूपम् अणोरणीयानित्यादिना क इत्था वेद यत्र स इत्यन्तेनोपदिशन्मध्ये "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेने"त्यादिनोपायभूतस्योपासनस्य भक्तिरूपतामप्याह "ऋतम्पिबन्तौ-विति" चोपास्यस्योपासकेन

टी० अतो मन्त्रद्वयमपि जीवविषयम् अणोरणीयानित्यादेरर्थमाह "प्राप्यस्ये"ति, "न जायते म्रियत इत्यादिना अणोरणीयानित्यादिना च जीवपरयोः स्वरूपे कथिते ऋतम्पिबन्ताविति मन्त्रेण तयोः प्रतिपादनवैयर्थ्यशङ्कापरिहारायाह "सूपासतामुक्त्वे"ति, एतद्वाक्यस्योपादानं परकृतव्याख्याननिरासफलकतयेति वक्ष्यामः, उपसंहृतमिति प्रकृतोपसंहारस्यापेक्षितत्वादर्थान्तरपरत्वस्यासङ्गतत्वाच्चेति भावः । सूत्रार्थं निगमयति "अतस्त्रयाणामि"ति, सूत्रार्थं परमप्रकृतार्थेन घटयति "तस्मान्नेह"ति, ननु त्रयाणामिति पदमग्निजीवपरमात्मपरं किं न स्यात्? तेषां हि प्रश्नोपन्यासौ दृश्येते "सत्त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि" "येयं प्रेते" "अन्यत्र धर्मादि"ति त्रयाणां क्रमेण प्रश्नः "लोकादिमग्निं तमुवाच तस्मै या इष्टकाः" "हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनं यथा हि मरणं प्राप्यात्मा भवति गौतम?" "न जायते वा म्रियते वा विपश्चिदि"ति प्रतिवचनञ्च न च जीवविषयप्रश्नस्य परमात्मविषयप्रतिवचन-

वैघट्यम् ऐक्यस्य विवक्षितत्वादुपपत्तेरिति—उच्यते अत्रानतिविरोधेऽपि भाष्यकारोक्तार्थ एव युक्ततरः, तथाहि—जीवस्तावदुपेता परमात्मा चोपेयः अग्निविद्या च ब्रह्मोपासनाङ्गत्वेनोपायान्तर्भूता तदन्तर्भावश्च प्राकरणिकवाक्यैर्दर्शितः, अग्नेरपि पृथगेव विवक्षितत्वेऽग्निजीवपरमात्मतदुपासनानां चतुर्णां प्रतिपाद्यत्वं दर्शनात् त्रयाणामेवेत्यवधारणमयुक्तम्, अतोऽग्नेरप्युपायान्तर्भावविवक्षाऽङ्गीकार्या, तथासति उपायोपेयोपेतॄणामेव व्याख्याने युक्ततरम् उपासनोपदेशश्च अत्र स्फुटतरमुपलभ्यते "नायमात्मा प्रवचनेन लभ्यः" "नाविरतो दुश्चरितादित्यादिना केवलश्रवणादिविलक्षणः परमात्मवरणीयताहेतुभूतः प्रकृष्टज्ञानविशेषो ह्युपायतयाऽभिधीयते, अवधारणं प्राधान्यव्यावृत्तिपरम् उपायस्योपेयप्राप्त्यर्थतया परमात्मन्यन्तर्भावात् त्रित्वाविरोध इति चेत्तर्हि त्रयाणामुपन्यासः प्रधानस्याऽप्रतिपाद्यत्वे हेतुरेव न भवितुमर्हति अर्थान्तरान्तर्भावसहत्वात्, प्रश्नोपन्याससमुच्चयस्तु त्रयाणामेव, न ह्युपायस्य प्रश्नो दृश्यते, अतोऽवधारणोपपत्तिरिति चेच्च अस्मिन् प्रकरणे प्रश्नोपन्याससमुच्चयस्य प्रतिपाद्यत्वे हेतुत्वाभावात्तदभावेन प्रतिपाद्यत्वाभावस्य दुर्वचत्वात्, उपायोह्यपृष्ट एवोपन्यस्तः सोऽप्यर्थतः पृष्ट इति प्रश्नोपन्याससमुच्चयोऽस्मिन् प्रकरणे प्रतिपाद्यत्वे हेतुरिति चेत्तर्हि चतुर्णामिति वक्तव्यं शब्दादर्थतश्चतुर्णां प्रश्नोपन्याससम्भवात् ।

सू० सद्यवस्थानां सूपास्यतामुक्त्वा "आत्मानं रथिनं विद्धी"त्यादिना "दुर्गं पथस्तत्कवयो वदन्ती"त्यन्तेनोपासनप्रकारमुपासीनस्य च वैष्णवपरमपदप्राप्तिमभिधाय "अशब्दमस्पर्शमि"त्यादिनोपसंहृतम्, अतस्त्रयाणामेवात्र ज्ञेयत्वेनोपन्यासः प्रश्नश्च, तस्मान्नेह तान्त्रिकस्याऽव्यक्तस्य ग्रहणम् ॥

टी० यदि कण्ठोक्त्यैव प्रश्नोपन्याससमुच्चयो विवक्षितः तस्य प्रतिपाद्यत्वे प्रयोजकत्वाभावस्य प्रतिपाद्यमानोपासन एव दृष्टतया समुच्चयाभावस्याऽप्रतिपाद्यत्वे हेतुत्वायोगात् । किञ्च येयं प्रेत

इत्यस्य देहातिरिक्तजीवसद्भावासद्भावप्रश्नविषयत्वं चानुपपन्नं देहातिरिक्तात्मसद्भावनिश्चयरहितस्य पितृसौमनस्याग्निविद्यावरणयोरनुपपत्तेः, अग्निप्रश्नवाक्य एव स्वर्गलोका अमृतत्वं भजन्त इति देहातिरिक्तात्मज्ञानवत्त्वमवगम्यते, तत्प्रतिवचन एव "त्रिकर्मकृत्तरति जन्ममृत्यू करोति तद्येन पुनर्न जायत" इत्यपवर्गरूपपुरुषार्थोपयोगित्वमग्निविद्यायामवगतं कुतो देहातिरिक्तात्मसन्देहसम्भवस्तस्मादपवर्गप्रकारविशेष एव सन्देहसम्भवः, अतस्तत्प्रकारविशेषप्रश्नपरत्वं येयं प्रेत इत्यादिवाक्यस्य युक्तं, यदीदं देहातिरिक्तात्मसद्भावासद्भावप्रश्नपरत्वमस्य "तं दुर्दर्शमिति परमात्मविषयप्रतिवचनं च न घटते, जीवपरयोरैक्यज्ञापनार्थं तथा प्रतिवचनमिति चेन्न परमात्मविषयप्रतिवचन एव "ऋतम्पिबन्तौ सुकृतस्य लोके" इति जीवपरयोर्भेदप्रतिपादनेन तद्विरुद्धार्थाभिप्रायकल्पनाऽनुपपत्तेः, न च भेदानुवादः सर्वज्ञताद्याकारेण जीववैलक्षण्यस्य लौकिकप्रमाणागोचरत्वात्, विहितस्य निषेधायोगाच्च। न च बुद्धिजीवपरोऽयं मन्त्रः गुहां प्रविष्टावित्यत्रास्य मन्त्रस्य बुद्धिजीवपरत्वं पूर्वपक्षीकृत्य जीवपरमात्मपरत्वस्य भवद्भिरेवास्य गो[1]बलीवर्दन्याय इति न्यायेन सिद्धान्तितत्वात् "यदेवेह तदमुत्र यदमुत्र [2]तदन्वेहे"ति हृदयायतन उपास्यतया स्थितस्य परमपुरुषस्यादित्यमण्डलान्तर्वर्तित्वमुच्यत इति न जीवपरयोरैक्यप्रतीतिः, मृत्योस्स मृत्युमाप्नोतीति वाक्यमुपसंहारगतमेतदपेक्षया दुर्बलं भेदसामान्यनिषेधरूपत्वाद्विहितभेदः विशेषव्यतिरिक्तविषयं चातः श्रुतभेदविरुद्धाभिप्रायकल्पनायोगात् प्रतिवचनवैघट्यमेव। किञ्च येयं प्रेत इति प्रथमखण्डस्थं प्रश्नं प्रतिप्रश्नान्तरवचनान्तरव्यवहितस्य पञ्चमखण्डस्थस्य हन्त त इदं प्रवक्ष्यामीति वाक्यस्य प्रतिवचनत्वं चायुक्तम्, अर्थक्रमः पाठक्रमात्प्रबल इति तेन तद्बाध इति चेन्न मध्ये जीवपरवाक्यस्य सद्भावात् तच्च दर्शितम्। किञ्च यन्मयञ्च जगद्ब्रह्मन्नित्यादाविव यदा प्रतिवचनाव्यवहिताः प्रश्नाः प्रश्नाव्यवहितानि च प्रतिवचनानि स्युः तदा क्रमको उपपद्येते को देवदत्तः दण्डी, को यज्ञदत्तः कुण्डी, को विष्णुमित्रः, कमण्डलुमानितिवदेकैकप्रश्नान्तरं तत्प्रतिवचनदर्श-

१ गोर्बलीवर्दन्याय इति न्यायेन इति पा० ।
२ तदन्विहेति पा० ।

नाद्यन्तद्वत्तप्रश्नोत्तरस्य देवदत्तप्रश्नोत्तरत्वकल्पनवत् क्रमकोपकल्पनमत्यक्तानुपपन्नं, येयं प्रेत इति च न जीवसद्भावासद्भावमात्रप्रश्न इत्युक्तमतो येयं प्रेत इति श्लोकः शब्दोऽर्थतश्च मोक्षानुबन्धितया ज्ञातव्यार्थत्रयविषयः, तथा च सति तं दुर्दर्शमित्यादि प्रतिवचनमतीव घटते, अन्यत्र धर्मादिति पुनः प्रश्नाकाङ्क्षा तस्यार्थश्च दर्शितौ, अर्थत्रयस्य चैकश्लोकेन पृष्टत्वस्य विवक्षितत्वात्प्रतिवचनाच्च त्रयाणामेवेत्यवधारणं च युक्तमत एव न जायत इति जीवविषयवाक्यस्याणोरणीयानिति परमविषयवाक्यस्य नायमात्मेत्युपायविशेषवाक्यस्य च प्रतिवचनत्वं सुघटितं प्रश्नप्रतिवचनान्तराव्यवहितत्वं च सिध्यति, एकप्रश्नेनैवार्थत्रयस्य पृष्टत्वे सूत्रस्यप्रश्नोपन्यास-शब्दगतैकवचनस्वारस्यं च भवति, न ह्युपन्यासाः प्रश्नाश्चेत्युक्तं यतो येयं प्रेत इति प्रश्नोऽर्थत्रयविषयः, अत एवेह प्रशंसाप्रलोभनविद्याऽविद्याविभागकथनादिकमञ्जसोपपद्यते, अतो यथोक्त एव सूत्रार्थः ॥

## सू० महद्वच्च ॥ ६ ॥

सू० यथा "बुद्धेरात्मा महान् पर इ"त्यत्रात्म-शब्देन सामानाधिकरण्यान्न तन्त्रसिद्धमहत्तत्त्वं गृह्यते, एवमव्यक्तमप्यात्मनः परत्वेनाभिधानान्न कापिलतन्त्रसिद्धं गृह्यत इति स्थितम् । आनुमानिकाधिकरणं समाप्तम् ॥

टी० सू० महद्वच्च, तन्त्रसिद्धमहत्तत्त्वाग्रहणे सूत्राभिप्रेतं हेतुमाह "आत्म-शब्दसामानाधिकरण्यादि" ति, आनुमानिकाधिकरणं समाप्तम् ॥

चमसाधिकरणम् । **सू० चमसवदविशेषात् ॥ ७ ॥**

अत्राऽपि तन्त्रसिद्धप्रक्रिया निरस्यते, न ब्रह्मात्मकानां प्रकृतिमहदहङ्कारादीनां स्वरूपं श्रुतिस्मृतिभ्यां ब्रह्मात्मकानां तेषां प्रतिपादनात्, यथा आथर्वणिका अधीयते "विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्ध्यायतेऽध्यासिता तेन तन्यते प्रेर्य्यते पुनः सूयते पुरुषार्थं च ।

टी० सू० चमसवदविशेषात्, कार्यशरीरवाचिपदस्य रूपके श्रवणात्तदव्यक्त-शब्देनोच्यत इत्युक्तम्, अत्र तु कार्यशरीरवाचिशब्दाश्रवणात् कारणं प्रधानमेवोच्यत इति शङ्कया सङ्गतिः, व्याख्यान्तरे गौणवृत्त्या तेजोऽबन्नपरत्वेन व्याख्यातं, किमिदं वाक्यं प्रधानपरम्? उत तेजोऽबन्नपरमिति विचारश्च कृतः एतद्दूषयितुं किं श्रुत्यन्तरस्यार्थमेवं व्याख्यातम् उत? स्ववाक्यस्वारस्यार्थमिति विकल्पमभिप्रेत्य स्ववाक्यस्वारस्याभावमुत्तरत्र वक्ष्यन् प्रथमं प्रधानस्य प्रामाणिकतया तन्निरासे श्रुत्यन्तरास्वारस्यज्ञापनाय प्रधानविषयवाक्यजातमुदाहर्तुमाह "अत्रापी"ति, विकारजननीमित्यादि अष्टरूपत्वं भूमिराप इत्याद्युक्तप्रकारेण अजाम्—उत्पत्तिरहितां ध्रुवां—नाशरहितां ध्यायते परमात्मनासङ्कल्परूपज्ञानेन ज्ञायते अध्यासिता अधिष्ठिता तन्यते—विस्तार्यते स्थूलत्वावस्थं क्रियते समष्टिभूतरूपेण क्रियते प्रेर्यते—व्यष्टिसृष्ट्यर्थं प्रेर्यते ।

सू० तेनैवाधिष्ठिता जगत् । गौरनाद्यन्तवती सा जनित्री भूतभाविनी । सितासिता च रक्ता सर्वकामदुघा विभोः पिबन्त्येनामविषमामविज्ञाताः कुमारकाः । एकस्त्वपिबते देवस्स्वच्छन्दोऽत्र वशानुगान्ध्यानक्रियाभ्यां भगवान् भुङ्क्तेऽसौ प्रसभं विभुः । सर्वसाधारणीं दोग्ध्रीं पीड्यमानान्तु यज्वभिः। चतुर्विंशतिसङ्ख्याकमव्यक्तं व्यक्तमुच्यत" इत्यत्र प्रकृत्यादीनां स्वरूपमभिहितम् ।

टी० पुरुषार्थं—पुरुषाणामर्थनीयं भोगोपकरणभोगस्थानरूपं जगत् सूयते, गौरित्यादि जनित्री भूतभाविनीति समष्टिव्यष्टिसृष्टिरुच्यते, सितासिता च रक्ता च गौण्या वृत्त्या सत्त्वरजस्तमोमयी । यद्वा तेजोऽबन्नद्वारा सितासिता रक्ता विभोरीश्वरस्य सर्वकामदुघा, लीला रसदोग्ध्री अविषमां भोक्तृकर्मानुगुणपरिणामित्वादपक्षपातिनीम् अविज्ञाताः—स्वात्मभिर्देहेभ्यो विविच्यापरिज्ञाताः एकस्त्विति कर्मवश्यबहुभोक्तृव्यावृत्त्यर्थमेकः स्वच्छन्द

इत्युक्तं, ध्यानक्रियाभ्यां सङ्कल्पसर्गादिव्यापाराभ्याम् एतताऽसृजतेति द्वयमपि हि श्रूयते, पीड्यमानान्तु यज्वभिरिति वत्सा हि मातरं क्षीरक्षरणार्थं पीडयित्वा भुञ्जते तद्वत्कर्मवश्यैरात्मभिर्भोक्तृत्वफलानुरूपं परिणाम्यमाना-मित्यर्थः, अत्रेति प्रकृत्यादीनां प्रकृतिपुरुषमहदादीनां स्वरूपमभिहितं एषु वाक्येषु ईश्वरप्रतिपादनं प्रधानादीनामीश्वरतादधीन्यविशिष्टत्वपरमिति भावः । एवं ब्रह्मात्मकप्रधानपरवाक्यान्युक्तानि अथ तदन्तदन्तर्यामि-भगवत्प्रतिपादकं वाक्यं दर्शयितुमाह—

सू० यदात्मकाश्चैते प्रकृत्यादयः स परमपुरुषोऽपि तं षड्विंशकमित्याहुः । सप्तविंशमथापरे पुरुषं निर्गुणं सांख्यमथर्वशिरसो विदुरिति प्रतिपाद्यते, अपरे चाथर्वणिका-श्चाष्टौ प्रकृतयः षोडश विकारा इत्यधीयते, श्वेताश्वतरा-श्चैवं प्रकृतिपुरुषेश्वरस्वरूपमामनन्ति, संयुक्तमेतत् क्षर-मक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः अनीशश्चा[१]ऽन्यो बध्यते भोक्तृभावात् । ज्ञात्वा देवं मुच्यते सर्वपा[२]शैः । ज्ञाज्ञौ द्वावजावीशनीशाव ह्येका भोक्तृभोगार्थयुक्ताऽनन्तश्चात्मा विश्वरूपो ह्यकर्त्ता । त्रयं यदा विन्दते ब्रह्मचैतत् क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः । तस्या-भिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्ति-रिति, तथा "छन्दांसि यज्ञाः क्रतवो व्रतानि । भूतं भव्यं यच्च दे[३]वा वदन्ति" "अस्मान्मायी सृजते विश्वमेतत्तस्मिं-श्चान्यो मायया सन्निरुद्धः "मायान्तु प्रकृतिं विद्यान्मा-यिनन्तु महेश्वरन्तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जग-

१ अनीशश्चात्मा बध्यते इति पा० ।
२ सर्वपाशैरिति पा० ।
३ वेदा इति पा० ।

दि''ति, तथोत्तरत्राऽपि ''प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुरि''ति

टी० ''यदात्मका''इति, षड्विंशकत्वं कालस्य विशेषणत्वेन प्रकृतितद्विकारेष्वन्तर्भावात्, सप्तविंशकत्वं कालस्य पृथग्विवक्षया पञ्चविंशकेष्वेव लब्धैश्वर्यः कश्चिदुक्तः पञ्चविंशकस्तुत्यर्थमित्यन्यथासिद्धिरीश्वरप्रतिपादनस्य वक्तुमशक्या, संख्यातः पृथङ् निर्देशादित्यभिप्रायः प्रकृतेः प्रामाणिकत्वमात्रदर्शनार्थमुक्तम् अष्टौ प्रकृतय इति, अत्रापि वाक्यान्तरैकार्थ्याद् ब्रह्मात्मकत्वं सिद्धमिति भावः । एतत् त्रयं यदा विन्दते तदा ब्रह्म भवति मुक्तो भवतीत्यर्थः । अभिध्यानम्—आरम्भणं संशीलनं, योजनं योगः तत्त्वभावः । तत्त्वाविर्भावः साक्षात्कारः अवयवभूतैरंशभूतैश्शरीरभूतैरित्यर्थः । स्मृतिं दर्शयति—

सू० स्मृतिरपि ''प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि । विकारांश्च गुणांश्चैव । विद्धि प्रकृतिसम्भवान् कार्य्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषस्सुखदुःखानाम्भोक्तृत्वे हेतुरुच्यते ॥ पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु । सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः । निबध्नन्ति महाबाहो देहे देहिनमव्ययम् । तथा ''सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् । कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् । प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः । भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् । मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम् । हेतुनाऽनेन कौन्तेय? जगद्विपरिवर्त्तते'' इति, तस्माद्ब्रह्मात्मकत्वेन कापिलतन्त्रासिद्धाः

१ तदनन्तर्भावविवक्षया इति पा० ।

सू० प्रकृत्यादयो निरस्यन्ते, श्वेताश्वतरोपनिषदि श्रूयते "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य" इति, तत्र सन्देहः किमस्मिन्मन्त्रे केवला तन्त्रसिद्धा प्रकृतिरभिधीयते ? उत ब्रह्मात्मिके ? ति, किं युक्तं केवलेति, कुतः अजामेकामित्यस्याः प्रकृतेरकार्य्यत्वश्रवणाद् बह्वीः प्रजाः सृजमानां सरूपाः इति

टी० "स्मृतिरपी"ति, एवं प्रधानस्य प्रामाणिकत्वादतत्परत्वेन व्याख्यानमनुपपन्नम् इत्युक्तन्ततः किमित्यत्राह "तस्मादि"ति, प्रकृत्यादय इत्यादि-शब्देन महदादिरभिप्रेतः । विषयादिकं दर्शयति "श्वेते"ति, प्रकृतेरेव कर्तृत्वप्रतीतिजनकवाक्यजातं विषयः अचेतनत्वसृजमानपदस्वारस्याभ्यां संशयः, श्वेताश्वतरे अजामेकामिति मन्त्रे अजा-शब्दो यौगिकः किमब्रह्मात्मकप्रकृतिपर ? उत ब्रह्मात्मकप्रकृतिपर ? इति विचारः अजा-शब्दसृजमानशब्दौ किमजायाः स्वातन्त्र्येण स्रष्टृत्वमवगमयतो ? नेति तैत्तिरीयके अजामेकामिति मन्त्रे प्रतिपन्नाया अजायाः किं ज्योतिरुपक्रमत्वमस्ति नेति किमजात्वज्योतिरुपक्रमत्वे विरुध्येते ने ? ति यदा विरुध्येते तदा तैत्तिरीयकमन्त्रसिद्धाया अजाया ज्योतिरुपक्रमत्वाभावेन तदैकार्थ्यादजां सृजमानामिति पदयोः स्वातन्त्र्येण स्रष्टृत्वावगमकत्वात् श्वेताश्वतरमन्त्रस्योऽजा-शब्दो ब्रह्मात्मकत्वशून्यप्रकृतिपरः । यदा न विरुध्येते तदा तैत्तिरीयकमन्त्रसिद्धाया ज्योतिरुपक्रमत्वेन तदैकार्थ्यात् अजां सृजमानामिति पदयोः स्वतन्त्रस्रष्टृत्वावगमकत्वाभावात् श्वेताश्वतरमन्त्रस्योऽजा-शब्दोऽपि ब्रह्मात्मकप्रधानपर इति अजामिति ब्रह्मात्मकत्व पक्षे अजात्वं न संभवति तत्कार्यत्वाभ्युपगमादित्यर्थः,

सू० स्वातन्त्र्येण सरूपाणां बह्वीनां प्रजानां स्रष्टृत्वश्रवणाच्चेत्येवम्प्राप्तेऽभिधीयते सू· चमसवदविशेषात्, इति, नाऽ-

ऽत्र तन्त्रसिद्धा प्रकृतिरभिधीयते कुतः न जायते इत्यजेत्यजात्वमात्रप्रतिपादनात् तन्त्रसिद्धा ब्रह्मात्मकाऽजाग्रहणे विशेषाप्रतीतेः, चमसवत् यथा "अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इत्यस्मिन्मन्त्रे चमसस्य भक्षणसाधनत्वमात्रं चमसशब्देन प्रतीयते इति न तावन्मात्रेण चमसविशेषप्रतीतिः यौगिकशब्दानामर्थप्रकरणादिभिर्विनाऽर्थविशेषनिश्चयाऽयोगात् तत्र च "यथेदन्तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न" इत्यादिना वाक्यशेषेण शिरसश्चमसत्वनिश्चयः

टी० स्वातन्त्र्येणेति सृजमानामिति कर्त्तरि शानच् स्वतन्त्रः कर्त्ता अतो न ब्रह्मपरतन्त्रत्वमित्यर्थः । एवं प्राप्त इति अत्राऽपि कापिलतन्त्रसिद्धप्रक्रिया निरस्यत इत्युपक्रमस्थं प्रतिज्ञावाक्यमनुषज्यते इति मत्वा हेतुमाह "न जायत इती"ति, अथवा न जायत इतीत्यादिना हेतुपदं विवृण्वन् चमसवदिति सौत्रं पदं प्रतिज्ञापरम्मत्वा तेन हेतुपदस्यान्वयं दर्शयति "चमसवदि"ति, विशेषाप्रतीतेरित्यन्तं हेतुपदव्याख्यानम्, अवयवशक्त्याऽजात्वमात्रप्रतिपादनेन विशेषाप्रतीतिश्चमसवद्भवति वाक्यान्तरमन्तरेण विशेषतोनिर्णेतुमशक्या भवतीत्यर्थः । तदेव विवृणोति "यथाऽर्वागि"ति, अस्य यथा-शब्दस्य तथाऽत्रापीति भाष्येणान्वयः, चमसशब्दार्थं विशदयति "भक्षणसाधनत्वमात्र"मिति, चम्यतेऽनेनेति चमस-शब्दव्युत्पत्तिरिति भावः । मात्र-शब्देन विशेषव्यावृत्तिः, इति-शब्दो हेतुपरः विशेषप्रतीत्यभावादित्यर्थः, विशेषप्रतीत्यभावे चमसः साधर्म्यदृष्टान्ततया व्याख्यातः, चमसवदित्यनेनार्थसिद्धान्तदार्ष्टान्तिकसाधारणाकारहेतुं दृष्टान्तोपपादकत्वेन दर्शयति "यौगिकशब्दानामि"ति, साधारणमवयवार्थं बोधयतां यौगिकशब्दानामित्यभिप्रायः, तेनासाधारणावयवार्थबोधकबलभिदादिशब्दव्यावृत्तिः अर्थो वस्तुसामर्थ्यम् आदि-शब्दः

स्ववाक्यस्थविशेषशब्दादिपरः, विशेषनिश्चयायोगादित्यस्य पूर्ववाक्येनान्वयः, अवयवशक्तेस्साधनमात्रप्रत्यायकत्वादर्थप्रकरणादिभिर्विना विशेषनिश्चयायोगाच्चमस–शब्देन यथा न चमसविशेषप्रतीतिरित्यर्थः । ननु यथा चमसविशेषो वाक्यशेषावसेयः तद्वदजाविशेषोऽपि हेत्वन्तरेण निश्चेतुं शक्यते इति शङ्कायां परपक्षे तथा निश्चयस्याशक्यतां दर्शयितुं स्वपक्षे विशेषनिश्चयप्रकारमाह "तत्र यथेदं तच्छिर" इति, यथेति श्रुतिपदं दृष्टान्ते दर्शितस्य न्यायस्य दार्ष्टान्तिकेऽप्यवर्जनीयत्वमाह–

सू० तथा अत्राऽप्यर्थप्रकरणादिभिरेवाजा निर्णेतव्या, न चाऽत्र तन्त्रसिद्धाऽजाग्रहणहेतवोऽर्थप्रकरणादयो दृश्यन्ते, नचास्या विशेषग्रहे स्वातन्त्र्येण स्रष्टृत्वं प्रतीयते बह्वीः प्रजाः सृजमाना इति स्रष्टृत्वमात्रप्रतीतेः, अतो ऽनेन मन्त्रेण नाब्रह्मात्मिकाऽजाऽभिधीयते॥ ब्रह्मात्मि[1]काजाग्रहण एव विशेषतो हेतुरस्तीत्याह–

सू० ज्योतिरुपक्रमात् तथा ह्यधीयत एके॥ ९ ॥

तु–शब्दोऽवधारणार्थः, ज्योतिरुपक्रमैवैषाऽजाज्योतिर्ब्रह्म तद्देवा ज्योतिषां ज्योतिः अथ यदतः परो दिवो ज्योतिर्दीप्यत इत्यादिश्रुतिप्रसिद्धेः, ज्योतिरुपक्रमा ब्रह्मकारणिकेत्यर्थः, तथाऽह्यधीयत एके, हिर्हेतौ, यस्मादस्या अजाया ब्रह्मकारणकत्वमेके शाखिनस्तैत्तिरीया अधीयते "अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोर्निहितं गुहायामिति हृदयगुहायामुपास्यत्वेन स-

१ ब्रह्मात्मकाजा इति तु युक्तः पाठः ।

न्निहितं ब्रह्माभिधाय सप्त प्राणाः प्रभवन्ति तस्मादि-
त्यादिना

टी० "तथा अत्राऽपी"ति, यथाऽर्वाग्बिलश्चमस इति मन्त्रे न चमस-विशेषप्रतीतिः तत्र विशेषनिश्चयश्च निश्चायकवाक्यान्तराधीनः, तथाऽत्राऽपि निश्चायकान्तरेणाऽजाविशेषनिश्चयः कार्य इत्यर्थः । ततः किमित्यत्राह "न चात्रे"ति, सृजमानामिति स्वातन्त्र्येण स्रष्टृत्वप्रतीतिर्विशेषनिश्चायिकेत्यत्राह "न चास्या" इति, स्वातन्त्र्येण-ईश्वराधिष्ठितत्वमन्तरेणेत्यर्थः, स्रष्टृत्वमात्रप्रतीतेरिति स्वव्यापाराश्रयत्वलक्षणं स्वातन्त्र्यमेव प्रत्ययवाच्यं न त्वपरप्रेर्यत्वरूपमिति मात्र-शब्दाभिप्रायः, रथो गच्छतीत्यत्र कर्तृप्रत्ययो हि स्वव्यापाराश्रयत्वरूपं स्वातन्त्र्यं रथस्यावगमयति न त्वपरप्रेर्यत्वम्, अपरप्रेर्यत्वलक्षणस्वातन्त्र्यप्रतीत्यभ्युपगमेऽपि तादृशस्वातन्त्र्यलक्षणकर्तृत्वं ? किं प्रकृत्याश्रयमुताजा--शब्दवाच्यप्रकृतिशरीरकब्रह्माश्रय ? मिति विशयेप्रकृतिमात्राश्रयमिति निश्चायकाभावश्च मात्र-शब्दाऽभिप्रेतः, यदि ब्रह्मात्मकत्वं प्रामाणिकं स्यात्तदानीम् इह प्रतीयमानं स्वातन्त्र्यलक्षणं कर्तृत्वं हि तद्गततया ब्रह्मात्मकत्वाऽविरोधि स्यात् ॥ उत्तरसूत्रमवतारयति "ब्रह्मात्मके"ति, सू· ज्योतिरुपक्रमात् तथा ह्यधीयत एके, तु-शब्दस्य पक्षव्यावर्त्तकत्वशङ्काव्युदासाय व्याचष्टे "तु-शब्द" इति, इतरेतरार्थव्यावृत्त्यर्थं श्रुतिप्रसिद्ध्यनुरोधेन व्याचष्टे "ज्योतिर्ब्रह्मे"ति, तदेव दर्शयति "तं देवा"इति, ब्रह्मकारणत्वपरतां प्रकरणे दर्शयति "अणोरणीयानि"ति, न ह्यजामेकामित्यस्मिन् मन्त्रे उत्पत्तिः प्रतीयत इत्यत्राह-

भू० सर्वेषां लोकानां ब्रह्मादीनाञ्च तत उत्पत्तिमभिधाय सर्वकारणीभूताजा तत उत्पन्नाऽभिधीयते "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् अजो ह्येको जुषमाणोऽनुशेते जहात्येनाम्भुक्तभोगामज्योऽन्य इति सर्वस्य तद्व्यतिरिक्तस्य वस्तुजातस्य तत उत्पत्त्या

तदात्मकत्वोपदेशे प्रक्रियमाणे ऽभिधीयमानत्वात्प्राणसमु-द्रपर्वतादिवदेषाऽप्यजा बह्वीनां सरूपाणां प्रजानां स्रष्ट्री कर्म्मवश्येन आत्मना भुज्यमानाऽन्येन विदुषाऽऽत्मना त्यज्यमाना च ब्रह्मण उत्पन्ना ब्रह्मात्मिकाऽवगन्तव्येत्यर्थः, अतो वाक्यशेषाच्चमसविशेषवच्छाखान्तरीयादेतत्सरूपात्प्रत्यभिज्ञायमानार्थाद्वाक्यान्नियमिताऽजा ब्रह्मात्मिकेति निश्चीयते ॥

टी० "सर्वस्ये"ति, यथा इडो यजति बर्हिर्यजति तनूनपातं यजतीत्यादिष्वङ्गत्वाश्रवणेऽपि दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिप्रकरणस्थतया तदङ्गत्वं निश्चीयते तद्वत् सृष्टिप्रकरणस्थत्वादुत्पत्तिसिद्धेत्यर्थः, अस्मिन्मन्त्रे न सृष्टिर्विवक्षिता सृष्टिप्रकरणस्य पूर्वमेव विच्छेदादत्र जहात्येनां भुक्तभोगामजोऽन्य इत्युक्तस्य मुक्तस्योत्पत्त्यनुपपत्तेश्चेत्यत्राह "बह्वीनामि"ति न सृष्टिप्रकरणविच्छेद इत्यर्थः, यस्माज्जाता न परा नैव किञ्चना सेत्युत्तरत्राऽपि सृष्ट्यनुवृत्तेरिति चार्थसिद्धं सर्वस्य तद्व्यतिरिक्तस्य वस्तुजातस्य तत उत्पत्त्या तदात्मकत्वोपदेशे प्रक्रियमाण इति ह्युक्तं, मुक्तात्मकीर्त्तनमेतद्विशेषणत्वेन न तु सृष्टिप्रकरणविच्छेदात् यथा बद्धात्मकीर्त्तनमित्यभिप्रेत्याह "कर्मवश्येनात्मना भुज्यमानाऽन्येन विदुषाऽऽत्मना त्यज्यमाना चेति, एवं तन्त्रसिद्धा ऽजात्वविरोधिज्योतिरुपक्रमात्वं शाखान्तरे दर्शितम् । अथ सृजमानामिति पदप्रतीतस्वातन्त्र्यविरोधिब्रह्मात्मकत्वं स्वप्रकरणे दर्शयति—

सू० इहाऽपि प्रकरणोपक्रमे किं कारणं ब्रह्मेत्यारभ्य ते ध्यानयोगाऽनुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढामिति परब्रह्मशक्तिरूपाया अजाया अवगतेः, उपरिष्टाच्च अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः

"मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् यो योनि-योनिमधितिष्ठत्येक इति च तस्या एव प्रतीतेर्नास्मिन्मन्त्रे तन्त्रसिद्धस्वतन्त्रप्रकृतिप्रतिपत्तिगन्धः, कथं तर्हि ज्योतिरुपक्रमाया लोहितशुक्लकृष्णरूपाया अस्याः प्रकृतेरजात्वम्? अजाया वा कथं ज्योतिरुपक्रमात्व? मित्यचाह—

**सू० कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥**

प्रसक्ताशङ्कानिवृत्त्यर्थश्च—शब्दः, अस्याः प्रकृतेरजात्वं ज्योतिरुपक्रमात्वञ्च न विरुध्यते, कुतः, कल्पनोपदेशात्, कल्पनं—क्लृप्तिः सृष्टिः, जगत्सृष्ट्युपदेशादित्यर्थः, यथा "सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयदिति कल्पनं सृष्टिः, अचाप्यस्मान्मायी सृजते विश्वमेतदिति जगत्सृष्टिरुपदिश्यते स्वेनाविभक्तादस्मात्सूक्ष्मावस्थात्कारणान्मायी सर्वेश्वरः सर्वं जगत्सृजतीत्यर्थः ।

टी० "इहापी"ति, शक्तिरूपायाः—अपृथक्सिद्धविशेषणरूपायाः कार्योपयोग्यपृथक्सिद्धविशेषणं हि शक्तिः, योनिं—जगद्योनिभूताम्प्रकृतिमित्यर्थः, तस्या एव—ब्रह्मात्मिकाया एव, स्वतन्त्रप्रकृतिप्रतिपत्तिगन्ध इति, न केवलं शाखान्तरैकार्थ्यात्स्वप्रकरणाच्च ब्रह्मात्मकत्वावगमादिति भावः । उत्तरसूत्रशङ्कामाह "कथन्तर्ही"ति, लोहितशुक्लकृष्णाकारत्वं हि कार्यावस्थायामुपपद्यते तदानीं ज्योतिरुपक्रमात्वाङ्गीकारे अजात्वानुपपत्तिरजात्वे ज्योतिरुपक्रमत्वानुपपत्तिरित्यर्थः । सू० कल्पनोपदेशाच्च मध्वादिवदविरोधः, प्रसक्तेति चस्त्वर्थ इत्यर्थः । अविरोध—शब्दार्थमाह "अस्या" इति, अतस्मिंस्तद्भावारोपणपरत्वव्युदासाय कल्पन—शब्दस्य सृष्टिवाचित्वं धातोः सृष्टिवाचित्वेन दर्शयति "कल्पनं क्लृप्तिरि"ति, क्लृप्ति—शब्दं विशदयति "सृष्टिरि"ति, क्लृप्तशिख इत्यादिप्रयोगो लोकसिद्ध इति मत्वा

श्रौतप्रयोगं दर्शयति "यथे"ति, "प्राकल्पयद्यो भुवनानि सप्ते"त्यादिस्मृतिप्रयोगश्च प्रसिद्धः अतो ज्योतिःकल्पन-शब्दौ वैदिकशब्दनिर्देशानुसारिणौ तथा निर्देशश्च मुनिसमाधिः सम्प्रसादादध्युपदेशात् समानो ज्योतिषेत्यादिषु दर्शनात् अजात्वज्योतिरुपक्रमात्वयोरविरोधसिद्धिं दर्शयति—

सू० अनेन कल्पनोपदेशेनास्याः प्रकृतेः कार्यकारणरूपेणाऽवस्थाद्वयान्वयोऽवगम्यते, सा हि प्रलयवेलायां ब्रह्मतापन्ना अविभक्तनामरूपाऽव्यक्तादिशब्दवाच्या सूक्ष्मरूपेणावतिष्ठते, सृष्टिवेलायां चोद्भूतसत्त्वादिगुणा विभक्तनामरूपाव्यक्तादिशब्दवाच्या तेजोऽबन्नादिरूपेण च परिणता लोहितशुक्लकृष्णाकारा चाऽवतिष्ठते, अतः कारणावस्थाजा कार्य्यावस्था च ज्योतिरुपक्रमेति न विरोधः, मध्वादिवत् यथेश्वरेणादित्यस्य कारणावस्थायामेकस्यैवावस्थितस्य कार्य्यावस्थायाम् ऋग्यजुस्सामाथर्व्वप्रतिपाद्यकर्म्मनिष्पाद्यरसाश्रयतया वस्वादिदेवताभोग्यत्वाय मधुत्वकल्पनमुदयास्तमयकल्पनञ्च न विरुध्यते, तदुक्तम्मधुविद्यायाम् "असौ वा आदित्यो देवम"ध्वित्यारभ्य अथ तत ऊर्द्धम् उदेत्यनैवोदेता नैवास्तमेत्येकल एव मध्ये स्थातेत्यन्तेन एकलः एकस्वभावः, अतोऽनेन मन्त्रेण ब्रह्मात्मिकैवाऽजाऽभिधीयते न कापिलतन्त्रसिद्धेति सिद्धम् ॥ अन्ये त्वस्मिन्मन्त्रे तेजोऽबन्नलक्षणाऽजैकाऽभिधीयत इति ब्रुवते, ते प्रष्टव्याः, किं तेजोऽबन्नान्येव तेजोऽबन्नात्मिकाजैका? उत तेजोऽबन्नरूपं ब्रह्मैव? किं वा—

टी० "अनेने"ति, अवस्थाद्वयं विवृणोति "सा ही"ति, ब्रह्मता-

पन्ना कारणावस्थब्रह्मतापन्ना ननु कथं प्रकृतेर्ब्रह्मापत्तिः न ह्यन्यद्द्रव्यन्द्र-व्यान्तरम्भवति सत्यं, नाऽत्र केवलप्रकृतेर्ब्रह्मतापत्तिर्विवक्षिता किन्तु प्रकृतिशरीरकब्रह्मणः कारणावस्थाप्राप्तिः भाष्ये प्रकृत्युपस्थापकं सेतिपदं हि ब्रह्मपर्य्यन्तं कारणावस्थं ब्रह्मैव प्रकृति-शब्देनाऽभिधीयते ब्रह्मव्य-तिरिक्तवस्त्वन्तराभावादिति प्रकृत्यधिकरणे वक्ष्यमाणत्वात्, कार्यावस्था-ज्योतिरुपक्रमेति कार्यावस्थाजाशरीरकं ब्रह्म कार्यं, कारणावस्थाऽऽजाश-रीरकं ब्रह्म कारणमित्यर्थः, सूत्रखण्डं व्याचष्टे "मधि्व"ति, उदयास्त-मयमधुत्वकल्पनानि तदभावश्चादित्यस्यावस्थाद्वयेन यथोपपद्यते तथा अजात्वज्योतिरुपक्रमात्वे अवस्थाभेदेन प्रकृत्याख्यैकधर्मिण्यविरुद्धे इत्यर्थः । एकस्य-ईश्वरेणैकस्याविभक्तनामरूपस्येत्यर्थः, ज्योतिरुपक्रमेत्यादिसूत्रद्वय-स्य परोक्तमर्थं निराचिकीर्षुस्तत्र प्रथमस्य सूत्रस्यार्थन्दूषयति "अन्ये त्वि"ति, दूषयितुं विकल्पयति "किमि"ति, एकाजात्वेन परिकल्प्यमानं वस्तु किन्ते-जोऽबन्नान्येवेत्यर्थः, अजात्वैकत्वसिद्ध्यर्थं ब्रह्मकारणवादानुगुण्यार्थञ्च ब्रह्मानुबन्धित्वेन मध्यमं शिरो दर्शितं, तेजोऽबन्नरूपन्तेजोबन्नावस्थं ब्रह्म किमेकच्छागत्वेन कल्प्यत इत्यर्थः ।

सू० तेजोऽबन्नकारणभूताः काचिदि? ति प्रथमे कल्पे तेजोऽब-न्नानामनेकत्वादजामेकामिति विरुध्यते, न च वाच्यन्ते-जोऽबन्नानामनेकत्वेऽपि त्रिवृत्करणेनैकतापत्तिरिति त्रिवृ-त्करणेऽपि च बहुत्वानपगमात् "हन्त इमास्तिस्रो देवताः तासां त्रिवृतं त्रिवृतमेकैकाङ्करवाणीति प्रत्येकं त्रिवृत्करणोपदेशात्, द्वितीयः कल्पो विकल्प्यः, किन्ते-जोऽबन्नरूपेण विकृतं ब्रह्मैवाजैका? किं वा स्वरूपेणावस्थि-तमविकृत? मिति प्रथमः कल्पो बहु[1]त्वाऽनपगमादेव निर-स्तः, द्वितीयेऽपि लोहितशुक्लकृष्णामिति विरुध्यते, स्वरू-

१ बहुत्वानपायादेव इति पुस्तकान्तरपाठः ।

पेणावस्थितन्तेजोऽबन्नलक्षणमिति वक्तुमपि न शक्यते.तृ-
तीये कल्पेऽप्यजा-शब्देन तेजोऽबन्नानि निर्दिश्य तैस्त-
त्कारणावस्थोपस्थापनीयेत्यास्थेयं ततो वरमजा-शब्देन ।

टी० तेजोऽबन्नकारणभूता काचिदिति तेजोऽबन्नवाचिशब्देन लक्षि-
ता तत्कारणभूता काचिदेकाऽजात्वेन किं रूप्यत इत्यर्थः । प्रथमं शिरो
दूषयति "प्रथमे"ति, एकत्वविरोधपरिहारमाशङ्काह "न च वाच्यमि"ति,
कुत इत्यत्राह "त्रिवृत्करणेऽपी"ति, बहुत्वानपगममुपपादयति "इमा"-
इति, न समुदायैकत्वमपि तु समुदायत्रयमेवेत्यर्थः । द्वितीयं शिरो विकल्प-
यति "किमि"ति, तेजोऽबन्नरूपाः ब्रह्मणो विकाराः किमजा-शब्देनो-
च्यन्ते? । उत स्वरूप? मिति विकल्पग्रन्थार्थः, प्रथमे शिरस्यवस्थाबहुत्वादेक-
त्वविरोधमाह "प्रथम"इति, मध्यमे शिरसि द्वितीयकल्पं दूषयति "द्वितीये-
ऽपी"ति, ब्रह्मस्व[1]रूपस्य लोहितशुक्लकृष्णत्वाभावात् श्रुत्यस्वारस्यमित्यर्थः ।
तेजोऽबन्नादिसर्वात्मकस्य ब्रह्मणः किन्नोपपद्यत? इत्यत्राह "स्वरूपेणे"ति, ।
यद्वा सूत्रास्वारस्यमप्याह "स्वरूपेणे"ति, ज्योतिरुपक्रमेति हि सौत्रम्पदं
ज्योतिरुपक्रम-शब्दस्तेजोऽबन्नवाचीति हि तैर्व्याख्यातं, न हि ब्रह्मस्वरूपं
जोऽबन्न-शब्दवाच्यम् अतस्सूत्रास्वारस्यमित्यर्थः, तेजोऽबन्नावस्थाविशिष्टं
ब्रह्माजा-शब्दवाच्यमिति पक्षे किमवस्थाविशिष्टत्वं सद्वारकं? मद्वारकं वा?
अद्वारकत्वे लोहितशुक्लकृष्णत्वविरोधः, अरसमलोहितमिति श्रुतेः, सद्वार-
कत्वेऽस्मत्पक्ष एव परिगृहीतः स्यादिति विकल्पपरिहारयोः स्पष्टत्वान्न
तत्कण्ठोक्तिः । प्रथमविकल्पिताशिरस्त्रये तृतीयं शिरो दूषयति "तृतीय"इति,
लोहितशुक्लकृष्णत्वाजात्वैकत्वसिद्ध्यर्थमयं पक्षः शङ्कितः । तत्र दूषणमुच्यते-

सू० तेजोऽबन्नकारणावस्थायाः श्रुतिप्रसिद्धाया एवाभिधानं, यत्पु-
नरस्याः प्रकृतेरजा-शब्देन छागत्वपरिकल्पनमुपदिश्यत
इति तदप्यसङ्गतं, निष्प्रयोजनत्वात्. यथात्मानं रथिनं वि-

---

१ ब्रह्मस्वरूपे इति पा० ।

ह्वीत्यादिषु ब्रह्मप्राप्त्युपायताख्यापनाय शरीरादिषु रथादिरूपणं क्रियते, यथा चादित्ये वस्वादीनाम्भोग्यत्वख्यापनाय मधुत्वकल्पनं क्रियते, तद्वदस्याम्प्रकृतौ छागत्वपरिकल्पनं क्वोपयुज्यते, न केवलमुपयोगाभाव एव विरोधश्च, कृत्स्नजगत्कारणभूतायास्स्वस्मिन् अनादिकालसम्बद्धानां सर्वेषामेव चेतनानां निखिलसुखदुःखोपभोगापवर्गसाधनभूताया अचेतनाया अत्यल्पप्रजासर्गकराऽऽगन्तुकसङ्गमचेतनविशेषैकरूपात्यल्पप्रयोजनसाधनस्वपरित्यागाद्धेतुभूतस्वसम्बन्धिपरित्यागसमर्थचेतनविशेषरूपच्छागस्वभावख्यापनाय तद्रूपत्वकल्पनं विरुद्धमेव "अजामेकाम् अजो ह्येकः अजोऽन्य इत्यचाजा-शब्दस्य विरूपार्थपरिकल्पनञ्च न शोभनं, सर्वत्र छागत्वं परिकल्प्यत इति चेत् ।

टी० "अजा-शब्देने"ति, तेजोऽबन्नानानामवाचकस्याजा-शब्दस्य तेजोबन्नपरत्वमारोप्य तेन तत्कारणस्य लक्षणयोपस्थापनादपि मुख्यवृत्त्या कारणप्रतिपादनपरत्वाश्रयणं युक्तमित्यर्थः । कल्पनोपदेशादिति सूत्रस्य परोक्तार्थं दूषयति "यत्पुनरस्या" इति, सर्वत्र रूढितोऽवयवशक्त्या वा प्रतिपाद्यमानमुख्यार्थपरिग्रहः स्वतः प्राप्तः, गौणार्थपरिग्रहस्तु मुख्यार्थानुपपत्त्या क्रियते, तत्रौचित्यातिशयलाभोऽनेकपदमुख्यार्थत्वसिद्धिश्च प्रयोजनं, तत्र मुख्यार्थानुपपत्त्यभावः प्रदर्शितः अजात्वज्योतिरुपक्रमात्वयोरवस्थाभेदेन अविरोधस्योक्तत्वात् अतोऽर्थौचित्यज्ञामरूपप्रयोजनाभावरूपं दूषणमाह "निष्प्रयोजनत्वादि"ति, प्रयोजनभावस्य दूषणत्वज्ञापनाय कल्पनस्य प्रयोजनसिद्ध्यर्थतां दर्शयति "यथाऽऽत्मानमि"ति, विरोधं दर्शयति "कृत्स्ने"ति, एकरूपेति दुग्धादिरेव प्रयोजनमित्यर्थः, अचेतनाया इत्यनेन स्वसम्बन्धिपरित्यागासामर्थ्यं सिद्धमिति तत्प्रत्यनीकाकारमाह "स्वसम्ब

न्ती"ति, । परिमितकार्यकरत्वादित्यत्र विरोध उक्तः । दूषणान्तरमाह "अजामि"ति, अर्थैकरूप्यं शङ्कते "सर्वत्रे"ति, तत्र विरोधान्तरमाह–

सू० जहात्येनाम्भुक्तभोगामजोऽन्य इति विदुष आत्यन्तिकप्रकृतिपरित्यागङ्कुर्वतोऽनेन वाऽन्येन वा पुनरपि सम्बन्धयोग्यच्छागत्वपरिकल्पनमत्यन्तविरुद्धम् ॥ चमसाधिकरणं समाप्तम् ॥

टी० "जहाती"ति, एवमर्थौचित्यलाभरूपप्रयोजनाभावो दर्शितः सर्वत्र छागत्वपरिकल्पनशङ्कोपन्यासेनैवानेकपदान्तरमुख्यार्थत्वसिद्धिरूपप्रयोजनाभावश्च फलितः, एवं हेत्वभावात् प्रयोजनाभावाच्च छागत्वपरिकल्पनं व्युदस्तम् । ननु नार्थविरोधः कार्यकारित्वप्रयोजनसाधनत्वचेतनसङ्गादिमात्रस्य विवक्षितत्वात्, न हि दृष्टान्तगतसर्वधर्माणां विवक्षानियमोऽस्ति तथा सति सर्वत्र दृष्टान्तोपन्यासभङ्गप्रसङ्गात्, गौरनाद्यन्तवती आत्मानं रथिनं विद्धीत्यादिषु च प्रकृत्यादेर्गोत्वादिपरिकल्पनं दृश्यते, तच्च सर्वथा साधर्म्यविवक्षायां न घटत इति उच्यते आत्मानं रथिनं विद्धीत्यत्र पृथगेव रूप्यरूपकवाचिपदश्रवणाद्रूपकानङ्गीकारे रूपकवाचिपदवैयर्थ्यप्रसङ्गात्, येनाकारेण साधर्म्यं योग्यं प्राप्युपायतादिरूपं तदाकारमात्रन्तत्र विवक्षितमिति निश्चितं प्रयुक्तपदवैयर्थ्यपरिहारार्थम् अजामेकामिति वाक्ये तु रूप्यरूपकवाचिपदद्वयाश्रवणात् अर्थौचित्यं नावगम्यते तेन गौणवृत्त्यनङ्गीकारेऽपि न वैयर्थ्यं गौरनाद्यन्तवतीत्यत्र रूप्यवाचिपदाश्रवणात् अजा–शब्दाद् गो–शब्दस्यावयवशक्त्या प्रकृत्युपस्थापनासामर्थ्याच्च गत्यभावाच्च गौणी वृत्तिराश्रिता अनाद्यन्तवती सर्वकामदुघेत्याद्युचितविशेषणश्रवणादर्थौचित्यमवगम्यते, अजा–शब्दे तु न तथा गत्यन्तराभावः उचितावयवार्थसम्भवात् उचितविशेषणं च रूढिसिद्धाजाव्यावर्त्तकं न श्रूयते पुंलिङ्गाजा–शब्दयोश्चामुख्यत्वं बह्वीः, प्रजा इत्यादिपदानां सङ्कोचश्च विफलः, अतः प्रयुक्तपदवैयर्थ्यपरिहारपदान्तरस्वारस्यार्थौचित्यसद्भावासद्भावरूपवैषम्यात् आत्मनं रथिनं विद्धीत्यादिवद्रूपणपरत्वमयुक्तङ्कायका-

रित्वाद्यर्थमात्रविवक्षायामर्थविरोधाभावो य उक्तः स चेन्मुख्ययैव वृत्त्या लभ्यते तदा गौणवृत्तिपरिग्रहो निष्फलत्वादनुपपन्नः, एवं परोक्तज्योतिरुपक्रमेत्यादिसूत्रार्थस्य एक-शब्दार्थविरोध उक्तः, कल्पनोपदेशादिति सूत्रस्याजाशब्दास्वारस्यं दूषणतयोक्तं, यद्यपि ज्योतिरुपक्रमा-शब्देन तेजःप्रमुखत्वकल्पनशब्देनातस्मिँस्तद्भावारोपणञ्च परोक्तं सूत्राक्षरानुगुणमिव प्रतीयते तथाऽप्यनुपपत्तिपराहतम्, अस्मदुक्तार्थस्तु वैदिकनिर्देशसमाधिना स्वरस उपपन्नश्चेतिभिदा "चमसवदविशेषादि"ति, सूत्रं परस्यास्वरसञ्चमस-शब्दस्य यौगिकत्वाद्रूढार्थपरत्वाभावाच्च ॥ चमसाधिकरणं समाप्तम् ॥

संख्योपसंग्रहाधिकरणम् ।

## सू० न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

भा० वाजसनेयिनस्समामनन्ति "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतमिति" किमयं मन्त्रः कापिलतन्त्रसिद्धतत्त्वप्रतिपादनपर? उत नेति सन्दिह्यते किं युक्तं तन्त्रसिद्धतत्त्वप्रतिपादनपर इति, कुतः ।

टी० न संख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च, अजा-शब्दस्य स्वतन्त्रप्रकृत्युपस्थापकत्वे विशेषाभावाद्वाक्यान्तरानुरोधेन प्रकृतेर्ब्रह्मात्मकत्वं साधितन्तदत्रानुपपन्नं परमात्मपरत्वे संख्याधिक्यात् परमात्मना विनाऽपि सङ्ख्यापूरणेनाब्रह्मात्मिका प्रकृतिरिति विशेषनिश्चयसम्भवादिति शङ्कया सङ्गतिः । विषयादिकमाह "वाजे"ति, पञ्चविंशतिसङ्ख्यान्वयतत्त्वाधिक्यादिप्रतीतिजनकमिदं वाक्यम्, एवंजातीयकवाक्यानि सन्ति चेत्तान्यपि विषयः, पञ्चविंशतिसङ्ख्यान्वयतत्त्वाधिक्यप्रतीतिभ्यां संशयः, यस्मिन् पञ्च पञ्चजना इति मन्त्रः किं कापिलतन्त्रसिद्धतत्त्वपरः? उत नेति, किं पञ्चपञ्चजन-शब्देन पञ्चविंशतितत्त्वप्रतीति? रस्ति नेति

किमाकाशस्य पृथग्निर्देशोऽवान्तरसङ्ख्याऽन्वयनिमित्तविरोधी? उत ने? ति किं वाक्यशेषेण पञ्चजन-शब्दस्य प्राणादिविषयत्वनिश्चयः शक्य? उत ने? ति यदा न विरोधी यदा च निश्चयोन शक्यः तदाऽवान्तरसङ्ख्यान्वयनिमित्तसम्भवेन समासस्य समाहारविषयतया पञ्चपञ्चजन-शब्देन पञ्चपञ्चकान्युच्यन्त इति पञ्चविंशतितत्त्वप्रतीतिरयं मन्त्रस्तन्त्रसिद्धतत्त्वप्रतिपादनपर इति पूर्वः पक्षः, यदाकाशस्य पृथग् निर्देशोऽवान्तरसङ्ख्यान्वयनिमित्तविरोधी वाक्यशेषेण च प्राणादिविषयत्वनिश्चयः शक्यः तदाऽवान्तरसङ्ख्यान्वयनिमित्ताभावेन समासस्य संज्ञाविषयतया पञ्चपञ्चजन-शब्देन पञ्च पदार्था उच्यन्त इति पञ्चविंशतितत्त्वाप्रतीतेरयम्मन्त्रो न तन्त्रसिद्धतत्त्वप्रतिपादनपर इति राद्धान्तः । यद्यपि स्युः पुमांसः पञ्चजना इति मनुष्यनामतया पठितस्य समुद्रान्तर्वर्तिनि च दानवविशेषे प्रत्युक्तस्य च पञ्चजन-शब्दस्य सङ्ख्यापूर्वसमासत्वं नाऽस्ति सप्तर्षीणामेकैकस्य सप्तस्वन्यतमभाववन्मनुष्याणां दानवविशेषस्य च पञ्चस्वन्यतमत्वाभावेन सङ्ख्यान्वयप्रतीत्यनुपपत्तेः समाससामर्थ्याभावस्तथाऽप्यस्य तु पञ्चजन-शब्दस्य सङ्ख्याप्रतीतिस्वारस्यानुरोधे सम्भवति तत्परित्यागायोगात् सङ्ख्यापूर्वसमासत्वं युक्तमित्यभिप्रेत्याह—

भा० पञ्च-शब्दविशेषितात्पञ्चजन-शब्दात्पञ्चविंशतितत्त्वप्रतीतेः, एतदुक्तम्भवति पञ्चजना इति समासः समाहारविषयः, पञ्चजनाः-पञ्चानां जनानां समूहाः पञ्चजनाः पञ्चपूल्य इतिवत् पञ्चजना इति लिङ्गव्यत्ययश्छान्दसः ते च समूहाः कतीत्यपेक्षायां पञ्चजन शब्द-विशेषणेन प्रथमेन पञ्च-शब्देन समूहाः पञ्चेति प्रतीयन्ते यथा पञ्च पञ्चपूल्य इति अतः पञ्च पञ्चजना इति पञ्चविंशतिपदार्थावगतौ ते[१] कतीत्यपेक्षायाम्

टी० "पञ्चजनशब्दविशेषितादि"ति, ननु कथमिदमवसीयते?

१ ते कतम इत्यपेक्षायामिति पा० ।

पञ्चजना इत्येकं पदं न तु पञ्च पञ्चजना इतीति तदा हि दशत्व-मापद्येत यदा च समस्तः पञ्चजन-शब्दस्तदापि कथन्तत्रसिद्धतत्त्व-प्रतिपत्तिः पञ्चजन-शब्देन पञ्चसंख्यतया प्रतिपन्नार्थस्य पुनः पञ्च-तया विशेषणे पञ्चविंशतितत्त्वप्रतिपत्तिरिति चेन्न पुनरुक्तिप्रसङ्गात्, विशिष्टस्य विशेषणाददोष इति चेत् किं विशेष्यस्य? उत विशेषणस्य? आहोस्विदुभयस्य? न तावद्विशेष्यस्य, तत्र पञ्चत्वसंख्याऽन्वयस्य शब्दान्त-रसिद्धतया पुनरुक्तत्वात्सङ्ख्याभ्यासेऽभिमते दशङ्ख्याप्रतीतेश्च, नाऽपि विशेषणस्य विशेष्यपर्यन्तशब्दोपस्थापितस्य विशेषणस्य पुनस्तत्पदनिर्दि-ष्टसजातीयविशेषणान्वयायोगात्, न हि गौर्गौरिति गोत्वं गोत्वेन विशेष्यं, न चोभयस्य, अंशे पौनरुक्त्यादंशे सङ्ख्यान्वयायोगात्, न च द्वे शते त्रीणि शतानीतिवद्विशेष्टुं युक्तम् । अवान्तरसङ्ख्यानिवेशनिमित्तैकोपाध्यभावेन समूहैक्यासिद्धेः, एकग्रामस्थित्याद्युपाधिना हि शतसङ्ख्यपुरुषसमूहैक्यन्त-स्मिंश्च सति ह्येकत्वद्वित्वादिना पुनर्विशेषणसम्भवः, अन्यथा बहूनामेकत्व-द्वित्वाद्यभावात् अतोन पञ्चविंशत्यर्थसिद्धिः, सिद्धावपि न तन्त्रोक्तार्थत्व-निश्चयः, निश्चायकाभावादित्याशङ्कायामाह "एतदुक्तम्भवतो"ति, समासः समाहारविषय इति पञ्चानां त्वा पञ्चजनानामित्यत्र पञ्चजन-शब्दस्य समस्ततयैकपदत्वदर्शनादिहाप्यौचित्यतस्तत्प्रतिपत्तेः, द्वितीयपञ्चशब्दसम-भिव्याहारबलेन इतरपञ्च-शब्दस्य सङ्ख्यापरत्वप्रतीतेः समाहारसमा-सत्वं स्वीक्रियत इति भावः । तत्फलमाह "पञ्चानामि"ति, छान्दस इति त्रिभुवनादिशब्दवत् स्त्रीलिङ्गस्मृतेरपवादाभावात् छान्दसत्वमिति भावः । भूतत्वज्ञानेन्द्रियत्वादिकवामन्तरसङ्ख्यानिवेशनिमित्तमस्तीत्यभि-प्रेतं तद्धि स्फुटीभविष्यति एवं समूहसिद्धौ पञ्चतया विशेषणोपपत्तिमाह "ते चे"ति, एवं पञ्चविंशतिसङ्ख्यासिद्धौ अस्य मन्त्रस्य मोक्षाधिकारात्सा-ङ्ख्यतत्त्वपरत्वसिद्धिमाह—

**मू० मोक्षाधिकारान्मुमुक्षुभिर्ज्ञातव्यतया स्मृतिप्रसिद्धाः प्रकृ-त्यादय एव ज्ञायन्ते "मूलप्रकृतिरविकृतिर्महदाद्याः**

प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः” इति हि कापिलानां प्रसिद्धिः, अतस्तन्त्र-प्रसिद्धतत्त्वप्रतिपादनपर इति प्राप्ते प्रचक्ष्महे, न संख्योप-संग्रहादपीति, पञ्च पञ्चजना इति पञ्चविंशतिसंख्योप-संग्रहादपि न तन्त्रसिद्धतत्त्वप्रतीतिः कुतः नानाभावात् एषां पञ्चशङ्ख्याविशेषितानां पञ्चजनानां तन्त्रसिद्धेभ्य-स्तत्त्वेभ्यः पृथग्भावात् यस्मिन्पञ्चपञ्चजना आकाशश्च प्रतिष्ठित इत्येतेषां यच्छब्दनिर्दिष्टब्रह्माश्रयतया ब्रह्मात्म-कत्वं हि प्रतीयते, तमेवं मन्य आत्मानं विद्वान्ब्रह्मामृतो-ऽमृतमित्यत्र तमिति परामर्शेन यच्छब्दनिर्दिष्टं ब्रह्मेत्यव-गम्यते, अतस्तेभ्यः पृथग्भूताः पञ्च पञ्चजना इति न तन्त्रसिद्धा एते, अतिरेकाच्च, तन्त्रसिद्धेभ्यस्तत्त्वेभ्योऽत्र तत्त्वातिरेकोऽपि भवति यच्छब्दनिर्दिष्ट आत्मा आकाशश्च-ऽत्रातिरिच्येते ।

टी० “तं कतम”इति, आकाशेन यस्मिन्निति निर्दिष्टेनात्मना च सप्तविंशतितत्त्वप्रतीतिरपि न विरुद्धा, सत्त्वरजस्तमसां पृथग्द्रव्यत्वाभ्युपग-मात् आत्माकाशाभ्यां विना पञ्चविंशतिसङ्ख्यासिद्धेः, गुणत्रयमहदहङ्काराः पञ्च वायुतेजोजलपृथिवीघ्राणाः पञ्चतन्मात्राणि पञ्च जिह्वादिज्ञानेन्द्रि-याणि चत्वारि मन इति पञ्च कर्मेन्द्रियाणि पञ्च इति पञ्चविंशतिस-ङ्ख्यान्वयसिद्धिरिति । यद्वा आत्मनः स्वस्मिन्नवस्थितत्वादाकाशस्यादरेण भूयः कीर्तनादविरोध इति पञ्चविंशतिपदार्थास्तदन्तर्भूत, आत्मनि प्रतिष्ठिताः किमपरैस्तदन्तर्गत आकाशोऽपि तस्मिन् प्रतिष्ठित इत्याद-रातिशयादुक्तिर्हि सम्भवति । राद्धान्तमारभते “न सङ्ख्ये”ति, नानाभावा-दिति नानाभावः—पृथक्त्वम् अन्यत्वं विवक्षितं न तु बहुत्वं विना नाना

हिहिक्पृथगिति नैघण्टुकाः, तन्त्रसिद्धतत्त्वेभ्यः पृथग्भावोऽन्यत्वं ब्रह्मात्मकत्वं यस्मिन्निति सप्तम्यर्थमभिप्रेत्याह 'यच्छब्दनिर्दिष्टब्रह्माश्रयतये''ति, यच्छब्द–निर्दिष्टस्य ब्रह्मत्वमुपपादयति "तमेवमि''ति, नानाभावो व्याख्यातः । अथातिरेकं व्याचष्टे ''तन्त्रे''ति, अतिरेकः–सङ्ख्याधिक्यम्

सू० अतस्तं षड्विंशकमित्याहुः सप्तविंशकमथापर इति श्रुतिप्रसिद्धसर्वतत्त्वाश्रयभूतः सर्वेश्वरेश्वरः परमपुरुषोऽत्राऽभिधीयते न संख्योपसङ्ग्रहादपीत्यपि–शब्दस्य पञ्च पञ्चजना इत्यत्र पञ्चविंशतितत्त्वप्रतीतिरेव न सम्भवतीत्यभिप्रायः कथं पञ्चभिरारब्धसमूहपञ्चकासम्भवात्, नहि तन्त्रसिद्धतत्त्वेषु पञ्चसु पञ्चस्वनुगतन्तत्सङ्ख्यानिवेशनिमित्तं जात्याद्यस्ति, न च वाच्यं पञ्च कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि पञ्च महाभूतानि पञ्च तन्मात्राण्यत्रशिष्टानि पञ्चेत्यवान्तरसङ्ख्यानिवेशनिमित्तमस्त्येवेति आकाशस्य पृथङ्निर्देशेन पञ्चभिरारब्धमहाभूतसमूहासिद्धेः, अतः पञ्च जना इत्ययं समासो न समाहारविषयः अयन्तु "दिक्सङ्ख्ये संज्ञाया''मिति संज्ञाविशेषविषयः, अन्यथा पञ्चजना इति लिङ्गव्यत्ययश्च

टी० अतस्तं षड्विंशकमिति. कालस्य प्रकृतिविकाराणां विशेषणतयाऽन्तर्भावेन षड्विंशकत्वं कालस्य स्वतन्त्रवस्तुत्वाभिप्रायेण सप्तविंशकत्वमित्यर्थः । साङ्ख्यप्रसिद्धादपि श्रुतिप्रसिद्धं ग्राह्यम् अन्तरङ्गत्वादिति भाववानाह "श्रुतिप्रसिद्धे''ति, अपि–शब्दाभिप्रेतमर्थमाह "न संङ्ख्ये''त्यादिना, पञ्चभिरिति पञ्चभिरारब्धसमूहपञ्चकाभावादित्यनेन पञ्चस्वनुगतोपाध्यभावादित्युक्तम्भवति, एकोपाधिगृहीतत्वं हि समूहत्वं पञ्चस्वनुगतानुपाधीनाशङ्क्याह "न च वाच्यमि''ति, आकाशस्य पृथक्करणात् घ्राण-

पञ्चमेषु वाय्वादिषु मनःपञ्चमेषु रसनादिषु गुणत्रयमहदहङ्कारेषु चानुगतो-पाध्यभावादित्यर्थः । भूतसमूहासिद्धेरित्युपलक्षणं सत्त्वरजस्तमसां गुणत्वेन श्रुतिस्मृतिप्रसिद्धानां द्रव्यत्वाभावादात्माकाशाभ्यां सप्रविंशतितत्त्वप्रतीति-रपि परस्याऽनुपपन्ना । किञ्च "सात्त्विको राजसश्चैव तामसश्च त्रिधा महान् त्रिविधोऽयमहङ्कारो महत्तत्त्वादजायते"ति महदहङ्कारयोश्च त्रिविधत्वा-वगमादेकत्रिंशत्सङ्ख्यत्वन्तत्त्वानां प्रसजेत अतश्चैतन्मन्त्रप्रतिपन्नतत्त्व-सङ्ख्याविरोधः अतस्सत्त्वरजस्तमसां द्रव्यतया बहुत्वेन निर्वाहोऽनुपपन्नः, यस्मिन्निति निर्देशस्य स्वे महिम्नीतिवत् निर्वाहोऽनुपपन्नः सङ्ख्यन्तास्ववा-चिपदाश्रवणेन स्वप्रतिष्ठितत्वकल्पनायोगात् आकाशस्यादरातिशयात् पृथगुक्तिरित्यप्ययुक्तं ततोऽपि तत्कारणतत्त्वानां वैपुल्ये सति तदनादरेणा-काशस्य पृथगुक्त्यनुपपत्तेः । सातान्निर्वाहमाह "अयं त्वि"ति, संज्ञाविष-यत्वोपपादनाय समाहारविषयत्वे शाब्ददूषणमाह "अन्यथे"ति, लिङ्ग-व्यत्ययश्च क्लिष्ट इत्यर्थः । अर्थदूषणं हि समूहासिद्धिलक्षणमुक्तं पञ्चजन-शब्दस्य तन्त्रसिद्धार्थविषयत्वे व्युदस्ते अर्थान्तरसद्भावमाह–

सू० पञ्चजना नाम केचित्सन्ति ते च पञ्चसङ्ख्यया विशेष्यन्ते पञ्च पञ्चजना इति, सप्त सप्तर्षय इतिवत्के पुनस्ते पञ्च पञ्चजना इत्यत्राह–

टी० "पञ्चजना नामे"ति, पञ्च–शब्दस्य च तेष्वर्थवत्त्वमाह "ते चे"ति, । ननु सञ्ज्ञात्वेऽप्यजहदवयवार्थैव पञ्चजन–शब्दवृत्तिः, अन्यथा निरर्थकतत्त्वसङ्ख्यावाचित्वाभावेन सामर्थ्याभावात्, न हि निरर्थक–शब्द-स्य समाससामर्थ्यन्ततश्च सङ्ख्याविशिष्टार्थप्रतिपत्तौ पुनःसङ्ख्याविशेषण-मनुपपन्नमिति शङ्कां निराचिकीर्षुराह "सप्त सप्तर्षय इति वदि"ति, सप्त सप्तर्षयोऽमला इति श्रीमद्विष्णुपुराणप्रयोगोऽभिप्रेतः, अत्राऽयमभिसन्धिः साञ्ज्ञपदप्रतिपन्ना सङ्ख्या शाखावदुपलक्षणभूता सञ्ज्ञप्रतिपत्त्यर्था न तु सञ्ज्ञिनि ज्ञाप्ये विशेषणतयाऽन्तर्भूता अतो यथा गच्छतीति गौरिति व्युत्प-त्तावपि गमनस्य तटस्थत्वात्तात्पर्याविषयतया वाक्यार्थान्वयित्वाभावेन

गौर्गच्छति गौस्तिष्ठतीत्यत्र न पुनरुक्तिव्याघातौ वा तटस्थस्यास्य वाक्यार्थान्वये अविवक्षिते प्रतिपादनस्याकाङ्क्षितत्वान्न गच्छतीति पुनरुक्तिः, अवयवेनावस्यापितस्य गमनस्याऽविवक्षितत्वान्न तिष्ठतीति व्याघातः । एवं सन्निपदप्रतिपन्नसङ्ख्याया व्युत्पत्तिसमये तटस्थत्वेनावगतायास्तात्पर्याविषयत्वात् पुनर्वाक्यार्थान्वयित्वज्ञापनाय पञ्च–शब्देन सङ्ख्याया विशेषणत्वज्ञापनं युक्तम्पदद्वयस्य सामर्थ्यं चेदमेव यद्विग्रहवाक्येऽर्थाभिधानशक्तिः, अतः समास उपपन्नः, अतोऽर्थस्याविवक्षितत्वात् पुनस्तया सङ्ख्यया विशेषणं सफलमिति, अन्यैस्तु नानाभावादिति पदमेकीकारोपाध्यभावात् समूहासिद्धिपरं व्याख्यातन्तदानीं शब्दस्वारस्याभावः स्फुटतरः । अपि–शब्दवैयर्थ्यं च स्यात् अपि–शब्दो हि पञ्चविंशतित्वप्रतिपत्त्यभ्युपगमेन दूषणोक्तिं द्योतयति अतः पञ्चभिरारब्धसमूहपञ्चकासम्भवकं पञ्चविंशतितत्वाप्रतिपत्तिहेतुमभिप्रेत्य पुनस्तदभ्युपगमेऽपि तन्त्र प्रसिद्धतत्वपरत्वं यथा व्युदस्तं भवति तथाभाष्ये योजितैव योजना युक्ता शब्दानुरोधिनी च । उत्तरसूत्रस्याकाङ्क्षां दर्शयति "के पुनरि"ति, सङ्ख्यापूर्वसमासत्वमयुक्तमस्मिन्वाक्ये सङ्ख्येयविशेषाप्रतिपत्तेरित्यर्थः ॥

## सू० प्राणादयो वाक्यशेषात् ॥ १२ ॥

सू० "प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नम्मनसो मनो ये विदुरि"ति वाक्यशेषात् ब्रह्माश्रयाः प्राणादय एव पञ्च पञ्चजना इति विज्ञायन्ते अथ स्यात्काण्वानां माध्यन्दिनानाञ्च यस्मिन्पञ्च पञ्चजना इत्ययं मन्त्रः समानः प्राणस्य प्राणमित्यादिवाक्यशेषे काण्वानामन्नस्य पाठो न विद्यते, तेषां पञ्च पञ्चजनाः प्राणादय इति न शक्यते वक्तुमिति,

टी० सू० प्राणादयो वाक्यशेषात्, ननु किमनेन सूत्रेण कर्ममीमांसायां "सन्दिग्धे तु वाक्यशेषादि"ति वाक्यशेषात्सन्देहनिरासस्य कर्त्तव्यत्वं

हि निर्णीतं शास्त्रैक्यस्वाभिमतम्, अत एव हि स्मृत्यधिकरणादिषु कर्मविचारोक्तैर्न्यायैः कृतकरत्वमाशङ्क्य भाष्ये परिह्रियत इति नैवं वाक्यशेषात्सन्देहव्युदासः कार्य्य इति एतावत्युपजीव्येऽपि वाक्यशेषयोरेव निर्णीतार्थत्वानिर्णीतार्थत्वरूपवैषम्यात् "तेजो वै घृतमि"ति वाक्यस्य घृतसमर्पकत्वे हि न सन्देह इह तु अनिन्द्रियवाचिप्राणान्न-शब्दसमभिव्याहारात् वाक्यशेषस्येन्द्रियपरत्वे सन्देहानपगमात् प्राणादिषु पञ्चसङ्ख्यानिवेशनिमित्तैकोपाध्यभावात् प्राणादीनामेव पञ्चजन-शब्दवाच्यत्वानुपपत्तेः इन्द्रियत्वरूपैकोपाधिसिद्ध्युपपादनेन वाक्यशेषार्थनिर्णयाय सूत्रप्रणयनं प्रयोजनवत् सन्देहव्युदासकरत्वाख्यप्रायन्यायोऽभिप्रेतः, प्राणान्न-शब्दौ द्वौ चक्षुः श्रोत्रमनःशब्दास्त्रयः अतस्तदनुगुणतया प्राणान्नशब्दयोरपीन्द्रियपरत्वात् प्राणादयः पदार्था इन्द्रियाणीति त एव पञ्चजना इत्यर्थः, अनन्तरसूत्रस्य शङ्कामाह "अथ स्यादि"ति, पञ्च पञ्चजनाः प्राणादय इति न शक्यं वक्तुमिति काण्वानामन्नपाठवैकल्येन प्राणादिषु पञ्चसङ्ख्यानिवेशानुपपत्तेः पञ्चजनत्वमयुक्तमित्यर्थः । ननु सर्वशाखाप्रत्ययन्यायेन माध्यन्दिनपाठस्य काण्वपाठेऽप्युपजीव्यत्वात् पञ्चसङ्ख्योपपत्तेर्न सूत्रान्तरापेक्षा, सत्यं, मा भूच्छाखान्तरीयं वाक्यमिति कृत्वा स्वप्रकरणेनैव प्राणादीनां पञ्चसंख्योपपत्त्या पञ्चजनत्वसिद्धिप्रतिपादनार्थं सूत्रमप्यप्रायन्यायतिरस्कारकानुपपत्त्यन्तरशङ्कापरिहारश्चार्थात्सिध्यति सर्वशाखाप्रत्ययन्यायेन अनुक्तस्यान्नपाठस्याऽन्यतो ग्रहणेऽपि कैश्चिद्धेतुभिः प्राणादीनामिन्द्रियत्वनिश्चयदौःस्थ्येन पञ्चसङ्ख्यानिवेशनिमित्ताभावात् पञ्चजनत्वमनुपपन्नमिति शङ्काऽवतिष्ठते प्राणादीनामिन्द्रियत्वे हि प्राणान्न-शब्दयोरस्वारस्यद्वयं स्यात् प्राणशब्दश्चोपक्रमस्थो न भञ्जनीयः अन्न-शब्दस्य तन्त्रेणार्थद्वयपरत्वं च क्लिष्टम् अतोऽप्रप्रायन्यायस्यानेकहेत्वभिभूतस्याकिञ्चित्करतया प्राणादीनामिन्द्रियत्वमशक्यनिश्चयम्, अतः काण्वपाठेऽपि माध्यन्दिनशाखाधिगतान्नपाठोपजीवनमनपेक्षितं स्यात् प्राणादीनामिन्द्रियत्वानिश्चयात्तन्निश्चये सति ह्यनुक्तेन्द्रियग्रहणापेक्षा, एवमिन्द्रियत्वानिश्चयेन पञ्चसंख्यानिवेशनिमित्तैकोपाध्यभावात् क्वचिन्न्यूनतया च पञ्चसङ्ख्यानिवेशायोगाच्च प्राणा-

दीनां पञ्चजनत्वमिति शङ्कापरिहारार्थं सूत्रम् । नन्विन्द्रियत्वानिश्चयहेतवः शङ्कायन्ये ऽनुक्ताः सत्यमुत्तरत्र परिहारादिहाभिप्रेतत्वमवगम्यते यथा ऽन्तरादित्याधिकरणे सिद्धान्ते परिहारदर्शनात् पूर्वपक्षेऽप्यभिप्रेतत्वावगमः ॥

भा० अत्रोत्तरम्

## सू० ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

भा० एकेषां काण्वानां पाठे असत्यन्ने ज्योतिषां पञ्चजना इन्द्रियाणीति विज्ञायन्ते तेषां वाक्यशेषः प्रदर्शनार्थः एतदुक्तम्भवति, यस्मिन् पञ्च पञ्चजना इत्यस्मात् पूर्वस्मिन्मन्त्रे "तन्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमि"ति ज्योतिषां ज्योतिष्ट्वेन ब्रह्मण्यभिधीयमाने ब्रह्माधीनस्वकार्याणि कानिचिज्ज्योतींषि प्रतिपन्नानि

टी० सू· ज्योतिषैकेषामसत्यन्ने ज्योतिषा षष्ठ्यन्तज्योतिःशब्देनेत्यर्थः, सूत्रेऽपि ज्योतिःशब्द· शब्दस्वरूपार्थः श्रुतिवाक्यस्वारस्यसिद्ध्यौपयिकत्वात् सूत्रस्यज्योतिश्शब्दास्वारस्यं सोढव्यमिति भावः, परैर्हि तन्देवा ज्योतिषां ज्योतिरिति द्वितीयान्तज्योतिश्शब्दनिर्दिष्टब्रह्मणा पञ्चसङ्ख्यासिद्धिरुक्ता तदानीमेकस्य मन्त्रस्य शाखाद्वयगतस्य एकार्थत्वप्रत्यभिज्ञानभङ्गेन ब्रह्मपञ्चमतयाऽब्रपञ्चमतया च पञ्चजन–शब्दनिर्वाहास्वारस्यमवर्जनीयं स्यात् । किञ्च यस्मिन्नित्याधारतया ब्रह्मणो निर्दिष्टत्वेन प्राणादिषु पञ्चमस्यापि प्राणादिचतुष्टयवत् ब्रह्मव्यतिरिक्तत्वप्रतीतेश्च ब्रह्मणः पञ्चमत्वमयुक्तं, स्वे महिम्नि प्रतिष्ठित इतिवन्निर्वाह इति चेन्न सप्तमीप्रतिष्ठित–शब्दयोर्मुख्यार्थे सम्भवत्यमुख्यार्थस्वीकारायोगात्, अतः पञ्चजन–शब्दसप्तमीविभक्तिप्रतिष्ठित–शब्दानामर्थवैरूप्यास्वारस्यप्रसङ्गात् ज्योतिःपञ्चमत्वपरत्वमनुपपन्नमिति मन्वानेन भगवता भाष्यकारेण षष्ठ्यन्तज्योतिःशब्दस्वरूपपरतया ज्योतिषेति पदं व्याख्यातम्, इन्द्रियाणीति

ज्ञायन्ते चेत्कथं चतुष्टयकर्तनं वाक्यशेव इत्यत्राह "तेषामि"ति, ज्योतिश्शब्दस्य कोऽर्थः तेनेन्द्रियाणीति कथं ज्ञायन्ते ततः किमन्नपाठवैकल्यस्य चोद्यस्येत्यत्राह "एतदुक्तमि"ति, ब्रह्माधीनस्वकार्याणीत्यनेन प्राणस्य प्राणमित्यादेरर्थ उक्तः, पवित्राणाम्पवित्रमिति वदितिभावः । ज्योतींषीत्यनेन प्रकाशकत्वमभिप्रेतन्ततश्च कर्मेन्द्रियादिव्यावृत्तिसिद्धिः तेषां प्रकाशकत्वाभावात् कानिचिदिति आदित्यादिज्योतींषि न वेति संशये विशेषनिर्धारणाकाङ्क्षा तिष्ठतीति भावः । ततः किमित्यत्राह—

सू० तानि च विषयाणां प्रकाशकानीन्द्रियाणीति यस्मिन्पञ्च पञ्चजना इत्यनिर्द्धारितविशेषनिर्देशेनावगम्यन्त इति प्राणस्येति प्राण-शब्देन स्पर्शेन्द्रियङ्गृह्यते वायुसम्बन्धित्वात्स्पर्शेन्द्रियस्य मुख्यप्राणस्य ज्योतिश्शब्देन प्रदर्शनायोगात् चक्षुष इति चक्षुरिन्द्रियं, श्रोत्रस्येति श्रोत्रेन्द्रियमन्नस्येति घ्राणरसनयोः तन्त्रेणोपादानम्, अन्न-शब्दोदितपृथिवीसम्बन्धित्वात् घ्राणेन्द्रियमनेन गृह्यते

टी० "तानि चे"ति, अनिर्धारितविशेषनिर्देशेनेति संख्येयविशेषोपस्थापकवाक्यान्तरसाकाङ्क्षत्वं द्योतितं ततश्च तत्र श्रुतपञ्चमसंख्याविशेषितत्वात् पञ्चसंख्याकज्योतिरन्तरप्रसिद्ध्यभावाच्च परिशेषेणेन्द्रियत्वावगमः, एवं वाक्यशेषस्याप्युपक्रमभूतेन परस्परसाकाङ्क्षेण मन्त्रद्वयेनेन्द्रियाणाम्प्रतिपादितत्वात् षष्ठ्यन्तज्योतिश्शब्दोक्तानां तेषां चक्षुषः श्रोत्रस्य मनस इति षष्ठ्यन्तैः पदैः प्रत्यभिज्ञायमानत्वाच्च वाक्यशेषस्येन्द्रियपरत्वमभिप्रेत्य प्राण-शब्दं व्याचष्टे "प्राणस्येती"ति, वायुसम्बन्धित्वाद्वाय्वाप्यायितत्वात् प्रसिद्धः प्राणः कस्मान्न गृह्यत इत्यत्राह "मुख्यप्राणस्य ज्योतिःशब्देन प्रदर्शनायोगादि"ति, ज्योतिश्शब्देन ज्योतिषां ज्योतिरित्यत्र षष्ठ्यन्तज्योतिश्शब्देनेत्यर्थः, अनेन मुख्यान्नस्य च ज्योतिश्शब्देन प्रदर्शनायोगो-

विवक्षितः स्पष्टार्थानामपि चक्षुःश्रोत्रादिपदानां व्याख्यानं किमर्थं षष्ठ्यन्त-ज्योतिश्शब्दाभिहितानां षष्ठ्यन्तपदैः कैकश उच्यमानत्वज्ञापनार्थं, तेन हि पूर्वसूत्राभिप्रेतस्याग्रप्रायन्यायस्य हेत्वन्तराभिभूतस्य पूर्वमन्त्रद्वयसाहचर्यौत्तम्भितत्वेन इदानीं प्राबल्यं ज्ञायते, एवञ्च सति प्राण-शब्दस्य उपक्रमस्यत्वमकिञ्चित्करं तस्याप्युपक्रमभूतमन्त्रद्वयप्राबल्याद्वतो न प्राणत्र-शब्दमुख्यार्थानुगुणमितरपदानि व्याख्येयानि पदत्रयस्वारस्यानुगुणपदद्वयस्य व्याख्येयत्वात् ह्यनेकपदस्वारस्यभङ्ग उचित इत्यभिप्रायेण चक्षुःश्रोत्रमनांसि त्रीण्यपि स्व-शब्देनैव व्याख्यातानि, एवमुपक्रमैकार्थ्यात् प्राणादीनामिन्द्रियत्वे निश्चिते सत्यनुक्तेन्द्रियस्वीकारस्याऽपेक्षितत्वात् सर्वशाखाप्रत्ययन्यायेन काण्वपाठेऽप्यन्नपाठःसिद्ध इति उभयसाधारणमन्न-शब्दं व्याचष्टे "अन्नस्ये"ति, ननु यस्मिन् इत्यादिमन्त्रे पञ्चसंख्यावगमाद्धि ज्योतिषामिन्द्रियत्वमध्यवसितम् अतो वाक्यशेषस्येन्द्रियपरत्वनिश्चय उपक्रममन्त्रसापेक्षः, मन्त्रश्च विशेषकीर्त्तनाय वाक्यशेषसापेक्ष इत्यन्योन्याश्रय इति नैवम् उपक्रमस्यमन्त्रद्वयस्येन्द्रियपरत्वनिश्चये वाक्यशेषानाकाङ्क्षत्वात् वाक्यशेषस्येन्द्रियपरत्वनिश्चय एव ह्युपक्रममाकाङ्क्षः. एवमुपक्रमादेवेन्द्रियत्वेऽवगते प्रत्येककीर्तनं वाक्यशेषस्यमिति न तावता नान्योन्याश्रय इति, अन्न-शब्दं व्याचष्टे "अन्नस्ये"ति, अन्न-शब्दस्य घ्राणरसनोपस्थापकत्वद्व्यमित्यपेक्षायाम् अन्न-शब्दस्य घ्राणवाचित्वन्दर्शयति "अन्न-शब्दोदिते"ति, पृथिवीसंबन्धित्वात् पृथिव्याप्यायितत्वाल्लक्षणयेत्यर्थः । रसनावाचित्वमुपपादयति

मू० अद्यतेऽनेनेत्यन्नमिति रसनेन्द्रियमपि गृह्यते मनस इति मनः, घ्राणरसनयोस्तन्त्रोपादानम् इति पञ्चत्वमप्यविरुद्धं प्रकाशकानि मनः पर्यन्तानीन्द्रियाणि पञ्च जन-शब्दनिर्दिष्टानि तदविरोधाय घ्राणरसनयोस्तन्त्रेणोपादानन्तदेवं यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठित इति पञ्चजन-शब्दनिर्दिष्टानीन्द्रियाणि आकाश-शब्दप्रदर्शितानि म-

त्वाभूतानि च ब्रह्मणि प्रतिष्ठितानीति सर्वतत्त्वानां ब्रह्माश्रयत्वप्रतिपादनान्न तन्त्रसिद्धपञ्चविंशतितत्त्वप्रसङ्गः, अतः सर्वं च वेदान्ते सङ्ख्योपसङ्ग्रहे

टी० "अद्यत" इति, लक्षणया बोधकत्वन्दर्शयितुमत्त-शब्दवाच्यभोग्यवस्तुविनियोगे कारणतया सम्बन्धः प्रदृश्यते अद्यतेऽनेनेति अद्यतेनेनेत्येवंरूपसम्बन्धादन्नमिति रसनेन्द्रियं गृह्यते अन्न-शब्देन रसनेन्द्रियं लक्ष्यत इत्यर्थः । अनेन घ्राणस्याऽऽप्याय्यतया संबन्धः तद्विनियोगकरणतया रसनायाः अतोऽन्नसंबन्धिवस्तु लक्षयताऽन्न-शब्देन घ्राणरसनयोरेकव्यापारेण लक्षणा भवतीति भावः । न तर्हि पञ्चत्वसिद्धिः मनसः षष्ठत्वादित्यत्राह "घ्राणरसनयोरि"ति, पञ्चत्वमप्यविरुद्धमिति पञ्चत्वं न निर्द्देश्यापेक्षया किन्तु निर्द्देशापेक्षयेत्यर्थः तन्त्रेणोपादानकल्पकं किमित्यत्राह "प्रकाशकानी"ति, प्रकाशकत्वं पञ्चसंख्याविशिष्टत्वं मनःपर्यन्तमिन्द्रियाणामुक्तत्वेन पारिशेष्यञ्च घ्राणरसनयोस्तन्त्रेणोपादानकल्पकं घ्राणरसनसमुदायगतमेकत्वं पञ्चजनविशेषणभूतायाः पञ्चसंख्याया अवान्तरसंख्यात्वेन विवक्षितमित्यर्थः अवयवगतद्वित्वानादरेण समुदायगतैकत्वविवक्षया पञ्चसंख्यानिर्देशश्च श्रुतिसमाधिः, यथा द्वादशमासाः पञ्चर्तव इति षट्के सत्यपि हेमन्तशिशिरसमुदायगतैकत्वविवक्षया हि तत्र पञ्चत्वसंख्याव्यपदेशः वसन्तमृतूनां प्रीणामि ग्रीष्ममृतूनां प्रीणामीत्यादिना सर्वमृतून् प्रत्येकं निर्दिश्य हेमन्तशिशिरावृतूनां प्रीणामीति सह व्यपदेशाद्धेमन्तशिशिरसमुदायगतैकत्वं पञ्चर्त्तव इत्यत्र विवक्षितमिति ज्ञायते, एवमस्मिन्वाक्ये फलितमर्थमाह "तदेवमि"ति, पञ्चजन-शब्दनिर्दिष्टानि प्रदर्शितानीत्यर्थः, अत एव हीन्द्रियाणीत्युक्तं न तु ज्ञानेन्द्रियाणीति महाभूत-शब्देन भूततन्मात्राण्यपि विवक्षितानि सर्वतत्त्वानां सर्वाश्रयत्वप्रतिपानादित्युक्तेः, एवं संख्याभ्युपगमात्तदनभ्युपगमाच्च द्विधा परिहृतम्, एवम्परिहारद्वयकथनस्याऽपि प्रयोजनं वदन्नुपसंहरति "अत" इति, सर्वत्र वेदान्ते संख्योपसंग्रहे

सू० तदभावे वा न कपिलतन्त्रसिद्धतत्त्वप्रतीतिरस्तीति स्थितम् ।

संख्योपसंग्रहाधिकरणं समाप्तम् ॥

कारणत्वाधिकरणम् ।

**सू० कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥**

पुनः प्रधानकारणवादी प्रत्यवतिष्ठते ।

टी० तदभावे चेति, अनेन ग्रन्थेन अनन्तरसूत्रस्य श्रुतप्रकाशाकृतयोजनाव्युदासो हेलया कृतो भवति स खलु कारणत्वेनेत्यादिसूत्रं तदुत्तरसूत्रात्पृथगधिकरणत्वेन वर्णयन् "स वा एष पुरुषः पञ्चधा पञ्चात्मेति" वाक्यं विषयमुदाहरन् तदयुक्तं कृतकरत्वादित्यनेन दर्शितम्भवति पञ्चसङ्ख्याभिनिवेशनिमित्तकाशङ्काया समूहपञ्चकासिद्धेः पञ्चविंशतितत्त्वप्रतिपादनायोगस्तावत्स्थितः पञ्चात्मेति मृदात्मा घट इतिवदर्थानुपपत्तेः पुरुषस्य प्रकृततत्त्वैः स्वरूपैक्यायोगात् ततश्च प्रत्येकं पञ्चधाभूतपञ्चतत्त्वसंघातानामात्मेत्यर्थः स्यात् तथा सति पञ्चविंशतितत्त्वातिरिक्त आत्मा परमपुरुषः स्यात् पञ्चविंशतितत्त्वानां तदात्मकत्वाद्ब्रह्मात्मकोपस्तन्त्रसिद्धतत्त्वेभ्यो भिन्नत्वं स्यादिदं चाभ्युपगम्योक्तं वस्तुतः एकैकशः शिरःपक्षादिरूपेण पञ्चविधावयवानामन्नादिरूपतया सद्वारकमद्वारकत्वञ्च पञ्चप्रकारत्वमुच्यत इति पूर्वाधिकरणसमर्थितार्थान्न कश्चिद्विशेषः, तस्मादधिकरणान्तरत्वं व्यर्थमिति, एवमन्यत्रापि सङ्ख्यासम्भवे तथा वर्णनीयम्, असम्भवे च सङ्ख्यानादरेण निर्वाह्यमिति ज्ञापनं प्रयोजनमित्यर्थः, संख्योपसंग्रहाधिकरणं समाप्तम् ॥ सू० कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः, सर्वतत्त्वानां यस्मिंश्चेति ब्रह्माश्रयत्वप्रतीत्या स्वातन्त्र्येण प्रधानस्य कारणत्वं निरस्तमथ स्वातन्त्र्येण कारणत्वं प्रतीयते ब्रह्माश्रयत्वाप्रतीतेरिति शङ्कया सङ्गतिः, तामाह "पुनरि"ति, अवर्जनीयाचिद्वाचकव्याकुलार्थशब्दोपलक्षितकारणवाक्यसमुदायो विषयः व्याकुलत्वादेव संशयः किं जगत्कारणविषयवेदान्तवाक्यप्रतिपाद्यमव्यक्तं? उत ब्रह्मे?ति किमसद्वा इदमग्र आसीत् तद्धेदं तर्ह्यव्याकृतमासीदि"त्यत्रासद-

व्याकृतनामरूपावस्थब्रह्मपरौ ? उताव्यक्तपरा ? विति तदर्थं किं तदप्येष श्लोको भवतीति साचित्वेन निर्देशोऽसच्छब्दस्य प्रकृतब्रह्मपरतामवगमयति ने ? ति स एष इह प्रविष्ट इति प्रशासितुरनुकर्षश्चाव्याकृत-शब्दस्य ब्रह्मपरतामवगमयति नेति संशयोऽर्थसिद्धः, यदा "स एष इत्यनुकर्षो नाव्याकृतशरीरब्रह्मपरतामवगमयति यदा च तदप्येष इति निर्देशः प्रकृतब्रह्मपरतामसच्छब्दस्य नावगममति तदानीमसदव्याकृतशब्दयोरव्याकृतनामरूपावस्थब्रह्मपरत्वाभावात् कारणवाक्यप्रतिपाद्यमव्यक्तमिति प्राप्नोति, यदा तदप्येष इति निर्देशोऽसच्छब्दस्य ब्रह्मपरतामवगमयति यदा च स एष इत्यनुकर्षोऽव्याकृतशब्दस्याव्याकृतशरीरकब्रह्मपरतामवगमयति तदानीमसदव्याकृतशब्दयोरव्याकृतनामरूपावस्थब्रह्मपरत्वाज्जगत्कारणवाक्यप्रतिपाद्यं ब्रह्मेति सिद्ध्यति, वेदान्तेषु कारणवाक्यानामैककण्ठ्येन हि ब्रह्मकारणत्वमुक्तं तदनुपपन्नम् ऐककण्ठ्याभावादित्याह—

सू० न वेदान्तेष्वेकस्मात्सृष्टिराम्नायत इति जगतो ब्रह्मैककारणत्वं न युज्यते च वक्तुं, तथाहि "सदेव सोम्येदमग्र आसीदि"ति सत्पूर्विका सृष्टिराम्नायते "असद्वा इदमग्र आसीदि"त्यसत्पूर्विका चान्यत्रा "सदेवेदमग्र आसीत्सदासीत्तत्समभवदिति" च, अतो वेदान्तेषु स्रष्टुरव्यवस्थितेर्ज्जगतो ब्रह्मैककारणत्वं न निश्चेतुं शक्यं प्रत्युत प्रधानकारणत्वमेव निश्चेतुं शक्यते "तद्धेदं तर्ह्यव्याकृतमासीदि"त्यव्याकृते प्रधाने जगतः प्रलयमभिधाय "तन्नामरूपाभ्यां व्याक्रियत" इत्यव्याकृतादेव जगतः सृष्टिश्चाभिधीयते अव्याकृतम् हि अव्यक्तं नामरूपाभ्यां न व्याक्रियते न व्यज्यत इत्यर्थः, अव्यक्तं प्रधानमेव, अस्य च स्वरूपनित्यत्वेन परिणामाश्रयत्वेन च जगत्कारणवा-

कार्यगतौ सदसच्छब्दौ ब्रह्मणीवास्मिन्न विरोत्स्येते, एवमव्याकृतकारणत्वे निश्चिते सति ईक्षणादयः

टी० "न वेदान्तेष्वि"ति, एकस्मादेकरूपात् कारणात् सृष्टेरव्यवस्थितेः ब्रह्मकारणवादे सृष्टिकारणस्याव्यवस्थितेरित्यर्थः । प्रधानकारणवादे सामञ्जस्यमाह "प्रत्युते"ति, । नन्वव्याकृतात् सृष्टिः प्रतीयते न प्रधानादित्यत्राह "अव्याकृतं ही"ति, अव्याकृतत्वं नामरूपविशिष्टतयाऽनभिव्यक्तत्वमस्तु ततः किमित्यत्राह "अव्यक्तं प्रधानमेवे"ति, परस्परप्रतिक्षेपकार्यविषययोः सदसच्छब्दयोः कथं प्रधानविषयत्वोपपत्तिः रित्यत्राह "अस्य चे"ति, ब्रह्मणीवेति वैधर्म्यदृष्टान्तो, ननु तद्धेदमिति प्रकरण एव "पश्यन् चक्षु शृण्वन् श्रोत्रमि"त्यव्याकृतशब्दवाच्यस्य चेतनत्वमवगम्यते असच्छब्दस्याप्यव्याकृतशब्दसमानयोगक्षेमत्वाच्चेतनविषयत्वमापतति प्रकरणान्तरेषु चेक्षणं श्रूयते परब्रह्मशब्दस्य चेतनविषयत्वं, श्रुतिप्रसिद्धम् आत्म—शब्दश्च चेतनैकान्त इति शङ्कायामीक्षणधर्मयोगं प्रतिवक्ति "एवमि"ति, एवं—शब्देन कारणवाक्यस्थसदसदादिशब्दानां परमात्मन्यसामञ्जस्यं प्रधाने सामञ्जस्यञ्च पूर्वोक्तत्वात्परामृश्यते ईक्षणादय इत्यादि—शब्देन "स तपोऽतप्यत, इदं सर्वमसृजते"त्यादिवाक्यप्रतिपन्नौ पूर्वोकारपर्यालोचनाप्रयत्नौ विवक्षितौ

सू० कारणगताः सृष्ट्यौन्मुख्याभिप्रायेण योजयितव्याः, ब्रह्मात्म—शब्दावपि बृंहत्त्वव्यापित्वाभ्यां प्रधान एव वर्त्तेते, अतः स्मृतिन्यायप्रसिद्धं प्रधानमेव जगत्कारणं वेदान्तवाक्यैः प्रतिपाद्यते

टी० "कारणगता" इति, अव्याकृत-शब्देन प्रथमत एवाचेतनस्य प्रतिपन्नतया पश्चादवगतम्पश्यन् चक्षुरित्यादिवाक्योक्तं चेतयितृत्वं चक्षुराद्युत्पादनौन्मुख्याभिप्रायम् एवं प्रकरणान्तरेऽप्यवीक्षणोक्तधर्मिवाचिपदनिर्देशपूर्वकत्वाद्धर्मिवाचिपदानां च सर्वशाखाप्रत्ययन्यायेन अव्याकृतशब्द-

तुल्यार्थत्वात्तद्गता ईक्षणादयः सृष्ट्योन्मुख्याभिप्राया इत्यर्थः । यद्वा कारण-गता इति ब्रह्मकारणवादिनाऽपि प्रधानन्तस्यानादितया परमकारणत्वं चानुमतन्तस्य वेदान्तवाक्यप्रसिद्धत्वात्, अतश्चिदचिदीश्वरसमुदायस्य कारणत्वादीक्षणस्यांशे मुख्यत्वभङ्गः स्वीकार्य्यः, ततश्चाचिदतिरिक्तवस्तुनि वेदान्तवाक्यानां सामञ्जस्याभावेन अमानतया वैपरीत्यभङ्गेन सर्वत्रेक्षणं गौणमास्थेयमित्यभिप्रायः भूयसां बलीयस्त्वशङ्काऽप्यनेन निरस्ता, सर्वका-रणवाक्येष्वपीक्षणवाक्येष्वपीक्षणस्यांशे गौणतयाऽर्द्धजरतीयप्रहाणेन गौण-त्वावश्यम्भावात् । ब्रह्मात्म–शब्दयोः प्रधानपरत्वमुपपादयति "ब्रह्मा-त्मे"ति, अनेन ईक्षत्यधिकरणाक्षेपः फलितः । आधिक्ययुक्त्यन्तरमाह "स्मृति-न्याये"ति, नन्वयोगव्यवच्छेदनिषेधेनोत्थितस्याधिकरणस्य कथं त्रिपाद्या सङ्गतिः अस्यां सङ्गतस्य वा कथमयोगव्यवच्छेदप्रतिक्षेपेणोत्थानम्? किंच न चात्र निरूपणीयमस्ति पूर्वापरवाक्येषु समाकर्षणेन ह्यर्थो निरूप्यते, सिद्धान्ते पूर्वापरवर्णनं चासच्छब्दस्यानन्दमयाधिकरणे कृतम्, अतः संशयोत्थाना-भावादनारम्भणीयत्वञ्चेति, नैवं प्रधानप्रतिपादनच्छायानुकारिवाक्यविष-यत्वात्, न चानन्दमयाधिकरणेन चरितार्थता, असच्छब्दस्य प्रधानपरत्व-शङ्कायास्तत्रानपाकृतत्वात् पूर्वापरवाक्यानां परविषयत्वे निरूपितेऽपि प्रकरणाच्छ्रुतेर्बलीयस्त्वादसच्छब्दस्य ब्रह्मपरत्वं हि दुरवगमं तर्हि "अस्मि-न्नस्य च तद्योगं शास्ती"ति सूत्रस्यानन्तरमेवानन्दित्वप्राप्तिनिमित्तस्य वस्तुनोऽसच्छब्दवाच्यतया प्रधानत्वमाशङ्क्य तत्रैव निराकरणं कर्त्तव्यमिति चेन्न प्रधानप्रतिपादनच्छायानुकारिवाक्यविचारस्य पादसङ्गत्यभावात्, अता-ऽत्रैव निरूप्यत्वे सति पूर्वपक्षयुक्तिवशादयोगव्यवच्छेदनिषेधः फलितः कारणवाक्यानां ब्रह्मपरत्वे अनुपपन्ने सति पूर्वपक्षिणाऽपि वेदप्रामाण्यम-भ्युपगच्छता तेषामानर्थक्यपरिहाराय कस्यचिदर्थस्य प्रतिपादकत्वेऽवश्या-भ्युपगन्तव्ये सति प्रधानपरत्वे च समञ्जसेऽर्धजरतीयप्रसङ्गपरिहारायेक्ष-णाद्यमुख्यत्वे च न्याय्ये सति प्रधानातिरिक्तकारणसद्भावानुपपत्तेः, अत-स्त्रिपाद्यारम्भे तस्या अन्ययोगव्यवच्छेदपरत्वाभिधानं प्रायिकत्वाभिप्रायं मन्तव्यमिति ॥

न्न इति प्राप्ते प्रचक्ष्महे कारणत्वेन चाकादिषु यथाव्यपदिष्टोक्तेः, च-शब्दस्तु-शब्दार्थे सर्वज्ञात् सर्वेश्वरात्सत्यसङ्कल्पान्निरस्तनिखिलदोषगन्धात् परस्माद्ब्रह्मण एव जगदुत्पद्यत इति निश्चेतुं शक्यते, कुतः आकाशादिषु कारणत्वेन यथाव्यपदिष्टस्योक्तेः, सर्वज्ञत्वादिविशिष्टत्वेन जन्माद्यस्य यत इत्येवमादिषु प्रतिपादितं ब्रह्म यथाव्यपदिष्टमित्युच्यते, तस्यैकस्यैव आकाशादिषु कारणत्वेनोक्तेः "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः "तत्तेजोऽसृजते"त्यादिषु सर्वज्ञं ब्रह्मैव कारणत्वेनोच्यते तथा हि "सत्यं ज्ञानमनन्तं ब्रह्म सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते"ति ।

टी० इति प्राप्त इति, त्वर्थेन च-शब्देन फलितां प्रतिज्ञामाह "सर्वज्ञादि"ति, परस्माद्ब्रह्मण एवेत्येवकारेण नेति पदानुषङ्गफलितप्रधानप्रतिक्षेपः सूचितः, यथाव्यपदिष्टमित्युक्ते श्रुतौ व्यपदिष्टमिति शङ्काव्यावृत्त्यर्थमाह "जन्माद्यस्य यत इत्येवमादिष्वि"ति, अत्राऽयमभिसन्धिः परैस्तु यथाव्यपदिष्टोक्तेरिति पदमेवं व्याख्यातं यथा श्रुत्यन्तरेषु व्यपदिष्टन्तथेहाप्युक्तेरिति तदयुक्तं श्रुत्यन्तरेष्वपि प्रधानमेवोक्तं स्यादित्युक्ते किमुत्तरन्तेषु परब्रह्मणः परमकारणत्वेन प्रतिपादितत्वं प्राचीनन्यायैः समर्थितमिति वक्तव्यं तर्हि पूर्वप्रतिपादितप्रकारस्य कारणस्येहाऽपि प्रतिपादितत्वं हेतुतया वर्णनीयम्, अतः कल्प्यान्तरसापेक्षयुक्तिप्रतिपादकत्वादपि निरपेक्षहेतुप्रतिपादकत्वस्य समुचितत्वादिति, आकाशादिषु कारणत्वेन आकाशादीनां कारणत्वेनेत्यर्थः, अर्थस्वारस्येनाऽत्र व्याख्यातं, दीपे तु सप्तमीस्वारस्येन काशादिपदचिह्नितेषु तेषु वाक्येष्वित्युक्तं तस्माद्वा इति स्वतश्चेतनैकान्तात्म-शब्दोपेतप्रकरणस्मारणार्थमाकाशादिष्वित्युक्तमिति

भावः, न त्वसच्छब्दोपितप्रकरणं विवक्षितं तद्धि उत्तरसूत्रे विवक्षितं भूयसां बलीयस्त्वमेवास्मिन् सूत्रे हेतुतया विवक्षितम्, अत एव हि सद्विद्यावाक्यमुपादीयते, तत्तेजोऽसृजतेति, आदि-शब्देनमुण्डकोपनिषदादि विवक्षितं धर्मवाचिनोऽव्याकृतादिपदस्य प्रथमश्रुतत्वाच्चरमावगतमीक्षणादिकं तदाऽनुगुण्येन गौणमित्युक्तमिति शङ्कायान्तेषु प्रकरणेषु सर्वज्ञत्वादिगुणकस्यैव कारणत्वेन प्रतिपादितत्वमुपपादयति "तथा ही"ति, कारणत्वप्रतिपादनात् प्रागेव कारणत्वधर्मिणः प्रथमत एव चेतनत्वप्रतिपादनं दर्शयति "सत्यं ज्ञानमि"ति, सम्भूत इति सृष्टिप्रतिपादनात्पूर्वमेव प्रयुक्तः स्वतश्चेतनैकान्त आत्म-शब्दः प्रबलतरः, ततः पूर्वमेव तस्य कारणस्य विपश्चित्त्वप्रतिपादनादात्म-शब्दस्य क्लिष्टनिर्वाहशङ्का दूरोत्सारितेत्यभिप्रायेणाह—

सू० प्रकृतं विपश्चिदेव ब्रह्म, तस्माद्वा एतस्मादिति परामृश्यते, तथा "तदैक्षत बहु स्यामि"तिनिर्दिष्टं सर्वज्ञं ब्रह्मैव "तत्तेजोऽसृजते"ति परामृश्यते, एवं सर्वत्र सृष्टिवाक्येषु द्रष्टव्यम्, अतो ब्रह्मैककारणं जगदिति निश्चीयते। नन्वसद्वा इदमग्र आसीदि"त्यसदेव कारणत्वेन व्यपदिश्यते, तत्कथमिव सर्वज्ञस्य सत्यसङ्कल्पस्य ब्रह्मण एव कारणत्वं निश्चीयत इत्यत्र आह—

## सू० समाकर्षात् ॥ १५ ॥

"असद्वा इदमग्र आसीदित्यत्रापि विपश्चिदानन्दमयं सत्यसङ्कल्पं ब्रह्मैव समाकृष्यते, कथं तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मा—

टी० "प्रकृतं विपश्चिदेवे"ति, तथेति "तत्तेजोऽसृजते"ति कारणत्वप्रतिपादनात् पूर्वमेव तदैक्षतेति ईक्षितृत्वप्रतिपादनादीक्षणानुगुणङ्कार-

णत्वं नेयं न तु कारणत्वानुगुणमीक्षितृत्वं नेयमित्यर्थः, ततः पूर्वनिर्दिष्टं सदिति पदं तत्साधारणत्वात् न प्रधानपरतया स्वतः प्रतीयते ईक्षण-दर्शनात्, प्रधानविलक्षणङ्कारणं निश्चीयत इति नोपक्रमविरोधः सच्छ-ब्दस्य इदं–शब्दसामानाधिकरण्यं तु सम्भवतीत्ययमर्थः "ईक्षतेर्नाशब्दमि"-त्यत्र समर्थित इत्यभिप्रायः, एवं सर्वत्रेति "आत्मा वा इदमेक एवाग्र आसीत् स ईक्षत लोकान्नु सृजा" इति स इमान् लोकानसृजत" "यस्स-र्वज्ञः सर्ववित् यस्य ज्ञानमयन्तपः तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते" "एको ह वै नारायण आसीत्" इत्यारभ्य स एकाकी न रमेत सोऽन्यं काममनसा ध्यायीत तद्धिरण्मयमण्डमभवत् तत्र ब्रह्मा चतुर्मुखो ऽजायत अथ पुरुषो ह वै नारायणोऽकामयत प्रजास्सृजेयमि"ति, नारा-यणाद्ब्रह्मा जायते"त्यादिषु सृष्टयुक्तेः पूर्वमेव परमचेतनतदसाधारणेक्षणादि-कमवगन्तव्यमित्यर्थ, उपक्रमस्यबहुश्रुतिविरोधादव्याकृतश्रुतिमात्रादौर्बल्य-मर्थसिद्धम् । उत्तरसूत्रशङ्कामाह "नन्वि"ति, सू० समाकर्षात्, असद्वा इद-मित्यादिना समाकर्षः प्रतिज्ञातः, ब्रह्मणा विपश्चिता अन्योऽन्तर आत्मा-नन्दमयः सोऽकामयतेति वाक्यान्यभिप्रेत्य विपश्चित्त्वादिकमुक्तं, प्रतिज्ञा-तार्थविषयवाक्यबुभुत्सां दर्शयति "कथमि"ति, तस्माद्वा इत्यात्म–शब्देन कारणविषयेण निर्दिष्टस्य विपश्चिदा–

भू० नन्दमयः सोऽकामयत बहु स्यां प्रजायेयेति" इदं सर्वम-सृजत यदिदं किञ्च तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाऽभवदि"त्यादिना ब्राह्मणेनानन्दमयं ब्रह्म सत्य-सङ्कल्पं सर्वस्य स्रष्टृ सर्वानुप्रवेशेन सर्वात्मभूतमभिधाय "तदप्येष श्लोको भवतीत्युक्तस्यार्थस्य सर्वस्य साक्षित्वेन ह्यु-दाहृतोऽयं श्लोकः, "असद्वा इदमग्र आसीदि"ति तथो-त्तरच "भीषाऽस्माद्वातः पवते इत्यादिना तदेव ब्रह्म समा-कृष्य सर्वस्य प्रशासितृत्वनिरतिशयानन्दत्वादयोऽभिधीय-

न्ते, अतो ऽयमन्तर्यादिविषय एव तदानीं नामरूपविभागाभावेन तत्सम्बन्धितयाऽस्तित्वाभावाद्ब्रह्मैवासच्छब्देनोच्यते "असदेवेदमग्र आसीदि"त्यत्राप्ययमेव निर्वाहः, यदुक्तं, "तद्धेदन्तर्ह्यव्याकृतमासीदि"त्यत्र प्रधानमेव जगत्कारणत्वेनाऽभिधीयते इति, नेत्युच्यते अत्राप्यव्याकृत–शब्देनाऽव्याकृतशरीरं ब्रह्मैवाभिधीयते "स एष इह प्रविष्ट आनखाग्रेभ्यः "पश्यँश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मन आत्मेत्येवोपासीतेत्यत्र स एष इति तच्छब्देनाव्याकृतशब्दनिर्दिष्टस्यान्तः प्रविश्य प्रशासितृत्वेनानुकर्षात् "तत्सृष्ट्वा तदेवानुप्राविशत् अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति स्रष्टुः सर्वस्य परस्य ब्रह्मणः

टी० नन्दमयस्य स इति पुँल्लिङ्गान्तशब्देन सत्यसङ्कल्पादिगुणकस्य तदप्येष इति तच्छब्देन च समाकर्ष उपपादितो भवति पूर्वस्माद्वाक्यादसद्वा इति वाक्ये समाकर्ष उक्तः, अनेन प्रकरणाच्छ्रुतिर्बलीयसीत्येतदपि परिहृतं, ज्ञानविपश्चिदादिबहुश्रुतिप्राबल्यसिद्धेः. तस्मादुत्तरत्र समाकर्षमाह "तथोत्तरत्रे"ति, भीषाऽस्मादित्यत्र अस्मादित्ययं–शब्दो ब्रह्मण आकर्षकः प्रकृतपरामर्शित्वात् । असच्छब्दार्थमाह "तदानीमि"ति, श्रुत्यन्तरस्थस्याप्यसच्छब्दस्य उक्तार्थपरत्वमाह "असदेवे"ति, तत्राप्यसद्वा इदमिति वाक्यस्य कारणविषयासच्छब्दार्थैकार्थ्यात् सत्यसङ्कल्पत्वादिकं सिद्धमित्यभिप्रायः, तत्रासच्छब्दोक्तस्य तत्सदासीदित्यनुकर्षप्रदर्शनं सच्छब्दस्य चिदचित्साधारण्यनिबन्धनं, सच्छब्दो हि तुच्छव्यावर्तकः न त्वचिद्व्यावर्तकः कारणावस्थायामसद्व्यावृत्तिर्ह्यारम्भणाधिकरणावसेया, तद्धेदमित्यादिश्रुतावप्यनुकर्षं दर्शयति "यदुक्तमि"ति, तद्धेदमिति श्रुत्युक्तानुप्रवेशनामरूपव्याकरणयोः परमात्मधर्मत्वेन प्रसिद्धिमाह "तत्सृष्टे"ति, प्रधानस्यापि स्व–

सू० कार्यानुप्रवेशेन नामरूपव्याकरणप्रसिद्धेश्च, "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मेति नियमनार्थत्वादनुप्रवेशस्य प्रधानस्याचेतनस्यैवंरूपोऽनुप्रवेशो न संभवति, अतोऽव्याकृतम् अव्याकृतशरीरं ब्रह्म तन्नामरूपाभ्यां व्याक्रियत इति तदेवाविभक्तनामरूपं ब्रह्म सर्वज्ञं सत्यसङ्कल्पं स्वेनैव विभक्तनामरूपं स्वयमेव व्याक्रियत इत्युच्यते, एवं च सतीक्षणादयो मुख्या एव भवन्ति, ब्रह्मात्म-शब्दावपि निरतिशयबृहत्त्वनियमनार्थव्यापित्वाऽभावेन प्रधाने न कथञ्चिदुपपद्यते अतो ब्रह्मैककारणं जगदिति स्थितम् ॥

कारणत्वाधिकरणं समाप्तम् ॥

जगद्वाचित्वाधिकरणम् । **सू० जगद्वाचित्वात् ॥ १६ ॥**

पुनरपि सांख्यः प्रत्यवतिष्ठते यद्यपि वेदान्तवाक्यानि चेतनं जगत्कारणत्वेन प्रतिपादयन्ति तथाऽपि तन्त्रसिद्ध-प्रधानपुरुषातिरिक्तं वस्तु जगत्कारणं वेद्यतया न तेभ्यः प्रतीयते तथा हि भोक्तारमेव पुरुषं कारणं वेद्यतयाऽधीयते कौषीतकिनो बालाक्यजातशत्रुसंवादे "ब्रह्म ते ब्रवाणीत्युपक्रम्य यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्य इति

टी० कार्यानुप्रवेशो युक्त इत्यत्राह "अन्तः प्रविष्ट" इति, पश्यन्न चक्षुः शृण्वन् श्रोत्रमि' ति वाक्यात् व्याकरवाणीति सङ्कल्पश्रवणाच्च प्रधानव्यावृत्तिसिद्धावप्यधिकहेतुज्ञापनार्थं परिहारान्तरमुक्तं वेदान्तवाक्यविशेषविवक्षितोऽनुप्रवेशविशेषो न सम्भवतीत्यर्थः, अनुप्रविश्य नियमनस्य पुरुषव्यावर्तनक्षमत्वेऽपि अत्रापेक्षितं प्रधानव्यावर्त्तनमात्रमिति प्रधानमात्रस्य

तदसम्भवोक्तिः, अन्येन व्याकृतत्वशङ्काव्युदसनार्थं तन्नामरूपाभ्यां व्याक्रियतेति वाक्यखण्डमुपादाय व्याचष्टे "तदेवे"ति, असच्छब्दोक्तकारणविषयेण तदात्मानं स्वयमकुरुतेत्यनेनैकार्थ्यादिति भावः । असदव्याकृतादिशब्दानां ब्रह्मण्यघटमानत्वेन पराभिमतानाम् उपपन्नतोक्ता । अथेक्षणादीनां ब्रह्मण्येवोपपन्नत्वं प्रधानेऽनुपपन्नत्वं चाह "एवञ्चे"ति, असदव्याकृतादिशब्दा ईक्षणादयश्च ब्रह्मण्युपपन्नाः, प्रधाने त्वीक्षणादयोऽनुपपन्ना इति वैषम्यं दर्शितम्भवति । अधिकरणार्थमुपसंहरति "अत" इति, कारणत्वाधिकरणं समाप्तम् ॥ सू॰ जगद्वाचित्वात्, सङ्गतिमाह "यद्यपी"ति, "स वै वेदितव्य इत्यन्तं विषयवाक्यं दर्शितं कारणवाक्यप्रतिपाद्यं किं प्रकृत्यधिष्ठाता पुरुषः? उत परमात्मे? ति संशयस्वरूपमर्थसिद्धं तदर्थं बालाक्यजातशत्रुसंवादे वेदितव्यतयोपदिष्टं ब्रह्म किं जीव? उत परमात्मे? ति किमेतेषां पुरुषाणां कर्त्तेति निर्दिष्टः कर्त्ता जीवः? उत पर? इति यस्य चैतत्कर्मेति कर्म-शब्दः किं पुण्यापुण्यवाचि? उत जगद्वाची? ति किमेतच्छब्दसामानाधिकरण्येन कर्म-शब्दस्य जगद्वाचित्वं युक्तम्? उत एतेषां पुरुषाणां कर्त्तेति पृथग् निर्देशावैयर्थ्याय पुण्यापुण्यवाचित्वं युक्तं? तौ ह सुप्तं पुरुषमित्याद्यवगते जीवमुख्यप्राणलिङ्गे पुण्यापुण्यवाचितामुपोद्बलयतो नेति किमेते लिङ्गे जीवबोधनार्थे? उत क्व वा इत्यादिप्रश्नप्रतिवचनाभ्यां जीवातिरिक्तब्रह्मबोधनपरे,? यदा जीवबोधनार्थे तदा तयोः पुण्यापुण्यवाचित्वोत्तम्भकत्वेन पृथङ्निर्देशावैयर्थ्याय कर्म-शब्दस्य पुण्यापुण्यवाचितोपपत्तेस्तत्सम्बन्धिकर्त्ता पुरुष इति बालाक्यजातशत्रुसंवादस्य जीवपरत्वात् सर्ववेदान्तवेद्यो भोक्ता पुरुष इति फलितं स्यात्, यदा ब्रह्मप्रतिबोधनपरे तदा तयोर्लिङ्गयोः पुण्यापुण्यवाचित्वोत्तम्भकत्वाभावादेतच्छब्दसामानाधिकरण्येन इह कर्म-शब्दस्य जगद्वाचित्वात्तत्कर्त्ता जीवविलक्षण इति बालाक्यजातशत्रुसंवादस्य परमात्मविषयतया सर्ववेदान्तवेद्यः परमात्मेति सिद्ध्यतीति विषयेऽर्थसिद्धे सति पूर्वपक्षमाह—

सू॰ उपक्रमे वक्तव्यतया बालाकिनोपक्षिप्तं ब्रह्माजानते

तस्मा एव अजातशत्रुणा स वै वेदितव्य इति ब्रह्मोपदि-श्यते, यस्य चैतत्कर्मेति कर्मसम्बन्धात्प्रकृत्यध्यक्षो भोक्ता पुरुषो वेदितव्यतयोपदिष्टं ब्रह्मेति निश्चीयते नार्थान्तर-त्वस्य कर्मसम्बन्धानभ्युपगमात्, कर्म च पुण्यपापलक्षणं क्षेत्रज्ञस्यैव सम्भवति, न च वाच्यं क्रियत इति कर्मेति व्यु-त्पत्त्या प्रत्यक्षादिप्रमाणोपस्थापितं जगदेतत्कर्मेति निर्दि-श्यते यस्यैतत्कृत्स्नं जगत्कर्म स वेदितव्य इति क्षेत्रज्ञा-दर्थान्तरमेव प्रतीयत इति यो वै बालाक एतेषां पुरु-षाणां कर्त्ता यस्य चैतत्कर्मेति पृथङ्निर्देशवैयर्थ्यात्, क-र्म-शब्दस्य च लोकवेदयोः पुण्यापुण्यरूप एव कर्मणि प्रसिद्धेः तत्तद्भोक्तृकर्मनिमित्तत्वाज्जगदुत्पत्तेः, एतेषां पुरुषाणां कर्त्तेति च भोक्तुरेव चोपपद्यते

टी० "उपक्रम" इति, प्रतिवचनस्य उपक्रमस्यब्रह्मविषयत्वेन ब्रह्म-णोऽन्यस्य जीवस्य कर्मसम्बन्धपरत्वशङ्का निरस्ता, ततः किमित्यत्राह "यस्ये" ति, नार्थान्तरं प्रकृतिवन्नेश्वरोऽपीत्यर्थः यज्ञादिकं कर्म यस्य प्री-णनमित्येतदर्थपरत्वव्युदासायाह "कर्म चे" ति, कर्म-शब्दोऽसङ्कुचितवृत्तिः पापमपि वक्तीति कर्माराध्यपरत्वमयुक्तमिति भावः । अत्रानन्दमयाऽधिक-रणाक्षेपः फलितः । पादसंगतिः पूर्ववद् भोक्तृपुरुषप्रतिपादनच्छायानुसारिवा-क्यविषयत्वात्कर्तृत्वस्य जीवे सम्भवद्रूपपूर्वपक्षहेतुवशाद्योगव्यवच्छेदाक्षेपः फलितः । सिद्धान्तमाशङ्क्याह "न चे" ति, पौनरुक्त्यापादनेन परिहरति "यो वा इति, हेत्वन्तरमाह "कर्म-शब्दस्य चे" ति, रूढिर्हि योगाद् बलीयसी-त्यर्थः । सर्वकर्तृत्वं कथमित्यत्राह "तत्तदि" ति, इह निर्दिष्टानां भोक्तृणा-मनिर्दिष्टानां च तत्सजातीयानां ज्ञाततया नोपदेष्टव्यत्वं न च वेदित-व्यमित्यत्राह—

सू० तदयमर्थः एषामादित्यमण्डलाद्यधिकरणानां क्षेत्रज्ञ-भोग्यभोगोपकरणभूतानां पुरुषाणां यः कारणभूतः एतत्कारणभावहेतुभूतपुण्यापुण्यलक्षणं च कर्म यस्य स वै वेदितव्यः तत्स्वरूपं प्रकृतेर्विविक्तं वेदितव्यमिति, तथोत्तरत्र "तौ ह सुप्तं पुरुषमाजग्मतुः तं यष्टिना चिक्षेपे"ति सुषुप्तपुरुषागमनयष्टिघातोत्थापनादीनि भोक्तृत्वप्रतिपादन एव लिङ्गानीति, तथोपरिष्टादपि भोक्त्रैव प्रतिपाद्यते तद्यथा "श्रेष्ठैस्स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्ति एवमेवैष प्रज्ञात्मा एतैरात्मभिर्भुङ्क्ते एवमेवैते आत्मान एनं भुञ्जन्ती"ति यथा क्वैष एतद्बालाके पुरुषो ऽशयिष्ट क्व वा क्व वा एतदभूत कुत एतदागा"दिति पृष्टमर्थमजानते तस्मै स्वयमेवाजातशत्रुरुवाच हिता नामनाड्यस्तासु तदा भवति यदा सुप्तः स्वप्नं न कथञ्चन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येति मनस्सर्वध्यानैस्सहाप्येति स यदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गाः विप्रतिष्ठेरन् एवमेवैतस्मादात्मनः प्राणाः यथाऽऽयतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका इति सुषुप्त्याधारतया स्वप्नसुषुप्तिजागरितावस्थासु वर्त्तमानं वागादिकरणाप्ययोद्गमस्थायनमेनमेव जीवात्मानमथास्मिन्प्राण एवैकधा भवति इत्युक्तवान्

टी० "तदयमर्थ" इति, कर्त्तृत्वे हेतुः क इत्यपेक्षायां यस्य वैतत्कर्मेति कर्मित्वोपपादनं शुद्धस्वरूपं चाविदितं, कर्मसम्बन्धस्तु उपलक्षणमित्यर्थः, एवं कर्मनिमित्तभोक्तृत्वात् जीवत्वमुक्तं तदेव यष्टिघातोत्थापना-

श्रेष्ठिदृष्टान्तात् सुषुप्तिप्रबोधाद्वियोगाच्चोपपादयति "तथोत्तरत्रेत्या"-दिना, सुषुप्तिस्थानं नाड्यः न परमात्मेत्यभिप्रायेण हिता नाम नाड्य इति वाक्यमुदाहृतं तदानीं तदा-शब्दः सुषुप्तिवेलापरः स्यात्, सर्वैर्नामभिस्सर्वैर्ध्यानैरिति तत्तत्करणमुपरतस्वस्वव्यापारमित्यर्थः, एतस्मादात्मनः प्राणा इति प्राण-शब्दः पञ्चवृत्तिप्राणपर इति पूर्वपक्षी मन्यते देवा इन्द्रियाणि लोका ज्ञानं विषयो वा सुषुप्त्याधारता सुषुप्तिमत्त्वं सुषुप्त्याधारतयोक्तयानित्यन्वयः, प्राण-शब्दस्य प्रथमान्तत्वशङ्कां मुख्यप्राणपरमात्मपरत्वशङ्कां च निराकर्त्तुं व्याचष्टे—

सू० अस्मिन् जीवात्मनि प्राणभृत्त्वनिबन्धनोऽयं प्राण-शब्दः स यदा प्रतिबुध्यत इति प्राण-शब्दनिर्दिष्टस्य प्रबोधश्रवणान्मुख्यप्राणस्येश्वरस्य च सुषुप्तिप्रबोधयोरसम्भवात् अथवा अस्मिन् प्राण इति व्यधिकरणसप्तम्यौ अस्मिन्नात्मनि वर्त्तमाने प्राण एवैकधा भवति वागादिकरणग्राम इति प्राण-शब्दस्य मुख्यप्राणपरत्वेऽपि जीव एवास्मिन् प्रकरणे प्रतिपाद्यते स्वतः प्राणस्य जीवोपकरणत्वात्, अतो वक्तव्यतयोपक्रान्तं ब्रह्म पुरुष एवेति तद्व्यतिरिक्तेश्वरासिद्धिः कारणगताश्चेतनाद्यस्चेतनधर्मा अस्मिन्नेवोपपद्यन्त इत्येतदधिष्ठितप्रधानमेव जगत्कारणमिति ।

टी० "अस्मिन् जीवात्मनी"ति, तदुपपादयति "स यदे"ति, प्रबोधः श्रूयतां ततः किमित्यत्राह "मुख्यप्राणस्ये"ति, प्रथमान्तत्वासम्भवोऽतिप्रसिद्ध इति न कण्ठोक्तः, तदा ह्येकधा भवतीत्यनेन वागादिकरणानामिव निवृत्तव्यापारतयाऽवस्थानं तूक्तं स्यात्, तच्च विरुद्धं स्वापेऽपि प्राणव्यापारोपलब्धेरवधारणानुपपत्तिश्च वागाद्युपरतेः प्रतिपाद्यमानत्वात्, न च वाच्यं प्राण एवानुपरतव्यापार एकरूपस्थित इत्यर्थ इति प्रत्यक्षसिद्धार्थस्य प्रतिपादनवैयर्थ्यात् प्राणस्य स्वाधीनेन्द्रियस्थितिप्रवृत्तित्वरूपं प्राधान्यं

विवर्तितमिति चेत्तत्तु सर्वदा भवतीति स्वापदशायान्तत्प्रतिपादनप्रसङ्गतं स्यात्, अतः सप्तम्यन्तत्वमङ्गीकृत्य जीवपरत्वमुपपादितम्, अस्यां योजनायां सप्तम्यन्तपदयोः सामानाधिकरण्यस्वारस्येऽपि प्राण-शब्दस्य लाक्षणिकत्वं तद्भावृत्त्यर्थं योजनान्तरमाह "अथ वे"ति, क एकधा भवतीत्यत्राह "वागादिकरणग्राम" इति, प्राणाधिकरणवाचितया व्यधिकरणस्यास्मिन्निति पदस्य परमात्मपरत्वमाशङ्क्याह "प्राण-शब्दस्ये"ति, कुत इत्यत्राह "स्वत" इति, धर्मान्तराणामपि जीवे सम्भवन्दर्शयन् पूर्वपक्षमुपसंहरति "अत" इति, अस्मिन्नधिकरणे प्राणजीवपरमात्मविषयतया त्रिशिरस्को विचार इतरैः कृतः, तत्रेह वेदितव्यतयोपदिष्टपुरुषस्य प्राणनामभिरामन्त्रणाश्रवणादिनां मुख्यप्राणवैलक्षण्यस्य स्फुटत्वाद् द्विशिरस्को विचार उपपन्न इत्यभिप्रायेण जीवपरत्वमेव पूर्वपक्षीकृतम् । ननु समष्ट्यात्मा हिरण्यगर्भः प्राणशब्दविषयत्वेन शङ्कित इति युक्तं त्रिशिरस्कत्वं युक्तं विचारस्य न परिस्पन्दलक्षणकर्मसम्बन्धस्य हेतुतयोपन्यासानुपपत्तेः परिस्पन्दात्मकं कर्म हि मुख्यप्राणधर्मतया प्रसिद्धं न तु हिरण्यगर्भधर्मतया प्राणसमष्ट्यभिमानित्वाद्धिरण्यगर्भस्य प्राणधर्मेण कर्मणा विशेष्यत्वं युक्तमिति चेत् हिरण्यगर्भः किं भवत्पक्षे क्षेत्रज्ञोऽभिमत? उत ईश्वर? इति ईश्वरत्वे हिरण्यगर्भपरत्वं सिद्धान्तीकर्त्तव्यम् अतो न पूर्वपक्षतामर्हति परमेश्वर एवायमेतेषां पुरुषाणां कर्त्ता स्यादिति हि भवतां सिद्धान्तप्रतिज्ञा, यदि क्षेत्रज्ञोऽभिमतः तर्हि जीवपरत्वप्रतिक्षेपादेव तत्परत्वं प्रतिक्षिप्तं भवतीति प्राणो न पृथग्विचार्यः किं जीवमात्रपरः? उत जीवविशेषपर इति? सन्देहो युक्त चेन्न एकस्मिन् प्रकरणे सामान्यशब्देनाऽर्थप्रतिपादनेऽपि विशेषोपस्थापके सति तस्य तत्पर्यवसानस्य न्याय्यतया हिरण्यगर्भो वा परमात्मा वेति द्विशिरस्क एव संशयः स्यात् । ननु जीवमुख्यप्राणलिङ्गादिति सूत्रेण पूर्वपक्षद्वयद्योतनाद्युक्तं विचारत्रयमिति चेत् न जीवसाधकत्वेन मुख्यप्राणलिङ्गस्य शङ्कितत्वात् जीवोपकरणावगमो हि जीवसाधकः, अतो मुख्यप्राणवैलक्षण्यस्य स्फुटत्वात् प्राण-शब्दस्य हिरण्यगर्भवाचित्वे स्वारस्याभावाच्च जीवविषयः पूर्वपक्ष उपन्यस्तः । राद्धान्तमाह

भू० प्राप्ते प्रचक्ष्महे सू० जगद्वाचित्वात्, अत्र पुण्यापुण्यपरवशः क्षुद्रः क्षेत्रज्ञः स्वस्मिन् प्रकृतिधर्माध्यासेन तत्परिणामहेतुभूतः पुरुषो नाऽभिधीयते अपि तु निरस्तसमस्ताविद्यादिदोषगन्धोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणनिधिः निखिलजगदेककारणभूतः पुरुषोत्तमोऽभिधीयते कुतः, यस्य चैतत्कर्मेत्यत्र एतच्छब्दान्वितस्य कर्म-शब्दस्य परमपुरुषकार्यभूतजगद्वाचित्वादेतच्छब्दो ह्यर्थप्रकरणादिभिरसङ्कुचितवृत्तिरविशेषेण

टी० "इति प्राप्त" इति, पूर्वपक्षे कर्त्रादिशब्दानामस्वारस्यं स्वमते स्वारस्यं चाभिप्रेत्य तदुपपादकं जीवपरयोः स्वभावविशेषं वदन् प्रतिजानीते "अत्रेत्या" दिना, प्रकृतिधर्माध्यासेन स्वस्मिन् प्रकृतिगतकर्तृत्वाध्यासेनेत्यर्थः, नेति पदानुषङ्गसिद्धार्थ उक्तो नाभिधीयत इत्यन्तेन सौत्रहेतुबलसिद्धं प्रतिज्ञांशमाह 'अपि त्वि" ति, यादृशस्य कर्म-शब्दस्य जगद्वाचित्वं युक्तं तादृशत्वं सूत्रकाराभिप्रेतमिति मन्वानः कर्म-शब्दं विशिनष्टि "एतच्छब्दान्वितस्ये" ति, । नन्वेतच्छब्दः प्रकृतपरामर्शी तत् कथम् अप्रकृतजगत्परामर्श इत्यत्राह "एतच्छब्दो ही" ति, अर्थप्रकरणादिभिरिति, अर्थ-शब्देन स्ववाक्यस्य पदान्तरान्वययोग्यत्वं विवक्षितं प्राचीनैर्वाक्यनिचयः प्रकरणम् आदि-शब्देन उपरितनवाक्यानि विवक्षितानि । यद्वा पूर्वापरवाक्यजातं प्रकरणम्, आदि-शब्देन तात्पर्यलिङ्गानि विवक्षितानि असङ्कुचितवृत्तिरिति लिङ्गवचनविरोधात् पुरुषपरामर्शोऽनुपपन्नः पुण्यपापरूपं कर्माप्रकृतम् अप्रकृतमपि कर्तृत्वकारणतया परिकल्प्य धीस्थत्वापादनमत्यन्तविलम्बितम्पुरुषनिर्माणरूपव्यापारमेतत्कर्मेति निर्दिश्य यस्येति तत्सम्बन्धे विवक्षिते पुनरुक्तिः स्यात् निर्माणव्यापाराश्रयस्य कर्तृशब्देनैवाभिहितत्वात् अतः सङ्कोचकाभावादसंकुचितवृत्तिरिति भावः । तर्ह्यप्रकृतं जगत् कथमुपस्थाप्यतेत्यत्राह-

सू० प्रत्यक्षादिप्रमाणोपस्थापितनिखिलचिदचिन्मिश्रजगद्विषयः, न च पुण्यापुण्यलक्षणं कर्मैव च कर्म–शब्दाभिधेयं ब्रह्म ते ब्रवाणीत्युपक्रम्य ब्रह्मत्वेन बालाकिना निर्दिष्टानामादित्यमण्डलाद्यधिकरणानां पुरुषाणामब्रह्मत्वेन मृषा वै खलु मा संवादयिष्ठा इति तमब्रह्मवादिनमपोद्य तेनाविदितब्रह्मज्ञापनायाजातशत्रुणेदं वाक्यमवतारितं, यो वै बालाक इत्यादि पुण्यापुण्यलक्षणकर्मसम्बन्धिन आदित्याद्यधिकरणास्तत्सजातीयाश्च पुरुषास्तेनैव विदिता इति तदविदितपुरुषविशेषज्ञापनपरोऽयं कर्म–शब्दो न पुण्यापुण्यमात्रवाची क्रियामात्रवाची वा अपि तु कृत्स्नस्य जगतः कार्यत्ववाची ।

टी० "प्रत्यक्षादी"ति, एतच्छब्दः सन्निहितपरामर्शी, सन्निधिश्च बुद्धिस्थितिः, सा च प्रकरणतो वा प्रकृतार्थान्तरसम्बन्धित्वेन वा प्रसिद्धितो वा भवति, तत्र प्रकरणादिना सङ्कोचानुपपत्तेः परिशेषात् प्रसिद्धार्थपरामर्शित्वे सति तत्राऽपि सङ्कोचकाभावात् निखिलचिदचिन्मिश्रजगद्विषय इत्यर्थः । चिदचिन्मिश्रेति जगदेकदेशभूतस्यादित्यादेः प्रकृतत्वादेकदेशी च जगत्तद्द्वारा बुद्धिस्थम् अतश्च जगत्परामर्शो युक्त इति भावः । रूढेर्योगात् प्राबल्यमेतच्छब्दस्वारस्यं च तुल्यं तत्कस्यानुरूपोऽर्थनिश्चय इत्यपेक्षायामाह "न च पुण्ये"ति, तुल्यत्वनिवारकबलीयस्त्वसिद्धये हेत्वन्तरमाह "ब्रह्मत"इति, ततः किमित्यत्राह "पुण्यापुण्ये"ति, क्रियामात्रवाचीवेति दृष्टान्ततयोक्तं यथा वेदितव्यतया प्रकृतस्य प्राणानामभिरामन्त्रणाश्रवणादिना

एवमेव खल्वविदितोऽर्थ उपदिष्टो भवति पुरुषस्य कर्मसंबन्धोपलक्षितस्वाभाविकस्वरूपस्याज्ञातस्य वेदितव्यत्वोपदेशे च लक्षणा कर्मसंबन्धमात्रस्यैव वेदितव्यस्वरूप-

लक्षणत्वाद्यस्य कर्म स वेदितव्य इत्येतावतैव तत्सिद्धेः, यस्य वै तत्कर्मेत्येतच्छब्दवैयर्थ्यं च, य एतेषां कर्ता यस्य वै तत्कर्मति पृथङ्निर्देशस्य चायमभिप्रायः, ये त्वया ब्रह्मत्वेन निर्दिष्टाः पुरुषाः तेषां यः कर्ता ते यत्कार्यभूताः किं विशिष्याभिधीयते कृत्स्नं जगद्यस्य कार्यम् उत्कृष्टा अपकृष्टाश्चेतना अचेतनाश्च सर्वे पदार्था यत्कार्यत्वे तु-ल्याः स परमकारणभूतः पुरुषोत्तमो वेदितव्य इति जगदुत्पत्तेर्जीवकर्मनिबन्धनत्वेऽपि न जीवस्स्वभोग्यभोगोपकरणादेस्स्वयमुत्पादकः, अपि तु स्वकर्मानुगुण्येनेश्वरसृष्टं सर्वं भुङ्क्ते, अतो न तस्य पुरुषान्प्रति कर्तृत्वमुपपद्यते ॥

प्राणवैलक्षण्यस्य स्फुटत्वात्प्रकरणस्य बालाक्यविदितपुरुषज्ञापने प्रवृत्तत्वाच्च मुख्यप्राणस्य लोकविदितत्वाच्च कर्म-शब्दो न मुख्यप्राणव्यापारभूतक्रियामात्रवाची, एवमेव पुण्यापुण्यमात्रवाची न भवतीत्यर्थः । आदित्यमण्डलाद्यधिकरणानां पुरुषाणामिति अस्य वाक्यस्य यः कर्तेत्यनूद्य वेदितव्यविधिपरत्वाच्चक्षोस्सूर्यो अजायत नाभ्या आसीदन्तरिक्षं सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् दिवञ्च पृथिवीं चेत्यादि प्रापकवाक्येषु आदित्यादिपुरुषाणां द्युपृथिव्यादिजगतश्च पृथक् सृष्टिप्रतिपादनादिहापि पुरोवादानुरोधेनादित्यादिभिस्सह जगन्निर्देशाश्रयणं युक्तमिति भावः । क्रियत इत्यवयवार्थस्य प्रवृत्तिनिमित्तत्वज्ञापनाय जगतः कार्य्यत्ववाचीत्युक्तं, कार्य्यभूतजगद्वाचीत्यर्थः, जगद्वाचित्वे सति अविदितार्थोपदेशपरत्वोपपत्तिमाह "एवमेवे"ति, अनेकहेत्वपेक्षया एकोहेतुर्दुर्बलः, अतः सङ्कोचरहितैच्छब्दस्वारस्यादविदितपुरुषविशेषोपदेशोपक्रमाच्च पुरोवादानुरोधाच्च कर्म-शब्दस्य जगद्वाचित्वं युक्तमित्यर्थः । अविदितत्वं कर्मसम्बन्धर-

हितस्वरूपस्य पुरुषस्य सम्भवतीत्यत्राह "पुरुषस्ये"ति, कर्मसम्बन्धिवाचिपदस्य कर्मरहितोपस्थापकत्वममुख्यं, न चावस्थाद्वयसाधारणात्मशब्दोऽपि प्रयुक्तः यस्य कर्म स वेदितव्य इति हि निर्देशः, अतो लक्षणेत्यर्थः, एतब्दच्छब्दस्य तदुक्तार्थपरत्वेऽनिष्टमाह "यस्य कर्मे"ति, त्वन्मतेऽपि वैयर्थ्यं तुल्यमित्यत्राह "य एतेषामि"ति, य एतेषां पुरुषाणां कर्त्तेति निर्देशो वालाकिनोक्तानां कार्य्यत्वेनाब्रह्मत्वज्ञापनार्थं तेषां कर्त्तेति प्रतिपादनमात्रेण तदुक्तादित्यादिभ्योऽपि अधिकहिरण्यगर्भादिदेवताविशेषसमन्वितकृत्स्नजगत्कारणत्वं न सिध्यतीति यस्य चैतत्कर्मेत्युक्तं जगत्कर्तृत्वस्य सन्निहितविषयतयाऽवच्छिन्नत्वव्यावृत्त्यर्थमेतेषां कर्त्तेत्युक्तमित्यर्थः । विपक्षे दूषणान्तरमाह "जगदुत्पत्तेरि"ति, स्वकर्मानुगुण्येनेश्वरसृष्टं सर्वं भुङ्क्त इति, न हि घटादिकर्तृत्वं विनियोगादृष्टवतः पुरुषस्य अपि तु कुलालस्येति भावः । मुक्तपरत्वे कर्मवाचिपदलक्षणा एतच्छब्दवैयर्थ्यं कर्तृ-शब्दास्वारस्यं चोक्तं चरमं हेतुद्वयं बद्धपरत्वेऽपि तुल्यम्

सू० अतः सर्वं वेदान्तेषु परमकारणतया प्रसिद्धं परं ब्रह्मैवात्र वेदितव्यतयोपदिश्यते ॥

## सू० जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥

अथ यदुक्तं जीवलिङ्गान्मुख्यप्राणसङ्कीर्त्तनाच्च लिङ्गाद्भोक्तैवास्मिन् प्रकरणे प्रतिपाद्यते न परमात्मेति तद्व्याख्यातं तस्य निर्वाहः प्रतर्दनविद्यायामभिहितः, एतदुक्तं भवति यथोपक्रमोपसंहारपर्यालोचनया ब्रह्मपरं वाक्यमिति निश्चितं तत्रान्यलिङ्गानि तदनुरोधेन वर्णनीयानीति तच्च प्रतिपादितम् अत्राप्युपक्रमे ब्रह्म ते ब्रवाणीति ब्रह्मोपक्षिप्तं मध्ये च यस्य चैतत्कर्मेति निर्दिष्टं न पुरुषमात्रम् अपि तु निखिलजगदेककारणं ब्रह्मैवेत्युक्तम्

टी० अतः सर्ववेदान्तेषु परमकारणतया प्रसिद्धमिति एतेषां यः कर्त्ता यस्य चैतत्कर्मेति यच्छब्देनानुवादरूपत्वप्रतिपत्तेर्यतो वा इमानीत्यादिष्विव सर्वत्रेदान्तप्रसिद्धः परमपुरुष एवात्र कारणमनूद्यत इति भावः। एवं प्रथमवाक्यगतहेतुः परिहृतः, अथोपरितनवाक्यगत हेतुमनूद्य परिहरति सू० जीवमुख्यप्राणलिङ्गाचेति चेत्तद् व्याख्यातम्, जीवलिङ्गान्मुख्यप्राणसङ्कीर्त्तनाच्चेति समासान्तर्गता जीवमुख्यप्राणयोरिति षष्ठी संबन्धसामान्यविषया, ततश्च जीवस्य लिङ्गत्वेन सम्बन्धः ज्ञाप्यतया मुख्यप्राणस्य च वाच्यतया सम्बन्धः इत्यर्थवशात्सिद्ध्यतीति भावः। यद्वा लिङ्गं ज्ञापकं उभयोरपि विज्ञाप्यतया ज्ञापकेन सम्बन्ध इति भावः, जीवस्य लिङ्गं ज्ञापकं मुख्यप्राणस्य सङ्कीर्त्तनं ज्ञापकं मुख्यप्राणसङ्कीर्त्तनाच्च लिङ्गादिति ह्युक्तं, कर्म-शब्दस्य स्पन्दरूपक्रियावाचित्वानुपपत्तेः परिशेषात्कीर्त्तनमेव प्राणलिङ्गमित्यभिप्रायः, उपकरणभूतमुख्यप्राणज्ञापकं तत्कीर्त्तनमपि तदुपकरणिनो जीवस्य प्रतिपाद्यत्वे हेतुरित्यभिप्रायेण सूत्रे मुख्यप्राणलिङ्गमुपात्तं न तु प्राधान्येन मुख्यप्राणस्य प्रतिपाद्यत्वसाधकतयोपन्यस्तं तत्प्रतिपादकशङ्कानुत्थानस्य दर्शितत्वात् निर्वाहः परिहारः प्रतर्दनविद्यायां कथं परिहृतं, तत्रातिदेष्टव्यांशः कः? स चात्र कथं घटत इत्यत्राह "एतदुक्तं भवती"ति, तदनुरोधेन वर्णनीयानीत्यन्तेनातिदेष्टव्यांशः उक्तः न तूपासनार्थत्वमप्यतिदेष्टव्यमिति भावः। तस्याऽत्र संघटितत्वं दर्शयति "अत्राप्युपक्रम"इति, ब्रह्मोपक्षिप्तमिति ब्रह्म-शब्दस्य परस्मिन्नेव मुख्यत्वात्तत्परत्वं स्वतः प्राप्तमुपक्रमावगतत्वात् प्रबलञ्चेति भावः। ब्रह्मैवेत्युक्तमिति मध्यगतवाक्यस्य परमात्मपरत्वस्योपपादितत्वान्मध्येऽपि परमात्मपरत्वं प्रतिपन्नमित्यर्थः॥

भू० उपसंहारे च सर्वान् पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेदेति ब्रह्मोपासनैकान्तं सर्वपापापहतिपूर्वकं स्वाराज्यं च फलं श्रुतम् अतोऽस्य वाक्यस्य ब्रह्मपरत्वविनिश्चयेन जीवमुखप्राणलिङ्गान्यपि

तत्परतया वर्णनीयानीति प्रातर्दनेऽप्युपास्त्यत्रैविध्येन जीवमुख्यप्राणलिङ्गानां ब्रह्मपरत्वमुक्तम् अत्राप्यथास्मिन् प्राण एवैकधा भवतीति सामानाधिकरण्यसम्भवे वैयधिकरण्यसंश्रयणायोगात् ब्रह्मण्येव प्राण-शब्दप्रयोगनिश्चयेन च प्राणशरीरकब्रह्मोपासनार्थं प्राणसङ्कीर्त्तनं लिङ्गं युज्यते, जीवलिङ्गानां ब्रह्मपरत्वं पुनः कथमित्यत्राह—

**सू० अन्यार्थं तु जैमिनिः प्रश्नव्याख्याना-भ्यामपि चैवमेके ॥ १८ ॥**

तु-शब्दो जीवसङ्कीर्त्तनेन वाक्यस्य तत्परत्वसम्भावनाव्यावृत्त्यर्थः,

टी० उपसंहारे चेति सर्व्वपापहतिपूर्व्वकं स्वाराज्यमित्यनेन श्रैष्ठ्याधिपत्य-शब्दयोः स्वाराज्यविशेषणत्वमेव न तु पृथक्फलवाचित्वं च-शब्दाभावादित्यभिप्रेतं सर्वान् पाप्मनोऽपहत्येत्यनेन अपहतपाप्मत्वादिगुणाष्टकमुक्तं जरादीनामपि पाप्मान्तर्गतत्वात्, उक्तं च वाक्यकारैः "स्युः पाप्मानः कालजरामृत्युशोकादयः सङ्घातत्वादि"ति, स्वाराज्यं-स्वाधीनत्वम्, अतः सत्यकामत्वं सत्यसङ्कल्पत्वं चोक्तम्भवति तत्स्वाराज्यं संसारिभ्योऽस्य श्रैष्ठ्यरूपमाधिपत्यम् अधिपतिः-परमात्मा "सर्वस्याधिपतिरि"ति श्रुतेः, तत्सम्बन्ध्याधिपत्यं गुणाष्टकं हि ब्रह्मसम्बन्धितया ब्राह्ममुच्यते, "ब्राह्मेण जैमिनि"-रिति अतो ब्रह्मसम्बन्धितया तत्साधर्म्यरूपं संसारिभ्यः श्रैष्ठ्यरूपं स्वाराज्यमेतीति श्रुतेरर्थ इत्यभिप्रायः। अनेन ग्रन्थेन फलविशेषकीर्त्तनस्य परमात्मपरत्वे हेतुतोपन्यासो ब्रह्माज्ञानवादिनामनुपपन्न इत्यर्थो दर्शितो भवति, अविद्यानिवृत्त्यतिरेकेण स्वाराज्य-शब्दवाच्याभावाद्दुःखाभावाभिप्रायत्वे लक्षणा, सगुणप्राप्तिविषयं वाक्यमिति चेत् सत्यं निर्गुणप्राप्तेरप्रामाणिकत्वाद्विशेषणवैयर्थ्यमेव न हि ततः प्राप्यान्तरमुक्तम् उपनिषदः समाप्तत्वात् । स्वाराज्यं फलं श्रूयते ततः किमित्यत्राह "अतोऽस्ये"ति,

अत्र निर्वाहप्रकारं दर्शयितुं तत्रोक्तं विशेषमाह "प्रातर्दने ही"ति, त्रैविध्येनेति हेतौ तृतीया, प्रयोजनतया च हेतुत्वमुपासात्रैविध्यसिद्ध्यर्थमित्यर्थः। अस्मिन्निर्वाहेऽत्र सम्भवदंशमाह "अत्रापी"ति, प्रातर्दनोपन्यासन्यायेन प्राणलिङ्गस्य ब्रह्मपरत्वमुक्तमित्यर्थः, जीवलिङ्गस्य तु प्रकारान्तरेण निर्वाहप्रतिपादकमनन्तरसूत्रमवतारयितुं जीवलिङ्गनिर्वहणाकाङ्क्षां दर्शयति जीवलिङ्गानामिति, सू· अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्याम् अपि चैवमेके, जीवप्राणलिङ्गयोर्द्वयोरपि निर्वाहमुक्त्वा मतान्तरेण तयोर्निर्वाहमाहेतिशङ्काव्यावृत्त्यर्थमाह "तु-शब्द" इति, तु-शब्दो न पूर्वोक्तनिर्वाहव्यावृत्त्यर्थः ।

सू० अन्यार्थं जीवसङ्कीर्त्तनं जीवातिरिक्तब्रह्मस्वरूपप्रतिबोधनार्थमिति जैमिनिराचार्य्यो मन्यते स्म, कुतः प्रश्नव्याख्यानाभ्यां, प्रश्नस्तावत् "तौ ह सुप्तं पुरुषमाजग्मतुरि"त्यादिना सुप्तस्य प्रतिबुद्धप्राणस्येव प्राणनामभिरामन्त्रणाश्रवण-यष्टिघातोत्थापनाभ्यां प्राणादिव्यतिरिक्तं जीवं प्रतिबोध्य पुनर्जीवव्यतिरिक्तब्रह्मप्रतिबोधनपरो दृश्यते "क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदागादिति" व्याख्यानमपि "यदा सुप्तः स्वप्नं न कथंचन पश्यति अथास्मिन् प्राण एवैकधा भवति य एतस्मादात्मनः प्राणाः यथा यथाऽऽयतनं प्रतिष्ठन्ते प्राणेभ्यो देवाः देवेभ्यो लोका" इति जीवादर्थान्तरभूतपरमात्मपरमेव, सुप्तस्य हि जीवस्य यत्रोषितस्य जागरितस्वप्नदशासम्बन्धिविचित्रसुखदुःखानुभवकालुष्यविरहेण संप्रसन्नस्य

टी० अपि तु पूर्वपक्षव्यावृत्त्यर्थः इत्यर्थः, व्याख्येयं पदं सविशेष्यमाह "अन्यार्थमि"ति अन्यः कः तदर्थत्वं कथमित्यत्राह 'जीवातिरिक्ते'ति, प्रबुद्धप्राणस्येव अनुपरतव्यापारप्राणवत इत्यर्थः प्राणनामभिरिति प्राणना

म-शब्देन बृहत्पाण्डुरवासःसोमराजशब्दा विवक्षिताः "तौ ह सुप्तं पुरुषमीयतुः तं हाजातशत्रुरामन्त्रयाञ्चक्रे "बृहत्पाण्डुरवासः सोमराजन्नि"ति हि श्रुतिः "प्राणो वाव ज्येष्ठश्च श्रेष्ठश्चे"ति ज्यैष्ठ्यश्रैष्ठ्यगुणात्तु महत्त्वात् बृहन्नित्यामन्त्रणम्, पाण्डुरवासस्त्वञ्च प्राणधर्मः "किंमे वास" इति प्राणेन पृष्टे "आपो वास" इति अपां प्राणवासस्त्वोक्तेः "यच्छुक्लं तदपामित्यपां शुक्लवर्णश्रवणाच्च, सप्तान्नब्राह्मणे "अथैतस्य प्राणस्याऽपः शरीरं ज्योतीरूपं असौ चन्द्र" इति चन्द्रे ज्योतीरूपत्वदर्शनाच्च चन्द्रसम्बन्धेन सोमेत्यामन्त्रणं लक्षणया प्राणो वा सम्राट्परं ब्रह्मेति सम्राट्त्वश्रवणात् राजन्नित्यामन्त्र्यते अतः प्राणनामभिरित्युक्तम्। ननु कथमामन्त्रणस्य प्राणविषयत्वनिश्चयः, तन्निश्चये सति ह्येवं निर्वाह इति योग्यतासहकृतात् पारिशेष्यात् प्राणविषयत्वनिश्चय इति ब्रूमः, स्वापदशायां काष्ठकल्पत्वाद्देहस्यानात्मत्वं स्फुटम् इन्द्रियाणान्तु पाण्डुरवासस्त्वादिकमनुपपन्नम् अतः स्वापेऽप्यनुपरतव्यापारस्य प्राणस्याचेतनत्वेनानात्मत्वख्यापनमपेक्षितं पाण्डुरवासस्त्वादीनां तद्विशेषणत्वं श्रुतिसमाधियोग्यं च अतो यथोक्त एवार्थ इति । नन्वत्रैव बालाक्यजातशत्रुसंवादे "स होवाच य एवासौ चन्द्रे पुरुष" इति प्रक्रान्ते चन्द्रपर्याये बृहत्पाण्डुरवासाः सोमो राजेति चन्द्रविषयतया श्रुतानामेषां नामधेयानां प्राणविषयत्वं कथम् उच्यते—

**सू० सुषुप्तस्य स्वस्थतापत्तिः पुनरप्यस्य यस्माद्भोगाय निष्क्रमणं सोऽयं परमात्मा, तथाहि "सता सोम्य तदा सम्पन्नो भवति प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि"ति सुषुप्त्याधारतया प्रसिद्धो जीवादर्थान्तरभूतः प्राज्ञः परमात्मा, अतः प्रश्नप्रतिवचनाभ्यां जीवसङ्कीर्त्तनं जीवादर्थान्तरभूतपरमात्मप्रतिपादनार्थमिति निश्चीयते, यदुक्तं प्रश्नव्याख्याने जीवपरे सुषुप्तिस्थानं च नाड्य**

**एव करणग्रामस्य प्राणशब्दनिर्दिष्टे जीवे एवैकधा भवतीति ॥**

सुषुप्तपुरुषं गत्वा चन्द्रामन्त्रणस्याघटमानत्वाद्वाक्यस्य देहातिरिक्तात्मबोधनपरत्वावगमादर्थान्तरेषु पदानामनन्वयात् प्राणेऽन्वयार्हत्वाच्च तद्विषयत्वमिति । केचित्त्वेतानि चन्द्रनामान्येव पाण्डुरैरंशुभिर्जगच्छादकत्वात् पाण्डुवासस्त्वमनाध्यात्मं मन्तव्यमधिभूतं चन्द्रोऽधिदैवतमिति मनसश्चन्द्रदैवत्यत्वाल्लक्षणयेन्द्रियवर्गप्रधानस्य मनस आमन्त्रणन्त्विन्द्रियातिरिक्तत्वप्रतिबोधनार्थमित्याहुः, तत्राऽपि न दोषः तदानीं भाष्ये प्राणानाभिरित्यत्र प्राणशब्द इन्द्रियविषयो योजनीयः, न हि मुख्यप्राणानामभिरित्युक्तम्, अतः प्राणनामभिरिति निर्देशस्य इन्द्रियाभिप्रायत्वं घटते जीवव्यतिरिक्तब्रह्मप्रतिबोधनपरः प्रश्नो दृश्यत इत्यन्वयः, क्वैष इति स्वप्नस्थानप्रश्नः, क्व वा एतदिति सुषुप्तिस्थानप्रश्नः, क्व वा एतदिति सुषुप्तिस्थानप्रश्नः । प्राणादिव्यतिरिक्तस्य जीवस्य यष्टिघातोत्थापनादिनाऽवगन्तव्यत्वात् प्रश्नस्य जीवातिरिक्तविषयत्वमित्यर्थः । अत एव प्रतिवचनस्यापि जीवातिरिक्तविषयत्वसिद्धिः, व्याख्यानं प्रतिवचनं सप्तम्यन्तः प्राण–शब्दः प्राणशरीरकपरमात्मवाची प्राणाः, जीवाः, देवाः–इन्द्रियाणि लोकाः लोकनानि ज्ञानानि, जीवादर्थान्तरपरमात्मपरत्वं दर्शयति "सुषुप्तस्य हो"ति, सुषुप्तिस्थानत्वनिष्क्रमणापादानत्वाभ्याम्परमात्मत्वं कथमित्यपेक्षायां श्रुत्यन्तरेण तदुपपादयति "तथा ही"ति, सद्विद्यावाक्यस्य परमात्मपरत्ववैशद्याय सुषुप्तिविषयं श्रुत्यन्तरमुपादत्ते "प्राज्ञेने"ति, जीवकीर्त्तनस्य तदतिरिक्तबोधनार्थत्वं निगमयति "अत" इति, अनेन निर्वाहवैषम्यप्रदर्शनेन अतिदेशसूत्रस्याधिकशङ्कापरिहारौ दर्शितौ च भवतः। प्रातर्दनविद्यायामुपक्रमे जीवलिङ्गावगमः, महावाक्यस्वारस्यन्तु परमात्मपरत्वे इह तूपक्रमोपसंहारमध्येषु जीवलिङ्गावगमात्, अत एव परमात्मनश्चिदचिद्विशिष्टतापरत्वाभावेन उपासात्रैविध्याप्रतिपत्तेः प्रातर्दनन्यायानवकाश इत्यधिकाशङ्का त्रिविधोपासनाऽभावेऽपि जीवातिरिक्तब्रह्मबोधनरूपप्रयोजनान्त-

रसम्भवादस्त्यवकाश इत्यनन्तरसूत्रे विवक्षितोऽधिकः परिहार इति ह्यवगम्यते। अथ प्रतिवचनवाक्यस्य पूर्वपक्षितमर्थं यदुक्तमित्यादिनाऽनूद्य दूषयति

भू० तदयुक्तं नाडीनां स्वप्नस्थानत्वादुक्तरीत्या ब्रह्मण एव सुषुप्तिस्थानत्वाच्च प्राण-शब्दनिर्दिष्टे ब्रह्मण्येव जीवस्य तदुपकरणभूतवागादिकरणग्रामस्य चैकतापत्तिविभागवचनाच्च, अपि चैवमेके वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसंवादे सुषुप्तादिज्ञानमयाद्भेदेन तदाश्रयभूतं परमात्मानमामनन्ति "य एष विज्ञानमयः पुरुषः क्वैष तदाभूत् कुत एतदागात् यत्रैष एतत् सुप्तभूत् य एष विज्ञानमयः पुरुषस्तदैतेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय

टी० "तदयुक्तमि"ति, नाडीनां स्वप्नस्थानत्वादिति तासु तदा भवतीत्यत्र तदा-शब्दः स्वप्नावस्थापरः "यदा सुप्तः स्वप्नं न कथंचन पश्यति अथास्मिन् प्राण एवैकधा भवती"त्यनन्तरवाक्ये अथ-शब्देन तदा शब्दनिर्दिष्टावस्थायाः सुषुप्तेश्च अवस्थान्तरत्वावगमादुत्तरवाक्ये स्वप्नप्रतिषेधेन पूर्ववाक्यस्य स्वप्नसञ्ज्ञकतया तद्विषयत्वावगमाच्चेति भावः ननु यदा स्वप्नं न पश्यति तदा तासु नाडीषु भवति तदनन्तरमेवास्मिन् प्राण एवैकधा भवति करणग्राम इतीत्थं किं न स्यात्, नैवम् अथ-शब्दास्वारस्यप्रसङ्गात्, प्रश्नप्रतिवचनवैष[1]म्यप्रसङ्गाच्च यदा स्वप्नं न पश्यति तदा तासु भवति अथास्मिन्नेकधा भवति करणग्राम इत्युक्ते स्वप्नाभावावच्छेदककालादनन्तरं करणग्रामोपरम इति प्रतीयते तथा सति प्रबोधदशायां करणग्रामाप्यय उक्तः स्यात्, तदनुपपन्नं सुषुप्तिप्रथमक्षणादनन्तरं करणग्रामाप्यय इति चेत् तदार्थो तदा-शब्दस्य क्लिष्टता स्यात् यदा न पश्यति

१ वैघट्य सङ्गादिति पा० ।

तद्देत्युक्ते हि स्वप्नाभावावच्छिन्नतत्त्वकालपरत्वं तदा-शब्दस्य प्रतीयते, न हि तत्र स्वापारम्भवाचिशब्दः श्रूयते अतस्तदा भवति यदा सुषुप्त इति प्रतिवचनवाक्यद्वयं स्वप्नसुषुप्त्यवस्थाद्वयपरम् । किञ्च क्व वा एतदभूदिति प्रश्नस्य करणग्रामपरत्वमयुक्तम् एतच्छब्दस्य प्रकृतपरामर्शित्वात् करणग्रामस्य च अप्रकृतत्वात् पुरुषोऽशयिष्टेति पुरुषस्य प्रकृतत्वात् एतच्छब्दः पुरुषविषयः, लिङ्गव्यत्ययस्तु न पुरुषपरत्वविरोधी प्रातिपदिकस्य प्रधानस्य प्रकृतपरामर्शित्वाद्विभक्तेरप्रधानत्वाच्च, तस्मात् क्वैष एतत्, क्व वा एतदिति प्रश्नयोः पुरुषविषयत्वे सति प्रतिवचनवाक्ये स्वप्नतदभावयोः प्रतिपाद्यमानत्वात् प्रश्नयोः स्वप्नसुषुप्तिविषयत्वं युक्तम् अन्यथा सुषुप्तिमात्रप्रश्नस्य स्वप्नसुषुप्तिविषयप्रतिवचनस्य च वैषम्यं स्यात्, अपृष्टस्य प्रतिवचनायोगात् प्रतिवचनस्य चावस्थाद्वयविषयत्वमुपपादितम् अपृष्टः करणग्रामाप्ययः कथमुच्यत इति चेत्र तस्य पृथक् प्रश्नानपेक्षत्वात् सुषुप्तेस्सकलबाह्यान्तःकरणव्यापारोपरतिरूपतया सुषुप्त्यन्तर्भूतत्वात्तस्य, अत एव करणग्रामस्य सुषुप्तावप्ययो नाम

सू० आकाशः तस्मिँल्लोत इति आकाशशब्दस्य परमात्मनि प्रसिद्धः दहरोऽस्मिन्नन्तर आकाश इति, अतोऽत्र जीवसङ्कीर्तनं, तस्मादर्थान्तरभूतस्य प्राज्ञस्य परस्य ब्रह्मणः प्रतिबोधनार्थमित्यवगम्यते, तस्मादस्मिन् वाक्ये पुरुषादर्थान्तरभूतस्य निखिलजगत्कारणस्य परस्यैव ब्रह्मणो वेदितव्यतयाऽभिधानान्न तन्त्रसिद्धस्य पुरुषस्य तदधिष्ठितस्य वा प्रधानस्य कारणत्वं क्वचिदपि वेदान्ते प्रतीयत इति स्थितम् ॥ जगद्वाचित्वाधिकरणं समाप्तम् ।

टी० व्यापारोपरतिरेव न तु स्वरूपनाशः करणग्रामाप्ययोक्तिश्च जीवस्यैकधाभावोपपादनरूपत्वात्कृता तत्करणद्वारकनानाविधज्ञानप्रसराभावो हि तस्यैकधाभावः, अतो नाडीनां स्वप्नस्थानत्वम् । सुषुप्त्याधारस्य

प्राण-शब्दोक्तस्य परमात्मत्वे हेतुमाह "उक्तरीत्ये"ति, उदाहृतश्रुत्यन्तरैकार्थ्यलक्षणयेत्यर्थः । ननु प्राण-शब्दः प्रथमान्तो जीवविषयो मुख्यप्राणविषयो वा किं न स्यात्? उच्यते जीवविषयत्वे लक्षणा स्यात् प्राण-शब्दस्य तत्सहचारिणि वृत्तेः, परमात्मपरत्वे तु न लक्षणा शरीरवाचिशब्दस्य शरीरिपर्यन्ततया मुख्यत्वात्। नन्वेकधाभावस्य कर्त्ताऽध्याहार्य्य इति चेत् न स्वप्नं यदा न पश्यति तदैकधा भवतीति यत्तदोर्नित्यसम्बन्धेन प्रत्यासत्त्यतिशयात् एकवाक्यतुल्यत्वात् सुषुप्तस्यैकधाभवनकर्तृत्वसिद्धेः, अस्मिन्निति पदस्य विशेष्यं चाकाङ्क्षितम् अतः सप्तम्यन्तत्वं युक्तम्, अन्यथा अस्मिन्निति पदमासन्नजीवपरं स्यात् तदा जीवः स्वस्य स्वयमेवाधार इत्युक्तं स्यात्, तदयुक्तं, श्रुत्यन्तरविरोधात् तर्हि मुख्यप्राणस्याधारोऽस्त्विति चेन्न तस्य सुषुप्तावेकधाभावस्य प्रत्यक्षविरुद्धत्वात् स यदा प्रतिबुध्यते इत्यनन्तरोक्तप्रबोधस्यैकधाभवनसमानकर्तृकत्वस्वारस्यात् सुषुप्तस्यैव प्रबोधसम्भवात् मुख्यप्राणस्य स्वापाभावाच्च तच्छब्दो हि स्वतः प्रथमानिर्दिष्टपरामर्शी न तु तदनादरेणाधिकरणपरामर्शी मुख्यप्राणः प्रथमान्तप्राणशब्दोक्तश्चेत्प्राण एवेत्यवधारणानुपपत्तिश्च वागाद्यप्ययेऽपि प्रतिपाद्यमाने कथमवधारणं घटते अत एव प्रथमान्तत्वे प्राणशब्दस्य करणग्रामपरत्वमप्ययुक्तं तस्य प्रबोधकर्तृत्वायोगात्, अत एव पूर्वपक्षिणोक्तमस्मिन्निति पदस्य जीवपरत्वं तद्वैयधिकरण्येन प्राणशब्दस्यापि सप्तम्यन्ततयैव करणग्रामाप्ययाधारत्वमपि निरस्तं स्वतः प्राप्तसामानाधिकरण्यस्वारस्यभङ्गात् एकधाभवनकर्तृत्वेन करणग्राम इत्यध्याहारप्रसङ्गात्, स यदा प्रतिबुध्यते इत्युक्तप्रबोधस्य एकधाभवनस्य च समानकर्तृकत्वप्रतिपादकतच्छब्दस्वारस्यभङ्गाभावात् सामानाधिकरण्ये प्राण-शब्दस्य लक्षणा पूर्वोक्ता । अतः प्राणशरीरकतया तच्छब्दवाच्ये ब्रह्मणि सुषुप्तजीवावस्थितिपरम् अथास्मिन् प्राण एवैकधा भवतीति वाक्यमित्यभिप्रायेणाह "प्राण-शब्दनिर्दिष्टे ब्रह्मण्येवे"ति, सूत्रखण्डं व्याचष्टे "अपि चैवमेक"इति, क्वैष तदाऽभूत् क्व सुप्त इत्यर्थः, प्राणानां विज्ञानेन विज्ञानमादाय प्राण-शब्दवाच्येन्द्रियजन्यं मनसा सहादायेत्यर्थः उपरतव्यापारं मन इत्यर्थः,

अनेनेन्द्रियाणामपि व्यापारोपरतिः फलिता, । तेषां मनःसापेक्षत्वात् "य एषोऽन्तर्हृदयाकाश इत्यत्राकाश-शब्दस्य भूताकाशव्यावृत्तसमानप्रकरणस्थप्राण-शब्दश्रवणसिद्धा प्राण-शब्दस्य च मुख्यप्राणव्यावृत्तिराकाश-शब्देन न साध्येति नान्योन्याश्रयणं, जीवलिङ्गनिर्वाहमुपसंहरति "अत" इति, परमात्मगुणान्वय प परमात्म-शब्दसामानाधिकरण्यस्य वा श्रवणे सति तद्विशिष्टोपासनार्थत्वनिर्णयः, अतोऽत्र परमात्मधर्मान्वयश्रवणाभावात् वैयधिकरण्यनिर्देशाच्च अन्यथासिद्धत्वान्नोपासनार्थत्वं जीवलिङ्गस्य, अपि तु भेदज्ञापनार्थत्वमित्यर्थः । कृत्स्नवेदान्तस्य पुरुषप्रधानपरत्वासिद्धिमुपसंहरति "तस्मादि"ति, इह प्रधानोपादानं जीवस्य तेन विना कारणत्वानुपपत्त्यभिप्रायकृतम् । यद्वा अनेनाधिकरणद्वयेन ईक्षत्यानन्दमयाधिकरणोक्तिपद्वयस्य परिहृतत्वज्ञा नार्थम् । जगद्वाचित्वाधिकरणं समाप्तम् ॥

वाक्यान्वयाधिकरणम् ।

## सू० वाक्यान्वयात् ॥ १९ ॥

सू० अत्रापि कापिलतन्त्रसिद्धपुरुषतत्त्वावेदनपरं वाक्यं क्वचित् दृश्यत इति तदतिरिक्त ईश्वरो नाम न कश्चित्सम्भवतीत्याशङ्क्य निराकरोति बृहदारण्यके मैत्रेयीब्राह्मणे श्रूयते "न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवती" त्यारभ्य "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति" "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितमिति, तत्र संशयः किमस्मिन् वाक्ये द्रष्टव्यतयोपदिश्यमानः तन्त्रसिद्धपुरुष एवाथवा सर्वज्ञः सत्यसंकल्पः सर्वेश्वर इति किं युक्तं पुरुष इति,

कुतः, आदिमध्यावसानेषु पुरुषस्यैव प्रतीतेः, उपक्रमे ताव-त्पतिजायापुत्रवित्तपश्वादिप्रियत्वयोगाज्जीवात्मैव प्रतीयते मध्येऽपि "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्ये-वानुविनश्यति न प्रेत्य संज्ञाऽस्ती"त्युत्पत्तिविनाशसंयो-गात्स एवावगम्यते ॥

टी० सू० वाक्यान्वयात् बद्धासाधारणेन कर्मसम्बन्धवाचिना शब्देन कर्मरहितशुद्धस्वरूपप्रतिपादनं लाक्षणिकमिति जीवपरत्वं निरस्तम्, अत्र तु बद्धमुक्तसाधारणात्म-शब्दनिर्देशात् मुक्तलिङ्गश्रवणाच्च शुद्धस्वरूपपरत्वं युक्तमिति शङ्कया सङ्गतिः। यद्वा कर्म-शब्दस्य क्रियत इति व्युत्पत्त्या प्रक-रणस्य ब्रह्मपरत्वमुक्तं कर्मफलभूतभोक्तृत्वश्रवणात् अस्य तथा व्युत्पत्तिवि-शेषप्रदर्शनासम्भवात् तन्त्रसिद्धपुरुषपरत्वमिति शङ्कया सङ्गतिः, उत्तराधि-करणे हि सेश्वरसाङ्ख्यप्रत्यवस्थानं, तस्मादिदमपि निरीश्वरसाङ्ख्यनि-राकरणपरमित्यभिप्रायेणात्रापीत्युक्तं, बृहदित्यादि कर्मफलभोक्तृत्वकण्ठो-क्तिमुमुक्षूपास्यत्वादिब्रह्मलिङ्गवद्वाक्यं विषयः, पतिजायादिप्रियसम्बन्ध-प्रतिपादकोपक्रममैत्रेयीब्राह्मणं चतुर्थे षष्ठे च अध्याये श्रूयते तदुभयमपि मैत्रेयीब्राह्मण-शब्देन विषयवाक्यतया विवक्षितं, यथा ऽन्तस्तद्धर्मोपदेशा-दित्यत्र "य एषोऽन्तरादित्ये" "य एषोऽन्तरक्षिणी"ति वाक्यद्वयं सर्वज्ञः सत्यसङ्कल्प इति सिद्धान्तानुगुणविशेषणं जीवकर्मविशेषाभिज्ञस्तत्फलदा-नशक्त इति भावः। किं जगत्कारणत्वादिवेदान्तप्रतिपाद्यं पुरुषाधिष्ठितं प्रधान? मुत ब्रह्मे? ति प्रथमविचारः, तदर्थं बृहदारण्यके मैत्रेयीब्राह्मणे द्रष्टव्यत-योक्त आत्मा किं पञ्चविंशकः? उत परमात्मे? ति किमुपक्रमे पतिजायापु-त्रादिप्रियसम्बन्धः आत्म-शब्दस्य पञ्चविंशपुरुषपरतामवगमयति ने? ति किं वाक्यावयवानां सर्वेषां परमात्मन्यन्वयासामञ्जस्य? मुत पञ्चविंश? इति। यदा परमात्मन्यन्वयासामञ्जस्यं तदा

सू० तथान्ते च "विज्ञातारमरे केन विजानीयादि"ति स एव ज्ञाता क्षेत्रज्ञ एव प्रतीयते नेश्वरः, अतस्तन्त्रसिद्ध-

पुरुषप्रतिपादनपरमिदं वाक्यमिति निश्चीयते । नन्व"मृतत्वस्य तु नाशाऽस्ति वित्तेने"त्युपक्रमात् अमृतत्वप्राप्त्युपायोपदेशपरमिदं वाक्यमित्यवगम्यते तत्कथं पुरुषप्रतिपादनपरत्वमस्य वाक्यस्य, तदुच्यते अत एव ह्यत्र पुरुषप्रतिपादनं, तत्त्वे ह्यचिद्वर्माध्यासवियुक्तपुरुषस्वरूपयाथात्म्यविज्ञानमेवामृतत्वहेतुत्वेनोच्यते, अतो जीवात्मनः प्रकृतिवियुक्तं स्वरूपमिद्दामृतत्वाय "आत्मा वा अरे द्रष्टव्य" इत्यादिनोपदिश्यते सर्वेषामात्मनां प्रकृतिवियुक्तं स्वरूपमेकरूपमिति प्रकृतिवियुक्तस्वात्मयाथात्म्यविज्ञानेन सर्वे एवात्मानो विदिता भवन्तीत्यात्मविज्ञानेन सर्वविज्ञानमुपपन्नं देवादिस्थावरान्तेषु सर्वेषु भूतेषु आत्मस्वरूपस्य वि[1]ज्ञानैकप्रकारत्वादिदं सर्वं यदयमात्मेत्यैकात्म्योपदेशः, देवाद्याकाराणामनात्माकारत्वात्सर्वं तं परादादित्यादिनाऽन्यत्वनिषेधश्च

टी० पतिजायादिप्रियसम्बन्धेनात्म–शब्दस्य पुरुषपरत्वावगमाद् द्रष्टव्यतयोक्तः पञ्चविंशक इति तदधिष्ठितं प्रधानं वेदान्तवेद्यमिति स्यात्, यदा पञ्चविंशे वाक्यावयवानां समन्वयासामञ्जस्यं तदा पतिजायादिप्रियसम्बन्धादात्म–शब्दस्य पञ्चविंशपरत्वानवगमात् मैत्रेयीब्राह्मणे द्रष्टव्यतयोक्तः पञ्चविंशातिरिक्त इति कारणवाक्यानां परमात्मपरत्वं स्यादिति, तथा ऽन्ते चेति आदिमध्यगतजीवहेत्वनुगृहीताविज्ञातृ–शब्दस्तत्पर इति भावः । नन्विति पतिजायादिप्रियसम्बन्धप्रतिपादकवाक्यात् पूर्वमेवामृतत्वप्राप्त्युपायपरत्वमवगम्यत इत्यर्थः । परिहरति "तदुच्यते" इति, अत एव–अमृतत्वप्राप्त्युपायोपदेशपरत्वादेवेत्यर्थः, ऐक्योपदेशफलभूतमेक-

(१) ज्ञानैकप्रकारत्वादिति पा० ।

विज्ञानेन सर्वविज्ञानं जीवप्रतिपादनपरत्वे कथं घटते, बहवो हि जीवाः न च मिथः कार्य्यकारणभूताश्चेत्याशङ्क्य प्रकारैक्यात् उपपद्यत इत्याह "सर्वेषामि"त्यादिना, ऐक्योपदेशश्च तन्निबन्धन इत्याह "देवादिस्थावरान्तेष्वि"ति, ऐक्यविधिशेषभूतभेदनिषेधं प्रतिविवचन् भेददर्शनेनानर्थप्रतिपादकवाक्यस्यार्थमाह "देवाद्याकाराणामि"ति, देवाद्याकारस्यानात्माकारत्वात्तस्य तदनन्यत्वमुक्तं, तस्मादात्मनोऽन्यत्वदर्शनं नाम निकृष्टस्वरूपव्यतिरिक्तदेवाद्याकारदर्शनमिति तस्यानर्थहेतुत्वमुच्यत इत्यर्थः । प्रबुद्धस्य भेदनिषेधं परि[1]हरति—

सू० "यत्र हि द्वैतमिव भवती"ति च नानात्वनिषेधेनैकस्वरूपे ह्यात्मनि देवादिप्रकृतिपरिणामभेदेन नानात्वं मिथ्येत्युच्यते "तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद" त्याद्यपि प्रकृतेरधिष्ठातृत्वेन पुरुषनिमित्तत्वाज्जगदुत्पत्तेरुपपद्यते एवमस्मिन् वाक्ये पुरुषपरे निश्चिते सति तदैकार्थ्यात्सर्वे वेदान्तास्तन्त्रसिद्धं पुरुषमेवाभिदधतीति तदधिष्ठिता प्रकृतिरेव जगदुपादानं नेश्वर इत्येवं प्राप्ते प्रचक्ष्महे सू० वाक्यान्वयादि"ति, सर्वेश्वर एवास्मिन्वाक्ये प्रतीयते कुतः, एवमेव हि वाक्यावयवानामन्योन्यान्वयः समञ्जसो भवति "अमृतत्वस्य तु नाशाऽस्ति वित्तेनेति" याज्ञवल्क्येनाभिहिते "येनाऽहं नामृता स्यां किमहन्तेन कुर्य्यां यदेव भगवान्वेद तदेव मे ब्रूहीत्य"मृतत्वानुपायतया वित्ताद्यनादरेणामृतत्वप्राप्त्युपायमेव प्रार्थयमानायै मैत्रेय्यै तदुपायतया द्रष्टव्यतयोप-

(१) प्रतिवदतीति पा० ।

दिष्टोऽयमात्मा परमात्मैव "तमेवं विदित्वाऽतिमृत्युमेति" "तमेवं विद्वानमृत इह भवति" नान्यः पन्थाः" इत्यादिभिरमृतत्वस्य परमपुरुषवेदनैकोपायतया प्रतिपादनात्

टी० "यत्र ही"ति, अनात्माकाराणां देवत्वादीनां बहुत्वादेकाकार आत्मनि देवत्वादीनि न सन्तीति निश्चिष्यत इत्यर्थः, एवमनर्थहेतुतया कदाचिन्निवृत्तिहेतुमत्तया च प्रतिपन्नं भेददर्शनं देवादिभेददर्शनमेवेत्युक्तं भवति। कारणत्वं कथ?मित्यत्राह "तस्य ह वा इति", जीवाधिष्ठितप्रधानादाकाशगुणशब्दोत्पत्तिरिति ऋग्वेदादिकारणत्वमुपपद्यत इत्यर्थः, । एवं पूर्वपक्षयुक्तिवशात् फलितमयोगव्यवच्छेदप्रतिक्षेपं दर्शयति "एवमस्मिन्नि"ति, पादसङ्गत्यादिकं पूर्ववत्, राद्धान्ते समञ्जसो भवति स्वारसिको भवति इत्यर्थः, अस्वरसान्वयो हि परिहृयते, श्रुतेः स्वारस्यं नाम सजातीयश्रुत्यैकार्थ्यं न तु बाह्यस्मृत्यैकार्थ्यमित्यभिप्रायेणाह "तमेवं विदित्वे"त्यादि श्रुतावपि प्रजापतिवाक्यादिषु जीवस्वरूपस्य प्रतिपाद्यमानत्वात्तदैकार्थ्यात्स्वारस्यमित्यत्राह–

सू० परमपुरुषविभूतिभूतस्य प्राप्तुरात्मनः स्वरूपयाथात्म्यविज्ञानमपवर्गसाधनपरमपुरुषवेदनोपयोगितयाऽवगन्तव्यं न स्वत एवोपायत्वेन, अतोऽच परमात्मैवामृतत्वोपायतया द्रष्टव्य इत्यादिनोपदिश्यते, तथा "तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद इत्यादिना कृत्स्नस्य जगतः कारणत्वमुच्यमानं परमपुरुषादन्यस्य कर्मपरवशस्य मुक्तस्य निर्व्यापारस्य च पुरुषमात्रस्य न संभवति, तथा "आत्मनो वा अरे दर्शनेने"त्यादिनैकविज्ञानेन सर्वविज्ञानमभिधीयमानं सर्वात्मभूते परमात्मन्येवावकल्पते यत्त्वेतदेकरूपत्वादात्मनामेकात्मविज्ञानेन सर्वात्मविज्ञा-

नमुच्यत इति तदयुक्तम्, अचेतनप्रपञ्चज्ञानाभावेन सर्वविज्ञानाभावात् प्रतिज्ञोपपादनाय च इदं ब्रह्मेदं क्षत्रमित्युपक्रम्येदं सर्वं यदयमात्मेति प्रत्यक्षादिसिद्धं चिदचिन्मिश्रं प्रपञ्चमिदमिति निर्दिश्यैतदयमात्मेत्यैकात्म्योपदेशश्च परमात्मन एवोपपद्यते

टी० "परमपुरुष"इति, प्रधानभूतोपायपरवाक्यैकार्थ्ये स्वारसिकमित्यर्थः, श्रुत्यन्तरैकार्थ्यात् ब्रह्मवेदनस्यैवामृतत्वोपायत्वमित्युपपादितमुपसंहरति "अतोऽत्रे"ति, एवमुपक्रमवाक्यसामञ्जस्यं दर्शितं वाक्यान्तराणामप्यन्वयस्वारस्यं दर्शयन् कारणत्वं स्वपक्षोपपादकमेव सत् परपक्षप्रतिक्षेपकं चेत्याह "तथा तस्ये"ति, बद्धस्य सर्वज्ञत्वाद्ययोगान्मुक्तस्य जगद्व्यापारशून्यत्वाच्च कृत्स्नजगत्कारणत्वं न सम्भवतीत्यर्थः पुरुषमात्रस्य जीवमात्रस्याल्पशक्तित्वं मात्रचा अभिप्रेतम् । यद्वा कर्मपरवशस्य मुक्तस्येति पदाभ्यां स्वपक्षे सर्वावस्थस्य जीवस्य जगत्कारणत्वानुपपत्तिरुक्ता साङ्ख्यमतेऽपि तदनुपपत्तिमाह "निर्व्यापारस्य च पुरुषमात्रस्ये"ति, निमित्तोपादानभावानुगुणसङ्कल्पशक्तियोगाभावादिति भावः । कारणत्वफलभूतमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमपि राद्धान्तोपपादकमित्याह "तथाऽऽत्मन"इति, एकविज्ञानेन सर्वविज्ञाननिर्वाहं परोक्तं "यत्त्वेतदित्यादिनाऽनूद्य तदयुक्तमित्यादिना दूषयति । ऐकात्म्योपदेशानुपपत्तिमाह "प्रतिज्ञोपपादनाये"ति, श्रुतिस्थेदं—शब्दस्थाने एतच्छब्दो भाष्ये स्ववाक्यत्वज्ञापनाय प्रयुक्तः, इदमयमात्मेति कार्यस्य कारणतादात्म्योपदेशः जीवस्य तदनुपपत्तिमुपपादयति—

मू० न ह्येदं—शब्दवाच्यं चिदचिन्मिश्रं जगत्पुरुषेणाचित्संसृष्टेन तद्वियुक्तेन वा स्वरूपेणावस्थितेन चैक्यमुपगच्छति, अत एव सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेति व्यतिरिक्तत्वेन सर्ववेदननिन्दा च, तथा प्रथमे च मैत्रे-

यीब्राह्मणे "महद्भूतमनन्तमपारमिति श्रुता महत्त्वादयो गुणाः परमात्मन एव सम्भवन्ति, अतः स एवात्र प्रतिपाद्यते, यत्तूक्तं पतिजायापुत्रवित्तपश्वादिप्रियान्वयिनो जीवात्मन उपक्रमे त्वन्वेष्टव्यतया प्रतिपादनात्तद्विषयमेवेदं वाक्यमिति तदयुक्तम्, आत्मनस्तु कामायेत्यात्म-शब्देन जीवात्मसंशब्दने तस्यात्मा वा अरे द्रष्टव्य इत्यनेनानन्वय-प्रसङ्गात् आत्मा वा अरे द्रष्टव्य इत्यात्मनो द्रष्टव्यत्वोपयोगितयाऽऽत्मनस्तु कामायेत्युपदिष्टमिति प्रतीयते आत्मनस्तु कामाय—आत्मनः कामसंपत्तये काम्यन्त इति कामाः आत्मन इष्टसंपत्तये इति यावत, न च जीवात्मन इष्टसंपत्तये पत्यादयः प्रिया भवन्तीत्युक्ते सतितस्य स्वरूपमन्वेष्टव्यं भवति

टी० "न ही"ति, कार्य्यस्य कारणेन हि स्वरूपैक्यसम्भवः सूक्ष्मस्थूलचिदचिच्छरीरकः परमात्मेति कार्य्येण जगतैक्यं तस्यैव हि सम्भवति न तु बद्धस्य वा मुक्तस्य वा जीवस्याकारणभूतस्य सम्भवतीत्यर्थः अत एवेति सर्वस्य परमात्मात्मकत्वादेवातदात्मकानुसंधाननिषेधः, न तु देवादिदृष्टिनिषेधः प्रागुक्तहेतुनिबन्धनत्वात् भेदनिषेधस्येत्यर्थः, प्रथमे चेति मैत्रेयीब्राह्मणानामनेकत्वात्प्रथम इति विशेषितम्, उत्तरे मैत्रेयीब्राह्मणे महद्भूतमनन्तमपारमिति विशेषणाश्रवणेऽप्यनुक्तमन्यतो ग्राह्यमिति न्यायात् महत्त्वभूतत्वादिकमप्युक्तं भवतीति भावः । पतिजायादिभोग्यत्ववाचिवाक्यस्याप्यन्वयस्वारस्यं हि सूत्राभिप्रेतं "वाक्यावयवेषु प्रधानभूतोपक्रमावयवस्य वाक्यशब्देनाविवक्षितत्वानुपपत्तेः, तस्मात्तदुपपादयितुं परोक्ताथं यत्तूक्तमित्यादिनाऽनूद्य दूषयति "तदयुक्तमि"त्यादिना, अनन्वयस्यानिष्टत्वं कथं तस्य प्रसङ्गो वा कथमित्यत्राह "आत्मा वा" इति, "आत्मनस्तु का-

माय सर्वं प्रियं भवति आत्मा वा अरे द्रष्टव्य'' इत्युक्ते आत्मनस्तु कामा-ये''त्यस्य आत्मनोद्रष्टव्यतोपयोगित्वं हि स्वरसतः प्रतीयत इत्यर्थः अतो मा भूदन्वय इति न वाच्यमिति दर्शितम् । अथ जीवपरत्वेऽनन्वयमुपपादयति 'आत्मनस्त्वि''त्यादिना, इष्टसंपत्तये—सुखादिसंपत्तये । ततः किमनन्वयस्येत्यत्राह "न चे''ति, नेत्यस्यान्वेष्टव्यं भवतीत्युत्तरत्रान्वयः कथमन्वेष्टव्यत्वासिद्धिरित्यत्राह—

मू० प्रियमेव ह्यन्वेष्टव्यं न तु प्रियं प्रति शेषिणः प्रियवियुक्तं स्वरूपं यस्मादात्मनः इष्टसंपत्तये पत्यादयः प्रिया भवन्ति तस्मात्पत्त्यादिप्रियं परित्यज्य तद्वियुक्तमात्मस्वरूपमन्वेष्टव्यमित्यसङ्गतं भवति प्रत्युत न पत्त्यादिशेषतया पत्त्यादीनां प्रियत्वम् अपि त्वात्मनः शेषतया पत्त्यादीनां प्रियत्वमित्युक्ते स्वशेषतया त एवोपादेयाः स्युः, आत्मनस्तु कामाय सर्वं प्रियं भवतीत्यस्य परेणानन्वये वाक्यभेदः प्रसज्यते, अभ्युपगम्यमानेऽपि वाक्यभेदे पूर्वस्य वाक्यस्य न किञ्चित्प्रयोजनं दृश्यते, अतः पत्यादि सर्वं प्रियं परित्यज्यात्मन एवान्वेष्टव्यत्वं यथा प्रतीयते तथा वाक्यार्थो वर्णनीयः, सोऽयमुच्यते अमृतत्वस्य तु नाशाऽस्ति वित्तेनेति वित्तादीनां नित्यनिर्दोषनिरतिशयानन्दरूपामृतत्वप्राप्त्यनुपायत्वमुक्त्वा वित्तपुत्रपतिजायादीनां सातिशयदुःखमिश्रकादाचित्कप्रियत्वमनुभूयमानं न पत्त्यादिस्वरूपप्रयुक्तम् अपि तु निरतिशयानन्दस्वभावपरमात्मप्रयुक्तम्, अतो य एवं स्वयं निरतिशयानन्दः सन्नन्येषामपि प्रियत्वलेशास्पदत्वमापादयति स परमात्मैव द्रष्टव्य इत्युपदिश्यते

टी० ॥ "प्रियमेव ही"ति, पत्न्यादीनामात्मनः प्रियत्वे तेषामन्वेष्टव्यत्वं स्यात् प्रियस्यैव पुरुषार्थत्वादित्यर्थः । एवकाराभिप्रेतमाह "न त्वि"-ति, प्रियवियुक्तं–पुत्रपत्न्यादि वियुक्तं, तद्विवृणोति "यस्मादि"ति, न केवलं स्वाभिमतार्थासङ्गतिः । अनभिमतार्थसङ्गतिश्चेत्याह "प्रत्युते"ति, त एवोपादेयाः स्युरिति सकलेतरत्यागपूर्वकमात्मनो द्रष्टव्यत्वस्य विरोध एव स्यादित्यर्थः, जीवपरत्वेऽनन्वयश्चेन्माभूदन्वय इत्यत्राह "परेणे"ति, परेण आत्मा वा अरे द्रष्टव्य इति परेण वाक्येन, वाक्यभेदः–महावाक्यभेदः, एकवाक्यत्वेन निर्वाहे सुशकेऽपि वाक्ये भेदोऽनुपपन्नः "सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यत" इति न्यायादित्यर्थः । वाक्यभेदाऽभ्युपगमेऽपि प्रयोजनाभावाच्च अन्वयोऽनुपपन्न इत्याह "अभ्युपगम्यमानेऽपी"ति, एवं परपक्षानुपपत्तेः परिशेषादर्थान्तरपरत्वं सिद्धमित्याह "अत"इति, उपपन्नार्थः क इत्यत्राह "सोऽयमुच्यत"इति, स्वयं निरतिशयानन्दः सर्वान्येषामपि प्रियत्वलेशास्पदत्वमापादयतीति अन्येषाम् आनन्दो यदधीनस्तस्यानन्दो निरवधिक इत्यर्थसिद्धं, यथाऽन्येषां विद्यां धनञ्च ददतः पुरुषस्य ज्ञानाधिकत्वं धनाधिकत्वं चार्थसिद्धं "स एको ब्रह्मण आनन्दः" "यतो वाचो निवर्त्तन्ते" "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती"त्यादिषु श्रुत्यन्तरेषु तत्स्पष्टमभिहितं चेत्यभिप्रायः उपदिश्यत इत्यन्तेन श्रुतेस्तात्पर्यार्थ उक्तः । अस्यार्थस्य शब्दवाच्यत्वं कथमित्यत्राह–

मू० तदयमर्थः "न वा अरे पत्युः कामाय पतिः प्रियो भवति" न हि पतिजायापुत्रवित्तादयो मत्प्रयोजनायाहमस्य प्रियः स्यामिति स्वसङ्कल्पात्प्रिया भवन्ति, अपि त्वात्मनः कामाय परमात्मनः स्वाराधकप्रियप्रतिलम्भनरूपेष्टनिर्वृत्तय इत्यर्थः, परमात्मा हि कर्मभिराराधितस्तत्तत्कर्मानुगुणं प्रतिनियतदेशकालस्वरूपपरिमाणमाराधकानां तत्तद्वस्तुगतम्प्रियत्वमापादयति "एष ह्येवा-

नन्दयातीति" श्रुतेः, न हि तत्तद्वस्तुस्वरूपेण प्रियमप्रियं वा यथोक्तं "तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते। तदेव कोपाय यतः प्रसादाय च जायते ॥ तस्माद् दुःखात्मकं नास्ति न च किंचित्सुखात्मकमिति, आत्मनस्तु कामायेत्यस्य जीवात्मपरत्वेऽपि "आत्मा वा अरे द्रष्टव्य" इति तु परमात्मविषयमेव, तच्चाप्ययमर्थः यस्मात्पत्यादीनामिष्टसंपत्तये तत्स्वरूपेण पत्त्यादयः प्रियत्वेन नोपादीयन्ते अपि त्वात्मेष्टसंपत्तये [1]स्वातन्त्र्येण स्वप्रियत्वेनोपादीयन्ते तस्माद्य एवात्मनो निरुपाधिकनिर्दोषनिरवधिकप्रियः परमात्मा स एव हि द्रष्टव्यः न दुःखमिश्राल्पसुखदुःखोदर्काः परायत्ततत्त्वभावाः पतिजायापुत्रवित्तादयो विषया इति

टी० ॥ "तदयमर्थ"इति, परमात्मनः स्वाराधकाभिमतदानस्येष्टत्वं विवृणोति "परमात्मा ही"ति, प्रतिनियतेति स्वरूपनियमो नाम स्रक्चन्दनादिषु अस्येदमेव भोग्यं नान्यदिति नियमः, परिमाणनियमो भोग्यत्वपरिमाणनियमः, न हि मनुष्यभोग्यस्य स्रगादेर्देवभोग्यस्रगादितुल्यभोग्यत्वमस्ति । आश्रितप्रियप्रतिलम्भकत्वे श्रुतिमाह "एष ह्येवे"ति, तदेव प्रीतय इति कस्यचिद्वस्तुनः प्रियत्वं तत्स्वरूपप्रयुक्तं चेत्सर्वदा सर्वेषां प्रियत्वं स्यात्, न च तदस्ति कञ्चित्प्रति कदाचित्प्रियत्वमप्रियत्वं च परसङ्कल्पाधीनमित्यर्थः ननु "आत्मनस्तु कामाय सर्वं प्रियं भवति" "आत्मा वा अरे द्रष्टव्य" इति वाक्ययोर्जीवपरत्वेऽप्यन्वयस्संभवति तथा हि न हि तत्परतन्त्रो भोक्ता भुङ्क्ते अपि तु स्वातन्त्र्येण तत्स्वीकारपरित्यागक्षमः, तस्मात् प्रकृष्टानन्दरूपे निष्कृष्टात्मनि तेनैव स्वातन्त्र्येण प्रवर्ततेति इति शङ्कायामात्मनस्तु कामायेत्यस्य जीवस्य परत्वाभ्युपगमेऽपि आत्मा वा अरे द्रष्टव्य इति वा-

१ स्वतन्त्र्येणेति पा० ।

क्यस्य परमात्मपरत्व एव स्वारस्यमुपपादयति "आत्मनस्तु कामायेत्यस्ये"ति, येन स्वातन्त्र्येण स्वात्मदर्शने प्रवर्त्तते तेनैवानवधिकातिशयानन्दरूपपरब्रह्मप्राप्तौ प्रवर्त्तते तस्यैव स्वाभाविकनिरतिशयानन्दयोगादित्यर्थः। प्रकृष्टानन्दस्यैव प्रेप्सितत्वतारूपार्थौचित्यातिशयादात्मशब्दार्थवैरूप्यं बोद्धव्यं, मुण्डोपनिषदि "तपसा चीयते ब्रह्म तस्मादेतद् ब्रह्मे"ति वाक्य-

भू० अस्मिँस्तु प्रकरणे जीवात्म-वाचि शब्देनाऽपि परमात्मन-एवाभिधानादात्मनस्तु कामाय आत्मा वा अरे द्रष्टव्य इति पूर्वोक्तप्रक्रिययोभयत्रात्म-शब्दाविकविषयौ। मतान्तरेणाऽपि जीव-शब्देन परमात्माभिधानोपपादनायाह—

टी० द्वयस्यब्रह्मशब्दवैरूप्यवदिति भावः। एवं तर्ह्ययमेव निर्वाहः स्यादिति शङ्कायामस्माद्व्यर्थात् पूर्वोक्तार्थ उपपन्नः आत्म-शब्दवैपरीत्याभावादित्यभिप्रायेणाह "अस्मिँस्तु प्रकरण"इति, वक्ष्यमाणसूत्रोक्तप्रकारेण जीववाचिशब्दानां परमात्मपर्यन्ताभिधायित्वमुपजीव्योक्तं परमात्मन एवाभिधानादिति, अयमर्थः महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यतीत्यत्र विज्ञानघन-शब्दो जीवविषयः भूतानुविनाशित्वावगमात्, अत्रामृतत्वप्राप्त्युपायत्वसर्वजगत्कारणत्वसर्वज्ञत्वतदेकविज्ञाननिबन्धनसर्वविज्ञानव्यतिरिक्तवेदननिन्दादिभिः प्रकरणस्य परमात्मपरत्वदार्ढ्यावगमात् महद्भूतमनन्तमपारमिति पदैः सामानाधिकरण्याच्च जीववाचिनोऽप्यस्य विज्ञानघन-शब्दस्य परमात्मपरत्वमवर्जनीयं, तस्माज्जीववाचिशब्दस्याऽपि परमात्मपरत्वनिश्चयानुगुणबहुवाक्यस्वारस्यभङ्गेन अन्यतरात्मशब्दस्यार्थकथनादात्म-शब्दद्वयस्य अद्वैकरूप्यवर्णनादपि तादृशबहुवाक्यस्वारस्यानुगुणं परमात्मपरतयैव आत्मनस्तु कामाय आत्मा वा इति वाक्यद्वयस्यात्म-शब्दयोरद्वैकरूप्यवर्णनं युक्तमिति प्रतिज्ञासिद्धेरित्यादिसूत्रत्रयमात्मनस्तु कामाय पतिः प्रियो भवतीत्यारभ्य एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यतीति जीवोपक्रमनिर्वाहपरं परैर्व्याख्यातं तदयुक्तं पूर्वसूत्रेणोपक्रमस्य

कृतनिर्वाहत्वात्, वाक्यान्वयो नाम वाक्यावयवानां मिथोऽन्वयः न तु वाक्यान्तरेणान्वयः सूत्रस्यैकप्रकरणविषयत्वात्प्रकरणस्य महावाक्यरूपत्वात्, उपक्रमश्च वाक्यावयवेषु प्रधानभूतः स कथं वाक्यावयवानामन्वयं परमात्मविषयतयैव प्रतिपादयता सूत्रेणाविवक्षितः स्यात्, अतो जीव-शब्देन परमात्माभिधाननिर्वाहपरमुत्तरसूत्रत्रयं मन्वानस्तत्राऽपि चरमसूत्रस्यैव सूत्रकाराभिमतनिर्वाहपरत्वं हृदि निधाय ततः पूर्वस्य सूत्रद्वयस्य मतान्तरपरत्वं वदन् सूत्रत्रयमवतारयति "मतान्तरेणापी"ति, मतान्तरेण सूत्रकारानभिमतेनेत्यर्थः अनेन यादवप्रकाशोक्तयोजनाव्यावृत्तिः, जीवशब्देनपरमात्माभिधानोपपादनायेति सर्वव्याख्याचऽभिमतनिर्वाहव्यावृत्तिर्दर्शिता, जीव-शब्देन-उपरितनवाक्यगतेनेत्यर्थः ॥

## सू० प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥

मू० एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धेरिदं लिङ्गं यज्जीवात्मवाचिशब्दैः परमात्मनोऽभिधानमित्याश्मरथ्य आचार्य्यो मन्यते स्म, यद्ययं जीवः परमात्मकार्य्यतया परमात्मैव न भवेत्तदा तद्व्यतिरिक्ततया परमात्मविज्ञानादेतद्विज्ञानं न सेत्स्यति "आत्मा वा इदमेक एवाग्र आसीदि"ति प्राक् सृष्टेरेकत्वावधारणात्, यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ति सरूपाः तथाऽक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ती"त्यादिभिर्ब्रह्मणो जीवानामुत्पत्तिश्रवणात्तस्मिन्नेवाप्ययश्रवणाच्च जीवानां ब्रह्मकार्य्यत्वेन ब्रह्मणैक्यमवगम्यते, अतो जीव-शब्देन परमात्मन एवाभिधानमिति, ॥

## सू० उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥

यदुक्तं जीवस्य ब्रह्मकार्य्यतया ब्रह्मणैक्येनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनार्थं ब्रह्मणो जीवशब्देन प्रतिपादनमिति तदयुक्तं "न जायते म्रियते वा विपश्चिदित्यादिना ऽजत्व श्रुतेर्जीवानां प्राचीनकर्मफलभोगाय जगत्सृष्ट्युभ्युपगमाच्च, अन्यथा विषमसृष्ट्यनुपपत्तेश्च ब्रह्मकार्य्यस्य जीवस्य ब्रह्मनापत्तिलक्षणो मोक्ष आकाशादिवदवर्जनीय इति तदुपायविधानानुष्ठानानर्थक्याच्च, घटादिवत्कारणप्राप्तेर्विनाशरूपत्वेन मोक्षस्यापुरुषार्थत्वाच्च जीवात्मन उत्पत्तिप्रलयवादोपपत्तिरुत्तरच प्रपञ्चयिष्यते

टी० सू० प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धेरिदं लिङ्गमिति, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादककार्य्यकारणभावकृतैक्यस्य लिङ्गं जीवात्मवाचिशब्देन परमात्माभिधानमित्यर्थः हेतुवशात्साध्यप्रतिज्ञांशोऽध्याहृतो जीवात्मवाचीति अयं यादवप्रकाशपक्षोऽस्मिन् सूत्र उपन्यस्तः, तत्र हि कार्यात्मना कारणात्मना च जीवब्रह्मणोर्भेदाभेदौ स्वाभाविकौ मतौ सू· उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः, विरुद्धमतान्तरं हि पूर्वमतनिरासेन विना नोदेति तस्मात् सूत्राभिप्रेतमाश्मरथ्यमतदूषणमाह "यदुक्तमित्यादि"ना, अजत्वश्रुतिविरोधः,अ कृताभ्यागमकृतविप्रणाशादिप्रसङ्गः फलभोगार्थसृष्टिविरोध उपायानुष्ठानवैयर्थ्यमपुरुषार्थता च दूषणम्, तोयेन जीवान् विससर्जेत्यादयो जीवोत्पत्तिप्रलयवादाः कथमित्यत्राह "जीवात्मन" इति, । सूत्रार्थमाह–

सू० अत "एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाऽभिनिष्पद्यते "यथा नद्यः स्यन्दमानास्समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमि"त्युक्त-

मिष्यतः परमात्मभावाज्जीवशब्देन परमात्मनोऽभिधानमित्यौडुलोमिराचार्यो मन्यते स्म, ॥

## सू० अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

यदुक्तमुत्क्रमिष्यतो जीवस्य ब्रह्मभावाद्ब्रह्मणस्तच्छब्देनाऽभिधानमिति तदप्ययुक्तं विकल्पासहत्वात्—अस्य जीवात्मन उत्क्रान्तेः पूर्वमनेवम्भावः किं स्वाभाविकः? उतौपाधिकः? तत्राऽपि परमार्थिकोऽपरमार्थिको वेति स्वाभाविकत्वे ब्रह्मभावो नोपपद्यते भेदस्य स्वरूपप्रयुक्तत्वेन स्वरूपे विद्यमाने तदनपायात्। अथ भेदेन सहस्वरूपमप्यपैतीति तथा सति विनष्टत्वादेव तस्य न ब्रह्मभावः, अपुरुषार्थत्वादिदोषप्रसङ्गश्च पारमार्थिकौपाधिकत्वेऽपि प्रागपि ब्रह्मैवेत्युत्क्रमिष्यत एवंभावादिति विशेषो न युज्यते वक्तुम्, अस्मिन् पक्षे ह्युपाधिब्रह्मव्यतिरेकेण वस्त्वन्तराभावान्निरवयवस्य ब्रह्मण उपाधिना भेदा[1]द्यसम्भवाच्चोपाधिगत एव भेद इत्युत्क्रान्तेः प्रागपि ब्रह्मैव औपाधिकस्य भेदस्यापारमार्थिकत्वे कस्यायमुत्क्रान्तौ ब्रह्मभाव इति वक्तव्यं, ब्रह्मण एवाविद्योपाधितिरोहितस्वस्वरूपस्येति चेन्न नित्यमुक्तस्वप्रकाशज्ञानस्वरूपस्याविद्योपाधितिरोधानासम्भवात् ।

टी० "अत" इति, सू० अवस्थितेरिति काशकृत्स्नः, अत्राऽपि पूर्ववदभिप्रेतं दूषणमाह "यदुक्तमित्यादि"ना, सम्भावितयोः पक्षयोः पराभिमतं

---

१ भेदाद्यसंभवादिति पा० ।

परिशेषयितुं स्वाभाविकौपाधिकत्वविकल्पः कृतः, शङ्करभास्करोक्तपक्षद्वयस्याप्युत्क्रमिष्यत इति सूत्रेणैकेन सूचितस्य एतेन निराचिकीर्षितत्वज्ञापनाय पारमार्थिकत्वापरमार्थिकत्वविकल्पः कृतः, स्वाभाविकत्व इत्यादि मुक्तो स्वरूपं किं विद्यमानमुताविद्यमानमिति विकल्पमभिप्रेत्य ग्रन्थद्वयेन विरोध[1]द्वयं दूषयति भेदस्येत्यादिना, प्रथमविकल्पस्य द्वितीयं शिरोदूषयंस्तद्विशेषणीभूतद्वितीयविकल्पगतं प्रथमं शिरश्च दूषयति "पारमार्थिके"ति, प्रागपि ब्रह्मत्वमुपपादयति "अस्मिन् पक्षे ही"ति, द्वितीयविकल्पे द्वितीयं शिरो दूषयति 'औपाधिकस्ये'ति, तिरोधानासम्भवः कथमित्यत्राह—

भू० तिरोधानं नाम वस्तुस्वरूपे विद्यमाने तत्प्रकाशनिवृत्तिः प्रकाश एव वस्तुस्वरूपमित्यङ्गीकारे तिरोधानाभावः स्वरूपनाशो वा स्यात्, अतो नित्याविर्भूतस्वस्वरूपत्वात्तस्योत्क्रान्तौ ब्रह्मभावे न कश्चिद्विशेष इत्युत्क्रमिष्यत इति विशेषणं व्यर्थमेव, अस्माच्छरीरात्समुत्थायेति पूर्वमनेवंरूपस्य न तदानीं ब्रह्मतापत्तिमाह अपि तु पूर्वसिद्धस्वरूपस्याविर्भावं, तथाहि वक्ष्यते सम्पद्याविर्भावः स्वेन शब्दादित्यादिभिः, अतोऽनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति

टी० "तिरोधानं नामे"ति, तिरोधानं नामैवंविधमस्तु ततः किमित्यत्राह "प्रकाश एवे"ति, तिरोधानं न सम्भवति चेत् नित्याविर्भूतं स्यात् ततः किमित्यत्राह "अत" इति, ननु उत्क्रमिष्यत इत्यत्र न तात्पर्यं सर्वदा ब्रह्मभावो विवक्षितः, अतः उपाधेः पारमार्थ्यापारमार्थ्यपक्षद्वयेऽपि न दोष इति चेत् न पूर्वं तथाभावे बन्धनिवृत्तिप्रयोजनशास्त्रस्य अनारम्भणीयत्वप्रसङ्गात् औपाधिकहेयप्रहाणार्थम् आरम्भणीयतेति चेच्च औपाधिकहेयस्य

१ शिरोद्वयमिति पा० ।

ब्रह्मण्यच्छेद्यसम्बन्धित्वादैकत्वप्रतिसन्धानेन जीवेश्वरविभागाभावप्रसङ्गात् प्रदेशभेदात् अप्रतिसन्धानं चेदेकस्योपाधौ गच्छत्येकस्याऽपि प्रतिसन्धानं न स्यादित्यादिदूषणजातं प्रदेशान्तरोक्तत्वादिह न प्रपञ्चितम् । अपरमार्थोपाधिकृतभेदवादे च उत्क्रमिष्यत इति पदमविवक्षितं कृत्वा सर्वदा ब्रह्मभावाविर्भावाभ्युपगमे अध्यासानुपपत्तिः तिरोधानाभावात्, न ह्यतिरोहितस्वरूपे तत्त्वतो भासमाने अध्याससम्भवः, तिरोधानाभ्युपगमे च दूषणं दर्शितम्, अतिरोहितस्वरूपस्याऽपि भेददर्शनं सम्भवतीति चेत् आच्छादिकाविद्याकल्पनवैयर्थ्यं, मुक्तावपि भेददर्शनप्रसङ्गश्च स्वरूपयाथात्म्यावभासस्य भ्रमविरोधित्वाभावात्, निवर्त्तकज्ञानेन दोषस्य निवृत्तत्वात् न भेददर्शनमिति चेन्न निवर्त्तकज्ञानस्याऽपि पूर्वमवभासमानात्स्वरूपादनतिरिक्तविषयकत्वेन भ्रमनिवर्त्तकत्वानुपपत्तेः "न हीदमि"ति, शतशो विशदतरमुपजायमानमपि ज्ञानं रजतभ्रमं निवर्त्तयतीत्यादिकमनुपपत्तिशतं पूर्वोक्तत्वादिह लेशतः प्रदर्शितन्तर्हि अस्माच्छरीरादिति श्रुतेः कोऽर्थ इत्यत्राह "अस्मादि"ति, तर्हि कथमभिनिष्पत्तिश्रुतिरित्यत्राह "तथाहि वक्ष्यत इति" अथ सूत्रं व्याचष्टे "अत इ"ति, अतः—मतान्तरेण निर्वाहानुपपत्तेरित्यर्थः अवस्थिति—शब्दस्य स्वतोऽधिकरणमाकाङ्क्षितं कुत्रेति न तु किम्भावेनेति । कथमवस्थानमित्याकाङ्क्षाऽस्तीति चेत् सा तूत्थाप्या न तु स्वतः किं भावेनेत्याकाङ्क्षा न क्वचिदप्यस्ति अतःसूत्रस्वारस्यानुगुणं वाक्यमादत्ते—

सू० "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स ते आत्माऽन्तर्याम्यमृतः" "योऽक्षरमन्तरे संचरन्" "यस्याक्षरं शरीरं यमक्षरं न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मे"ति स्वशरीरभूते जीवात्मन्यात्मतयाऽवस्थिते जीवशब्देन ब्रह्मप्रतिपादनमिति काशकृत्स्न आचार्यो मन्यते

स्म, जीव-शब्दश्च जीवस्य परमात्मपर्य्यन्तस्यैव वाचको न जीवमात्रस्येति पूर्वमेवोक्तं नामरूपे व्याकरवाणीत्यत्र, एवमात्मशरीरभावेन तादात्म्योपपादने परस्य ब्रह्मणोऽपहतपाप्मत्वसर्वज्ञत्वादिगोचराः जीवस्याविदुषः शोचतो ब्रह्मोपासनान्मोक्षवादिन्यो जगत्सृष्टिप्रलयाभिधायिन्यो जगतो ब्रह्मतादात्म्योपदेशपराश्च सर्वाः श्रुतयः सम्यगुपपादिता भवन्तीति काशकृत्स्नीयमेव मतं सूत्रकारः स्वीकृतवान् ।

टी० "य आत्मनी"ति, अचिदन्तः प्रवेशस्य स्पष्टत्वात् तज्ज्ञापनार्थं जीवसामानाधिकरण्यस्य स्फुटतरार्थश्रुत्यन्तरैकार्थ्येन शरीरशरीरिभावनिबन्धनत्वज्ञापनार्थं चानेन जीवेनात्मनेति वाक्यं प्रथममुपात्तं। कारणावस्थायामपि शरीरत्वज्ञापनार्थं देवताविशेषनिर्णयार्थं चोदाहरति "योऽक्षरमन्तरे संचरन्"ति, अन्तःस्थितिनियमनयोरनुप्रवेशप्रशासनशब्दाभ्यां प्रत्यभिज्ञाततयैकार्थत्वात् सर्वात्मत्वविवरणरूपत्वाच्चोपादत्ते "अन्तः प्रविष्ट"इति, सप्तम्यन्तपदैः कुत्रेत्याकाङ्क्षा शमिता नियन्तृत्वामृतत्वादिभिः कथमित्याकाङ्क्षा शमिता, तत्तदवेद्यत्वेन नियन्तृत्वेन निर्दोषत्वेन च तेष्ववस्थानमित्यर्थः। नन्ववस्थितिरस्तु ततः कथं जीव-शब्दस्य ब्रह्मवाचित्वमित्यत्राह "जीव-शब्दश्चे"ति, शरीरवाचिशब्देषु आकृतिनयावतारः समर्थित इत्यर्थः। कस्मिन् प्रदेश इत्यत्राह "नामे"ति, सूत्रार्थो व्याख्यातः अस्य सूत्रस्य आश्मरथ्यौडुलोमिमतोक्तेः पूर्वमनिवेशितत्वादतः परमतान्तरानुपन्यासाच्च काशकृत्स्नमतेन निर्वाहस्य सूत्रकाराभिमतत्वमवगम्यते अस्य सूत्रकाराभिमतत्वे हेतुभूतं पूर्वोक्तमतद्वयवैषम्यमाह "एवमात्मे"ति, अपहतपाप्मत्वसर्वज्ञत्व-शब्दौ उभयलिङ्गत्वप्रदर्शनार्थौ आदि-शब्दो विरजत्वसर्वशक्तित्वादिपरः, मोक्षवादिन्य इत्यन्तेन भेदश्रुतयो विवक्षिताः। अभेदश्रुत्यभिप्रायेणाह "जगत्सृष्टी"ति, सम्यगिति प्रत्यक्षादिविरोधः

परस्परविरोधश्च यथा न भवति तथेत्यर्थः, सकलश्रुत्यविरोधमुख्यार्थत्वानुगुण्यमेतन्निर्वाहस्वीकारहेतुरित्यर्थः ।

भू० अयमत्र वाक्यार्थः, अमृतत्वोपाये मैत्रेय्या पृष्टे याज्ञवल्क्य आत्मा वा अरे द्रष्टव्य इत्यादिना परमात्मोपासनममृतत्वोपायमुक्त्वा आत्मनि खल्वरे दृष्टे इत्यादिना उपास्यलक्षणं दुन्दुभ्यादिदृष्टान्तैश्चोपासनोपकरणभूतमनःप्रभृतिकरणनियमनं च

टी० अभेदनिर्देशस्यावस्थितिनिबन्धनत्वं सूत्रकारेणैव भगवता व्यासेन मोक्षधर्मे च याज्ञवल्क्यजनकसंवादे स्पष्टतरमभिहितं "पश्यँ स्तथैवापश्यँश्च पश्यत्यन्यस्तथाऽनघ। षड्विंशः पञ्चविंशञ्च चतुर्विंशञ्च पश्यती"-त्यादिना चिदचिदीश्वरवैलक्षण्यं बहुशः प्रतिपाद्य "यदा तु मन्यतेऽन्योऽहमन्य एव इति द्विज। तदा स केवलीभूतः षड्विंशमनुपश्यती"ति प्रकृत्यात्मविवेकानन्तरं जीवविलक्षणपरमात्मदर्शनमुक्त्वा। "अन्यश्च राजन् स परस्तथाऽन्यः पञ्चविंशकः। तत्सत्वादनुपश्यन्ति एक एवेति साधव" इति शरीरशरीरिणोर्भेदेऽपि शरीरान्तःस्थितस्य शरीरिण एकत्वादयमेकः पुरुष इति व्यवहारवदन्तरवस्थितिनिबन्धनाः प्रकार्यैक्यविषयाः अभेदव्यवहारा इत्युक्त्वा "तेनैतन्नाभिजानन्ति पञ्चविंशकमच्युतमि"ति तात्स्थ्यादेव हेतोः पञ्चविंशकस्याच्युत–शब्दवाच्यस्य परमात्मनश्च स्वरूपैक्यं साधूनामनभिमतमित्युक्त्वा। "जन्ममृत्युभयाद्भीता योगाः सांख्याश्च काश्यपाः। षड्विंशमनुपश्यन्ति शुचयस्तत्परायणा" इति संसारभयनिरासकं षड्विंशकत्वेन परमात्मनोऽभेदज्ञानमित्यत्राध्यात्मशास्त्रविदामैककण्ठ्यमित्युक्त्वा "यदा स केवलीभूतः षड्विंशमनुपश्यति। तदा सर्वत्रसिद्धत्वान्न पुनर्जन्म विन्दती"ति। षड्विंशकज्ञानादपवर्गमुक्त्वा "एवमप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ। बुद्धश्चोक्तो यथातत्त्वं यथा श्रुतिनिदर्शनादिति चिदचिदीश्वरवैलक्षण्येनोपसंहृतं, तथा वैष्णवपुराणे च स्पष्टमिदमुच्यते यथा भगवन्तं प्रति ध्रुवः "सर्वात्मकोऽसि

सर्वेश सर्वभूतस्थितो यतः । कथयामि ततः किं ते सर्वं वेत्सि हृदि स्थितमि"ति, अत्र ह्यवस्थितिनिबन्धनं सर्वात्मकत्वं स्पष्टम्, अवस्थानञ्च शरीरशरीरिभावसंबन्धितयेति तत्रैव दृश्यते "सर्वेन्द्रियान्तःकरणपुरुषाख्यं हि यज्जगत् । स एव सर्वभूतात्मा विश्वरूपो यतोऽव्यय" इति न च विश्वरूप-शब्दश्चारुरूपा सालभञ्जिकेति वदमुख्यार्थतया नेयः स्वारस्यापवादाभावात् तत्रैव स्वारस्योत्तम्भकमपि दृश्यते प्रल्हादवचनेन "एतद्विजानता सर्वं जगत्स्थावरजङ्गमं द्रष्टव्यमात्मवत्तस्माद्यतोऽयं विश्वरूपभाग्" इति धार्य्यत्वधारकत्वरूपवैधर्म्यनिर्देशेन रूपतद्वतोर्हि भेद उच्यते तत्रैव ध्रुववचनादेव धार्य्यधारकभावोऽवगम्यते "सर्वस्मिन् सर्वभूतस्त्वं सर्वः सर्वस्वरूपधृक्सर्वं त्वत्तस्ततश्च त्वं नमस्सर्वात्मनेऽस्तु त"इति सर्वस्मिन् शरीरे सर्वचेतनभूतत्वसर्वत्वोपपादकं सर्वस्वरूपधृगिति । कारणत्वमपि तदुपपादकमाह—

सू० सामान्येनाभिधाय स यथाऽऽर्द्रैधाग्नेरित्यादिना स यथा सर्वासामपां समुद्र एकायनमित्यादिना चोपास्यभूतस्य परस्य ब्रह्मणो निखिलजगदेककारणत्वं सकलविषयप्रवृत्तिमूलकरणग्रामनियमनञ्च विस्तीर्णमुपदिश्य

टी० "सर्वं त्वत्त" इति ततश्च त्वमिति ततस्तस्मात्सर्वस्वरूपधृक्त्वात् सर्वकारणत्वाच्च सर्वं त्वमित्यर्थः, रूपत्वञ्च शरीरतयेति दर्शयता प्रल्हादेनोक्तं "सर्वगत्वादनन्तस्य स एवाहमवस्थित" इति शरीरं हि चेतनेन व्याप्यो द्रव्यविशेषः तथा च भगवन्तं प्रति अर्जुनवचनम्, "सर्वं समाप्नोषि ततोऽसि सर्व" इति एषु श्रुतिस्मृतिशतेषु "अनुक्तमन्यतो ग्राह्यमि"ति न्यायाद् धारणव्यापनादिष्वन्यतमोक्तावप्यन्यतमान्तरसिद्धिरनुसन्धेया ततश्च व्यापनमेव धारणनियमनयोरन्यतरसचिवं हि नृपनभोभृत्यकुटुम्बादिव्यावर्त्तनेन शरीरत्वमवगमयति, शरीरलक्षणं च भाष्य एव दर्शयिष्यते, अत एव तदनुप्रविश्य सच्च त्यच्चाभवदित्यत्राऽपि शरीरशरीरिभावनिबन्धनन्तत्तच्छब्दवाच्यत्वमवगम्यते अन्तःप्रवेशनेन प्रशासनादीनामर्थसिद्धत्वात् श्रूयते ह्यन्तः प्रवेशसहचारितया प्रशासनादिकम् "अन्तः प्रविष्टः शास्ता

जनानाम्, एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत'' इति तथा सर्वं खल्विदं ब्रह्म तज्जलानित्यत्रानल–शब्दवाच्या स्थितिति-धारणनिबन्धना सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनास्सत्प्रतिष्ठा इति सदायतन–शब्देन स्थितिहेतुत्वाभिधानात् धारणं चानुप्रविश्य प्रशासनेन उपदाहृतश्रुत्यैकार्थ्यात् "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवे''ति स्मरणात् "तत्सृष्ट्वा तदेवानुप्राविशदि''ति, सृष्ट्यनन्तरं स्थित्यर्थानुप्रवेशदर्शनाच्च उत्पत्तिलयौ च न निष्कृष्टस्वरूपे निर्विकारे संभवतः, अतो जन्मादिकारणत्वस्य हेतुत्वोपन्यासाच्छरीरशरीरिभाव एव सामानाधिकरण्ये हेतुरिति श्रुत्यैव दर्शितम्, अस्य सूत्रस्य न केवलं सर्वश्रुत्यविरोधमुख्यत्वोपपत्तेः किन्तु प्रबन्धान्तरस्थसूत्रकारवचनैकार्थ्यात् तदुपबृंहणैकार्थ्यात् प्रत्यक्श्रुतावेव हेतुहेतुमद्भावदर्शनाच्चान्तरात्मतयाऽवस्थानस्यैव अभेदनिर्देश-हेतुत्वपरत्वं सिद्धम् इह जीववाचिशब्दः कः, तस्य परमात्मपर्यन्तत्वे किं कारणं तस्मिन् सति हि तत्पर्यन्तत्वनिर्वाहकप्रकारापेक्षा, तत्पर्यत्वे च किं फलमित्यपेक्षायामाह'' अयमत्र वाक्यार्थ' इति, अमृतत्वस्य तु नाशाऽस्ति वित्तेन "न वा अरे पत्युः कामायेत्यादीनां वाक्यानाम् आद्यसूत्रव्याख्यानावसरे प्रपञ्चितार्थत्वादिह तदर्थोऽपि विस्तरेण न प्रतिपादितः "आत्मनि खल्वरे दृष्ट'' इत्यादिनेति "आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन इदं सर्वं विदितम्'' इत्यात्मविज्ञानेन सर्वविज्ञानप्रतिज्ञानं "ब्रह्म तं परादात् क्षत्रं तम्परादादि''त्यादिना व्यतिरिक्तवेदननिन्दनम् "इदं ब्रह्मेदं क्षत्रमि''ति सर्वात्मकत्वोक्तिश्च कारणत्वफलम्, अतः प्रतिज्ञादिभिर्लक्षणाभिधानं हि फलितं स्यात् 'योऽन्यत्रात्मनः सर्वं वेदेति अन्यत्र परमात्मानं विना अब्रह्मात्मकं स्वनिष्ठं योवेद तं सर्वं परादात् अभिभवेत् संसारयतीत्यर्थः । यद्वाऽन्यत्र परमात्मनोऽन्यत्र स्थितं न तु परमात्मनि स्थितं स्वनिष्ठमित्यर्थः, दुन्दुभ्यादिदृष्टान्तैः करणनियमनमभिधायेत्यन्वयः, अत्रायमभिप्रायः "स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय दुन्दुभ्याघातस्य वा शब्दो गृहीत इ''ति वाक्यस्य परैरेवमर्थ उक्तः दुन्दुभि–शब्देन दुन्दुभिशब्दसामान्यं लक्ष्यते यत् खलु यद्ग्रहणं विना

ग्रहीतुं न शक्यते तत्ततो न व्यतिरिच्यते यथा रजतं शुक्तिकायाः, दुन्दुभिशब्दावान्तरशब्दा हि तत्सामान्यग्रहणेनैव गृहीताः स्युः अयं दुन्दुभिशब्द इत्येव गृह्येत न दुन्दुभिशब्दतो व्यतिरेकेण अतस्तदवान्तरविशेषा यथा दुन्दुभिशब्देऽध्यस्ता एवं चिदात्मव्यतिरेकेण ब्रह्मनत्वादेर्जगदनवभासात् सर्वं चिदात्मन्यध्यस्तमिति एवं "सहोपलम्भनियमादभेदो नीलतद्धियोरि"ति बौद्धराद्धान्तप्रतिपादकमिदं वाक्यं व्याख्यातन्तदनुपपन्नं मुख्यार्थे सम्भवति उपरितनयोर्दुन्दुभिशब्दयोर्लाक्षणिकार्थपरत्वायोगात् लक्षणायां च दुन्दुभेर्हन्यमानस्येति पूर्ववाक्यवैयर्थ्यमेव, न हि गङ्गायमिति पदेनैव कूले लक्षिते गम्भीरायाम् गङ्गायाम् इति वाक्यं सफलं तथा दुन्दुभेस्तु ग्रहणेनेत्येतावताऽलन्तेनैव दुन्दुभिशब्दसामान्यग्रहणस्य प्रतिपन्नत्वात् आघातशब्दस्य न प्रयोजनं वा-शब्दवैयर्थ्यं च अत एवं योजनीयम्, दुन्दुभेरित्यनादरे षष्ठी ग्रहणशब्द इह निरोधपरः उपादाननिरोधयोरपि वाचकत्वात् यथा गृहीतानि पुष्पाणि गृहीतश्चोर इति यथा दुन्दुभौ हन्यमाने ततो वहिर्निस्सरतः शब्दान् न निरोद्धुं शक्नुयात्। कथं तर्हि निरुणद्धीत्यत्राह दुन्दुभेस्त्विति परेणोपादीयमानदुन्दुभिनिरोधेन तदा हन्तृपुरुषनिरोधेन वा शब्दो निरुध्यते, एवमिन्द्रियेषु व्याप्रियमाणेषु बाह्यार्थज्ञानं दुर्निरोधं तस्मादिन्द्रियनिरोधेन तत्प्रवृत्तिमूलस्य मनसो निरोधेन च परमात्मसाक्षात्कारविरोधिबाह्यार्थज्ञानं निरुध्यत इति एवं शङ्खवीणादृष्टान्तोपन्यासश्च योजनीयः, वीणाशब्दस्था चतुर्थी षष्ठ्यर्थे पूर्ववाक्यद्वयैकार्थ्यात्, अतो दुन्दुभ्यादिदृष्टान्तत्रयोपन्यासवाक्यत्रये द्रष्टव्यम् इत्युक्तपरोपासनोपकरणयामनियमनमुक्तमिति इति मनःप्रभृतीति दुन्दुभिनिरोधस्थानीयञ्चक्षुरादिनियमनं तथा हन्तृपुरुषनिरोधस्थानीयं मनोनियमनमिति भावः सामान्येनाभिधायेति निमित्तोपादानरूपविभागानभिधानात् कार्यविशेषानुपादानाच्चोपास्यलक्षणभूतं कारणत्वं सामान्येनोक्तं चक्षुरादिकरणविशेषाणां नियमनप्रकारविशेषाकथनात् करणनियमनञ्च सामान्येनोक्तमित्यर्थः

भा० "स यथा सैन्धवघन" इत्यादिनाऽमृतत्वोपायप्रवृत्ति-

प्रोत्साहनाय जीवात्मस्वरूपेणावस्थितस्य परमात्मनोऽपरिच्छिन्नज्ञानैकाकारतामुपपाद्य तस्यैवापरिच्छिन्नज्ञानैकाकारस्य संसारदशायां भूतपरिणामानुवृत्तिम् ।

टी० स 'यथे'ति तृतीयान्तयोरित्यादिशब्दयोर्निखिलेत्यादिपदद्वयेन यथायोगमन्वयः, एध-शब्दोऽकारान्त इन्धनवाची आर्द्रेन्धनाग्निग्रहणं निमित्तोपादानयोर्ज्ञापनार्थं अग्निर्हि धूमोत्पत्तौ निमित्तमिन्धनमुपादानं ऋग्वेदो यजुर्वेद इत्यादिना वाचकसृष्टिमात्रमुक्तं प्रथमे मैत्रेयीब्राह्मणे, उत्तरे तु इष्टं हुतमाशितं पायित तमयञ्च लोकः परश्च लोकः सर्वाणि च भूतानि अस्यैवैतानि सर्वाणि निश्वसितानी''ति साधनसाध्यभोग्यभोगस्थानभोक्तृवर्गरूपवाच्यजगत्सृष्टिरुक्ता, अनुक्तस्यान्यतो ग्राह्यत्वात् प्रथमे च वाच्यसृष्टिरुक्ता भवतीत्यभिप्रायेणाह ''निखिलजगदेककारणत्वमि''ति, निखिल-शब्दो वाच्यवाचकभोग्यभोगस्थानादिपरः, एक-शब्दो निमित्तोपादानैकत्वपरः स यथा सर्वासामपामित्यादिवाक्यानामर्थमभिप्रयन्नाह ''सकलविषये''ति, यथा ''सर्वासामपां समुद्र एकायनमेवं सर्वेषां स्पर्शानां त्वगेकायनं सर्वेषां रसानां सर्वेषां गन्धानामि''ति तत्तदिन्द्रियाणान्तत्तद्विषयायतनत्वमुक्तं दृष्टान्तदार्ष्टान्तिकयोरनुवृत्तमयनत्वं नाम तत्तदुपादातृत्वं तेनैकैककरणस्य एकैकजातीयस्पर्शाद्यवान्तरविशेषेषु वृत्तिविशेषा बहवो दर्शिता भवन्ति, सर्वेषां स्पर्शानामिति श्रवणादस्य वृत्तिविशेषप्रदर्शनस्य किं प्रयोजनमित्यपेक्षायामुपदेशस्य वैयर्थ्यायोगात् ''आत्मा वा अरे द्रष्टव्य'' इति, आत्मसाक्षात्कारस्य प्रकृतत्वात् दुन्दुभ्यादिदृष्टान्तैः सामान्येन करणनियमनस्योक्तत्वात् तन्नियमनविशेषकथनस्यापेक्षितत्वादुत्तरवाक्येन पूर्ववाक्यविवरणस्य एतत्प्रकरणदृष्टत्वाच्च करणवृत्तिविशेषप्रदर्शनं तद्वृत्तिविशेषनिरोधेनात्मसाक्षात्कारनिष्पादनार्थमित्यभिप्रायः विस्तीर्णमिति कारणत्वं निमित्तोपादानविभागकथनात् कार्य्यबाहुल्यदर्शनाच्च विस्तृतं, करणनियमनन्तु करणविशेषाणां निरोद्धव्यवृत्तिविशेषप्रदर्शनेन विस्तृतमित्यर्थः। उपदिश्येति न हि निष्प्रयोजनोपदेशस्सम्भवतीति भावः ''स यथा सैन्धवघन'

इति वाक्योपादानं "स यथा सैन्धवखिल्य" इति वाक्यस्यापि प्रदर्शनार्थं प्रोत्साहनायेति आत्माभिमानविषयदेहस्य दौर्गन्ध्यादिदर्शनेऽपि आत्माभिमानविषयत्वादेव हि तत्संस्कारविषये प्रवर्त्तते तस्यैवोद्बुद्धस्य स्वस्वरूपस्यैव प्राप्यत्वेऽवगते हि प्रवृत्त्याधिक्यं जायत इत्यर्थः ॥

**भू० "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती"त्यभिधाय "न प्रेत्य संज्ञाऽस्ती"ति मोक्षदशायां स्वाभाविकापरिच्छिन्नज्ञानसङ्कोचाभावेन भूतसङ्घातेनैकीकृत्यात्मनि**

टी० विज्ञानघन-शब्दस्य 'महद्भूतमनन्तमपारमि"ति सामानाधिकरण्यं प्रथममैत्रेयीब्राह्मणप्रतिपन्नमुपजीव्योक्तं जीवात्मस्वरूपेणावस्थितस्येति "भगवान्नृसिंहः श्वेतः ब्राह्मणश्चतुर्वेदाभिज्ञो गौर इत्यत्र श्वेत्यादिवद्विशेषणद्वारा परमविशेष्यविशेषणं ज्ञानैकाकारत्वमित्यर्थः, अनेन पूर्वोक्तस्य जीववाचिशब्देन परमात्माभिधाननिर्वाहस्योपयोगस्थलं विज्ञानघन-शब्द इति दर्शितं तत्पर्यन्ततयैव निर्वाह्यत्वे हेतुः परमात्मधर्मवाचिमहद्भूतानन्तापारशब्दसामानाधिकरण्यमित्यर्थसिद्धं, न चाव्यवधानेन परमात्मपरो विज्ञानघन-शब्दः 'उत्थाय विनश्यति प्रेत्येति श्रवणात् सर्वावस्थास्वपि जीवस्वरूपस्य परमात्मनिष्ठतया स्वातन्त्र्याभावज्ञापनं जीव-शब्देन तत्पर्यन्तनिर्देशस्य प्रयोजनमिति फलितम् । उपपाद्य-दृष्टान्तमुक्तेत्यर्थः तान्येवानुविनश्यतीत्यत्रानु-शब्दार्थमाह "भूतपरिणामानुवृत्ति"मिति, भूतेषु नश्यत्सु एष नश्यतीत्यर्थः, विनाशो नाम अत्यन्तज्ञानसङ्कोचः "अविनाशी वा अरे अयमात्मेत्यनन्तरवाक्यविरोधात् अत्र प्रेत्य-शब्दस्य पूर्वोक्तविनाशानुवादशङ्काव्यावृत्त्यर्थमाह "मोक्षदशायामि"ति, "न प्रेत्य संज्ञाऽस्तीति न देहविगमदशायां ज्ञाननिषेधः देहविगमदशायामज्ञानस्य तान्येवानुविनश्यतीत्युक्तत्वात्, नाऽपि लोकान्तरे ज्ञाननिषेधः कर्मफलभोगावगमकशास्त्रान्तरविरोधात्, नापि नैमित्तिकप्राकृतप्रलययोरज्ञानमुच्यते तयोरप्रस्तुत्वात्, अतः पारिशेष्यात् प्रेत्य-शब्दश्चरमदेहावसानपरः

"नोपजनं स्मरन्निदं शरीरमि"ति श्रुत्यन्तरार्थप्रत्यभिज्ञानात् अत्रा"प्येतावदेव खल्वरे अमृतत्वमि"त्यमृतत्वस्योक्तत्ववचनाच्च मोक्षविषयत्वं युक्तमित्यभिप्रायः, पूर्वापरवाक्यानुगुणमर्थमाह "स्वाभाविके"ति, स्वरूपस्य ज्ञानात्मकत्वं हि "स यथा सैन्धवघन इ"त्यादिनोक्तम्, अतः स्वाभाविकत्वं फलितम् अनन्तर-शब्देन बहिरपि ज्ञानात्मकत्वस्योक्तत्वाद्धर्मभूतज्ञानवत्त्वं सिद्धं तस्य चापरिच्छिन्नत्वं "सर्वं ह पश्यः पश्यतीत्यादिश्रुत्यन्तरसिद्धमित्यभिप्रेत्य स्वाभाविकापरिच्छिन्नज्ञानसङ्कोचाभावेनेत्युक्तं, समित्येकीकार इत्यभिप्रायेणाह "एकीकृत्ये"ति, केनेत्यपेक्षायाम् "एतेभ्यो भूतेभ्य इति पूर्ववाक्यमुपजीव्याह "भूतसङ्घातेने"ति,

भा० देवादिरूपज्ञानाभावमुक्त्वा पुनरपि "यत्र हि द्वैतमिव भवती"त्यादिना ऽ ब्रह्मात्मकत्वेन नानाभूतवस्तुदर्शनमज्ञानकृतमिति निरस्तनिखिलाज्ञानस्य ब्रह्मात्मकं कृत्स्नं जगदनुभवतो-

टी० देवादिरूपज्ञानाभावमुक्त्वेति नोपजनं स्मरन्निति प्रकरण एव "मनसैतान् कामान् पश्यन् रमत इति एते ब्रह्मलोक"इति ज्ञानविकासप्रतिपादनात् किञ्च "न प्रेत्य संज्ञेति" वाक्यं श्रुत्वा न ह वा अहमिमं जानामीति मैत्रेय्या पृष्टे अविनाशी वा अरे अयमात्मे"त्यात्मस्वरूपनित्यत्वमुक्त्वा अनुच्छित्तिधर्मेति ज्ञाननित्यत्ववचनाच्चेति भावः। मुक्तौ ज्ञानं नास्ति चेत् ज्ञानैकाकारत्वं पूर्वोक्तं विरुध्येतेति मैत्रेयीवाक्याभिप्रायः। अनुच्छित्तिधर्मेति ज्ञाननित्यतां याज्ञवल्क्यः प्रत्यभाषिष्ट न चोच्छित्तिभाव एव अस्य धर्म इत्युच्यते अविनाशीति स्वरूपनित्यत्वस्योक्तत्वात् अविनाशिपदाभावेऽपि धर्मशब्दवैयर्थ्यप्रसङ्गाच्च दीपादौ प्रतिक्षणविनाशसंततिविनाशयोर्दृष्टत्वात्तदुभयव्युदासाय पदद्वयमिति न शङ्कनीयं अविनाशि-शब्देनैव असङ्कोचादुभयविनाशाभावसिद्धेः धर्मशब्दवैयर्थ्यप्रसङ्गाच्च अव्यय इतिवदनुच्छित्ति रित्येतावताऽपि स्वरूपानुच्छित्तिसिद्धेः पुनरपीति भ्रान्तिर्द्वेधा अनात्मनि देहेऽहं बुद्धिः, अब्रह्मात्मकतया स्वातन्त्र्यबुद्धि-

श्चेति तत्र न प्रेत्य संज्ञाऽस्तीत्यनेन बन्धनदशानुवृत्तदेहात्मभ्रमनिवृत्तिरुक्ता, अथ स्वनिष्ठताभ्रान्तिनिवृत्तिरुच्यत इत्यर्थः । यत्र यस्यामवस्थायां द्वैतमिव भवति परमात्मनः पृथक्त्वंस्व निष्ठतया पृथक्कं भवति, इव–शब्दः स्वातन्त्र्यस्याप्रामाणिकत्वद्योतकः, तत्–तदा, इतरः–परमात्मन इतरः पृथक् स्थितः इतरं–स्वनिष्ठं वस्तु इतरेण स्वनिष्ठदर्शनसाधनेन पश्यतीति स्वनिष्ठभ्रमानुवादः । मुक्तौ तन्निवृत्तिमाह "यत्र त्वि"ति, यत्र–यस्यां मुक्तिदशायां सर्वमात्मैवाभूत् परमात्मात्मकत्वेन प्रकाशते तत्–तदा कश्चेतन केन करणेन कं स्वनिष्ठमर्थं पश्येत् अब्रह्मात्मकं स्वनिष्ठतया भासमानं वस्तु तद्दर्शनसाधनं तद्द्रष्टा च मुक्तिदशायां नास्तीत्यर्थः । तदिदं वाक्यं हृदि निधायाह "अब्रह्मात्मकत्वेने"ति, नानात्वनिषेधस्य विहितनानात्वव्यतिरिक्तविषयत्वात् स्वनिष्ठनानात्वं निषेध्यमित्यभिप्रायः, नानाभूतवस्तुदर्शनमज्ञानकृतमिति न तत्तद्वस्तुदर्शनमात्रमज्ञानकृतं किन्तु स्वनिष्ठदर्शनमेव तदुपाधिकमिति भावः । अज्ञानकृतमिति स्वनिष्ठवस्तु दर्शनस्यौपाधिकत्वादुपाधिनिवृत्तौ तन्निवृत्तिर्युक्तेति भावः । उपाध्यभावेऽपि ब्रह्मस्वरूपानवभासे स्वनिष्ठार्थान्तरदर्शनं स्यादित्यत्राह "ब्रह्मात्मकं कृत्स्नं जगदनुभवत"इति, "यत्र त्वस्य सर्वमात्मैवाभूदि"ति न भवनमत्र विवक्षितं ब्रह्मात्मकत्वस्य नित्यत्वेन यत्रेत्यवस्थाविशेषान्वयोक्त्यनुपपत्तेः, अतो "ब्रह्मवेद ब्रह्मैव भवती"त्यादाविव आविर्भावाभिप्रायं वाक्यमित्यभिप्रायः कृत्स्नानुभवेऽपि ब्रह्मणो जगतश्च पृथगनुभवः किं न स्यादित्यत्राह–

सू० ब्रह्मव्यतिरिक्तवस्त्वन्तराभावेन भेददर्शनं निरस्य "येनेदं सर्वं विजानाति तं केन विजानीयादि"ति च जीवात्मास्वात्मतयाऽवस्थितेन येन परमात्मनाऽऽहितज्ञानः सन् इदं सर्वं विजानाति अयं तं केन विजानीयान्न केनाऽपीति परमात्मनो दुरवगमत्वमुपपाद्य "स एष नेति नेती"-त्यादिना अयं सर्वेश्वरः स्वेतरसमस्तचिदचिद्वस्तुविलक्षण-

रूप एव सर्वशरीरस्सन् सर्वस्यात्मतयाऽवस्थित इति स्वश-रीरभूतचिदचिद्वस्तुगतैर्दोषैर्न संस्पृश्यत इत्यभिधाय "वि-ज्ञातारमरे केन विजानीयादि"त्युक्तानुशासनासि मैत्रेय्ये-"तावदरे खलु अमृतत्व'मिति, समस्तवस्तुविसजातीयं निरस्तनिखिलजगदेककारणभूतं सर्वस्य विज्ञातारं पुरु-षोत्तमम्—

टी० "ब्रह्मव्यतिरिक्तवस्त्वन्तराभावेने"ति, अप्रामाणिकज्ञानं हि दोषादुत्पद्यते दोषाभावे तु वस्तुसद्भावं विना दर्शनं नोपपद्यत इत्यर्थः "येनेदमिति क इत्था वेद यत्र स इतिवत् परमात्मप्रसादादृते तस्य दुरवबोधत्वमत्रोच्यते अन्यथा आत्मा वा अरे द्रष्टव्य इत्युपक्रमावगत-द्रष्टव्यत्वविरोधात् "तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महि-मानमीशमि"ति, तत्प्रसादेन तद्दर्शनस्य श्रुत्यन्तरसिद्धत्वाच्चेति भावः स्वेतरसमस्तचिदचिद्वस्तुविलक्षणस्वरूप एवेति चिदचिद्गतप्रकाराणां प्रमा-णान्तरसिद्धत्वादिति शब्दद्वयेन तत्प्रकारमनूद्य निषेधद्वयेन चिद्गतोऽचि-द्गतश्च प्रकारो व्युदस्यते विहितप्रकारस्य निषेधायोगात् "अगृह्यो न गृह्यते अशीर्यो न हि शीर्यते असङ्गो न हि सज्यत" इति, चिदचिद्गतप्रकारविशे-षनिषेधेन तद्विवरणाच्चेत्यभिप्रायः। अग्राह्यश्चक्षुरादिना ग्रहणानर्हः अतो न गृह्यते एवमशीर्य इत्यादियोजनीयम् असङ्ग इत्यादिना जीवधर्मनिषेधः न ह्यचित्सङ्गोऽस्य स्वरूपतिरोधानकृद् भवति न हि सज्यत इत्यादावुक्त सङ्गादियोग्यस्याऽपि दूरस्थतया तदभाव इति शङ्काव्यावृत्त्यर्थमसङ्ग इत्युक्तम्, असङ्गः सङ्गविरोधि सङ्गानर्हत्वमर्थसिद्धत्वं तेन सङ्गाद्यभावः न देशकाल-विप्रकर्षात् किन्तु स्वभावविप्रकर्षादित्यर्थः। पूर्ववाक्योक्तासङ्गादिफलमाह "समस्तवस्तुविसजातीयमि"ति, निखिलजगदेककारणभूतं सर्वस्य विज्ञा-तारमिति प्रकरणोपक्रमोदितकारणत्वव्याप्तसर्वज्ञत्वादिगुणप्रदर्शको वि-ज्ञातृ-शब्द इति भावः। तं केन विजानीयादिति पूर्ववाक्येन पुनरुक्तिश-ङ्कापरिहारायाह—

भू० उक्तप्रकारादुपासनादृते केन विजानीयादितीदमेवोपासनममृतत्वोपायो, ब्रह्मप्राप्तिरेव चामृतत्वमभिधीयते इत्युक्तवान्,

टी० "उक्तप्रकारादि"ति, परमात्मप्रसादादृते तस्य दुरवगमत्वपरं पूर्ववाक्यं तत्प्रसादनोपायश्चात्राभिहितमुपासनमेवेति केवलयज्ञदानाद्युपायान्तरनिषेधपरमिदं वाक्यमित्यर्थः । विपरीतं किं न स्यादिति नाशङ्कनीयं द्रष्टव्य इत्युपक्रमावगतज्ञानेनैव निगमनस्य युक्तत्वात्, न हि दुरवबोधतया निगमनं न्याय्यं तदुपक्रमविरोधात्, एतावदित्यस्यार्थमाह "ब्रह्मप्राप्तिरेव चे"ति, उपायान्तरव्युदसनमुखेन उक्तोपायनिगमनपरं विज्ञातारमिति वाक्यम् एतावदित्यादिवाक्यमुपेयनिगमनपरमित्यर्थः । अधिकरणार्थमुपसंहरति "अत"इति, इतरैस्सर्वैः सूत्रत्रयव्याख्यानमन्यथा कृतं तत्तु प्रतिज्ञायादिसम्बन्धेन जीवत्वशङ्कानिरासस्यानुपयोगाद्विरुद्धत्वाच्च अनुपपन्नमित्यनुसन्धेयन्तत्र। मिथ्यावेदान्तिभिस्तु प्रतिज्ञासिद्धेरित्यादिसूत्रत्रयं द्विधा व्याख्यातन्तत्र प्रथममिदं सर्वं यदयमात्मेत्यभेदव्यपदेशस्य कार्य्यकारणभावनिबन्धनत्वं परमाद्यं सूत्रमुत्क्रमिष्यतो ब्रह्मभावापत्तिहेतुकत्वपरं द्वितीयं ब्रह्मण एवाविकृतस्य विज्ञानात्मभावेनावस्थानमूलत्वपरं तृतीयमित्युक्तम्, एवं वदतोऽभिप्रायः शोधनीयः, यदि कार्य्यकारणभावं वदताऽऽश्मरथ्येन ब्रह्मपरिणामो जीवोऽभिमतः पूर्वमनेवम्भावश्च औडुलोम्याभिमत इति सूत्रद्वयार्थः पूर्वपक्षीकृतः एतावदस्माकमविरुद्धम् । अथ कार्य्यकार्य्यकारणभावो नामाध्यासरूप उत्क्रमिष्यत एवम्भावश्चाध्यस्ताकारनिवृत्तिरूपः, ब्रह्मण एव जीवभावारोपतन्निवृत्तिमत्त्वाभ्याम् अभेदव्यपदेशपरं सूत्रद्वयमिति मतं तदानीं सिद्धान्ततयाऽभिमतात्काशकृत्स्नमताद्भेदाभावेन सूत्रद्वयवैयर्थ्यं स्याद्भवत्पक्षे हि ब्रह्मण एव विज्ञानात्मभावेनावस्थानं काशकृत्स्नमतं जीवब्रह्मणोरैक्यमभ्युपगच्छतश्च काशकृत्स्नस्य जीवभावस्याध्यस्तत्वं निवर्त्त्यत्वं चाभिमतमेवेति काशकृत्स्नमताद्विशेषाभावेन सूत्रद्वयवैयर्थ्यं स्थितं काशकृत्स्नमतस्यैवाचार्य्यान्तरद्वयाभिमत्या स्थिरीकरणार्थं

सूत्रद्वयमिति चेद्व्यतिरिक्तसर्वाचार्यानभिमतत्वशङ्काव्युदासार्थमाचार्यभूयस्तया सूत्रसहस्राणि प्रणेतव्यानि स्युः, विस्तरभयादाचार्यद्वयोक्तिः प्रदर्शनार्थेति चेत्काशकृत्स्नकीर्त्तनस्यैव सर्वाचार्यप्रदर्शनार्थत्वसम्भवात्सूत्रद्वयवैयर्थ्यमेव स्यात्, अस्मन्मते तु परिणामाध्यासपक्षद्वयपूर्वपक्षीकरणार्थत्वात् साफल्यं स्फुटतरं, पुनश्चैवं योजितं सूत्रत्रयं "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय"त्युक्तं, महतो भूतस्य ब्रह्मणो भूतेभ्यः समुत्थानं कार्यकारणाव्यतिरेकप्रतिज्ञासिद्धिसूचकं तान्येवानुविनश्यतीत्युक्तं विशेषविज्ञानोच्छेदरूपमभेदाभिधानमुत्क्रमिष्यतः परेणात्मनैक्यसम्भवाद् ब्रह्मण एव विज्ञानात्मभावेनावस्थानाच्च उपपन्नमिति,इदमप्ययुक्तं प्रकृतानुपयोगाद् द्रष्टव्यतयोपदिष्टस्यात्मनः परमात्मत्वं हि साध्यं जीवोत्पत्तिप्रलयवादः प्रकरणस्य परमात्मपरत्वं न निवारयति, न हि पृथिव्याद्युत्पत्तिप्रलयवादास्तत्प्रकरणानां परमात्मपरत्वं वारयन्ति अतो जीवोत्पत्तिप्रलयचिन्तनं प्रकृतस्यानुपयुक्तम्, अत एव पादासङ्गतं च, इदञ्च जीवनित्यत्वाजत्वादिश्रुत्यन्तरविरोधेन[1] नात्माऽश्रुतेरित्यत्र करिष्यते, भवद्भिरपीदमेव वाक्यमुपादाय उपाध्युत्पत्तिप्रलयाभिप्रायमिति तत्रैव व्याख्यातम्, अतः पृथक् प्रयत्नवैयर्थ्यञ्च तत्रोपजीव्यत्वायात्र प्रसङ्गाच्चिन्तितमिति चेन्न इहोक्तस्य सूत्रद्वयार्थस्य भाविसाध्यानुपयोगात्प्रतिज्ञासिद्धिसूचकत्वं प्रलये ब्रह्मतापत्तिवचनं चोत्पत्तिप्रलययोर्न गौणत्वसाधकं तेजःप्रभृत्युत्पत्तिप्रलययोरपि गौणत्वप्रसङ्गादविकृतस्यैव ब्रह्मणो विज्ञानात्मभावेनावस्थानमपि न गौणत्वसाधकमविकृतस्यैव ब्रह्मणोऽध्यस्ततेजोऽबन्नरूपेणावस्थितत्वेन तदुत्पत्त्यादेरपि ।

सू० अतः परं ब्रह्मैवास्मिन् वाक्ये प्रतिपाद्यते इति परमेव ब्रह्म जगत्कारणं पुरुषः तदधिष्ठिता च प्रकृतिरिति स्थितम्, वाक्यान्वयाधिकरणं समाप्तम् ॥

टी० गौणत्वप्रसङ्गादस्त्विति चेत् तेजोऽबन्नाद्युत्पत्तेर्जीवोत्पत्तिवैषम्यस्य दुर्वचत्वात् प्रयासवैयर्थ्यमेव स्यादिति, अतःप्रकृतानुपयोगादिभिर-

१ श्रुत्याविरोधेनेति तु पा० ।

नुपपन्नत्वात् जीवोत्पत्त्यादिनिर्वाहपरत्वमनादृतं भाष्यकारैः, अभेदव्यपदेशनिर्वाहस्त्वत्यन्तापेक्षितः द्रष्टव्यस्यात्मनो जीववाचिशब्दनिर्देशकृताया अपरमात्मत्वशङ्काया निराकरणीयत्वात् । यादवप्रकाशैस्तु भोक्तृब्रह्मणोरैक्याद्गते सर्वस्य ब्रह्मतादात्म्यप्रतिज्ञानासिद्धेर्जीवेनोप क्रमो जीवब्रह्मणोरभेदेन प्रतीतिसिद्ध्यर्थं इत्याद्यसूत्रार्थो वर्णितः, अत्र सामान्येन ब्रह्मणैक्यज्ञापनं प्रयोजनमुक्तं भवति उत्क्रान्तौ ब्रह्मणि लीनतया तेनैक्याज्जीवेनोपक्रम इत्येतदर्थपरम्, उत्क्रमिष्यत एवंभावादित्यौडुलोमिरिति सूत्रं व्याख्यातं ब्रह्मणस्सर्वत्र तृणकणादावपि पूर्णत्वेन अवस्थानात् येनकेनचित्तृणादिवाचकशब्देनाप्युपक्रमे ब्रह्मपरत्वं युक्तमिति तृतीयसूत्रार्थ उक्तः, तत्र तावदाद्यसूत्रद्वयस्य सूत्रकाराभिमतनिर्वाहपरत्वमयुक्तं मुक्तिदशायामौडुलोम्यभिमतस्य ब्रह्मतादात्म्यस्य मुक्तिपादे चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिरिति सूत्रोपन्यस्तस्य सूत्रकारैरेव पूर्वपक्षितत्वात् तथा तैर्व्याख्यातत्वाच्च स्वप्रकाशसन्मात्रमेव स्वरूपं गुणाष्टकोक्तिस्तु गुणानां शक्तिरूपत्वाच्छक्तीनाञ्च भेदाभेदादिविकल्पयोग्यत्वाद्गुणशक्तियुक्तसन्मात्रस्वरूपाभिप्राया क्रीडाजक्षणाद्युपन्यासस्तुतिपरो दुःखाभावाभिप्राय इति औडुलोमिमतमुपन्यस्य एवमुपन्यासात्पूर्वभावादविरोधं वादरायण इति सूत्रेण तत्प्रतिक्षिप्तं शक्तिमात्रस्य न पुरुषार्थत्वं, न हि गानमशृण्वतः श्रवणसामर्थ्यमात्रं पुरुषार्थः, अतो नाहमत्र भोग्यं पश्यामीत्युक्तवतो मघोनः पुरुषार्थज्ञापनायोपदिश्यमानं गुणाष्टकं न शक्तिमात्राभिप्रायम्, अतः शक्तिमात्रोपन्यासस्य वैयर्थ्यात् क्रीडादिकं ब्रह्मभूतस्य मुक्तस्येश्वरस्येवाभ्युपगन्तव्यमिति हि सिद्धान्तितमतो यादृशं ब्रह्मतादात्म्यमौडुलोम्यभिमतं मुक्तिपादे पूर्वपक्षितन्तादृशमेव ब्रह्मतादात्म्यमिहाप्युपन्यस्तं स्यात्, न ह्येक एवाभ्रान्तः पुरुषः स्वाभिमतविरुद्धमर्थं कदाचिदङ्गीकरोति, अतः उत्तरत्र निराकरिष्यमाणस्य पक्षस्य इह प्रसङ्गादुपन्यास[१]स्याऽपि स्वीकारो व्याहत इति तेष्यतयैव औडुलोमिमतोपन्यास इत्यभ्युपगन्तव्यम्, इहोपन्यस्ततादात्म्यस्य निराकरिष्यमाणत्वात् वैषम्यस्य च दुर्वचत्वात्, अतस्तत्साहचर्यादाश्मरथ्यमत-

१ उपन्यस्तस्यापीति पा० ।

मपि प्रतिक्षेप्यतयोपन्यस्तं स्यात् स्वरूपपरिणामस्य सकलविशेषशून्यब्रह्मतादात्म्यस्य च सकलप्रमाणन्यायविरुद्धत्वाच्च प्रतिक्षेप्यत्वं दुर्वारम्, अतश्चरमसूत्रमेव स्वाभिमतनिर्वाहपरं, तत्र च अवस्थितेरिति पदं सर्वत्र घटपटतृणादौ ब्रह्मणः पूर्णतयाऽवस्थानादिति व्याख्यातं,पूर्णतयाऽवस्थानञ्च सन्मात्ररूपेणाऽत्र विवक्षितं,यथोक्तम् ' अस्तित्वं ब्रह्मणोरूपं सर्वविकल्पप्रत्याख्यानात् न चास्तित्वं घटे पटे च खण्डितं वर्त्तते उभयत्राऽपि कृत्स्नास्तित्वदर्शनादिति तदयुक्तं, तथा हि न तावदिदं ब्रह्मस्वरूपभूतमस्तित्वं सामान्यरूपं व्यवहाराहंत्वमानाहंत्वाद्युपाधिरूपं वा भवितुमर्हति तस्य लोकसिद्धत्वेनेदं "पूर्णमदः पूर्णमि"त्यादिशास्त्रवैयर्थ्यप्रसङ्गात् तस्येन्द्रियकत्वेना"द्रेश्यमग्राह्यमि"त्यादिश्रुतिविरोधात् द्रव्याश्रयस्य तस्य स्वे महिम्नि स्थितत्वायोगाज्जगदाधारत्वायोगाज्जडस्य ज्ञानस्वरूपत्वायोगाद् द्रव्यनिष्ठधर्मतया तदधीनात्मलाभस्य तस्य जगद्रूपेण परिणामायोगात् सार्वज्ञ्यसर्वशक्तित्वादिगुणाश्रयत्वायोगात्सङ्कल्पाश्रयत्वाभावेन निमित्तत्वायोगात्कारणत्वाभावेनैव अध्येयत्वेन प्राप्यत्वायोगाद्भवद्भिरनभ्युपगतत्वाच्च अतः सद्द्रव्यमेवैकैकस्मिन् घटादौ पूर्णमिति भवतां सम्मतं, न चास्तित्वं घटे पटे च खण्डितं वर्त्तते उभयत्राऽपि कृत्स्नास्तित्वदर्शनादिति भवद्भिरुक्तत्वात्सदिति प्रतीयमानद्रव्यमेव ब्रह्मस्वरूपमि"ति, अद्रेश्यमग्राह्यमित्या"दिश्रुतिविरोधो दुष्परिहारः । किञ्च घटे सद्वस्तुनः पूर्णत्वं नाम न संभवति सजातीयविजातीयघटपटाद्यनन्तपदार्थरूपेण सद्द्रव्यस्य विभक्तत्वात् घटत्वादिभिरवच्छिन्नं सत्पूर्णमिति चेत् न अवच्छिन्नत्वदर्शनादेवानवच्छेदासिद्धेः,घटत्वावच्छिन्नस्य सतः पटत्वाद्यवच्छिन्नैरंशान्तरैरभिन्नत्वं पूर्णत्वमिति चेत्तर्ह्येकस्थूणावस्थितस्यांशस्य स्थूणान्तरावच्छिन्नांशैरभिन्नत्वेन पूर्णत्ववत् घटावच्छिन्नस्य सद्द्रव्यस्य पूर्णत्वमंशान्तरसापेक्षमित्युक्तं स्यात्, ततश्च घटमात्ररूपस्य सद्द्रव्यस्य अपूर्णत्वमेवोक्तम्भवति कथन्तर्हि भवत्पक्षे शरीरभूतेषु चिदचिद्वस्तुषु परमात्मनः पूर्णत्वम् अणुमात्रेऽपि वस्तुनि स्थितस्य निरवधिकषाड्गुण्यविशिष्टतया प्रतिपत्तियोग्यत्वमिति ब्रूमः, तच्च शास्त्रबलादभ्युपेतं न तु प्रत्यक्षादिनेति न काचिदनुपपत्तिः । किञ्च परमात्मनस्तृणादावपि

सद्रूपेण पूर्णत्वप्रतिपादनप्रयासश्च तत्र भवतां विफलः येन केनचित्तृणादि-वाचकशब्देनाप्युपक्रमे ब्रह्मपरत्वोपपादनार्थं हि पूर्णत्वकथनं तत्तु न सिध्यति, अस्तित्वस्य तत्तच्छब्दवाच्यत्वाभावादस्तित्वस्यापि घटादिशब्दवाच्यत्वे घटोऽस्ति नास्तीति प्रयोगस्य पुनरुक्तिव्याघातौ प्रसज्येयाताम् । ननु घटादिशब्दानां विशिष्टवाचित्वं तवाभिमतं तत्र विशेष्यद्रव्यं सदिति चेत् सत्यं, तथाऽपि घटादयः शब्दाः घटत्वाद्याश्रयरूपेण विशेष्यं वदन्ति न तु सत्तारूपेण द्रव्यत्वरूपेण वा अतोनास्मत्पक्षे पुनरुक्तिव्याघातादिदोषप्रसङ्गः, अतः पूर्णस्यापूर्णस्य वा सद्रव्यस्य शब्दवाच्यत्वाभावात्पूर्णतयाऽवस्थानकथनं परमात्मोपक्रमानुपयोगीति सूत्रत्रयस्य यथोक्तार्थपरत्वं सिद्धम् । वाक्यान्वयाधिकरणं समाप्तम् ॥

प्रकृत्यधिकरणम् ।

## सू० प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

भू० एवं निरीश्वरसाङ्ख्ये निरस्ते सति सेश्वरसाङ्ख्यः प्रत्यवतिष्ठते, यद्यपीक्षणादिगुणयोगात्सर्वज्ञमीश्वरं जगत्कारणत्वेन वेदान्ताः प्रतिपादयन्ति तथाऽपि वेदान्तैरेव जगदु-

टी० सू. प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात्, पेटिकासङ्गतिमाह "एवमि"ति, एवं–शब्देन अतीताधिकरणत्रयात्मकपेटिकाद्वयकृतनिरसनप्रकारो विवक्षितः, आद्याधिकरणत्रयेण हि साक्षात्सङ्गतेन विकल्पेन पुरुषाधिष्ठितप्रकृतेर्जगत्कारणत्वं निरस्तं, द्वितीयेन तु पादासङ्गतेनाऽपि प्रसङ्गप्राप्तेन नियमेन कारणत्वं प्रतिक्षिप्तन्तत्रच्छायानुसारिवाक्यविषयतया पादसङ्गतत्वेऽप्ययोगव्यवच्छेदप्रतिक्षेपेण उत्थितत्वात्तेनाकारेण प्रासङ्गिकत्वमपि विद्यते, एवं विकल्पेन नियमेन च कारणत्वे प्रतिक्षिप्ते समुच्चयेन कारणत्वं प्रतिक्षिप्यत इति नासङ्गतिरित्यर्थः । स्वनिष्ठवस्तुद्वयस्य निमित्तभावेनोपादानभावेन च अन्योन्यसापेक्षतया एकस्मिन् कार्य्येऽन्वयो हि व्युदस्यते, सिद्धान्ते तु ज्ञानादिवदुपादानभूतस्य ब्रह्मणः प्रकृतिर्विशेषणं तस्य सर्वशक्तित्वादिति न समुच्चयनिरासनिरोधः, अत एवावान्तरसङ्गति-

रण्यस्ति, मैत्रेयीब्राह्मणे हि परब्रह्मण एव सर्वविधकारणत्वमुक्तम् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानानादिभिः तदयुक्तं परब्रह्मणो निमित्तमात्रत्वादुपादानं तु प्रधानमिति शङ्कयोत्थानप्रतीतेः किं ब्रह्मनिमित्तमात्रम्? उतउपादानमपीति किं कारणवाक्यं ब्रह्मणोनिमित्तत्वमात्रं प्रतिपादयति?

पादानतया प्रधानमेव प्रतिपाद्यत इति प्रतीयते, न हि वेदान्ताः सर्वज्ञस्यापरिणामिनोऽधिष्ठातुरीश्वरस्याधिष्ठेयेनाचेतनेन परिणामिना प्रधानेन विना जगतः कारणत्वमवगमयन्ति, तथा ह्यपरिणामिनमेवैनं प्रकृतिं चैतदधिष्ठितामपरिणामिनीमधीयते "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं" "स वा एष महानज आत्माऽजरोऽमरः विकारजननीमज्ञामष्टरूपामजां ध्रुवां ध्यायतेऽध्यासिता तेन तन्यते प्रेर्य्यते पुनः। सूयते पुरुषार्थां[1]श्च तेनैवाधिष्ठिता जगत् गौरनाद्यन्तवती सा जनित्री भूतभाविनीति तथा प्रकृतिमुपादानभूतामधिष्ठायैवेश्वरो विश्वं जगत्सृजतीति श्रूयते "अस्मान्मायी सृजते विश्वमेतत् मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमिति।

टी० उतोपादानतामपीति प्रतिज्ञादृष्टान्तौ किं स्वारस्येन नेयौ? उत क्लिष्टतया नेयौ? किमन्यत्र निमित्तोपादानभेदनियमो निर्दोषत्वश्रुतिर्निमित्तोपादानभेदश्रुतिश्च प्रतिज्ञादृष्टान्तोपरोधका भवन्ति नेति यदोपरोधका भवन्ति तदा प्रतिज्ञादृष्टान्तयोः क्लिष्टतया निर्वाह्यत्वान्निमित्तत्वमात्रं वेदान्ताः प्रतिपादयन्तीति ब्रह्म निमित्तमात्रमिति पूर्वपक्षः स्यात् यदा नोपरोधका भवन्ति तदा प्रतिज्ञादृष्टान्तयोः स्वरसतया नेयत्वादुपादानत्वमपि वेदान्ताः प्रतिपादयन्तीति उपादानमपि ब्रह्मैवेति सिद्धान्ते फलफलिभावः इत्यानन्दमयाद्यधिकरणसिद्धार्थोक्ते-

[1] पुरुषार्थं चेति पा०।

पपरिहारमुखेन परब्रह्मकारणत्वे समर्थिते कथं पुनः साङ्ख्यस्योत्थान-
मिति शङ्कामनुवदन् पूर्वपक्षी स्वमतं प्रतिजानीते "यद्यपी"ति, ईक्षणा-
दीत्यादि-शब्द आनन्दादिपरः वेदान्तैरेव ब्रह्मैककारणत्वपरतया त्वद-
भिमतैरेवेति भावः । प्रतिज्ञातमुपपादयति "न ही"ति, ईश्वरस्य चेतन-
त्वादपरिणामित्वेनाधिष्ठातृत्वेन च प्रधानस्याचेतनतया परिणामित्वेना-
धिष्ठेयत्वेन च वेदान्तप्रतिपादितत्वं प्रतिज्ञातार्थे हेतुरित्यर्थः । हेतुसिद्धिं
दर्शयति "तथा ही"ति, निष्कलमित्यादिवाक्यमीश्वरस्यापरिणामित्ववि-
षयं, विकारजननीमिति प्रकृतेर्विकारित्वाधिष्ठेयत्वविषयं जनित्री-सम-
ष्टिसृष्टिकरी, भूतभाविनी-व्यष्टिसृष्टिकरी प्रधानप्रतिपादके वाक्ये तद्वि-
शेषणतयेश्वरस्याधिष्ठातृत्वं दर्शितम् । ईश्वरप्रतिपादके वाक्ये तस्य प्रधा-
नाधिष्ठातृतयोपादानभूतात्तस्माद्भेदं दर्शयति "तथे"ति, महेश्वर-शब्देन
मायिशब्दनिर्दिष्टस्य निमित्तकारणस्य मायां प्रति प्रेरकत्वं विवक्षित-
मिति भावः । श्रुतेरुक्तार्थपरत्वं स्मृतिसंवादेन द्रढयति—

भा० स्मृतिरपि "मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरमि"-
ति, एवमश्रुतेऽपि प्रधानोपादानत्वे ब्रह्मणो जगत्कारण-
त्वश्रुत्यन्यथाऽनुपपत्त्यैव प्रधानस्वरूपं तस्येश्वराधिष्ठितस्य
जगदुपादानकारणत्वं च सिध्यति, एवमेव हि लोके नि-
मित्तोपादानयोरत्यन्तभेदो दृश्यते मृत्सुवर्णादेरचेतनस्य
घटकटकाद्युपादानत्वं चेतनस्य कुलालस्वर्णकारादेश्च नि-
मित्तत्वं च नियतमुपलभ्यते, कार्यनिष्पत्तिश्च नियमेना-
नेककारकसव्यपेक्षा दृष्टा, एवं निमित्तोपादानयोर्भेदनि-
यमङ्कार्यनिष्पत्तेरनेककारणसव्यपेक्षत्वनियमञ्चातिक्रम्य

टी० "स्मृतिरपी"ति, श्रुतिषु प्रधानप्रतिपादनाभावमभ्युपगम्य
तस्योपादानत्वं समर्थयति "एवमश्रुतेऽपी"ति, ब्रह्मण इति सत्यज्ञाना-
दिलक्षणत्वादपरिणामिन इति भावः । प्रधानस्वरूपं तस्येश्वराधिष्ठितस्य

जगदुपादानत्वं चेति समस्तप्रपञ्चनिर्माणानुगुणमचेतनस्वरूपं तस्य चाचेतनत्वादेव तदधिष्ठितत्वं च सिद्ध्यतीत्यर्थः । कारणत्वश्रुतेरन्यथाऽनुपपत्त्युपयोगिनीं व्याप्तिं शिक्षयति "एवमेव ही"ति, अत्यन्तभेदः—शरीरतयाऽऽत्मनिष्ठत्वमप्यसहमानो भेदः ॥ यद्वा तर्कमपि पृथक् साधनत्वेनाह "एव-"मेव ही"ति, पूर्वोक्तश्रुत्यर्थापत्त्युपपादकत्वे हि-शब्दस्वरसः । ननु यत्र निमित्तोपादानयोरुभयोरप्यपेक्षा तत्र तयोर्भवतु भेदः यथा वृश्चिकोऽवृश्चिकोत्पादने गोमयानपेक्षः, यथा च स्वर्गे साध्ये ज्योतिष्टोमो दर्शपूर्णमासनिरपेक्षः, एवं निमित्तमात्रेण कार्यं सिध्यतीति चेत् किं प्रधानकारणत्वाश्रयणेनेत्यत्राह "कार्य्यनिर्वृत्तिश्चे"ति, एवमेव हीत्यादिभाष्यं यदा पृथक्साधनत्वेन तर्कप्रतिपादकं तदानीमचेतनस्येत्यादिपदैर्हेतवोऽभिप्रेताः स्युः ईश्वरो न द्रव्यं प्रत्युपादानं चेतनत्वात् जीववत्, विमतम् उपादानं स्वकार्य्यनिमित्ताद् भिन्नम् उपादानत्वात्, मृत्पिण्डवत् विमतं कार्य्यम् अनेककारकसापेक्षं कार्य्यत्वात् पटवदिति प्रयोगः "एकमेवाद्वितीयं ब्रह्मवनं ब्रह्म स वृक्ष आसीदि"त्यादिश्रुतिबलान्निमित्तोपादानैक्यमभ्युगन्तव्यमित्यत्राह "एवं निमित्तोपादानयो"रिति, एवमिति पूर्वोक्तश्रुतिश्रुत्यर्थापत्त्यानुगुण्येन तर्कसहचरितश्रुतिश्रुत्यर्थापत्तीनां प्रबलत्वात्केवलश्रुतिमात्रं प्रतीयमानमपि स्वार्थं यूपादित्यैक्यमेव न प्रतिपादयितुं शक्नोतीत्यर्थः ।

सू० एकमेव ब्रह्म उपादानं निमित्तञ्च प्रतिपादयितुं न प्रभवन्ति वेदान्तवाक्यानि, अतो ब्रह्म निमित्तकारणमेव नोपादानम्, उपादानं तु तदधिष्ठितं प्रधानमेवेत्येवं प्राप्तेऽभिधीयते "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि"ति, प्रकृतिश्च=उपादानञ्च न निमित्तकारणमात्रं ब्रह्म उपादानकारणं च ब्रह्मैवेत्यर्थः, कुतः प्रतिज्ञादृष्टान्तानुपरोधात्, एवमेव हि प्रतिज्ञादृष्टान्तौ नोपरुध्येते, प्रतिज्ञा तावत "स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भव-

त्यमतम्मतममविज्ञातं विज्ञातमि"त्येकविज्ञानेन सर्वविज्ञानविषया, दृष्टान्तश्च यथा "सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् यथा सोम्यैकेन लोहमणिना यथा सौम्य एकेन नखनिकृन्तनेने"ति कारणविज्ञानात्कार्य्यविज्ञानविषयः, यदि निमित्तकारणमेव जगतो ब्रह्म तदा तद्विज्ञानान्न समस्तं जगद्विज्ञातं स्यात्, न हि कुलालादिविज्ञाने घटादि विज्ञायते, अतः प्रतिज्ञादृष्टान्तयोर्बाध एव ब्रह्मण एवोपादानत्वे उपादानभूतमृत्पिण्डलोहमणिनखनिकृन्तनविज्ञानेन घटमणिककटकमुकुटवासीपरश्वधादितत्कार्य्यविज्ञानवत् निखिलजगदेककारणभूते ब्रह्मणि विज्ञाते तत्कार्य्यं जगद्विज्ञातमेव स्यात् ।

टी० ॥ एकमेव ब्रह्मोपादानं निमित्तं चेति परिणामित्वापरिणामित्वयोश्चेतनत्वाचेतनत्वयोः प्रेर्य्यत्वप्रेरकत्वयोश्च एकस्मिन् व्याहतत्वाच्चायोग्यं निमित्तोपादानैक्यं न वेदान्ताः प्रतिपादयितुं शक्नुवन्तीत्यभिप्रायः नोपादानं-नोपादानमपीत्यर्थः, न हि निमित्तं वोपादानं चेति विशये उपादानत्वं निषिध्यते किन्तूभयात्मकत्वं हि प्रतिषेध्यम् । एवं प्राप्त इति स्वभावमूलप्रकृतिव्यावृत्त्यर्थं प्रकृति-शब्दं व्याचष्टे "उपादानं चे"ति, सूत्रस्थच-शब्दं विवृण्वन् वाक्यार्थं योजयति "न निमित्ते"ति, का प्रतिज्ञा को दृष्टान्तः तयोरनुपरोधः कथमित्यत्राह "एवमेव ही"ति, बहुदृष्टान्तोपादानं तात्पर्यज्ञापनार्थम् । अनुपरोधं विवृणोति "यदी"ति, उक्तमुपपादयति "न हीति, एवं विपर्ययेऽनुपपत्तिरुक्ता । अथोक्तार्थोपपत्तिमाह "ब्रह्मण एवे"ति, एवं सौत्रहेतुवाचिपदं व्याख्यातं, वैशेषिकमतेन बुद्धिशब्दान्तरादिभिः कारणात्कार्य्यस्य द्रव्यान्तरत्वेन प्रतिज्ञादृष्टान्तानुपपत्तिमाशङ्क्य तां परिहरन् सहेतुकं वाक्यार्थमाह —

सू० कारणमेवावस्थान्तरमापन्नं कार्य्यं न द्रव्यान्तरमिति कार्य्यकारणरूपेणावस्थितमृत्तद्विकारादिनिदर्शनेन प्रतिज्ञासमर्थनात् ब्रह्मैव जगदुपादानं चेति निश्चीयते । यत्तु निमित्तोपादानयोर्भेदः श्रुत्यैव प्रतीयत इति तदसत् निमित्तोपादानयोरैक्यप्रतीतेः "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवती"त्यादिश्यते प्रशिष्यते ऽनेनेत्यादेशः "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इ"त्यादिश्रुतेः साधकतमत्वेन कर्त्ता विवक्षितः तमादेष्टारमप्राक्ष्यः

टी० ॥ "कारणमेवे"ति, एवं वाचारम्भणमित्यादिवाक्यस्यार्थ उक्तः, तत्र हि कार्य्यकारणैक्यं प्रतिपाद्यते । नन्वव्यक्त–शब्दवाच्यावस्थायामेव ब्रह्मण उपादानत्वे सर्वोपादानत्वाभावात्प्रतिज्ञाविरोधः, घटाद्यवस्थास्वपि ब्रह्मण उपादानत्वे मृद उपादानत्वाभावात् दृष्टान्तविरोध इति तत्र न प्रथमं शिरोऽनभ्युपगमहतत्वात्, द्वितीये मृदाद्यवस्थद्रव्यशरीरकस्यैव ब्रह्मण उपादानत्वाद्विरोधः, विशेषणभूतमृद्द्रव्यमात्रस्य कार्य्यकारणभावो लोकप्रसिद्धत्वाद् दृष्टान्तीकृतस्तत्तदवस्थद्रव्यशरीरकस्यैव ब्रह्मणः कारणभावस्तु लोकप्रसिद्धत्वाभावाद्दार्ष्टान्तिक इति प्रतिज्ञादृष्टान्तानुपरोधः ब्रह्मण उपादानत्वे निमित्तान्तरं स्यादिति शङ्कां परिहरिष्यन् परोक्तां श्रुत्यैव निमित्तोपादानभेदसिद्धिमनुवदति "यत्त्वि"ति, तत्–निमित्तोपादानभेदप्रतिपादनमसदित्यर्थः, निमित्तोपादानैक्ये श्रुतिमाह "उत तमादेशमि"ति, प्रत्ययार्थः कर्म प्रकृत्यर्थः, उपदेशः उपदेश्यमित्यर्थः इत्यादेश–शब्दः परैर्व्याख्यातः, तद्व्यावृत्त्यर्थं व्याचष्टे "आदिश्यत इत्यादिना, प्रशिष्यत इति प्रकृत्यर्थव्याख्यानम् अनेनेति प्रत्ययार्थं व्याख्यानम् "अकर्त्तरि च कारके संज्ञायामि"ति घञः कर्तृव्यतिरिक्तार्थविषयत्वात् आदिशतीत्यादेश इत्यनुक्तिः

अत आदिश्यते प्रशिष्यतेऽनेनेत्येवोक्तं प्रशासितृत्वे ब्रह्मणः सिद्धे एवं वर्णनीयमित्यत्राह "एतस्य वा इ" ति, अकर्त्रर्थप्रत्ययान्तस्य कथं शासितृवाचित्वमित्यत्राह "साधकतमत्वेने" ति, अव्यवहितसाधनत्वं साधकतमत्वं तथात्वेन कर्त्ता विवक्षितः, "विवक्षातः कारकाणि भवन्ती" ति न्यायादिति भावः। परेषाम्प्रत्ययार्थस्वारस्यम् अत्र तु प्रकृत्यर्थस्वारस्यम् अन्यतरास्वारस्यमुभयत्राविशिष्टमिति चेन्न प्रकृत्यर्थस्वारस्यमर्थौचित्यं चेति हेतुद्वयसिद्धेः प्रशासितृत्वे कथिते हि ब्रह्मणोऽसाधारणधर्म उक्तः स्यात् उपदेश्यत्वं हि साधारणमुपदेशश्चोपदेश्यवस्त्वसाधारणाकारेण प्रवक्तुं युज्यते, न हि गवये बुभुत्सिते चतुष्पाद् गवय इत्युपदेशो युक्तः तस्मात्प्रकृत्यर्थस्वारस्यमर्थौचित्यं चाभ्यधिकमिति वैषम्यम्, एवं प्रशासितुर्विज्ञानेन सर्वविज्ञानोक्त्या निमित्तोपादानैक्यं सिद्धमित्याह—

सू० "येनाश्रुतं श्रुतं भवती" ति येनादेष्टाऽऽधिष्ठाता श्रुतेनाऽश्रुतमपि श्रुतं भवतीति निमित्तोपादानयोरैक्यं प्रतीयते, "सदेव सोम्येदमग्र आसीदेकमेवे" ति प्राक् सृष्टेरेकत्वावधारणाद् अद्वितीयपदेनाधिष्ठात्रन्तरनिषेधाच्च "नन्वेवं सति "विकारजननीं गौरनाद्यन्तवती" त्यादिभिः प्रकृतेरनाद्यन्तवद्विरहेण नित्यत्वं जगदुपादानत्वं च श्रूयमाणं कथमुपपद्यते तदुच्यते तच्चाप्यविभक्तनामरूपं कारणावस्थं ब्रह्मैव प्रकृति-शब्देनाऽभिधीयते ब्रह्मव्यतिरिक्तवस्त्वन्तराभावात्, तथाहि श्रुतयः "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद, यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं विजानीयादि" त्याद्याः "सर्वं खल्विदं ब्रह्म ऐतदात्म्यमिदं सर्वमि" ति कार्य्यावस्थं कारणावस्थं च सर्वं जगद्ब्रह्मात्मकमिति श्रवणाच्च

टी० ॥ "येने"ति, । कारणवाक्येऽपि निमित्तोपादानैक्यं दर्शयन्ति "सदेवे"ति, प्राक्सृष्टेरेकत्वावधारणन्तु निमित्तोपादानभेदे न घटते, अतः एकत्वावधारणं च हेतुः,अधिष्ठात्रन्तरनिवारणं च हेतुरित्यर्थः "नन्वेवमि"ति, एवं सति–ब्रह्मण एव जगदुपादानत्वे सतीत्यर्थः, प्रकृतेर्जगदुपादानत्वश्रवणेऽपि ब्रह्मणो जगदुपादानत्वं युक्तं प्रकृतेरपि ब्रह्मोपादानकत्वादित्यत्राह "आद्यन्तविरहेण नित्यत्वमि"ति, प्रकृतेर्ब्रह्मोपादानकत्वमयुक्तं तस्यास्तु नित्यत्वश्रवणादतः सैवोपादानमिति -ब्रह्मनिमित्तमेवेत्यभिप्रायः, तदुच्यत इति प्रकृति—शब्देन प्रकृतिवाचकशब्देनेत्यर्थः, ब्रह्मव्यतिरिक्तवस्त्वन्तराभावाद्युतसिद्धवस्त्वन्तराभावादित्यर्थः केन कं पश्येत्केन अब्रह्मात्मकस्वनिष्ठदर्शनसाधनेन कं स्वनिष्ठमर्थं कश्चेतनः पश्येत्स्वनिष्ठार्थदर्शनसाधनं स्वनिष्ठं दृश्यं तद्द्रष्टा च नास्तीत्यर्थः न द्रष्टृदृश्यनिषेध इह प्रतिपाद्यः, यत्र त्वस्य सर्वमात्मैवाभूदिति स्ववाक्यैकदेशेन "सर्वं ह पश्यः पश्यती"त्यादिवाक्यान्तरेण च ब्रह्मात्मकत्वेन सर्वानुभवस्य विहितत्वात् स्वनिष्ठवस्त्वन्तराभावे श्रुतिरुक्ता । अथ सर्वस्य तदात्मकत्वे श्रुतिमाह "सर्वं खल्वि"ति, एवं व्यतिरेकोऽन्वयश्चोक्तः ब्रह्मव्यतिरिक्तवस्त्वन्तराभावेन प्रकृति—शब्दवाच्यं ब्रह्मैव चेद्विकारापुरुषार्थरूपदोषाः ब्रह्मण एव स्युरित्यत्राह—

भू० एतदुक्तम्भवति "यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरं यं पृथिवी न वेदे"त्यारभ्य "योऽव्यक्तमन्तरे संचरन् यस्या[१]क्षरं शरीरं यमव्यक्तं न वेद योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद यः पृथिव्यान्तिष्ठन् यः पृथिव्यन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयतीत्यारभ्य "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं

(१) यस्याव्यक्तं शरीरमिति पा० ।

य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृत" इति च सर्वचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतस्परं ब्रह्म कदाचिद्विभक्तनामरूपं कदाचिच्चाविभक्तनामरूपं यदा-विभक्तनामरूपं तदेव बहुत्वेन कार्य्यत्वेन चोच्यते यदाऽ-विभक्तनामरूपं तदैकमद्वितीयं कारणमिति च, एवं सर्वदा चिदचिद्वस्तुशरीरस्य परस्य ब्रह्मणो विभक्तनामरूपा या कारणावस्था सा गौरनाद्यन्तवती विकारजननीमज्ञाम-जामेकामि" त्यादिभिरभिधीयते । ननु च "महानव्यक्ते लीयते अव्यक्तमक्षरे लीयत" इति प्रलयश्रुतेः अव्यक्तस्यो-त्पत्तिप्रलयौ प्रतीयेते तथा च महाभारते "तस्मादव्यक्त-मुत्पन्नं त्रिगुणं द्विजसत्तम। अव्यक्तं पुरुषे ब्रह्मन्नि[1]ष्कले संप्रलीयत" इति नैष दोषः, अचिद्वस्तुशरीरस्य ब्रह्मणोऽ-व्यक्तशब्दवाच्यायाः त्रिगुणावस्थायाः कार्य्यत्वात् ।

टी० ॥ "एतदुक्तमि" ति, प्रकृतिपुरुषकालविशिष्टमेव कारणं चेत् कारणावस्था तस्यां चैकत्वं कार्य्यावस्था, तस्यां च बहुत्वं ब्रह्मणः कार-णत्वं चिदचितोः कार्य्यत्वं च घटते कथमित्याशङ्क्याह "कदाचिद्विभक्ते" ति, कदाचित्सिसृक्षोत्तरकालं कदाचित्संजिहीर्षोत्तरकालम् एकमद्वितीयमि" ति निर्देशो निमित्तोपादानैक्यविषयश्रुतिस्मारणार्थः । ततः किं गौरनाद्यन्तव-तीत्यादेः प्रस्तुतवाक्यस्येत्यत्राह "एवं सर्वदे" ति, या कारणावस्था सा-ऽभिधीयत इति, नावस्थानित्यत्वविवक्षयोच्यते किं तु कारणावस्थोप-लक्षितद्रव्यनित्यत्वमभिधीयत इत्यर्थः, अव्यक्त–शब्दवाच्याया अवस्थाया परमकारणावस्थयैक्यं मन्वानः पार्श्वस्थश्चोदयति "ननु चे" ति, अविभ-क्तनामरूपप्रधानविशिष्टब्रह्मणः कारणत्वमनुपपन्नम् अविभक्तनामरूपस्य

१ निष्कये इति पा० ।

सूक्ष्मावस्थस्याव्यक्त–शब्दवाच्यस्याप्युत्पत्तिप्रलयश्रवणादित्यर्थः नैव इति अचिद्वस्तुनोऽव्यक्तावस्थाया अपि सूक्ष्मावस्थासम्भवात्तदवस्थाचिद्विशिष्टं ब्रह्माव्यक्तकारणमित्यर्थः । तत्र प्रमाणमाह–

सू० "यदा तमस्तन्न दिवा न रात्रि"रिति कृत्स्नप्रलयदशायामपि ब्रह्मात्मकस्यातिसूक्ष्मस्याचिद्वस्तुनः स्थित्यभिधानाज्जगत्कारणस्य परस्य ब्रह्मणः प्रकारभूतमतिसूक्ष्मं चाचिद्वस्तु चिदचिद्वस्तु नित्यमेवेति तत्प्रकारं ब्रह्मैव गौरनाद्यन्तवतीत्यादिभिरभिधीयते अत एव चा"क्षरं तमसि लीयते तमः परे देव एकी भवतीति' तमस एकीभावमात्रमेव श्रूयते न तु लयः एकीभाव इति तमसोऽभिधानातिसूक्ष्माचिद्वस्तुप्रकारस्य ब्रह्मणो विभक्तनामरूपतयाऽवस्थानमभिधीयते "तम आसीत्तमसा गूढमग्रे प्रकेतं तमसस्तन्महिना जायतैकमित्याद्यप्येतदेव वदति, तथाच मानवं वचनम्

टी० ॥ "यदा तम" इति, अत एव चेति अत एव तदानीमपि तमश्शब्दवाच्यस्य ब्रह्मप्रकारस्याचित्तत्त्वस्य सद्भावादेवेत्यर्थः, शब्दवैजात्यमर्थवैजात्यनिबन्धनम्, अर्थवैजात्यञ्च सकलश्रुत्यनुसारेण भवतीति भावः अर्थवैजात्यमेव विवृणोति "एकीभाव" इति, पृथिव्यप्सु प्रलीयत इत्यादिषु लय–शब्देन पूर्वपूर्वावस्थस्य द्रव्यस्य पूर्वपूर्वावस्थाप्रहाणेन उत्तरोत्तरावस्थत्वमभिहितं, पृथिव्येव ह्यम्ववस्था ऽभूत् पृथिवीत्वं विहाय पृथिव्यम्भोभिरेकद्रव्यं यथा ऽभूत् एवं तमश्शब्दवाच्यमपि वस्तु तमस्त्वावस्थाप्रहाणेन परमात्मद्रव्यं भवतीति चेत् लय–शब्दः प्रयोक्तव्यः न तथा श्रूयते अतः परमात्मनि तमोऽवस्थितमित्यर्थः, तत्र पृथिवीत्वप्रहाणेन यद्वस्तु सलिलमभूत्तत्सलिलत्वाप्रहाणेन पूर्वमेव स्थितेनाम्भसैकीभवति, यथा च त्यक्तजलत्वावस्थसलिलद्रव्यं यत्तेजोऽभूत् तत्तेजस्त्वाप्रहाणेन प्राग-

वस्थिततेजसैकीभवति, एवं विभक्तं तमः तमस्त्वावस्थामजहदेव कार्यानुपयुक्तस्वजातीयतमसैकीभवति, तत्र परमात्मनः स्वरूपेण तमस्त्वायोगाद्यस्य मृत्युः शरीरमिति स्थानप्रमाणेन मृत्युसंज्ञतयाऽवगतस्य तमसः परशरीरत्वश्रवणाच्च कार्यानुपयुक्ततमश्शरीरकपरमात्मनैकीभवति, एकीभावश्च तमस्त्वे स्थित एव ततोऽप्यतिसूक्ष्मतापत्तिः, न हि पूर्वं खडितं तमः पश्चादेकीभवति किन्तु अवस्थावैषम्येण, अवस्थावैषम्यं हि विभागः, अतोऽनतिप्रकृष्टसूक्ष्मत्वं विभागः, अविभागश्च निरतिशयसूक्ष्मतापत्तिः वस्तुस्वरूपैक्याभावेऽपि तदन्तर्भावमात्रेणैकशब्दप्रयोगो दृष्टः, यथा मथनात्पूर्वमनुद्भूताग्नौ दारुण्येकः शब्दः, यथा वाहितमात्रगर्भायां योषायाम् एकोऽयमिति प्रयोगः, तत्र हि चेतनद्वयमस्ति तथाऽऽऽप्यन्यस्यान्यतरान्तर्भावादेकशब्दप्रयोगविषयत्वं यथावाऽनेकक्रिमिकीटादिजन्तुसंवृतवपुषि पुरुषे एकशब्दप्रयोगः तथेत्यर्थः ॥

भू० "आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वत इ"ति "अस्मान्मायी सृजते विश्वमेतदि-त्याद्यनन्तरमेवोपपादयिष्यते ब्रह्मणोऽपरिणामित्वं श्रुतयश्च यत्त्वेकस्य निमित्तत्वमुपादानत्वञ्च न सम्भवति एककारकनिष्पाद्यत्वं च कार्य्यस्य लोके तथा नियमदर्शनाच्च अतोऽग्निना सिञ्चेदितिवद्वेदान्तवाक्यान्येकस्मादेवोत्पत्तिं प्रतिपादयितुं न प्रभवन्तीति । अत्रोच्यते सकलेतरविलक्षणस्य परस्य ब्रह्मणस्सर्वशक्तेस्सर्वज्ञस्यैकस्यैव सर्वमुपपद्यते ।

'आसीदिदमि'ति, लय-शब्दार्थोऽवस्थान्तरापत्तिरेव न तु द्रव्यविनाश इति इममर्थं विशदयति "तमोभूतमि"ति, तमोऽवस्थमित्यर्थः, "अग्न्यवस्थे च सलिले वाय्ववस्थिते च तेजसी"ति वचनात् तस्योपलभ्यमुपलब्ध्याभावात्तच्चास्तीत्यत्राह "अप्रज्ञातमि"ति, प्रकृष्टं स्पष्टं ज्ञानमप-

रोक्षज्ञानं न तद्विषय इत्यर्थः । कुत इत्यत्राह "अलक्षणमि"ति, रूपादिराहित्यादित्यर्थः, "कारणगुणप्रक्रमेण कार्ये गुणारम्भ" इति न्यायात्, रूपादिमत्कारणमपि रूपादिमत्स्यादित्यत्राह "अप्रतर्क्यम्" अतर्कगोचरः, एवं विभक्तावस्थं तम उक्तम्, अविभक्तं तम आह "अविज्ञेयं" विविच्य विभज्य ज्ञातुमशक्यमित्यर्थः, प्रसुप्तमिव सर्वतः यथा सुषुप्तौ परमात्मनि लीनस्य चेतनस्य लयो न परमात्मत्वापत्तिः, अपि तु नामरूपप्रहाणेन सत्तामात्रमेव तथा महाप्रलयेऽपि चिदचितोः पृथक् नामरूपप्रहाणमेव न सत्ताहानिरित्यर्थः । विशेषमाह "सर्वत"इति, सुषुप्तावेकदेशलयः अत्र तु सर्वलय इत्यर्थः । यद्वा अविज्ञेयमित्यन्तेनाचिदंशलयः उक्तः प्रसुप्तमिवेति चिदंशलयः, तत्रापि न सत्ताहानिः यथा सुषुप्तावित्यर्थः, एवं ब्रह्मण एव सर्वविधकारणत्वं प्रामाणिकमित्युक्तं तर्हि पूर्वोक्तश्रुतिश्रुत्यार्थापत्तिनिर्वाहः कथ? मित्यत्राह "अस्मान्मायी"ति, अपरिणामित्वश्रुतयश्च उपपादयिष्यन्त इत्यन्वयः । श्रुत्यर्थापत्तिः परिहरिष्यत इत्यर्थः । श्रुत्यनुग्राहकतया पराभिमततर्कमनुभाषते "यत्त्वेकस्ये"ति, पराभिमततर्काणां सोपाधिकत्वं वक्तुम् उपाधीनामज्ञत्वादीनां पक्षे ब्रह्मणि अविद्यमानतां दर्शयति "सकलेतरे"ति, परेण हि तर्कानुगृहीतश्रुतिप्राबल्यमुक्तं तत्र शरीरशरीरिभावश्रुतिभिरेव उपादानत्वनिर्विकारत्वादिश्रुतीनामविरोधस्य निरूप्यमाणत्वात् द्वारद्वारिभावेन सर्वश्रुत्यैकार्थ्ये सम्भवत्यपि विरोधारोपणेन निमित्तोपादानैकत्वपरानेकश्रुतिवाक्यबाधकल्पनस्यायुक्तत्वात्सर्ववाक्यैकार्थ्यमभ्युपगन्तव्यं, तथा सति तद्विरुद्धस्तर्कः केवलतर्क इति तस्य दुर्बलत्वाद्दृष्टान्तः स्थिरतर इत्यभिप्रयन् सोपाधिकत्वमाह—

सू० मृदादेरचेतनस्य ज्ञानाभावेनाधिष्ठातृत्वायोगादधिष्ठातुः कुलालादेर्विचित्रपरिणामशक्तिविरहादसत्यसंकल्पतया च तथा दर्शननियमः, अतो ब्रह्मैव जगतो निमित्तमुपादानं च ॥

## सू॰ अभिध्योपदेशाच्च ॥ २४ ॥

इतश्चोभयं ब्रह्मैव "सोऽकामयत बहु स्यां प्रजायेये"ति "तदैक्षत बहु स्यां प्रजायेये"ति स्रष्टुर्ब्रह्मणस्स्वस्यैव बहुभवनसंकल्पोपदेशाद्विचित्रचिदचिद्रूपेणाहमेव बहु स्यां तथा प्रजायेयेति संकल्पपूर्विका सृष्टिरुपदिश्यते ॥

## सू॰ साक्षाच्चोभयाम्नानात् ॥ २५ ॥

न केवलं प्रतिज्ञादृष्टान्ताभिध्योपदेशादिभिरयमर्थो निश्चीयते, ब्रह्मण एव निमित्तत्वमुपादानत्वञ्च साक्षादाम्नायते किंस्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुर्मनीषिणो मनसा पृच्छत ।

टी॰ "मृदादेरि"ति, उपादानस्य मृदादेरनिमित्तत्वम् अज्ञत्वात्, निमित्तस्य कुलालादेरनुपादानत्वं स्वशरीरेण तथा परिणामशक्तिरहितत्वात्तस्यानेककारकसापेक्षत्वं चासत्यसङ्कल्पत्वादिति परोक्तर्काः सोपाधिकाः, अतो मृत्पिण्डकुलालादिविपरीतस्वभावस्य ब्रह्मणः सर्वमुपपन्नमित्यभिप्रायः । सू॰ अभिध्योपदेशाच्च, इतश्चोभयं ब्रह्मेति पूर्वसूत्रप्रतिज्ञावाक्येनास्य हेतोरन्वय इत्यर्थः, सङ्कल्पोपदेशादित्यन्तेन सूत्राक्षरार्थ उक्तः, बहुभवनं रामकृष्णादिवच्च सम्भवतीति तद्व्यावृत्त्यर्थमाह "विचित्रचिदचिद्रूपेणे"ति, "तत्तेजोऽसृजते"ति, तेजःप्रभृतिसृष्टेरनन्तरोक्तत्वाच्चिदचिद्रूपेण बहुत्वस्य विवक्षितत्वमित्यर्थः । स्वस्यैव च बहुभवनादुपादानत्वं बहुभवनस्य सङ्कल्पसामानाधिकरण्यान्निमित्तत्वमिति भावः । सू॰ साक्षाच्चोभयाम्नानात् आदि–शब्देन वक्ष्यमाणा आत्मकृतिप्रभृतयो विवक्षिताः किंस्विद्वनं पूर्वं कुत्र स्थित इति भावः, क उ स वृक्ष आसीत्–किमुपादानमित्यर्थः यदध्यतिष्ठद्भुवनानि धारयन् भुवनानि धारयता ईश्वरेणाधिष्ठेयमुपकरणादिकं किमित्यर्थः, प्रतिवचनेऽपि ब्रह्मवनम् अधिकरणं ब्रह्म स वृक्ष उपादानं

निष्टतक्षुरिति बहुत्वमविवक्षितं "सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवञ्च पृथिवीञ्चे"ति द्यावापृथिव्यादीनां एककर्त्तृकत्वश्रवणेन कर्त्तृबहुत्वासम्भवात् । ननु ब्रह्म-शब्दः प्रकृतिवचनः भुवनानि धारयतेश्वरेणाधिष्ठितत्वश्रवणात् धारयन्निति पुँल्लिङ्गतया ब्रह्मशब्दसामाधिकरण्यायोगादधिष्ठाने हि ब्रह्म कर्मभूतमिति न ब्रह्म-शब्दमुख्यार्थपरिग्रहस्य स्वतः प्राप्तत्वादुपक्रमस्यानेकब्रह्मशब्दबाधायोगात् ॥

सू० द्युतद्यद्ध्यतिष्ठत् भुवनानि धारयन् ब्रह्मवनं ब्रह्म स वृक्षः आसीद्यतो द्यावापृथिवी निष्टतक्षुः, मनीषिणो मनसा विब्रवीमि वो ब्रह्माध्यतिष्ठद् भुवनानि धारय"न्निति अत्र हि स्रष्टुर्ब्रह्मणः किमुपादानं कानि चोपकरणानीति लोकदृष्ट्या पृष्टे सकलेतरविलक्षणस्य ब्रह्मणः सर्वशक्तियोगो न विरुध्यते इति ब्रह्मैवोपादानमुपकरणानि चेति परिहृतम्, अतश्चोभयं ब्रह्म ॥

## सू० आत्मकृतेः ॥ २६ ॥

"सोऽकामयत बहु स्यां प्रजायेये"ति सिसृक्षुत्वेन प्रकृतस्य ब्रह्मणस्तदात्मानं स्वयमकुरुतेति सृष्टेः कर्मत्वं कर्तृत्वञ्च प्रतीयत इत्यात्मन एव बहुत्वकरणात्तस्यैव निमित्तत्वमुपादानत्वञ्च प्रतीयते अविभक्तनामरूप एव आत्मा कर्त्ता स एव विभक्तनामरूपः कार्यमिति कर्तृत्वकर्मत्वयोर्न विरोधः स्वयमेवात्मानन्तथाऽकुरुतेति निमित्तमुपादानञ्च ।

टी० "एतदुक्तम्भवति ब्रह्माध्यतिष्ठद्भुवनानि धारयन्निति भुवनानि धारयन्नीश्वरो ब्रह्मवाच्यस्वात्मानमेवाध्यतिष्ठदधिष्ठेयमुपकरणादिकमपि ब्रह्मैवेत्यर्थ इति । अत्र प्रश्नप्रतिवचनरूपेण कथनस्य प्रयोजनं लोकदृष्ट्या

क्तं चोक्तं सर्वविलक्षणे ब्रह्मणि न जीवतीति ज्ञापनमित्याह "अत्र ही"ति, उभय-शब्दः सर्गप्रलयपरः परैर्व्याख्यातः तदयुक्तं निमित्तोपादानभेदेऽपि तयोरन्यतरस्य सर्गप्रलयकारणत्वाविरोधात्तदैक्यसाधकत्वाभावादाकाशादेव समुत्पद्यन्त इत्यवधारणस्य जगतो बहूपादानकत्वबहुकर्तृकत्वयोरन्यतरशङ्काव्यावर्त्तनसम्भवेन निमित्तोपादानभेदनिवारकत्वाभावाच्च। ननूभयाम्नानमिति विरुध्यते, अधिकरणस्य उपादानकारणस्य कर्तुश्चैकत्वप्रतीतेरिति, नैवम् अधिष्ठेयमधिष्ठातेति कोटिद्वयान्तर्भावात् कारकाणाम् उपादानाधिकरणोपकरणानि ह्यधिष्ठेयकोटिनिविष्टानि यदध्यतिष्ठत् ब्रह्माध्यतिष्ठद्भुवनानि धारयन्निति हि श्रूयते अत उभयाम्नानमिति युक्तम्, सू० आत्मकृतेः, आत्मानं प्रति स्वस्यैव कर्तृत्वमनुपपन्नं कार्य्यं हि साध्यं कर्त्ता हि सिद्ध इति एकस्य सिद्धासिद्धिविरोधादित्यत्राह "अविभक्ते"ति, आकारभेदात्सिद्धासिद्धयोरविरोध इत्यर्थः । आकार्य्यैक्यान्निमित्तोपादानैक्यमित्याह "स्वयमेवे"ति, उत्तरसूत्रशङ्कामाह—

भू० "सत्यं ज्ञानमनन्तं ब्रह्म आनन्दो ब्रह्मे"ति "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं स वा एष महानज आत्मा अजरोऽमर" इति, स्वभावतो निरस्तसमस्तचेतनाचेतनवर्त्तिदोषगन्धस्य निरतिशयज्ञानानन्दैकतानस्य परस्य ब्रह्मणो विचित्रानन्तापुरुषार्थास्पदविचित्रचिदचिदचिन्मिश्रप्रपञ्चरूपेणात्मनो बहुभवनसङ्कल्पपूर्वकं बहुभवनं कथमुपपद्यत इत्याशङ्क्याह—

## सू० परिणामात् ॥ २७ ॥

परिणामस्वाभाव्यान्नानोपदिश्यमानस्य परिणामस्य परस्मिन् ब्रह्मणि दोषावहत्वस्वभावः प्रत्युत निरङ्कुशैश्वर्यावहत्वमेवेत्यभिप्रायः ।

टी० "सत्यज्ञानमि"ति, पूर्वसूत्रविषयवाक्यस्यानन्दवल्लीस्थत्वात्तत्प्रकरणस्यपूर्वापरवाक्येषु निर्दोषत्वकल्याणगुणाकरत्वविरोधस्य झटिति-प्रतिपन्नत्वात् प्रथमं "सत्य ज्ञानमि"त्यादिवाक्यद्वयमुपात्तं, सत्य–शब्दो हि विकाररराहित्यपरः निर्दोषत्वादिस्फुटीकरणाय वाक्यान्तराण्युपादत्ते "अपहते"ति, पूर्वपक्ते हि निमित्तोपादानभेदश्रुतिर्निर्दोषश्रुत्यन्यथानुपपत्तिश्च हेतुतयोमन्यस्ते, राद्धान्ते तु प्रतिज्ञादृष्टान्तानुपरोधादभिध्योपदेशाच्चेति सिद्धान्तसाधकतया श्रुत्यर्थापत्तिद्वयं दर्शितम्, साक्षाच्चोभयाम्नानादित्यादि सूत्रद्वयेन योनिश्च हि गीयत इत्यनेन च सिद्धान्तसाधकश्रुतयो दर्शिताः। परिणामादिति सूत्रन्तु पूर्वपक्ष्युपन्यस्तश्रुतिश्रुत्यर्थापत्तिपरिहारपरमित्यर्थः शङ्कायन्ये निर्दोषत्वश्रुत्युपन्यासेन श्रुत्यर्थापत्तिः पूर्वोक्ता उनूदिता भवति, निमित्तोपादानभेदश्रुत्युपन्यासश्चाभिप्रेतः अवाप्तसमस्तकामस्य सृष्ट्यनुपपत्तिरूपा निमित्तभावविरोधिनी श्रुत्यर्थापत्तिश्चाभिप्रेता, उत्तरत्र तत्परिहारस्य च वक्ष्यमाणत्वाद् द्वितीयाध्याये बह्वधिकरणेषु समर्थयिष्यमाणं ब्रह्मात्मकत्वप्रकारम् उपजीव्य श्रुतिश्रुत्यर्थापत्तिपरिहारपरमिदं सूत्रं परिणामात् परिणामादित्युक्ते विरोधहेतुत्वमेवास्य प्रतीयते न तु विरोधपरिहारहेतुत्वम् इत्याशङ्क्याह "परिणामस्वाभाव्यादि"ति, स्वभाव एव हि विरोधहेतुरित्यत्राह "नात्रे"ति, परिणाम–शब्दः परिणामविशेषपरः, विवक्षितविशेषाभिप्रायेण सामान्यशब्दप्रयोगो गामानयेत्यादिषु दृष्टः, शब्दादेव प्रमितः, धर्मोक्तेरित्यादिषु विशेषाभिप्रायेण सामान्यनिर्देशः सौत्र एव दृश्यते इह प्रतिपन्नाच्छब्दादितिवदिह प्रतिपन्नात्परिणामादित्यर्थः । कथं तर्हि परिणामोपदेश ? इति शङ्कायान्तं विवृणोति–

श्रु० एवमेव हि परिणाम उपदिश्यते अशेषहेयप्रत्यनीककल्याणैकतानं स्वेतरसमस्तवस्तुविलक्षणं सर्वज्ञं सत्यसङ्कल्पमवाप्तसमस्तकाममनवधिकातिशयानन्दं स्वलीलोपकरणभूतसमस्तचिदचिद्वस्तुजातशरीरतया तदात्मभूतं परं ब्रह्म स्वशरीरभूते प्रपञ्चे तन्मात्राहङ्कारादिकारणपर-

स्परया तमः-शब्दवाच्यातिसूक्ष्माचिद्वस्त्वेकशेषे सति तमसि च स्वशरीरतया पृथक् विनिर्देशानर्हाऽतिसूक्ष्मद-शापत्त्या स्वस्मिन्नेकतामापन्ने सति तथाभूततमःशरीरं ब्रह्म पूर्ववद्विभक्तनामरूपचिदचिन्मिश्रप्रपञ्चशरीरं स्यामिति सङ्कल्प्य अप्ययक्रमेण जगच्छरीरतयाऽऽत्मानं परिणामयतीति ।

टी० "एवमेव ही''ति, यथा तत्त्वक्रमसृष्टिरनुक्ताऽप्यन्यतोग्राह्या, यथा च सृष्ट्याद्युपयुक्ता गुणा अनुक्ता अप्यन्यतो ग्राह्याः तथा परिणामस्य सद्वारकत्वमप्यनुक्तमन्यतो ग्राह्यमिति दर्शयन् प्रधानकारणत्ववादिनीनामपि श्रुतीनां परमात्मपर्यन्ततामाह "अशेषहेये''त्यादिना, अवाप्तसमस्तकामस्य सर्गाद्यनुपपत्तिं परिहरति "स्वलीले''ति, एकीभावपदं व्याचष्टे "स्वशरीरतयाऽपी''ति, ननु तमआदिशब्दैः तन्निर्दिश्यते तत्कथं निर्देशानर्हत्वम् ? उच्यते नात्र सर्वथा निर्देशानर्हत्वं विवक्षितम् अग्नि-शब्देन व्यवह्रियमाणत्वाद्बाह्याग्नेर्दारुण्यन्तर्भूतस्य पृथगग्निरित्यनिर्दिश्यमानस्याग्नेर्यादृशं सौक्ष्म्यविशेषरूपं वैषम्यं विद्यते अग्नित्वाप्रहाणमपि विद्यते, एवं तमस्त्वाप्रहाणेऽपि विभक्तात्तमसो ऽविभक्ततमसः सूक्ष्मत्वातिशयरूपं वैषम्यमस्तीत्यभिप्राय इति ईदृशतमःशरीरकत्वं तु न तदात्मानं स्वयमकुरुतेत्यादिप्रकरणे श्रूयत इत्यत्राह-

भा० सर्वेषु वेदान्तेषु परिणामोपदेशः, तथैव बृहदारण्यके कृत्स्नस्य जगतो ब्रह्मशरीरत्वं ब्रह्मणस्तदात्मकत्वं च श्रूयते "यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृत'' इत्यारभ्य "यस्यापश्शरीरं यस्याग्निः शरीरं यस्यान्तरिक्षं शरीरं यस्य वायुः शरीरं यस्य द्यौः शरीरं यस्यादित्यः शरीरं यस्य दिशः शरीरं यस्य

चन्द्रतारकं शरीरं यस्याकाशः शरीरं यस्य तमः शरीरं यस्य तेजः शरीरं यस्य सर्वाणि भूतानि शरीरं यस्य प्राणः शरीरं यस्य वाक् शरीरं यस्य चक्षुः शरीरं यस्य श्रोत्रं शरीरं यस्य मनः शरीरं यस्य त्वक् शरीरं यस्य विज्ञानं शरीरं यस्य रेतः शरीरमि"त्येवमन्तेन काण्वपाठे, माध्यन्दिने तु पाठे विज्ञानस्य स्थाने "यस्यात्मा शरीरमिति"विशेषः, लोकयज्ञवेदानां परमात्मशरीरत्वमधिकं, सुबालोपनिषदि च पृथिव्यादीनां तत्त्वानाम्परमात्मशरीरत्वमभिधाय वाजसनेयकेऽनुक्तानामपि तत्त्वानां शरीरत्वञ्च ब्रह्मण आत्मत्वञ्च श्रूयते "यस्य बुद्धिः शरीरं यस्याहङ्कारः शरीरं यस्य चित्तं शरीरं यस्याऽव्यक्तं शरीरं यस्याक्षरं शरीरं यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इत्यत्र—

टी० "सर्वेषु वेदान्तेषु"इति उक्तार्थे प्रमाणं दर्शयति "तथैवे"ति, अवान्तरतत्त्वानामुत्तरोत्तरं प्रति कारणत्वे श्रुतेऽपि तत्तच्छरीरकपरमात्मन एव कारणत्वमिति दर्शयितुं प्रकृतिपुरुषकालविशिष्टत्वमप्यत्रान्यत्र च क्वचिदनुक्तमपि सृष्टिवदन्यतो ग्राह्यमिति च ज्ञापयितुं यस्यापः शरीरमित्यादि सकलवाक्यजातोपादानं, काण्वपाठे अनुक्तानामपि ब्रह्मशरीरत्वज्ञापनार्थं विज्ञान-शब्दस्यात्म-शब्देन विवरणार्थं चाह "माध्यन्दिने त्वि"ति, अपहतपाप्म-शब्दे नाऽमृत-शब्दविवरणार्थं कारणावस्थायामपि ब्रह्मशरीरत्वज्ञापनार्थं देवताविशेषस्य कारणत्वज्ञापनार्थं चाह "सुबाले"ति, मृत्यु-शब्दस्य देवताविशेषे संसारे च प्रयुक्तत्वात्तयोश्चात्रान्वयानर्हत्वादाह—

सू० मृत्यु-शब्देन परमसूक्ष्ममचिद्वस्तुतमः-शब्दवाच्यमभि-

धीयते अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते इति तस्यामेवोपनिषदि क्रमप्रत्यभिज्ञानात्सर्वेषामात्मनां ज्ञानावरणानर्थमूलत्वेन तदेव हि तमो मृत्यु-शब्दव्यपदेश्यं सुबालोपनिषद्येवं ब्रह्मशरीरतया तदात्मकानान्तत्त्वानां ब्रह्मण्येव प्रलय आम्नायते "पृथिवी अप्सु प्रलीयते आपस्तेजसि लीयन्ते तेजो वायौ लीयते वायुराकाशे लीयते आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति लीयते महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते तमः परे देवे एकीभवती"ति अविभागापत्तिदशायामपि चिदचिद्वस्त्वतिसूक्ष्मं सकर्मसंस्कारन्तिष्ठतीत्युत्तरत्र च वक्ष्यते-"न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते चे"ति ।

टी० "अत्र मृत्यु-शब्देने"ति कथमचिद्वस्तुवाची मृत्यु-शब्दः तमः शब्दवदिति चेत्तमःशब्दो वा कथमचिद्वस्तुवाची तत्राह "सर्वेषामि"ति, ज्ञानावरणरूपत्वात्तमःशब्दवाच्यं तदेव ज्ञानावरणरूपानर्थमूलत्वात् मृत्यु-शब्दवाच्यमित्यर्थः, आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेष्वित्यत्र लय-शब्दाप्रयोगो लयस्थानत्वाभावात्तत्र साहित्यमात्रं विवक्षितं तन्मात्रेष्विति बहुवचने तात्पर्यम् । आदिनः पाशानीतवत् शब्दतन्मात्र इत्यर्थः, लय-शब्देन जीवब्रह्मणोः स्वरूपैक्यशङ्कानिवृत्त्यर्थमाह "अविभागापत्ती"ति, यद्वा न केवलं प्रलये चित्संसृष्टाचिद्वस्त्ववस्थानं श्रुत्या गम्यते श्रुत्यर्थापत्त्या चेत्याह "अविभागापत्ती",ति, विषमसृष्ट्यनुपपत्त्या चेतनबहुत्वस्थितिवत्तत्कर्मानुगुणदेहसृष्ट्यनुगुणा चिद्वस्तुस्थितिरपि स्वरूपपरिणामानुपपत्तिबलसिद्धेरित्यर्थः । यद्वा लयदशायां सूक्ष्मरूपेणाचिद्वस्त्ववस्थानन्दर्शितं सकर्मवासनजीवबहुत्वावस्थानं दर्शयति "अविभागा-

पत्ती''ति, आनन्दवल्लीवाक्यस्यास्य निर्विकारत्वादिपरवाक्यस्योपादानत्वपरवाक्यस्य चाविरोधनिर्वाहार्थं हि श्रुत्यर्थान्तराण्युदाहृतानि ततः किं प्रस्तुतस्य विरोधस्येति शङ्कायामविरोधं पश्चाद्दर्शयितुं प्रथमं विरुद्धार्थतया प्रतिपन्नानामेतत्प्रकरणस्थवाक्यानां विशिष्टपरिणामपरत्वमाह—

सू० एवं स्वस्माद्विभागव्यपदेशानर्हतया परमात्मन्येकीभूतात्यन्तसूक्ष्मचिदचिद्वस्तुशरीरादेकस्मादेवाद्वितीयान्निरतिशयानन्दात्सर्वज्ञात्सत्यसङ्कल्पाद्ब्रह्मणो नामरूपविभागार्हस्थूलचिदचिद्वस्तुशरीरतया बहुभवनसङ्कल्पपूर्वको जगदाकारेण परिणामः श्रूयते, "सत्यं ज्ञानमनन्तं ब्रह्म" "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तरात्माऽऽनन्दमयः" "एष ह्येवानन्दयाति" "सोऽकामयत बहु स्यां प्रजायेयेति" "स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किञ्च तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत् निरुक्तं चानिरुक्तञ्च निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवदिति, अत्र तपः—शब्देन प्राचीनजगदाकारपर्यालोचनरूपं ज्ञानमभिधीयते "यस्य ज्ञानमयं तपः" इत्यादिश्रुतेः प्राक्सृष्टं जगत्संस्थानमालोच्येदानीमपि तत्संस्थानं जगदसृजदित्यर्थः ।

टी० "एवं स्वस्मादि"ति, एकत्वावधारणादिना चिदचिच्छरीरकत्वमयुक्तमित्यत्राह "विभागव्यपदेशानर्हे"ति, एकस्मादेवाद्वितीयादिति, अतिसूक्ष्मचिदचिच्छरीरकत्वमेकत्वावधारणविवक्षितं श्रुत्यन्तरैकार्थ्याद्विषमसृष्ट्यन्यथाऽनुपपत्त्यादिभिश्चेत्यभिप्रायः । यद्वाऽऽनन्दवल्ल्या [illegible]

भक्तनामरूपवत्त्वं श्रुत्यन्तरस्थैनैकत्वावधारणादिना यथाऽवगम्यते एवं चिदचिच्छरीरकत्वमपि कारणावस्थायामिह विवक्षितमित्यभ्युपगन्तव्यमिति भावः। स्वरूपैक्यानुपपत्तिद्योतनाय प्राकरणिकान् कल्याणगुणानाह "निरतिशयानन्दादि"त्यादिपदैः, उक्तकल्याणगुणविषयवाक्यान्यादत्ते "सत्यं ज्ञानमि"ति,। विशिष्टस्य परिणामपरवाक्यमुपादत्ते "सोऽकामयते"ति, उदाहृतवाक्येषु कर्मसम्बन्धप्रतीतिव्युदासार्थं तपश्शब्दं व्याचष्टे "अत्र"ति, प्राक्सृष्टमिति औचित्याज्जगदालोचनमर्थ इत्यर्थः "तप आलोचने" इत्यस्माद्धातोस्तपःशब्दनिर्ष्पत्तिरित्यभिप्रायः। पूर्वं जगदालोचनं किमर्थं सिसृक्षितं जगदेव पर्यालोचनीयमित्यत्राह "तत्संस्थानमि"ति, यथापूर्वं स्रष्टव्यमित्यभिप्रायः। न केवलमौचित्यादयमर्थः लिङ्गादपीत्याह–

भा० तथैव हि ब्रह्म सर्वेषु कल्पेष्वेकरूपमेव जगत्सृजति "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयद् दिवञ्च पृथिवीं चान्तरिक्षमथो सुवः" "यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव तथाभावा युगादिषि"ति श्रुतिस्मृतिभ्यः, तदयमर्थः स्वयमपरिच्छिन्नज्ञानानन्दकस्वभावोऽत्यन्तसूक्ष्मतयाऽसत्कल्पस्वलीलोपकरण–चिदचिद्वस्तुशरीरतया तन्मयः परमात्मा विचित्रानन्तक्रीडनकोपादित्सया स्वशरीरभूतप्रकृतिपुरुषसमष्टिपरम्परया महाभूतपर्यन्तमात्मानं तत्तच्छरीरकं परिणमय्य तन्मयः पुनस्तत् त्वच्छब्दवाच्यविचित्रचिदचिन्मिश्रदेवादिस्थावरान्तजगद्रूपोऽभवत् "तदेवानुप्राविशत् तदनुप्रविश्येति कारणावस्थायामात्मतयाऽवस्थितः परमात्मैव कार्य्यरूपेण।

टी० "तथैव ही"ति, यथा पूर्वसृष्टिप्रतिपादनं हि तदालोचने लिङ्गं भवति। अथ पूर्वोदाहृतश्रुत्यन्तरवाक्यानुगृहीतस्यैतत्प्रकरणस्थवाक्य-

ज्ञातस्यार्थाविरोधित्वं वक्तुं प्रतिपन्नमर्थमाह "तदयमर्थ" इति, "सत्यं ज्ञानम् अन्योऽन्तर आत्माऽऽनन्दमय इत्यादेरर्थमाह "स्वयमपपरिच्छिन्ने"ति, "सोऽकामयते"त्यत्र स इति पदस्य वाक्यान्तरानुगृहीतस्यार्थमाह "अत्यन्तसूक्ष्मतये"ति, । अकामयतेत्यस्यार्थमाह "विचित्रे"ति, प्रकृतिपुरुषसमष्टिपरम्परया तत्तच्छरीरकमात्मानं महाभूतपर्य्यन्तं परिणमय्येत्यन्वयः समष्टिपरम्परया—महदादिक्रमेणेत्यर्थः तत्तच्छरीरकं पूर्वपूर्वतत्त्वशरीरकः परमात्मा ह्युत्तरोत्तरतत्त्वकारणं तत्तच्छरीरकं परिणमय्येत्यन्तेन समष्टिसृष्टिरुक्ता पुनरिति व्यष्टिसृष्टिः । नन्वनुप्रवेशस्य सृष्ट्यनन्तरभावित्वश्रवणात्कारणावस्थायां चिदचिच्छरीरकत्वं न सिध्येदिति शङ्कायामुदाहृतप्रकरणस्थवाक्येषु घटकस्य वाक्यविशेषस्यार्थमाह "तदेवे"ति, विक्रियमाणद्रव्यस्यापीति "तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत् अनुप्रविश्य नामरूपे व्याकरवाणीति वचोभ्यां सृष्ट्यनुप्रवेशयोः पौर्वापर्यनियमोऽपि न विवक्षितः अनुप्रवेशपूर्वकसृष्टिवचनात्सृष्टि पूर्वकानुप्रवेशवचनाच्च, तस्मात्समकालीनत्वमेव विवक्षितं वक्तुं व्यादाय स्वपितीतिवत्, तथा तस्य त्वष्टा विदधद्रूपमेतीति ह्युच्यत इत्यभिप्रायः । यद्वा सृष्टिपूर्वकानुप्रवेशस्थितिहेतुरित्यभिप्रायः, तदानीमिहोक्तमनुप्रवेश्य सामानाधिकरण्यहेतुत्वं श्रुत्यन्तरसिद्धमव्यक्ताक्षरतमःप्रभृत्यन्तरात्मत्वं चोपजीव्याह—

सू० विक्रियमाणद्रव्यस्याप्यात्मतयाऽवस्थाय तत्तदभवदित्युच्यते, एवं परमात्मा चिदचित्संघातरूपजगदाकारपरिणामिपरमात्मशरीरभूतचिदंशगताः सर्वे एवापुरुषार्थाः तथाभूताचिदंशगताश्च सर्वे विकाराः परमात्मनि कार्य्यत्वन्तदवस्थयोस्तयोर्नियन्तृत्वेनात्मत्वं, परमात्मा त्वनयोः स्वशरीरभूतयोर्नियन्तृतया आत्मभूतः तद्गतापुरुषार्थैर्विकारैश्च न स्पृश्यते । अपरिच्छिन्नज्ञानानन्दमयस्सर्वदैकरूप एव जगत्परिवर्त्तनलीलयाऽवतिष्ठते तदेतदाह "सत्यं चानृ-

तच्च सत्यमभवदि"ति विचित्रचिदचिद्रूपेण विक्रियमाणमपि ब्रह्म सत्यमेवाभवन्निरस्तनिखिलदोषगन्धमपरिच्छिन्नज्ञानानन्दैकरूपमेवाभवदित्यर्थः सर्वाणि चिदचिद्वस्तूनि सूक्ष्मदशापन्नानि स्थूलदशापन्नानि च परस्य ब्रह्मणो लीलोपकरणानि सृष्ट्यादयश्च लीलेति भगवद्द्वैपायनपराशरादिभिरुक्तम् "अव्यक्तादिविशेषान्तं परिणामर्द्धिसंयुतम्। क्रीडा हरेरिदं सर्वं क्षरमित्युपधार्य्यताम्॥ क्रीडतो बालकस्येव चेष्टान्तस्य निशामय। बालः क्रीडनकैरिवे"त्यादिभिः, वक्ष्यति च "लोकवत्तु लीलाकैवल्यमि"ति ।

टी० "विक्रियमाणद्रव्यस्यापी"ति, प्रकृतविरोधः कथं परिहृत इत्यत्राह "एवमि"ति, तर्हि कथं ब्रह्मणः कार्य्यत्वमित्यत्राह "परमात्मनी"ति, तत्संसर्गप्रयुक्तदोषः स्यादित्यत्राह "परमात्मा त्वि"ति, उक्तदोषासंस्पृष्टत्वं प्राकरणिकवाक्येन दर्शयति "तदेतदाहे"ति, सत्यञ्चेत्यादिवाक्यस्यार्थमाह "विचित्रे"ति, पूर्वं सत्य–शब्दोऽनृतशब्दसाहचर्य्यात्कार्य्यचेतनपरः, उत्तरस्तु विशेष्याकाङ्क्षायामधिक्रियमाणत्वात् ब्रह्मणस्तद्विषयवाक्योक्तव्यष्टिवस्यचिदचिच्छरीरकत्त्वानुवादेन सत्यत्वं विधत्त इत्यर्थः । एवमुपादानभावविरोधिनी श्रुत्यर्थापत्तिः परिहृता सद्वारकत्वेन परिणामस्य निर्विकारत्वश्रुत्यविरोधात् । अथावाप्तकामस्य व्यापारानुपपत्तिरूपानिमित्तभावविरोधिनीं श्रुत्यर्थापत्तिं वक्ष्यमाणाधिकरणार्थोपजीवनेन परिजिहीर्षन् अवाप्तसमस्तकामस्यापि लीलया सृष्टिसम्भवे प्रमाणमाह "सर्वाणी"ति, निमित्तमात्रत्वे परोक्तायाः "अस्मान्मायी" सृजत इति श्रुतेरर्थमाह–

श्रु० "अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्ध" इति च ब्रह्मणि जगद्रूपतया विक्रियमाणेऽपि

तत्प्रकारभूताचिदंशगताः सर्वे विकारास्तत्प्रकारभूतचेतनगताश्चापुरुषार्था इति विवेक्तुं प्रकृतिपुरुषयोर्ब्रह्मशरीरतभूतयोस्तदानीं तथानिर्देशानर्हातिसूक्ष्मदशापत्त्या ब्रह्मणैकीभूतयोरपि भेदेन व्यपदेशः "तदात्मानं स्वयमकुरुते" त्येवमादिभिरैकार्थ्यात्तथा च मानवं वचनम् "सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमपासृजदि" ति, अत एव ब्रह्मणो निर्दोषत्वनिर्विकारत्वश्रुतयश्चोपपन्नाः, अतो ब्रह्मैव जगतो निमित्तमुपादानञ्च ॥

## सू० ॥ योनिश्च हि गीयते ॥ २८ ॥

इतश्च जगतो निमित्तमुपादानञ्च ब्रह्म यस्माद्योनित्वेनाऽप्यभिधीयते "कर्त्तारमीशं पुरुषं ब्रह्म योनिमि" ति, "यद्भूतयोनिं परिपश्यन्ति धीरा" इति च ।

टी० "अस्मादि" ति, अस्मात्स्वशरीरभूतादित्यर्थः श्रुत्यन्तरैकार्थ्याद्स्मान्मायीति भेदव्यपदेशप्रयोजनं स्वभावासङ्करज्ञापनं निमित्तभूतस्यैव ब्रह्मण उपादानभावतन्निबन्धनजगत्सामानाधिकरण्यानुबन्धिबहूनुपपत्तिपरिहारपरानेकाधिकरणार्थजातस्य एतदधिकरणार्थोपपादकत्वेन स्मारणपरमिदं सूत्रम्, इदं सूत्रं ब्रह्माज्ञानपक्षे विरुद्धं, न हि विवर्तादिति सूत्रं भेदाऽभेदपक्षेऽपि भोग्यांशेन परिणाम इति वक्तव्यम्, अत्र तु विशेषणांशेन परिणामः उच्यते, अतोंऽशतः परिणामपरतया सङ्कोचास्वारस्यं तुल्यं श्रुत्यन्तरोपपत्त्याऽनुगुण्यमस्मन्मत इति वैषम्यम्, इदं सूत्रं पूर्वसूत्रेणैकीकृत्य सिद्धस्य कर्त्तुस्साध्यत्वमवस्थाभेदादुत्पन्नमित्येवंपरम् अन्यैर्व्याख्यातं तदयुक्तं पूर्वपक्ष्युक्तश्रुतिश्रुत्यर्थापत्तिपरिहारस्यापेक्षितस्याकथनेन अनपेक्षितविधानायोगात्, एकस्य कार्य्यत्वकारणत्वविरोधोऽवस्थाभेदादुपपन्न इति

त्पर्थसिद्धं, सू॰ योनिश्च हि गीयते, अस्य च सूत्रस्य निमित्तोपादानैक्यसाधकत्वमाह "निमित्तमुपादानञ्चे"ति, कर्त्तारमिति विषयवाक्ये हि श्रुतं "तपसा चीयते ब्रह्म यः सर्वज्ञ सर्वविद् इति च शास्त्रयोनित्वात् योनिष्ट इन्द्र निषदे अकारीत्यादिष्विव ब्रह्मयोनि–शब्दस्य कारणमात्रपरत्वव्यावृत्त्यर्थं तं व्याचष्टे–

**भू० योनि–शब्दश्चोपादानवचन इति "यथोर्णनाभिः सृजते गृह्णते चे"ति वाक्यशेषादवगम्यते–**

टी० "योनि–शब्दश्चे"ति, इयं सूत्रसङ्गतिः प्रतिज्ञादृष्टान्ताभ्यां निमित्तोपादानैकत्वम् उपपादितमाद्यसूत्रे तत्र उपरितनवाक्यस्थहेतुपरं द्वितीयं सूत्रम् । एवं श्रुत्यर्थापत्तिद्वयमुक्तम् । अथ श्रुतिप्रदर्शकं तृतीयं ब्रह्मवनमित्यादिवाक्यस्यास्फुटत्वात् स्फुटार्थवाक्योपस्थापकं चतुर्थम् । आत्मकृतिप्रतिपादकवाक्यस्य स्फुटार्थतया वाक्यान्तरनिरपेक्षार्थनिश्चयत्वाद्धेतोर्नैरपेक्ष्याभिप्रायश्च–शब्दाप्रयोगः, तत्प्रकरणस्थ पूर्वापरवाक्यविरोधः पञ्चमेन परिहृतः, "कर्त्तारमीशं पुरुषं ब्रह्मयोनिमि"ति, वाक्यं जगत्कारणोपासनफलपरं भूतयोनिमिति वाक्यं तूपादानत्वमात्रप्रतिपादकं तस्यैव निमित्तत्वं "यस्सर्वज्ञ इत्याद्युपरितनवाक्यपर्यालोचनया विलम्बेनावगम्यते, एवमन्यपरत्वविलम्बान्वितवाक्यद्वयविशिष्टविषयत्वात् "योनिश्च हि गीयत" इति सूत्रमुभयप्रतिपादकवाक्यविषयमपि "साक्षाच्चोभयाम्नानादि"ति, सूत्रानन्तरं न निवेशितम् । अनन्यपरस्पष्टार्थपरवाक्ये लब्धे तदेकार्थतया निश्चितवाक्यद्वयविषयत्वाद् योनिश्च हीत्यादि सूत्रञ्चरममभूदिति उपादानत्वं ब्रह्माज्ञानपक्षे न सङ्गच्छते लक्षणायोगात्, यद्ग्रहणेन विना यन्न गृह्यते तत्तस्योपादानमित्ययुक्तम् । अतीन्द्रियलिङ्गिनं प्रति लिङ्गस्योपादानत्वप्रसङ्गान्न हि पुण्यापुण्ययोः सुखदुःखे उपादाने, नाप्यनुवृत्तं व्यावृत्तस्योपादानं गुरुत्वं प्रति रूपस्योपादानत्वप्रसङ्गात्, रूपं हि तेजोऽबन्नेऽप्स्वनुवृत्तं गुरुत्वं तु तेजसोऽव्यावृत्तं, भ्रमाधिष्ठानत्वमुपादानत्वमिति चेत् शुक्तिरूप्यं प्रति देवदत्तस्योपादानत्वप्रसङ्गः, न हि भ्रान्तिज्ञानाश्रयः अध्य-

स्वाधिष्ठानत्वमध्यस्तं प्रत्युपादानत्वमिति चेदधिष्ठान-शब्दस्य कोऽर्थः यदधिकरणतयाऽध्यस्तं प्रतीयते तत्तस्याधिष्ठानमिति चेत्तर्हि रजतस्य शुक्तिरुपादानं न स्यात्तदधिकरणत्वेन रजतप्रतीत्यभावादिदं रजतमिति हि प्रतीतिः न त्वस्मिन् रजतमिति, अध्यस्तं यत्सामानाधिकरण्येन प्रतीयते तत्तस्योपादानमिति चेत्तर्हि पीतश्शङ्ख इत्यत्र पीतिम्नः शङ्ख उपादानं न स्यात्, न हि पीतिमा शङ्ख इति सामानाधिकरण्येन प्रतीतिरपि तु पीतिमयुक्तः शङ्ख इति हि प्रतीतिः, द्रव्यान्तरवाचिशब्दसमानाधिकरणः पीत-शब्दो हि पीतिमगुणान्विते वर्त्तते पीतशङ्खस्य शङ्खान्तरेण सामानाधिकरण्याद्युक्तं लक्षणमिति चेन्न पीतिममात्रस्यैव बाधदर्शनात् शङ्खस्याबाधितत्वात्तदुभयव्यतिरेकेण बाध्यशङ्खान्तरकल्पनायोगात् । किञ्च द्वौ चन्द्रावित्यत्र द्वितीयचन्द्रस्य प्रथमचन्द्र उपादानं न स्यान्न हि द्वौ घटावित्युक्ते घटयोस्सामानाधिकरण्यं, विशेष्यभेदात् द्वित्वमात्रमध्यस्यत इति चेत्ततोऽपि लक्षणाव्याप्तिः, द्वित्वस्य विशेषणतया प्रतीतेः, विशेषणविशेष्ययोरैक्याप्रतीतेश्च, न हि दण्डिनौ पुरुषावित्युक्ते दण्डतद्वतोरैक्यम् । किञ्च आत्मानं प्रति देहस्य उपादानत्वं प्रसजेदात्मनो देहेऽधिष्ठानेऽध्यस्तत्वात् आत्मनि देहाऽध्यास इति चेद् देहेऽप्यात्माऽध्यासो भवदभिमतः शास्त्रसिद्धश्च "अस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासस्तद्विपर्ययेण विषयिणस्तद्धर्माणाञ्च विषयेऽध्यासो मिथ्येति भवितुं युक्तमिति अन्योऽन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्ये"ति, च विषये युष्मदर्थे देहे विषयिणोऽस्मदर्थस्य अध्यासो ह्युक्तः "पञ्चभूतात्मके देहे देही मोहतमोवृतः । अहं ममैतदित्युच्चैः कुरुते कुमतिर्मतिमि"ति, "आकाशवाय्वग्निजलपृथिवीभ्यः पृथक्स्थिते । आत्मन्यात्ममयं भावं कः करोति कलेवरे" इति च अतोऽतिव्याप्तिः, न केवलं पराभिमतस्थले एवाव्याप्त्यतिव्याप्ती किन्तु श्रुतिस्मृतिलोकप्रसिद्धेषूदाहरणेष्वव्याप्तिश्च मृत्पिण्डलोहमणिनखनिकृन्तनतत्कार्यादिदृष्टान्तो वेदसिद्धः, कटकमुकुटादिदृष्टान्तश्च स्मृतिसिद्धः तेष्वव्याप्तिस्तत्कार्याणां मिथ्यात्वाभावात्, तन्मिथ्यात्वं विवक्षितमिति चेत्, यथेति प्रसिद्धवदुपन्यासो न घटते अप्र-

तवेदान्तस्य श्वेतकेतोः घटादिमिथ्यात्वासिद्धेः, तन्मिथ्यात्वं युक्तिभिरुपपादयिष्याम इति चेन्न कुयुक्तीनां प्रबलयुक्तिभिर्निरस्तत्वात्तच्च दर्शितं दर्शयिष्यामश्च । अत एव लोकसिद्धेष्वव्याप्तिः सिद्धा । अस्तु वा मिथ्यात्वं घटादीनां तथाऽपि तदधिष्ठानत्वं नोपादान–शब्दप्रवृत्तिनिमित्तं तद्विषयतया व्युत्पत्त्यभावात् प्रयोगाभावाच्च, यद्यद्वस्तुनि विद्यते न तत्सर्वं शब्दवाच्यं न ह्ययं ब्राह्मण इत्युक्ते तद्गतसुखदुःखादिकमपि ब्राह्मणशब्दवाच्यं, यदाकारविषयतया शब्दो व्युत्पन्नः स तस्य प्रवृत्तिनिमित्तं, न चोपादान–शब्दोऽध्यस्ताधिष्ठानविषयतया व्युत्पन्नः, न च तद्विषयतया प्रयुज्यते तस्मादव्याप्तिरिति । यश्चापि ईश्वर एव ब्रह्म तेन स्वत एव भिन्नाभिन्ना प्रकृतिरिति वदति तन्मतेऽपि जगदुपादानत्वं ब्रह्मणोऽनुपपन्नं चेतनांशस्यानादित्वादेव जीवत्वावस्था सर्गात्पूर्वं नास्तीति चेत् जीवस्यादिमत्त्वं तत्प्रयुक्तदोषाश्च स्युः, घटत्वावस्थायाः पूर्वमभावादेव हि घटस्यादिमत्त्वं, जीवत्वं प्रागप्यस्ति इति चेत् तदुपादानत्वानुपपत्तिः, देवमनुष्यादिनामरूपाभिमानित्वावस्थामपेक्ष्योपादानत्वमिति चेन्न कार्यकारणयोरनन्यत्वस्य दुरुपपादत्वादनन्यत्वं वदता हि कार्ये कारणासाधारणाकारस्य वा परमकारणाकारस्य वा ऽनुवृत्तिर्वक्तव्या यथा कुण्डले तत्कारणस्य स्वर्णत्वाकारेणाऽनुवृत्तिः, यथा च वृश्चिके तत्कारणस्य पृथिवीत्वाकारेणानुवृत्तिः, तत्र ब्रह्मणः कारणान्तराभावाद् द्वितीयः कल्पो नोपपद्यते, प्रथमे च तत्र केनाकारेण जीवब्रह्मणोरैक्यं न तावद्धेयप्रत्यनीकनित्याविर्भूतज्ञानानन्दादिरूपेण जीवे तदसम्भवात्, नापि जीवत्वरूपेण कारणे परब्रह्मणीश्वरे तदभावात्, यदि सत्त्वद्रव्यत्वचेतनत्वादिरूपेण तर्हि ततश्च इदानीं देवाद्यवस्थाः जीवाः कारणावस्थायां सन्तो द्रव्यभूताश्चेतना इत्युक्तं भवति, वैशेषिकादिमतेऽप्येतावत्संप्रतिपन्नं, ततश्च ब्रह्मकार्यत्वोपदेशवैयर्थ्यं न हि पूर्वं जीवा अचेतना अद्रव्यभूता इति कश्चिन्मन्यते, अतः ईश्वरासाधारणाकारानुवृत्त्यभावाद्ब्रह्मोपादानकत्वं न सिध्येन्न हि घटे द्रव्यात्वानुवृत्त्या तन्तूपादानकत्वं सिध्येत् तन्तुतत्कारणकार्पासतूलाद्यसा-

धारणाकारानुवृत्तेरनन्यत्वाभावात्, अनेनैव न्यायेन महदादिकं प्रति ब्रह्मोपादानत्वं च निरस्तम् । यादवप्रकाशीयमते तु प्रकृतिश्चेति मूलप्रकृतिर्ब्रह्मेति व्याख्यातं तदयुक्तं, तथा हि प्रतिज्ञादृष्टान्तौ हि जगदुपादानत्वसाधकौ तौ कथं ब्रह्मण एव मूलप्रकृतित्वसाधकौ "गौरनाद्यन्तवती"त्यादिवाक्यान्तरैर्महदादिप्रपञ्चस्य प्रकृतिकार्य्यत्वप्रतिपादनात्तदेकत्वाभावे ब्रह्मण उपादानत्वानुपपत्त्या प्रतिज्ञादृष्टान्तोपरोधप्रसङ्गादिति चेत्सौत्रहेतुपदस्याव्यवहितसाध्येनान्वये सम्भवति व्यवहितसाध्यान्वये क्लिष्टत्वमेव फलम् । ननु प्रकृतेर्ब्रह्माव्यतिरिक्तत्वमुपादानत्वोपयोगी, सत्यम्, अव्यवहितं प्रधानसाध्यं च वक्तव्यं ब्रह्माव्यतिरिक्तनिर्वाह्यमुपादानत्वं हि प्रधानसाधनसाध्यं, तदार्थमस्त्वित चेन्न अव्यवहितस्य प्रधानसाध्यस्य श्रौतत्वेन तदुपयोग्यर्थान्तरस्यार्थसिद्धत्वोपपत्तेः, तदुपयोगि ब्रह्मात्मकत्वं तु निर्दोषत्वश्रुत्यविरोधेनान्यत्र सम्यक् निरूपितमिहार्थसिद्धमिति प्रकृतिशब्दस्योपादानपरत्वं युक्तम् । एवं सति च-शब्दश्चार्थवान्निमित्तभूतमेवोपादानं चेति ह्यर्थः, मूलप्रकृतित्वे च-शब्दस्य न प्रयोजनं बहुभवनसमानकर्त्तृकाभिध्योपदेशश्च निमित्तभूतस्यैवोपादानभावं प्रथममवगमयति तृतीयसूत्रार्थः पूर्वमेव शिक्षितः । परिणामादित्यस्य व्याख्यानावसरे च यदुक्तं बहु स्यां प्रजायेयेति बहु स्यामिति प्रकृतिपुरुषेश्वरभावेन विभागं दर्शयति "प्रजायेये"ति, महदादिरूपेण विक्रियामिति, तत्सकलप्रमाणोपपत्तिविरुद्धं प्रकृतिपुरुषेश्वराणां नित्यत्वानादित्वश्रुतिविरोधादकृताभ्यागमादिप्रसङ्गाज्जीवस्याप्यन्तवत्त्वेन मोक्षशास्त्रानर्थक्यप्रसङ्गाच्च, शक्तिरूपेणावस्थानान्नित्यत्वादिकमिति चेद्यदि शक्ति-शब्दस्तदुत्पादनसामर्थ्यवाची तदा घटादितुल्यत्वं, यदि त्रिविधशक्तिमद् द्रव्यमवस्थितं तदा स्वशक्तिभेदेन प्रलयदशायामपि द्रव्यत्रयं विलक्षणं स्थितमिति प्रकृतिपुरुषेश्वरभावेन बहु स्यामिति सङ्कल्पोऽनुपपन्नः, । किंच सङ्कल्पमात्रमेवानुपपन्नम् ईश्वरांशस्य विभागो नाम ज्ञानादिगुणोद्बोधः न तु खण्डितत्वं प्रलये नियन्त्रंशस्याऽपि शक्तिमात्रावशिष्टतया तदानीं सार्वज्ञ्याद्युद्भवाभावात् । यदि सार्वज्ञ्यादिकमुद्भूतं तदानीमीश्वरः स्यामिति सङ्कल्पोऽनुपपन्नः, उद्भूतसार्वज्ञ्यत्वादिगु-

शक्तत्वमेव हि ईश्वरत्वं, चैतन्यशक्तियोगात् सङ्कल्पोपपत्तिरिति चेन्न घटरूपेण परिणामशक्तियोगेऽपि घटत्वानुदये सलिलाहरणादिकार्यानुपपत्तिवद् ज्ञानादिगुणानुद्भवेन तत्कार्य्यसङ्कल्पविशेषाऽनुपपत्तेः, अतः सङ्कल्पाद् ईश्वरत्वविभागः ईश्वरत्वविभागात्सङ्कल्प इत्यन्योऽन्याश्रयः । पूर्वं जगदवसाने इयन्तं काले स्वप्स्यामि ततः प्रबोद्धाऽहमिति सङ्कल्पबलात्प्रबुद्धः सङ्कल्पयति इति चेत्तर्हि ईश्वरांशस्य प्रबुद्धत्वमेव विभाग इति प्रबुद्धस्य प्रकृतिपुरुषेश्वररूपेण विभक्तः स्यामिति सङ्कल्पोऽनुपपन्नः, त्रिधाविभागविषयो बहु स्यामिति सङ्कल्पः पूर्वजगत्संहारसमय इति चेत् न "सदेवसोम्येदमग्र आसीदेकमेवेति श्रुतिविरोधान्न हि प्रलयात्पूर्वमेकत्वापत्तिः, अतः परोक्तार्थोऽनुपपन्नः "योनिश्च हि गीयत इत्यत्राऽपि ब्रह्मयोनिमि"ति, पदस्य ब्रह्मणः—अव्यक्तस्योपादानमिति व्याख्यानमप्यनुपपन्नं ब्रह्म—शब्दस्य मुख्यार्थे बाधकाभावात्समासेऽपि निषादस्थपतिन्यायेन षष्ठीसमासात्कर्मधारयस्य प्रबलत्वादलुप्तविभक्तित्वेन द्वितीयार्थत्वे सम्भवति लुप्तविभक्तिन्वाश्रयणेनाऽश्रुतविभक्त्यर्थलक्षणायोगादस्मिन् प्रकरणे येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तान्तत्त्वतो ब्रह्म विद्यामिति पुरुषशब्दासन्न—ब्रह्मशब्दस्य पुरुषविषयत्वदर्शनेन पुरुषं ब्रह्मयोनिमिति ब्रह्म—शब्दस्याऽपि पुरुषशब्दसमानविषयत्वोपपत्तेश्च । किंच स्वाभाविकभेदाभेदपक्षे ब्रह्मण उपादानत्वमपि दुर्घटं भोक्तृभोग्यनियन्तृणाम् अंशानामनादित्वात्तेषां न ब्रह्मोपादानकत्वमुपपन्नम् । ईश्वरातिरिक्तस्यांशिनः कस्यचिदप्रामाणिकत्वं च वक्ष्यते त्रयाणामप्यंशानां शक्तिरूपेणाऽनादित्वमप्यनुपपन्नं विकल्पासहत्वात् किं तदुत्पादनसामर्थ्यं शक्तिः ? उत त एवांशास्सूक्ष्मरूपाः ? प्रथमेऽनादित्वं न सिध्येत्, न हि घटकरकशरावोत्पादनसामर्थ्यं मृत्तिकायामस्तीति घटादीनामनादित्वं, द्वितीये च सूक्ष्मरूपास्त एव कारणमिति तेषामेव ब्रह्मलक्षणयोगित्वात्कारणातिरिक्तब्रह्मणो मानशून्यत्वात्तेषां मिथः प्रकारप्रकारिभावानभ्युपगमाच्च ब्रह्मबहुत्वं स्यात् । किं च किं भोग्यभोक्तृनियन्तारः प्रत्येकं ब्रह्म ? उतांशत्रयसमुदायो ब्रह्म ? उत तेष्वनुगतं तैर्भिन्नाभिन्नस्वरूपं सन्मात्रं ब्रह्म,? प्रथमे प्रकृतेरेव महदाद्युपादानत्वं स्यात्, न द्वितीयः समुदायरूपस्य ब्रह्मण उपादान-

त्वेन भोक्तरि नियन्तरि च महदाद्यवस्थान्वयप्रसङ्गात्, तृतीये जगदुपादानवस्तुवाचिनः शब्दस्य किं प्रवृत्तिनिमित्तं? किं सत्तासामान्यम्? उत मानार्हत्वव्यवहारार्हत्वरूप उपाधिः? उत द्रव्यत्वम्? उत अर्थान्तरं? तत्र सामान्यं भवद्भिरनभ्युपगतम्, अभ्युपगमेऽपि चतुर्ष्वपि शिरस्सु शास्त्रवैयर्थ्यं सामान्यस्य वैशेषिकादिभिरभ्युपगतत्वात्प्रामाणिकं व्यवहारार्हं द्रव्यं जगत्कारणमित्यस्यार्थस्य प्रधानपरमाणुकारणवादिनामविगीतत्वाच्च, न ह्यद्रव्यमव्यवहार्यं मानशून्यं जगदुपादानमिति तैरभिमतम्। अर्थान्तरं चेत्तच्चिद्रूपत्वं वा त्रिविधशक्त्युपेतत्वं वा? निरतिशयबृहत्त्वं वा यत्किञ्चिद्वा भवतु तत्किं वृक्षसमुदाये वनत्ववदंशत्रयसमुदाये वर्त्तते? उत समुदायेष्वेकैकस्मिन्? प्रथमे अंशत्रयसमुदायो ब्रह्म स्यादेकत्वञ्च समूहैक्यमेव भवेत् न तु समूहान्तर्गतद्रव्यैक्यं ततश्च यथा सहकारफलानां न वनगतकृत्स्नसमुदाय उपादानम् अपि तु सहकार एव एवं महदादीनां प्रकृतिरेवोपादानं स्यान्न तु समुदायः, द्वितीये च तत्प्रवृत्तिनिमित्तं किं गोत्वादिवत् साधारणं? मुत खण्डत्वादिवदसाधारणं,? प्रथमे त्रयाणामेकत्वं नाम एकजातीयत्वमेव भवेत्ततश्च प्रकृतिरेव महदाद्युपादानं, यथा खण्डगतरोम्णां खण्ड एवोपादानं न मुण्डः, यथा च द्रव्यत्वेनैकजातीयत्वेऽपि घटस्य मृत्पिण्ड एवोपादानं न कुलालादिद्रव्यमात्रं तद्वत् त्रयाणां मिथो भिन्नत्वेऽपि सन्मात्ररूपेणाभिन्नत्वात् सन्मात्रस्यैकस्यांशिनो ब्रह्मण उपादानत्वं युक्तमिति चेन्न खण्डमुण्डादीनां व्यक्तीनां मिथो भिन्नत्वेऽपि तासां द्रव्यत्वगोत्वाद्याकारेणाऽभिन्नत्वादंशिन एकस्य गोद्रव्यमात्रस्य शृङ्गलोमाद्युपादानत्ववचनतुल्यत्वात्, द्वितीये च कस्यैकस्यांशस्याधारणः, यदि प्रकृत्यंशस्य तदा प्रकृतिरेवोपादानमित्युक्तं स्यात् इतरांशयोरन्यतरासाधारणत्वे प्रकृतेरब्रह्मत्वान्महदादिकं ब्रह्मोपादानकं न स्यात्, यथा वृक्षत्वं स्कन्धप्रकाण्डशाखाद्यनेकांशानाम् अंशिभूतैकद्रव्यवृत्ति एवं सच्छब्दनिमित्तमपि त्रयाणामंशानामंशिभूतैकद्रव्यवर्त्तीति चेन्न तथा सति सन्मात्रस्य तदंशभूतेषु वस्तुषु पूर्णवृत्तित्वाऽनुपपत्तेः, न हि वृक्षः, शाखापत्रपुष्पादिषु प्रत्येकं पूर्णः तत्समुच्चयो हि पूर्णवृक्षः यदि बह्वंशेषु प्रत्येकं सत्त्वं पूर्णवृत्ति तदा जातिरेव

स्यात् मिथोविरुद्धाकारेषु बहुषु प्रत्येकं पूर्णाकारो हि जातिः यथा गोत्वं, ततश्च ब्रह्मैक्यं नाम जात्यैक्यं स्यादाकारत्वेन ब्रह्मणो जातित्वप्रसङ्गः, यदि वृक्षत्ववत्संहतेष्वंशेषु वर्तते तदा ब्रह्मैकत्वं नाम समूहैकत्वं स्यात् । नन्वेकजातीयानां समूहभावमुपगतानामपि पञ्चाणामेकवृक्षानन्यवत् त्रयाणामेकद्रव्यानन्यत्वमुपपद्यत इति चेत्तर्हि नीरन्ध्रसंबन्धविशेषेणैकत्वं स्यात् भेदकाकारवतां बहूनां निश्छिद्रसंश्लेषविशेषेण विनैकत्वानुपपत्तेः, तत्र वनस्य वृक्षस्य चैतावान् भेदः परस्परनिरन्तरसंश्लेषरहितवृक्षसमूहो वनं, निरन्तरसंसर्गविशेषयुक्तपदार्थसङ्घातो वृक्ष इति तत्तदवयवानां स्वावयवसजातीयवस्त्वसाधारणकार्योत्पादनानुगुणसंसर्गो विशेष—शब्देन विवक्षितः, तेन भिन्नानां वृक्षावयवानां मिथस्संसर्गव्यावृत्तिः, उक्तलक्षणसम्बन्धविशेष एव वृक्षस्यैकत्वप्रतीतिव्यवहारहेतुः तदभावात्तदुत्थबीजान्तरोत्पन्नवृक्षाणां वृक्षान्तराणां चान्योन्यैकत्वव्यवहाराभावः, तत्र केचित्पदार्था भेदकाकारप्रहाणेनैकत्वं भजन्ते यथा विलीनाः कटकमुकुटादयः पिण्डत्वं, केचिच्च भेदकाकाराप्रहाणेनैव एकत्वं भजन्ते, यथेष्टका इष्टकात्वाप्रहाणेन भित्तित्वं, तत्र भेदकाकारप्रहाणाप्रहाणे यथाप्रमाणमभ्युपगन्तव्ये तत्र भोक्तृभोग्यनियन्तृणाम् असङ्कीर्णस्वभावत्वस्य तत्तदसाधारणशक्तियोगस्य नित्यत्वाभ्युपगमात् स्वासाधारणाकाराप्रहाणेनैव ब्रह्मात्मनैकत्वं वर्णनीयं, तत्र भेदकाकारस्य यथा प्रमाणमङ्गीकार्यत्वे सति नियन्त्रंशस्याश्रयत्वमितरांशद्वयस्य तदाश्रितत्वं च भवति "एतस्य वा अक्षरस्य प्रशासने गार्गि सर्वमिदं विधृतं तिष्ठती"त्यादिश्रुतेः, तथा च सति ईश्वरं प्रति चिदचितोः शरीरत्वमर्थसिद्धं, चेतनेन धार्य्यं द्रव्यविशेषो हि शरीरं, वृक्षे तु प्रकाण्डशाखांशिनोऽचेतनत्वाच्छाखादीनां न तच्छरीरत्वम्, ईश्वरस्य तु चेतनत्वादंशान्तरस्य तद्धार्य्यत्वेन शरीरत्वं फलितम्, एतदुक्तं भवति सन्मात्रस्य ब्रह्मणो मृत्पिण्डवदवैकत्वे त्रयाणां नित्यत्वानादित्वश्रुतिविरोधः स्वतो भिन्नेषु अंशेषु प्रत्येकं पूर्णवृत्तिसत्त्वाकारेणैकत्वे जात्यैक्यं, सत्त्वं संहतेषु वर्त्तते चेत्समूहैक्यम्, अतो निमित्तोपादानभेद एव भवेद्धर्मैक्याभावात्संहतेषु वर्त्तते चेदनादिभेदाप्रहाणेन सङ्घातत्वादाश्रयाश्रयिभावादिलक्षणस्य

भेदस्य प्रामाणिकत्वाच्चिदचितोश्शरीरत्वमर्थसिद्धमिति चिदचिच्छरीरकं ब्रह्म सच्छब्दवाच्यमुपादानं स्यात्ततश्च अस्मदीयपक्षः परिगृहीतः स्यात्, आश्रयाश्रयिभावानभ्युपगमे जात्यैक्यं वा समूहैक्यं वा स्यात्ततश्च निमित्तोपादानैक्यासिद्धिरिति । किञ्च बहु स्यामिति सङ्कल्पश्च घटः स्यामिति कुलालसङ्कल्पकल्पः स्यात्, सङ्कल्पस्य सद्द्रव्यैकदेशगतत्वात्परिणामस्य तदेकदेशान्तरगतत्वाच्च सामानाधिकरण्येनैक्योपदेशाः सर्वेऽप्यमुख्याः स्युरिति प्रथमसूत्रे सम्यगुपपादितं, सन्मात्रं ब्रह्म किं स्वांशगतं नरकादिदुःखं स्वगतत्वेन जानाति न वा? न चेदज्ञत्वमेव, स्वगतत्वेन जानाति चेत् दुःखित्वं स्यात्, जीवांशस्य भिन्नत्वाददोष इति चेन्न, भेदे सत्यऽपि अभेदाभिमानस्यापरोक्षस्य विद्यमानतया दुःखित्वमेव स्यात्, पाणिपादादीनां पुरुषांशतया भेदे सत्यप्यभिन्नत्वप्रतिपत्त्या हि पन्नगदष्टपादस्य पुरुषस्य अङ्गान्तरेषु प्रदाहो भवति पाणौ सञ्जातव्रणस्य करणान्तरपाटवं च शिथिलीभवति हृदि निहितहरिचन्दनबिन्दोः सर्वाङ्गाऽऽप्यायनं भवति छिन्नायामङ्गुलौ चन्दनलिप्तायां ज्वलनज्वलितायां च सुखदुःखे पुरुषस्य न भवतः स्वगत्वेन ज्ञानाभावादतः स्वगतत्वेन ज्ञानवत्त्वे ब्रह्मणो दुःखित्वं स्यात्, ततश्च बहु स्यामिति दुःखाकरबहुभवनसङ्कल्पः सर्वज्ञस्य न स्यात्, किं च "तदरूपमनामय"मित्यादयोऽपुरुषार्थनिषेधश्रुतयो निर्विषयाः । किंच निर्विकारत्वश्रुतयश्च विफलाः । ननु नियन्त्रंशविषया निर्विकारत्वश्रुतयः, ब्रह्मविषया विकारित्वश्रुतय इति सविषयत्वं, नैतदुपपद्यते "यत्तच्छान्तममरमजरममृतमभयमेतद्ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्म यतो वा इमानि भूतानि जायन्ते तद्ब्रह्म सर्वं खल्विदं ब्रह्म तज्जलानि"ति ब्रह्मण एव विकारतदभावश्रवणा"न्नित्यो नित्यानां ज्ञाज्ञौ द्वौ स वा एष महानज आत्माऽजरोऽमरः स वा एष महानज आत्मा अन्नादो वसुदानः स त आत्माऽन्तर्याम्यमृतः स कारणं करणाधिपाधिपः यः सर्वज्ञः सर्ववित् तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते धातुः प्रसादान्महिमानमीशं सप्त प्राणाः प्रभवन्ति तस्मात् सहस्रशीर्षा पुरुषः तस्माद्विराडजायत विराजो अधिपुरुष" इति ईश्वरस्यैव विकारतदभावश्रवणाच्च, तथा स्मृति-

ष्वपि "तद् ब्रह्म परमं नित्यम् अजमक्षयमव्ययम् । एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥ कारणं कालगगने यथा सन्निधिमात्रतः । अविकारतया ब्रह्म तथा सृष्टेर्महीयते? इति, सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति ही"ति ब्रह्मण एव विकारित्वाविकारित्वस्मरणात्, सन्निधानाद्यथाकाशकालाद्याः कारणं तरोः तथैवापरिणामेन विश्वस्य भगवान्हरिः । कटकमुकुटकर्णिकादिभेदैः । कनकमनेकमपीष्यते यथैकं सुरपशुमनुजादिकल्पनाभिर्हरिरखिलाभिरुदीर्य्यते तथैक" इति, ईश्वरेऽपि विकारतदभावस्मरणाच्च, विकारवाक्येषु ईश्वरवाचिशब्दा ब्रह्मपराः, अविकारित्ववाक्येषु ब्रह्मवाचिशब्दा ईश्वरविषया इति चेन्न सार्वज्ञ्यादिगुणविशिष्टेश्वरवाचिनां द्रव्यमात्रवाचित्वस्यामुख्यत्वात्, पत्रमात्रे वृक्षशब्दवत्, ब्रह्मैकदेशे ब्रह्मवाचिशब्दानाममुख्यत्वाच्च ईश्वरातिरिक्तस्य कारणस्य अप्रामाणिकत्वस्य वक्ष्यमाणत्वाच्च, अतो निमित्तोपादानयोर्मृत्कुलालयोरिव ऐक्यानुपपत्तेरपुरुषार्थान्वयप्रसङ्गात् विकारविधिनिषेधविरोधानुपपत्तेश्च स्वाभाविकभेदाभेदपक्षे उपादानत्वमनुपपन्नम् । ननु कथं तर्हि भवत्पक्षे सविकारत्वं च ईश्वरस्योपपद्यत इति चेत् शरीरभूतप्रकृतिद्वारको विकारान्वयः, निर्विकारत्वं चाव्यवधानेन घटत इत्यविरोधः ननु तर्ह्युपादानत्वममुख्यं स्याद्द्वादिनामरूपाभिमानानुगुणज्ञानप्रसरस्य महदाद्यवस्थायाश्चेश्वरगतत्वाभावाद्, भाव्यवस्थाविशेषवतः प्रागवस्यायोगो ह्युपादानत्वम्, अवस्थाविशेष—शब्दः स्थूलावस्थापरः, तेनाप्रलीनजगतः प्रलयावस्थामपेत्य उपादानत्वव्युदासः, उच्यते चिदचिच्छरीरकं ब्रह्म महदादिकार्य्यं प्रति मुख्योपादानम् उपादानत्वलक्षणयोगित्वात् मुकुटं प्रति कनकवत् । ननु असिद्धो हेतुः महदाद्यवस्थानां ब्रह्मगतत्वाभावात्, न, ब्रह्मणः चिदचिच्छरीरकतया प्रकृतेर्ब्रह्मस्वरूपान्तर्गतत्वात्तत्यवस्थानां ब्रह्मावस्थात्वात्, न हि विशेष्यमात्रं कस्यचित्स्वरूपं विशिष्टस्य वस्तुनो विशिष्टमेव हि स्वरूपं, न हि घटस्य मृन्मात्रं स्वरूपं, किन्तु घटत्वविशिष्टम् । ननु यदि विशेषणमपि स्वरूपान्तर्भूतं तर्हि दण्डादयः संयोगादयश्च स्वरूपं स्युः, न, यावद्विशेष्यभाविनामपृथक्सिद्धप्रकारा-

णामेव स्वरूपान्तर्भावात् । किञ्च घटादिवस्तुन उदकाहरणादि तत्तद-साधारणकार्य्ययोग्यमेव स्वरूपं न मृन्मात्रं पिण्डेष्टकादीनामपि घटस्व-रूपत्वप्रसङ्गात्, घटस्योदकाहरणं प्रति योग्यता नाम निश्छिद्रघटत्वमेव यस्य वस्तुनो यत्कार्य्यं यदाकारान्वयव्यतिरेकानुविधायि स आकारस्तस्य वस्तु-नस्तत्कार्यं प्रति योग्यता यथाऽग्नेरुष्णत्वं स्फोटजनने, यथा च परशो-र्नैशित्यं छेदने, यथा च मृदो मृत्वं घटादिरूपपरिणामे श्लक्ष्णार्द्रभावश्च, प्रकृतिपुरुषकालाश्च जगद्रूपेण बहुभवने परमात्मनो योग्यता स्थानीया अयुतसिद्धप्रकाराः, अत एव हि क्वचिच्छक्ति–शब्देन जगदभिधीयते कार्य्योपयोग्यपृथक्सिद्धविशेषणं हि शक्तिः सा च योग्यता योग्यवस्तुनः स्वरूपान्तर्गता अतो महदादिव्यवस्था चिदचिद्विशिष्टब्रह्मस्वरूपगता इति न हेत्वसिद्धिः, यतो विशिष्टं ब्रह्मस्वरूपम्, अत एव हि "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिता" इति अरनाभिदृष्टान्त उपन्यस्यते, न हि नाभिदृ-ष्टान्त उपन्यस्यते न हि नाभिमात्रं रथचक्रं किन्तु नाभिवदरनेमी अपि हि स्वरूपान्तर्गते "तथाऽङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा । सदा जनानां हृदये सन्नि-विष्टः तं स्वाच्छरीरात्प्रवृहेत् मुञ्जादिवेषीकाम्, इति मुञ्जेषीकादृष्टान्तश्च श्रुतः न हीषीकामात्रं मुञ्जः किन्तु बाह्यदलविशिष्टेषीका हि मुञ्जस्वरूपं विशेष्यांशस्य दृष्टान्त इषीका तथा यथा "यदा हि कदली नान्या त्वक्प-त्राद्याथजायते । एवंविश्वस्य नान्यस्त्वं त्वं चापीश्वर! दृश्यस" इति त्वक्पत्र-कदलीदृष्टान्तश्च चिदचिद्विशिष्टं ब्रह्मस्वरूपमवगमयति, न हि बाह्यत्व-क्पत्रेण विना काण्डमात्रं कदली अपि तु त्वक्पत्रविशिष्टकाण्डस्वरूपा, एवं विश्वविशिष्टं यत्स्वरूपं तत्र विशेष्यभूतस्त्वं विशेषणांशविलक्षणश्च दृश्यस इत्यर्थः, इयान् भेदः नाभीषीकाकाण्डानामरनेमिबाह्यत्वक्पत्राणां चाचेतनतया मिथो नियन्तृनियाम्यभावाभावाच्च शरीरशरीरिभावः, अत एव नेम्यादिशब्दाश्च न विशेष्यवाचकाः, इह तु नियन्तृनियाम्यभावादिना शरीरात्मभावसम्भवाच्छरीरवाचिशब्दा ब्रह्मपर्य्यन्ता इति, अतो मह-दाद्यवस्थानां विशिष्टब्रह्मस्वरूपगतत्वादुपादानत्वं मुख्यम् । किञ्च माभू-

त्प्रकृतिपुरुषयोः स्वरूपान्तर्भावस्तथाऽपि मुख्यत्वं युक्तं, न हि शरीरद्वारकं ब्रह्मणो महदाद्युपादानत्वममुख्यं मुख्यनिर्वाहकव्यवहितत्वाज्ज्वालाव्यवहितस्य काष्ठस्य भस्मकारणत्ववत्, न चाऽव्यवहितत्वमुपाधिः दर्शितसपक्षे वृत्त्यभावेन साध्यसमव्याप्त्यभावात् । ननु मृद्द्रव्यव्यवहितकुलालस्याऽपि घटं प्रत्युपादानत्वं स्यात्, न निर्वाहकव्यवहितत्वाभावात्तदभावश्च स्वनिष्ठस्य मृत्पिण्डस्य घटं प्रत्युपादानत्वनिर्वाहकत्वायोगात्करणकारकस्य तु स्वनिष्ठत्वात्तन्निष्ठज्वालायास्तन्निर्वाहकत्वम् युक्तम् आश्रयिनिष्ठामवस्थां प्रत्याश्रयभावस्य स्वनिष्ठस्यनिर्वाहकत्वं हि न घटते । नन्वावस्थातद्वतोर्व्यवहितत्वादाश्रयाश्रयिभावाभावादुपादानत्वममुख्यमिति किमुपादान एवायं निर्बन्धः? उत कर्त्रादिकारकान्तरेष्वऽपि? न प्रथमः, दर्शितपक्षानादरेण पक्षपातस्य निर्निबन्धनत्वेनाकिञ्चित्करत्वात्, द्वितीये तु कुलालस्य घटकर्तृत्वं न सिध्येत् तद्व्यापकहेतुत्वासिद्धेः, वृक्षत्वनिवृत्तौ शिंशिपात्वनिवृत्तिवत्, हेतुत्वासिद्धिश्च हेतुहेतुमतोः पुरुषघटयोः पाणिव्यापारदण्डचक्रादिहेत्वन्तरव्यवहितत्वात् "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रवि"रित्यत्र रवेः प्रकाशकत्वं न मुख्यं सिद्ध्येत्किरणव्यवहितत्वात् जगतः प्रकाशमानत्वे रविः किरणव्यहितो हेतुः, तथा जलं वहतीत्यत्र जलस्य कर्मत्वं न सिद्ध्येत् घटव्यवहितत्वात्, पाके काष्ठस्य करणत्वं न सिद्ध्येत् ज्वालाव्यवहितत्वात् गवा यजेत अरुणया क्रीणातीति जातिगुणयोर्यागक्रयसाधनत्वं द्रव्यद्वारकत्वादमुख्यं स्यात् यज्ञाय पशव इत्यत्र पशूनां यज्ञतादर्थ्यं न स्यात् तेषां हविरर्थतया तद्व्यवहितत्वात् "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इत्यत्रादित्यादीनां वृष्ट्याद्युपादानत्वं च न सिद्ध्येत् किरणमेघादिव्यवहितत्वात् इक्ष्वाकूणामियं भूमिरित्यादौ स्वस्वातन्त्र्यलक्षणसम्बन्धोऽपि न सिद्ध्येत् करदानां राज्ञामवान्तरस्वातन्त्र्यव्यवहितत्वात्पर्यङ्के शेत इति पर्यङ्कस्याधिकरणत्वं न सिद्ध्येदास्तरणव्यवहितत्वात्, सर्वोऽयं व्यवहारो न मुख्य इति चेन्न मुख्यत्वे सम्भवति अनेकव्यवहारामुख्यताश्रयणानुपपत्तेः, उक्तं हि "निर्वाहकव्यवधानं न मुख्यत्वविरोधी"ति, किञ्च व्यवहितस्य कार्यं प्रति हेतुत्वे को विरोधः, लक्षणाभाव इति चेन्न निय-

तत्पूर्वभावित्वस्य लक्षणस्य सम्भवात्, नियतानन्तरपूर्वभावित्वं लक्षणमिति चेन्न, तद्धि सामग्र्या एव न हेतुमात्रस्य, अन्यथा कृष्यादिव्यवहितवृष्टिनदीपूरादेः सुभिक्षताहेतुत्वं न स्यात्, तद्धेतुत्वं हि व्यवह्रियते, काष्ठादीनां करणत्वादिकं च न स्यादपूर्वस्यकृतिसाध्यत्वं च न स्याद्, भावार्थव्यवहितत्वात् । ननु व्यवहितस्याऽपि हेतुत्वेऽतिप्रसङ्गः स्यादिति चेत् तर्ह्यव्यवहितस्याऽपिहेतुत्वे रासभादावतिप्रसङ्गः स्यात्, न, अन्वयव्यतिरेकाभ्यामतिप्रसङ्गस्य निर्वायमाणत्वादिति चेत्तुल्यमव्याप्तिस्तु भवतोऽधिका, सजातीयव्यवहितस्य न कारणत्वमिति चेत्किं येन केनाप्याकारेण सजातीयत्वम्? उत हेतुत्वाकारेण? उत हेतुत्वावान्तराकारेण? न प्रथमः, व्यवहितपञ्चवेधे पुरुषस्याहेतुत्वप्रसङ्गात्, न द्वितीयः, कुलालस्य घटं प्रति अहेतुत्वप्रसङ्गात्, न तृतीयः, शरव्यवहितस्य धनुषो जयसाधनत्वाभावप्रसङ्गात्, व्यवहितहेतुरन्यथासिद्धत्वान्न व्यवहितकार्य्यं प्रति हेतुरिति चेद् व्यवहितस्यान्यथासिद्धिः किं तस्मिन् सत्यपि कार्य्यानुदयात्? उतासत्यपि कार्योदयात्? उत कार्य्यान्तरनिष्पत्त्यर्थत्वात्? उत व्यवहितकार्य्यं प्रति किञ्चित्काराभावात्? उत व्यवहितत्वादेव? न प्रथमः, अव्यवहिते बीजादौ हेतौ सत्यपि कदाचिदङ्कुराद्यनुदयेन बीजादेरहेतुत्वप्रसङ्गात्, सामग्रीवैकल्यानुदयः नाहेतुत्वादिति चेदिहापि स्वकार्य्यस्य सामग्रीवैकल्यादनुदयः न त्वहेतुत्वादिति तुल्यं, न द्वितीयः, वृष्टिनदीपूराद्यभावे सस्यानुदयात्, न तृतीयः, गमनादिकार्य्यान्तरहेतूनां कुलालशरीरादीनां घटादिकार्य्यान्तरोत्पत्तिहेतुत्वात्, न चतुर्थः कर्तुः कार्य्यं प्रति करणप्रेरणरूपकिंचित्कारवत् काष्ठस्यौदनं प्रति ज्वालोत्पादनरूपकिंचित्कारवत्तन्निष्पादककार्य्यनिष्पादनरूपकिंचित्कारसद्भावाद् व्यवहितव्यापारस्याऽपि किञ्चित्काररूपत्वेऽतिप्रसङ्गः परिहृतः, पञ्चमेऽपि किं व्यवहितत्वम् अव्यवहितकारणत्वं वारयति? उत व्यवहितकारणत्वं? प्रथममिष्टं, द्वितीये तु कथमिदमहेतुत्वसाधकम्? व्यवहितानामशनिपातादीनां सस्याद्यहेतुत्वदर्शनादिति चेदव्यवहितरासभादेरप्यहेतुत्वादग्न्यादेरपि धूमादिहेतुत्वं न स्यात्सन्निकर्षमनादृत्य अन्वयव्यतिरेकाभ्यां हेतुत्वनिश्चये व्यवधानमप्यनादृत्यान्वयव्यतिरेकाभ्यां हेतुत्वनिश्चय इहाऽप्युपपन्नः, अन्य-

था कुलालादेर्घटादिहेतुत्वाभावप्रसङ्गात् । एवं हेतुमात्रस्य सद्वारकत्वोपपत्तेस्तदवान्तरविशेषस्य निमित्तत्ववत् उपादानत्वमपि सद्वारकं मुख्यम् । ननूपादानस्य कार्य्यावस्थाश्रयत्वं वाच्यं कथं व्यवहितस्यावस्थाविशेषाश्रयत्वम्? उच्यते—कुम्भोदरसम्भृतमम्भः प्रति पुरुषस्येव परमात्मनो महदाद्यवस्थाश्रयत्वमुपपन्नमिति कुम्भव्यवहितस्याम्भसः पुरुषानाधेयस्यापि स्वाधारधारकायत्तस्थितत्वं हि दृश्यते, न च वाच्यं परमाधारः स्वाधेयधारणोपक्षीणः न तु व्यवहितधारणपर इति पुरुषस्य सलिलधारणफलान्वयदर्शनान्न हि निरुदकस्येवोदकपूर्णस्य घटस्य धारणे गुरुत्वातिशयनिबन्धनश्रमातिशयो न भवति, यदि घट एव पुरुषेण धार्य्यते न जलं तर्हि निरम्भःकुम्भधारण इव श्रमातिशयो न स्यात्कुम्भमात्रधारणस्याविशेषात्, जलस्य घटसंसर्गमात्राच्छ्रमातिशयः न धार्य्यत्वादिति चेन्न अन्येन धृतस्य सोदकघटस्य पाणिस्पर्शमात्रेण श्रमप्रसङ्गात्, विमतं देवदत्तधार्य्यं तदुपरिभागस्थत्वे सति तच्छ्रमहेतुत्वात्तुल्यगौरवसम्प्रतिपन्नपदार्थवत्, उदकविशिष्टघटो धार्य्य इति श्रमातिशयोपपत्तिर्व्यवहितधारणं च न स्यादिति चेत्तत्र विशेषणांशस्य धार्य्यत्वमस्ति वा न वा? न चेच्छ्रमातिशयो न स्यादस्ति चेत्तदेव महदाद्यवस्थाविशिष्टमचिद्द्रव्यं परमात्मधार्य्यमिति विशेषणभूतमहदाद्यवस्थाविशेषस्याऽपि परमात्मायत्तस्थितित्वात्तस्य तदाश्रयत्वमुपपन्नम् । किं चाव्यवहितादपि व्यवहितस्यैवाश्रयत्वं मुख्यं दृश्यते, यथाऽऽस्तरणांशुकादपि पर्य्यङ्कस्य, यथा दर्भेभ्यो भूतलस्य, अव्यवहितमपि ह्यंशुकं न पुरुषस्य धारकम् असामर्थ्यात् श्वभ्रमुखपिधायकं विस्तीर्णमंशुकं हि न पदन्यासन्धारयितुं प्रभवति कूपाच्छादका हि दर्भास्तत्र निहितपदं पुरुषं न धारयन्ति, तस्मादंशुकस्य दर्भाणां च धारणासामर्थ्यात्पर्य्यङ्कभूतलयोरेव हि धारणसामर्थ्यान्मुख्यमाश्रयत्वं पर्य्यङ्कभूतलस्ययोरास्तरणदर्भयोरपि धारणसामर्थ्यकल्पने गौरवं स्यादतश्चास्तरणदर्भाणां संयोगमात्रेण व्यवधायकत्वम्, एवं महदाद्यवस्थामपेक्ष्य प्रकृतेराश्रयत्वासंभवेन परमात्मनस्सर्वशक्तेस्तदाश्रयत्वं मुख्यं, व्यवधायकसद्भावस्तु व्यवहितयोर्नाश्रयाश्रयिभावविरोधी, विमतं व्यवधायकं स्वसम्बन्धिनोर्व्यवहितयोर्नाश्रयाश्रयिभावविरोधी स्वधारणसमर्थवस्तुनि

ष्ठच्यवधायकत्वादास्तरणवद्दर्भवच्च, एवं महदाद्यवस्थां प्रति चिदचिच्छरीरकस्य परब्रह्मण आश्रयत्वोपपत्तेः जगदुपादानत्वं मुख्यम् । ननु यद्येवं शरीरशरीरिभावमाश्रित्योपादानत्वमुच्यते वैशेषिकादिपक्षात्कोभवत्पक्षस्य भेदः, नियाम्यविशेषो हि शरीरमभिमतं चिदचितोरीश्वरप्रेर्य्यत्वं हि तन्मतेऽप्यस्ति, अहो महत्तरोऽयं पर्यनुयोगः, वैशेषिकादयश्चेदप्रामाणिकमेव ब्रूयुः तदुक्तं चेदनादरणीयमिति न नः प्रतिज्ञा अस्मदुक्तार्थस्तदभ्युपगतश्चेत्प्रामाणिकोऽर्थोऽङ्गीकृतः स्यात् का नः क्षतिः । किं च साम्यमपि दुरुपपादं कालदिगाकाशाद्यचेतनस्येश्वरधार्यत्वानभ्युपगमाच्छब्दादिगुणोत्पत्तावेवाकाशादीनां तद्भोक्तृपुरुषादृष्टप्रेरणमुखेनेश्वरापेक्षा न त्वाकाशादिस्वरूपस्य, चेतनानामप्यदृष्टानुगुणदेहेन्द्रियसंयोजनमुखेन सुखदुःखज्ञानादिहेतुरीश्वर इत्येतावता तत्प्रेर्य्यत्वं न तु स्वरूपस्थितौ तदपेक्षा, मुक्त्यवस्थायां तु न कदाचिदपि तदपेक्षा, पश्चाद्दुःखाद्यसंयोगाय तदपेक्षेति चेन्न पुण्यपापयोरात्यन्तिकविच्छेदादेव तत्सिद्धेः, प्रध्वंसस्यानन्ततया तन्निरपेक्षत्वाच्च अदृष्टाभावेऽपि दुःखोत्पादनक्षम ईश्वरः अतस्तदनुदयाय तदपेक्षेति चेन्न अपार्थिवत्वेऽपि खे पुष्पं जनयितुमीश्वरः क्षम इति पुष्पानुदयाय खस्येश्वरापेक्षेति वचनतुल्यमिदम्, उभयोरप्ययोग्यत्वाविशेषादतो धारणाद्यनुगुणमसङ्कुचितमीशनं तन्मते नास्तीति यावद्द्रव्यभावितया तन्नियाम्यत्वधार्य्यत्वाद्यभावात्पराभिमतेन वाऽस्मदभिमतेन वा लक्षणेन कथंचिदपि चिदचितोः शरीरशरीरिभावानुपपत्तेर्जगदुपादानत्वं तन्मते दुरुपपादम्, अतो भाष्योक्तप्रकारमेव परमात्मनो जगदुपादानत्वमिति स्थितम् ॥

प्रकृत्यधिकरणं समाप्तम् ॥

सर्वव्याख्यानाधिकरणम् ।

**सू० एतेन सर्वे व्याख्याता व्याख्याताः ॥ २९ ॥**

टी० सू० एतेन सर्वे व्याख्याता व्याख्याताः, कृत्स्नाधिकरणन्यायातिदेशरूपत्वात्सङ्गतिः, प्रथमसूत्रस्य समन्वयसूत्रस्य च सिद्धपदाः सर्वे वेदान्ता

विषयाः, वाक्यविशेषा इतरेष्वधिकरणेषु विषयाः, एवमुदा[1]हृतवाक्यशेषाः सर्वेऽप्यस्य पञ्चत्रिंशस्य विषयः पूर्वाधिकरणेष्विव विचारोऽर्थसिद्धः अनुदाहृताः कारणवादिवाक्यविशेषाः किमुक्तलक्षणचिदचिद्विलक्षणब्रह्मपरा? उत ने? ति विचारः, तदर्थं ते ते किमुक्तन्यायानामविषया? उत विषया? इति, विषयत्वं सम्भवति ने? ति, यदा न सम्भवति तदा तदविषयत्वादुक्तलक्षणब्रह्मपरत्वाभावः, यदा सम्भवति तदोक्तन्यायविषयत्वादुक्तलक्षणब्रह्मपरा इति फलफलिभावः। एतेनेति पदस्य एतेन योगः प्रत्युक्तः एतेन शिष्टापरिग्रहा इति सूत्रस्थैतच्छब्दवदनन्तरपूर्वप्रकृतार्थविषयतया प्रकृत्यधिकरणन्यायमात्रपरामर्शित्वव्युदासाय व्याचष्टे "पादचतुष्टयोक्ते"ति, उपासनतत्फलादिप्रतिपादकवाक्यानां निरूपयिष्यमाणानां व्यवच्छेदायाह "जगत्कारणप्रतिपादनपरा" इति, इदं—पदं हेतुगर्भं कारणविषयत्वमेव ह्यधिकाशङ्कायाः परिहारहेतुः, निरूपितवाक्यव्यवच्छेदाय वाक्यविशेषा इत्युक्तं, पूर्वमनुदाहृता अनिश्चितार्था इत्यर्थः। यथैतेषु त्रय एव यज्वान इत्युक्तेऽन्येषाम् अयज्वत्वं व्याख्यातम्भवति, एवमुदाहृतवाक्यानां चिदचिद्विलक्षणब्रह्मपरत्वप्रतिपादनेनाऽन्येषामतत्परत्वेन व्याख्यातत्वशङ्कां व्यावर्त्तयितुमाह "चेतनाचेतनविलक्षणे"ति, वैलक्षण्यहेतुभूतगुणप्रदर्शनार्थं तेषु प्रधानं गुणद्वयमाह सर्वज्ञसर्वशक्ति—शब्दाभ्यां सर्वज्ञत्वसर्वशक्तित्वे हि निमित्तोपादानतोपयोगिनी। का पुनरधिकाशङ्का उच्यते—जगत्कारणत्ववाक्यविशेषेषु केचित्सर्वसाधारणशब्देन कारणनिर्देशपरा, यथा सदेव सोम्येत्यादयः सद्ब्रह्माक्षरशब्दैः केचिच्चेतनमात्रासाधारणशब्दान्विताः, यथा तावेतौ सत्त्वक्षेत्रज्ञाविति पैङ्गिश्रुतिः क्षेत्रज्ञ—शब्देन केचिदचिन्मात्रासाधारणशब्दान्विताः यथा गौरनाद्यन्तवती अजामेकामित्यादि, केचिज्जीवेश्वरसाधारणशब्दान्विताः यथाऽऽ"त्मन आकाश इ"ति "पुरिशयं पुरुषमि"ति च केचिच्चिदचिद्विशेषासाधारणशब्दाः, यथा वैश्वानरशब्दवती श्रुतिः, केचिच्चाचिद्विशेषासा-

**सू० एतेन पादचतुष्टयोक्तन्यायकलापेन सर्ववेदान्तेषु जगत्कारणप्रतिपादनपराः सर्वे वाक्यविशेषाश्चेतनाचेतनविलक्षण-**

१ एष्वनुदाहृतवाक्यविशेषा इति पु॰ पा॰ ।

सर्वज्ञसर्वशक्तिब्रह्मप्रतिपादनपराः व्याख्याता व्याख्याता इति पदाभ्यासोऽध्यायपरिसमाप्तिद्योतनार्थः ।

धारणशब्दा, यथा "आकाशादेव समुत्पद्यन्ते" इति, केचिच्चेतनविशेषासाधारणशब्दाः, यथेन्द्रशब्दवती प्रतर्दनोपासनश्रुतिः, केचित्तु परमपुरुषासाधारणशब्दाः, यथाऽन्तरादित्यविद्याश्रुतिः, यथा च पुरुषसूक्तम्, एवंविधेष्वेव वाक्येषु केचित्साक्षादेव कारणत्वप्रतिपादकाः, केचिच्च कारणत्वव्याप्तवेदितव्यत्वनिरतिशयदीप्तियोगादिपरा इति विभागो यथासम्भवं द्रष्टव्यः, उक्तकोटिष्वनन्तर्भूतं कारणविषयं वाक्यं न क्वचित्सम्भवति तत्र चिदचित्साधकैर्लिङ्गशब्दादिभिः पूर्वपक्षे प्राप्ते चिदचिद्व्यावर्त्तनक्षमैरीक्षणविशेषानन्दविशेषसर्वप्रशासितृत्वसमस्तहेयप्रत्यनीकत्वसर्वचिदचिद्द्वारकत्वपतित्वान्तरात्मत्वमुक्तप्राप्यत्वादिभिर्धर्मविशेषैस्तेषां वाक्यानां चिदचिद्विलक्षणजगदेककारणभूतदेवताविशेषप्रतिपादकत्वं समर्थितम् । उक्तकोट्यन्तर्भूतेष्वपि येष्वनुदाहृतवाक्यविशेषेषु जगत्कारणत्वमात्रं श्रुतं न त्वीक्षणविशेषादयश्चिदचिद्व्यावर्त्तकाः परमपुरुषासाधारणाश्च धर्माः श्रुताः तेषु यथाप्रतिपन्नवस्त्वभ्युपगमे विरोधाभावात् न परमात्मपरत्वमित्यनुयायिनी अधिका शङ्का, अभ्युच्चयहेतवश्च यथासम्भवं तत्र तत्र द्रष्टव्याः, ईक्षणविशेषादिधर्मान्तराश्रवणेऽपि जगत्कारणत्वस्येक्षणविशेषादिवत् परमपुरुषासाधारण्यस्य द्वात्रिंशदधिकरणन्यायनिर्णीतत्वाज्जगत्कारणत्वमेव चिदचिद्विलक्षणसर्वविधकारणभूतपरब्रह्मशब्दवाच्यदेवताविशेषपरत्वसाधकमित्यधिकानुयायिपरिहारः, परिहारे चाभ्युच्चययुक्तयस्तत्र तत्र द्रष्टव्याः । ननु जगत्कारणत्वं परमात्मलिङ्गं स्यात् कथं परमात्मनो देवताविशेष[1]परत्वसाधकं "जन्माद्यस्य यत" इत्यादीनामधिकरणानां सर्वेषां देवताविशेषनिर्णय[2]परत्वादिति ब्रूमः—तथा हि ब्रह्म—शब्दस्य भगवच्छब्दतुल्यत्वं प्रथमसूत्रे प्रतिपादितं यत इति यच्छब्दस्यानुवादरूपतया प्रापकवाक्यानुरोधित्वात्, तेषु च सदादिशब्दानां

१ देवताविशेषत्वसाधकमिति पा० ।
१ पर्यन्तत्वादिति पा० ।

देवताविशेषपर्यन्तत्वावगमात्, सूत्रे च यत इति जनिकर्त्तुः प्रकृतौ न पञ्चमी, किन्तु हेताविति समर्थनेन नारायणातिरिक्तनिमित्तविरोधित्वाच्च जन्मा[1]धिकरणं देवताविशेषनिष्ठमेव लक्षणं स्थापयति, तृतीयं तु सामान्येनोपयुक्तं, चतुर्थं देवताविशेषनिष्ठं परमप्रयोजनत्वं दर्शयति "आनन्दो ब्रह्म रसो वै स" इत्यादिवाक्यानामानन्दवल्लीस्थत्वात्तस्याश्चान्तरादित्यविद्यैकार्थ्यात्, ईक्षत्यधिकरणे तु गतिसामान्यस्योक्तत्वात्साधारणस्य सच्छब्दस्य देवताविशेषनिष्ठत्वमेव दर्शितम् । आनन्दवल्ल्यास्तु "स यश्चायं पुरुषे यश्चासावादित्ये" इत्यन्तरादित्यविद्यैकार्थ्यावगमादन्योऽन्तर आत्माऽऽनन्दमय इत्यन्तरात्म–शब्देन सुबालोपनिषत्प्रत्यभिज्ञानादुपक्रमस्थस्यानन्त–शब्दस्य रूढिपरित्यागे हेत्वभावाच्च सिद्धं भगवत्परत्वम् । अन्तरादित्यविद्यायान्तु पुण्डरीकाक्षत्वप्रतिपादनात्पुरुष–शब्देन हिरण्मयत्वविशेषणेन च पुरुषसूक्तप्रत्यभिज्ञानात्सर्वपाप्मभ्य उदयेनैष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इति सुबालोपनिषदैकार्थ्यावगमाच्च सिद्धं परमपुरुषपरत्वम् । इतराधिकरणचतुष्टयस्याकाशप्राणज्योतिरिन्द्रादिशब्दानामपि पुरुषसूक्तप्रतिपाद्यपरमपुरुषविषयतया समर्थनपरत्वं तत्र तत्र स्फुटम् । मनोमयत्व–भारूपत्वप्रत्यभिज्ञापितैर्विद्युद्वर्णहिरण्यपुरुषपरैः "हृदा मनीषा मनसाऽभिक्लृप्तः विद्युतः पुरुषादधि तस्मिन् अयं पुरुषो मनोमयः अमृतो हिरण्मय" इत्यादिभिरैकार्थ्याच्छाण्डिल्यविद्या देवताविशेषविषया कठवल्ली भगवत्परेति स्फुटम्, अध्वनःपारभूतवैष्णवपरमपदविषयत्वात्तस्याः, अत्यन्तरः परमपुरुषः पुरुष–शब्दवाच्यत्वादमृतत्वाच्च तस्मिन्नयमिति वाक्यप्रत्यभिज्ञानादन्तर्यामिविद्या नारायणविषयेति स्फुटं सुबालोपनिषदैकार्थ्यात्, मुण्डोपनिषदः कार्त्स्न्येन परमपुरुषविषयत्वं, ब्रह्माक्षर–शब्दयोश्च पुरुष–शब्दसमानार्थत्वं च दर्शितं, तत्र श्रुतरूपविशेषान्वयादेव वैश्वानरविद्या तदेकविषया, पुरुषमपि चैनमधीयत इति च स्फुटमुक्तम् । द्युभ्वाद्यधिकरणं तु मुण्डोपनिषद्विषयत्वादेव परमपुरुषविषयं, भूमविद्या तु निरतिशयसुखरूपवस्तुविषयत्वादानन्दवल्ली तुल्यविषया, अम्बरान्तधारकमक्ष-

१ जन्माद्यधिकरणमिति पा· ।

रं सूर्यचन्द्रादिप्रशासितृत्वादानन्दवल्लीप्रत्यभिज्ञानादक्षर–शब्दवाच्यतया मुण्डोपनिषत्प्रत्यभिज्ञानाच्च बृहदारण्यकेऽन्तर्यामिविद्यानन्तरवाक्यप्रतिपाद्यत्वाच्च परमपुरुषः ईक्षतिकर्म परमपुरुष एव श्रुतः, दहराधिकरणे तु व्योमातीतमतत्प्रत्यनीकत्वात्, स उत्तमः पुरुष इति परमपुरुषविषयत्वाच्च देवताविशेषसाधकं प्रमितश्च पुरुष एव श्रुतः, देवताधिकरणमधुविद्ये हिरण्यगर्भेन्द्रादीनामपि गुरुशिष्यभावप्रदर्शनेनादित्यान्तर्यामिविषयत्वेन च भगवतो महामहिमप्रतिपादिके, "आकाशो ह वै नामे"ति वाक्यं पुरुषसूक्तप्रत्यभिज्ञानात्परमपुरुषविषयं, चतुर्थाद्ये तु "पुरुषान्न परं किञ्चिदिति समर्थितम्, अनन्तरे चाऽधिकरणे अजायाः परमपुरुषात्मकत्वं स्थितं, तैत्तिरीयकेऽजावाक्यचिह्नितेऽनुवाके यस्मात्परमिति वाक्यस्याधीतत्वाद्यस्मिन् पञ्च पञ्चजना" इति च वाक्यं भगवत्परम् अमृतात्मब्रह्म–शब्दनिर्देशादन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमेतदभयमेतद् ब्रह्म अमृतो हिरण्मयः स त आत्माऽन्तर्याम्यमृत" इति वाक्यैकार्थ्यं हि तस्य प्रतीयते, यश्चक्षुषि तिष्ठन्नित्यादि अन्तर्यामिब्राह्मणैकार्थ्येन पञ्चजनसञ्ज्ञानामिन्द्रियाणां भगवदधीनत्वमपि ह्यवगम्यते, कारणत्वेन चेत्यत्र आनन्दवल्लीवाक्यस्य विषयत्वात्सिद्धं परमपुरुषत्वनिर्धारणं, बालाक्यजातशत्रुसंवादे च वेदितव्यतयोक्तः परमपुरुषः यस्येत्यनुवादस्य प्रापकसापेक्षत्वाद्वेदितव्यत्वस्य च तमेवं विद्वानित्यादिवाक्यैकार्थ्यज्ञापकत्वाच्च, अवस्थितेरिति सूत्रस्यान्तर्यामिब्राह्मणविषयत्वात्, मैत्रेयीब्राह्मणे च जीवसमानाधिकरणवाक्यानां नारायणपरत्वं स्थितं, प्रकृत्यधिकरणस्य तु निमित्तोपादानभेदवादिपाशुमतप्रक्रियाविरोधित्वाद्रुक्मवर्णपुरुषस्य योनित्वकथनाच्च परमपुरुषविषयत्वं स्पष्टम् । एतदुक्तम्भवति केचिद्वाक्यविशेषा अनुवादरूपतया प्रापकसाकाङ्क्षाः "यतो वा इमानि" "यो वै बालाक एतेषां पुरुषाणाङ्कर्त्ते"त्येवमादयः, केचित्साधारणशब्दचिह्नितत्वाद्विशेषाकाङ्क्षाः, यथा सदेवेत्यादयः, केचिच्च अयोग्यस्वार्थतया योग्यविशेषाकाङ्क्षाः, यथा आकाशप्राणादिशब्दचिह्निताः, केचिच्च योग्यविशेषप्रत्यभिज्ञापकविशेषणोपस्थापकाः, यथा "सर्वव्यापी सर्वभूतान्तरात्मे"त्यादयः सर्वव्यापित्वं सर्वभूता-

न्तरात्मत्वमपि नारायणप्रत्यभिज्ञापकं "व्याप्य नारायणः स्थितः सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण" इति श्रूयमाणत्वात् । केचिच्च योग्यविशेषोपस्थापकाः हिरण्मयः पुरुषः तस्य यथा कप्यासम्पुण्डरीकमेवमक्षिणी सहस्रशीर्षा पुरुषः सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम्पदम्परात्परम्पुरुषमुपैति परमपुरुषमभिध्यायीत दिव्यो देव एको नारायण" इत्यादयः, अतो योग्यविशेषपरेषु वाक्यविशेषेषु तदितरकोटिचतुष्टयनिविष्टवाक्यविशेषाः पर्यवस्यन्ति, अन्यथा निराकाङ्क्षत्वायोगादिति अतो जगदेककारणचिदचिद्विलक्षणदेवताविशेषे कारणवाक्यानां समन्वयोऽध्यायप्रतिपाद्य इति स्थितम्, ॥ अतोऽधिकाशङ्कास्पदानामनुदाहृतवाक्यविशेषाणामपि नारायणपरत्वमेव चरमाधिकरणे सूत्रकारैरुपपिपादयिषितमिति सिद्धम् । एवं पादचतुष्टयेऽपि विषयत्वेनोदाहृतानां वाक्यानामैककण्ठ्यं स्थितम्, अनुदाहृतवाक्यविशेषाणां तु न कस्मिंश्चिदर्थे ऐककण्ठ्यं प्रतीयते, अतस्तेष्वेकैकं निरूप्यमाणेषु निरूपितचराणां भूयसां वाक्यानां बलीयस्त्वादेकैकस्य वाक्यस्य तदनुगुणत्वं युक्तमिति च सिद्धं, के पुनस्ते वाक्यविशेषाः येषूक्तन्यायातिदेशः—उच्यते अनुदाहृतवाक्यानामानन्त्यान्न कार्त्स्न्येन तत्प्रदर्शनं शक्यम् अतः केषुचिद्वाक्येषु दिङ्मात्रं प्रदर्श्यते बृहदारण्यके श्रूयते—ब्रह्म वा इदमग्र आसीदेकमेवेत्यादि अत्र न परं ब्रह्म प्रतिपाद्यन्तदसाधारणलक्षणविशेषाद्यभावादत्र ब्रह्म-शब्दो ब्राह्मण जातिपरो वा तदभिमान्यग्निदेवतापरोवा तदधिष्ठितब्राह्मण जातिपरो वा अत्यसृजतक्षत्रमिति क्षत्रियसृष्टिश्रवणात् तस्माद् ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूय इति क्षत्रप्रशंसनवाक्ये ब्राह्मण-शब्देन निर्देशाद्य एनं हिनस्ति स्वां योनिमृच्छति स पापीयान् भवतीति ब्राह्मणहिंसायां प्रत्यवायकथनात्परस्य हिंसाप्रसङ्गाभावात् "स विशमसृजत स शौद्रं वर्णमसृजतेति, स इति पुंल्लिङ्गेन शब्देन ब्राह्मणं परामृश्य वैश्यशूद्रयोरपि तत्सृष्टत्वकथनात्तदेतत् ब्रह्म क्षत्रं विट् शूद्र इति वर्णचतुष्टयनिगमनाच्च ब्रह्म-शब्दो ब्राह्मणपरः तदभिमान्यग्निपरो वा तदधिष्ठितब्राह्मणवर्णपरो वा "आग्नेयो वै ब्राह्मण" इति श्रुत्यन्तरादिहाप्यग्निनैव देवेषु ब्रह्माऽभ-

वद् ब्राह्मणो मनुष्येष्विति निर्देशेन ब्राह्मणवर्णस्याग्निसम्बन्धप्रतिपत्तेश्चेति तदेतत्त्रयमनुपपन्नं सदेव सोम्येदमग्र आसीदित्यादिवाक्यसारूप्यभङ्गायोगात्कारणत्वस्य परमात्मासाधारण्यस्य समर्थितत्वाच्च । किञ्च उपक्रमस्थ-ब्रह्म-शब्दमुख्यार्थहानिप्रसङ्गः, वर्णमात्रस्य अग्निसञ्ज्ञदेवतायास्तदधिष्ठितवर्णस्य च इन्द्रवरुणसोमादिसमस्तदेवतास्रष्टृत्वायोगश्च "ब्राह्मणोऽस्य मुखमासीत् पद्भ्यां शूद्रः मुखादिन्द्रश्चाग्निश्चेति ब्राह्मणस्येन्द्रादेरग्नेश्च परमपुरुषसृष्टत्वश्रवणेन इन्द्रादीनामग्निसृष्टत्वायोगश्च, अस्याः श्रुतेर्गत्यन्तरसम्भवेन कल्पभेदेन सृष्टिभेदपरत्वकल्पनञ्चानुपपन्नं "तदग्निनैव देवेषु ब्रह्माऽभवद् ब्राह्मणो मनुष्येष्वि"ति तच्छब्दपरामृष्टप्रकृतब्रह्मणोऽग्निब्राह्मणान्यत्वं च प्रतीयते, तस्मादग्नावेव देवेषु लोकमिच्छन्तो ब्राह्मणे मनुष्येष्वेताभ्यां हि रूपाभ्यां ब्रह्माभवदित्यग्निब्राह्मणयोर्वैयधिकरण्येन ब्रह्मरूपत्वनिर्देशेन ताभ्यां रूपिणो ब्रह्मणो विलक्षणत्वं च प्रतीतम्, एवमिन्द्रादिस्रष्टृत्वात् पृथग्व्यपदेशाच्च ब्रह्म-शब्दस्य अन्यवस्थपरब्रह्मपरत्वञ्च व्युदस्तं, न ह्यग्निरूपाद् ब्रह्मण इन्द्राद्युत्पत्तिः, अतोऽग्निर्विशिष्टत्वोपस्थापनकल्पनवैयर्थ्यम्, अशाब्दत्वं च, न हि केवलब्रह्म-शब्दोऽन्यवस्थपरमात्मवाची प्रथमब्रह्म-शब्दोऽन्यवस्थब्रह्मपरश्चेत्तदग्निनैवेति प्रकृतपरामर्शिनस्तच्छब्दस्य वैयधिकरण्यमनुपपन्नम्, अन्यवस्थस्य ब्रह्मणोऽग्निना विशिष्टत्वं चायुक्तम्, एकस्यैवाग्नेर्विशेषणत्वविशेष्यत्वानुपपत्तेः, अन्यन्तरकल्पने च तस्याऽन्यन्तरं प्रति रूपत्वानुपपत्तेश्च, न त्विन्द्रादिसृष्टिरविवक्षिता तद्विवक्षायां ह्यग्निब्राह्मणपरत्वानुपपत्तिः किन्तु तद्देवताधिष्ठेयक्षत्रादिसृष्टिरेव विवक्षिता "तदग्निनैव देवेषु ब्रह्माभवद् ब्राह्मणो मनुष्येषु एताभ्यां हि रूपाभ्यां ब्रह्माभवदि"ति, च वाक्यद्वयं ब्राह्मणवर्णस्यैव देवमनुष्यविभागेन द्वैविध्यपरमिति उच्यते-न तावदिन्द्रादिसृष्ट्यविवक्षाया वाच्या तदेतद् ब्रह्म क्षत्रं विट् शूद्र इति चातुर्वर्ण्यनिगमने कथं चतुर्वर्ण्यं क्षत्रियादिवर्णत्रयसृष्टिर्ह्युक्त्यपेक्षायान्तदग्निनैव देवेषु ब्रह्माभवदित्यग्निना देवेषु चतुस्सङ्ख्यापूरणादग्निश्च मृत्युसञ्ज्ञसूक्ष्माचिच्छरीरकपरमात्मसृष्टतया प्रागुक्तः, तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्तत अग्निरिति श्रान्त-

शब्दः कारणलक्षणया यत्नपरः कृतसङ्कल्पस्येत्यर्थः तप्तस्य तप आलोचने सृज्यवर्गपर्यालोचनवत इत्यर्थः, एवं तत्राग्निरेव सृष्टतया श्रुतः । न तु तदधिष्ठितो ब्राह्मणवर्णः इहाऽपि तेन चतुस्संख्यापूरणादन्यप्रायन्यायेन क्षत्रादिविभागवत्तदभिमानीन्द्रादिसृष्टिर्विवक्षितेत्यवगम्यते न तु तदधिष्ठितवर्णमात्रस्य सृष्टिः तदग्निनैव देवेषु ब्रह्माभवत् ब्राह्मणो मनुष्येष्वित्युक्तिः पूर्वं ब्राह्मणवर्णस्य ब्रह्म–शब्दानुक्ततां ज्ञापयति, पूर्वोक्तानामिन्द्रक्षत्रियादीनामनया वचनव्यक्त्या पुनरनुक्तत्वात्, न हि क्षत्रवर्णो देवेष्विन्द्रेण क्षत्रमभवत् मनुष्येषु क्षत्रियेणेति वाक्यं श्रूयते, अत एवाग्नेरपि ब्रह्म–शब्दानुक्तत्वं सिद्धं, न हीन्द्रोदेवेष्विन्द्ररूपेण क्षत्रमभवन्मनुष्येषु क्षत्रियेणेति वाक्यमस्ति । ननु "क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्र" इति श्रूयते इति चेत् ततः किं वर्णान्तरेष्वपि द्वैविध्यं प्रतीयत इति चेन्न तदग्निनैवेत्यादिवाक्यवैरूप्यात्, न हि क्षत्रवर्णो देवेष्विन्द्रादिरूपेण क्षत्रियोऽभून्मनुष्येषु क्षत्रियेणेति श्रुतं, तथाऽपि वर्णान्तरद्वैविध्यपरत्वेऽध्याहारबाहुल्यप्रसङ्गः, तर्हि अस्याः श्रुतेः कोऽर्थः उच्यते–ब्राह्मणाभिमान्यग्निसृष्टेः पूर्वमुक्तत्वात् क्षत्राद्यभिमानीन्द्रादिसृष्टिमिहोक्त्वा अग्निसृष्टिः स्मारिता तदग्निनैवेति वाक्येन, अग्निनेतीत्थंभावे तृतीया, अग्निना विशिष्टं तत्परं ब्रह्म देवेषु ब्रह्माभवदग्निद्वारा ब्राह्मणाऽभिमान्यभवदित्यर्थः, अनेन इन्द्रादिद्वारा परब्रह्मण एव क्षत्राद्यभिमानित्वमित्यर्थसिद्धं, वर्णाभिमानिदेवतानाञ्च तपोविशेषात् ब्राह्मण्यादिविभागोऽस्तीति वा ब्राह्मणक्षत्रादिव्यवहारः "ब्रह्म वृहस्पतिः क्षत्रमिन्द्रः मरुतो वै देवानां विश" इत्यादि श्रुतेः, तदानीमग्न्यादिद्वारा परब्रह्मण एव ब्राह्मणत्वादिविभाग उक्तः स्यादिति बहु स्यामिति सर्वविधबहुत्वं हि तत्तद्द्वारा ब्रह्मगतम्, एवं वर्णाभिमानिदेवतासृष्टिरुक्ता । अथाऽभिमानविषयभूतब्राह्मणादिसृष्टिम् "ब्राह्मणोऽस्य मुखमासीत् बाहूराजन्यः कृत" इत्यादिश्रुतिप्रसिद्धामुपजीव्य तद्द्वारा तत्फलभूतमानुषवर्णविभागभाक्त्वम्परमात्मन उच्यते–ब्राह्मणो मनुष्येष्विति तत्परं ब्रह्म मनुष्येषु ब्राह्मणरूपभाक्तद्द्वारा ब्रह्माभवत् क्षत्रियेण विशिष्टं सत्तद् ब्रह्म तद्द्वारा क्षत्रियत्ववदभूद्यथा भूमिद्वारा काठि-

न्यवदभूत्तद्वदित्यर्थः, श्रुतपदानुषङ्गेण निर्वाहे सम्भवति वाक्याध्याहारेण योजनाऽनुपपत्तेः, मध्येऽग्निब्राह्मणयोः प्रशंसा तस्मादग्नावेव देवेषु लोकमिच्छन्तो ब्राह्म[1]णा मनुष्येष्विति, । तत्प्राशस्त्यहेतुमाह "एताभ्यां हि रूपाभ्यां ब्रह्माभव"दिति, अग्निब्राह्मणरूपाभ्यां परं ब्रह्मविशिष्टमभवदित्यर्थः, इन्द्रक्षत्रादीनां च परमात्मरूपत्वाविशेषे ऽपि अग्निब्राह्मणयोस्तद्रूपत्वकथनन्तत्प्रशंसाया विवक्षितत्वात्, एताभ्यां हीत्यादिवाक्यस्य वर्णद्वैविध्यपरत्वं प्रयोजनाभावादयुक्तं, न हि वर्णद्वैविध्यमात्रकथनमुत्कर्षाय भवति, इदञ्च वाक्यमुत्कर्षोपपादनपरमिति हि–शब्देन ज्ञायते, ब्रह्म–शब्दार्थवैरूप्यं तु तपसा चीयते ब्रह्म तस्मादेतद् ब्रह्मेति मुण्डोपनिषदीव घटते, मुख्यार्थासम्भवे लाक्षणिकार्थस्वीकारस्य तत्सम्भवेऽप्यमुख्यार्थस्वीकारहेतुत्वाभावात्, वक्ष्यते हि "स्याच्चैकस्य ब्रह्मशब्दव"दि"ति पूर्वपक्षहेतुषु क्षत्रविट्छूद्रसृष्ट्युक्तेरन्यथासिद्धिरुक्ता । किञ्च क्षत्रादिवर्णत्रयसृष्टिश्रवणेन ब्रह्म वा इदमिति वाक्यस्य कारणवाक्यसारूप्यनिबन्धनं परमात्मपरत्वं भङ्क्त्वा ब्रह्म–शब्दस्य प्रथमवर्णतदभिमानिदेवताविषयत्वाश्रयणमयुक्तं सदेवेत्यादिवाक्ये ऽपि तेजोऽन्नसृष्टेर्वक्ष्यमाणत्वेन सच्छब्दस्याऽपि वायुतदभिमानिदेवताविषयत्वप्रसङ्गात् स विशमसृजतेति पुँल्लिङ्गनिर्देशस्त्वात्म–शब्दाभिप्रायः, एतद्ब्राह्मणोपक्रमे हि "आत्मैवेदमग्रआसीदिति श्रूयते अतस्स इति निर्देशो न क्षत्रप्रशंसार्थः प्रस्तुतब्राह्मण–शब्दार्थाभिप्रायः, व्यवहितशब्दानुगुणलिङ्गभाक्त्वं सर्वनामपदस्य श्रुतिषु दृश्यते यथा मुण्डोपनिषदि यस्सर्वज्ञस्सर्ववित् यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष व्योमन्यात्मा प्रतिष्ठितः मनोमयः प्राणशरीरनेता प्रतिष्ठितो ऽन्तर्हृदयं सन्निधाय तद्विज्ञानेन परिपश्यन्ति धीराः आनन्दरूपममृतं यद्विभाती"ति अत्रात्म–शब्दे सन्निहितेऽपि ब्रह्म तल्लक्षणमुच्यत इति व्यवहितब्रह्म–शब्दाभिप्रायेणामृतं यत्तदिति निर्दिश्यते, न तु स त आत्माऽन्तर्याम्यमृत इतिवत्पुँल्लिङ्गत्वेन । नन्वस्मिन्नेव ब्राह्मणे "तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद् ब्रह्मावेत्

१ ब्राह्मणे इति पा० ।

यस्मात् सर्वमभवदिति पृष्ट्वा तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मा-त्तत्सर्वमभवत्तद्योयो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणा''मिति ब्रह्म-शब्दवाच्यस्य अविद्यातिरोहितस्य अहं ब्रह्मा-स्मीति ज्ञानेन सर्वात्मभावापत्तिश्रवणात्परब्रह्मणोऽविद्यातिरोधानास-म्भवात्, ब्राह्मणादिषु तत्सम्भवादुपक्रमस्थब्रह्म-शब्दो ब्राह्मणवर्णपर इत्य-त्राऽपि तदनुरोधेन ब्राह्मणवर्णपरत्वं ब्रह्म-शब्दस्योपपन्नमिति नैवम् उपक्रमेऽपि ब्रह्म-शब्दस्य परमात्मपरत्वात्तत्र चानादिविद्यातिरोधानं श्रूयते, तद्वाचकशब्दाभावात्, तथा हि ''ब्रह्मविद्यया सर्वं भविष्यन्तः सर्व-शब्दवाच्यपरमात्मपर्यन्ताविर्भावकामा मनुष्या मन्यन्ते किमु तद्ब्र-ह्मावेद्यस्मात्तत् सर्वमभवद्''ति, तद् ब्रह्म किं वेद्यं वस्त्वन्तरमवेद्य-स्माद्वेदनात् तत् सर्वमभवदिति ब्रह्मणोऽपि परं तदुपास्यं वस्त्वस्ति न वेति बुभुत्सोत्थापिता, उपास्यान्तरशून्यमित्युत्तरमाह तदात्मानमेवावे-दहं ब्रह्माऽस्मि तस्मात्तत्सर्वमभवदिति आत्मानमेवावेन्न त्वन्यदुपास्यं तस्मात्तत् सर्वमभवदिति अर्थः, अन्यवेदनस्योपायत्वनिषेधे तात्पर्यं न तु स्ववेदनस्योपायत्वविधाने यथा ''स कारणं करणाधिपाधिपो न चास्य क-श्चिज्जनिता न चाधिप'' इति कारणान्तरनिषेधेन परमकारणत्वसिद्धिः, एव-मुपास्यान्तरनिषेधेन ब्रह्मणः परमोपास्यत्वमिह विवक्षितं कारणान्तराभावा-फलमुपास्यान्तराभावः कारणस्यैव हि ध्येयत्वम्, एवमुपास्यान्तरशून्यं ब्रह्म जानतः फलमाह ''तद्योय'' इति, अतः उपक्रमैकार्थ्यं च परमात्मपरत्वसाधकं तस्माद्ब्रह्म वा इदमग्र आसीदेकमेवेत्यादिवाक्यस्य परमपुरुषस्य परत्वं सिद्धं, तथा बृहदारण्यक एव आत्मैवेदमग्र आसीत्पुरुषविधः सोऽन्वीक्ष्य नान्यदात्म-नोऽपश्यदित्यादि श्रूयते, इहात्म-शब्दादीक्षणाच्च चेतनस्य प्रतिपाद्य-त्वेऽपि न स परमात्मा स हि निरतिशयानन्दः, इह च सोऽबिभेत्तस्मादेकाकी ह बिभेति स सहायमैच्छ''दिति भयान्वयोऽवगतः, परमात्मा हि न भया-श्रयः किन्तु भयहेतुः ''भीषाऽस्माद्वातः पवत'' इति श्रुतेरिति, उच्यते-अयं परमात्मा कारणवाक्यसारूप्यादस्य वाक्यस्य अग्र आसीदिति कारणवाक्य-त्वं हि प्रतीयते अस्यात्मनः पुरुषविधत्वं चानन्दमयत्वं ज्ञापयति आत्मन

आकाशः संभूत इत्युपक्रम्य अन्योऽन्तर आत्माऽऽनन्दमय इत्युक्त्वा तस्य पुरुषविधत्वप्रतिपादनात् "स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान् पाप्मन, औषत् तस्मात्पुरुष" इति सर्वपाप्मप्रदाहकत्वपुरुष-शब्दवाच्यत्वावगमाच्च एष एव भयान्वयस्तु न परमात्मनः किन्तु तत्कार्यभूतपुरुषस्य सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहं-नामाभवदिति तत्रैव ह्युक्तम्, अहमिति हिरण्यगर्भनाम अहमभिमानाश्रयव्यष्टिपुरुषाणां प्रथमत्वाद्धिरण्यगर्भस्य, तथा मोक्षधर्मे च चतुर्मुखस्याहङ्कारसंज्ञत्वमवगम्यते "मया सृष्टः पुरा ब्रह्मा यद्यज्ञमयजत्स्वयम् । ततस्तस्मै वरान् प्रीतोददावहमनुत्तमान् । मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च । अहङ्कारकृतं चैव तथा पर्यायवाचकमि"ति, तत्रैव भृगुभरद्वाजसंवादे "तस्मात्पद्मात्समभवद् ब्रह्मा वेदमयोविधिः । अहङ्कार इति ख्यातः सर्वभूतात्मभूतकृत् ॥ ब्रह्मा वै सुमहातेजा य एते पञ्च धातव" इत्युक्तत्वात्, तस्मादयमर्थः-अहमस्मि अहं स्यां चतुर्मुखः स्यामिति सङ्कल्पवाक्यं व्याहरत्ततोऽहं-नामा चतुर्मुखोऽभवदित्यर्थः, अतश्चतुर्मुखरूपस्य परमात्मनः प्रकृतत्वात्तस्य सर्वपाप्मप्रदाहकत्वं साक्षाद्विशेषणमुक्तं, तद्रूपभूतश्चतुर्मुखः सोऽबिभेदिति भयाश्रयतयोच्यत इति, अतः आत्मा परमात्मेति स्थितं, तथाऽत्रैव वृहदारण्यके श्रूयते "नैवेह किञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीदशनायया हि मृत्युः तन्मनोऽकुरुतेत्यादि अत्र मृत्युसंज्ञो न परमात्मा तदसाधारणधर्माश्रवणात्तस्याशनायाविशिष्टत्वाच्च, अविजिघत्सोऽपिपास इति हि परः श्रूयते सोऽर्चन्नचरदिति तस्यार्चनादिकर्मकर्तृत्वं श्रूयते परश्चाकर्मवश्यः "स एष सर्वेभ्यः पाप्मभ्य उदितः अपहतपाप्मे"ति श्रवणात्, अत एव अप्रतत्त्वसृष्ट्या नारायण इति च न शङ्क्यम् "अपहतपाप्मा दिव्यो देव एको नारायण" इति तस्यापहतपाप्मत्वादतः प्रसिद्धमृत्युरिह विवक्षितः सूर्यो वा तदर्कस्यार्कत्वमित्युक्तत्वात्, उच्यते-अग्र इति कारणावस्थत्वादयं मृत्युसंज्ञोऽचिच्छरीरकः परमात्मा "यस्य मृत्युश्शरीरं स दिव्यो देव एको नारायण इति श्रुतेः, अशनाया नाम जगत्संजिहीर्षा तद्वत्तया अशनाया-शब्दस्तस्मिन् प्रयुक्तः, तन्मनोऽकुरुतेति मनस्कारश्च परत्वसाधकः, अर्चन्निति पदस्यायमर्थः-अर्चनं-प्रीणनं कर्मकारकं च स्वयमेव अश्रुताध्या-

हारादपि प्रकृतस्यैव कर्मत्वोपपत्तेः "लक्षणहेत्वोः क्रियाया" इति शत्रन्त-तया जगद्व्यापारलीलया स्वात्मानं प्रीणयितुमाचरदित्यर्थः, अपां सृष्टिश्च स्रष्टुर्नारायणत्वे लिङ्गम् । "एको ह वै नारायण आसीदित्युपक्रम्य "ता इमा आप" इति श्रुतेः, अर्क-शब्दश्च परस्मिन् प्रीणनगुणयोगाद्वर्तते, अत एव हि भगवन्नामसहस्रे पठ्यते "अर्को वाजसनः शृङ्गी" ति, अपां रसः सारांशः तत्सम-हन्यत सा पृथिव्यभव" दिति ब्रह्माण्डसृष्टिरुच्यते ता इमा आपः तद्धिरण्म-यमण्डमभवदिति महोपनिषदैकार्थ्यादतोमृत्युशरीरो नारायण इह प्रति-पाद्यस्सुबालोपनिषदि तदाहुः किन्तदासीत्तस्मै सहोवाच न सन्नासन्न स-दसदि" ति तस्मात्तमः सञ्जायत इति श्रूयते अत्रेतरणादिकं नावऽगम्यते धर्मिवाचिशब्दश्च सद्ब्रह्मात्मादिर्न प्रयुक्तः, अतस्सदसदनिर्वचनीयं कारणं प्रतीयते, उत्तरत्र प्रतिपाद्यमानो नारायण एव न परमकारणं तमःप्रभृतिसृष्टि-मुक्त्वा तदण्डं समभवदिति अण्डोत्पत्तिमभिधाय मध्ये पुरुषो दिव्यः सहस्रशीर्षा पुरुष" इति तस्य कार्यान्तर्वर्तित्वप्रतिपादनात् मृत्युर्वै परे देव एकीभवति परस्तान्न सन्नासन्न सदसदिति सदसदुभयविलक्षणस्य देवात् परत्वं चावगम्यते, नैवम् उच्यते कारणत्वादेव नारायणपरत्वं सिद्धम् अस्यामुपनिषदि नारायणस्यैव भूयो भूयः प्रतिपादनं च तात्पर्यलिङ्गं योऽयं विज्ञानघन उत्क्रामन् स केन कतरद्वा स्थानमुत्सृज्योत्क्रामति तस्मै सहोवा-चेत्युपक्रम्य अपुनर्भवाय कोशं भिनत्तीत्यारभ्य अक्षरं भित्त्वा मृत्युं भिनत्ति मृत्युर्वै परे देव एकीभवति स परस्तान्न सन्नासन्न सदसदिति मृत्योः परे देवे एकीभावः श्रूयते, मृत्युश्च तमःस्थानप्रमाणात्तद्धि अक्षरात्परं श्रुतम् अतस्तम-स्संज्ञमृत्योः कारणं सदसदुभयविलक्षणतयोक्तं वस्तु परो देव इति प्रतीयते, विभागापादनस्यैवाविभागस्थानत्वात्, परो देवश्च नारायणः "दिव्यो देव एको नारायण इत्युक्तत्वात्" न च देवात्परं सदसदुभयविलक्षणं किन्तु देव एव मृत्युसंज्ञतमोपादानाविभागस्थानयोरेकत्वात्, अतस्तमोपादानत्वावि-भा[1]वस्थानत्वाभ्यां देवत्वावगमाद्देवस्य नारायणत्वान्मुक्तप्राप्यत्वाच्च नारा-यण एव सदसदुभयविलक्षणः केवलाच्चेतनादचेतनान्मिश्रिततदुभयरूपव्य

१ तमोपादानत्वाविभागस्थानत्वाभ्यामिति पा० ।

ष्टिभ्यश्च विलक्षणतया नारायणो न सन्नासन्न सदसदित्युच्यते मध्ये पुरुषो-द्दिव्य इति वाक्यं तस्याण्डमध्ये स्वसृष्टचतुर्मुखरूपेणावस्थानं दर्शयति केवलपुरुष-शब्दश्चतुर्मुखपरः तच्छरीरकः परमात्मा सहस्रशीर्षा पुरुष इत्युच्यते सोऽग्रे च भूतानां मृत्युमसृजदिति त्रिशिरस्कमृत्युसृष्टिश्चतुर्मुखरूपधरपरमात्मकर्तृका, अत एव हि तस्य ब्रह्माभिभीत इत्यनन्तरमुच्यते, अतो न सन्नासन्न सददित्युक्तं जगत्कारणं नारायण इति स्थितम्। असावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माऽप्येति य एवं वेद तदुक्तमृषिणा "सूर्य आत्मा जगतस्तस्थुषश्चे"त्यादिष्वपि, असावादित्य इत्यपरोक्षनिर्देशापवादकचिदचिद्भावर्त्तकधर्मान्तराश्रवणात्प्रसिद्धादादित्यामुमुक्षूपास्य आत्मेति न शङ्कनीयं जगदन्तरात्मत्वस्य ब्रह्मसाम्यापत्तिपूर्वकब्रह्मप्राप्तिरूपमोक्षोपायभूतवेदनविषयत्वस्य च परमकारणव्याप्तत्वात्, कारणत्वस्य च परमपुरुषत्वसाधकत्वादवयवशक्त्याऽपर्यवसानाद्वा सूर्यादिशब्दवाच्यपरमपुरुषविषयं सूर्य आत्मेत्यादिवाक्यं, तथा प्रश्नोपनिषदि च "कुतो ह वा इमाः प्रजा जायन्त इति तस्मै सहोवाच प्रजाकामो ह वै प्रजापतिः स तपोऽतप्यत रयिं च प्राणञ्चेत्येतौ मे बहुधा प्रजाः करिष्यन्त इति इत्यादित्यो ह वै प्राणोरयिरेव चन्द्रमा इत्यादि श्रूयते, इहापीक्षणविशेषनिरतिशयानन्दाद्यश्रवणात्स तपोऽतप्यतेति कर्माधीनसृष्ट्यवगमाच्च चतुर्मुख एवेति न शङ्कनीयं किन्तु चन्द्रादित्यादिसृष्टेरण्डान्तर्वर्तिविषयायाश्चतुर्मुखकर्तृकत्वसंभवेऽपि तदन्तर्यामिपरमपुरुष एव प्रजापति-शब्दवाच्यः अपर्यवसानादवयवशक्त्या वा तस्यैव वाच्यत्वं स्यात्, अस्मिन्नेव खण्डे परब्रह्मप्राप्तेरुक्तत्वात्, तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्यादित्यमभिजायन्त" इत्युक्त्वा "एतस्मान्न पुनरावर्त्तन्त" इति अर्चिरादिगत्याऽनावृत्तिप्रतिपादना "देषां तपोब्रह्मचर्यं येषु सत्यं प्रतिष्ठितं तेषामसौ विरजो ब्रह्मलोक" इति निर्दोषपरमात्मलाभवचनाच्च ब्रह्मैव लोकोलोकः, विरज-शब्देन प्रसिद्धब्रह्मलोकव्यावृत्तेः, अतः परमात्मपरत्वं हि प्रतीयते, उत्तरखण्डेषु च "एष हि द्रष्टा श्रोता घ्राता रसयितेत्यादिना प्रत्यगात्मा विशोध्यते ततश्चोपरिष्टात्परमेपुरुषमभिध्यायीत-परात्परं पुरिशयं पुरुषमीक्षते इति परमपुरुषोपासनं तत्प्राप्तिरूपफलं च

श्रूयते, अत उपक्रमे प्रजापति-शब्दवाच्यो महावाक्यस्वारस्यात्परमपुरुष इति सिद्धम् । हिरण्यगर्भस्समवर्त्तताग्र इत्यत्रापि प्रसिद्धहिरण्यगर्भ एव कारणत्वेन विवक्षितः तद्व्यावर्त्तकधर्माश्रवणात्, न ह्यत्र समस्तकार्योत्पत्त्यनुगुणेक्षणविशेषानवधिकानन्दाकर्मवश्यत्वादयोऽवगम्यन्ते, पृथिव्यादिधारकत्वं तु न व्यावर्त्तकम् अण्डान्तर्गतपदार्थधारणादेरण्डाधिपतौ संभवाद्, अमृतमृत्युशब्दौ च देवभोग्यप्राणापहर्तृविषयाविति तयोस्तन्नियाम्यत्वं पृथिव्याद्याधारत्वादीनां चिदचिद्व्यावर्त्तकत्वेऽपि परमपुरुषसाधारणत्वाभावात्प्रसिद्धहिरण्यगर्भपरत्वमिति शङ्कायामुच्यते हिरण्यगर्भ-शब्दो भगवत्परः अग्रे समवर्त्ततेति कारणत्वश्रवणादनवच्छिन्नपतित्वञ्च भगवदसाधारणं पतिं विश्वस्ये''ति नारायणानुवाके श्रवणात्, तस्य चानन्यपरत्वं वक्ष्यते, द्युपृथिव्यादिधारणं च तदसाधारणं "विष्णुना विधृते भूमी" इति श्रुतेः, कारणप्रकरणस्थावमृतमृत्यु-शब्दौ मुक्तबद्धपराविति, बन्धमोक्षहेतुत्वं च तदसाधारणं "तमेवं विद्वानमृत इह भवति नान्यः पन्थाः" इति श्रुतेः, "यस्य विश्व उपासते प्रशिषं यस्य देवा यत्राधिसूर उदितो व्येती''ति प्रतिपादितम् आदित्यादिसर्वदेवतानियमनञ्च तत्प्रत्यभिज्ञापकं "भीषास्माद्वातः पवते भीषोदेति सूर्यः य आदित्येतिष्ठन् यः सर्वेसु देवेषु तिष्ठन्नित्या''दिश्रुतिप्रसिद्धेः किञ्च "यमन्तस्समुद्रे कवयो वयन्ति विद्युतः पुरुषादधीति समुद्रान्तर्वर्तिविद्युद्वर्णपुरुषप्रतिपादकेनाम्भस्य पार इत्यनुवाकेन लक्ष्मीपतित्वप्रतिपादकेनोत्तरनारायणेनास्याष्टर्चस्यैकत्वाच्च, नारायणपरत्वम् । अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टाविति ह्युच्यते विष्णुस्मृतौ च भगवत्समाराधने "हिरण्यगर्भस्समवर्त्तताग्र इत्यष्टाभिर्हविर्निवेदयेदिति हविर्निवेदने विनियोगादस्याष्टर्चस्य भगवत्प्रतिपादकत्वमवगम्यते, अत एव हिरण्यगर्भः शत्रुघ्न इति भगवन्नामसहस्रे पठ्यते, अतोऽत्र हिरण्यगर्भ-शब्दवाच्यो नारायण इति स्थितम् । अत एव "सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पय''दित्यत्र धातृ-शब्दश्च परमपुरुषविषयो निश्चितः, इदं हि वाक्यम् अम्भस्यपार इत्यनुवाकस्थम् । नन्वत्राप्युपक्रमे प्रजापतिश्चरति गर्भे अन्तरिति प्रजापतिः श्रुतः, प्रजापतिश्च हिरण्यगर्भः समुद्रशायित्वलिङ्गसचिवपुरुष-शब्दश्रुतेरुपक्रमोपसंहा-

रस्यप्रजापतिधातृशब्दरूपश्रुतिद्वयपरास्तत्वादिति । न उपक्रमस्य प्रजापति-शब्दस्य हिरण्यगर्भपरत्वानुपपत्तेः, "तदेवाग्निस्तद्वायुस्तत् सूर्यस्तदु चन्द्रमाः तदेव शुक्रममृतन्तद् ब्रह्म तदापस्सप्रजापति' रित्यग्निवाय्वादीनामिवप्रजा-पतेरपि कारणभूतप्रजापतिविभूतितया तद्व्यतिरेको ह्यवगम्यते, यथा "यमि-न्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः यो देवानां देवतमस्तमोजाः तस्मा इन्द्राय सुतमाजुहोमी"त्यत्र इन्द्र-शब्दवाच्यस्य प्रसिद्धेन्द्रव्यतिरिक्त-त्वावगमः, अतस्सूर्याचन्द्रमसौ धातेत्यत्र धातृ-शब्दस्तपश्शब्देन पूर्वप्रस्तुत-परमात्मपरः, अत एव धातुः प्रसादान्महिमानमीशमित्यत्र धातृ-शब्दोऽपि व्याख्यातः, मुमुक्षूपास्यत्वस्य कारणत्वव्याप्तत्वात्, "अजस्य नाभावध्येकम-र्पितं यस्मिन्निदं विश्वं भुवनमधिश्रितं विश्वकर्मा ह्यजनिष्ट देवः स प्रजापति-रेकः पुष्करपर्णे समभवत्" यन्नाभिपद्मादभवन्महात्मा प्रजापतिर्विश्वसृग् विश्वरूपः तत्र ब्रह्मा चतुर्मुखोऽजायत, नारायणाद् ब्रह्मा जायते, यो ब्रह्माणं विदधाति पूर्वमित्यादिभिश्चतुर्मुखस्य भगवन्नाभिपद्मसृष्टत्वावग-मात्कार्यभूते तस्मिन्नसम्भवेन मुमुक्षूपास्यत्वस्य भगवदसाधारणत्वादुपक्र-मभूते अम्भस्य पार इत्यनुवाके "य एनं विदुरमृतास्ते भवन्तीति" भगवत एवामृतत्वप्राप्त्युपायताप्रतिपादनस्यानुरोद्धव्यत्वात्, उपक्रमस्थधातृ-शब्दै-करूप्यस्य न्याय्यत्वादुत्तरे चानुवाके चतुर्मुखशिवयोरिन्द्रवन्नारायणविभूतित्व-प्रतिपादनादस्मिन्नप्यनुवाके "यस्मात्परं नापर"मिति मन्त्रेण परमपुरुषस्यैव सर्वस्मात्परत्वप्रतिपादनात्, ब्रह्मकार्यवर्गप्रतिपादनप्रकरणे "ब्रह्मा देवानां पदवीः कवीना"मिति मन्त्रेण प्राणसमुद्रादीनामिव चतुर्मुखस्य कार्यत्वाव-गमाच्च । ननु सप्त प्राणाः प्रभवन्तीतिवन्नोत्पत्तिः श्रूयते न महिषश्ये-नादीनामिवोत्पत्तेः प्रकरणसिद्धत्वात्तस्य बाधकाभावाच्च । ननु यस्मात्पर-मित्यतः पूर्वमेव "विश्वाधिको रुद्रोमहर्षि"रिति श्रवणात् "यः परः स महे-श्वर." इत्युपसंहारे श्रुतत्वाच्च धातृ-शब्दस्याऽपि रुद्रपरत्वं न्याय्यमिति उच्यते-उपक्रमस्थतया प्रबलस्य धातृ-शब्दस्य रूढिपरित्यागे को हेतुः उपसंहारो हि दुर्बलः, रुद्रमहेश्वरशब्दरूपश्रुतिद्वयमिति चेत्तथाऽपि न बाधकत्वं, तुल्यबलत्वाद्धातृपदश्रुतिरेकाऽप्युपक्रमस्थतयाऽनुगृहीता रुद्रमहे-

श्वरश्रुत्योरनेकत्वेऽप्युपक्रमविरोधाद्दुर्बलत्वं, तस्मात्तुल्यबलता । किञ्च यो देवानां प्रथमं पुरस्ताद्यः परस्स महेश्वर इत्यनुवादरूपवाक्यस्थत्वाच्च दौर्बल्यमधिकम्, अतो धातृरुद्रमहेश्वरशब्दानामन्योन्यविरोधात् अन्योऽन्यबाध्यबाधकभावानुपपत्तेश्च अर्थनिश्चायकत्वेऽनुपपन्ने सति प्रमाणान्तरायत्तोऽर्थनिश्चयः, तत्र धातृ-शब्दस्य भगवत्परत्वमुपपादितं तदुपपादकहेतुभिः धातृशब्दरूढित्यागेनाप्यप्रायन्यायाच्च रुद्रमहेश्वरशब्दयोरपि रूढित्यागस्य न्याय्यत्वाद्, यो देवानां यः पर इत्यनुवादस्यान्यसापेक्षत्वात् अ इति ब्रह्मेति श्रुत्या ब्रह्मणोऽकारवाच्यत्वावगमाद्, ब्रह्मणश्च लक्षणं जगत्कारणत्वमिति कारणवाक्यप्रतिपाद्यनारायणस्याकारवाच्यत्वावगमात्तस्य लोकप्रसिद्धत्वा"दकारेणोच्यते विष्णु"रिति श्रुत्यन्तराच्च नारायणस्याकारवाच्यतासिद्धेश्च रुद्रमहेश्वर-शब्दौ रोदयति महानीश्वर इति अवयवशक्त्या भगवत्पराविति युक्तं, नारायणस्यैव यच्छब्दानूदितत्वात्तस्यैव हि महेश्वरत्वरूपगुणविधानं युज्यते, न हि जुहूमनूद्य विधीयमानं पर्णमयत्वं कपालस्य भवति, अतो धातृरुद्रमहेश्वर-शब्दवाच्यो नारायण इति स्थितम् । अतएव श्वेताश्वतरोपनिषदि च "विश्वाधिको रुद्रो महर्षिः हिरण्यगर्भं जनयामास पूर्व"मिति वाक्यं च व्याख्यातम् अनुवादरूपतया पूर्वोदाहृतप्रमाणान्तरसापेक्षत्वात्, तथा हि बह्वृच-शतपथ-सुबाल-महोपनिषत्-सामवचनादिभिर्हिरण्यगर्भजन्यत्वे श्वेताश्वतरवाक्येन, हिरण्यगर्भजनकत्वे च रुद्रस्यावगम्यमाने तयोरविरोधेन निर्वाहासम्भवे प्राबल्यदौर्बल्यचिन्ता युक्ता, अविरोधश्च वस्त्वैक्येन वा कल्पभेदेन वा, जन्मनोऽवताररूपतया वा, सम्भवेत्तत्र तावद्वस्त्वैक्यमिह नाविरोधनिर्वाहक्षमं भवेत् क्षीराद्दधि दध्नः क्षीरमितिवचसोरिवावस्थाद्वयपौर्वापर्यविपर्यासविरोधस्य दुष्परिहरत्वात्, कल्पभेदादविरोधकल्पनं सूर्याकाशप्राणादिष्वपि प्रसज्जेत्, । ननु अश्रुतस्य कल्पभेदस्य कल्पनमनन्यथासिद्धेन कल्पकेन स्यात्सूर्याकाशादिविषयवाक्यानां परमात्मपरतयाऽप्युपपत्तौ न तत्कल्पनमिति चेत्, इहाऽपि तुल्यम्, अवतारपक्षेऽपि इन्द्रादिप्रकरणेष्विव हिरण्यगर्भरुद्रप्रकरणेष्वपि तस्याश्रुतत्वादिन्द्रादीना-

मिव कर्मवश्यत्वं प्रतिपादयन्त्यामुत्पत्तिश्रुतौ परिपन्थिन्यामन्यतरोत्पत्तेरवतारक्षपत्वकल्पनायोगादनुपपन्नः रुद्रस्यानपहतपाप्मत्वं च शतपथेऽवगतम्-अनपहतपाप्मा वाऽहमस्मीति रुद्रवचः, अत एवैक एवेश्वरः कदाचिद्धिरण्य गर्भावस्थात्स्वस्माद् रुद्ररूपोऽवतरति कदाचिद्रुद्रावस्थात्स्वस्माद् हिरण्यगर्भरूपो ऽवतरतीति कल्पनमप्यनुपपन्नं गौरवनिरस्तं च वस्त्वैक्यं द्वयोरुत्पत्त्योरवतारक्षपत्वमपि हि कल्प्यं वस्त्वैक्यकल्पभेदजन्मद्वयावतारक्षपत्वपक्षेषु रुद्रोत्कर्षणवादिमतं च न जीवति, एवं विरोधस्य दुष्परिहरत्वे सति हिरण्यगर्भरुद्रशब्दयोरन्यतरपदप्रसिद्ध्यनादरेण निर्वाहः स्याद्यथाऽऽकाशादिपदानान्तत्र हिरण्यगर्भ-शब्दस्य प्रसिद्ध्यनादरेण स्कन्दाद्युत्पत्तिरुक्ता स्यात्ततश्च रुद्रस्य परमकारणत्वं न सिद्ध्येच्चतुर्मुखकार्यत्वस्य श्रुत्यन्तरावगतस्यानपोदित्वात्ततोऽपि रुद्र-शब्दस्यैव प्रसिद्ध्यनादरो न्याय्यः प्रसिद्धेतरार्थपरिग्रहस्य मानान्तराधीनत्वान्मानान्तरप्रसिद्धिद्योतकस्य यद्वृत्तस्य रुद्रसामानाधिकरण्याच्च, रुद्र-शब्दस्य मानान्तरानुगुणेऽर्थे निश्चिते तावतैव विरोधस्य परिहृतत्वेन हिरण्यगर्भशब्दप्रसिद्ध्यनादरे कारणाभावात्, तथा च श्रुतयो रुद्रस्य कार्यत्वं हिरण्यगर्भस्य स्रष्टृत्वं चावगमयन्ति बह्वृचे तावत् "तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेष नृम्णः सद्यो जज्ञानो निरणाति शत्रूनि"ति । न चास्य मन्त्रस्य उदगादिति ब्राह्मणानुरोधेनादित्यविषयत्वं शङ्कनीयं भूतपतित्वसद्योजातत्वाभ्यामुग्र-शब्दरूढिबलाच्च रुद्रविषयत्वसिद्धेरुदयलिङ्गस्य दुर्बलत्वादूदगादिति पदस्य तदुत्पत्तिदर्शनयोरन्यतरपरत्वेऽपि मुख्यवृत्तिभङ्गाभावाद्विरोधिहेत्वन्तराभावाच्च । तथा सुबालोपनिषदि अपानान्निषादायक्षराक्षसगन्धर्वाश्चास्थिभ्यः पर्वता लोमभ्य ओषधिवनस्पतयो ललाटात्क्रोधजो रुद्रो ऽजायत इति महोपनिषदि अथ पुनरेव नारायणः सोऽन्यं कामं मनसा ध्यायीत त्र्यक्षः शूलपाणिः पुरुषो ऽजायत नारायणोपनिषदि "नारायणाद् रुद्रो ऽजायत इति, बृहदारण्यके ब्रह्म वा इदमग्र आसीत्तदेकं सन्नव्यभवत् यान्येतानि देवनक्षत्राणि इन्द्रो वरुणस्सोमो रुद्रः पर्जन्योयमोमृत्युरीशान" इति, शतपथे चाष्टमूर्त्तिब्राह्मणे अभूद्वा इदमप्रतिष्ठित्यारभ्य "भूतानां च प्रजापतिः संव-

द्विविशेषितस्य तत्राऽपि दहूं गगनं विशोकः दहरोऽस्मिन्नन्तर आकाश इत्यादिवाक्यस्यगगनादिशब्दस्येव प्रसिद्धार्थपरत्वाभावेन भगवत्परत्व-सिद्धिः। नन्विदमिष्टं रुद्र–शब्दस्य कार्य्यव्यवच्छेदेन कारणरुद्रपरत्वं, सत्यं, स तु परमपुरुष एव तस्यैव परमकारणत्वात् । ननु रुद्र एक एव कारणा-वस्थः प्रतिपाद्यत इति चेदिन्द्र एव वा आकाश एव वा कारणावस्थः तत्तद्वाक्यप्रतिपाद्यः किं न स्यात्, इन्द्रादेः प्रसिद्धस्यैव परमकारणावस्था-सद्भावे मानान्तराभावादिति चेत्, तत एवात्राऽपि प्रसिद्धस्यैव परमका-रणत्वासिद्धिरिति तुल्यं, शिवादिशब्दानां विशेषोपस्थापनात्समत्वमुक्तम् अतोऽस्य वाक्यस्य भगवद्विषयत्वं सिद्धम् । यद्यपि कल्पभेदेन हिरण्यगर्भज-नकत्वेऽपि रुद्रस्य न भगवतः परमकारणत्वविरोधः तथाऽपि न्यायपर्या-लोचनायां नारायणपरत्वं रुद्र–शब्दस्य युज्यत इति प्रतीयते। किञ्चास्याम-प्युपनिषदि प्रथमद्वितीयखण्डयोर्देवात्मशक्तिं प्रेरितारं च मत्वा व्यक्ताव्यक्तं भरते विश्वमीशः, यदात्मतत्त्वेन तु ब्रह्म तत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् ज्ञात्वा देवम् एको हि देवः प्रदिशोऽनुसर्वा इति देवात्मप्रेरित्रीशब्रह्मशब्दैः परमात्मा निर्द्दिष्टः, ते च दिव्यो देव एको नारायणः विश्वं नारायणं देव-मक्षरं परमं प्रभुम् । आत्मा नारायणः परः अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समा-श्रितः ईशः सर्वस्य जगतः येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मवि-द्याम्" इत्यादिवाक्यप्रतिपन्ननारायणप्रत्यभिज्ञापकाः, अत्रेश–शब्दश्च न रूढः प्रयुक्तः किन्तु गुणयोगात्, अनीशश्चात्मा द्वावजावीशनिशौ, ईशः सर्व-स्येति निर्देशस्य सप्रतिसम्बन्धितया अवयवार्थविवक्षाज्ञापकत्वादनन्तश्चात्मा विश्वरूपो ह्यकर्त्तेत्यत्रानन्त–शब्दस्तु योगरूढः, रूढ्यविवक्षानिमित्तसप्रतियो-गिकनिर्द्देशाभावात्, तृतीये च य एतद्विदुरमृतास्ते भवन्तीत्यनेनाम्भस्यपार इत्यनुवाकः प्रत्यभिज्ञाप्यते स हि परमपुरुषविषयः एवमुपक्रमोभगवत्परः "एको हि रुद्र इत्यस्यानन्तरं विश्वतश्चक्षुरुत विश्वतो मुख इत्यादिमन्त्रश्च भगव-त्प्रत्यभिज्ञापकः, तस्य विद्युद्वर्णपुरुषविषयत्वात्, द्यावापृथिवी जनयन्निति च शीर्ष्णोद्यौस्समवर्त्तत पद्भ्यां भूमिरिति वाक्यप्रत्यभिज्ञापकं यो यो देवा-नामिति वाक्यमनुवादरूपमिति स्फुटं, कार्यस्य परमकारणत्वायोगाद्रुद्र-

शब्दस्य कार्य्यरुद्रव्यतिरिक्तविषयत्वे सति वाक्यस्यानुवादरूपतया योग्यार्थप्रापकवाक्यानुगुणम् अनन्यभगवदसाधारणविशेषणानुगुणं च भगवद्विषयत्वनिश्चयः "या ते रुद्र शिवा तनूरित्यस्यानन्तरं ततः परं ब्रह्म परं बृहन्तमिति वाक्यं च नारायणः परं ब्रह्मेति महोपनिषत्प्रत्यभिज्ञापकम् ईशं तं ज्ञात्वाऽमृता भवन्तीत्यत्र ईश-शब्दः पूर्ववद्यौगिकः वेदाहमेतमित्यन्तरवाक्यस्यैतच्छब्दश्च पूर्वं रुद्र-शब्दवाच्यस्य महापुरुषतामवगमयति प्रकृतपरामर्शित्वात्ततोयदुत्तरतरमिति वाक्यन्तु परमतस्सेतून्मानेत्यत्र उपपादयिष्यते, सर्वाननशिरोग्रीवत्वञ्च पुंसूक्तार्थस्मारकं, सर्वव्यापिपदन्तु सर्वं व्याप्य नारायणः स्थित इत्येतत् स्मारयति, भगवच्छब्दस्तु भगवान् पवित्रं वासुदेवः पवित्रम्भगवान् वासुदेवः परा प्रकृतिः परं पवित्रं भगवान् वासुदेवः ये भगवन्तं वासुदेवमेवं विदुरिति वासुदेवासाधारणः अत एव हि स्मर्यते "एवमेव महाशब्दो मैत्रेय भगवानिति परमब्रह्मभूतस्य वासुदेवस्य नान्यग" इति, सत्त्वप्रवर्त्तकत्वं भगवत इति स्फुटं, "यो ह खलु वा अस्य सात्त्विकोऽशः सोऽसौ ब्रह्मचारिणोयोऽयं विष्णु"रिति मैत्रायणीयश्रुतेः, अन्तरात्मत्वं च तदा सुबालोपनिषत्प्रत्यभिज्ञापकत्वात् हृदा मनीषेति तु विद्युद्वर्णपुरुषस्मारकम् । अथ सहस्रशीर्षेत्यादिमन्त्रद्वयमेवाधीतम् ईशानपदं तु नपुंसकत्वाद्यौगिकमेव न तु रूढं पुंल्लिङ्गताप्रसङ्गात्सर्वस्य शरणं सुहृदिति नारायणो माता पिता भ्राता निवासश्शरणं सुहृद्गतिर्नारायण" इति श्रुतिप्रत्यभिज्ञापकं तमाहुरग्र्यं पुरुषं महान्तमिति महापुरुष एव स्पष्टमुक्तः, धातृ-शब्दमपि महापुरुष एव स्पष्टमुक्तः धातृशब्दैकार्थतया अणोरणीयानिति चतुर्थे च "द्वा सुपर्णेत्यादिमन्त्रद्वयं मुण्डोपनिषदैकार्थ्यात्परमपुरुषपरत्वज्ञापकम् । अतो "मायिनं तु महेश्वरमि"ति, महेश्वर-शब्दो मायाप्रेरकत्वपरः, "सर्वलोकमहेश्वरं क्षीरोदस्योत्तरं तीरं जग्मुर्लोकहितार्थिन" इतस्सद्वारमारभ्य वाक्यं 'स्व[1]स्थोमहेश्वर"इत्यादिषु यौगिको महेश्वर-शब्दो भगवति प्रयुक्तः, यस्मिन्निदं सञ्चविचैति सर्वमिति प्रकृतस्य सर्वस्य नियन्तृत्वमीशान-शब्देनोच्यते, पूर्वम् अङ्गुष्ठमात्रः पुरुषो-

१ स्वस्थोमहेश्वर इति पा० ।

मण्डूकसाम्यमिन्द्रस्यादित्यस्य वा तदुभयसाम्यं भगवतो वा तैः साम्यं भवतीति, अथर्वशिखायाञ्च "कारणं तु ध्येयः सर्वैश्वर्य्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये ध्येय इति प्रतिपाद्यमानं ध्येयत्वं परमपुरुषासाधारणधर्मान्तराश्रवणात्प्रसिद्धशम्भुविषयमिति न शङ्कनीयं कारणत्वस्य तदसाधारण्यादेव तद्व्याप्तस्य मुमुक्षुध्येयत्वस्याऽपि तदसाधारणत्वात्। किञ्चास्य प्रकरणस्य कश्च ध्येय इत्युपक्रम्य कारणन्तु ध्येय इत्यनेन कारणत्वमनूद्य ध्येयत्वविधिपरत्वावगमात् पुरुषसूक्तादिप्रतिपन्नस्यैव परमात्मनो ध्येयत्वविधानपरमिदं वाक्यं न च शम्भुः कारणमिति वाक्यवृत्तिः किन्तु कारणं शम्भुर्ध्येय इति अन्यथा कश्च ध्येय इत्यस्योत्तरत्वायोगाऽच्छम्भु-शब्दस्यासाधारण्येऽप्याकाशप्राणादिशब्दवत्परमात्मपरत्वं न्याय्यं, न चायमसाधारणः शम्भुः स्वयम्भूर्द्रुहिण इति नामपाठात् तथा नारदीयपुराणे रुक्माङ्गदचरिते ब्रह्माणं प्रति यमवचने "शृणु मे वचनं शम्भो पितामहपितामह ? मरणादधिकं देव यत् प्रतापस्य खण्डनमि"ति तत्रैव "तमेव देवताश्रेष्ठं सम्प्राप्ते हरिवासरे यदि चालयसे धैर्यात्ततोऽहं तव किङ्करः। स मे शत्रुर्महान् शम्भो तेन लुप्तः पदोममेति द्रुहिणविषयतया प्रयुक्तत्वात्, "विश्वात्तं विश्वशम्भुव"मिति भगवत्यपि श्रौतप्रयोगाच्च, ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे सम्प्रसूयन्त इति उत्पत्तिवादश्चानुवादरूपत्वात् प्रापकवाक्यानुरोधीति भगवदुत्पत्तिरवतारूपानूद्यते, भगवता सूत्रकारेणैव अथर्वशिखावाक्यस्यस्य शम्भुशब्दस्य भगवद्विषयत्वमुत्पत्तेरवतारूपत्वञ्चोपबृंहितम् "इति नारायणः शम्भुर्भगवान् जगतः प्रभुः। आदिश्य विबुधान् सर्वानजायत यदोः कुल" इति अवतारवचने शम्भु-शब्दस्य नारायणविषय-दर्शनात्पूर्ववाक्यप्रतिपन्नस्य भगवज्जन्मनोऽवतारूपत्वं शम्भु-शब्दस्य भगवद्विषयत्वं च हि दर्शितम्। ईशान-शब्दश्च यौगिकः कारणविशेषणं सर्वस्येशान इति श्रुत्यन्तरे सप्रतियोगिकनिर्देशादिहाऽपि तत्प्रत्यभिज्ञानात्, प्रयोगसाधारण्याच्च। मोक्षधर्मे हि "तस्मात्प्रसूतो यः कर्ता कार्यं कारणमेव च। सोऽनिरुद्धः स ईशानो व्यक्तिः सा सर्वकर्मस्वि"ति भगवति प्रयुज्यते, तत्र भगवद्वचनेन "नित्यं हि नाऽस्ति जगति भूतं स्थावरजङ्गमम्। ऋते मामेकमीशानं पुरुषं लोकजीवनमिति च

प्रयुक्तः । ननु न कारणं विशेष्यते किन्तु शम्भोरेव कारण-शब्दस्तु तद्विशेषणम् अन्यथा कारणं तु ध्येय इति पुँल्लिङ्गाद्यनुपपत्तेः, सत्यं, शम्भु-शब्दो विशेष्यसमर्पकः ततः किं प्रसिद्धशम्भोर्ध्येयत्वसिद्धिरिति चेन्न कारण-शब्दस्य कार्य्यशम्भुव्यावर्त्तकत्वात्, न च कारणत्वादिति हेतुगर्भता कल्प्या कार्य्यत्वस्य श्रुतिसिद्धत्वाद्भगवतः प्रसूयन्त इति उत्पन्नत्वेऽप्यस्य वाक्यस्यानुवादरूपत्वात्, अनुवादस्य प्रापकानुरोधित्वादुत्पत्तिप्रापकवाक्येषु चाकर्महेतुकत्वेनातत्फलार्थत्वेन च विलक्षणतया भगवज्जन्मनस्स्वेच्छाकृतस्य निरङ्कुशैश्वर्य्याविरोधित्वादजहत्स्वभावतया विचित्रैश्वर्य्योद्दीपकत्वाच्च परमकारणत्वाप्रच्युतेः, स्वपारतन्त्र्यावहकर्त्रन्तराभावो हि परमकारणत्वं "न चास्य कश्चिज्जनिता न चाधिप" इति हि श्रुतिः, अवतारवैलक्षण्यं च "अजायमानो बहुधा विजायत" इति प्रतिपाद्यते, अजायमान इति सांसारिकवज्जन्मनिषेधः, न स्वरूपनित्यत्वपरः, नापि जन्ममिथ्यात्वपरः अस्मद्देहादेरपि स्वरूपनित्यत्वादेरविशिष्टः "तस्य धीराः परिजानन्ति योनिमि"ति वाक्यस्य निरर्थकत्वप्रसङ्गादिदञ्च स्पष्टमुच्यते "येन सूर्य्यस्तपति तेजसेद्धः पिता पुत्रेण पितृमान्योनियोनौ नावेदविन्मनुते तं बृहन्तं सर्वानुभुवमात्मानं सम्पराये एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयात् तस्यैवात्मा पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेने"ति योनियोनावित्यनेन परिजानन्ति योनिमिति श्रुतिः प्रत्यभिज्ञायते, येन सूर्यस्तपतीत्यनेन "तस्य भासा सर्वमिदं विभातीति" मुण्डोपनिषत्सा हि परमपुरुषपरा नावेदविन्मनुते तं बृहन्तमित्यनेन 'वेदाहमेतमिति" "धीराः परिजानन्ती"ति श्रुतिः पदविदिति पद-शब्देन "तत्ते पदं सङ्ग्रहेण ब्रवीम्योमि"ति "तद्विष्णोः परमं पदमि"ति कठश्रुतिः "न कर्मणेत्यनेन "अपहतपाप्मा दिव्यो देव एको नारायण" इति वाक्यञ्च अत इदं वाक्यं भगवद्विषयं पुत्रेण स्वकार्य्यभूतेन दशरथादिनाऽपि पितृमत्त्वं तस्यावेदविदवेद्यत्वं तदवतारस्य अकर्मभूतत्वं तज्ज्ञानवतामभवभयध्वंसश्च ह्यत्र प्रतिपाद्यते-ईदृशजन्मानुवादश्च ध्यानविध्युपयोगी इतरसजातीयतया अवतीर्णस्योपासकसौलभ्यज्ञापनार्थत्वादेवमत्र प्रतिपन्नस्य भगवज्जन्मनः स्वेच्छावता

रूपत्वादेव हि यद्वोः कुले जायमानो नारायणः शम्भु-शब्देन महाभारते विशेष्यते । नन्वेवं सति ब्रह्मादीनामपि जन्म स्वेच्छावताररूपं किं न स्यात्, न, प्रापकवाक्यानुरोधित्वादनुवादस्य, कुतस्तेषां जन्मनः कर्ममूलत्वावगमः? उत्पत्तिश्रुतेरेव उत्पत्तिस्त्वेत्कर्ममूलेत्यौत्सर्गिकं, भगवतस्तु अवतारश्रुत्या तदपोदितम्, अपवादाभावेऽप्यकर्ममूलत्वाश्रयणे सतीन्द्रादिजन्मनोऽप्यवतारत्वप्रसङ्गः, ब्रह्मादीनामिन्द्रादीनाञ्च जन्मनि विशेषाश्रवणादुत्पत्तिवदन्यत्रापि क्वचिद्भगवत इवाकर्मवश्यत्वाश्रवणात् "हिरण्मयः पुरुषः" "एष हि सर्वेभ्य पाप्मभ्य उदितः अपहतपाप्मा दिव्यो देव एको नारायणः अपहतपाप्मा स उत्तमः पुरुष इति हि भगवतोऽकर्मवश्यत्वं श्रूयते तदैक्याद्ब्रह्मादीनामकर्म्मवश्यत्वमिति चेन्न इन्द्रादीनामपि तथात्वप्रसङ्गादैक्ये सति अकर्मवश्यत्वं, कर्मवश्यत्वरूपभेदकधर्माभावे सत्यैक्यमिति अन्योन्याश्रयश्च, भगवतोऽकर्मवश्यत्वन्तु स्वप्रकरणसिद्धमिति नान्योन्याश्रयः, एवमुत्पत्तिप्रापकवाक्यसिद्धं भगवतोऽजायमानस्य जायमानत्वरूपं ब्रह्मादिभ्यो वैलक्षण्यमत्रैवोच्यते न कारणं कारणानामिति न प्रसूयत इति विभक्तिपरिणामेनानुषङ्गः कारणानां कारणस्य भगवतो न ब्रह्मादिवदुत्पत्तिरित्यर्थः, शिव एको ध्येय इत्यत्राप्येक-शब्दः प्राधान्यपरः किमेकं दैवतमितिवत्, न ह्येकत्वसंख्याश्रयदेवप्रश्नः प्रश्नवैयर्थ्यात्तस्माच्छाश्वतं शिवमितिवत् समाभ्यधिकरहित इति शिवो विशेष्यते, तेन प्रसिद्धशिवव्यावृत्तिः, अतोऽथर्वशिखायामपि भगवत एवध्येयत्वं प्रतिपादितं यतो हिरण्यगर्भ-प्रजापति-धातृ-स्वयंभ्वादय ईशान-शम्भु-रुद्र-महादेव-महेश्वर-परमेश्वरादयश्च कारणविषयाः शब्दा अवयवशक्त्या वा अपर्यवसानाद्वा नारायणपरा इति युक्तम् । अत एव हि भगवत्सूत्रकार एव भगवति तान् शब्दान् महाभारते प्रायुङ्क्त, यथा हिरण्यगर्भश्शत्रुघ्नो व्याप्तो वायुरधोक्षज इति, कृष्णं प्रति द्रौपदी "पूर्वे प्रजानिसर्गे त्वामाहुरेकं प्रजापतिमि"ति मोक्षधर्मे "एकस्तद्वेद भगवान् धाता नारायणः स्वयमिति आश्वमेधिके "विष्णुरेवादिसर्गेषु स्वयंभूर्भवति प्रभु' रिति च स्वयंभूर्विष्णुरेव चतुर्मुखोत्पत्तेः प्राचीनतत्त्वसृष्टौ प्रभुर्भवति न तु चतुर्मुखादिरित्यर्थः "सोनिरुद्धः स ईशानो व्यक्तिः सा सर्वकर्मस्विति इति नारायणः शंभु-

भगवान् जगतः प्रभुः । आदिश्य विबुधान् सर्वान् अजायत यदोः कुलइति, रुद्रो बहुशिरा बभ्रुः, तथा "नमश्चकार हृष्टात्मा परमं परमेश्वरम् । जगाद जगतां स्रष्टा परमं परधर्मविदि"त्यारभ्य वासुदेव तदेतत्ते मया गीतं यथा-तथमिति, जय विश्व महादेव । जय लोकहिते रतेत्या"रभ्य "नारायण सुदुष्पाप ! जय शार्ङ्गधनुर्धरे"ति "भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरं यो मामजमनादिं च वेत्ति लोकमहेश्वरमिति" च ततस्ते विबुधाः सर्वे ब्रह्मा ते च महर्षयः । वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन्नित्यारभ्य "ते कार्त्तयुगधर्माणो भागाः परमसत्कृताः । प्रापुरादित्यवर्णं तं पुरुषं तमसः परम् । वृहन्तं सर्वगं देवमीशानं वरदं प्रभुं ततोऽथ वरदो देवस्तान् सर्वान-मरान् स्थितान् । अशरीरो बभाषेदं वाक्यं स्वस्थो महेश्वर"इति च । अथ-र्वशिरसि च "रुद्रस्यैव सर्वात्मभावादय उच्यन्ते, परमपुरुषसाधारणलि-ङ्गाभावात्सर्वात्मभावादयस्तु समस्तचिदचिद्व्यावर्त्तका अपि न तदसाधारणाः अतो रुद्रस्यैते सम्भवन्ति, अत एवात्र प्रतर्दनविद्यान्यायोऽपि नावतरति, प्रसिद्धेन्द्रस्य क्षेत्रज्ञस्य चिदचिद्व्यावर्त्तकधर्मान्वयायोगात्तच्छरीरकपरमा-त्मनोपासनपरत्वमुक्तं न तु परमपुरुषासाधारणधर्मासम्भवादिन्द्रादीनामपि संहारादिकारणस्य रुद्रस्य चिदचिद्व्यावर्त्तकधर्मान्वयः सम्भवतीति स एव प्रतिपाद्यत इति न तच्छरीरकार्थान्तरपरत्वमिति शङ्कायामुच्यते कारणत्व-व्याप्तो यः कश्चिदपि चिदचिद्व्यावर्त्तकः परमपुरुषासाधारण इति स्थितत्वा-द्रुद्रस्य तदसम्भवेन तच्छरीरकपरमात्मपरत्वमास्थेयम् । किञ्च रुद्रस्य सृज्य-त्वादिश्रवणात्परमकारणत्वाभावश्च दर्शितः, संहार्य्यत्वं च "न ब्रह्मा नेशान इत्युपबृंहिता चेयं श्रुतिः श्रीविष्णुधर्मोत्तरे "ब्रह्मा शंभुस्तथैवार्कश्च-न्द्रमाश्च शतक्रतुः । एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा जगत्कार्यावसा-ने तु वियुज्यन्ते च तेजसा । वितेजसश्च ते सर्वे पञ्चत्वमुपयान्ति वै" इति, अतः कार्यकोटिनिविष्टस्य सर्वात्मभावाद्यसम्भवात्प्रतर्दनोपासनन्यायेन तच्छरीरकपरमात्मपरतयैव निर्वाहो युक्तः । न चात्र न्यायापेक्षा परमात्मानु-प्रवेशस्य कण्ठोक्तत्वात्, तथा हि देवा ह वै स्वर्गं लोकमसगमस्ते देवा रुद्रमपृ-च्छन् को भवानिति सोऽब्रवीदहमेकः प्रथममासं वर्त्तामि च भविष्यामि च

नान्यः कश्चिन्मत्तो व्यतिरिक्त'' इति सोऽन्तरादन्तरं प्राविशद्ध दिशश्चान्तरं स प्राविशत्सोऽहं नित्यो नित्यो ब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणाञ्चोदञ्चोऽहमधश्चोर्द्ध्वं चाहं दिशश्च विदिशश्चाहं पुमानहमपुमान् स्त्रियश्चाहं सावित्र्यहं गायत्र्यहं त्रिष्टुब्जगत्यनुष्टुप् चाहमित्या''दि, तत्र सर्वात्मभावमनुसंदधतो रुद्रस्य बुद्धिस्थः परमात्मा स इति परामृश्यते, सः अन्नमयादेरन्तरात्मनो बुद्ध्यहङ्काररूपान्तःकरणवर्गादन्तरं जीवात्मानं स परमात्मा प्राविशद्दिक्शब्दोपलक्षितवाह्याचेतनानामन्तरं च जीवं स परमात्मा प्राविशदिति तदनुप्रवेशः कण्ठोक्तः ननु सोऽन्तरादित्यादिकं श्रुतिवाक्यं न तु रुद्रवाक्यन्तस्येति--करणेन समाप्तत्वादिति न सोऽहं नित्योऽनित्य इत्यादीनां रुद्रवाक्यानामनुगतिदर्शनेन रुद्रवाक्यापरिसमाप्तेः, तथा सति सोऽब्रवीदिति वाक्यान्तराध्याहारप्रसङ्गः स चानध्याहारे सम्भवति नोपपद्यते, तदयमर्थः देवतात्वेन साजात्येऽपि प्रभावातिशयदर्शनेन संदेहाद्देवा अपृच्छन् को भवानिति किमस्मदादिवद्देवतामात्रम्? उत परमकारणभूत? इति प्रश्नाभिप्रायः, अहमेकमासमिति कारणत्वमुक्तं, प्रथममासं वर्त्तामि च भविष्यामीति सर्वात्मभाव उक्तः, अन्वयमुखेनोक्तं सर्वात्मभावं व्यतिरेकेणोपपादयति नान्य इति, इतिर्हेतौ मद्व्यतिरिक्ताभावादित्यर्थः, अयं सर्वात्मभावव्यपदेशः किं परमात्मत्वात्? उत परमात्मात्मकत्वा?दिति शङ्कायां परमात्मानुप्रवेशनिबन्धन इत्याह "सोऽन्तरादि"ति, स्वस्मिन् परमात्मानुप्रवेशस्य दृष्टान्ताभिप्रायेणेदमुक्तं दिशश्चान्तरमिति । यद्वा नान्यः कश्चिन्मत्तो व्यतिरिक्त इत्युक्ते सर्वात्मव्यपदेशः कीदृश इत्यपेक्षायामाह "इती"ति, इतिः प्रकारे इत्थमित्यर्थः, विवक्षितत्वं सर्वात्मकत्वप्रकारमाह "सोऽन्तरादि"ति, यद्वा इतिशब्दस्योत्तरत्रान्वयः दिशश्चान्तरं स प्राविशदितीति यस्मात्परमात्मा प्राविशत्तस्मादस्मच्छरीरकपरमात्मनोऽन्यन्नास्तीत्यर्थः, अध्याहारादपि श्रुतपदस्यान्वयविशेषकल्पनं न्याय्यम्। अस्तु वाऽयमिति--शब्दः समाप्त्यर्थः, उत्तरत्र च सोऽब्रवीदित्यध्याहारस्सह्यतां तदानीमप्ययमर्थः स रुद्रः देहेन्द्रियादेरन्तराज्जीवादन्तरं परमात्मानं बुध्या प्राविशदिति यथा "यस्य यस्य हि यो भावः तेन तेन हि तं नरम् । अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेदि"ति,

एवं मामुपास्व तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च सर्वगत्वादनन्तस्य स एवाहमवस्थितः । मत्तः सर्वमहं सर्वं मयि सर्वं सनातने । अहमेवाऽव्ययो नित्यः परमात्मेत्यचिन्तयदितीन्द्रवामदेवप्रह्लादादीनामिव स्वान्तर्यामिपरमात्मबुद्ध्या रुद्रस्य सर्वात्मभावोपदेश इत्युक्तं भवति, तथा ह्युपबृंहितवान् सूत्रकारस्त्रिपुरविजये "विष्णुरात्मा भगवतो भवस्यामिततेजसः" । ब्रह्मरुद्रसंवादे 'तवान्तरात्मा मम च ये चान्ये देहिसञ्ज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचिदि''ति च सोऽहमित्यादिना सर्वात्मभावप्रपञ्चनं, द्वितीयखण्डो रुद्रवाक्यानुवादेन स्तुतिपरत्वात्तदन्तर्यामिपरमात्मविषयः, यो वै रुद्रः स भगवानिति यो रुद्रान्तर्यामी स वासुदेव इत्यर्थः, भगवच्छब्दस्य वासुदेवासाधारणत्वात्तच्च दर्शितं यो वै रुद्रः स भगवान् यश्च विष्णुरित्यन्तर्यामिण एव अवताररूपविशिष्टत्वमुक्तं, तृतीये तु परमात्मनो वैभवन्तद्वाचकस्योंकारस्य नामधेयानि चतुर्थे तन्निर्वचनं पञ्चमे, षष्ठे तु तदेतदुपासितव्यं "निचाय्य तं शान्तिमेती''ति रुद्रशरीरकपरमात्मोपासनं साङ्गमुक्तं, व्रतमेतत्पाशुपतमिति पशुपतिरूपपरमात्मोपासनाङ्गतया पशुपतिसंबद्धं पाशुपतं न तु पाशुपतागमप्रतिपाद्यं, तद्धि तद्द्वयकल्पकाभावात्, समन्त्रकभसितस्पर्शनं तु प्रकरणगृहीतत्वान्न सर्वत्र प्राप्नोति दर्शपूर्णमासप्रकरणगृहीतप्रयाजवत्सौत्रामणिप्रकरणगृहीतसुराग्रहवच्च, तस्मादथर्वशिरसि रुद्रान्तरात्मा नारायण एव प्रतिपाद्यः, यथा प्रतर्दनविद्यायामिन्द्रान्तर्यामी इन्द्रो मायाभिः पुरुरूप ईयते, मामुपास्व "इन्द्रं निचिक्युः परमे व्योमन्नि''ति कारणत्वोपास्यत्वप्राप्यत्वानीन्द्रविषयाणि, यथा प्रसिद्धेन्द्रव्यतिरिक्तविषयाणि व्याख्यातानि तथैवान्यत्रापि रुद्रविषयाणि कारणत्वादिपराणि वाक्यानि नेतव्यानि, "स ब्रह्मा स शिवः सेन्द्र'' इति तस्येन्द्रतुल्यतया भगवद्विभूतित्वात् । ननु हिरण्यगर्भः समवर्त्तताग्रे एको ह वै नारायण आसीत् न सन्न चासच्छिव एव केवल'' इति, विराजोऽधिपुरुषः इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे संप्रसूयन्ते'' इति त्रयाणामपि कारणत्वे कार्य्यत्वे चाविशेषश्रुतेः नारायणादिशब्दानां रूढिमाश्रित्य हिर-

ण्यगर्भादिशब्दानां प्रसिद्धार्थत्यागे को हेतुः आकाशादेव समुत्पद्यन्ते प्राणमेवाभिसंविशन्ति प्राणमभ्युजिहते इन्द्रो मायाभिः पुरुरूप ईयते आत्मन आकाशः संभूत एतस्माज्जायते प्राण इन्द्रो वरुण इत्याकाशप्राणेन्द्रादीनां च कार्यत्वकारणत्वश्रवणाविशेषेऽप्याकाशादिशब्दानां रूढित्यागे को हेतुः कार्य्यतयाऽवगतानां परमकारणत्वायोग्यत्वमिति चेत्तुल्यम् । ननु न कारणविषययोर्हिरण्यगर्भरुद्र–शब्दयोः प्रसिद्धार्थयोग्यता कार्य्यत्वे सति ह्ययोग्यत्वं कारणविषयरुद्रादिशब्दाः प्रसिद्धपरा एव, कार्य्यविषयास्तु प्रसिद्धेतरविषयाः, स्युः न, कारणविषयाणां रुद्रादिशब्दानां प्रसिद्धार्थपरत्वे सत्येककारणत्वानुपपत्तेः तदनुपपत्तिश्च रुद्रादिशब्दानामेकव्यक्तिविषयत्वेन व्युत्पत्त्यभावात्कारणैकत्वमवर्जनीयम् अन्यथा ऽद्वितीयत्वप्रतिज्ञादृष्टान्तसमाभ्यधिकनिषेधाद्यनुपपत्तेः, अतः कारणविषयाणां रूढित्यागे प्राप्ते सत्ययोग्यार्थानामेव रूढिरनादरणीया न तु योग्यस्वार्थानामपि, इत्थं हिरण्यगर्भादिशब्दानां प्रसिद्धार्थायोग्यत्वं नारायणादिशब्दानां योग्यार्थत्वं च दर्शितम् । अतोऽन्यत्रापि रुद्रहिरण्यगर्भादिविषयाणि वाक्यानि एवं नेयानि एवं दिङ्मात्रं दर्शितम् । अनन्ताः कारणपरवाक्यविशेषा एवं व्याख्येयाः यतोऽनुवादरूपतया साधारणतया योग्येतरार्थतया योग्यार्थप्रत्यभिज्ञापकधर्मपरतया च प्रापकासाधारणयोग्यार्थतद्धर्मप्रत्यभिज्ञाप्यवस्तुविशेषविषयवाक्यसाकाङ्क्षाः सर्वे वाक्यविशेषास्तत्तदधिकरणन्यायानुगृहीताः नारायणपराः अत एव ह्युक्तं भगवता व्यासेन सूत्रकारेण "तत्त्वं जिज्ञासमानानां हेतुभिस्सर्वतो मुखैः । तत्त्वमेको महायोगी हरिर्नारायणः परः" इति, हेतुभिः–समन्वयलक्षणोक्तन्यायैस्सर्वतोमुखैस्तत्तन्मुखभेदभिन्नैरित्यर्थः, तथा सर्वविद्योपास्यश्च स एवेत्युक्तम् 'आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदे'ति, आलोड्येत्यनेन प्रमाणपर्यालोचनमुक्तं, विचार्येत्यनेन शास्त्रतः परीक्षणमुक्तं, सुनिष्पन्नं बाह्यकुदृष्ट्या ऽविचाल्यं निश्चितमित्यर्थः, तस्मादयोगान्ययोगव्यवच्छेदेन नारायणस्य कारणत्वं पादचतुष्टयेन प्रतिपादितमिति सिद्धम् । व्याख्याताव्याख्याता इत्युक्ते व्याख्यात–शब्दस्य अव्याख्यातशब्दस्य च समासेनैकपद्ये सति सर्ववाक्यविशे-

याणां व्याख्यातत्वमुक्तं न स्यादिति तद्व्युदासार्थमसमस्ततया पृथक्पदत्वं ज्ञापयन् अभ्यासस्य प्रयोजनमाह "व्याख्याता इती"ति, नन्वभ्यासस्य कथं समाप्तिद्योतकत्वं श्रुतिसमाधेरिति ब्रूमः, श्रुतिषु हि कर्मभागे ज्योतिष्टोमदर्शपूर्णमासादिविषयतत्तत्प्रकरणावसानेषु नाभ्यासो दृश्यते वेदान्तेषु दृश्यते-यथा "न च पुनरावर्त्तते न च पुनरावर्त्तते," "नावर्त्तन्ते नावर्त्तन्ते" "अमृतः समभवदमृतः समभवदि"ति "वेदानुशासन वेदानुशासनं" "तस्माद् ब्रह्मणो महिमानमाप्नोति तस्माद् ब्रह्मणोमहिमानमाप्नोती"ति च, तत्रायमभिप्रायः कस्यचित्पुरुषस्य पुरुषार्थतदुपायप्रतिपादनं हि शास्त्रकृत्यं ज्योतिष्टोमादिज्ञानमात्रेण पुरुषार्थतदुपायज्ञानं वस्तुनो न परिसमाप्तम् अपवर्गतत्साधनयोरविदितत्वादमृतत्व-तदुपायविशेषज्ञाने सति हि ज्ञातव्यज्ञानं समाप्तं भवति, तदधिकपुरुषार्थान्तरतदुपाययोरभावेनाज्ञातव्यत्वादपवर्गोपायभूतविद्यान्तरेषु सत्स्वप्येकेनैव विद्याविशेषेण पुरुषार्थसिद्धेर्विद्यान्तरस्य कृतकरत्वादनपेक्षितत्वेन ज्ञातव्यत्वनियमाभावादतः पुरुषार्थसिद्ध्यर्थं ज्ञातव्यार्थस्य समाप्तिसूचको वेदान्तभागेषु तत्तत्प्रकरणावसानस्योऽभ्यास इत्यवगम्यते, अत एव कर्मविचारलक्षणावसानेषु अनभ्यासः शारीरलक्षणावसानेष्वभ्यासश्चेत्यवगम्यते, तत्राध्यायावसानशास्त्रावसानवैषम्यद्योतनार्थमाद्याध्यायत्रयावसानेषु पदाभ्यासः, शास्त्रावसाने सूत्राभ्यासश्च कृतः, । यादवमिश्रपक्षस्यास्त्वेवमाहुः-नाध्यायपरिसमाप्तिद्योतकत्वमभ्यासस्य युक्तम् अर्थसमाप्तेरेवाध्यायसमाप्त्यवगमात्सूचनस्य विफलत्वात्, अतोऽध्यायवसानसूचकोऽप्यभ्यासोऽर्थापरिसमाप्तिद्योतकः, अध्यायशेषार्थविचारश्च द्वाभ्यां पादाभ्यां वर्तिष्यत इति नैतद्युक्तं काष्ठैःस्यास्यामित्येतावता वाक्यार्थापरिसमाप्तावपि वाक्यपरिसमाप्तेरिवाध्यायार्थापरिसमाप्तावध्यायपरिसमाप्तेरनुपपन्नत्वात्कर्ममीमांसायामिवाध्यायानां पादचतुष्टयात्मकत्वनियममतिलङ्घ्य प्रथमाध्यायस्यपादषट्कात्मकत्वेन निबन्धनीयत्वप्रसङ्गाच्च । किं प्रथमाध्यायार्थस्यैवापरिसमाप्तिद्योतक इत्युच्यते? उत वृत्तवर्त्तिष्यमाणयोः परस्परसाकाङ्क्षत्वद्योतकः? इति, प्रथमे दूषणद्वयं दत्तं, द्वितीये त्वभ्यासवैयर्थ्यमेव द्वितीयाध्यायनिबन्धनादर्थस्वभा-

वाच्च परस्परसाकाङ्क्षत्वसिद्धेः, शास्त्रान्ते सूत्राभ्यासश्चानुक्तनिखिलन्यायास्तित्वसूचक इति चायुक्तम्, अर्थापरिसमाप्तौ शास्त्रपरिसमाप्तेः काष्ठैः स्यात्त्यामिति वाक्यसमाप्तिवदनुपपन्नत्वादध्यायान्तरनिबन्धने चिरं जीवतः सूत्रकारस्याशक्त्यभावाच्चाखिलन्यायजातमसम्भवविध्वस्तं चादर्शनात्, साङ्ख्यादिषु शास्त्रेषु दृश्यत इति चेन्न, तत्राविरुद्धांशस्योपादेयतायाः विरुद्धांशस्य त्याज्यतायाश्चास्मिन्नेव शास्त्रे निर्णीतत्वात्, सुगतागमादीनां कार्त्स्न्येन त्याज्यतानिर्णयात्, तदुक्तन्यायानामखिलन्यायत्वेनास्तित्वद्योतने हानोपादानरूपोभयविधप्रयोजनाभावादितिहासपुराणादीनां वेदान्तोपबृंहणतया जगत्कारणवस्तुविषयाणां मन्वादिधर्मशास्त्राणां जैमिनीयन्यायैरिव शारीरकन्यायैरेवानुगृहीतार्थत्वाच्च, किं तर्ह्यभ्यासस्य फलम्? अर्थपरिसमाप्तिर्हि सर्वे व्याख्याता इत्यनेनैवावगता,उक्तन्यायाविषयवाक्याभावात् नैवम् "एतेन योगः प्रत्युक्तः," "एतेन शिष्टापरिग्रहा," इतिवदेतच्छब्दस्यानन्तरपूर्वोक्तार्थपरामर्शकत्वे प्रकृत्यधिकरणोक्तन्यायपरामर्शितया निमित्तोपादानभेदपरवाक्यविशेषा व्याख्याता इत्युक्तं स्यात्ततश्च सर्वे व्याख्याता इत्यनेनाप्यध्यायसमाप्त्यवगमो न स्यात्, अतः पदाभ्यासेन अध्यायसमाप्त्यवगमे सत्येव एतच्छब्दस्य पादचतुष्टयोक्तन्यायपरामर्शित्वावगम इत्यध्यायपरिसमाप्तिद्योतनमभ्यासफलं शास्त्रावसाने प्रकृतपरामर्शिपदाभावात्तदसङ्कोचेनावसानसूचनफलकाभ्यासोऽनुपपन्न इति चेन्न शास्त्रावसाने तु सर्वे व्याख्याता इतीदृशनिर्देशाभावाच्छास्त्रसमाप्तेरभ्यासेनैव ज्ञाप्यत्वात्, पादावसानेषु पादार्थपरिसमाप्तावप्यनभ्यासः पादार्थस्याल्पतया ज्ञातव्यान्तरबाहुल्येन कृतांशसन्तोषाभावादतोऽध्यायार्थपरिसमाप्तिद्योतनमेवाभ्यासप्रयोजनं, न केवलमभ्यासप्रयोजनमेवानुपपन्नम् । तैः कृता सूत्रयोजनाऽप्यनुपपन्ना—प्रकृतेर्ब्रह्मत्वसमर्थनेन सर्वे महदादयोऽपि ब्रह्मत्वेन व्याख्याता इति हि तद्योजना, प्रकृतिश्चेति सूत्रे प्रकृति—शब्द उपादानपरः न त्वव्यक्तपर इति समर्थनेन सा व्युदस्ता भवति । किञ्च प्रकृतेर्ब्रह्मानन्यत्वेन ब्रह्मण उपादानत्वे प्रतिपादिते महदादीनां ब्रह्मत्वं न पृथक् समर्थनीयं तेषां प्रकृतिकार्यतया तद्द्वयानन्यत्वात्, कार्य्यकारणयोरनन्यत्वं समर्थनी-

यमिति चेन्न तस्यारम्भणाधिकरणकृत्यत्वान्महतः परमव्यक्तमित्यादिवाक्यानां च महदादितत्त्वप्रतिपादकत्वं चतुर्थाद्यविरुद्धं, न च चतुर्थाद्ये वैश्यवादः, इह त्वर्थतत्त्वोक्तिरिति कल्प्य ?, अस्य सूत्रस्य गत्यन्तरसम्भवेन कल्पकाभावात्, महदादितत्त्वप्रतिपादनपरत्वे पुरुषान्न परं किञ्चिदिति वाक्यस्य प्रकृतिपुरुषातिरिक्तेश्वरनिषेधकत्वप्रसङ्गाच्च, । एतेन प्रधानकारणनिरासेन सर्वे परमाण्वादिकारणवादा हेयतया व्याख्याता इति भास्करः, तदप्ययुक्तं तत्स्वरूपप्रतिक्षेपस्य तर्कपादकृत्यत्वात्पूर्वमकृतत्वाच्च तेषां श्रुतिसिद्धत्वं प्रतिक्षेप्यमिति चेदुदाहृतवाक्यानामतत्परत्वं तन्निरूपणादेव सिद्धमिति न पृथग्वक्तव्यम्, अनुदाहृतवाक्यानामतत्परत्वं विवक्षितमिति चेत्तर्हि तेषां प्रधानकारणताप्रतिपादकत्वं च प्रतिक्षेप्यन्तदानीमयमर्थः अनुदाहृतवाक्येष्वपि प्रधानपरमाणुकारणवादादयो निरस्ता इति तदानीमेतेनेति पदस्य प्रधानकारणवादनिराकरणेनेति व्याख्यानमयुक्तं परब्रह्मपरत्वसमर्थनेनेति वक्तव्यं, तस्माद्भाष्योक्तयोजनैव सामञ्जस्यवती, । पादचतुष्टयविभागमेवं वर्णयन्ति केचिदाचार्याः—प्रथमे पादे परमकारणीभूतचिदचिद्विलक्षणपुरुषविशेषनिर्णयः, द्वितीये जगच्छरीरकत्वं, तृतीये सर्वात्मकत्वप्रकारः, चतुर्थे त्वतत्कार्यात्तच्छरीरात्तदात्मकवस्त्वसम्भवः प्रतिपाद्यत इति, तेषु द्वितीयाद्येन सर्वजगच्छरीरकत्वं सर्वं खल्विदं ब्रह्मेत्यत्र दर्शितं, तत्र च न सौभरिवत् ज्ञानाधिष्ठितशरीरकत्वं किन्तु स्वरूपेण सर्वशरीरेषु गुहाप्रविष्टस्य तच्छरीरकत्वमित्युक्तं द्वितीये, न केवलमिन्द्रियाश्रयशरीराणामेव इन्द्रियाणामपि तच्छ-

सू० इति श्रीभगवद्रामानुजाचार्यविरचिते शारीरकमीमांसाभाष्ये प्रथमस्याध्यायस्य चतुर्थपादः समाप्तश्चाध्यायः ॥

रीरकत्वमुक्तं तृतीये, चतुर्थे तु न केवलमिन्द्रियाणां किन्तु सर्वतत्त्वानामपि तच्छरीरकत्वं प्रत्येकमुक्तं, पञ्चमे तु समुदायरूपेण च शरीरत्वमुक्तं, रूपोपन्यासादिति तस्य मुमुक्षूपास्यत्वं प्रपञ्चितं षष्ठ इति द्वितीयपादार्थः । तृतीये तु स्थित्यदनाभ्यामिति सर्वहेयास्पृष्टत्वमुक्तम् आद्ये न तावन्मात्रं निरतिशयानन्द उक्तः, द्वितीये "यो वै भूमा तत्सुखमि" ति न मुक्तस्येवानन्दमात्रं किन्तु

प्रशासितृत्वमुक्तं तृतीये, भयानकत्वमात्रव्यावृत्त्यर्थं मुक्तप्राप्यत्वं चतुर्थे, प्राप्यस्यैव निरतिशयभोग्यं गुणाष्टमुक्तं पञ्चमे, तस्य मातृवदविजुगुप्सनं पितृवत् शिक्षकतयाऽभयहेतुत्वमुक्तं षष्ठे, त्रितयं प्रासङ्गिकं सुषुप्त्यादिसर्वावस्थास्वप्रहाणमुक्तं चरमे, एवमात्मत्वप्रकारस्तृतीयपादार्थः, शरीरगतदोषास्पृष्टतया स्वासाधारणरूपान्यथाभावाभावेन च स्थितस्य सर्वावस्थासु शरीरधारकस्य ह्यात्मत्वं तमेवैकं जानथाऽऽत्मानमिति हि आद्याधिकरणविषयवाक्यं, चतुर्थपादे तु तदनधीनत्वं जगत आद्ये व्युदस्तम्, अतत्कार्य्यत्वं द्वितीये, अतदात्मकत्वं तृतीये, तमेवंमन्य आत्मानमिति हि वाक्यम् असदव्याकृतादिना येन केनापि शब्देन प्रतिपन्नस्याऽपि वस्तुनोऽतदात्मकत्वं चतुर्थे, विशेषतश्चेतनस्यातदात्मकत्वं पञ्चमषष्ठयो, स्सेश्वरसाङ्ख्योक्तमतदात्मकत्वं व्युदस्तं सप्तमे, सर्मार्थतार्थस्य सार्वत्रिकत्वमुक्तमष्टमे, एवं जगतः तदधीनत्वतत्कार्य्यत्वादिप्रतिपादनमुखेनातादधीन्यात्तत्कार्य्यत्वादिव्युदसनात् ब्रह्मैककारणत्वं स्थिरीकृतं चतुर्थपादेनेति अयं च विभागः सम्प्रदायसिद्धत्वादुपपन्नश्चानुसन्धेयः ॥ सर्वव्याख्यानाधिकरणं समाप्तम् ॥

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदराचार्य्यपादसेवासमधिगतभगवद्रामानुजमुनिविरचितशारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां प्रथमस्याध्यायस्य चतुर्थः पादः । अध्यायश्च समाप्तः, शुभम् ॥ श्रीमते मीमांसाद्वयगुरवे रामानुजाचार्याय नमः ॥

---

अस्मिन्नध्यायेऽधिकरणसंख्या ३५ । सकलसूत्रसंख्या च १३८ ॥

एतस्य शुभकर्मणोऽनुष्ठानेन भगवान्नारायणः प्रसीदतु सलक्ष्मीकः ॥ भगवन्नारायणार्पणमस्तु, प्रसीदन्तु चाचार्यवर्याः, तमध्वं च साहजिकनरस्वभावसुलभस्खलितानि अनुगृह्णन्तु चैतस्याध्ययनाध्यापनप्रचारेणेति क्रियासमभिहारेणाशासे ॥ श्रीः श्रीः श्रीः ॥

मीमांसाद्वयगुरवे श्रीमते रामानुजाचार्याय नमः ।

# अथ श्रीभाष्ये ।

## द्वितीयाध्याये प्रथमः पाद आरभ्यते ।

स्मृत्यधिकरणम् ।

**सू॰ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥**

भा॰ प्रथमेऽध्याये प्रत्यक्षादिप्रमाणगोचरादचेतनात्तत्संसृष्टात्तद्वियुक्ताच्च चेतनादर्थान्तरभूतं निरस्तनिखिलाविद्याद्यपुरुषार्थगन्धमनन्तज्ञानानन्दैकतानमपरिमितोदारगुणसागरं निखिलजगदेककारणं सर्वान्तरात्मभूतं परं ब्रह्म वेदान्तवेद्यमित्युक्तम्, अनन्तरमस्यार्थस्य सम्भावनीयसमस्तप्रकारदुर्धर्षणत्वप्रतिपादनाय द्वितीयोऽध्याय आरभ्यते ।

टी॰ सू॰ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ।१। प्रथमद्वितीयाध्याययोः सङ्गतिज्ञापनार्थं प्रथमाध्यायपादचतुष्टयार्थस्य संग्रहेण ज्ञापनार्थं च प्रथमाध्यायार्थं संग्रहेणाह "प्रथमेऽध्याय इत्यादिना, प्रत्यक्षादिप्रमाणगोचरादित्यनेनेक्षत्यानन्दमयाधिकरणयोः पौर्वापर्यहेतुर्विवक्षितः, आदि–शब्दोऽनुमानपरः, प्रत्यक्ष पृथिव्यादीनामनुरूपं कारणं ह्यनुमीयते, तस्मादचेतनस्य प्रथमं बुद्धिस्थतया तन्निरास इत्यर्थः, अर्थान्तरत्वमुपपादयति "निरस्ते"ति, मुक्तव्यावृत्त्यर्थं निरस्तनिखिलाविद्याद्यपुरुषार्थगन्धमित्युक्तं, धर्मिस्वरूपमाह "अनन्ते"ति, सागर–शब्देन समूहो विवक्षितः, अपरिमित उदारगुणसागरो यस्येति बहुव्रीहिः, निखिलजगदेककारणम् आकाशादेरपि कारणं निमित्तोपादानरूपोभयविधकारणं

चेत्यर्थः, जगत्कारणत्वे पूर्वोक्तहेयप्रत्यनीकत्वानुपपत्तिमाशङ्क्याह "सर्वान्तरात्मभूतमिति, एवं प्रथमाध्यायार्थमुक्त्वा द्वितीयाध्यायार्थमाह "अनन्तरमि"ति, प्रसक्तविरोधो हि परिहार्य्यः, अतो विरोधप्रसङ्गमाह "सम्भावनीये"ति, समस्तप्रकार-शब्देन पादचतुष्टयेऽपि ये विरोधावतरणमुखभेदास्ते विवक्षिताः, प्रथमेऽध्याये ऽयोगान्ययोगव्यवच्छेदमुखेन वेदान्तवाक्यानां ब्रह्मैककारणतापरत्वं वाक्यतात्पर्यपर्यालोचनया समर्थितम् । अथ द्वितीयाध्याये बाह्यतर्कविरोधपरिहार उच्यत इत्यर्थः । पादार्थो द्वितीयपादसङ्गत्यर्थं वक्ष्यते, तस्मात् प्रथमाधिकरणकृत्यमाह—

सू० प्रथमं तावत्कापिलस्मृतिविरोधाद्वेदान्तानामतत्परत्वमाशङ्क्य तन्निराक्रियते—कथं स्मृतिविरोधाच्छ्रुतेरन्यपरत्वम् उक्तं हि "विरोधे त्वनपेक्षं स्या"दिति, श्रुतिविरुद्धायाः स्मृतेरनादरणीयत्वं, सत्यम्, औदुम्बरीं स्पृष्ट्वोद्गायती-त्यादिषु

टी० "प्रथमं तावदि"ति, प्रथमाध्यायनिरूपितं कारणत्वं विषयः कपिलमन्वादिस्मृतिविप्रतिपत्तेः संशयः, अत्रैवं विचारः किं ब्रह्मणो जगत्कारणत्वं चालयितुं शक्यते न वे? ति तदर्थं किं वेदान्तवाक्यानि ब्रह्मकारणत्वपराणि? उतान्यपराणी? ति, तदर्थं साङ्ख्यस्मृतिविरोधो वेदान्तवाक्यानामतत्परत्वमापादयति नेति, तदर्थं? साङ्ख्यस्मृत्या वेदान्तोपबृंहणं कार्य? मुत मन्वादिस्मृत्ये? ति, तदर्थं किं साङ्ख्यस्मृतिर्भ्रान्तिमूला? उत ने? ति, यदा न भ्रान्तिमूला तदा तया वेदान्तानामुपबृंहणीयत्वेन तद्विरोधात्तेषामन्यपरत्वात् ब्रह्मकारणत्वं चालयितुं शक्यमिति, यदा भ्रान्तिमूला तदा तया तेषामनुपबृंहणीयत्वात्तद्विरोधे तेषामन्यपरत्वाभावात् ब्रह्मकारणत्वम् अविचाल्यमिति । अधिकरणारम्भमाक्षिपति "कथ"मिति, कथं-शब्दः क्षेपे, हेतुमाह "उक्तमि"ति, हिर्हेतौ, "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमि"ति सूत्रं प्रत्यक्षश्रुतिविरुद्धं स्मृतिवचनमनपेक्ष्यमनादरणीयं स्मृतेरपि श्रुतिमूलत्वानुमा-

नादादरणीयत्वमित्यत्राह 'असति ह्यनुमानमि'ति असति—प्रत्यक्षश्रुतिविरोधे हि स्मृतिमूलश्रुत्यनुमानमित्यर्थः । तदेतदभिप्रेत्याह "उक्तं ही"ति. परिहरति "सत्यमि"ति, सत्यं, तत्र श्रुतिविरोधात्स्मृतेरनादरणीयत्वमुक्तमेव, अत्र तु विशेषोऽस्तीत्यर्थः, औदुम्बरीमित्यादि "औदुम्बरीं स्पृष्ट्वोद्गायेदि"ति श्रुतिः "औदुम्बरी सर्वा वेष्टयितव्ये"ति स्मृतिः, अत्रायं विवक्षितो भेदः औदुम्बरीमित्यादिषु प्रत्यक्षश्रुतेरर्थो न नानाशिरस्कः प्रतीयते अपि तु एकरूप एव प्रतीयते अतस्तत्र प्रत्यक्षश्रुतेरव्याकुलत्वेन स्मृतिन्यायनिरपेक्षं स्वत एवार्थो निश्चेतुं शक्यते, तत्र विरुद्धार्था स्मृतिरुपेक्ष्या वेदान्तवाक्येषु नानाशिरस्कतयाऽर्थः प्रतीयते, अतो व्याकुलत्वाद्वेदान्तवाक्यानामर्थः स्मृतिन्यायनिरपेक्षं स्वतो निश्चेतुं न शक्यते श्रुतेरयमर्थ इति निश्चिते सति हि तद्विरोधात् स्मृतेरनादरणीयत्वं स च स्वतो दुर्निश्चय इति तदर्थं स्मृत्यपेक्षा, प्रथमाध्यायोक्ततर्कैरर्थो निश्चित इति चेत् न वचनविरोधे न्यायस्य दुर्बलत्वात्, अतः स्मृत्यैवार्थे निश्चिते तद्विरुद्धतया तर्क आभासः स्यात्, अतः स्मृतिवचनविरुद्धन्यायेन श्रुत्यर्थो न निर्णेतव्यः स्मृतिवचनेनैव तु निर्णेतव्य इतीममर्थमभिप्रेत्याह—

सू० स्वत एवार्थनिश्चयसम्भवात्तद्विरुद्धा स्मृतिरनादरणीयैव, इह तु वेदान्तवेद्यस्य तत्त्वस्य दुरवबोधत्वेन परमर्षिप्रणीतस्मृतिविरोधे सत्ययमर्थ इति निश्चयायोगात्स्मृत्या श्रुतेरतत्परत्वोपपादनमविरुद्धम्, एतदुक्तं भवति—प्राचीनभागोदितनिखिलाभ्युदयसाधनभूताग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिकर्माणि यथावदभ्युपगच्छता श्रुतिस्मृतीतिहासपुराणेषु "ऋषिं प्रसूतं कपिल"मित्यादिवाक्यैराप्तत्वेन सङ्कीर्तितेन परमर्षिणा कपिलेन परमनिःश्रेयसतत्साधनावबोधित्वेनोपनिबद्धस्मृत्युपबृंहणेन विनाऽल्पश्रुतैस्स्मृ-

न्दमतिभिर्वेदान्तार्थनिश्चयायोगाद्यथाश्रुतार्थग्रहणे चाप्तप्रणीतायास्साङ्ख्यस्मृतेस्सकलाया एवानवकाशत्वप्रसङ्गाच्च स्मृतिप्रसिद्ध एवार्थो वेदान्तवेद्य इति बलादभ्युपगमनीयमिति, न च वाच्यं मन्वादिस्मृतीनां ब्रह्मैककारणत्ववादिनीनामेवं सत्यनवकाशत्वदोषप्रसङ्ग इति धर्मप्रति[1]पादनद्वारेण प्राचीनभागोपबृंहण एव सावकाशत्वात्, अस्यास्तु कृत्स्नायास्तत्त्वप्रतिपादनपरत्वात्तथाऽनभ्युपगमे ऽनवकाशत्वमेव स्यात्, तदिदमाशङ्कते स्मृत्यनवकाशदोषप्रसङ्ग इति चेदिति, अत्रोत्तरं—नान्यस्मृत्यनवकाशदोषप्रसङ्गादिति, अन्या हि मन्वादिस्मृतयो ब्रह्मैककारणतां वदन्ति यथा ऽऽह मनुः—

टी० स्वत एवार्थनिश्चयसम्भवाद्वेदान्तवेद्यतत्त्वस्य दुरवबोधत्वेनेति कपिलस्य परमर्षित्वे किं प्रमाणं तथा सत्यपि तादृशबृहस्पत्याद्युक्तलोकायतादिवदनादरणीयं श्रुतेः स्मृत्यपेक्षा च नास्ति न्यायेनैव निरपेक्षत्वादित्यत्राह "एतदुक्त"मिति, ज्योतिष्टोमादिकर्माणि यथावदभ्युपगच्छतेत्यन्तेन लोकायतव्यावृत्तिरुक्ता, "ऋषिं प्रसूतं कपिलमि"ति तस्याप्तत्वे प्रमाणमुक्तं परमनिश्श्रेयसेत्यादिना अनन्यपरत्वमुक्तं स्मृत्युपबृंहणेन—स्मृतिरूपोपबृंहणेन अल्पश्रुतैर्मन्दमतिभिरित्यनेन स्मृतिसापेक्षत्वमुक्तम्, अनन्तशाखानुगतस्य वाक्यार्थस्यैकदेशज्ञैर्दुरवबोधत्वादिति भावः । अन्यथा ऽनिष्टमाह "यथा श्रुते"ति, सकलाया इति सूचितमर्थं शङ्कोत्तरमुखेन विवृणोति "न चे"ति, न हि मन्वादिस्मृतेः कर्मपरत्वात्साकल्येनानवकाशत्वं साङ्ख्यस्मृतेर्निरवकाशत्वं न सह्यमाप्ततमत्वेन श्रुतिगतत्वादनन्तशाखानुगतवाक्यार्थस्य दुर्बोधत्वेनापेक्षितत्वाच्चेति ग्रन्थाभिप्रायः । पूर्वपक्षस्या-

१ धर्मप्रतिपादनपरप्राचीनभागोपबृंहणे इति पा० ।

नुत्सूत्रत्वमाह "तदिद"मिति, परिहारखण्डमवतारयति "तत्रोत्तर"मिति काः पुनरन्याः स्मृतयः कथं तासामनवकाशत्वमित्यत्राह "अन्याहो"ति, स्मृतिवचनं दर्शयति "यथाऽह मनु"रिति, प्रलयावस्थाज्ञापनार्थमाह—

सू० आसीदिदं तमोभूतमित्यारभ्य "ततस्स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम्। महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥

टी० "आसीदिदं तमोभूतमित्यारभ्ये"ति, भाष्ये ततः स्वयं भूः सोऽभिध्यायेति श्लोकद्वयमुपात्तं तयोरर्थवैशद्यायासीदिदमित्यारभ्य सप्तश्लोकी व्याख्यायते त इमे श्लोकाः "आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥ ततः स्वयंभूर्भगवानव्यक्तोव्यञ्जयन्निदम्। महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः॥ योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः। सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥ सोऽभिध्याय शरीरात्स्वात् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमपासृजत् ॥ तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥ तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥ आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पुंस[1]स्तेन नारायणः स्मृतः ॥ यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् ॥ तद्विसृष्टः स पुरुषोलोके ब्रह्मेति कीर्त्यते ॥ इति, धर्म्मान्नो वक्तुमर्हसीति मुनिभिः पृष्टो भगवान्मनुर्धर्मान्विवक्षन्भगवदाराधनरूपस्य वर्णाश्रमधर्मस्याराध्यज्ञानसापेक्षत्वात् प्रथममाराध्यस्वरूपमाह "आसीदिदमित्यादिभिः श्लोकैः, तत्र परमकारणभूतस्यैव सर्वतादात्म्यसंभवादग्नीन्द्रब्रह्मादिसर्वदेवतादात्म्योपपत्त्यर्थं यतो वा इमानीत्याद्यनुसारेण लक्षणं च विवक्षन् भगवतः परमकारणत्वं वक्तुं वेदान्तेषु सृष्टेः प्रलयपूर्वकत्वेन प्रतिपादितत्वात् प्रथमं प्रलयदशामाह "आसीदि"ति, अत्र सुबालोपनिषदर्थो भगवता मनुना अनुसन्धीयते अतस्सुबालो-

१ तायदस्यायनं पूर्वमिति पा० ।

पनिषदुक्तार्थप्रकारेणात्र प्रलय उच्यते तत्र हि पृथिव्यप्सु प्रलीयत इत्यादिना पृथिव्यादिक्रमेण तमःपर्यन्तप्रलय उक्तः, तमाह "इदं तमोभूतमासीदि"ति, तत्र पृथिव्यादीनां स्वकारणेषु लयो वैयधिकरण्येन प्रतिपादितः, "तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पवदि"ति प्रक्रियया सत्कार्यवादकाष्ठामभिप्रेत्य सामानाधिकरण्येनेदं तमोभूतमित्युक्तं, तमोभूतं–तमोभाववत्तमोऽवस्थमासीदित्यर्थः तमसि लीयत इति निर्देशस्यायमर्थ इत्यभिप्रायः यथाऽऽह भगवान् बादरायणपिता पराशरः "अव्यक्तस्ये च सलिले वाय्ववस्थे च तेजसी"ति तमोऽवस्थस्य कारणस्य योग्यानुपलब्धिनिरस्तत्वशङ्काव्यावृत्त्यर्थमाह "अप्रज्ञातमि"ति, प्रकृष्टं ज्ञानमपरोक्षज्ञानं तेन विषयीकर्त्तुमशक्यमित्यर्थः, अयोग्यत्वादनुपलब्धिस्तस्मान्नयोग्यानुपलब्धिरित्यभिप्रायः । अयोग्यत्वमुपपादयति "अलक्षणमि"ति, शब्दस्पर्शविहीनं तद्रूपादिभिश्च संहितमित्युक्तप्रकारेण रूपादिलक्षणरहितत्वात् प्रत्यक्षयितुमयोग्यमित्यर्थः । कार्येषु रूपादिमत्त्वदर्शनात्कारणेनापि रूपादिविशेषगुणवता भाव्यमतो न यथोक्तकारणमुपपद्यत इत्यत्राह "अप्रतर्क्यमि"ति, प्रतर्कः–बाह्यतर्कः तद्गोचरभूतं ते तर्काः कालात्ययापदिष्टा इति भावः । यद्वा अप्रज्ञातमिति प्रत्यक्षागोचरत्वस्योक्तत्वादप्रतर्क्यमित्यनुमानागोचरत्वमुक्तं स्यात्, तम एकी भवतीति वाक्योक्तमविभागावस्थत्वं तमसो दर्शयति "अविज्ञेयमि"ति, विज्ञानं विभागेन ज्ञानं परस्माद् ब्रह्मणः पृथग्व्यपदेशानर्हावस्थां क्षीरे नीरमिव प्राप्तमित्यर्थः । स्वरूपैक्याशङ्कापरिहारार्थमाह "प्रसुप्तमिव सर्वत" इति, यथा सुषुप्तौ जीवस्य परमात्मनः पृथग्व्यवहारानर्हावस्थापत्तिरेव न तु स्वरूपैक्यम्, एवं चिदचिदात्मकस्य जगतो ब्रह्मणि पृथग्व्यवहारानर्हसंसर्ग एव न स्वरूपैक्यमित्यर्थः, सुषुप्तौ सर्वथा साम्यव्यावृत्त्यर्थं सर्वत इति पदम् । यद्वा पूर्वमचिदंशप्रलयप्रकार उक्तः, प्रसुप्तमिव सर्वत इति, तु चिदंशप्रलयप्रकार उक्तः, तत इति ततः सर्गकाले प्राप्त इत्यर्थः, संप्राप्ते सर्गकाले व्यवस्थावाचितवद्भगवतः कारणान्तरसद्भावकृतोत्पत्तिप्रलयव्यावृत्त्यर्थमाह "स्वयम्भूरि"ति, परमकारणविषयो

हि स्वयम्भू-शब्दोऽयवार्थपौष्कल्यान्नारायणपरो दृष्टः, यथा सभापर्वणि "अव्यक्तोव्यक्तलिङ्गस्थो य एव भगवान् प्रभुः । पुरा नारायणो देवः स्वयम्भूः प्रपितामह" इत्यारभ्य "ततः सभगवाँस्तोये ब्रह्माणमसृजत्स्वयमिति मोक्षधर्मे च नारायणो जगन्मूर्तिरित्यारभ्य "ततस्तेजोमयं दिव्यं पद्मं सृष्टं स्वयम्भुवा । तस्मात्पद्मात् समभवत् ब्रह्मा वेदमयो निधि"रिति, आश्वमेधिके च "विष्णुरेवादिसर्गेषु स्वयम्भूर्भवति प्रभुरिति च, अतोऽयं स्वयम्भूशब्दो-नारायणविषयः, चतुर्मुखस्रष्टरि प्रयुक्तत्वात्, प्रबन्धान्तरवचनैतत्प्रकरणानुगुण्यात्, भगवच्छब्दसामानाधिकरण्याच्च देवताविशेषनिर्णयार्थं कारणत्वोपयोगिगुणपौष्कल्यज्ञापनार्थं चाह "भगवानि"ति, 'तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः । शब्दोऽयं नोपचारेण अन्यत्र ह्युपचारत'इति वचनादिदं व्यञ्जयन् व्यष्टिरूपकार्यजातं व्यञ्जयितुं "लक्षणहेत्वोः क्रियाया" इति शतृप्रत्ययः, महाभूतादिवृत्तौजाः व्यष्टिकारणानि पृथिव्यादीनि महाभूतानि, आदि-शब्देन तत्कारणभूतमहदहङ्कारौ गृह्येते, तेषु प्रवृत्तसङ्कल्पज्ञानरूपतेजाः तदर्थमव्यक्तः प्रादुरासीत् अर्श आद्यजन्तत्वात् पुँल्लिङ्गता, अत्रान्तरावस्थाऽप्यर्थसिद्धा महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते' इति हि क्रमः, पूर्वमविभक्ततमःशरीरको भगवान् व्यष्टिसृष्टिहेतुभूततन्मात्राहङ्कारसृष्ट्यर्थे स्वसङ्कल्पाद्विभक्ततमःशरीरकोऽक्षरावस्थाप्राप्तिपूर्वकमव्यक्तावस्थाकृतिशरीरकोऽभूदित्यर्थः । अव्यक्तशब्द एव पि विवृण्वन् समष्टिव्यष्टिसृष्टिमनन्तरवर्तिनीं संक्षेपेणाह "योऽसावि"ति, अतीन्द्रियग्राह्य इन्द्रियमतीत्य वर्तमानेन शास्त्रेणैव ग्राह्यः । यद्वा इन्द्रियग्राह्यादतीत्य वर्तमानः इन्द्रियग्राह्यादतीत्य वर्तमानत्वं तुच्छस्याप्यस्तीति तद्व्यावृत्त्यर्थमाह "सूक्ष्म"-इति, अत एवाव्यक्तो न तुच्छतयेत्यर्थः सनातनः-स्वयमव्यक्तशरीरकत्वेऽपि स्वयमप्रच्युतस्वभाव इत्यर्थः, स एव इति कार्यकारणयोरेकद्रव्यत्वं सूचितं, स्वयमेव कार्यं कारणं चेन्निमित्तान्तरापेक्षा स्यादित्यत्राह "स्वयमि"ति, मृत्कुलालादौ निमित्तोपादानयोर्भेददर्शनादेकस्यैव निमित्तोपादानत्वे अनुपपन्ने इत्यत्राह "अचिन्त्य" इति, बाह्यतर्काः श्रुतिनिरस्ता

इति भावः । सर्वभूतमय उद्बभौ सर्वसर्वसमष्टिव्यष्टिरूप उद्बभौ कार्यकारणयोरेकद्रव्यत्वे कार्यकारणयोरेकद्रव्यत्वे कार्यकारणवैषम्यं किमित्यत्राह "उद्बभावि"ति, सूक्ष्मरूप उद्बभाविति पदाभ्यां सूक्ष्मत्वस्थूलत्वे एव कार्यकारणदशावैषम्यं न तु द्रव्यभेद इत्युक्तं भवति, एवं संक्षेपेण समष्टिव्यष्टिसृष्टिमुक्त्वा समष्टिसृष्टिं पृथगाह–

मू० सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्य्यमपासृज"दिति, भगवद्गीतासु च, "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते," इति च, तथा च महाभारते "कुतः सृष्टमिदं सर्वं जगत्स्थावरजङ्गमम् । प्रलये च कमभ्येति तन्मे ब्रूहि पितामहे"ति, पृष्ट आह "नारायणो जगन्मूर्तिरनन्तात्मा सनातन" इति, तथा तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम? इति अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये सम्प्रलीयत"इति च ।

"सोऽभिऽध्याये"ति, अभिध्यानं–सङ्कल्पः स्वरूपेणैव समष्टिव्यष्टिरूपेण परिणतश्चेद्भगवच्छब्दोक्तानिर्दोषत्वादिविरोध इत्यत्राह "शरीरात्स्वादि"ति, शरीर–शब्देन तमोऽव्यक्तावस्थं चित्संसृष्टमचिद्वस्तूच्यते सिसृक्षुर्विविधाः प्रजाः व्यष्टिसिसृक्षयेत्यर्थः, अप एव ससर्जादौ अप्छब्दोऽण्डकारणसमस्ततत्त्वप्रदर्शनार्थः, पृथिवीमयस्याण्डस्यानन्तरकारणं ह्यापः, अतोऽप्शब्दनिर्देशः, अप इति व्याख्येयश्रुतिगताप्शब्दः स्मारितः, "ता इमा आपः तद्धिरण्मयमण्डमभव"दिति हि श्रुतिः अप्शब्दार्थश्च पूर्वमेव महाभूतादिवृत्तौजा इत्यादिना व्याख्यातः, एवकारेण त्रिवृत्करणं व्यावर्त्यम्, अत्रिवृत्कृता आप इत्यर्थः । तासु वीर्यमपासृजत् वीर्यं त्रिवृत्करणजनितामण्डोत्पादनशक्तिं तास्वजनयदित्यर्थः, अत्र "नानावीर्याः पृथग्भूता नाशक्नुवन्नित्याद्यनुसन्धेयम् एवं समष्टिसृष्टिमुक्त्वा व्यष्टिसृष्टि-

माह "तदण्डमि"ति, तदण्डकारणतत्त्वजातम्, इतरहेयव्यावृत्त्यर्थमाह "सहस्रांशुसमप्रभ"मिति, तत्र चतुर्मुखसृष्टिमाह "तस्मि"न्निति, सर्वलोकपितामह इत्यनेन देवमनुष्यादीनां दक्षादयः स्रष्टारः तेषां स्रष्टा चतुर्मुख इति भगवतोऽण्डान्तर्गतवस्तुसर्गः सद्वारक इत्युक्तं भवति, स्वयं भगवान्नारायणः परमकारणभूतः स्वयमेव चतुर्मुखशरीरकोऽभवदित्यर्थः । "विष्णुर्ब्रह्मस्वरूपेण स्वयमेव व्यवस्थित" इति वचनात्सुबालोपनिषदि "अज एको नित्य इति निर्विकारत्वं जगत्कारणत्वं जगदन्तरात्मत्वं चोक्त्वा नारायण-शब्दोऽसकृदावर्तितः, अतो जगत्कारणत्वादिकं त्रितयमपि नारायण-शब्दस्यावयवार्थ इति श्रुतेरभिप्राय इति मत्वा जगत्कारणत्वादिप्रवृत्तिनिमित्तकं नारायण-शब्दं परमकारणस्य वाचकत्वेनाह "आपो नारा" इति, चित्संसृष्टान्यण्डकारणतत्त्वान्यापः । तासां नारत्वमुपपादयति "आपो वै नरसूनव" इति, रीङ् क्षय इत्यस्माद्धातोर्डप्रत्यये टिलोपे च कृते र इति भवति, नरः-अक्षयः निर्विकार इत्यर्थः । "जन्हुर्नारायणो नर" इति वचनान्नर इति भगवन्नाम, तस्माज्जात इत्यण्प्रत्यये कृते नारा इति भवति नराख्या आपो ऽयनमस्येति नारायणः, एवं नर-शब्देन निर्विकारत्वं, नार-शब्देन जगत्कारणत्वमयन-शब्देन जगदन्तरात्मत्वं चेत्यर्थ त्रयमुक्तं भवति, तस्मिन् जज्ञे स्वयं ब्रह्मेति भगवत एव प्रस्तुतत्वात् स एवात्रास्येति सर्वनामशब्देन परामृश्यत इति न व्यवहितपरामर्शित्वदोषः । यत्तु व्याख्यान्तरैः सर्वनामशब्दः प्रधानपरामर्शी शाब्दप्राधान्यं च प्रथमानिर्दिष्टस्य, स च चतुर्मुख इति स एव नारायणसंज्ञ इत्याशङ्क्य बहुश्रुतिवचनविरोधादुपरि चतुर्मुखस्य भगवद्विसृष्टतावचनाच्च भगवत एव नारायणसंज्ञेति परिहृतं, तच्चाविरुद्धम्, । अथ चतुर्मुखस्य नारायणसंज्ञत्वव्यावृत्त्यर्थमितरदेवानां द्रुहिणसृष्टानां परत्वशङ्कादूरोत्सारणार्थं-चतुर्मुखस्य भगवद्विसृष्टतामाह-

मू० आह च भगवान्पराशरः "विष्णोस्सकाशादुद्भूतं जगत्तत्रैव च स्थितम् । स्थितिसंयमकर्ताऽसौ जगतोऽस्य जगच्च स" इति,

टी० "यत्तदि"ति, यत्तदित्यनुवादरूपत्वात् स भगवानत्रानूद्यते, अव्यक्तस्य चिदचित्समुदायरूपत्वादव्यक्तशरीरकं ब्रह्म सदसच्छरीरकं भवति, तद्विसृष्टः—तेन विशेषेण जीवब्रह्मव्यवधानेन भगवतैव सृष्टः स ब्रह्मेति कीर्त्यत इत्यर्थः । अस्मिन्प्रबन्धेऽवसानेऽपि प्रशासितारमित्यादिना भगवान्कीर्तितः, मध्ये च ब्रह्मविद इत्यादिना भगवज्ज्ञानविदः कीर्तिताः । एवं भगवता मनुना पुरुषसूक्तनारायणानुवाकप्रतिपाद्यस्य परब्रह्मशब्दवाच्यस्य भगवतः समाराधनरूपाणि कर्माणि विवृण्वता भगवत्स्वरूपमुपदिष्टम्, एवं स्मृत्यन्तरेषु च द्रष्टव्यं कार्त्स्न्येन तत्त्वपराणामपि स्मृतीनामनवकाशत्वं स्यादित्यभिप्रायेणाह "भगवद्गीतासु चे"ति,

सू० आह चापस्तम्बः "पूः प्राणिनः सर्वगुहाशयस्य न हन्यमानस्य[1] विकल्मषस्य" इत्यारभ्य 'तस्मात्कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकस्स नित्य"इति, यदि कपिलस्मृत्या वेदान्तवाक्यार्थव्यवस्था स्यात् तदैतासां सर्वासां स्मृतीनामनवकाशत्वरूपो महान् दोषस्स्यात्, अयमर्थः—यद्यपि वेदान्तवाक्यानामतिक्रान्तप्रत्यक्षादिसकलेतरप्रमाणसम्भावनभूमिभूतार्थप्रतिपादनपरत्वात्तदर्थवैशद्यायाल्पश्रुतानां प्रतिपत्तॄणां तदुपबृंहणमपेक्षितं तथाऽपि तदर्थानुसारिणीनामाप्ततमप्रणीतानां बह्वीनां स्मृतीनां तदुपबृंहणाय प्रवृत्तानामनवकाशता मा प्रसाङ्क्षीदिति श्रुतिविरुद्धार्था कापिलस्मृतिरुपेक्षणीया

टी० आपस्तम्बोक्तिमाह 'आहे"ति, अध्यात्मखण्डयोः प्रथमे खण्डे पूः प्राणिन इति वाक्यं, द्वितीये खण्डे तस्मात्काया इति वाक्यं, तस्मादित्युक्ते कस्मादित्यपेक्षापूरणार्थे काय—शब्दस्य भगवच्छरीरपरत्व-

१ अहन्यमानस्येति पा० ।

दर्शनार्थं च पूः प्राणेन इति वाक्यमुपात्तं, पूः—पुरं शरीरमित्यर्थः, यथा भट्टहलायुधः "अङ्गं वपुर्वर्ष्म पुरं प्रतीक"मिति न तावदुपबृंहणैरपेक्ष्यात् कपिलस्मृतेरुपेक्ष्यत्वं सुवचं मन्वादिस्मृतेः सावकाशत्वं चोक्तं कपिलस्याप्तत्वे प्रमाणं चोक्तं, कपिलस्मृतिं विहाय स्मृत्यन्तरेणोपबृंहणे च को हेतुरिति शङ्कायामाह "अयमर्थ" इति, संभावनाभूमिभूतेति, भूत—शब्दः सिद्धपरः, सिद्धार्थप्रतिपादनपरत्वात्, अयमर्थः कार्यपरत्वे तुल्यविकल्पत्वेनाधिकारिभेदेन वाऽर्थविरोधः सुपरिहरः सिद्धवस्तुपरत्वेऽन्यतरस्मृत्यनुगुणं वेदार्थो नेयः न तूभयानुगुणमिति तथाऽपीत्यादिना कपिलस्मृतिं विहाय मन्वादिस्मृतिभिरेवोपबृंहणीयत्वे वैषम्यमाह आप्ततम—शब्दस्यायं भावः, यथाऽवस्थितवस्तुदर्शित्वं यथादृष्टार्थवादित्वं चेति द्विविधाऽऽप्तिः, तत्र ऋषिं प्रसूतं कपिलमिति कपिलस्य महर्षित्वमुच्यमानं मन्त्रद्रष्टृत्वातीन्द्रियानेकार्थद्रष्टृत्वादिनाऽप्युपपद्यते न तु सार्वत्रिकं यथावस्थितार्थदर्शित्वमपेक्षते । मन्वादीनान्तु "यद्वै किञ्चन मनुरवदत्" "स होवाच व्यासः पाराशर्य" इत्यादिभिस्सार्वत्रिकयथावस्थितदर्शनपूर्वकयथादृष्टार्थवादित्वमुक्तं, तस्मादाप्ततमा मन्वादयः, कपिलस्य त्वाप्तिमात्रमिति श्रुतिविरुद्धार्था—न्यायानुगृहीतश्रुतिविरुद्धार्थेति भावः । अत्रायमर्थः परेण न हि वचनविरोधे न्यायः प्रवर्त्तते इति न्यायानुगृहीतश्रुतेरपि स्मृत्यनुगृहीतश्रुतिः प्रबलेत्युक्तं तत्रोत्तरं न्यायविरुद्धस्मृत्यनुगृहीतश्रुतेरपि न्यायाविरुद्धस्मृत्यनुगृहीतश्रुतिः प्रबला ऋषिमात्रप्रणीतस्मृत्यनुगृहीतश्रुतेरप्याप्ततमप्रोक्तस्मृत्यनुगृहीतश्रुतिः प्रबला एकस्मृत्यनुगृहीतश्रुतेरपि बहुस्मृत्यनुगृहीतश्रुतिः प्रबलेति आप्ततमप्रणीतन्यायानुगृहीतानेकस्मृत्यनुगृहीतश्रुतिराप्तमात्रोक्तन्यायविरुद्धैकस्मृत्यनुगृहीतश्रुतेरपि प्रबलेति संग्रहोक्तिः । दूषणान्तरमाह—

मू० उपबृंहणं च श्रुतिप्रतिपन्नार्थविशदीकरणं, तच्च विरुद्धार्थया स्मृत्या न शक्यते कर्तुं, न चैतासां स्मृतीनां प्राचीनभागोदितधर्म्मांशविशदीकरणे न सावकाशत्वं परब्रह्मभूतपरमपुरुषाराधनत्वेन धर्मान्विदधतीनामेतासामाराध्यभूतप-

रमपुरुषप्रतिपादनाभावे सति तदाराधनभूतधर्म्मप्रतिपादनाऽसम्भवात्

टी० "उपबृंहणं" चेति, विरुद्धार्थया—न्यायानुगुणस्मृत्यनुगृहीतश्रुतिविरुद्धार्थया उपबृंहणानुपपत्तिर्दूषणमित्यर्थः । सावकाशत्वं प्रतिवदति "न चैतासामि"ति, अस्थिराणां कालान्तरभाविफलप्रदत्वं सद्वारकमेव तत्र कृष्यादेरङ्कुरादिद्वारकत्ववत्किमचेतनद्वारकत्व? मुत राजसेवादेरिव चेतनद्वारकत्व? मित्यपेक्षायां चेतनद्वारकत्वं श्रुतिरेवाहेति श्रुतहानाश्रुतकल्पनानुपपत्त्या परब्रह्मणि तासां तात्पर्यमस्तीत्यर्थः ॥

सू० तथा हि परमपुरुषाराधनरूपता सर्वेषां कर्म्मणां स्मर्य्यते "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ध्यायेन्नारायणं देवं स्नानादिषु च कर्म्मसु । ब्रह्मलोकमवाप्नोति न चेहावर्तते पुनः ॥ यैस्स्वकर्मपरैर्नाथ ! नरैराराधितो भवान् । ते तरन्त्यखिलामेतां मायामात्मविमुक्तये" इति,

टी० कर्मणां भगवदाराधनरूपत्वे प्रमाणमाह "तथा ही"ति, यतः प्रवृत्तिरिति भगवद्गीता "ध्यायेन्नारायणं देव"मिति दक्षस्मृतिः, यैः स्वकर्मेति वैष्णवे पुराणे, अत्रायमभिप्रायः पूर्वभागोपबृंहणपराणामपि स्मृतीनां कर्माराध्ये भगवति तात्पर्यमस्त्येव, उपनिषद्भागोपबृंहणपराणामत एवान्यत्र निरवकाशानामितिहासपुराणानामतीव तात्पर्यमस्ति, इतिहासपुराणयोः कर्मकीर्तनं भगवदुपासनाङ्गत्वेन, धर्मशास्त्रेषु ब्रह्मकीर्तनं कर्माराध्यत्वेनेति अनभिसंहितफलकर्मणां हि भगवदाराधनरूपता फलप्रदानां तु कर्मणां तदाराधनरूपत्वाभावात् न तत्प्रतिपादकशास्त्रस्य ब्रह्मणि तात्पर्यमित्याशङ्क्य परिहरति—

भू० न चैहिकामुष्मिकसांसारिकफलसाधनकर्म्मप्रतिपादनेनैतासां सावकाशत्वं, यतस्तेषामपि कर्म्मणां परमपुरुषाराधनत्वमेव स्वरूपं. यथोक्तं "येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ इति, तथा "यज्ञैस्त्वमिज्यसे नित्यं सर्वदेवमयाच्युत ! हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृगि" ति च, यदुक्तमृषिं प्रसूतं कपिलमिति कपिलस्याप्ततया सङ्कीर्तनात्तत्स्मृत्यनुसारेण वेदान्तार्थव्यवस्थापनं न्याय्यमिति तदसत्, बृहस्पतेः श्रुतिस्मृतिषु सर्वेषामतिशयितज्ञानानां निदर्शनत्वेन सङ्कीर्तनात्तत्प्रणीतेन लोकायतेन श्रुत्यर्थव्यवस्थापनप्रसक्तेरिति ॥

टी० "न चैहिकेत्यादिना यदुक्तमित्यादि । ननु न लोकायतेन श्रुत्यर्थव्यवस्थापनप्रसङ्गः, न हि लोकायते ऽग्निहोत्राद्यभ्युपेतं कपिलस्य तु तदभ्युपगतौ तद्वाक्येन श्रुत्यर्थव्यवस्थापनं युक्तमिति चेन्न बृहस्पतिप्रणीतस्यापि लोकायतस्य परित्यागे यद्धेतुकः स श्रुत्यर्थविरोधोऽत्रापि विद्यते चेत्तद्वदेव कपिलस्मृतिरपि विरुद्धांशे त्याज्या, तथा चौदुम्बरी सर्वा वेष्टयितव्येत्यत्र च निर्णीतं तद्वदिति परिहारः । उत्तरसूत्रशङ्कामाह

भू० अथ स्यात्कपिलस्य स्वयोगमहिम्ना वस्तुयाथात्म्योपलब्धेस्तत्स्मृत्यनुसारेण वेदान्तार्थो व्यवस्थापयितव्य इति, अत उत्तरं पठति—

## सू० इतरेषां चानुपलब्धेः ॥ २ ॥

च–शब्दस्तु–शब्दार्थश्चोदिताशङ्कानिरस्त्यर्थः, इतरेषां म-

न्वादीनां बहूनां स्वयोगमहिमसाक्षात्कृतपरा[1]परतत्त्वयाथात्म्यानां निखिलजगद्भेषजभूतस्ववाक्या[2]र्थतया "यद्वै किञ्चन मनुरवदत्तद् भेषज"मित्यादिश्रुतिप्रसिद्धानां कपिलदृष्टप्रकारेण तत्त्वानुपलब्धेः श्रुतिविरुद्धा कपिलोपलब्धिर्भ्रान्तिमूलेति न तया यथोक्तो वेदान्तार्थश्चालयितुं शक्यत इति सिद्धम् ॥ स्मृत्यधिकरणं समाप्तम् ॥

टी० ॥ अथ स्यादिति मन्वादीनां धर्मप्रवर्तनादिष्वन्यपरत्वान्न योगावसरः, कपिलस्तु योगसाक्षात्कृतार्थतत्त्व इति तत्स्मृतिरादरणीयेत्यर्थः । सू० इतरेषां चानुपलब्धेः, व्याचष्टे "च–शब्द" इति, यदि कपिलस्य स्वस्मृतिप्रकारेणोपलब्धिरस्ति सा बहूनां स्मर्तृणां तत्त्वोपलब्धिविरोधात् भ्रान्तिरित्यर्थः । न च तेषां धर्मानुष्ठानपरत्वाद्योगानवसरः अनभिसंहितफलधर्मानुष्ठानस्य योगाङ्गतयाऽत्यन्तानुकूलत्वात्तद्रहितस्य योगो न समीचीनः सरजस्तमस्कत्वात् ॥ स्मृत्यधिकरणं समाप्तम् ।

योगप्रत्युक्त्यधिकरणम् । **सू० एतेन योगः प्रत्युक्तः ॥ ३ ॥**

भा० एतेन कापिलस्मृतिनिराकरणेन योगस्मृतिरपि प्रत्युक्ता का पुनरत्राधिका शङ्का यन्निराकरणाय न्यायातिदेशः योगस्मृतावपीश्वराभ्युपगमान्मोक्षसाधनतया वेदान्तविहितयोगस्य चाभिधानात् वक्तुर्हिरण्यगर्भस्य सर्ववेदान्तप्रवर्तनाधिकृतत्वाच्च तत्स्मृत्या वेदान्तोपबृंहणं न्याय्यमिति ॥

टी० सू० एतेन योगः प्रत्युक्तः, अत्र विषयसंशयहेतू पूर्ववत् ब्रह्मकारणत्वं विचाल्य? मुत नेति विचारः, तदर्थमीश्वराधिष्ठितं प्रधानं कारण? मुत ब्रह्मे? ति किं योगस्मृतिविरोधेन वेदान्तानामन्यपरत्वमापाद्य? मुत ने? ति

१ परावरतत्त्वयाथात्म्यानामिति पा० ।

२ भेषजभूतस्ववाक्यतयेति पा० ।

किं तया वेदान्तोपबृंहणं कार्यं? मुत ने? ति किं साभ्रान्तिमूला? उत ने? ति किं हिरण्यगर्भस्य भ्रमः सम्भवति ने? ति यदा न सम्भवति तदा तदुपबृंहणीयतया वेदान्तानां तद्विरोधेऽन्यपरत्वादीश्वराधिष्ठितं प्रधानं कारणमिति ब्रह्मकारणत्वं विचाल्यमिति यदा भ्रमस्सम्भवति तयोपबृंहणीयत्वाभावाद्वेदान्तवाक्यानां तद्विरोधेऽन्यपरत्वाभावादीश्वराधिष्ठितप्रधानस्य जगत्कारणत्वाभावात् ब्रह्मकारणत्वमविचाल्यमिति । सूत्रस्यान्तरार्थमाह "एतेने" ति, वैदिकतत्त्वाभ्युपगममनुष्ठानाभ्युपगमं चाह "ईश्वरतत्त्वाभ्युपगमाद्योगस्य चाभिधाना" दिति, परिहारे तत्त्ववैषम्यमाह—

सू० परिहारस्त्वब्रह्मात्मकप्रधानकारणवादान्निमित्तकारणमात्रेश्वराभ्युपगमाद् ध्यानात्मकस्य योगस्य ध्येयैकनिरूपणीयस्य ध्येयभूतयोरात्मेश्वरयोर्ब्रह्मात्मकत्वजगदुपादानतादिसर्वकल्याणगुणात्मकत्वविरहादवैदिकत्वाद्वक्तुर्हिरण्यगर्भस्यापि क्षेत्रज्ञभूतस्य कदाचिद्रजस्तमोऽभिभवसम्भवाच्च योगस्मृतिरपि तत्प्रणीतरजस्तमोमूलपुराणवद्भ्रान्तिमूलेति न तया वेदान्तोपबृंहणं न्याय्यमिति ॥ योगप्रत्युक्त्यधिकरणं समाप्तम् ॥

टी० ॥ "अब्रह्मात्मके" ति, अनुष्ठानवैषम्यं चाह "ध्यानात्मकस्ये" ति, न हि ध्यानस्य ध्यानत्वान्मोक्षोपायत्वं गर्दभध्यानादिषु व्यभिचारात्, तस्माद् ध्येयविशेषविषयमेव ध्यानं मोक्षसाधनमिति ध्येयवैषम्यात्तदेकनिरूपणीयध्यानवैषम्यादित्यर्थः, आत्मेश्वरयोरिति ब्रह्मात्मकत्वं जीवस्य जगदुपादानत्वादिकल्याणगुणयोग ईश्वरस्य क्षेत्रज्ञभूतस्येति यो ब्रह्माणं विदधातीति सृज्यत्वश्रुतिरवतारश्रुत्यनपोदिता ब्रह्मणः क्षेत्रज्ञत्वे प्रमाणं यथेन्द्रवरुणादीनां कर्मकृतनामरूपाभ्यां योजनीयत्वं हि चेतनस्य सृज्यत्वमिति भावः । कदाचिद्रजस्तमोऽभिभवसम्भवादिति कल्पविशेषेषु गुणविशेषोन्मेषविषयपुराणवचनार्थोऽभिप्रेतः । ननु शौनकेनैव ब्रह्म-

णो भगवदंशत्वं भगवद्वचनेनैव प्रदर्श्यते "त्वमप्यत्र महाभाग ! मदंशः कमलोदरान्मन्नाभिसम्भवाज्जातः प्रजासृष्टिकरः पर" इति, तस्माद्वा ब्रह्म स्तम्बपर्यन्ता इति नाभिविधिर्विवक्षितः, किन्तु मर्यादेति, नैवं स्तम्बस्याप्यकर्मवश्यत्वप्रसङ्गात् । स्थावरदेहस्य कर्मनिबन्धनत्वं च स्मर्यते "पुमान्न देवो न नरो न पशुर्न च पादपः । शरीराकृतिभेदास्तु भूपैते कर्मयोनय" इति, भगवदंशत्वव्यपदेशस्तत्तदनुप्रवेशनिबन्धन इति, तत्रैवोक्तं "यदि तेऽनुग्रहकृता मयि बुद्धिर्जनार्दन ?। तन्मां भक्त इति ज्ञात्वा कथयाऽऽत्मानमच्युते"ति, ब्रह्मणः प्रागविदितभगवत्स्वरूपजिज्ञासया प्रार्थनमुक्तम्, अनुग्रहकृता—अनुग्रहरूपेण कृताऽनुग्रहाय कृता वा । कथयामि तवात्मानमनाख्यागोचरं परम् । न वाचां विषयो योऽसाववविशेषस्वलक्षणः प्रसादसुमुखः सोऽहमिमं यच्छामि ते वरम् ॥ अनाख्यातस्वरूपं मां भवान् ज्ञास्यति योगतः । भक्तो मां तत्त्वतो वेत्ति मयि भक्तिश्च ते परा । जिज्ञासा परमा ब्रह्मंस्तेन जाता मतिस्तव । एवमुक्तस्ततो ब्रह्मा विष्णुना प्रभविष्णुना । विष्णुस्वरूपजिज्ञासुर्ययोजात्मानमात्मना । स ददर्शातिसूक्ष्माणां सूक्ष्मं ज्योतिरजं प्रभुम् निमेषार्धार्धमात्रेण व्याप्ताशेषचराचरम् । आत्मानमिन्द्ररुद्रार्कचन्द्राश्विवसुमारुतान् । खादीनपि च शब्दादीन् । ददृशे स च तन्मया"निति भक्तिप्रीतिभगवत्प्रसादलब्धयोगेन ब्रह्मणा युगपद्विश्वव्यापिभगवत्स्वरूपसाक्षात्कारस्तत्र भगवत्स्वरूपे च इन्द्रवस्वादिजीववदाकाशाद्यचेतनवच्च स्वात्मनो रुद्रस्य च दर्शनं चोक्तं तत्रावतारप्रश्नानन्तरं भगवता परित्राणाय साधूनामित्यारभ्य "पूर्वोत्पन्नेषु भूतेषु नृदेवादिषु चाप्यहम् । अनुप्रविश्य धर्मस्य करोमि परिपालनम् ॥ प्रविश्य च तथा पूर्वां तनुं धर्मभृतांवर ! जगतोऽस्य जगत्यस्मिन् करोमि परिपालन"मित्यवतारद्वैविध्यमुक्त्वा ॥ यद्वै । धर्मोपकाराय यच्च दुष्टनिबर्हणम् । चरितं मानुषादीनां तद्वै जानीष्व मत्कृत-मित्यनेनानुप्रवेशावतारेषु स्वानुप्रविष्टजीवगतप्रकृष्टचेष्टितानामेव स्वचेष्टितत्वं न निकृष्टचेष्टितानामिति प्रतिपाद्य "उत्पाद्य पृथिवीं सम्यक् स्थापयित्वा यथापुरा । सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते"मिति चतुर्मुखस्य भगवदंशत्वमनुप्रवेशकृतमिति सुस्पष्टमुक्तं, तत्र

ब्रह्मणो मुक्तावस्थायामिन्द्रस्येव रुद्रस्य भगवदात्मकत्वदर्शनस्योपक्रमावगततया "संकर्षणात्मकश्चैव कल्पान्ते च रसातलात् । समुत्पत्स्ये तदा रुद्रः कालाग्निरिति विश्रुतः" इति च संकर्षणानुप्रवेशेन रुद्रस्य भगवदात्मकतायाः प्रतिपादितत्वात् 'नृत्यत्यन्ते च यद्रूपमिति रूपतयोक्तत्वात् "तवान्तरात्मा मम चेति भगवदन्तर्यामित्ववचनाच्च । रुद्रस्यापि भगवदंशत्वमनुप्रवेशकृतं तथा श्रीविष्णुधर्मोत्तरे "ब्रह्मा शम्भुस्तथैवार्कश्चन्द्रमाश्च शतक्रतुः । एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा । जगत्कार्यावसाने तु वियुज्यन्ते च तेजसा । वितेजसश्च ते सर्वे पञ्चत्वमुपयान्ति वे"ति ब्रह्मादीनां भगवत्तेजोवियोगेन प्रलयप्रतिपादनाच्चानुप्रवेशः सिद्धः । तथा मोक्षधर्मे "नारायणो महायोगी शुभाशुभविवर्जितः । ससर्ज नाभिजं पुत्रं ब्रह्माणममितप्रभम् । ततः स प्रादुरभवदथैनं वाक्यमब्रवीत् मम त्वं नाभितो जातः प्रजासर्गकरः प्रभुः । सृज प्रजास्त्वं विविधा ब्रह्मन् सजडपण्डिताः । स एवमुक्तो विमुखश्चिन्ताव्याकुलमानसः । प्रणम्य वरदं देवमुवाच हरिमीश्वरम् । का शक्तिर्मम देवेश! प्रजाः स्रष्टुं नमोऽस्तु ते ॥ अप्रज्ञावानहं देव विधत्स्व यदनन्तरम् । स एवमुक्तो भगवान् बभूवान्तर्हितस्ततः । चिन्तयामास विश्वेशो बुद्धिं बुद्धिमतां वरः । स्वरूपिणी ततो बुद्धिरुपतस्थे हरिं प्रभुम् । योगेन चैनां संयोज्य स स्वयं युयुजे तदा । स तामैश्वर्ययोगस्थां बुद्धिं शक्तिमतीं सतीम् । उवाच वचनं देवो बुद्धिं वै प्रभुरव्ययः । ब्रह्माणं प्रविशस्वेति लोकसृष्ट्यर्थसिद्धये । ततस्तमीश्वरादिष्टा बुद्धिः क्षिप्रं विवेश सा । अथैनं बुद्धिसंयुक्तं पुनस्तं ददृशे हरिः । भूयश्चैनं वचः प्राह । सृजेमा विविधाः प्रजाः । बाढमित्येव जग्राह यथाज्ञां शिरसा हरेः । तथाऽकरोच्च धर्मात्मा ब्रह्मा लोकपितामह" इति भगवदनुप्रविष्टया तदाहितशक्त्या बुद्ध्यानुप्रविष्टत्वात् सृष्टिसामर्थ्यं ब्रह्मण उक्तम् स स्वयं युयुजे इति, बुद्धेरन्तरनुप्रवेशो ह्युक्तः अर्थान्तरानुपपत्तेः, अतश्चतुर्मुखस्य भगवदवतारत्वमनुप्रवेशकृतं, तस्मादाब्रह्मस्तम्बपर्यन्ता इत्यभिविधिरेव विवक्षितः परस्तावद्[1] द्वितीयं सूत्रमेवं व्याख्यातम् इतरेषा-

१ परैस्त्वाद्यो द्वितीयमिति पा० ।

माहङ्कारादीनां तत्त्वानां श्रुतावनुपलब्धेः, अतः कार्यस्मृत्यनुपपत्त्या च कारणस्मृत्यनुपपत्तिस्तात्पर्यार्थ इति तदयुक्तं श्रुतावेवोपलब्धेः "तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति लीयते महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयत" इति तथा "बुद्धिरध्यात्मं बोद्धव्यमधिभूतं ब्रह्मा तत्राधिदैवत"मिति अहङ्कारोऽध्यात्ममहङ्कर्तव्यमधिभूतं रुद्रस्तत्राधिदैवत"मिति तथा यस्याहङ्कारः शरीरं यस्य बुद्धिः शरीरं यस्याव्यक्तं शरीर"मिति तथा मनो भित्त्वा भूतादिं भिनत्ति भूतादिं भित्त्वा महान्तं भिनत्ति महान्तं भित्त्वा ऽव्यक्तं भिनत्ति" इति एषु वाक्येषु बुद्धि-शब्दोमहत्तत्त्वव्यापारपरः "महान् वै बुद्धिलक्षणम्" इति श्रुतेः, अतोऽव्यक्तमहदहङ्काराः श्रुतावुपलभ्यन्ते, स्मर्यन्ते च "यत्तत्कारणमव्यक्त"मित्युपक्रम्य "त्रिविधोऽयहङ्कारोमहत्तत्त्वादजायते"ति, अतः स्मृत्युपबृंहिता श्रुतिर्महदादौ प्रमाणं, सूत्रकारैस्तु "महतः परमव्यक्त" मित्यादेः कठवल्लीवाक्यस्यैव महदादितत्त्वपरत्वं प्रतिक्षिप्तमर्थविरोधात्, सुबालोपनिषद्वाक्यानां तु विरोधाभावान्न प्रतिक्षिप्तम् अतः श्रुतावनुपलब्धेरिति व्याख्यानमयुक्तम्, । अब्रह्मात्मकानां महदादीनां श्रुतावनुपलब्धिर्विवक्षितेति चेन्न अब्रह्मात्मकप्रधानमपि श्रुतिष्वनुपलब्धमिति प्रधानादितरेषां लोके वेदे चानुपलब्धेरिति व्याख्यानमनुपपन्नम्, । एतेन योगः प्रत्युक्त इत्यत्र अधिकशङ्कापरिहारौ परैरेवमुक्तौ "त्रिरुन्नतं स्थाप्य समं शरीरं तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणां विद्यामेतां योगविधिं च कृत्स्नमित्यादिषु श्रुतिषु योगस्मृत्यर्थस्य परिगृहीतत्वाद्योगस्मृतेः प्रामाण्यशङ्का एकदेशसंप्रतिपत्तावप्येकदेशान्तरविप्रतिपत्तेरप्रामाण्यमिति परिहार इति तत्र तावदधिकशङ्कोक्तिरनुपपन्ना आधिक्याभावाच्छङ्कायाः, श्रुतिपरिग्रहो हि सांख्यस्मृतेरपि तुल्यः "तत्कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपापैः । पुरुषं निर्गुणं साङ्ख्यम् अथर्वशिरसो विदु"रिति श्रुत्यविरुद्धांशस्य श्रुत्या परिग्रह इति निर्वाहश्च द्वयोरपि तुल्यः, अतः शङ्काया अधिकत्वाभावात् परिहारश्चानधिकः एकदेशसम्प्रतिपत्तावप्येकदेशविप्रतिपत्तेरप्रामाण्यमपि द्वयोस्तुतुल्यम् अतः शङ्कापरिहारावनुपपन्नौ । यादव

प्रकाशैस्तु द्वितीयं सूत्रमेवं व्याख्यातं कार्य्येषु सुखदुःखमोहदर्शनेन कथंचित् प्रधानानुमानेऽपि कुण्डलादौ सुवर्णादेरिव कार्येष्वनुपलब्धानां पुरुषमहदहङ्कारादीनां तत्त्वान्तरत्वेन परिकल्पनमयुक्तं पृथिव्यादीनामेव कश्चिदंशो हृदयादिस्थानस्थः पुरुषो महदहङ्कारादयश्च स्युरित्युपगमे बाधाभावादिति, अतः कार्यस्मृत्यनुपपत्तेश्च कारणस्मृत्यनुपपत्तिरिति सूत्रं च कपिलादिस्मृतीनामेव योगिप्रत्यक्षमूलत्वं स्मृत्यनवकाशदोषनिराकरणेन प्रत्युक्तमिति व्याख्यातं तत्र तावदितरेषामिति सूत्रयोजनाऽनुपपन्ना भोक्तृत्वाध्यवसायाभिमानादिकार्योपलम्भात् तानि कार्याणि पृथिव्यादीनामंशविशेषेष्वेव स्युरिति चेत् सुखदुःखमोहादयश्च तेष्वेव स्युरिति प्रसङ्गस्याविशिष्टत्वात् प्रधानकल्पनमनुमत्य पुरुषमहदादिव्युदासो निर्निबन्धनः तस्यापि व्युदासोऽभिमतश्चेदितरेषामिति पदवैयर्थ्यं, तदा हि सर्वेषां चानुपलब्धेरिति वक्तव्यं, तथा च मन्दफलं युक्तिभिस्तत्कल्पनानां तर्कपादे निरसिष्यमाणत्वात्, अतः कपिलस्मृतेर्योगिप्रत्यक्षमूलत्वव्युदसनमपेक्षितमिति तदेव विवक्षितम् । एतेनेति सूत्रेण तद्व्युदस्यत इति चेन्न साङ्ख्यस्मृतेरिव योगस्मृतेः श्रुतिविरुद्धांशव्युदसनस्यापेक्षितत्वात्, तस्य च शब्दानुकूलत्वादपेक्षितसिद्ध्यनुगुणनिर्वाहे सम्भवति तदननुगुणनिर्वाहाश्रयणस्यानुपपन्नत्वात्स्मृत्यनवकाशसूत्रेणैव योगस्मृतिव्युदासोऽपि सिद्धेस्तुल्यन्यायत्वादिति चेत् न अधिकशङ्कायाः संभवात्, अतो योगस्मृतिविषयमतिदेशाधिकरणमेतेनेति सूत्रितमिति युक्तम् ॥ योगप्रत्युक्त्यधिकरणं समाप्तम् ॥

विलक्षणत्वाधिकरणम् ।

## सू० न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

भा० पुनरपि स्मृतिविरोधवादी तर्कमवलम्बमानः प्रत्यवतिष्ठते यत्साङ्ख्यस्मृतिनिराकरणेन जगतो ब्रह्मकार्य्यत्वमुक्तं तन्नोपपद्यते अस्य प्रत्यक्षादिभिरचेतनत्वेनाशुद्धत्वेनानीश्वरत्वेन दुःखात्मकत्वेन चोपलभ्यमानस्य चिदचिदात्मकस्य

च जगतोभवदभ्युपेतात्सर्वज्ञात्सर्वेश्वराद्धेयप्रत्यनीकादानन्दैकतानाद्ब्रह्मणो विलक्षणत्वात्। न केवलं प्रत्यक्षादिभिरेव जगतो वैलक्षण्यमुपलभ्यते, शब्दाञ्च तथात्वं—विविलक्षत्वमुपलभ्यते "विज्ञानं चाविज्ञानं च एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः अनीशश्चात्मा बध्यते भोक्तृभावादित्यादिभिः, कार्य्यस्य हि जगतोऽचेतनत्वदुःखित्वादयो निर्दिश्यन्ते ।

टी० सू० न विलक्षणत्वादस्य तथात्वं च शब्दात्, सङ्गतिमाह "पुनरपी"ति, मन्वादिस्मृतिभिरुपबृंहणं कार्यमित्युक्तं, मन्वादिस्मृतयस्तर्कविरुद्धाः साङ्ख्यस्मृतिस्तर्कानुगृहीता अतस्तयोपबृंहणं कार्यमिति प्रत्यवस्थानात्सङ्गतिरित्यर्थः प्रथमविचारः पूर्ववत्, तदर्थं किं चेतनाद् ब्रह्मणोऽचेतनजगदुत्पत्तिः सम्भवति ने? ति विचारः, तदर्थं किं जगत्कारणस्य जगत्सालक्षण्यानुमितिहेतुरनैकान्तिकः, नेति यदा नानैकान्तिकः तदा चेतनाद् ब्रह्मणोऽचेतनजगदुत्पत्तेरसम्भवाद् ब्रह्मकारणवादश्चाल्यः, यदा त्वनैकान्तिकस्तदा ब्रह्मणो विलक्षणजगदुत्पत्तिसम्भवाद् ब्रह्मकारणत्वमविचाल्यमिति । सौत्रं नेति पदं व्याचष्टे "यदि"ति, अस्येति व्याख्येयं तद्व्याचष्टे "प्रत्यक्षादिभिरि"ति, अस्येति पदं लौकिकप्रमाणसिद्धाकारविशिष्टपरामर्शीति भावः । विलक्षणत्वादिति पदं व्याचष्टे "भवदभ्युपेतादि"ति, अचेतनत्वेनेत्यादिविशेषणचतुष्टयप्रतियोगित्वेन सर्वज्ञत्वादित्यादि विशेषणचतुष्टयमुक्तं तथात्वमित्यादिकं सूत्रखण्डं व्याचष्टे "न केवलमि"ति, तथात्वपदव्याख्यानं विलक्षणत्वमिति, विलक्षणत्वोपबृंहकं शब्दमुदाहरति "विज्ञानमि"ति,

सू० यदि यत्कार्य्यं तत्तस्मादविलक्षणं यथा मृत्सुवर्णादिकार्य्यं घटरुचकादि, अतो ब्रह्मविलक्षणस्यास्य जगतस्तत्कार्य्य-

त्वं न सम्भवतीति साङ्ख्यस्मृत्यनुरोधेन कार्य्यसलक्षणं प्रधानमेव कारणं भवितुमर्हति, अवश्यं च शास्त्रस्यानन्यापेक्षस्यातीन्द्रियार्थगोचरस्यापि[1] तर्को ऽनुसरणीयः यतस्सर्वेषां प्रमाणानां क्वचित् क्वचिद्विषये तर्कानुगृहीतानामेवार्थनिश्चयहेतुत्वं, तर्को हि नामार्थस्वभावविषयेण वा सामग्रीविषयेण वा निरूपणेनार्थविशेषे प्रमाण्यं[2] व्यवस्थापयत्तदितिकर्तव्यतारूपमूहापरपर्य्यायं ज्ञानं, तदपेक्षा च सर्वेषां

टी० ॥ ततः किमित्यत्राह "यद्धि यत्कार्य"मिति, अपौरुषेयस्य शास्त्रस्य मानान्तरागोचरार्थविषयत्वात् प्रत्यक्षादिदृष्टव्याप्तिमूलस्तर्कश्शास्त्रसिद्धमर्थन्न गोचरयतीत्यत्राह "अवश्यं चे"ति, अनन्यापेक्षस्य प्रमाणान्तरानपेक्षस्य प्रमाणान्तरनैरपेक्ष्येऽपि प्रमाणाङ्गभूतस्तर्कोऽनुसरणीय इत्यर्थः । कुत इत्यत्राह "यत" इति, क्वचित्क्वचिद्विषये स्वत एवास्पष्टार्थं प्रामाण्यस्य परानपेक्षत्वं नाम प्रमित्यन्तरनैरपेक्ष्यं न त्वितिकर्तव्यतानैरपेक्ष्यमित्यभिप्रायः । तर्केण प्रमाणस्य किञ्चित्कारं दर्शयति "तर्को हि नामे"ति, यत्रभसोनीरूपत्वादचाक्षुषत्वमुच्यते तदर्थस्वभावविषयनिरूपणेनार्थविशेषे प्रमाणव्यवस्थापनं वैधहिंसायाः श्रेयस्करत्वप्रमितिजनकवाक्यनिरूपणेन न हिंस्यादिति वाक्यस्य वैधहिंसाव्यतिरिक्तविषयत्वं यदुच्यते तत्सामग्रीविषयनिरूपणेनार्थविशेषे प्रमाणव्यवस्थापनं प्रत्यक्षस्य ज्वालैक्यविषयत्वं विना ज्वालोत्पत्तिनिरूपणेन तत्स्वरूपमात्रविषयत्वनिर्णयश्च । यद्वाऽर्थस्वभावविषयनिरूपणं नाम बाध्यत्वाबाध्यत्वनिरूपणं कारणदोषस्य बाधकप्रत्ययस्य वा भावाभावनिरूपणेन प्रमाणस्य विषयविशेषपरिच्छेदकत्वनिश्चयो विवक्षितः ।

---

१ अतीन्द्रियार्थगोचरत्वेऽपीति पा० ।

२ प्रमाणं व्यवस्थापयति पा० ।

मू० प्रमाणानां समाना, शास्त्रस्य तु विशेषेणाकाङ्क्षासन्निधियोग्यताज्ञानाऽधीनप्रमाणभावस्य सर्वत्रैव तर्कानुग्रहापेक्षा, उक्तं च मनुना "यस्तर्केणानुसंधत्ते स धर्म्मं वेद नेतर" इति, तदेवं हि तर्कानुगृहीतशास्त्रार्थप्रतिष्ठापनं श्रुत्या च मन्तव्य इत्युच्यते, अथोच्येत श्रुत्या च जगतो ब्रह्मैककारणत्वे निश्चिते सति तत्कार्यस्यापि जगतश्चैतन्यानुवृत्तिरभ्युपगम्यते, यथा चेतनस्य सुषुप्तिमूर्च्छादिषु चैतन्यानुपलम्भः तथा घटादिष्वपि सदेव चैतन्यमनुद्भूतम्, अत एव चेतनाचेतनविभाग इति, नैतदुपपद्यते यतो नित्यानुपलब्धिरसद्भावमेव साधयति, अत एव चैतन्यशक्तियोगोऽपि तेषु निरस्तः, यस्य हि क्वचित्कदाचिदपि यत्कार्यानुपलब्धिस्तस्य हि तत्कार्यशक्तिं ब्रुवाणो वन्ध्यासुतसमितिषु तज्जननीनां प्रजननशक्तिं ब्रूताम् ।

टी० ॥ शास्त्रस्य त्विति, तु-शब्दः साध्यवैषम्यं द्योतयति, विशेषेणे-ति शब्दः साधनवैषम्यमाकाङ्क्षासन्निधियोग्यतासापेक्षत्वं साधनवैषम्यं तेन सर्वत्र तर्कसापेक्षत्वं साध्यवैषम्यमित्यभिप्रायः । यादवप्रकाशमतेन चोद्यं शङ्कते "अथे"ति । चैतन्यानुपलम्भः कथमित्यत्राह "यथा चेतनस्ये"ति, वेदान्तिभिर्नित्यस्यात्मस्वरूपावभासरूपस्य चैतन्यस्य विद्यमानस्यापि सुषुप्तौ स्फुटतरोपलम्भाभावाभ्युपगमात्तं प्रतिवन्दीकृत्य परिहार उक्तः । सर्वत्र चैतन्यसद्भावे चेतनाचेतनव्यवस्था कथमित्यत्राह "अत एवे"ति, परिहरति "नैतदि"ति, इतरवादिभिः सुषुप्तौ चैतन्योत्पत्तिशक्तियोगस्याभ्युपगतत्वात् तत्प्रतिवन्दीकारेण घटादीनां च चैतन्यानुपलम्भेऽपि चैतन्यशक्तियोगात्कारणसालक्षण्यसिद्धिरित्याशङ्क्याह "अत एव चैतन्ये"ति ॥

मू० किञ्च वेदान्तैर्ज्जगतो ब्रह्मोपादानताप्रतिपादननिश्चये

सति घटादीनां चैतन्यशक्तेश्चैतन्यस्य चानुद्भूतस्य सद्भाव-
निश्चयस्तन्निश्चये सति वेदान्तैर्जगतो ब्रह्मोपादानताप्रति-
पादननिश्चय इतीतरेतराश्रयत्वं, विलक्षणयोर्हि कार्य्यका-
रणभावः प्रतिपादयितुमेव न शक्यते । किं पुनः प्रकृति-
विकारयोः सालक्षण्यमभिप्रेतं यदभावाज्जगतो ब्रह्मोपा-
दानत्वप्रतिपादनासम्भवं ब्रूषे, न तावत्सर्वधर्म्मसारूप्यं
कार्यकारणभावानुपपत्तेः, न हि मृत्पिण्डकार्य्येषु घटशरा-
वादिषु पिण्डत्वाद्यनुवृत्तिर्दृश्यते । अथ येन केनचिद्धर्म्मेण
सारूप्यं तज्जगद्ब्रह्मणोरपि सत्तादिलक्षणं सम्भवति ।

टी० ॥ वेदान्तप्रामाण्यमभ्युपगच्छता त्वयाऽप्येवमङ्गीकार्य्यमि-
त्याशङ्क्याह "किञ्चे"ति, ब्रह्मोपादानताप्रतिपादनस्य कथं घटादिषु चैत-
न्यनिश्चयमापेक्षत्वमित्यत्राह "विलक्षणयोर्ही"ति, न ह्यादित्यो यूप
इत्यादिवाक्यमयोग्यार्थप्रतिपादनक्षमं तस्माद्योग्यत्वनिश्चये सति ब्रह्मो-
पादानताप्रतिपादनसम्भव इत्यन्योन्याश्रय इत्यर्थः । सिद्धान्तिच्छायया
चोदयति "किं पुनरि"ति,

सू० तदुच्यते येन स्वभावेन कारणभूतं वस्तु वस्त्वन्तराद् व्या-
वृत्तं तस्य स्वभावस्य तत्कार्य्येऽप्यनुवृत्तिः कार्य्यस्य कारण-
सालक्षण्यं, येन ह्याकारेण मृदादिभ्यो हिरण्यं व्यावर्तते
तदाकारानुवृत्तिस्तत्कार्य्येषु कुण्डलादिषु दृश्यते, ब्रह्म च
हेयप्रत्यनीककल्याणानन्दैश्वर्य्यस्वभावं, जगच्च तत्प्रत्यनीक-
स्वभावमिति न तदुपादानम् । ननु च वैलक्षण्येऽपि का-
र्य्यकारणभावो दृश्यते, यथा चेतनात्पुरुषादचेतनानि केश-
नखदन्तलोमानि जायन्ते, यथा चाऽचेतनाद् गोमयाच्चेत-

नो वृश्चिको जायते, चेतनाचेतनाभिरचेतनस्तन्तुरित्येवं यतस्तत्राप्यचेतनांश एव कार्य्यकारणभावः । अथ स्यात् अचेतनत्वेनाभिमतानामपि चैतन्ययोगः श्रुतिषु श्रूयते[1] "तं पृथिव्यब्रवीत्" "आपो वा अकामयन्त", "ते हेमे प्राणा अहं श्रेयसे विवदमाना ब्रह्माणं जग्मु"रिति नदी-समुद्रपर्वतादीनामपि चैतन्यं पौराणिका आतिष्ठन्ते, अतो न वैलक्षण्यमिति, अत उत्तरं पठति—

टी० सत्तादीत्यादि शब्देन द्रव्यत्वं विवक्षितम् । परिहरति "तदुच्यत" इति, सालक्षण्यमेव स्यात्ततः किमित्यत्राह "ब्रह्म चे"ति ब्रह्मणोजगतश्च द्रव्यत्वावान्तरजातिविशेषः सालक्षण्यमिति फलितं तच्चात्र चेतनत्वं तेन च सालक्षण्यं नास्तीत्यर्थः । एवं वैलक्षण्यस्यासिद्धिराशङ्क्य परिहृता । अथानैकान्त्यमाशङ्क्य परिहरति "ननु चे"ति, उत्तरसूत्रमवतारयति 'अथ स्या'दिति,

## सू० अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

भा० तु—शब्दश्चोदिताशङ्कानिवृत्त्यर्थः पृथिव्याद्यभिमानिन्यो देवतास्तं पृथिव्यब्रवीदित्यादिषु पृथिव्यादिशब्दैर्व्यपदिश्यन्ते, कुतः विशेषानुगतिभ्यां विशेषो—विशेषणं देवता—शब्देन विशेष्य पृथिव्यादयोऽभिधीयन्ते हन्ताहमिमास्तिस्रो देवता इति तेजोऽबन्नानि देवता—शब्देन विशेष्यन्ते "सर्वा ह वै देवता अहंश्रेयसे विवदमानास्ते देवाः प्राणे निश्श्रेयसं विदित्वे"ति च अनुगतिरनुप्रवेशः अग्नि-

१ श्रूयते पा० ।

वागभूत्वा मुखं प्राविशत् आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद् वायुः प्राणो भूत्वा नासिके प्राविशदि"त्यादिना वागाद्यभिमानित्वेनाग्न्यादीनामनुप्रवेशः श्रूयते, अतो जगतोऽचेतनत्वेन विलक्षणत्वाद्ब्रह्मकार्य्यत्वानुपपत्तेः तर्काप्रतिष्ठस्मृत्यनुरोधेन जगतः प्रधानोपादानत्वं वेदान्तैः प्रतिपाद्यत इत्येवं प्राप्तेऽभिधीयते—

टी० सू० अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्, तु-शब्दस्य पूर्वपक्षव्यावृत्त्यर्थता माऽभूदिति व्याचष्टे "तु-शब्द" इति हन्ताऽहमिमा इत्यादिवाक्ये पृथिव्यादीनामष्टस्पृत्वादाह "तेजोऽन्नानी"ति,

## सू० दृश्यते तु ॥ ६ ॥

भा० तु-शब्दात्पक्षो विपरिवर्तते यदुक्तं जगतो ब्रह्मविलक्षणत्वेन ब्रह्मोपादानत्वं न सम्भवतीति तदयुक्तं विलक्षणयोरपि कार्यकारणभावदर्शनात्, दृश्यते हि माक्षिकादेर्विलक्षणस्य कृम्यादेस्तस्मादुत्पत्तिः । नन्वुक्तमचेतनांश एव कार्य्यकारणभावात्तत्र सालक्षण्यं, सत्यमुक्तं, न तावता कार्य्यकारणयोर्भवदभिमतसालक्षण्यसिद्धिः यथाकथञ्चित्सालक्षण्ये सर्वस्य सर्वसालक्षण्येन सर्वस्मात्सर्वोत्पत्तिप्रसङ्गभयाद्वस्तुनो वस्त्वन्तराद् व्यावृत्तिहेतुभूतस्याकारस्यानुवृत्तिस्सालक्षण्यं भवताऽभ्युपेतं, स तु नियमो माक्षिकादिभ्यः कृम्याद्युत्पत्तौ न दृश्यत इति ब्रह्मविलक्षणस्यापि जगतो ब्रह्मकार्य्यत्वं नानुपपन्नं, न हि मृद्धिरण्यघटमुकुटादिष्विव वस्त्वन्तरव्यावृत्तिहेतुभूतासाधारणाकारानुवृत्तिर्माक्षिकगोमयकृमिवृश्चिकादिषु दृश्यते

टी० सू॰ दृश्यते तु, किं येन केनचिदाकारेण कार्यकारणयोः सालक्षण्यं विवक्षितं तदस्मत्पक्षेऽप्यस्ति सर्वधर्मसादृश्यं चेन्मृद्घटादिष्वपि नास्ति द्रव्यत्वावान्तरचेतनत्वजात्यनुवृत्तिश्चेत् ब्रह्मकारणत्ववादिबहुश्रुतिस्मृतिविरोधात् बाह्यस्तर्क इति तर्काप्रतिष्ठानादिति सूत्रेण परिहरिष्यते चेतनत्वानुवृत्तिरप्यस्ति विशिष्टस्य कारणत्वात् कार्येऽचिदंशे अचेतनत्वानुवृत्तिवत् चिदंशे चेतनत्वानुवृत्तिरपि विद्यते इति सामान्यपरिहार उपरितनाधिकरणेषु वक्ष्यते, कारणं येनाकारेणवस्त्वन्तराद् व्यावृत्तं तेनाकारेण कार्य्यस्य सालक्षण्यं चेत्तस्य व्यभिचारोऽस्मिन् सूत्रे विवक्षितः माक्षिकस्य वस्त्वन्तराकाराद्व्यावर्तकारो माक्षिकत्वं, तत्तु कृम्यादौ नास्तीत्यर्थः । न दृश्यत इत्येतद्विवृणोति 'न ही'ति, ॥

## सू० असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

भू० यदि कार्य्यभूताज्जगतः कारणभूतं ब्रह्म विलक्षणं तर्हि कार्य्यकारणयोर्द्रव्यान्तरत्वेन कारणे परस्मिन् ब्रह्मणि कार्य्यं जगन्न विद्यत इत्यसत एव जगत उत्पत्तिः प्रसज्यत इति चेत्, नैतदेवं कार्य्यकारणयोः सालक्षण्यनियमप्रतिषेधमात्रमेव हि पूर्वसूत्रेऽभिहितं[१] न तु कारणात्कार्य्यस्य द्रव्यान्तरत्वं कारणभूतं ब्रह्मैव स्वस्मादिलक्षणजगदाकारेण परिणमत इत्येतत्तु न परित्यक्तं कृमिमाक्षिकयोरपि हि, सति च वैलक्षण्ये कुण्डलहिरण्ययोरिव द्रव्यैक्यमस्त्येव । तच्च चोदयति—

टी० सू॰ असदिति चेन्न प्रतिषेधमात्रत्वात्, आरम्भणाधिकरणार्थः प्रसङ्गादनेन सूत्रेण स्मारितः, यदीति विलक्षणत्वकथनेन द्रव्यान्तरत्वमुक्तं भवति, ततोऽसत्कार्यवादः स्यादिति पूर्वपक्षिणोऽभिप्रायः, नैतदेवमि-

१ पूर्व सूत्रेऽभिप्रेतमिति पा॰ ।

त्यादि कार्यकारणयोः सजातीयत्वमेवास्येदमिति प्रत्यभिज्ञानार्हावान्तर-जात्या सालक्षण्यनियमः प्रतिषिद्धः न त्वेकद्रव्यत्वमित्यर्थः । उत्तरसूत्रम-वतारयति "अत्रे"ति,

## सू० अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

भा० अपीतावित्यपीतिपूर्वकसृष्ट्यादिप्रदर्शनार्थं सदेव सोम्येदमग्र आसीत् आत्मा वा इदमेक एव अग्र आसीदित्यादिष्वप्ययावस्थोपदेशपूर्वकत्वदर्शनात्सृष्ट्यादेः, यदि कार्यकारणयोर्द्रव्यैक्यमभ्युपेतं तदा कार्यस्य जगतो ब्रह्मण्यप्ययसृष्ट्यादिषु सत्सु ब्रह्मण एव तत्तदवस्थान्वय इति कार्यगतास्सर्व एवापुरुषार्था ब्रह्मणि प्रसज्येरन् सुवर्ण इव कुण्डलगता विशेषाः, ततश्च वेदान्तवाक्यं सर्वमसमञ्जसं स्यात्, "यस्सर्वज्ञस्सर्ववित" "अपहतपाप्मा विजरो विमृत्युः" "न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते" "तयोरन्यः पिप्पलं स्वाद्वत्ति अनीशश्चात्मा बध्यते भोक्तृभावात् अनीशया शोचति मुह्यमानः" इत्येकस्मिन्नेव वस्तुन्येषां परस्परं विरुद्धानां प्रसक्तेः ।

टी० सू० अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्, सृष्ट्यादेरित्यादि—शब्देन स्थितिरुच्यते । अपीतौ सृष्ट्यादिप्रदर्शनार्थत्वं कथमित्यत्राह "सदेवे"ति, सुवर्णकुण्डलादिदृष्टान्तस्य बुद्धिस्थत्वात्तद्वदित्युक्तम् । यद्वा ब्रह्मणि जगद्गतापुरुषार्थादिप्रसङ्गादित्यर्थः । यद्वा तद्वदिति मत्वर्थीयप्रत्ययः जगद्गतापुरुषार्थादिमत्त्वप्रसङ्गादित्यर्थः । असमञ्जसत्वं दर्शयति यः सर्वज्ञ इत्यादिना, परस्परविरुद्धानां विरुद्धार्थानां वाक्यानामित्यर्थः ॥

सू० अथोच्येत चिदचिद्वस्तुशरीरकस्य परस्यैव ब्रह्मणः कार्य्यकारणभावाच्छरीरभूतचिदचिद्वस्तुगतत्वाच्च दोषाणां न शरीरिणि ब्रह्मणि कार्यावस्थे कारणावस्थे च प्रसङ्ग इति तदयुक्तं जगद्ब्रह्मणोः शरीरशरीरिभावस्यैवासम्भवात्, सम्भवे च ब्रह्मणि शरीरसम्बन्धनिबन्धनदोषाणामनिवार्य्यत्वात्, न हि चिदचिद्वस्तुनोर्ब्रह्मणः शरीरत्वं सम्भवति, शरीरं हि नाम कर्म्मफलरूपसुखदुःखोपभोगसाधनभूतेन्द्रियाश्रयः पञ्चवृत्तिप्राणाधीनधारणः पृथिव्यादिभूतसङ्घातविशेषः, तथाविधस्यैव लोकवेदयोः शरीरत्वप्रसिद्धेः, परमात्मनश्चापहतपाप्मा विजरः" "अनश्नन्न्योऽभिचाकशीति अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः अप्राणो ह्यमना" इत्यादिभिः कर्म्मतत्फलभोगयोरभावादिन्द्रियाधीनभोगत्वाभावात्प्राणवत्त्वाभावाच्च न तं प्रति चेतनाचेतनयोश्शरीरत्वम् ।

टी० ॥ सिद्धान्ती शङ्कते "अथोच्येते"ति, शरीरसम्बन्धनिबन्धनदोषाणामिति क्रमागतवस्त्वन्तराणां लवणत्वापत्तिर्दृश्यते तत्संयोगी च पञ्चम इत्युच्यते चेत्यभिप्रायः । शरीरत्वासम्भवमुपपादयितुं शरीरस्वभावमाह "शरीरं ही"ति, व्यापकनिवृत्त्या व्याप्यशरीरत्वनिवृत्तिं दर्शयितुं शरीरत्वव्यापकाकारं दर्शयति "कर्मफले"ति, अत्र परोक्तं लक्षणमप्यन्तर्गतं सुखदुःखेति भोगाश्रयत्वेन्द्रियाश्रयत्वोक्तिः कर्मफलभोगसाधनत्वं मुक्तेश्वर-

शरीरस्येन्द्रियव्यावर्तकं पञ्चवृत्तीति चेष्टाश्रयत्वोक्तिः, ततः किमित्यपेक्षायां शरीरतयाऽभिमतपरमात्मस्वभावपर्यालोचनया शरीरत्वासम्भवमाह "परमात्मनश्चे"ति, कर्मसम्बन्धराहित्यमाह अपहते"ति तत्फलाभावमाह "अनश्नन्नि"ति, इन्द्रियानपेक्षतामाह "अपाणी"ति, चेष्टाश्रयत्वाभावमाह "अप्राण"इति, शरीरतयाऽभिमतानां शरीरलक्षणविरुद्धस्वभावतां दर्शयति–

सू० न चाचेतनव्यष्टिरूपतृणकाष्ठादीनां समष्टिरूपस्य भूतसूक्ष्मस्य चेन्द्रियाश्रयत्वादि सम्भवति भूतसूक्ष्मस्य पृथिव्यादिसङ्घातत्वं च न विद्यते, चेतनस्य तु ज्ञानैकाकारस्य सर्वमेतन्न सम्भवतीति नि[1]तरां शरीरत्वसम्भवः । न च भोगायतनत्वं शरीरत्वमिति शरीरत्वसम्भवः, भोगायतनेषु वेश्मादिषु शरीरत्वाप्रसिद्धेः, यच्च वर्तमानस्यैव सुखदुःखोपभोगस्तदेव भोगायतनमिति चेन्न परकायप्रवेशजन्मसुखदुःखोपभोगायतनस्य परकायस्य प्रविष्टशरीरत्वाप्रसिद्धेः, ईश्वरस्य तु स्वतः सिद्धनित्यनिरतिशयानन्दस्य भोगं प्रति चिदचितोरायतनत्वनियमो न सम्भवति, एतेन भोगसाधनमात्रस्य शरीरत्वं प्रत्युक्तम् ॥

टी० "न चाचेतने"ति, भोगायतनत्वं पृथग् दूषयति "न चे"ति, चेष्टाश्रयत्वेन्द्रियाश्रयत्वयोः पूर्वोक्तं दूषणमेव भोगायतनं भोगसाधनविशेषः, अत एव हि भोगसाधनमात्रस्येत्युक्तम् ।

सू० अथ मतं यदिच्छाधीनस्वरूपस्थितिप्रवृत्ति यत्तत्तस्य शरीरमिति सर्वस्येश्वरेच्छाधीनस्वरूपस्थितिप्रवृत्तित्वेनेश्वरशरीरत्वं सम्भवतीति, तदपि न साधनीयः शरीरतया प्रसि-

१ नतरामिति पा० ।

द्वेषु तत्तच्चेतनेच्छायत्तस्वरूपत्वाभावात् रुग्णशरीरस्य तदिच्छाधीनप्रवृत्तित्वाभावात् मृतशरीरस्य तदायत्तप्रवृत्ति[१]त्वाभावाच्च, सालभञ्जिकादिषु चेतनेच्छाधीनस्वरूपस्थितिप्रवृत्तिषु तच्छरीरत्वाप्रसिद्धेश्च, चेतनस्य नित्यस्येश्वरेच्छायत्तस्वरूपत्वाभावाच्च न तच्छरीरत्वसम्भवः, न च यद्यदेकनियाम्यं यदेकधार्यं यस्यैव[२] शेषभूतं तत्तस्य शरीरमिति वाच्यं क्रियादिषु व्यभिचारात्, अशरीरं शरीरेषु अपाणिपादो जवनो ग्रहीतेत्यादिभिश्चेश्वरस्य शरीराभावः प्रतिपाद्यते, अतो जगद्ब्रह्मणोः शरीरशरीरिभावस्यासम्भवात्तत्सम्भवे च ब्रह्मणि दोषप्रसङ्गाद्ब्रह्मकारणवादे वेदान्तवाक्यानामसामञ्जस्यमिति ।

टी० सिद्धान्त्यभिमतलक्षणं दूषयति "अथ मतमित्यादिना, अव्याप्तिमाह "शरीरतये"ति, अतिव्याप्तिमाह "सालभञ्जिकादिष्वि"ति, असम्भवमाह "चेतनस्ये"ति, न चेत्यादि, आदि-शब्देन गुणो विवक्षितः तद्वैविध्यात् बहुवचनम्, एवं परमात्मनश्चिदचितोश्च स्वभावालोचनया शरीरत्वं प्रतिक्षिप्तम् । अथ परस्य शरीरप्रतिषेधाच्च कस्य चित् तं प्रति शरीरत्वासम्भवमाह "अशरीरमि"ति, अपाणीत्यादिवाक्यमिन्द्रियाभावज्ञापनाय पूर्वमुपात्तमिदानीमिन्द्रियाधिष्ठानावयवनिषेधमुखेन शरीराभावज्ञापनार्थम् ॥

सू० अत्रोत्तरम्

## सू० न तु दृष्टान्तभावात् ॥ ९ ॥

सू० न तु दृष्टान्तभावात् अक्षरार्थमाह "नैवमि"ति, नेति पदेनैव पूर्वपक्षे व्यावर्तिते ऽपि तु-शब्दः शरीरशरीरिभावसंभवज्ञापनार्थः, तु-शब्दो-

१ तदायत्तस्थितित्वाभावाच्चेति पा० ।
२ यस्यैकशेषभूतमिति ।

ऽत्रेति शरीरात्मत्वासंभवादित्यभिप्रायः हेयसंबन्धस्यासंभावनीयत्वे दृष्टान्तः क इत्यत्राह "एतदुक्त"मिति, अमुख्यत्वमाशङ्क्याह "अथ चे"ति, पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीत्ययामेव देवत्वादिधर्माः न पुरुषस्येत्यत्राह "भूतसूक्ष्मशरीरस्ये"ति. । यद्वा जीवस्य शरीरोत्पत्तेः प्रागप्यचित्सम्बन्धे सति हि ब्रह्मणः कार्यकारणोभयावस्थायामपि चिदचिद्विशिष्टस्य तद्गतदोषराहित्ये दृष्टान्तत्वमित्यत्राह "भूतसूक्ष्मे"ति, परोक्तं शरीरत्वासंभवमनुवदति "यत्पुन"रिति, सम्यङ्न्यायः प्रमाणानुगुणन्यायः, कुतर्कः प्रमाणविरुद्धस्तर्कः सर्वत्र व्याप्तं लक्षणं विवक्षुश्चिदचितोर्ब्रह्मशरीरत्वेन वेदे प्रयोगं दर्शयति "सर्वं एव ही"ति, सोऽभिध्याय शरीरात्स्वादित्यत्र चिदचितोश्शरीरत्वमस्पष्टमिति तद् व्याचष्टे "भूतसूक्ष्मा"-दिति, आसीदिदं तमोभूतमिति प्रकृतमेव शरीरत्वेनोच्यत इत्यर्थः ।

सू० नैवमसामञ्जस्यम्, एकस्यैवावस्थाद्वयान्वयेऽपि गुणदोषव्यवस्थितेर्दृष्टान्तस्य विद्यमानत्वात्, तु-शब्दोऽच हेयसम्बन्धगन्धस्यासंभावनीयतां द्योतयति, एतदुक्तं भवति चिदचिद्वस्तुशरीरतया तदात्मभूतस्य परस्य ब्रह्मणः सङ्कोचविकासात्मककार्य्यकारणभावावस्थाद्वयान्वयेऽपि न कश्चिद्विरोधः, यतः सङ्कोचविकासौ परब्रह्मशरीरभूतचिदचिद्वस्तुगतौ शरीरगतास्तु दोषा नात्मनि प्रसज्यन्ते आत्मगताश्च गुणा न शरीरे यथा देवमनुष्यादीनां सशरीराणां क्षेत्रज्ञानां शरीरगता बालत्वयुवत्वस्थविरत्वादयो नात्मनि सम्बध्यन्ते, आत्मगताश्च ज्ञानसुखादयो न शरीरे । अथ च देवोजातो मनुष्यो जातस्तथा स एव बालो युवा स्थविरश्चेति व्यपदेशश्च मुख्यः, भूतसूक्ष्मशरीरस्यैव क्षेत्रज्ञस्य देवमनुष्यादिभाव इति तदन्तरप्रतिपत्ताविति वक्ष्यत

इति । यत्पुनरुक्तं चिदचिदात्मकस्य जगतः स्थूलस्य सूक्ष्मस्य च परमात्मानं प्रति शरीरभावो नोपपद्यत इति तदनाकलितसम्यङ्न्यायानुगृहीतवेदान्तवाक्यगणस्य स्वमतिपरिकल्पितकुतर्कविजृम्भितं, सर्वे एव हि वेदान्ताः स्थूलस्य सूक्ष्मस्य च चेतनस्याचेतनस्य समस्तस्य च परमात्मानं प्रति शरीरत्वं श्रावयन्ति, वाजसनेयके तावत्काण्वशाखायां, माध्यन्दिनशाखायां चान्तर्यामिब्राह्मणे "यः पृथिव्यां तिष्ठन् यस्य पृथिवी शरीर"मित्यारभ्य पृथिव्यादिसमस्तमचिद्वस्तु "यो विज्ञाने तिष्ठन् यस्य विज्ञानं शरीरं य आत्मनि तिष्ठन् यस्यात्मा शरीरमिति चेतनं च पृथक् पृथङ्निर्दिश्य तस्य तस्य परमात्मशरीरत्वमभिधीयते, सुबालोपनिषदि च "यः पृथिवीमन्तरे संचरन् यस्य पृथिवी शरीरमित्यारभ्य य आत्मानमन्तरे संचरन् यस्यात्मा शरीरमिति तद्वदेव चिदचितोस्सर्वावस्थयोः परमात्मशरीत्वमभिधाय "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण इति तस्य सर्वभूतानि प्रत्यात्मत्वमभिधीयते, स्मरन्ति च "जगत्सर्वं शरीरन्ते" "यदम्बु वैष्णवः कायः" "तत्सर्वं वै हरेस्तनुः" । "तानि सर्वाणि तद्वपुः" "सोऽभिध्याय शरीरात्स्वादित्यादि भूतसूक्ष्मात्स्वाच्छरीरादित्यर्थः, लोके च शरीर–शब्दो घटादिशब्दवत् एकाकारद्रव्यनियतवृत्तिमनासादितकृमिकीटपतङ्गसर्पनरपशुप्रभृतिषत्यन्तविलक्षणाकारेषु द्रव्येषत्यगौणः प्रयुज्यमानो

दृश्यते, तेन तस्य प्रवृत्तिनिमित्तव्यवस्थापनं सर्वप्रयोगानुगुण्येनैव कार्यं, त्वदुक्तं च कर्म्मफलभोगहेतुरित्यादिकं प्रवृत्तिनिमित्तलक्षणं न सर्वप्रयोगानुगुणं यथोक्तेष्वीश्वरशरीरतयाऽभिहितेषु पृथिव्यादिष्वऽव्याप्तेः । किञ्चेश्वरस्येच्छाविग्रहेषु मुक्तानां च स एकधा भवतीत्यादिवाक्यावगतेषु विग्रहेषु तल्लक्षणमव्याप्तं कर्म्मफलभोगनिमित्तत्वाभावात्तेषां परमपुरुषेच्छाविग्रहाश्च न पृथिव्यादिभूतसङ्घातविशेषाः "न भूतसङ्घसंस्थानो देहोऽस्य परमात्मन" इति स्मृतेः, अतो भूतसङ्घातरूपत्वं च शरीरस्याव्याप्तं पञ्चवृत्तिप्राणाधीनधारणत्वं च स्थावरशरीरेष्वव्याप्तं, स्थावरेषु हि प्राणसद्भावेऽपि तस्य पञ्चधाऽवस्थाय शरीरस्याधारकतयाऽवस्थानं नास्ति अहल्यादीनां कर्मनिमित्तशिलाकाष्ठादिशरीरेष्विन्द्रियाश्रयत्वं च सुखदुःखहेतुत्वं चाव्याप्तम् ।

टी० लोके चेत्यादि घटादिशब्दवत् यथा घटादिशब्दा एकाकारवस्तुषु मुख्याः प्रयुज्यन्ते न तथा शरीर-शब्दः, अपि त्वनेकाकारवस्तुषु मुख्यः प्रयुक्तः, अतोऽनुगतत्वाय हि कृमिकीटादिव्यापकं लक्षणमुक्तं तस्याप्यव्याप्तत्वात् सार्वत्रिकं लक्षणान्तरं स्वीकार्यमिति भावः । अगौणः प्रयुज्यमानो दृश्यत इत्यस्यायमभिप्रायः द्विपात्त्वं मनुष्यत्वं ब्राह्मणत्वं वा शरीरलक्षणत्वेन किमिति नोच्यते अन्यत्रापि मुख्यप्रयोगदर्शनादिति चेत्तर्हि लोकवेदयोर्यत्र यत्र प्रयोगो दृश्यते तदनुयायि लक्षणं वाच्यं न त्वननुयायि लक्षणमुक्त्वाऽन्यत्र गौणत्वं क[1]थनीयमिति । ततः किमित्यत्राह "तेन तस्ये"ति, अनुगुणं निमित्तं ह्युक्तमित्यत्राह "त्वदुक्तं चे"ति, प्रवृ-

१ कल्पनीयमिति पा० ।

त्तिनिमित्तलक्षणमिति प्रवृत्तिनिमित्तं समुदायशक्तिनिमित्तं वाच्यभूतं तच्च तल्लक्षणं तेन व्युत्पत्तिनिमित्तभूतस्योपलक्षणभूतस्य च लक्षणस्य व्यावृत्तिः, गो-शब्दस्य गमिधात्वर्थो व्युत्पत्तिनिमित्तं पृथिवीशब्दवाच्यस्य पृथिवीत्वस्योपलक्षणभूतं गन्धवत्त्वं तदुभमपि न प्रवृत्तिनिमित्तम्, अयमर्थः शरीरदेहादिव्युत्पत्तिनिमित्तभूता विशरणोपचयादयो नानुगता गन्धोपलक्ष्यपृथिवीत्ववच्छब्दप्रवृत्तिनिमित्तभूतमुपलक्षणान्तरोपलक्ष्यं जात्यादिकमपि न दृश्यते, अतो लक्षणतयाऽभिमतमिदमेव प्रवृत्तिनिमित्तमेष्टव्यं तच्चायुक्तम् अननुगतत्वादिति पाणिपादादिमच्छरीरेषु अव्याप्तिमाह "किं चे' ति, तल्लक्षणमिति प्रथमोपात्तं कर्मफलोपभोगहेतुत्वं विवक्षितं भूतसङ्घातरूपत्वस्याव्याप्तिं दर्शयितुमाह "परमपुरुषेच्छे" ति, पञ्चवृत्तीति प्राणसद्भावमात्रविवक्षायां च चेतनेष्वव्यक्तादिषु चेश्वरशरीरभूतेष्वव्याप्तिरभिप्रेता अहल्यादीनामिति इन्द्रियाश्रयत्वं—ज्ञानप्रवृत्तिजननपटुतरेन्द्रियाश्रयत्वम् इन्द्रियसद्भावमात्रविवक्षयां पूर्ववदव्याप्तिरभिप्रेता, अत इति, अतः—अनुयायिनो लक्षणत्वात् त्वदुक्तस्य चाननुयायित्वादित्यर्थः । चेष्टेन्द्रियार्थाश्रयः शरीरमिति न्यायसूत्रे शरीरस्य लक्षणत्रयमुक्तं चेष्टाभोगेन्द्रियाशय इति हि न्यायविदः । अस्य लक्षणत्रयस्याव्याप्तत्वाद् व्यापिलक्षणत्रयमाह—

मू० अतो यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यं तच्छेषतैकस्वरूपं च तत्तस्य शरीरमिति शरीरलक्षणमास्थेयं रुग्णशरीरादिषु नियमनाद्यऽदर्शनं विद्यमानायाया एव नियमनशक्तेः प्रतिबन्धकृतम्, अग्न्यादेः शक्तिप्रतिबन्धाद्दौष्ण्याद्यदर्शनवत्, मृतशरीरं च चेतनवियोगसमय एव विशरितुमारब्धं, क्षणान्तरे च विशीर्य्यते पूर्वं शरीरतया परिक्लृप्तसङ्घातैकदेशत्वेन च तत्र शरीरत्वव्यवहारः, अतस्सर्वं परमपुरुषेण सर्वात्मना स्वार्थे

नियाम्यं धार्य्यं तच्छेषनैकस्वरूपमिति सर्वं चेतनाचेतनं तस्य शरीरम्, अशरीरं शरीरेष्वित्यादि च कर्म्मनिमित्तशरीरप्रतिषेधपरं यथोक्तसर्वशरीरत्वश्रवणात्, उपरितनाधिकरणेषु चैतदुपपादयिष्यते, अपीतौ तद्वत् प्रसङ्गादसमञ्जसं न तु दृष्टान्तभावादिति सूत्रद्वयेनेतरव्यपदेशादित्यधिकरणसिद्धोऽर्थः स्मारितः ॥

टी० यस्येत्यादिना, यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यं तत्तस्य शरीरं, यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे धारयितुं शक्यं तत्तस्य शरीरं, यस्य चेतनस्य यद्द्रव्यं शेषतैकस्वरूपं तत्तस्य शरीरमिति, लक्षणत्रयं तच्छेषतैकस्वरूपमित्यत्र एक–शब्दप्रयोगः सर्वात्मनेति पदस्य स्थाने द्रष्टव्यः, सर्वात्मनेति पदेन यावद्द्रव्यभावित्वं विवक्षितं तच्छेषतैकस्वरूपमिति पृथगुक्तिः स्वार्थशक्यशब्दप्रयोगानपेक्षणात् यस्येति पदेन शरीरस्य न घटपटादिवदप्रतियोगिपदार्थत्वमपि तु पुत्रपित्रादिवत् सप्रतियोगिकपदार्थत्वमिति दर्शितं, सप्रतियोगिकपित्रादीनां शरीरत्वव्यावृत्त्यर्थं नियाम्यमित्युक्तं, नियाम्यमित्युक्ते भृत्यादीनामपि शरीरत्वं स्यादिति तद्व्यावृत्त्यर्थं सर्वात्मनेति पदं, यावद्द्रव्यभावीत्यर्थः, क्रियागुणादिव्यावृत्त्यर्थं द्रव्यमित्युक्तम्, आकाशादिप्रदेशगमनादिषु अशक्येष्वर्थेषु शरीरस्य नियमनासम्भवात्तद्व्यावृत्त्यर्थं स्वार्थ इत्युक्तं, स्वविषय इत्यर्थः, "अर्थः स्याद्विषये मोक्ष" इत्यभिधानविदस्स्वशब्दः शरीरपरः तत्तच्छरीरसम्पाद्येषु कार्येष्विति यावत्, रुग्णशरीरेषु व्यभिचारो माभूदिति शक्यमित्युक्तं, तत्र शक्तेः प्रतिबन्ध एव न तु शक्त्यभावः, अग्न्यादावौष्ण्यादिवत्तज्ज्ञानव्यावृत्त्यर्थं चेतनस्येत्युक्तं, न हि ज्ञानं ज्ञानविशिष्टेन नियाम्यम्, अपि तु स्वाश्रयेण, तस्माच्चेतननियामत्वाभावेन न तत्रानैकान्त्यम्, एवं लक्षणान्तरद्वयेऽपि व्यावर्त्यमुच्यते यस्य सर्वात्मना द्रव्यं शक्यमिति पदानां पूर्ववद्व्यावृत्तिः, चेतनस्येति पदेन प्रभाव्यावृत्तिः, शरीरत्वप्रयुक्तदोषादिशङ्काव्यावृत्त्यर्थमाह–

## सू० स्वपक्षदोषाच्च ॥ १० ॥

भा० न केवलं ब्रह्मकारणवादस्य निर्दोषत्वयैतत्समाश्रयणं प्रधानकारणवादस्य दुष्टत्वाच्च तत्परित्यज्यैतदेव समाश्रयणीयं प्रधानकारणवादे हि जगत्प्रवृत्तिर्नोपपद्यते तच्च हि निर्विकारस्य चिन्मात्रैकरसस्य पुरुषस्य प्रकृतिसन्निधानेन प्रकृतिधर्म्माध्यासनिबन्धना जगत्प्रवृत्तिः निर्विकारस्य चिन्मात्ररूपस्य प्रकृतिधर्माध्यासहेतुभूतं प्रकृतिसन्निधानं किंरूपमिति विवेचनीयं किं प्रकृतेः सद्भाव एव? उत तद्गतः कश्चिद्विकारः?। अथ पुरुषगत एव कश्चिद्विकारः? न तावत्पुरुषगतः, अनभ्युपगमात्, नापि प्रकृतेर्विकारः, तस्याध्यासकार्य्यतयाऽभ्युपगतस्याध्यासहेतुत्वासम्भवात्, सद्भावमात्रस्य सन्निधानत्वे मुक्तस्याप्यध्यासप्रसङ्ग इति त्वत्पक्षे जगत्प्रवृत्तिर्नोपपद्यते । अयमर्थः साङ्ख्यपक्षप्रतिक्षेपसमये अभ्युपगमेऽप्यर्थाभावादित्यादिना प्रपञ्चयिष्यते, ॥

## सू० तर्काप्रतिष्ठानादपि ॥ ११ ॥

भा० तर्कस्याप्रतिष्ठितत्वादपि श्रुतिमूलो ब्रह्मकारणवाद एव समाश्रयणीयो न प्रधानकारणवादः शाक्योलूक्याक्षपादक्षपणककपिलपतञ्जलितर्काणामन्योऽन्यव्याघातात्तर्कस्याप्रतिष्ठितत्वं गम्यते ॥

टी० "उपरितनाधिकरणेष्वि"ति सू० स्वपक्षदोषाच्च या तु परेण पूर्वं निर्दोषत्वजगदुपादानत्वादिव्याहतिरुक्ता सैव व्याहतिरनेन सूत्रेण

परस्यापादिता अनभ्युपगमान्नित्यनिर्विकारत्वादिति भावः । सू॰ तर्काप्र-तिष्ठानादपि, तर्कस्येति केवलतर्कस्येत्यर्थः ।

## सू॰ अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मो-क्षप्रसङ्गः ॥ १२ ॥

भू॰ इदानीं विद्यमानानां शाक्यादीनां तर्कान् उद्दूष्याऽन्यथाच प्रधानकारणवादमनिक्रान्ततदुपदर्शितदूषणं तेनानुम[1]न्यामह इति चेत् एवमपि पुरुषबुद्धिमूलतर्कावलम्बनस्य तथैव देशान्तरकालान्तरेषु त्वदधिकतमतर्ककुशलपुरुषोत्प्रेक्षिततर्कदूष्यत्वसम्भावनया तर्काप्रतिष्ठानदोषादनिर्मोक्षो दुर्वारः, अतोऽतीन्द्रियेऽर्थे शास्त्रमेव प्रमाणं तदुपबृंहणायैव तर्क उपादेयः, तथा च चाह "आर्षं धर्म्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" इति, वेदाख्यशास्त्राविरोधिनेत्यर्थः । अतो वेदविरोधित्वेन वेदार्थविशदीकरणरूपवेदोपबृंहणतर्कोपादानाय सांख्यस्मृतिरनादरणीया । विलक्षणत्वाधिकरणं समाप्तम् ॥

टी॰ सू॰ अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः, तर्काप्रतिष्ठानादित्यादिकम् अनिर्मोक्षप्रसङ्ग इत्यन्तं नैकं सूत्रं सूत्रकारशैलीविरोधात् प्रयुक्तहेतुशैथिल्याशङ्कापरिहारौ हि सूत्रान्तरकृतौ दृष्टौ, यथेक्षतेर्नाशब्दं गौणश्चेन्नात्मशब्दात्, आनन्दमयोऽभ्यासात्, विकारशब्दाभ्यां नेति चेन्न प्राचुर्यात्, ज्ञेयत्वावचनाच्च, वदतीति चेन्न प्राज्ञो हि प्रकरणादिति च । ननु भेदव्यपदेशाच्च क्रियायां न चेन्निर्द्देशविपर्यय इत्यत्र कथं सूत्रैक्यम् उक्त-

[1] तेनानुमास्यामहे इति युक्तं पाठान्तरम् ।

हेतुदोःस्थ्यशङ्कापरिहारपरत्वाभावात्साध्याभावेऽनिष्टप्रसञ्जनमुखेन हेतुदार्ढ्यपरो हि न चेदित्यादिकः सूत्रांशः । न तूक्तहेतुदोःस्थ्यशङ्कापरिहारपरः इदानीमित्यादिभूततर्कस्य भूततर्कान्तरप्रतिहतिवत् भावितर्कस्यापि भावितर्कान्त[1]रप्रतिहतिः सम्भवतीत्यर्थः । वेदशास्त्राविरोधिनेत्यत्र वेदशास्त्रशब्दयोर्वैयधिकरण्ये साङ्ख्यशास्त्रस्याप्यनुरोधः स्यादिति तद्व्यावृत्त्यर्थं व्याचष्टे "वेदे"ति, यथा "पितृदेवमनुष्याणां वेदश्चक्षुस्सनातनम् । अतर्क्यं चाप्रमेयं च वेदशास्त्रमिति स्थिति"रिति अतर्क्यं—बाधकागोचरभूतम्, अप्रमेयं—साधकाविषयभूतम्, अपीतावित्यादिसूत्रत्रयं परैस्त्वेवं व्याख्यातम्, अपीतौ लीयमानं कार्यं स्वाकारेण कारणं दूषयेत् लवणमिव मधुरोदकं, ततश्च स्थौल्यसावयवत्वाचेतनत्वपरिच्छिन्नत्वादिधर्मकत्वं ब्रह्मणः स्यात्समस्तस्य ब्रह्मण्यविभागे सति नियामकाभावात् पुनर्भोक्तृविभागस्तेषां भोग्यनियमश्चानुपपन्नः प्रलयेऽपि ब्रह्मणि विभक्तं चेदपीतिरेव न सम्भवति ब्रह्मणि प्रलीनानां पुनरुत्पत्तौ मुक्तानामप्युत्पत्तिप्रसङ्ग इत्यसामञ्जस्यपरमपीताविति सूत्रं तत्र दृष्टान्तेन परिहरति "न तु दृष्टान्ते"ति, घटशरावादय उच्चावचाः सन्तोऽपि स्वाकारप्रहाणेन प्रलीनत्वान्नोच्चावचाकारेण कारणं दूषयन्ति, एवं जगदपि स्थूलत्वाद्याकारप्रहाणेन लीनत्वादविभागदशायामपि न ब्रह्म दूषयति स्वप्नदर्शी च पुरुषः स्वमायया न स्पृश्यते सुप्तप्रबुद्धपुरुषाणामपि पुनर्विभागेन निष्क्रमणोपपत्तिः मिथ्याज्ञानस्यानपोदितत्वात् तस्यापोदितत्वादेव मुक्तानां न पुनरुत्पत्तिः जगतो ब्रह्मणि विभागेन स्थित्यभावादप्ययोपपत्तिरिति शब्दादिहीनात् प्रधानात् तद्युक्ताखिलकार्योदयानुपपत्तिः सर्वविकारप्रलये पुनः सृष्टाविदमस्योपादानं न त्विदमिति नियामकाभावात्, भोक्तॄणां भोग्याव्यवस्थितिर्नियामकाभावेऽपि नियमाभ्युपगमे कारणाभावसाम्यान्मुक्तानां पुनर्बन्धप्रसङ्गः कतिपयविभागस्थितौ तेषां प्रधानकार्यत्वाभाव इति दोषसाधारण्यापादनं स्वपक्षदोषाच्चेति सूत्रितमिति, तदिदमनुपपन्नं तथा हि स्थूलत्वह्रस्वत्वाद्याकारे परित्यक्तेऽपि जडत्वानृतत्व-

(१) भावितर्कान्तरप्रतिहतिरिति पा० ।

परित्यागाभावात् अविद्याकर्मवासनाप्रहाणाभावाच्च ब्रह्मण्यविभक्तं जगत्तेनाकारेण ब्रह्म दूषयेत् यदि जडत्वानृतत्वकर्मवासनादिप्रहाणेन प्रपञ्चलयः तर्ह्यविद्यातत्कृतजीवभेदश्च निवृत्तः स्यात्, न हि जडत्वानृतत्वविरहे निःस्वभावाया अविद्याया अवस्थानमुपपद्यते सवासनकर्मप्रहाणात्तन्मूलाविद्यानिवृत्त्या च जीवा मुक्ताः स्युः, ततश्च पुनर्जगदुत्पत्तिर्न सम्भवेत् अविद्यान्तरेण सर्वसम्भवे तस्यास्तत्कल्पितजीवानां चादिमत्त्वं स्यात् वैषम्यनैर्घृण्यादि च प्रसजेत्, मोक्षोपायनिष्पादनवैयर्थ्यं च प्राकृतप्रलयादेवाविद्यानिवृत्तेस्तस्यास्मदादियत्ननिरपेक्षत्वाच्च अतोऽप्ययदशायामपि जडत्वानृतत्वादिप्रहाणाभावात्तेनाकारेण ब्रह्मणो दूष्यत्वं दुस्तरं जडत्वाद्याकारोऽपरमार्थ इति चेत्तर्ह्यपरमार्थत्वं ब्रह्मास्त्रं विहाय किमर्थं स्वाकारप्रहाणदुर्बलयष्टिग्रहणे प्रयस्यते, अपरमार्थत्वाश्रयणमपि विफलं मिथ्यात्वमपि हि प्रपञ्चाकारः, न हि मिथ्यात्वस्य मिथ्यात्वम् अतो न मिथ्यात्वप्रहाणमिति मिथ्याभूतं जगदविभक्तं स्वाकारेण मिथ्यात्वेन ब्रह्म दूषयत्येव मिथ्याभूतेनापि जडत्वाद्याकारेण च दूषयेत् । ननु न मिथ्यात्वेन मिथ्याभूतजड़त्वादिना च दूषितत्वप्रसङ्गः, शुक्तिरूप्यस्य मिथ्यात्वेऽपि मिथ्यात्वेन मिथ्याभूतरजताकारेण च शुक्तेर्दूषितत्वाभावादिति चेन्न शुक्तेरपि त्वन्मते मिथ्यात्वात् पातकिसंसर्गेण पुरुषस्य, रुमासंसर्गेण तद्गतवस्तुनश्च मिथ्याभूतपातकित्वलवणत्वाकारापत्त्या दूषित[1]त्ववचनाच्च, पातकिरुमादयो हि पदार्थास्त्वन्मते मिथ्याभूताः, तेषां व्यावहारिकसत्यत्वाद्दूषकत्वमिति चेत्तर्हि जगतश्च व्यावहारिकसत्यत्वात् ब्रह्माविभक्तं जगत् दूषकं स्यात्प्रप्रदूक्पुरुषो मायया न स्पृश्यत इतीदमपि निरूपणीयम् अस्पर्शो न तावदज्ञानस्य पुरुषानाश्रितत्वमारोप्य याहिपुरुषाश्रयत्वात् तत्कल्पकाज्ञानस्य, नाप्यकार्य्यकारित्वं हस्तिशस्त्रादिकार्य्यकल्पकत्वात् । नापि कार्य्यस्य देशविप्रकर्षः हस्तिशस्त्रादेरविप्रकर्षात्, नापि कार्यस्यापुरुषार्थत्वविरहः स्वप्ने भयशोकव्यथादर्शनात्, दुःखस्यापरमार्थत्वं शस्त्रादिदुःखहेतोरिवं दुःखस्य प्रबोधे बाधाभावात्

१ दूषितत्वदर्शनाच्चेति पा॰ ।

अपरमार्थभूतस्यापि तस्य निरसनीयतया पुरुषं प्रत्यवभासमानत्वात् जाग्रद्दशायामपि स्वगतत्वेन दुःखसाक्षात्कर्तृत्वमेव हि दुःखित्वम्, अवभासप्रतिसम्बन्धित्वमप्यपरमार्थ इति चेत् न, बाधकप्रत्ययाभावात् हस्तिशस्त्रादिविषयस्यैव प्रबोधे बाधः । न तु शस्त्रादिज्ञानस्य भयादेश्च भोक्तृभेदानियमप्रसङ्गस्य साङ्ख्यपक्षे तुल्यत्वापादनमप्ययुक्तम्, आत्मनां स्वतो भिन्नत्वात् तत्पक्षे कृत्स्नविकारप्रलयेऽपि तेषां तत्कर्मानुगुणभोग्यविशेषे पुनरपि भोक्तृत्वव्यवस्थोपपत्तेः, त्वन्मते त्वात्मभेदस्यान्तःकरणभेदकल्पितत्वात् मनोबुद्ध्यहङ्काराणां प्रलयेऽप्ययश्रवणादात्मभेदाभावेन पुनः सृष्टावन्येनान्तःकरणेनोपहितस्यात्मन इदमदृष्टमिदं शरीरमिदं भोग्यमिति नियमानुपपत्तेश्च, प्रलयेऽप्यन्तःकरणस्थित्यभ्युपगमे तेषामन्तःकरणानामनादितया ब्रह्मकार्यत्वं न स्यात्, साङ्ख्यपक्षे तु तेषां न प्रधानकार्यत्वहानिः अन्तःकरणप्रलयेऽपि स्वत आत्मभेदसद्भावेनान्तःकरणस्थितेरनपेक्षितत्वादात्मभेदस्य तत्तत्कर्मविशेषाणां च सद्भावान्नियामकहेत्वभावसाम्यं दुर्वचं साङ्ख्यपक्षे मुक्तानां पुनर्बन्धप्रसङ्गोऽपि दुर्वचः, यस्य सम्यग्ज्ञानेन निश्शेषकर्मक्षयः तस्य हेत्वभावेन पुनः शरीरयोगाभावादक्षीणकर्मणां पुनर्बन्ध इति पुनर्देहसम्बन्धा[1]पत्तेश्च त्वन्मते मूलभूताविद्याया एकत्वादात्मन एकत्वादिदानीमपि बन्धानुवृत्तेश्चेतः पूर्वं न कश्चिन्मुक्तः सम्भवति, अस्ति चेत्स एवात्मा पुनरपि देहयोगमनुभवतीति मुक्तस्य पुनरुत्पत्तिप्रसङ्गो दुर्वारः, वर्तमानाविद्याया आदिमत्त्वं च भवेत्, जीवाज्ञानपक्षस्य भवद्भिरेव दूषितत्वात्, तदवष्टम्भेन बन्धमोक्षव्यवस्थोक्तिरयुक्ता तत्रापि मुक्तानां पुनरुत्पत्तिर्हि प्रसङ्गो दुष्परिहरः, अध्यस्तजीवभावनिवृत्त्या ब्रह्मैकतापत्तिर्हि मोक्षः, तत्रापि ध्वस्तजीवभावोऽयमंशो मुक्तः अध्यस्तजीवभावमंशान्तरं तु देहभाग् भवतीति न वक्तुं शक्यं ब्रह्मणः स्वतोनिरंशत्वात् अतो ब्रह्मैकतापन्नानामेव पुनरुत्पत्तिः स्यात् उपहितांशभेदाभावात् । नन्वंशभेदस्यापि काल्पनिकत्वाभ्युपगमान्नोक्तदोष इति चेत् मुक्तो निवृत्तजीवभावेंशे सं काल्पनिकभेदोऽस्ति वा न वा अस्ति चे-

१ देहसम्बन्धोपपत्तेश्चेति युक्तः पाठः ।

न्मुक्त एव न स्यात् न चेत्पूर्वोक्तदोषः स्यात् निवृत्तोपाधित्वमेव भेद इति चेत् उपाधिनिवृत्तिः स्वरूपातिरिक्ता न वा, न चेत्तत्स्वरूपमेव जीवभावेन पुनरपि संसरतीत्युक्तदोषस्थितिः, अतिरिक्तत्वे स निवृत्तिरूपविशेषः किं कृत्स्नब्रह्मवृत्तिः ? उत ब्रह्मैकदेशवृत्तिः ? आद्ये पूर्वोक्तदोषः, द्वितीये त्वेकदेशस्यांशान्तराद् भेदो वक्तव्यः, भेदकान्तरयोगेन चेत्तस्य भेदकोपाधेः पारमार्थ्ये ऽद्वैतहानिः, आपारमार्थ्ये मुक्तांशस्यैव बद्धत्वं स्यात्, अपरमार्थोपाधिसबन्धो हि त्वन्मते बन्धः न भेदकान्तरयोगापेक्षा, अपि तूपाधिविरह एव भेद इति चेत्स किं बाध्यः ? उताबाध्यः ? उपाधिविरहस्य बाध्यत्वे तदवच्छिन्नांशस्य पुनरुपाधिसम्बन्धान्मुक्तोत्पत्तिः स्यात्, अंशभेदस्याबाध्यत्वे तस्य भेदस्याभेदवत् परमार्थत्वात् भेदाभेदपक्ष एवाङ्गीकृतः स्यात् । अथ तत्परिहाराय परमार्थतोऽंशभेदो नाभ्युपगतः तर्हि मुक्तस्य पुनरुत्पत्तिरवर्जनीया स्यात् । यत एवं शरावादीनां पृथिव्यामिव स्थूलत्वादिस्वाकारप्रहाणेन ब्रह्मण्यविभागापन्नस्य जगतस्तद्दूषकत्वाभावः प्रतिक्षिप्तः, अत एव न तु दृष्टान्तभावादिति सूत्रस्य भास्करोक्तयोजनाऽपि व्युदस्ता भवति । तस्यापरमार्थत्वानाश्रयणेन क्षणमात्रमप्यपसरणमप्यशक्यमिति विशेषः । यादवमिश्रास्तु असदिति चेदिति सूत्रमेकमधिकरणान्तरं नासदासीदित्यादिविषयं वर्णयन्ति सत्त्वासत्त्वनिषेधौ न परस्परप्रतिपक्षविधिरूपौ व्याघातात्, अतोऽनुभयात्मकं निःस्वभावं शून्यं प्रतीयत इति पूर्वपक्षीकृत्य लोकतः प्राप्तस्य प्रतिषेध्यत्वाल्लोके च कार्यावस्थायामेव घटसंस्थानादिव्याप्तिरूपसत्त्वन्तदभावरूपकपालत्वादिव्याप्तिलक्षणमसत्त्वञ्चोपलभ्यत इति कारणदशायां तदुभयं निषिध्यते "आनीदवातमि"ति, वाक्यशेषविरोधाच्च अतो न स्वरूपसत्त्वनिषेधः अह्रस्वमदीर्घं व्योमेतिवत्, न ह्यत्र परस्परप्रतिपक्षविधिः, नापि निःस्वभावत्वोक्तिः तद्वदिति सिद्धान्तितम्, अपीतावित्यादि चाधिकरणान्तरमाहुः । तत्र भावाभावरूपसर्वावस्थाप्रतिषेधोऽनुपपन्नः विनाशहेतुवैयर्थ्यप्रसङ्गात् विनाशहेतुना न कारणमेव निष्पाद्यं तस्य प्रागपि सत्त्वात्, नापि कार्यान्तरं

प्रलये सर्वकार्यविभा[१]गानुपपत्तिप्रसङ्गात्, अतोऽवस्थान्तरोत्पादः प्रलयः अतः पूर्वाधिकरणसिद्धान्तानुपपत्तेः शून्यं तत्त्वमित्याक्षिप्य घटत्वकपालत्वादिस्थानीयभावाभावरूपविकल्पशब्दवाच्यस्थूलावस्थानिषेधेऽपि शक्तिमात्रावशेषसूक्ष्माऽवस्थाभ्युपगमात्तत्र दृष्टान्तभावान्न तद्वत् प्रसङ्गादसामञ्जस्यमिति सिद्धान्तितं, दृष्टान्तश्च तप्तलोहसमावर्तितं जलं, तद्धि जलं जलरूपेणानुपलभ्यं सक्तुपिण्डाशैथिल्यहेतुजलवत् खड्गधाराद्यशैलिल्यहेतुसूक्ष्मरूपेण पुनर्जलपरिणामशक्तियुक्तं लोहादन्यत्वबुद्धाविषयस्तिष्ठतीत्युक्तं, तत्र तावदसदिति चेदिति सूत्रव्याख्यानमयुक्तं सूत्राक्षरानुगुण्याभावात् सदसतोरन्यतरकोटिवाचकोऽसच्छब्दः कथं कोटिद्वयोत्तीर्णतामुपस्थापयेत्, अन्यतरकोटिसंसर्पकतया हि सच्छब्दस्यानुभयात्मकत्वानुपस्थापकत्वं निरूपणीयाभावात् च तदयुक्तं नासदासीन्नो सदासीत्तदानीमित्यत्र प्रलयदशायां निषिध्यमानं सच्छब्दवाच्यं कार्यावस्थं किमपीति सिद्धं सहप्रयोगात्त्वत्समासमार्थ्याच्चासच्छब्दवाच्यमपि सद्व्यतिरिक्तमिति सर्वसम्मतं तदुभयं किमित्यपेक्षायां तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभवदिति विज्ञानं चाविज्ञानं चेति वाक्येन चेतनमचेतनं चेति ज्ञायते, इदं च गतिसामान्यनयस्थानप्रमाणाभ्यां सिद्धमिति न पूर्वपक्षोत्थानम् । किञ्च यद्यर्थान्तरपरत्वं शङ्कनीयं तर्हि सदसदात्मकत्वं किन्न शङ्क्यते एकस्य तथात्वं विरुद्धमिति चेदेकस्यानुभयात्मकत्वमपि विरुद्धम् अदर्शनात्, अह्रस्वमदीर्घं व्योमेतिवदनुभयात्मकत्वमविरुद्धमिति चेत् दशाङ्गुलं चतुरङ्गुलापेक्षया ऽदीर्घं द्वादशाङ्गुलापेक्षया ह्रस्वमित्निवदविरोधादुभयात्मकत्वमपि शङ्कनीयं सदसद्रूपेणोभयात्मकं विरुद्धमिति चेत्तदुभयवैलक्षण्यरूपमनुभयात्मकत्वमपि विरुद्धत्वान्न शङ्क्यम् आपाततः शङ्क्यत्यप्ययुक्तम् उभयात्मकत्वेऽप्यापाततः शङ्काया निवारकाभावात् । किञ्च उत्तरत्रासद्व्यपदेशान्नेति चेन्न धर्मान्तरेणेति शङ्कापरिहारयोरुत्थानायोगाच्च नैवमधिकरणद्वयं कल्पनीयं तत्र हि कार्यस्यासत्त्वात् कारणादभेदोऽनुपपन्न इत्याक्षिप्य भावविकारषट्कान्तर्गतनामरूपसंयोगलक्षणसत्यत्वादर्थान्तरेण शक्तिमात्रावशेषवस्तुमात्र-

१ सर्वकार्यविनाशानुपपत्तिप्रसङ्गादिति पा० ।

स्वरूपेण धर्मान्तरेणासद्व्यपदेशः न तु स्वरूपसत्त्वाभावेनेति भवद्भिर्व्याख्यास्यते, इह च विकल्पसंज्ञकभावाभावात्मकस्थूलरूपनामसंयोगलक्षणं सत्त्वं प्रलयदशायां निषेध्यं न तु स्वरूपसत्त्वमित्यधिकरण[1]द्वयेनिर्णीयते कथमसद्व्यपदेशः स्वरूपासत्त्वशङ्कामङ्कुरयेत् । नन्वत्र सत्त्वासत्त्वयोरुभयोरपि प्रतिषेधो निरूपितः तत्र तु केवलासत्त्वविधिर्निरूप्यत इति चेत्र अपीताविन्त्यधिकरणे प्रलयदशायां निषेध्यं सत्त्वं स्थूलावस्थायोगलक्षणं शक्तिमात्रावशेषवस्तुमात्ररूपेण सत्त्वं तु न निषेध्यमिति शिक्षितत्वादसच्छब्दस्य सत्त्वप्रतिषेधकत्वात्तदभावस्य शक्तिमात्रावशेषसूक्ष्मदशारूपत्वादसच्छब्दस्य तदवस्थवस्तुमात्रोपस्थापकत्वसिद्धेरधिकाशङ्काभावाच्च परस्परप्रतिपक्षाकारद्वयनिषेधेन व्याकुलत्वाभाव एवासद्वा इदमिति वाक्यस्य वैषम्यं तत्कथं शिक्षितार्थशैथिल्यशङ्कां जनयेत्, तस्मात्सालक्षण्यनियमनिषेधानन्तरमसतः कार्यत्वशङ्कानिरासपरमसदिति चेदिति सूत्रं कार्यकारणयोरनन्यत्वे कारणस्य ब्रह्मणः परिणामादिदोषशङ्काव्युदासकमपीताविन्त्यादिसूत्रद्वयमित्येषां सूत्राणां परमप्रकृतसालक्षण्यनियमभङ्गानुबन्धित्वादेकाधिकरण्यं युक्तम् ॥ विलक्षणत्वाधिकरणं समाप्तम् ॥

शिष्टापरिग्रहाधिकरणम् ।

**सू० एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥**

भा० शिष्टाः परिशिष्टाः न विद्यते वेदपरिग्रहो येषामित्यपरिग्रहाः शिष्टाश्चापरिग्रहाश्च शिष्टापरिग्रहाः, एतेन वेदापरिगृहीतसांख्यपक्षक्षपणेन परिशिष्टाश्च वेदापरिगृहीताः कणभक्षाक्षपादक्षपणकभिक्षुपक्षाः क्षपिता वेदितव्याः, परमाणुकारणवादेऽमीषां सर्वेषां संवादात्कारणवस्तुविषयस्य तर्कस्याप्रतिष्ठितत्वं न शक्यते वक्तुमित्यधिकाशङ्का तावन्मात्रसंवादेऽपि तर्कमूलत्वाविशेषात्परमा-

[1] अधिकरणद्वयेन निर्णीयते इति पा० ।

णुस्वरूपेऽपि शून्यात्मकत्वाशून्यात्मकत्वज्ञानात्मकत्वार्थात्मकत्वक्षणिकत्वनित्यत्वैकान्तत्वानेकान्तत्वसत्यासत्यात्मकत्वादिविसंवाददर्शनाच्चाऽप्रतिष्ठितत्वमेवेति परिहारः ।

शिष्टापरिग्रहाधिकरणं समाप्तम् ॥

टी० सू० एतेन शिष्टापरिग्रहा अपि व्याख्याताः, किं ब्रह्मकारणत्वं विचाल्यं मुन नेति किं वेदान्तवाक्यानां कणादाक्षपादादितर्कविरोधोऽन्यपरत्वमापादयति नेति किं बहुवादिसम्मतपरमाणुकारणवादनिरसने तर्काप्रतिष्ठानहेतुः प्रभवति नेति, यदा न प्रभवति, तदा कणादाद्युक्ततर्कविरोधेन श्रुतीनामन्यपरत्वाद् ब्रह्मकारणत्वं विचाल्यं भवति, यदा तु प्रभवति तदा तदुक्तविरोधस्य श्रुतीनामन्यपरताहेतुत्वाभावाद् ब्रह्मकारणत्वं विचाल्यं भवति, शिष्ट–शब्दम् अपरिग्रह–शब्दं समासं च व्याचष्टे शिष्टा इत्यादिना, अनेन शिष्टैरपरिगृहीता इति परोक्तव्याख्यानव्यावृत्तिः, तथा हि सति प्रधानकारणवादस्यापि शिष्टैरपरिगृहीतत्वासिद्धिः । ननु कथं मोक्षधर्मादिषु परिगृहीतस्य साङ्ख्यस्य शिष्टापरिगृहीतत्वं कथं धर्मशास्त्रपरिगृहीतस्य न्यायवैशेषिकादिपक्षस्य शिष्टापरिगृहीतत्वं, स्मर्यते हि "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दशे"ति "अङ्गानि चतुरो वेदा मीमांसान्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दशे"ति पराशरः, तत्प्रणीता प्रमाणप्रमेयव्यवहारमर्यादा सर्वाङ्गीकार्या, वेदप्रामाण्यमीश्वरस्तदुपासनान्मोक्ष इत्यादि च तैरभ्युपेतं तत्कथं तस्यापरिग्रहः नैयायिको वैशेषिकश्चेति नातीव भेद इति कारणतत्त्वस्य प्रधानप्रतिपाद्यत्वात् परमाणुकारणवादस्यौपनिषदब्रह्मकारणत्वविरोधात् विरुद्धांशस्यापरिपरिगृहीतत्वात्तदभिप्रायो वैशेषिकादीनां शिष्टापरिग्रहव्यपदेश इति चेत् स्वतन्त्रप्रधानकारणवादस्यापि ब्रह्मकारणवादविरुद्धत्वादुपनिषद्विरुद्धे प्रधानप्रतिपाद्ये परिग्रहाभावाच्च साङ्ख्यपक्षस्यापि शिष्टापरिग्रहव्यपदेशस्तुल्यतया

ग्राह्यः एकदेशाविरोधेऽपि प्रधानप्रतिपाद्यांशविरोधस्याविशिष्टत्वात् । सूत्राभिप्रेतार्थमाह परमाण्वित्यादिना, माध्यमिकमतं शून्यात्मकत्वं, योगाचारमतं ज्ञानात्मकत्वं, क्षणिकत्वं बौद्धत्रयाभिमतम्, एकान्तत्वमार्हतव्यतिरिक्तानामभिमतं सत्यत्वं वैशेषिकादिमतम् असत्यत्वं योगाचारमतम्, आदि-शब्देनैकविधत्ववतुर्विधत्वं विवक्षितम्,एकविधत्वमार्हतमते। परैस्तु वैशेषिकसौगतादीनां तर्ककुशलताप्रसिद्धेरधिका शङ्का तर्कमूलत्वाविशेषात्परिहार इत्युक्तं तर्कमूलत्वाविशेषेऽपि परमाणुकारणवादे सर्वसंवादात्प्रतिष्ठितत्वमिति शङ्का त्ववतिष्ठते अस्यां तुपरिहृतायां तार्किकत्वप्रसिद्धिरकिञ्चित्करी, अतः प्रबलशङ्कापरिहारावेव सूत्राभिप्रेताविति युक्तम् ॥ शिष्टापरिग्रहाधिकरणं समाप्तम् ॥

भोक्त्रापत्त्यधिकरणम् ।

**सू० भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १४ ॥**

श्रु० पुनरपि साङ्ख्यः प्रत्यवतिष्ठते यदुक्तं स्थूलसूक्ष्मचिदचिद्वस्तुशरीरस्य परस्य ब्रह्मणः कार्यकारणरूपत्वाज्जीवब्रह्मणोः स्वभावविभाग उपपद्यत इति स तु विभागो न सम्भवति, ब्रह्मणः सशरीरत्वे तस्य भोक्तृत्वापत्तेः सशरीरत्वे जीवस्येवेश्वरस्यापि सशरीरत्वप्रयुक्तसुखदुःखयोर्भोक्तृत्वस्यावर्ज्जनीयत्वात् । ननु च सम्भोगप्राप्तिरिति चेन्नवैशेष्यादित्यत्रेश्वरस्य भोगप्रसङ्गपरिहार उक्तः[1], नैवं तत्र ह्युपास्यतया हृदयायतने सन्निहितस्य शरीरान्तर्वर्तित्वमात्रेण भोगप्रसङ्गो न विद्यत इत्युक्तम्, इह तु जीववद्ब्रह्मणोऽपि सशरीरत्वे तद्वदेव सुखदुःखयोर्भोक्तृत्वप्रसङ्गोदुर्वार इत्युच्यते, दृश्यते हि सशरीराणां जीवानां शरीरगतबालत्व-

१ प्राप्त इति पा० ।

स्थविरत्वादिविकारासम्भवेऽपि शरीरधातुसाम्यवैषम्यनिमित्तसुखदुःखयोगः । श्रुतिश्च

टी० सू० भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् । सङ्गतिमाह "पुनरपी"ति, न तु दृष्टान्तभावादित्यत्र शरीरगतबालत्वयुवत्वादिधर्माणां शरीरिण्यप्रसङ्गं दृष्टान्तीकृत्य परमात्मनि शरीरभूतचिदचिद्गतदोषाप्रसक्तिरुक्ता अत्र शरीरसंसर्गप्रयुक्तभोक्तृत्वप्रसङ्गः परिह्रियते, पूर्ववदेव प्रथमो विचारः, तदर्थं किं भोक्तृजीवशरीरकस्य ब्रह्मणस्स्वशरीरभूताज्जीवादिनिरतिशयानन्दस्वभावतया विलक्षणत्वमस्ति ने?ति तदर्थं किं ब्रह्मणः सशरीरत्वे जीववत्सुखदुःखभोक्तृत्वं प्रसज्यते? उत ने?ति दुःखादिभोक्तृत्वं किं शरीरप्रयुक्त? मुतान्यप्रयुक्त? मिति

भा० "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इति अतः सशरीरब्रह्मकारणवादे जीवेश्वरस्वभावविभागाभावात् केवलब्रह्मकारणवादेऽपि मृत्सुवर्णादिवज्जगद्गतापुरुषार्थादिसर्वविशेषाश्रयत्वप्रसङ्गाच्च प्रधानकारणवाद एव ज्यायानिति चेत्, अत्रोत्तरं स्याल्लोकवदिति स्यादेव विभागो जीवेश्वरस्वभावयोः, न हि जीवस्य शरीरधातुसाम्यवैषम्यनिमित्तं सुखदुःखयोर्भोक्तृत्वं सशरीरत्वकृतम् अपि तु पुण्यपापरूपकर्मकृतं, न ह वै सशरीरस्येत्यपि कर्मारब्धदेहविषयं स एकधा भवति त्रिधा भवति स यदि पितृलोककामो भवति स तत्र पर्येति जक्षत् क्रीडन् रममाण इति कर्मसम्बन्धविनिर्मुक्तस्याविर्भूतस्वरूपस्य सशरीरस्यैवापुरुषार्थगन्धाभावात् । अपहतपाप्मनस्तु परमात्मनः स्थूलसू-

स्वरूपकृत्स्नजगच्छरीरत्वेऽपि कर्मसम्बन्धगन्धोनास्तीति न तरामपुरुषार्थगन्धप्रसङ्गः, लोकवत्—यथा लोके राज-शासनानुवर्तिनान्तद्तिवर्तिनां च राजानुग्रहनिग्रहकृत-सुखदुःखयोगेऽपि न

टी० न ह वै सशरीरस्येति श्रुतौ शरीर–शब्दः किं शरीरमात्रपरः? उत पुण्यापुण्यनिमित्तशरीरपर? इति, अत्र चरमो विचारः प्रस्तुतोपयोगेन बुद्धिस्थतया कृतः, न त्वसाधारणतया कर्त्तव्यत्वात्, यदा शरीरमात्र-परः तदा दुःखादिभोगस्य शरीरत्वप्रयुक्तत्वात् ब्रह्मणोऽपि तद्भोगप्रसङ्गेनं शरीरभूताज्जीवान्निरतिशयानन्दतया विलक्षणत्वं नास्तीति स्यात्, यदा तस्मिन् वाक्ये शरीरशब्दः कर्मकृतशरीरपरः तदा दुःखादिभोगस्य शरीर-त्वप्रयुक्तत्वाभावात् ब्रह्मणः स्तद्भोगाप्रसङ्गेन शरीरभूता ज्जीवान्निरति-शयानन्दतया । वैलक्षण्यमस्तीति सिध्यति कथं शरीरित्वे भोक्तृत्वमिति शङ्कायां विवृणोति–

सू० सशरीरित्वमाचण शासके राजन्यपि शासनानुवृत्त्यति-वृत्तिनिमित्तसुखदुःखयोर्भोक्तृत्वप्रसङ्गः, यथाह द्रमि-डभाष्यकारः "यथा लोके राजा प्रचुरदन्दशूके घोरेऽनर्थसंकटेऽपि प्रदेशे वर्त्तमानोऽपि व्यजनाद्यवधूतदेहो दोषैर्न स्पृश्यते अभिप्रेतांश्च लोकान् पुनरपि पालयिष्यति भोगांश्च गन्धादीन् विश्वजनोपभोग्यान् धारयति तथा ऽसौ लोकेश्वरो भ्रमत्स्वसामर्थ्यचामरो दोषैर्न स्पृश्यते रक्षति च लोकादीन् ब्रह्मलोकादीन् भोगांश्च विश्वजनोपभोग्यान् धारयति" इति,

टी० "सशरीरत्व" इति, अधिकरणारम्भमाक्षिपति "ननु चे" ति, परिहरति 'नैवमि" ति, शरीरान्तर्वर्तित्वमात्रेणेति मात्र–शब्देन शरीरं

प्रति स्वाम्यव्यावृत्तिः, जीववत्सशरीरत्व इत्यनेन शरीरस्वाम्यमभिप्रेतम्, एवं शङ्काया मुखभेदो दर्शितः यथा कार्यवशात्परगृहं प्रविष्टस्य गृहसन्निधिमात्रेण तद्गृहपतित्वप्रयुक्तानर्थाभ्युदयभाक्त्वं न भवति तथोपास्यत्वायहृदयस्थस्य शरीरसन्निधिमात्रेण सशरीरत्वप्रयुक्तभोक्तृत्वापत्तिः नास्तीति सम्भोगप्राप्तिरिति चेदित्यत्रोक्तम्, अत्र तु शरीरस्वामित्वप्रयुक्तभोक्तृत्वमाशङ्क्यमितिभेद इत्यर्थः, तथाऽपि परिहारैक्याच्छङ्कानुदय इति न च वाच्यम् अत्रैव वक्तव्यदुःखादेः सो[1]पाधिकत्वमुपजीव्य सन्निधिमात्रप्रसक्ताया भोक्तृत्वशङ्कायास्तत्र परिहृतत्वात्सूत्रभेदस्तु भोक्तृत्वशङ्कायास्तत्र परिहृतत्वात्सूत्रभेदस्तु भोक्तृत्वशङ्काद्वारभेदादितिबन्धनः । असम्भवेऽपीत्यनेन न तु दृष्टान्तभावादित्यत्र परिहृतांशउक्तः । अपरिहृतांशमाह "अत" इति, परिहरति "अत्रोत्तरमि"ति अत्र व्युत्पाद्यन्यायं दर्शयति "अपि त्वि"ति, न ह वै सशरीरस्येत्यपीति मुक्तिपादे वक्ष्यमाणमर्थमुपजीव्यात्र निर्वाहः कृतः । नन्वत्रैव निर्बाह्यत्वाच्छ्रुतेः व्यञ्जनादीत्यादि–शब्देन तत्तदनिष्टनिवारणसाधनानि विवक्षितानि भ्रमत्स्वसामर्थ्यचामर इत्यत्र चामरग्रहणमनिष्टनिवारणानुरूपवस्तूनामुपलक्षणं सशरीरब्रह्मकारणत्वे जीवेश्वरविभागाभावः परिहृतः केवलब्रह्मकारणवादे पूर्वोक्तजगद्गतापुरुषार्थादिप्रसङ्गमनभ्युपगमेन परिहरति–

सू० मृत्सुवर्णादिवत्, ब्रह्मस्वरूपपरिणामस्तु नैवाभ्युपगम्यते अविकारत्वनिर्दोषतादिश्रुतेः । यत्तु परैर्ब्रह्मकारणवादे भोक्तृभोग्यविभागाभावमाशङ्क्य समुद्रफेनतरङ्गदृष्टान्तेन विभागप्रतिपादनपरं सूत्रं व्याख्यातं तदयुक्तम् अन्तर्भावितशक्त्यविद्योपाधिकाद्ब्रह्मणस्सृष्टिमभ्युपगच्छतामेवमाक्षेपपरिहारयोरसङ्गतत्वात्, कारणान्तर्गतशक्त्यविद्योपाध्युपहितस्य भोक्तृत्वादुपाधेश्च भोग्यत्वादिलक्षणयोस्तयोः परस्परभावापत्तिर्हि न सम्भवति, स्वरूपपरिणामस्तु तैर-

[1] कर्मोपाधिकत्वमिति पा० ।

पि नाभ्युपेयते न कर्म्माविभागादिति चेन्नाऽनादित्वादिति क्षेत्रज्ञानां तद्गतकर्म्मणां चानादित्वप्रतिपादनानात्, स्वरूपपरिणामाभ्युपगमेऽपि भोक्तृभोग्यादिभागाशङ्का कस्यचिदपि न जायते

टी० "मृत्सुवर्णादी"ति अस्य सूत्रस्य परैः कृतमन्यथाव्याख्यानमनुवदति "यत्त्वि"ति, भोक्तृ-शब्दो भोक्तृत्वपर इति तैरप्युक्तं भोग्यस्य भोक्तृत्वापत्तिं भोक्तुर्भोग्यत्वापत्तिं वा शङ्क्य परैः परिहृतं तद्दूषयति "तदयुक्त"मिति, आक्षेपपरिहारयोरसङ्गतत्वमुपपादयति "कारणान्तर्गते"ति, उपाधेश्च भोग्यत्वादित्यत्रोपाधि-शब्दः शक्त्यविद्योपाधीनां त्रयाणामपिवाचकः, यथा वादशब्दः कथासामान्यवाची कथाविशेषवाची च तद्वत्। यद्वोपाधि-शब्देनाविद्यंशो विवक्षितः उपहितब्रह्मणो भोक्तृत्वमुपाधेर्भोग्यत्वं चास्तु तथाऽपि तयोरुपाधिब्रह्मणोरविभाग आशङ्क्य परिह्रियत इत्यत्राह "विलक्षणयो"रिति, "स्वरूपस्यैव परिणामे शङ्कापरिहारावुपपद्येते इत्यत्राह "स्वरूपे"ति, कुत इत्यत्राह "न कर्मे"ति, क्षेत्रज्ञानादित्वाभ्युपगमे उपहितस्य ब्रह्मणः क्षेत्रज्ञत्वेनोपाधेश्च भोग्यत्वरूपेण नित्यत्वाभ्युपगमान्नित्यत्वेनाभ्युपगतयोस्तयोरविभागाभावः सिद्ध एवेत्यर्थः । अभ्युपगम्य दूषणमाह "स्वरूपपरिणामाभ्युपगमेऽपी"ति,

सू० मृत्सुवर्णादिपरिणामरूपघटशरावकटकमुकुटादिविभागवद्भोक्तृभोग्यविभागोपपत्तेः, स्वरू[1]पपरिणामेऽपि ब्रह्मण एव भोक्तृभोग्यत्वापत्तिरिति पुनरप्यसामञ्जस्यमेव ॥

भोक्त्रापत्त्यधिकरणं समाप्तम् ॥

टी० दृष्टान्तमाह "मृत्सुवर्णादी"ति, कटकमुकुटादीनां कालभेदेन अविभाग उपपद्यत इति चेत्तत्फेनतरङ्गदृष्टान्तेऽपि समानं, यस्तु विभागः फेनतरङ्गदृष्टान्तेन साध्यते स स्वरूपपरिणामाभ्युपगमेऽपि

१ स्वरूपपरिणामे चेति पा० ।

स्वयमेव सिध्यतीति भावः । स्वरूपपरिणामाभ्युपगमेऽपीतो तद्वत्प्रसङ्गा-दसमञ्जसं न तु दृष्टान्ताभावादिति विकारापुरुषार्थोपातात् । निर्विकार-त्वादिश्रुतीनामसामञ्जस्यमुक्तं परिहृतं तच्च दूषणमपरिहृतं स्यादित्या-ह "स्वरूपपरिणामे चे"ति, भोक्त्रापत्त्यधिकरणं समाप्तम् ॥

आरम्भणाधिकरणम् । सू० तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १५ ॥

भू० असदिति चेन्न प्रतिषेधमात्रत्वादित्यापु कारणभूताद्ब्र-ह्मणः कार्यभूतस्य जगतोऽनन्यत्वमभ्युपगम्य ब्रह्मणो जगत्कारणत्वमुपपादितम्, इदानीं तदेवानन्यत्वमाक्षिप्य समाधीयते ।

टी० सू० तदनन्यत्वमारम्भणशब्दादिभ्यः, सङ्गतिमाह "असदि-ती"ति, इत्यादिषु सूत्रेष्वित्यर्थः, ब्रह्मणो जगत्कारणत्वं सम्भवति ने? ति किं ब्रह्मणोज[1]गत्कारणत्वे जगतः श्रुतिसिद्धं ब्रह्मणोऽनन्यत्वं सम्भवति ने? ति किं वाचारम्भणमित्यादिवाक्यानि कारणस्यैवावस्थान्तरापत्त्या कार्यत्वं सा-धयितुं प्रभवन्ति ने? ति किं बुद्धिशब्दान्तरादयोऽवस्थाभेदनिबन्धना? उत द्रव्यभेदनिबन्धना? इति, यदा बुद्धिभेदादयः स्वरूपान्यत्वनिबन्धनाः तदा कार्यस्य कारणादन्यतया जगतो ब्रह्मान्यत्वापत्तेस्तदनन्यतया व्य-पदिश्यमानं ब्रह्म न कारणं भवतीति स्यात्, यदा बुद्धिभेदादीनामव-स्थान्तरनिबन्धनत्वं तदा कार्यस्य कारणादनन्यत्वेन जगतो ब्रह्मानन्यत्व-सिद्धेस्तदनन्यतया व्यपदिश्यमानस्य ब्रह्मणो जगत्कारणत्वं सम्भवतीति सिध्यति । अत्र केचित्तदनन्यत्वं वर्णयन्ति तस्मात्कारणाद् ब्रह्मणः कार्य-स्यानन्यत्वं परमार्थतो व्यतिरेकेणाभाव इति, जडाजडयोरैकत्वायोगादन-न्यत्वं नाम नैक्यं किं तु भेदाभावः, भेदस्य प्रतीयमानत्वादसत्त्वस्य दुर्व-चत्वात्, परमार्थतोव्यतिरेकेणाभाव इत्युक्तं तत्तावन्निरूप्यं यद्यनन्य-शब्दो बहुव्रीहिरभिमतः तदाऽन्यशून्यत्वमनन्यत्वं तेन कार्यधर्मिनिषेधात् प्रप-

[1] किं ब्रह्मकार्यत्वे जगत इति ।

त्वमिथ्यात्वं सिध्यति, यथा निर्धनत्वमिति धनाभावः, तथा सति तस्यानन्यत्वमिति योजनीयं न तु तस्मादिति, पुरुषस्य निर्धनत्वमिति हि व्यपदेशः, न तु पुरुषान्निर्धनत्वमिति, तस्मात्कारणात् परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्यस्यावगम्यत इति हि तेषां योजना, अतस्तत्पुरुषसामर्थ्यादनन्यत्वमन्यत्वाभावः स्यात्, ततश्चैक्यं विहितं स्यात्, न तु मिथ्यात्वं, यथा मनुष्यादनन्यत्वं ब्राह्मणस्य, वृक्षादनन्यत्वं पलाशस्येति, न हि ब्राह्मणपलाशयोर्मिथ्यात्वमुच्यते, अतोऽनन्यत्व-शब्देन न कार्यमिथ्यात्वसिद्धिः, परमार्थत इत्यध्याहारश्च तन्निरपेक्षार्थे सम्भवत्यनुपपन्नः। यदि परमार्थव्यतिरेकाभाव-शब्द ऐक्यपरो न भवेत्, तदा व्यतिरेक-शब्दवैयर्थ्यं च परमार्थतोऽभाव इत्येतावता कार्यमिथ्यात्वसिद्धेः, अतस्तदसत्त्वमिति सूत्रं शिक्षणीयं मृत्तिकेत्येवेति विषयवाक्यस्य इति-शब्दश्च वृथा स्यात्। ननु तत्पुरुषपक्षेऽपि चन्द्रादनन्योद्वितीयश्चन्द्र इत्यत्र द्वितीयचन्द्रस्येव कार्यस्य मिथ्यात्वसिद्धिरिति चेन्न तत्रापि द्वित्वस्यैव मिथ्यात्वाच्चन्द्रैकत्वसिद्धेः, रज्जोरनन्यः सर्प इत्यत्र सर्पमिथ्यात्ववत्कार्यमिथ्यात्वमिति चेत् न मातुरनन्या वन्ध्येतिवद्वाक्यस्य व्याहतार्थत्वात्, न व्याहतिः, सर्पमिथ्यात्वस्य विवक्षितत्वादिति चेन्न अशाब्दत्वात् मिथ्यात्वस्य,। ननु अग्निना सिञ्चेदित्यत्र सेचनवाचिशब्दस्य दाहवाचित्वाभावाद्धि व्याघातः, अत्र त्वमुख्यवृत्त्या व्याहतिपरिहार इति चेत् न, अनन्यसर्प-शब्दयोः कस्यामुख्यताऽभिमता यद्यनन्यशब्दस्यारोपितपरत्वमाश्रित्य सर्पो रज्ज्वारोपित इत्यर्थो विवक्षितः स्यात् तर्हि तद्वदेव तदनन्यत्वमिति सोऽत्रं पदमप्यारोपितपरं स्यात्, तदानीं सत्त्वाच्चापरस्येति सूत्रवैघट्यं स्यात्, तद्धि कारणदशायामपि कार्यस्य कारणे सत्त्वं ब्रूते, न ह्यारोपः पाश्चात्यः आरोपितवस्तु प्रागपि सदिति युज्यते, प्रागपि कारणात्मना सत्त्वं युक्तमिति चेन्न असतः कार्यस्य परमार्थभूतकारणात्मना सत्त्वायोगात्। यदि सर्प-शब्देनाधिष्ठानं लक्ष्यते एवमेव कार्यशब्दोपलक्षितस्य सन्मात्रस्य कारणादनन्यत्वं स्यात् तथा सति कार्यस्य कारणादनन्यत्वं न सिध्यति सन्मात्रस्यापरिणामिनो निर्दोषस्य कारणत्वाभावादविकारस्या-

कल्पितस्य कार्यत्वाभावाच्च । ननु सन्मात्रमेव कारणाविद्याशबलं कारणं कल्पिताकारोपहितं, घटस्सन् पटस्सन् इत्यवभासमानं तदेव कार्यमित्यनन्यत्वमिति चेत् अविद्याशबलत्वं नाम किमविद्योपलक्षितत्वम्? उताविद्याविशिष्टत्वं? प्रथमे ब्रह्मकारणत्वासिद्धिरेव, न हि शाखोपलक्षितस्य चन्द्रस्य पत्रपुष्पाद्युपादानत्वं, नापि सारसोपलक्षितकेदारस्य सारसगतगतिशब्दाद्युपादानत्वं, यदि कारणाविद्याविशिष्टं सन्मात्रमेव कल्पिताकारविशिष्टं कार्यमित्यनन्यत्वं, ततोऽपि कारणावस्थप्रकृतिशरीरकमेव ब्रह्म कार्यावस्थप्रकृतिशरीरकमित्यनन्यत्वोपपादनं वरं, यस्याव्यक्तं शरीरं यस्य पृथिवी शरीरमिति श्रुतानुगुणनिर्वाहे सम्भवत्यश्रुतकल्पनाऽनुपपत्तेः, सकलप्रमाणबाधाभावात् परमार्थत इत्यध्याहारनैरपेक्ष्यात्, श्रुताविति–शब्दवैयर्थ्याभावाच्च । यद्व्यतिरेकेण यस्य नोपलम्भसद्भावौ स तस्मादनतिरिक्तः यथा मृदोघट इत्यनुमानपरं "भावे चोपलब्धेरि"ति, सूत्रं व्याख्यातम्, उपलम्भसद्भावयोः समुच्चयात् धूमाग्न्योरालोकचाक्षुषरूपयोश्चानन्यत्वव्युदास इति । अत्रोच्यते न तावत्कार्यावस्थायाः कारणेनैकत्वं साध्यम्, अनुवृत्तसत्यनित्याजडस्य तस्य व्यावृत्तासत्यानित्यजडावस्थायाश्चैकत्वव्याघाताज्जातिव्यक्त्योरनेकान्तत्वाच्च तत्राप्यभेदेऽभिमते गुणगुणिनोरनैकान्त्यं तत्राप्यभिन्नत्वं दुर्वचं जातिगुणयोरैक्यप्रसङ्गात्, जात्यभिन्नं हि वस्तु जातिरेव तस्यैव गुणादभिन्नत्वे जातिरेव गुणः स्यात्, अस्त्विति न वाच्यम् अयं नीलः पटः नायं नील इति जातिसद्भावेऽपि गुणाभावव्यवहारदर्शनात्, कार्य्यमिथ्यात्वे साध्ये दृष्टान्तः साध्यविकलः, मृत्कार्यस्य घटस्य बाधादर्शनात् शुक्तिरूप्यदृष्टान्तपरिग्रहेऽप्यनैकान्त्यं, हेतोर्घटेऽपि वृत्तेः प्रतिपन्नोपाधौ बाधितत्वेन सोपाधिकं च, कार्यग्राहिप्रमाणबाधितत्वं च, तृतीये च सूत्रे यस्य कारणे पूर्वं सत्त्वं नास्ति न तत्ततो जायते यथा सिकतासु तैलमित्यनन्यत्वे युक्तिरुक्ता, इयं च कार्यमिथ्यात्ववादिनोऽनुपपन्ना रज्जौ प्रागसतः काल्पनिकसर्पस्यारोपदर्शनात्, प्रागपि सोऽस्ति चेत् प्रतीयेत, काल्पनिकानामर्थानां प्रतीयमानतयैव हि सत्त्वम् । ननु कल्पिताकारोपहितमधिष्ठानं कार्यं तत्राधिष्ठानस्वरूपं प्राङ् नास्ति चेत् न तत्र

कार्यकल्पना भवतीति सूत्रार्थ इति चेत् तत्तु निरधिष्ठानभ्रमासम्भवनिराकरणेन दत्तोत्तरं भवति, यदुक्तं कारणस्य सत्वं प्रामाणिकं कार्यं च सदेवावभासते तत्र सत्त्वद्वयानुपलम्भात्सन्मात्रातिरिक्तः कार्याकारो मिथ्येति तदयुक्तं सामान्यरूपमुपाधिरूपमसद्व्यावृत्तिरूपं वा सत्त्वं विशेषणविशेष्ययोः साधारणं दृष्टमिति तावता विशेषणमिथ्यात्वासिद्धेः, न हि दण्डिनि स्पन्दमाने स्पन्दमानत्वमेकं दृष्टमिति दण्डदेवदत्तयोरनन्यत्वम् अतो मृषावादाभिमतमनन्यत्वमनुपपन्नम् ॥ औपाधिकभेदाभेदवादेऽपि परिणामास्पदस्योपाधेश्च ब्रह्मणश्च भिन्नाभिन्नतयाऽनन्यत्वं वाच्यं तत्र खण्डगतशृङ्गलोमादीनां खण्डादनन्येन मुण्डेनानन्यत्ववज्जगद्ब्रह्मणोरनन्यत्वममुख्यम् ननु न केवलं खण्डमुण्डयोरिव भिन्नाभिन्नत्वमात्रमचिद्ब्रह्मणोः किन्तु ब्रह्मणः शक्तिरूपत्वादुपाधेः, यथाऽग्नेरौष्ण्यादिः, अतः शक्तिशक्तिमद्रूपेणोपाधिब्रह्मणोर्भिन्नाभिन्नत्वाज्जगतो ब्रह्मानन्यत्वमिति । उच्यते शक्तिर्नाम किं सामर्थ्यपर्यायो ब्रह्मधर्मविशेष ? उत सूक्ष्मावस्था प्रकृतिरेव ? आद्ये ब्रह्मणो निर्विकारत्वश्रुतिविरोधः, ब्रह्मणो मृत्पिण्डनिर्विशेषत्वात्, मृत्पिण्डो हि घटादिपरिणामशक्तियुक्तो विकारीत्युच्यते, द्वितीये तु खण्डकार्यस्य शृङ्गादेर्मुण्डादनन्यत्ववदमुख्यत्वम् अतस्तदनुपपन्नम् । यादवप्रकाशमतेऽपि भोक्तृभोग्यनियन्तॄणां ब्रह्मांशत्वाभ्युपगमान्महदादिकार्याणां भोक्तृनियन्तृभ्यामनन्यत्वमयस्कार्यस्य रूपस्य सुवर्णरजताभ्यामिवानुपपन्नं, महदादीनां प्रकृतेरनन्यत्वे ब्रह्मकारणवादासिद्धिः, सन्मात्रब्रह्मणोऽनन्यत्वं सच्छब्दप्रवृत्तिनिमित्तविशेषनिरूपणाच्छिथिलीभवति, अबाध्यत्वादिकं हि प्रवृत्तिनिमित्तत्वेन वर्तते जगत्सतोऽनन्यदित्युक्ते जगदबाध्यमित्युक्तं भवति, ततश्च ब्रह्मानन्यत्वमनुक्तं स्याद्भावे भाव एव यदुपलब्धिस्तत्तस्य कारणं तदवस्थतन्त्वादिभाव एव प्रावरणादिकार्यदर्शनात्तन्त्वादिकं प्रावरणादेः कारणम्, एवं तत्कारणभूते तन्त्वावपि न द्रव्यान्तरं कारणमिति द्रव्यान्तरकल्पकतया पराभिमतस्य कार्यभेदस्यान्यथासिद्धिपरं द्वितीयसूत्रं व्याख्यातं तदयुक्तं पूर्वपक्षयुक्तीनामन्यथासिद्धेराद्यसूत्र एव विवक्षितत्वात् तद्विषयभूते वाक्यैकदेश एव विकारनामधेययोर्वाक्पूर्वकत्वव्यवहारसि-

द्व्यर्थतोपपादनात्, अतस्तत्रान्यत्वहेत्वन्यथासिद्धावुक्तायामनन्यत्वनियामकहेतुपरत्वं द्वितीयस्य युक्तम् इदं सत् इदं सदिति कार्यस्य सर्वस्य सत्त्वविषयप्रतीतिः सर्वैरविभज्यमानं सन्मात्रमुपस्थापयति तदेव सन्मात्रं ब्रह्म अतो ब्रह्मानन्यत्वमिति प्रत्यक्षादेवानन्यत्वोपपादनपरं सत्त्वाच्चापरस्येति सूत्रं व्याख्यातं तदत्यन्तानुपपन्नं "न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैः सहैव सन्तं न विजानन्ति देवाः, न संदृशे तिष्ठति रूपमस्य हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति क इत्था वेद यत्र सः, तं दुर्दर्शं गूढमनुप्रविष्टम् अध्यात्मयोगाधिगमेन देवं मत्वेत्यादिभिश्रुतिभिः प्रत्यक्षाद्यगोचरत्वाभिधानात्, योगैकदृश्यत्वाभिधानाच्चादृश्यत्वादिविषयं शास्त्रमीश्वरविषयं न तु सन्मात्रब्रह्मविषयमिति चेन्न यत्तदद्रेश्यमग्राह्यं यद्भूतयोनिं परिपश्यन्ति धीराः तपसा चीयते ब्रह्म ततोऽन्नमभिजायत इति जगदुपादानस्य ब्रह्मण एवादृश्यत्वाद्यभिधानादीश्वरातिरिक्तब्रह्मणोऽनिष्प्रमाणकत्वात्, कारणवाक्यानां च निर्विषयत्वप्रसङ्गाच्च, सद्द्रव्यं हि प्रत्यक्षसिद्धमवस्थाविशेषाच्च द्रव्यानन्यत्वं च अनन्यत्वसाधकयुक्तिभिः सिद्धं किमत्र वेदान्तकृत्यम्, अतः सूत्राणां वक्ष्यमाण एवार्थ उपपन्नः ॥

सू० तत्र काणादाः प्राहुः—न कारणात्कार्य्यस्यानन्यत्वं सम्भवति विलक्षणबुद्धिबोध्यत्वात्, न खलु तन्तुपटमृत्पिण्डघटादिषु कार्य्यकारणविषया बुद्धिरेकरूपा, शब्दभेदाच्च, न हि तन्तवः पट इत्युच्यन्ते, पटो वा तन्तव इति, कार्य्यभेदाच्च, न हि मृत्पिण्डेनोदकमाह्रियते घटेन वा कुड्यं निर्मीयते, कालभेदाच्च, पूर्वकालं च कारणम्, अपरकालं च कार्य्यम्, आकारभेदाच्च पिण्डाकारं कारणं, कार्य्यं च पृथुबुध्नोदराकारं, तथा सत्यामेव मृदि घटो नष्ट इति व्यवह्रियते, संख्याभेदश्च दृश्यते बहवस्तन्तवः एकश्च पटः, कारकव्या-

पारवैयर्थ्यं च, कारणमेव चेत्कार्य्यं किं कारकव्यापार-साध्यं स्यात्,

टी० काणादा–वैशेषिकाः, विलक्षणबुद्धिबोध्यत्वं, शब्दभेदः, कार्य-भेदः, कालभेदः, आकारभेदः, परिणामभेदः, भावाभावविरोधः, संख्याभेदः, कारकव्यापारवैयर्थ्यं, नित्यानित्यविभागानुपपत्तिश्चेति हेतवः उच्यन्ते, न कारणादित्यादिना, न खल्वित्यादिभिस्तत्तद्धेतुनिर्देशानन्तरभाष्यग्रन्थैर्हेत्व-सिद्धिशङ्काव्यावृत्तिः क्रियते

भा० सत्यपि कार्य्ये कार्योपयोगितया कारकव्यापारेण भवि-तव्यमिति चेत्, सर्वदा कारकव्यापारेण नोपरन्तव्यं सर्वस्य सर्वदा सत्त्वेन नित्यानित्यविभागश्च न स्यात्, अथ कार्य्यं सदेव पूर्वमनभिव्यक्तं कारकव्यापारेणाभिव्यज्यते अतः-कारकव्यापारार्थवत्त्वं नित्यानित्यविभागश्चोच्यते तदसत्

टी० सत्यपीति कार्योपयोगितया–उदकाहरणादाकार्योपयोगित-तयेत्यर्थः, कार्य्योपयोगः सामर्थ्योत्पादनद्वारेण वा ? साक्षाद्वा ? तत्र वैशे-षिकैः शक्त्यनभ्युपगमात्साक्षादुपयोगः परिशेष्यत इति तत्र दूषणमुक्तं तद-सदित्यादि ।

भा० अभिव्यक्तेरभिव्यक्त्यन्तरापेक्षत्वेऽनवस्थानात्, अनपेक्षत्वे कार्य्यस्य नित्योपलब्धिप्रसङ्गात, तदुत्पत्त्यभ्युपगमे चास-त्कार्य्यवादप्रसङ्गात्। किञ्च कारकव्यापारस्याभिव्यञ्जकत्वे घटार्थेन कारकव्यापारेण करकादेरप्यभिव्यक्तिः प्रस-ज्यते, संप्रतिपन्नाभिव्यञ्जकभावेषु दीपादिष्वभिव्यङ्ग्यवि-शेषनियमादर्शनात्, न हि घटार्थमारोपितः प्रदीपः कर-कादीन्नाभिव्यनक्ति, अतोऽसतः कार्य्यस्योत्पत्तिहेतुत्वेनैव

कारकव्यापारार्थवत्त्वम्, अतश्च सत्कार्य्यवादासिद्धिः । न च नियतकारणोपादानं सत एव कार्य्यत्वं साधयति कारणशक्तिनियमादेव तदुपपत्तेः ।

टी० किमभिव्यक्तिरुत्पद्यते? उताव्यज्यते? उताभिव्यक्त्यनपेक्षा नित्ये? ति विकल्पाभिप्रायेण दूषयति अभिव्यक्तेरित्यादिना, दूषणान्तरमाह 'किञ्चे'ति, न चेति मृत्पिण्डे घटो न विद्यते चेदसत्त्वाविशेषात्तन्तुरपि घटचिकीर्षुणोपादीयेत, न च तथा क्रियते, अतः कारणविशेषोपादाननियमानुपपत्त्या कार्यं सदेवेत्यर्थः । परिहरति "कारणे"ति, घटो मृत्पिण्ड एव वर्त्तते न तन्तुष्विति नियमः कथं तदेव तत्सद्भावयोग्यमिति चेत्तदुत्पादनयोग्यं तदेवेति तस्यैवोपादाननियमो युक्त इत्यर्थः । एवमुपादानकारणनियमानुपपत्तिरूपं चोद्यं परिहृतम् ॥ अथ कारकव्यापारानुपपत्तिमुखेन चोदयति "नन्वि"ति, परिहरति—

मू० नन्वसत्कार्य्यवादिनोऽपि कारकव्यापारो नोपपद्यते प्रागुत्पत्तेः कार्य्यस्यासत्त्वात्, कार्य्यादन्यच्च कारकव्यापारेण भवितव्यं तच्चाऽन्यत्वाविशेषात्तन्तुगतकारकव्यापारेण घटोत्पत्तिरपि प्रसज्येत, नैवं यत्कार्योपादानशक्तं यत्कारणं तद्गतकारणव्यापारेण तत्कार्य्योत्पत्तिसिद्धेः । अत्राहुः कारणादनन्यत्कार्य्यं, न हि परमार्थतः कारणव्यतिरिक्तं कार्य्यं नाम वस्त्वस्ति अविद्यानिबन्धनत्वात्सकलकार्यतद्व्यवहारयोः, अतो यथाकारणभूतात् मृद्द्रव्याद्घटादिषु विकारेषूपलभ्यमानाद् व्यतिरिक्तं घटशरावादिकार्यं व्यवहारमात्रालम्बनं मिथ्या कारणभूतं मृद्द्रव्यमेव सत्यं, तथा निर्विशेषसन्मात्रात् कारणभूताद्ब्रह्मणोऽन्योऽहङ्कारादिव्य-

वहारालम्बनः कृत्स्नः प्रपञ्चो मिथ्या कारणभूतं सन्मात्रं ब्रह्मैव सत्यं, तस्मात्कारणव्यतिरिक्तं कार्य्यं नास्तीति कारणादनन्यत्कार्य्यं, न च वाच्यं शुक्तिकारजतादीनामिव घटादिकार्य्याणामसत्यत्वाप्रसिद्धेर्दृष्टान्तानुपपत्तिरिति यतस्तत्रापि युक्त्या मृद्द्रव्यमात्रमेव सत्यतया व्यवस्थाप्यते तदतिरिक्तं तु युक्त्या बाध्यते, का पुनरत्र युक्तिः, मृद्द्रव्यमात्रस्यानुवर्त्तमानत्वं तदतिरिक्तस्य च व्यावर्तमानत्वं, रज्जुसर्पादिषु ह्यनुवर्तमानस्याधिष्ठानभूतस्य रज्ज्वादेस्सत्यता व्यावर्तमानस्य च सर्पभूदलनाम्बुधारादेरसत्यता दृष्टा तथाऽनुवर्तमानमधिष्ठानभूतं मृद्द्रव्यमेव सत्यं व्यावर्तमानास्तु घटशरावादयोऽसत्यभूताः । किञ्च सत आत्मनो विनाशाभावादसतश्च शशविषाणादेरुपलब्ध्यभावादुपलब्धिविनाशयोगि कार्य्यं सदसद्भ्यामनिर्वचनीयमिति गम्यते, अनिर्वचनीयं च शुक्तिकारजतादिवन्मृषैव

टी० "नैवमि"ति, अनन्यत्वश्रुतीनाममुख्यत्वमभिमतम् अस्मिन् पक्षे सिद्धान्त्येकदेशिमुखेनोत्तरमाह "अत्राहु"रिति, वाचारम्भणमित्यादिवाक्यस्यार्थमभिप्रेत्याह "अतो यथे"ति, विकारेषूपलभ्यमानादित्यनेनानुवर्त्तमानत्वहेतुर्विवक्षितः । एकमेवाद्वितीयमित्यस्यार्थमाह "तथे"ति, अहङ्कारादिव्यवहारालम्बनमहमिति प्रथमोऽध्यास इति हि तेषां ग्रन्थः, आदि-शब्देन ज्ञेयमुच्यते ब्रह्मव्यतिरिक्तपरमार्थभूतकार्याभावस्तदनन्यत्व-शब्दार्थ इति भावः । दृष्टान्तस्य साध्यविकलतां शङ्कते न च वाच्यमित्यादिना, परिहरति "यत"इति, यथा ज्वालावत् क्षणिकमित्युक्ते ज्वालाभेदस्याप्रत्यक्षत्वेन न तत्र साध्यवैकल्यं तद्वदित्यर्थः । का पुनरित्यादि सदसद्विलक्षणत्वं नाम मिथ्यात्वे हेत्वन्तरमाह "किञ्चे"ति, कार्य्यस्य सदसद्विलक्षणत्वे व्य-

तिरेकिणं हेतुमाह "सत आत्मन" इति, सदसद्विलक्षणत्वं मिथ्यात्वेऽन्वयि-हेतुरिति दर्शयति "अनिर्वचनीयं चे"ति, सपक्षस्य शुक्तिरजतादेरनिर्वचनीयत्वं दर्शयति–

भू० तस्य चानिर्वचनीयत्वं प्रतीतिबाधाभ्यां सिद्धम् । किञ्च कार्य्यमुत्पादयत् मृदादिकारणद्रव्यं किमविकृतमेव कार्यमुत्पादयति? उत कञ्चन विशेषमापन्नं? न तावदविकृतमुत्पादयति सर्वदोत्पादकत्वप्रसङ्गान्नापि विशेषान्तरमापन्नं विशेषान्तरापत्तेरपि विशेषान्तरापत्तिपूर्वत्वेन भवितव्यं तस्या अपि तथेत्यनवस्थानात्, अविकृतमेव देशकालनिमित्तविशेषसम्बद्धं कार्य्यमुत्पादयतीति चेन्न देशादिविशेषसम्बन्धोऽपि ह्यविकृतस्य विशेषान्तरमापन्नस्य च पूर्ववन्न सम्भवति, न च वाच्यं मृत्सुवर्णदुग्धादिभ्यो घटरुचकदध्यादीनामुत्पत्तिर्दृश्यते शुक्तिकारजतादिवत् देशकालादिप्रतिपन्नोपाधौ बाधश्च न दृश्यते, अतः प्रतीतिशरणानां कारणात्कार्य्योत्पत्तिरवश्याऽऽश्रयणीयेति विकल्पासहत्वात्, किं हेमादिमात्रमेव स्वस्तिकादेरारम्भकम्? उत रुचकादिः?। अथ रुचकाद्याश्रयो हेमादिः? न तावद्धेमादिमारम्भकं हेमव्यतिरिक्तस्य कार्यस्याभावात्, स्वात्मानं प्रत्यात्मन आरम्भकत्वासम्भवाच्च, हेमव्यतिरिक्तं स्वस्तिकं दृश्यत इति चेत् न, हेमव्यतिरिक्तं तत, हेमप्रत्यभिज्ञानात्तदतिरिक्तवस्त्वन्तरानुपलब्धेश्च, बुद्धिशब्दान्तरादिभिर्वस्त्वन्तरत्वं साधितमिति चेन्नानिरूपितवस्त्वऽवलम्बनानां

बुद्धिशब्दान्तरादीनां शुक्तिकारज[1]तबुद्धिशब्दादिवत् भ्रान्तिमूलत्वेन वस्त्वन्तरसद्भावासाधकत्वात् ॥

टी० "तस्य चे"ति, व्यावर्तमानत्वहेतोरुपाधिशङ्कापरिहाराय कार्यस्य दुर्निरूपतामनुग्राहकतर्करूपेणाह 'किञ्चे"ति, सत्यं चेत् सुनिरूपं स्यादित्यर्थः, नापीति विशेषान्तरापत्तिः किं विकृतस्य ? उत न ? नोचेत्सर्वदा विशेषान्तरापत्तिप्रसङ्गः, विशेषान्तरापत्तिपूर्वकत्वे तस्यापि विशेषान्तरापत्तिपूर्वकत्वं तस्यापि तथेत्यनवस्थेत्यर्थः, अविकृतमेवेत्यादि विशेष-शब्दो देशकालनिमित्तैः प्रत्येकं सम्बध्यते, अविकृतस्य चेत् सर्वदा देशकालादिसमवधानं स्यात्, विकृतस्य चेदनवस्थेत्यर्थः । उक्ततर्कस्य प्रत्यक्षविरोधमाशङ्क्याह "न च वाच्यमि"ति, परिहरति "विकल्पासहत्वादि"ति, किं द्रव्यमात्रं कारणं ? मृताकारमात्रं ? मृताकारविशिष्टं द्रव्य ? मिति विकल्प्याह तेषु प्रथमे शिरो दूषयति न तावदित्यादिना, समवायिकारणांशविषयं प्रत्यभिज्ञानमित्याशङ्क्याह "तदतिरिक्ते"ति, तर्हि तत्र व्यक्तिद्वयमुपलभ्येत न तथोपलब्धिरित्यर्थः । द्वितीयं शिरो दूषयति -

मू० नापि रुचकादि स्वस्तिकादेरारम्भकं, स्वस्तिके हि रुचकं पट इव तन्तवो भवताऽपि नोपलभ्यन्ते, नापि रुचकाश्रयभूतं हेम, रुचकाश्रयाकारेण हेम्नः स्वस्तिकेऽनुपलब्धेः, अतो मृदादिकारणातिरिक्तस्य कार्यस्यासत्यत्वदर्शनाद्ब्रह्मव्यतिरिक्तं कृत्स्नं जगत्कार्य्यत्वेन मिथ्याभूतं, तदिदं ब्रह्मव्यतिरिक्तमिथ्यात्वसुखप्रतिपत्तये काल्पनिकमृदादिसत्यत्वमाश्रित्य कार्यस्यासत्यत्वं प्रतिपादितं, परमार्थतस्तु मृत्सुवर्णादिकारणमपि घटरुचकादिकार्य्यवन्मिथ्याभूतं ब्रह्मकार्य्यत्वाविशेषात्, "ऐतदात्म्यमिदं सर्वं" "तत्सत्यं"

१ शुक्तिकारजतशब्दबुद्ध्यादिवत् इति पा० ।

"नेह नानास्ति किञ्चन" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" "इन्द्रो मायाभिः पुरुरूप ईयत" इत्येवमादिभिः श्रुतिभिश्च ब्रह्मव्यतिरिक्तस्य मिथ्यात्वमवगम्यते, न चागमावगतार्थस्य प्रत्यक्षविरोधः शङ्कनीयः, यथोक्तप्रकारेण कार्यस्य सर्वस्य मिथ्यात्वावगमात्, प्रत्यक्षस्य सन्मात्रविषयत्वाच्च

टी० 'नापी'ति, कार्ये समवायिकारणानुवृत्त्या तदुपलब्धिः परैरभ्युपगम्यते, तत्र पटे तन्तव इव स्वस्तिके रुचकमुपलभ्येतेत्यर्थः । तृतीयं शिरो दूषयति "नापी"ति, रुचकाकारविशिष्टं कारणं चेत् स्वस्तिके रुचकाकारविशिष्टहेमोपलम्भप्रसङ्ग इत्यर्थः । एवमत्र केवलप्रमाणात्तर्कानुगृहीतं प्रमाणं प्रबलमिति प्रत्यक्षविरोधपरिहार इत्युक्तं भवति, अत इति कारणातिरिक्तवस्त्वनुपलब्ध्या न प्रत्यक्षबाध इत्यर्थः, तत एव न सोपाधिकत्वं पक्षेऽपि साधित्वेनोपाधितत्वाभावादिति भावः । ब्रह्मव्यतिरिक्तस्य मिथ्यात्वे मृत्तिकादीनां सत्यत्वं व्याहतमित्यत्राह "तदिदमि"ति, न मृत्तिकासत्यत्वे तात्पर्यमपि तु ब्रह्मव्यतिरिक्तमिथ्यात्वे एव तात्पर्यमित्यर्थः न केवलं ब्रह्मकार्यत्वेन जगतो मिथ्यात्वं सिध्यति । कण्ठोक्तमपीत्याह "ऐतदात्म्यमि"ति, ऐतदात्म्यमिदं सर्वमिति बाधार्थे सामानाधिकरण्यमिति भावः । आदित्यो यूप इत्यादिषु प्रत्यक्षेण बाधमभिप्रेत्य इहापि तमाशङ्क्याह "न चागमावगते"ति, परिहरति "यथोक्ते"ति, आदित्यो यूप इत्यादिवाक्यमन्यपरम् अत्र तूपक्रमोपसंहारादिलिङ्गैस्तात्पर्यमस्त्येवेति न प्रत्यक्षेण बाध इत्यभिप्रायेणाह "यथोक्ते"ति, अविरोधमाह "प्रत्यक्षस्ये"ति, । यद्वा किं शब्दतः प्रतीत्यभावात् प्रत्यक्षविरोधाद्वाऽन्यपरत्वं शङ्क्यत इत्यभिप्रेत्य शब्दतः प्रतिपत्त्यभावं परिहरति "यथोक्ते"ति, प्रत्यक्षविरोधं परिहरति "प्रत्यक्षस्ये"ति, विरोधमभ्युपगम्याह—

भू० विरोधे सत्यप्यसम्भावितदोषस्य चरमभाविनः स्वरूपस-ङ्गावादौ प्रत्यक्षाद्यपेक्षत्वेऽपि प्रमितौ निराकाङ्क्षस्य निरवकाशस्य शास्त्रस्य बलीयस्त्वादतः कारणभूताद्ब्रह्मणोऽन्यत्सर्वं मिथ्या, न च प्रपञ्चस्य मिथ्यात्वेन जीवमिथ्यात्वमाशङ्कनीयं, ब्रह्मण एव जीवभावाद्ब्रह्मैव हि सर्वशरीरेषु जीवभावमनुभवति, "अनेन जीवेनात्मनाऽनुप्रविश्य" "एको देवः सर्वभूतेषु गूढः" "एको देवो बहुधा सन्निविष्टः "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते" "नान्योऽतोस्ति द्रष्टेत्येवमादिभ्यः । नन्वेकमेव ब्रह्म सर्वशरीरेषु जीवभावमनुभवतीति चेत् पादे मे वेदना शिरसि सुखमितिवत्सर्वशरीरेषु सुखदुःखप्रतिसन्धानं स्यात जीवेश्वरबद्धमुक्तशिष्याचार्य्यज्ञत्वाज्ञत्वादिव्यवस्था च न स्यात् । अत्र केचिदद्वितीयत्वं ब्रह्मणोऽभ्युपयन्त एवं समादधते एकस्यैव ब्रह्मणः प्रतिविम्बभूतानां जीवानां सुखित्वदुःखित्वादय एकस्यैव मुखस्य प्रतिविम्बानां मणिकृपाणदर्पणादिषूपलभ्यमानानामल्पत्वमहत्त्वमलिनत्वविमलत्वादिवत्तत्तदुपाधिवशाद्व्यवस्थाप्यन्ते, ननु अनेन जीवेनात्मनाऽनुप्रविश्येत्यादिश्रुतेर्न जीवा ब्रह्मणो भिद्यन्ते इत्युक्तं, सत्यं, परमार्थतः काल्पनिकं तु भेदमाश्रित्येयं व्यवस्थोच्यते कस्य पुनः कल्पना? न तावद्ब्रह्मणः तस्य परिशुद्धज्ञानात्मनः कल्पनाशून्यत्वात् । नापि जीवानाम्

इतरेतराश्रयत्वप्रसङ्गात् कल्पनाधीनो हि जीवभावो जीवाश्रया च कल्पनेति,

टी० "विरोधे सत्यपी"ति, भेदवासनामूलत्वं—सम्भावितदोषत्वम्, अपच्छेदन्यायाभिप्रायेणाह "वरमभाविन"इति, स्वरूपेति आदि-शब्देन व्युत्पत्तिरभिप्रेता, प्रमितौ निराकाङ्क्षस्येति प्रमितौ—प्रमितिहेतुत्वे अर्थनिश्चायकत्वइत्यर्थः शास्त्रस्य शब्दस्वरूपग्रहणव्युत्पत्त्यादिषु प्रत्यक्षाद्यपेक्षाऽस्ति तथाऽपि शास्त्रज्ञानं स्मृतिज्ञानवत् स्वार्थविषयज्ञानान्तरानुभूतत्वेन न स्वविषयं दर्शयति, अपि तु अनन्यगोचरमेव दर्शयतीत्यर्थः । नन्वित्यादि पादे मे वेदना इत्यादिना जीवेश्वरेत्यादिना च लौकिकवैदिकव्यवस्थानुपपत्तिरुक्ता, एतद्व्यवस्थासिद्ध्यर्थं जीवाज्ञानवादपक्षमुपन्यस्यति "अत्र केचिदि"ति, नन्वित्यादि सत्यं, परमार्थतः—परमार्थतो न भिद्यन्ते इति सत्यं, वयं त्वौपाधिकभेदमाश्रित्य ब्रूम इत्यर्थः, कस्येत्यादि अत्रोक्तमितरेतराश्रयं परिहरति—

भा० नैतदेवम्, अविद्याजीवभावयोर्बीजाङ्कुरन्यायेनाऽनादित्वात् । किञ्च प्रासादनिगरणादिवदनुपपन्नतैकवेषायामवस्तुभूतायामविद्यायां नेतरेतराश्रयादयो वस्तुदोषा अनवक्लृप्तिमावहन्ति वस्तुतो ब्रह्माव्यतिरिक्तानां जीवानां स्वतोविशुद्धत्वेऽपि कृपाणादिगतमुखप्रतिबिम्बश्यामतादिवदौपाधिकाशुद्धिसम्भवादविद्याश्रयत्वोपपत्तेः कात्स्न्येनि कल्पोपपत्तिः, प्रतिबिम्बगतश्यामतादिवज्जीवगताशुद्धिरपि भ्रान्तिरेव, अन्यथाऽनिर्मोक्षत्वप्रसङ्गात्, जीवानां भ्रमस्य प्रवाहानादित्वान्न तद्धेतुरन्वेषणीय इति, तदेतदविदिताद्वैतयाथात्म्यानां भेदवादश्रद्धालुजनसबहुमानावलोकनलिप्साविजृम्भितं, तथा हि जीवस्याकल्पितस्वा-

भाविकरूपेणाविद्याश्रयत्वे ब्रह्मण एवाविद्याश्रयत्वमुक्तं स्यात्, तदतिरिक्तेन तस्मिन् कल्पितेनाकारेणाविद्याश्रयत्वे जडस्याविद्याश्रयत्वमुक्तं स्यात् ।

टी० "नैतदेवमि"ति, मुखान्तरेणापि परिहरति "किञ्चे"ति, अवस्तुभूतायामपरमार्थभूतायाम्, अनवक्लृप्तिरसिद्धिः, यथा ब्रह्मणः स्वतः-शुद्धत्वेन नाविद्याश्रयत्वं, तथा ब्रह्माव्यतिरिक्तस्यापि जीवस्य स्वतःशुद्धत्वेनाविद्याश्रयत्वानुपपत्त्या तत्कार्यजन्मजरामरणादिभ्रमानुपपत्तिरित्यत्राह "वस्तुतो ब्रह्मे"ति, यथौपाधिकाशुद्धिर्वस्तुतोमुखाव्यतिरिक्तत्वेऽपि मुखे[1] संभवति, तथा वस्तुतो ब्रह्माव्यतिरिक्तत्वेन स्वतः शुद्धत्वे सत्यप्यौपाधिकाशुद्धिसंभवादविद्याश्रयत्वेन काल्पनिकत्वमित्यर्थः । अशुद्धिर्नाम-स्वतःशुद्धत्वप्रतियोग्याकारः अविद्यासम्बन्धयोग्यतेत्यर्थः काल्पनिकत्वोपपत्तिः—जन्मजरामरणादेः काल्पनिकत्वोपपत्तिरित्यर्थः । औपाधिकाशुद्धेरपि ज्ञानानिवर्त्यत्वं स्यादित्यत्राह "प्रतिविम्बगते"ति, अशुद्धिविषयभ्रमेणोत्तरोत्तराविद्याश्रयत्वमविद्याश्रयत्वेनोत्तरोत्तराशुद्धिविषयभ्रम इत्यन्योन्याश्रयत्वमाशङ्क्याह "जीवानां भ्रमस्ये"ति, जीवाज्ञानपक्षसमाप्तिद्योतनार्थमिति—करणम् । दूषयति "तदेतदि"ति, अविदिताद्वैतयाथात्म्यानामद्वैतानिपुणानां, श्रद्धालु—शब्देन भेदवादेऽप्यकौशलं विवक्षितम्, उभयतोऽपि भ्रष्टैरेवमुक्तमिति भावः । किमकल्पितस्वाभाविकरूपेणाविद्याश्रयत्वमुत कल्पिताकारेण?। अथ कल्पिताकारविशिष्टरूपेणे?ति विकल्पत्रयमभिप्रेत्य प्रथमं शिरो दूषयति "जीवस्ये"ति, द्वितीयं दूषयति "तदतिरिक्तेने"ति, कथं जडस्याविद्याश्रयत्वमुक्तं स्याज्जीवो ह्यविद्याश्रय इत्यत्राह—

मू० न खल्वद्वैतवादिनस्तदुभयव्यतिरिक्तमाकारमभ्युपगच्छन्ति, कल्पिताकारविशिष्टेन स्वरूपेणैवाविद्याश्रयत्वमिति चेत्तन्न स्वरूपस्याखण्डैकरसस्याविद्यामन्तरेण विशि-

१ मुखप्रतिविम्बे इति पा० ।

ष्टरूपत्वासिद्धेः, अविद्याश्रयाकार एव हि निरूप्यते। किञ्च बन्धमोक्षादिव्यवस्थासिद्ध्यर्थं हि जीवाज्ञान[1]स्य समाश्रयणं सा तु व्यवस्था जीवाज्ञानपक्षेऽपि न सिध्यति, अविद्याविनाश एव हि मोक्षः, तत्रैकस्मिन्, मुक्ते अविद्याविनाशादितरेऽपि मुच्येरन्, अन्यस्याऽमुक्तत्वादविद्या तिष्ठतीति चेत् तर्ह्येकस्याप्यमुक्तिः स्यात् अविद्याया अविनष्टत्वात्, प्रतिजीवमविद्याभेदः कल्प्यते तत्र यस्या ऽविद्या नष्टा स मोक्ष्यते, यस्य त्वनष्टा स भत्स्यत इति चेन्न प्रतिजीवमिति जीवभेदमाश्रित्य ब्रूषे स जीवभेदः किं स्वाभाविकः? उताविद्याकल्पितः? न तावत्स्वाभाविकः, अनभ्युपगमात्, भेदसिद्ध्यर्थस्यास्य चाविद्याकल्पनस्य व्यर्थत्वात्। अथाविद्याकल्पितः, तत्रेयं जीवभेदकल्पिकाऽविद्या किं ब्रह्मणः? उत जीवानां? ब्रह्मण इति चेदागतोऽसि मदीयं मार्गम्। अथ जीवानां किमस्या जीवभेदक्लृप्तिसिद्ध्यर्थतां विस्मरसि

टी० "न खल्वि"ति, ब्रह्मचिद्रूपं कल्पितं तु जडं तदुभयातिरिक्तानभ्युपगमात् कल्पिताकारेण अविद्याश्रयत्वे जडस्यैवाविद्याश्रयत्वमुक्तं स्यादित्यर्थः। तृतीयं शिरः शङ्कते "कल्पिते"ति, दूषयति "तत्रे"ति, ततः किमित्यत्राह "अविद्याश्रयाकार"इति, अविद्याश्रयत्वे सति विशिष्टत्वं विशिष्टाकार एवाविद्याश्रय इत्यात्माश्रयणमित्यर्थः। किञ्चेत्यादि, अविद्या किमेका? उत बह्वी? ति विकल्पमभिप्रेत्य एकत्वपक्षे दूषणमाह "तत्रैकस्मिन्नि"ति, तत्रापि किमविद्या नश्यति? उत न नश्यती? ति विकल्पमभिप्रेत्य नाशपक्षे दूषणमुक्तं "तत्रे"ति, । अविनाशपक्षं दूषयति "अन्य-

[1] जीवाज्ञानवादाश्रयणमिति ।

स्ये''ति, । अथाविद्याबहुत्वपक्षमनुवदति 'प्रतिजीवम्''इति, मन्स्यते बद्धो भविष्यतीत्यर्थः । दूषयति "तच्चे''ति, अत्रापि विकल्पयति "स जीवभेद'' इति, अनभ्युपगमात्—अद्वैतहानिप्रसङ्गेनानभ्युपगमात् । द्वितीयं शिरोविकल्पयति "किमि''ति, प्रथमपक्षस्योत्तरमाह "ब्रह्मण इति चेदि''ति, द्वितीयं शिरो दूषयति "अथे''ति, किमस्या जीवभेदक्लृप्तिसिद्ध्यर्थतां विस्मरसीति जीवभेदकल्पकाविद्या जीवकल्पनात् प्रागेव न जीवानाश्रयितुं क्षमा जीवासिद्धेरित्यर्थः । या जीवभेदकल्पिका अविद्यास्ता एव जीवाश्रया बद्धमुक्तादिव्यवस्थाहेतव इति पक्षमनूद्य दूषयति—

सू० अथ प्रतिजीवं बद्धमुक्तव्यवस्थासिद्ध्यर्थं या अविद्याः कल्प्यन्ते ताभिरेव जीवभेदोऽपीति मनुषे जीवभेदसिद्धा तास्सिद्ध्यन्ति तासु सिद्धासु जीवभेदसिद्धिरितीतरेतरतराश्रयत्वं, न चात्र बीजाङ्कुरन्यायः सिद्ध्यति बीजाङ्कुरेषु ह्यन्यदन्यद्बीजमन्यस्यान्यस्याङ्कुरस्योत्पादकम्, इह तु याभिरविद्याभिर्ये जीवाः कल्प्यन्ते तानेवाश्रित्य तासां सिद्धिरित्यश[3]क्नीयता । अथ बीजाङ्कुरन्यायेन पूर्वपूर्वजीवाश्रयाभिरविद्याभिरुत्तरोत्तरजीवकल्पनां मन्यसे तथा सति जीवानां भङ्गुरत्वमकृताभ्यागमकृतप्रहाणादिप्रसङ्गश्च, अत एव ब्रह्मणः पूर्वपूर्वजीवाश्रयाभिरविद्याभिरुत्तरोत्तरजीवभावभावकल्पनमित्यपि निरस्तम्, अविद्याप्रवाहेऽभ्युपगम्यमाने तत्तत्कल्पितजीवभावस्यापि तद्वत्प्रवाहानादिता स्यात् न ध्रुवरूपता, आमोक्षं च जीवभावस्य ध्रुवत्वमिष्टं न सिद्ध्येत् । यच्चोक्तम् अविद्याया अवस्तुरूपत्वेनानुपपन्नैकवेषायां नेतरेतराश्रयत्वादयोव-

३ अशक्नीयता इति तु युक्तम्.।

स्तुदोषा अनवक्लृप्तिमावहन्तीति, तथा सति मुक्तान् परं च ब्रह्माश्रयेदविद्या

टी० "अथ प्रतिजीवमि"ति, बीजाङ्कुरन्यायेन परिहारस्यानुपपत्तिमाह "न चे"ति, बीजाङ्कुरेषूत्पादकबीजस्योत्पाद्याङ्कुरापेक्षा नास्ति उत्पादकाङ्कुरमन्यत् उत्पाद्यं चान्यत्, अत्र तु जीवभेदकल्पकाविद्यायाः कल्पनीयजीवाश्रयापेक्षाऽस्ति कल्पकाविद्याश्रयो जीवः स एव कल्प्यश्चेति वैषम्यम्, अशक्नीयता—साधयितुमशक्यतेत्यर्थः, उत्पाद्योत्पादकाङ्कुरव्यक्तिभेदवत् कल्पकाविद्याश्रयकल्प्यजीवव्यक्तिभेदार्थे प्रवाहानादित्वाभ्युपगमे दूषणमाह "अपी"ति, अकृताभ्यागमकृतनाशः, श्रुत्यर्थापत्तिः, आदि–शब्देन जीवस्वरूपनित्यत्वादिश्रुतिविरोधो विवक्षितः । एवं जीवाख्यधर्मिणः प्रवाहानादित्वकल्पने दूषणमुक्तं, जीवत्वधर्मतत्कल्पकाविद्ययोः प्रवाहानादित्वेऽप्युक्तं दूषणमतिदिशति "अत एवे"ति, पूर्वपूर्वजीवाश्रयाविद्ययोत्तरोत्तरजीवभावकल्पनं तत्तदाश्रयाविद्यया तदुत्तरोत्तरजीवभावकल्पनमित्यर्थः । अस्य पक्षस्य निरस्ततां विवृणोति "अविद्याप्रवाह"इति, धर्मिधर्मकल्पनपक्षयोरुभयोरपि तुल्यं दूषणमाह "आमोक्षाच्चे"ति, जीवस्य–जीवभावविशिष्टस्येत्यर्थः । अविद्याया दुर्घटत्वेन परिहारं दूषयति "यच्चोक्तमि"ति, ।

सू० शुद्धविद्यास्वरूपत्वादशुद्धिरूपा न तत्र प्रसजतीति चेत्किमुपपत्त्यनुवर्तिन्यऽविद्या ? एवं तर्ह्युक्ताभिरुपपत्तिभिर्जीवानपि नाश्रयेत् । किञ्च जीवाश्रयाया अविद्यायास्तत्त्वज्ञानोदयान्नाशे सति जीवो नश्येद्वा ? न वा ? यदि नश्येत्स्वरूपोच्छित्तिलक्षणो मोक्षः स्यात्, नो चेदविद्यानाशेऽप्यनिर्मोक्षः, ब्रह्मस्वरूपव्यतिरिक्तजीवत्वावस्थानात् । यच्चोक्तं मणिकृपाणदर्पणादिषूपलभ्यमानमुखमलिनत्व-

विमलत्वादिवच्छुद्धशुद्ध्यादिव्यवस्थोपपत्तिरिति तच्चेदं, विमर्शनीयम् अल्पत्वमलिनत्वादय औपाधिकाः दोषाः कदा नश्येयुरिति कृपाणाद्युपाध्यपगम इति चेत् किं तदल्पत्वाद्याश्रयः प्रति[१]विम्बः तिष्ठति न वा? तिष्ठतीति चेत् तत्स्थानीयस्य जीवस्यापि स्थितत्वादनिर्मोक्षप्रसङ्गः नश्यति चेत् तद्वदेव जीवनाशात्स्वरूपोच्छित्तिलक्षणो मोक्षः स्यात्। किञ्च यस्य ह्यपुरुषार्थरूपदोषप्रतिभासः तस्य तदुच्छेदः पुरुषार्थः, तच्च किमौपाधिकदोषप्रतिभासो विम्बस्थानीयस्य ब्रह्मणः? उत प्रतिविम्बस्थानीयस्य जीवस्य? उतान्यस्य कस्यचित्,? आद्ययोः कल्पयोर्दृष्टान्तोऽयं न सङ्गच्छते मुखस्य मुखप्रतिविम्बस्य चाल्पत्वादिदोषप्रतिभासशून्यत्वात्, न हि मुखं तत्प्रतिविम्बं वा चेतयते ब्रह्मणोदोषप्रतिभासे ब्रह्मणो ऽविद्याश्रयत्वप्रसङ्गश्च

टी० शुद्धविद्यास्वरूपत्वात्–शुद्धज्ञप्तिरूपत्वात्, उक्ताभिरुपपत्तिभिरन्योन्याश्रयादिभिः। मोक्षानुपपत्त्या दूषयति "किं चे"ति, नाचेदिति अविद्याकार्यस्य जीवत्वस्यावस्थानादनिर्मोक्ष इत्यर्थः। दार्ष्टान्तिकपर्यालोचनया दूषणमुक्तम्। अथ दृष्टान्तालोचनया दूषयति "यच्चोक्त''मिति, अपुरुषार्थप्रतिभासानुपपत्तिमुखेन दूषयिष्यन् दोषप्रतिभासस्यावश्यम्भावितामाह "किञ्च यस्य ही''ति, अपुरुषार्थदोषप्रतिभासस्य निरसनीयत्वात्तन्निरासाय हि वेदान्तारम्भः विम्बप्रतिविम्बस्थानीययोर्जीवब्रह्मणोर्दोषप्रतिभासायोगात्तन्निरासार्थो वेदान्तोऽनारभ्य इति दूषणं दर्शयितुं यस्य हीत्याद्युक्तं, दृष्टान्ते मुखतत्प्रतिविम्बतद्व्यतिरिक्तचेतनसद्भावात्तदभिप्रायेण विकल्पयति "उतान्यस्य कस्यचिदि''ति, न हि मुखं तत्प्रतिविम्बं वा चेत-

१ प्रतिविम्बमिति पा०।

यत इति रूपवदचेतनविशेषस्यैव प्रतिबिम्बं दृष्टं, तस्माद् ब्रह्मजीवयोर्बिम्ब-प्रतिबिम्बभावाभ्युपगमे तयोरचेतनत्वमापततीति भावः । ब्रह्मणो दोष-प्रतिभासपक्षेऽधिकं दूषणमाह "ब्रह्मण" इति, अन्यस्येति पक्षं दूषयति—

सू० तृतीयोऽपि कल्पो न कल्पते, जीवब्रह्मव्यतिरिक्तस्य द्रष्टुरभावात् । किञ्चाविद्याकल्प्यस्य जीवस्य कल्पकः क इति निरूपणीयं न तावदविद्या अचेतनत्वात्, नापि जीव आत्माश्रयदोषप्रसङ्गात्, शुक्तिकारजतादिवदविद्याकल्प्यत्वाच्च जीवभावस्य, ब्रह्मैव कल्पकमिति चेत् ब्रह्माऽज्ञानमेवायातम् । किञ्च ब्रह्माज्ञानानभ्युपगमे किं ब्रह्म जीवान्पश्यति ? न वा ? न पश्यति चेत् ईक्षापूर्विका विचित्रसृष्टिर्नामरूपव्याकरणमित्यादि ब्रह्मणो न स्यात् । अथ पश्यत्यखण्डैकरसं ब्रह्म नाविद्यामन्तरेण जीवान् पश्यतीति ब्रह्माज्ञानप्रसङ्गः, अत एव मायाविद्याप्रविभागवादोऽपि निरस्तः, अज्ञानमन्तरेण हि मायिनोऽपि ब्रह्मणो जीवदर्शित्वं न स्यात् । न च मायावी परान् दृष्ट्वा मोहयितुमलं, न च माया मायाविनोदर्शनसाधनं दृष्टेषु परेषु तन्मोहनसाधनमात्रत्वात्तस्याः, । अथ ब्रह्मणो माया तस्य जीवदर्शित्वं कुर्वती जीवमोहनहेतुरितिमन्यसे

टी० "तृतीयोऽपी"ति, पूर्वमविद्याश्रयाऽनुपपत्तिरुक्ता, इदानीमविद्याकार्यभ्रमाश्रयो निरूप्यते "किं चे"ति, कः कल्पकः को भ्रमाश्रय इत्यर्थः, नापि जीव इति कल्पकत्वात्तत्सिद्धिः कल्प्यत्वादसिद्धिश्चेति स्वसिद्धिः स्वापेक्षा, जीवविषयभ्रमाश्रये सिद्धे हि जीवक्लृप्तिः, जीवसिद्धिः स्वविषयभ्रमाश्रयभूतेन स्वेनैव सापेक्षत्वादात्माश्रयत्वमित्यर्थः । अनुपपत्त्यन्त-

रमाह "शुक्तिके"ति, कल्प्य[1]कत्वाच्च भ्रमाश्रयत्वमनुपपन्नं, न हि दोषकल्प्यं रजतमर्थान्तरविषयभ्रमाश्रय इत्यर्थः । किं चेत्यादि अथ पश्यतीति अपरमार्थजीवप्रतीतिरविद्यया विना न सम्भवतीत्यर्थः, अत एवेच्छापूर्वकसृष्ट्याद्यर्थं ब्रह्मणोऽपरमार्थजीवदर्शनार्थं चाविद्यान्वयाऽभ्युपगमादेवेत्यर्थः माया परभ्रमहेतुरविद्या स्वभ्रमहेतुरिति हि तन्मतं, मायिनं तु महेश्वरमिति श्रुतिरेतद्विभागहेतुरपरमार्थजीवदर्शनमज्ञानैव सम्भवतीति एतदेवोपपादयति अज्ञानमित्यादिना, किमविद्यया विना जीवदर्शित्व? मुत जीवदर्शनेन विना तन्मोहन? मिति पक्षयोः प्रथमं दूषितम् "अज्ञानमिति, अनन्तरं शिरो दूषयति "न चे"ति, मायैव जीवदर्शनहेतुरित्यत्राह "नापी"ति, न हि परमोहनहेतुरेव माया मोहयितुर्मोहनीयदर्शनहेतुः, अस्यास्तु मायाया अयं विशेष इत्याशङ्कते "अथे"ति, प्रतिवदति—

सू० तर्हि परिशुद्धस्याखण्डैकरसस्वप्रकाशस्य ब्रह्मणः परदर्शनं कुर्वती माया मायाऽपरपर्य्यायाऽविद्यैव स्यात् । अथ मतं, विपरीतदर्शनहेतुरविद्या, माया तु मिथ्याभूतं ब्रह्मव्यतिरिक्तं मिथ्यात्वेनैव दर्शयन्ती न ब्रह्मणो विपरीतदर्शनहेतुः अतस्तस्या नाविद्यात्वमिति नैवं, चन्द्रैकत्वे ज्ञायमाने द्विचन्द्रज्ञानहेतोरप्यविद्यात्वात् । यदि च ब्रह्म मिथ्यात्वेनैव स्वव्यतिरिक्तं जानाति न तर्हि तन्मोचयति । न ह्यनुन्मत्तो मिथ्यात्वेन ज्ञातान् मोचयितुमीहते । अथापुरुषार्थोऽपरमार्थदर्शनहेतुरविद्या, माया तु ब्रह्मणोनाऽपुरुषार्थदर्शनहेतुः, अतोऽस्या नाविद्यात्वमिति मतं, तन्न द्विचन्द्रज्ञानस्य दुःखहेतुत्वाभावेनापुरुषार्थत्वाभावेऽपि तद्धेतुरविद्यैव, तन्निरसने च प्रयस्यन्ती, यदि च नापुरुषा-

[1] कल्प्यत्वाच्चेति पा० ।

र्थदर्शनकरी माया तर्ह्यनुच्छेद्यतया नित्या ब्रह्मस्वरूपा- नुबन्धिनी स्यात्, अस्तु को दोष इति चेत् द्वैतदर्शनमेव दोषः, यत्र हि द्वैतमिव भवति यत्र त्वस्य सर्वमात्मैवाऽभूत्तत्केन कं पश्येदित्याद्यऽद्वैतश्रुतयः प्रकुप्येयुः, परमार्थविषया अद्वैतश्रुतयः मायायास्त्वपरमार्थत्वादविरोध इति चेत्, अपरिच्छिन्नानन्दैकस्वरूपस्य ब्रह्मणोऽपरमार्थभूतमायादर्शनं तद्वत्ता वा ऽविद्यामन्तरेण नोपपद्यते । किञ्चापरमार्थभूतया नित्यया मायया किं प्रयोजनं ब्रह्मणो ? जीवमोहनमिति चेत् अपुरुषार्थेन मोहनेन किं प्रयोजनं ? क्रीडेति चेत् अपरिच्छिन्नानन्दस्य किं क्रीडया, परिपूर्णभोगानामेव क्रीडा पुरुषार्थत्वेन लोके दृष्टेति चेत नैवमिहोपपद्यते, न ह्यपरमार्थभूतैः क्रीडोपकरणैरपरमार्थतया प्रतिभासमानैर्निष्पन्नयाऽपरमार्थभूतया क्रीडयाऽपरमार्थभूतेन च तत्प्रतिभासेन नुन्मत्तानां क्रीडारसो निष्पद्यते ॥

टी० "तर्ही"ति, नामविवाद आवयोरित्यर्थः । शङ्कते "अथे"ति, परिहरति "नैव"मिति, न केवलं सत्यत्वेन दर्शनहेतुरेव दोषः, अपरमार्थप्रतिभासमात्रहेतुर्दोष इत्यभिप्रायेणाह "चन्द्रैकत्व"इति, अपुरुषार्थदर्शनहेतुत्वतदभावरूपं वैषम्यं शङ्कते "अथे"ति, परिहरति "तन्ने"ति, अपरिच्छिन्नेति स्वरूपस्यैवापरिच्छिन्नानन्दत्वादिच्छया मायादर्शनमनुपपन्नं तस्याश्चापरमार्थत्वादविद्याकृतमेव तद्दर्शनमित्यर्थः, तद्वत्ता—तत्सम्बन्धः, किञ्चेति अपुरुषार्थत्वाभावेन निरसनीयत्वाभावाभिप्रायेणाह "नित्यये"ति, आश्रयविभागानुपपत्त्या निरसनीयत्वाभावानुपपत्त्या च मायाविद्याविभागानुपपत्तिमाह—

सू० मायाश्रयतयाऽभिमतब्रह्मव्यतिरेकेणाविद्याश्रयस्य जीवस्य कल्पनाऽसम्भवश्च पूर्ववदेव द्रष्टव्यः, अतो ब्रह्मैवानाद्यविद्याशबलं स्वगतनानात्वं पश्यतीत्यद्वितीयत्वं ब्रह्मणोऽभ्युपयद्भिरभ्युपेतव्यम्। यत्तु बन्धमोक्षव्यवस्था नोपपद्यत इति न तद्ब्रह्माज्ञानवादिनश्चोद्यम् एकस्यैव ब्रह्मणोऽज्ञस्य स्वाज्ञाननिवृत्त्या मोक्ष्यमाणत्वात् बद्धमुक्तादिव्यवस्थाया एवाभावात्, व्यवह्रियमाणायाश्च बद्धमुक्तशिष्याचार्य्यादिव्यवस्थायाः काल्पनिकत्वात्स्वप्नदर्शिन इव चैकस्यैवाविद्यया सर्वकल्पनोपपत्तेः, स्वप्नदृशा ह्येकेन दृष्टाः शिष्याचार्य्यादयः तदविद्याकल्पिता एव, अत एव बह्वविद्याकल्पनमपि न युक्तिमत् पारमार्थिकी बन्धमोक्षव्यवस्था स्वपरव्यवस्था च जीवाज्ञानवादिनाऽपि नाभ्युपेयते। अपारमार्थिकी त्वेकस्यैवाविद्ययोपपद्यते, प्रयोगश्च—बन्धमोक्षव्यवस्थाः स्वपरव्यवस्थाश्च स्वाविद्याकल्पिता अपारमार्थिकत्वात्स्वप्नदृष्टव्यवस्थावदिति, शरीरान्तराण्यपि मयैवात्मवन्ति शरीरत्वादेतच्छरीरवत्, शरीरान्तराण्यपि मदविद्याकल्पितानि शरीरत्वात् कार्य्यत्वात् जडत्वात्कल्पितत्वाद्वा एतच्छरीरवत्, विवादाध्यासितं चेतनजातमहमेव चेतनत्वात् यदनहं तदचेतनं दृष्टं यथा घटः,

टी० 'मायाश्रयतये'ति, पूर्ववदेवेति अन्योन्याश्रयादिभिर्दूषणैरित्यर्थः, मायाविद्याविभागानुपपत्त्या ब्रह्मण एवाविद्याश्रयत्वमुपसंहरति "अत"इति, बन्धमोक्षादिव्यवस्थानुपपत्तिं जीवाज्ञानकल्पनहेतुभूतां पूर्वा-

क्तामनूद्य परिहरति "यत्त्वि"ति, नेदं चोद्यमनिष्टमित्यर्थः, तर्हि बद्ध-मुक्तादिव्यवहारः कथमित्यत्राह "व्यवह्रियमाणायाश्चे"ति, वक्ष्यमाणा-नुमानगर्भमाह "काल्पनिकत्वा"दिति, स्वप्नव्यवस्थाः काल्पनिकत्वा-दयैकाविद्ययोपपद्यन्ते तथा सर्वासां व्यवस्थानां काल्पनिकत्वादेका-विद्ययैव तत्कल्पनोपपत्तिरित्यर्थः, पूर्वकल्पनोपपत्ते रिति अन्यथाऽनुपपन्नं हि कल्पकम् अन्यथोपपन्नत्वान्नाविद्याभेदक्लृप्तिर्न्याय्येत्यर्थः । दृष्टान्तं शिक्षयति "स्वप्नदृशा ही"ति, अत एवाश्रयैकत्वेऽपि सर्वव्यवस्थोपपत्ति-र्येन हेतुना सिद्धा तेनैव काल्पनिकत्वेन हेतुना अविद्याबहुत्वकल्पनमपि न युक्तमित्यर्थः, परमार्थकार्याणां हि बहुहेत्वपेक्षा, अपरमार्थानां त्वेकैनै-वालमित्यभिप्रायेणाह "पारमार्थिकी"ति, । ततः किमित्यत्राह "अपा-रमार्थिकी"त्विति, प्रयोगश्चेति जीवाज्ञानवादिनं प्रति प्रथमतृतीये अनु-माने उच्येते तं च-भेदवादिनं च प्रति प्रथमद्वितीयहेतुः प्रयुज्यते, तृतीयः प्रत्येकनिरपेक्षहेतुचतुष्टयगर्भः, तुरीयं व्यतिरेक्यनुमानं, व्यवस्थानुपप-त्तिपरिहारमुपसंहरति—

श्रू० अतस्स्वपरविभागोबद्धमुक्तशिष्याचार्यादिव्यवस्थाश्चैक-स्याविद्याकल्पिताः, द्वैतवादिनाऽपि बद्धमुक्तव्यवस्था दुरु-पपादा अतीतानां कल्पानामानन्त्यात् एकैकस्मिन्कल्पे एकैकमुक्तावपि सर्वेषां मोक्षसम्भवादमुक्तानुपपत्तेः, अन-न्तत्वादात्मनाममुक्ताश्च सन्तीति चेत् किमिदमनन्त-त्वम् असङ्ख्येयत्वमिति चेन्न भूयस्त्वादल्पज्ञैरसङ्ख्येयत्वे-ऽपीश्वरस्य सर्वज्ञस्य सङ्ख्येया एव तस्याप्यशक्यत्वे सर्व-ज्ञत्वं न स्यात्, आत्मनां निस्सङ्ख्येयत्वादीश्वरस्याविद्य-मानसङ्ख्यावेदनाभावो नासार्वज्ञ्यमावहतीति चेन्न भिन्नत्वे सङ्ख्याविधुरत्वं नोपपद्यते आत्मानः सङ्ख्यावन्तोभिन्न-त्वात् माषसर्षपघटपटादिवत् भिन्नत्वे चात्मनां घटा-

दिवत् जडत्वमनात्मत्वं क्षयित्वं च प्रसज्यते ब्रह्मणश्चा-नन्तत्वं न स्यात्, अनन्तत्वं नाम परिच्छेदरहितत्वं, भेद-वादे च वस्त्वन्तराद्विलक्षणत्वेन ब्रह्मणो वस्तुतः परिच्छे-दरहितत्वं न शक्यते वक्तुं वस्त्वन्तरभाव एव हि वस्तुतः परिच्छेदः वस्तुतः परिच्छिन्नस्य देशतः कालतश्चापरि-च्छिन्नत्वं न युज्यते वस्त्वन्तराद्विलक्षणत्वेन वस्तुतः परि-च्छिन्ना एव हि घटादयो देशतः कालतश्च परिच्छिन्ना दृष्टा तथा सर्वे चेतनाः, ब्रह्म च वस्तुतः परिच्छिन्नादेश-कालाभ्यामपि परिच्छिद्यन्ते

टी० "अत"इति, काणादपक्षेऽपि स्वपक्षोक्तं दोषमापादयति "द्वैतवादिनाऽपीत्यादि,असङ्ख्येयत्वमिति चेदिति देशकालाद्यपरिच्छेदस्या-नन्त-शब्देन विवक्षितत्वव्यावृत्त्यर्थमसङ्ख्येयत्वमित्युक्तं भिन्नत्वेन सङ्ख्या-वत्त्वं साधयति "आत्मान"इति, माषसर्षपघटपटादिवदिति सङ्ख्यावत्ता-रतम्येऽपि संख्यावत्त्वमविशिष्टमिति भावः । भिन्नत्वे दूषणान्तरं चाह "भिन्नत्वे चे"ति, अत्र व्यतिरेकित्रयं विवक्षितम् आत्मानोऽभिन्ना आत्मत्वात् यद्भिन्नं न तदात्मा यथा घटादि, आत्मा न भिन्नः अजडत्वात् यद्भिन्नं न तदजडं यथा घटादि, आत्मा न भिन्नः अक्षयत्वात् यद्भिन्नं न तदक्षयि यथा घटादिरिति । दूषणान्तरमाह "ब्रह्मणश्चे"ति, अनन्तत्वं नाम किं तस्य भेदविवादेऽनुपपन्नत्वं कथमित्यत्राह "अनन्तत्वं नामे"ति, वस्त्व-न्तरभाव इति वस्त्वन्तरत्वं वस्तुतः परिच्छेद इत्यर्थः, वस्तुतः परिच्छे-दव्याप्तं देशकालपरिच्छिन्नत्वमप्यापततीत्याह "वस्तुत"इति, व्याप्तिं दर्शयति "वस्त्वन्तरादि"ति, अस्यार्थस्यानिष्टत्वं दर्शयति-

सू० एवं च सत्यं ज्ञानमनन्तमित्यादिभिस्सर्वप्रकारपरिच्छेद-रहितत्वं वदद्भिर्विरोधः, उत्पत्तिविनाशादयश्च जीवानां

ब्रह्मणश्च प्रसज्येरन्, कालपरिच्छेद एव ह्युत्पत्तिविनाशभागित्वम्, अत एवास्यैवापरिच्छिन्नस्य ब्रह्मणोऽविद्याविजृम्भितं ब्रह्मादिस्तम्बपर्य्यन्तं कृत्स्नं जगत्सुखदुःखप्रतिसन्धानव्यवस्थादयोऽपि स्वाप्नव्यवस्थावदविद्यास्वाभाव्यादुपपद्यन्ते, तस्मादेकमेव नित्यमुक्तस्वप्रकाशस्वभावमनाद्यविद्यावशाज्जगदाकारेण विवर्तत इति परमार्थतो ब्रह्मव्यतिरिक्ताभावात्तदनन्यत्वं जगत इति, अत्रोच्यते निर्विशेषस्वप्रकाशमात्रं ब्रह्मानाद्यविद्यातिरोहितस्वस्वरूपं स्वगतनानात्वं पश्यतीत्येतत्प्रकाशस्वरूपस्य निरंशस्य प्रकाशनिवृत्तिरूपतिरोधाने स्वरूपनाशप्रसङ्गेन तिरोधानासम्भवादिभ्यः सकलप्रमाणविरुद्धं स्ववचनविरुद्धं चेति पूर्वमेवोक्तं, यत्पुनरुक्तं कारणव्यतिरिक्तं कार्य्यं युक्तिबाधितत्वेन शुक्तिकारजतादिवद् भ्रम इति तदयुक्तं युक्तेरभावात् ।

टी० "एवं चे"ति, निरुपपदमनन्तपदमसंकुचितवृत्ति त्रिविधपरिच्छेदराहित्यमाहेति भावः । एवमपरिच्छिन्नस्य परिच्छन्नत्वप्रसङ्ग उक्तः । अथाविकारस्य सविकारत्वप्रसङ्गमाह "उत्पत्ती"ति, अविकारत्वश्रुतिविरोधश्चेत्यर्थः, एकस्याविद्यया सर्वस्य व्यवस्थोपपत्तिमुपसंहरति "अत" इति, ब्रह्माज्ञानवादपक्षमुपसंहरति "तस्मादि"ति, विवर्त्तते—अध्यासाधिष्ठानं भवति, न तु परिणमतीत्यर्थः, ब्रह्मव्यतिरिक्ताभावात्तदनन्यत्वं जगत इति ब्रह्मणः परमार्थभूतमन्यन्न जगदित्यर्थः, ब्रह्माज्ञानवादिनं वैशेषिकः प्रतिवदति "अत्रोच्यत" इति, तिरोधानेऽपि तद्रहितांशस्तिष्ठतीति न वक्तुं युक्तं निरंशत्वादित्यभिप्रायेण निरंशस्येत्युक्तं, स्वरूपनाशमात्रप्रसङ्गेनेति तिरोधानं नाम प्रकाशनिवृत्तिः तत्र जडस्य प्रकाशव्यतिरिक्त-

त्वात् प्रकाशनिवृत्तावपि तस्य स्थितिरुपपद्यते प्रकाशैकरूपस्य ब्रह्मणः प्रकाशनिवृत्तिरूपतिरोधानं नाम स्वरूपनिवृत्तिरेवेत्यर्थः, स्ववचनविरुद्धं चेतीति नित्यत्वादिसाधकवचनविरुद्धं निर्विशेषत्वं ज्ञप्तित्वविरुद्धमस्मत्प्रत्ययगोचरत्वमित्यर्थः पूर्वमेवोक्तमस्मिन् प्रबन्धे सिद्धान्तिनोक्तमित्यर्थः ।

भू० यत्त्वनुवर्त्तमानस्य कारणमात्रस्य सत्यत्वं व्यावर्तमानानां घटशरादिकार्य्याणामसत्यत्वमिति तदप्यन्यत्र दृष्टस्यान्यत्र व्यावर्तमानता न बाधिकेत्यादिभिः पूर्वमेव परिहृतम् । यच्चोपलभ्यमानत्वविनाशित्वाभ्यां सदसदनिर्वचनीयत्वेन कार्य्यस्य मृषात्वमिति तदसत् उपलब्धिविनाशयोगो हि न मिथ्यात्वं साधयति, किं त्वनित्यत्वं यद्देशकालसम्बन्धितया यदुपलब्धं तद्देशकालसम्बन्धितया बाधितत्वमेव हि तस्य मिथ्यात्वे हेतुः देशान्तरकालान्तरसम्बन्धितयोपलब्धस्यान्यदेशकालसम्बन्धित्वेन बाधिततत्वं देशान्तरकालान्तराव्याप्तिमात्रं साधयति न तु मिथ्यात्वं, प्रतिप्रयोगश्च घटादिकार्य्यं सत्यं देशकालादिप्रतिपन्नोपाधावबाधितत्वात् आत्मवत्, यच्चोक्तं कारणस्वरूपादविकृतादिकारणात् कार्य्योत्पत्तिर्न सम्भवतीति तदसत् ।

टी० "यत्पुनरि"ति, सोपाधिकत्वकालात्ययापदिष्टत्वस्ववचनव्याहतिभिरनैकान्त्यादिभिश्च पूर्वमेव परिहृतमित्यर्थः, मिथ्यात्वानित्यत्वयोर्भेदं दर्शयति "यद्देशकाले"ति, यद्यनित्यत्वमेव मिथ्यात्वमुच्यते तर्हि सिद्धसाधनं मिथ्यात्वानुमानं, यद्यनित्यत्वविलक्षणं मिथ्यात्वं साध्यते तर्हि सोपाधिकत्वादीनि दूषणानि स्युरिति भावः । प्रत्यनुमानमाह "प्रतिप्रयोगश्चे"ति, ननु मिथ्यात्वानुमानं न सोपाधिकम् उपाधेरभावात् प्रति-

पक्षदेशकालोपाधौ बाधो न साध्यसमव्याप्तः देशकालभ्रमेषु प्रतिपन्नोपाधौ बाधाभावात्, न हि देशकालभ्रमस्य देशकालान्तरोपाधिप्रतिपत्तिः, तस्मान्न साध्यसमव्याप्तिः, यदि बाधमात्रमेव हेतुः तत्र पक्षेऽपि विद्यमानत्वात्, पक्षेष्वविद्यमानः सर्वसपक्षानुयायी ह्युपाधिः तस्मान्न सोपाधिकत्वमिति अत्रायं परिहारः देशकालभ्रमेष्वपि प्रतिपन्नोपाधौ बाधोऽस्ति, न हि देशकालावेव सर्वत्रोपाधिः तौ तु देशकालव्यतिरिक्तविषयभ्रमेषु देशकालविषयभ्रमेष्वन्ये पदार्था उपाधयः, यथा दुर्दिने सायङ्कालभ्रमान्वितः पुरुषः पश्चादादित्यदर्शनात् प्रबुद्ध एवं मन्यते यदाहं सन्ध्यामुपासितवान्न तदा सायमिति यदाऽहं बुद्धः न तदानीं प्रभातमिति च, यत्राहं सुप्तः नायं सदेश इत्यादि किं च देशभ्रमे काल उपाधिः स्यात् कालभ्रमे देश उपाधिः स्यात्, न चान्योन्याश्रयः भ्रमव्यक्तिभेदात्, तस्मात्प्रतिपन्नोपाधौ बाधस्य साध्यसमव्याप्तिरस्त्येव इममर्थमभिप्रेत्य--

सू० देशकालादिसहकारिसमवहितात्कारणात्कार्य्योत्पत्तिसम्भवात्, तत्समवधानं च विकृतस्याविकृतस्य च न सम्भवतीति यदुक्तं तदप्ययुक्तं पूर्वमविकृतस्यैव कालादिसमवधानसम्भवादविकृतत्वाविशेषात्पूर्वमपि देशकालादिसमवधानं प्रसज्य इति चेत न देशकालादिसमवधानस्य कारणान्तरायत्तस्यैतदायत्तत्वाभावात्, अतो देशकालादिसमवधानरूपविशेषमापन्नं कारणं कार्य्यमुत्पादयतीति न किञ्चिदवहीनं, कारणस्य च कार्य्यं प्रत्यारम्भकत्वमबाधितं दृश्यमानं न केनापि प्रकारेणापह्नोतुं शक्यते, । यत्तु हेमादिमात्रस्य रुचकादिकार्य्यस्यै तदाश्रयस्य वा हेमादेरारम्भकत्वं न सम्भवतीति तदयुक्तं हेमादिमात्रस्यैव यथोक्तपरिकरयुक्तस्यारम्भकत्वसम्भवात्, न चार-

म्भकहेमव्यतिरिक्तं कार्यं न दृश्यते इति वक्तुं शक्यं हेमातिरिक्तस्य स्वस्तिकस्य दर्शनात्, बुद्धिशब्दान्तरादिभिर्वस्त्वन्तरस्य साधितत्वाच्च न चायं शुक्तिकारजतादिवद्भ्रमः ।

टी० देशकालादिप्रतिपन्नोपाधावबाधितत्वादित्यत्रादि–शब्दः प्रयुक्तः, देशकालादिप्रतिपन्नोपाधौ बाधार्हत्वं मिथ्यात्वं तत्कार्यभूतः प्रतिपन्नोपाधौ बाधो मिथ्यात्वसाधकः यथाऽग्नेर्दाहार्हस्य दाहकार्ये दाहार्हत्वे लिङ्गं तद्वत्, अतः साध्याविशिष्टत्वचोद्यमपास्तं, समवहितात्–समन्वितात् कारणान्तरं कर्म ईश्वरसङ्कल्प इत्यादि एतदायत्तत्वाभावाद्विकारायत्तत्वाभावात्, एवमनुग्राहकस्तर्क उक्तः । अथानुग्राह्यं प्रमाणमाह "कारणस्य चे"ति, पूर्वपक्षिणा कार्यकारणभावमिथ्यात्वग्राहिप्रमाणानुग्राहकत्वेन हि तर्क उक्तः तथाऽत्राऽप्यनुग्राहकतर्कपूर्वकं प्रमाणमुक्तं परोक्ततर्कश्च जात्युक्तिः स्वव्याघातात्, कार्यकारणभागभङ्गवाचिवाक्यं किं परस्य कार्यकारणभावभङ्गविषयप्रमितेः कारणं, तर्हि न कार्यकारणभावभङ्गः? उत न ततोऽपि न तद्भङ्गः सा प्रतीतिर्मिथ्या चेत्ततोऽपि न भङ्गः बाधबाधे पूर्वबाधितस्य सत्यत्वात्, एवं कार्यकारणभावस्य प्रामाणिकत्वात्तद्विरुद्धबाह्यतर्कानुदय एवेति स्थितं, यस्त्विति हेममात्रस्य रुचकादिकार्यमात्रस्य कार्याश्रितद्रव्यमात्रस्य चाऽऽरम्भकत्वं न संभवतीत्युक्तमित्यर्थः, यथोक्तपरिकरो देशकालादिः, अनिरूपितवस्त्ववलम्बनबुद्धिशब्दादीनामसाधकत्वं पूर्वपक्षिणोक्तं प्रतिक्षिपति "न चायमि"ति, ।

सू० उत्पत्तिविनाशयोरन्तराले उपलभ्यमानस्य तद्देशकालसम्बन्धितया बाधादर्शनात्, न चास्या उपलब्धेर्बाधिका काचिदपि युक्तिर्दृश्यते प्रागनुपलब्धस्वस्तिकोपलब्धिवेलायामपि हेमप्रत्यभिज्ञा स्वस्तिकाश्रयतया हेम्नोऽप्यनुवृत्तेरविरुद्धा, श्रुतिभिस्तु प्रपञ्चमिथ्यात्वसाधनं पूर्वमेव निरस्तम् ।

यच्चान्यदत्र प्रत्यक्षाविरोधादि प्रतिवक्तव्यं तदपि सर्वं पूर्वमेव सूक्तम् । यच्चोक्तम् एकेनात्मना सर्वाणि शरीराण्यात्मवन्तीति तदसत् एकस्यैव सर्वशरीरप्रयुक्तसुखदुःखप्रतिसन्धानप्रसङ्गात्, सौभरिप्रभृतिषु ह्यात्मैकत्वेनाऽनेकशरीरप्रयुक्तसुखादिप्रतिसन्धानमेकस्य दृश्यते, न चाहमर्थस्य ज्ञातृत्वात्तद्भेदात्प्रतिसन्धानाभावो नात्मभेदादिति वक्तुं शक्यम् आत्मा ज्ञातैव स चाहमर्थ एव अन्तःकरणभूतस्त्वहङ्कारो जडत्वात्करणत्वाच्च शरीरेन्द्रियादिवन्न ज्ञातेत्युपपादितत्वात्,

टी० उत्पत्तिविनाशयोरन्तराले उपलभ्यमानस्येति अनित्यत्वे साध्ये सिद्धसाधनत्वं प्रतिपन्नोपाधौ बाधश्चेत्तदनुपलम्भादेव निरस्त इति भावः । हेमप्रत्यभिज्ञा कथं घटत? इत्यत्राह "प्रागि"ति, श्रुतिभिस्त्विति सिद्धान्तिना निरस्तमित्यर्थः, यच्चान्यदिति प्रत्यक्षं सन्मात्रग्राहि, विरोधे सत्यपि शास्त्रं बलीय इत्यादिकं त्वदुक्तं पूर्वमेवानेन ग्रन्थकारेण निरस्तमित्यर्थः । तदुक्तमनुमानगणं दूषयति "यच्चोक्तमि"ति, । व्याप्तिविरोधमाह "एकस्यैवे"ति, यत्संप्रतिपन्नैकात्मकं शरीरं तत्र हि सुखादिप्रतिसन्धानं दृष्टमिति भावः । प्रतिसन्धानाभावः शरीरभेदनिबन्धन इत्यत्राह "सौभरिप्रभृतिष्वि"ति, विलक्षणज्ञानानां केषाञ्चिच्छरीरभेदेऽपि पूर्वजन्मसुखादिप्रत्यभिज्ञानादिति प्रभृति—शब्दस्य भावः । किञ्च किमेकशरीरवर्त्यात्मन एकत्वं साध्यते? उतानेकशरीरवर्तिनः? प्रथमे कल्पे सिद्धसाधनत्वं, द्वितीये धर्मिग्राहकप्रमाणबाधः परशरीरे तच्चेष्टादिभिरात्मा ह्यनुमीयते तच्चानुमानं स्वस्मादन्यत्वेनैवैनं दर्शयति स्वात्मा ह्यहमित्यपरोक्षमवभासते न हि परशरीरगत आत्मा अपरोक्ष इति अन्तःकरणभेदात् प्रतिसन्धानाभाव इत्याशङ्क्य दूषयति "न चे"ति, अन्तःकरणस्य ज्ञातृत्वेऽपि पूर्वपूर्वकल्पेषूत्पन्नविनष्टान्तःकरणानामपि सनकादीनां तत्प्रतिसंधानसम्भ

वात् नान्तःकरण भेदः प्रतिसन्धाभावहेतुः । अन्तःकरणस्य ज्ञातृत्वमेव नास्ति तत्त्वात्मन इत्याह "आत्मा ज्ञातैवे"ति,

सू० यच्च शरीरत्वजडत्वकार्य्यत्वकल्पितत्वैस्सर्वशरीराणामेकस्याविद्याकल्पितत्वमुक्तं तदपि सर्वशरीराणामविद्याकल्पितत्वस्यैवाभावादयुक्तं तदभावश्चाबाधितस्य सत्यतोपपादनात् । यच्च चेतनादन्यस्य जडत्वदर्शनात्सर्वचेतनानामनन्यत्वमुक्तं तदपि सुखदुःखव्यवस्थया भेदोपपादनादेव निरस्तम् । यत्तु मयैवात्मवन्ति मदविद्याकल्पितान्यहमेव सर्वं चेतनजातमित्यहमर्थस्यैक्यमुपपादितं तदज्ञातस्वसिद्धान्तस्य भ्रान्तिजल्पितम् अहन्त्वमाद्यर्थविलक्षणं चिन्मात्रं ह्यात्मा त्वन्मते, किञ्च निर्विशेषचिन्मात्रातिरेकि सर्वं मिथ्येति वदतो मोक्षार्थश्रवणादिप्रयत्नो निष्फलः । अविद्याकार्यत्वात् शुक्तिकारजतादिषु रजताद्युपादानादिप्रयत्नवन्मोक्षार्थप्रयत्नोऽपि व्यर्थः, कल्पिताचार्य्यायत्तज्ञानकार्य्यत्वात् शुकप्रह्लादवामदेवादिप्रयत्नवत्, तत्त्वमस्यादिवाक्यजन्यं ज्ञानं न बन्धनिवर्तकम् अविद्याकल्पितवाक्यजन्यत्वात्स्वयमविद्यात्मकत्वात्, अविद्याकल्पितज्ञात्राश्रयत्वात्, कल्पिताचार्यायत्तश्रवणजन्यत्वाद्वा स्वाप्नबन्धनिवर्त्तकवाक्यजन्यज्ञानवत् । किञ्च निर्विशेषचिन्मात्रं ब्रह्म मिथ्या अविद्याकार्य्यज्ञानगम्यत्वात् अविद्याकल्पितज्ञात्राश्रितज्ञानगम्यत्वात् अविद्याकल्पितज्ञानगम्यत्वाद्वा यदेवं तत्तथा, यथा स्वाप्नगन्धर्वनगरादिः ।

टी० "यच्चे"ति, शरीराणामविद्याकल्पितत्वे सिद्धे ह्येकाविद्याकल्पितत्वसिद्धिः तदेव नास्तीति सपक्षभूतशरीरस्याविद्याकल्पितत्वाभावात् दृष्टान्तस्य साध्यविकलत्वमुक्तं भवति, कल्पितत्वहेतोरन्यतरासिद्धिश्च । कल्पितत्वाभावमुपपादयति "तदभावश्चे"ति, सर्वं चेतनजातमहमेव चेतनत्वादिति यद्व्यतिरेकिपूर्वमुक्तं तदर्थेत उदाहृतं भवति यच्चेति दूषयति "तदपी"ति, कालात्ययापदिष्टत्वं दूषणमुक्तं भवति । एष्वनुमानेषूक्तिदूषणमाह "यत्त्विति बद्धमुक्तादिव्यवस्थानामेकाविद्याकल्पितत्वं यदुक्तं तत्राप्यपारमार्थिकत्वहेतोरसिद्धिः सोपाधिकत्वं चानुसन्धेयं किञ्चेति अविद्याकार्यत्वादि हेतुगणैरनिष्टप्रसङ्गमाह "तत्त्वमस्यादी"ति, अविद्यामूलत्वाश्रयणे तत्त्वमस्यादिवाक्यजन्यज्ञानस्यानिवर्तकत्वप्रसङ्ग इत्यर्थः, यथा संवित्सिद्धौ "अभाविन्येव सा पश्चाद्भाविनीत्युपदिश्यताम् । सन्ति हि स्वप्नदृष्टानि दृष्टान्तवचनानि त" इति सा—मुक्तिः, मृषावादिनां द्विधा प्रक्रिया ब्रह्म न वेदान्तैः प्रतिपाद्यते अपि तु भेदनिषेध एव क्रियत इति स्वरूपपरवाक्यैः प्रतिपाद्यत इति च,

मू० न च निर्विशेषचिन्मात्रं ब्रह्म स्वयं प्रकाशते येन न प्रमाणान्तरमपेक्षते । यत्त्वात्मसाक्षिकं स्वयं प्रकाशज्ञानं दृश्यते तत्तु ज्ञेयविशेषसिद्धिरूपं ज्ञातृगतमेव दृश्यत इति पूर्वमेवोक्तं, यानि च तस्य निर्विशेषत्वसाध[1]नानि यौक्तिकानि ज्ञानान्युपन्यस्तानि तानि चानन्तरोक्तैरविद्याकार्यत्वादित्यादिभिरनुमानैर्निरस्तानि । न च निर्विशेषस्य चिन्मात्रस्याज्ञानसाक्षित्वमहङ्कारादिजगद्भ्रमश्चोपपद्यते, साक्षित्वभ्रमादयोऽपि हि ज्ञातृविशेषगता दृष्टाः न ज्ञप्तिमात्रगताः । न च तस्य प्रकाशकत्वं स्वायत्तप्रकाशता वा सिध्यति, प्रकाशो हि नाम कस्यचित्पुरुषस्य

[1] साधकानि इति पा. ।

कञ्चनार्थविशेषं प्रति सिद्धिरूपो दृश्यते, तत एव हि तस्य स्वयंप्रकाशतोपपाद्यते भवद्भिरपि, न चातादृशस्य निर्विशेषस्य स्वप्रकाशता सम्भवति । यः पुनस्त्वगोष्ठीष्वपरमार्थादपि परमार्थकार्य्यं दृश्यत इत्युद्घोषः सोऽपि तानि कार्य्याणि सर्वाण्यबाधितकल्पानि व्यावहारिकसत्यानि वस्तुतस्त्वविद्यात्मकान्येवेति स्वाभ्युपगमादेव निरस्तः ।

टी० तत्र स्वरूपपरवाक्यप्रतिपाद्यत्वे स्वपक्षेऽनिष्टं प्रसञ्जयति "किञ्च निर्विशेषे"ति, न चेत्यादि ज्ञेयविशेषसिद्धिरूपं ज्ञेयविशेषव्यवहारानुरूपमित्यर्थः, यानि चेति अनुमानैस्तर्कैः, तर्कस्यानुमानशब्दवाच्यत्वं व्याप्तिसापेक्षत्वात् "ऊहस्तर्कोऽनुमानोक्तिरि"ति हलायुधः, निरस्तानीति अविद्याकार्यत्वादिहेतुभिः स्वाभिमतार्थसाधकत्वं निरस्तमित्यर्थः, उपपाद्यते भवद्भिरिति स्वसम्बन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वादिति हेतोरित्यर्थः, न चेति अतादृशस्य निर्विशेषत्वात् कर्मकर्तृरहितस्येत्यर्थः, तादृशस्येति पाठेऽयमर्थः—तादृशस्य कर्मकर्तृसहितो यः प्रकाशते तस्य निर्विशेषत्वेऽभिमते सा न सिध्यतीति पूर्वमपरमार्थहेतोः शुक्तिरजताद्युपादानादिप्रयत्नवन्निष्फलत्वमुक्तं तत्र अपरमार्थादपि परमार्थोत्पत्तेरिति शङ्कते "यः पुनरि"ति, किमियं परमार्थात् परमार्थोत्पत्तिर्भवत्पक्षेणोच्यते? उतास्मत्पक्षेण? ति विकल्पमभिप्रेत्याद्यपक्षे तदसिद्धिमाह "सोऽपि तानी"ति, द्वितीयपक्षे दूषणमाह—

मू० अस्माभिरपि सर्वत्र परमार्थादेव कारणात्सर्वकार्य्योत्पत्तिमुपपादयद्भिः पूर्वमेव निरस्तः । न च त्वयैषामनुभूयमानानां[1] श्रुतिविरोधो वक्तुं शक्यते श्रुतेरप्यविद्याकार्य्यत्वेनाविद्यात्मकत्वेन चोक्तदृष्टान्तेभ्यो विशेषाभावात् । यत्तु ब्रह्मणोऽपारमार्थिकज्ञानगम्यत्वेऽपि पश्चात्तनबाधादर्श-

१ त्वयैषामनुमानम् इति पा० ।

नाब्रह्म सत्यमेवेति तदसत् दुष्टकारणजन्यज्ञानगम्यत्वे निश्चिते सति पश्चात्तनबाधादर्शनस्याकिञ्चित्करत्वात्, तथा शून्यमेव तत्त्वमिति वाक्यजन्यज्ञानस्य पश्चात्तनबाधादर्शनेऽपि दोषमूलत्वनिश्चयादेव तदर्थस्यासत्यत्वम् । किञ्च नेह नानाऽस्ति किञ्चन विज्ञानमानन्दं ब्रह्मेति विज्ञानमात्रातिरिक्तस्य कृत्स्नस्य वस्तुजातस्य निषेधकत्वेन सर्वस्मात् परत्वात्पश्चात्तनबाधादर्शनमुच्यते शून्यमेव तत्त्वमिति तस्याप्यभावं वदतस्तस्मात्परत्वेन पश्चात्तनबाधो दृश्यते सर्वशून्यतातिरेकिनिषेधासम्भवात्तस्यैव पश्चात्तनबाधादर्शनं, दोषमूलत्वं तु प्रत्यक्षादीनां वेदान्तजन्मनः सर्वशून्यज्ञानस्याप्यविशिष्टम्, अतः सर्वं विज्ञानजातं पारमार्थिकज्ञातृगतं स्वयं च परमार्थभूतमर्थविशेषसिद्धिरूपं तत्र किञ्चिद् ज्ञानं दोषमूलं दोषश्च परमार्थः, किञ्चिच्च निर्दोषं पारमार्थिकसामग्रीजन्यमिति यावन्नाभ्युपेयते न तावत्सत्यमिथ्यार्थव्यवस्था लोकव्यवहारश्च सेत्स्यति, लोकव्यवहारो हि पारमार्थिको भ्रान्तिरूपश्च पारमार्थिकज्ञातृगतार्थविशेषसिद्धिरूपप्रकाशपूर्वकः ।

टी० "अस्माभि"रिति, विशेषाभावात् प्रबलविरोधे हि दौर्बल्यमिति भावः । बाधादर्शनाभ्युपगमेन दूषयति "दुष्टकारणे"ति, । तदनभ्युपगमेन दूषयति "किञ्चे"ति, प्रत्यक्षादिप्रमाणं वेदेऽपि सविशेषपरवाक्यजातं च विहाय निषेधपरवाक्यप्राबल्यं हि त्वदुक्तं तत्र विधिरूपत्वात् पूर्वेषां दौर्बल्यं निषेधरूपत्वाच्च पश्चात्तनस्य प्राबल्यं, तच्च सर्वशून्यवादिन एवेत्यर्थः । अतस्सर्वमिति अत इत्यस्य न सेत्स्यतीत्यन्वयः, लोक-

व्यवहारस्यासिद्धिमुपपादयिष्यन्नाह "लोके"ति, तामुपपादयति "लोकव्यवहारो ही"ति, ततः किमित्यत्राह–

मू० निर्विशेषसन्मात्रस्य तु पारमार्थिकस्याऽपारमार्थिकस्य च प्रतिभासादेर्हेतुत्वासम्भवाल्लोकव्यवहारो न सम्भवति, यच्च तैर्निरधिष्ठानभ्रमासम्भवात् सर्वाध्यासाधिष्ठानस्य सन्मात्रस्य तु पारमार्थिकत्वमुक्तं तदपि दोषदोषाश्रयत्वज्ञातृत्वज्ञानानामपारमार्थ्येऽपि पारमार्थिकस्य भ्रमोपपत्तिवदधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेर्निरस्तम् । अथाधिष्ठानापारमार्थ्ये न क्वचिद् भ्रमो दृष्ट इति सन्मात्रस्य पारमार्थिकत्वमवश्याश्रयणीयमिति मन्यसे हन्त तर्हि दोषदोषाश्रयत्वज्ञातृत्वज्ञानानामपारमार्थ्येऽपि न क्वचिद्भ्रमो दृष्ट इति दर्शनानुगुण्येन तेषामपि पारमार्थ्यमवश्याश्रयणीयमिति न कश्चिद्विशेषोऽन्यच तत्संरम्भात् । यत्तु भेदपक्षेऽप्यतीतकल्पानामानन्त्यात्सर्वेषामात्मनां मुक्तत्वेन बद्धासम्भवाद्बद्धमुक्तव्यवस्था न सम्भवतीति तदात्मानन्त्येन परिहृतम् ।

टी० निर्विशेषे"ति, निर्विशेषज्ञानस्य ज्ञातृत्वाभावान्न प्रतिभासहेतुत्वं, ज्ञातैव ह्याश्रयतया प्रतिभासहेतुर्दृष्टः ज्ञातृगतज्ञानत्वाभावाच्च न व्यवहारहेतुत्वं, ज्ञातृगतज्ञानं हि स्वपरव्यवहारहेतुतया दृष्टमित्यर्थः । यद्वा निर्विशेषज्ञानस्य ज्ञातृत्वाभावात् प्रतिभासस्याश्रयतया हेतुत्वं नास्ति निर्विशेषत्वादेव कारणतया हेतुत्वमपि नास्तीत्यर्थः । पारमार्थिकापारमार्थिक–शब्दौ परमार्थापरमार्थविषयत्वपरौ, प्रतिभासादेरित्यत्रादि–शब्दो व्यवहारपरः, यच्चेत्यादि न कश्चिद्विशेषोऽन्यत्र तत्संरम्भादिति अत्रायमभिप्रायः अधिष्ठानस्यापारमार्थ्ये तस्याप्यधिष्ठानान्तरापेक्षतयाऽनवस्थेति चेन्न दोषस्यापारमार्थ्ये तस्यापि दोषान्तरमित्यनवस्था स्यात्, तत्र

स्वरूपानादित्वेन परिहारस्तुल्यः प्रवाहानादित्वेन परिहारश्चेत् सोऽपि तुल्यः, दुर्घटत्वेन परिहारश्चेत् सोऽपि तुल्यः, परमार्थत्वप्रयुक्तोपपत्तिरपरमार्थत्वप्रयुक्तोपपत्तिरिति द्विविधा तत्र परमार्थत्वयुक्तोपपत्तिनिरपेक्षत्वं दुर्घटत्वम्, इयं चापरमार्थत्वप्रयुक्तोपपत्तिरधिष्ठानपारमार्थ्यापेक्षेति चेत् दोषपारमार्थ्यमप्यपरमार्थत्वप्रयुक्तोपपत्तिरित्यपि तुल्यमिति यत्त्वित्यादि तदात्मानन्त्येन परिहृतं यथा माषसर्षपादिष्वेकैकजातीया एवानन्ताः समुदिताश्चानन्ताः तथा बद्धाश्चानन्ता मुक्ताश्च अनन्ताः,

श्रू० यत्त्वात्मनां भिन्नत्वे माषसर्षपघटपटादिवत्सङ्ख्यावत्त्वमवर्ज्जनीयमिति तच्च घटादीनामप्यनन्तत्वात् दृष्टान्तः साध्यविकलस्स्यात्, दश घटास्सहस्रं माषा इति सङ्ख्यावत्त्वं दृश्यत इति चेत् सत्यं, तत्तु न घटादिस्वरूपगतमपि तु देशकालाद्युपाधिमद्घटादिगतं, तादृशं तु सङ्ख्यावत्त्वमात्मनामप्यभ्युपगच्छामः । न च तावता सर्वमुक्तिप्रसङ्गः, आत्मस्वरूपानन्त्यात् । यत्त्वात्मनां भिन्नत्वे घटादिवज्जडत्वानात्मत्वक्षयित्वप्रसङ्ग इति तदयुक्तम् एकजातीयानां भेदस्य तज्जातीयानां जात्यन्तरीयत्वानापादनात् । न हि घटादीनां भेदस्तेषां पटत्वमापादयति, यत्तु भिन्नत्वे वस्तुतः परिच्छेदाद् देशकालाभ्यामपि परिच्छेदो ब्रह्मणः प्रसज्यत इत्यनन्तत्वं ब्रह्मणो न सिध्यति इति ।

टी० समुदिताश्च सर्वे चेतना अनन्ता इत्यर्थः, सर्वेषामात्मनाम् एकत्वसङ्ख्या प्रत्येकमस्त्येव अतो न सङ्ख्यावत्त्वमात्रं निषिध्यते, द्वित्वादिसङ्ख्याया अवधिरेव निषिध्यते अतीतकल्पानामानन्त्यादेकस्मिन् कल्प एकघटसद्भावेऽपि घटानामानन्त्यं सिद्धमिति साध्यविकलता दृष्टान्तस्य, किं देशकालकर्माद्युपाध्यवच्छिन्ना घटाः सपक्षीकृताः ? उत कृत्स्न-

घटाः ? तत्रानन्तरपक्षे साध्यविकलता, आद्येऽपि देशाद्यवच्छेदप्रयुक्तत्वात् सोपाधिकत्वं सपक्षदर्शनानुगुण्येन पक्षेऽपि साध्यधर्मस्य वक्तव्यत्वादुपाध्यवच्छिन्नचेतनानां सङ्ख्यावत्त्वं साध्यं स्यात्तदा सिद्धसाध्यता, किमेतदण्डान्तर्वर्तिनां चेतनानामवधिमत्सङ्ख्यावत्त्वं साध्यम्? उत सर्वेषां ? प्रथमे सिद्धसाध्यता, अन्यत्र धर्मिग्राहकप्रमाणबाधः, अतीताण्डानां तदन्तर्वर्तिनां च चेतनानां च सद्भावे प्रमाणं वक्तव्यं, नो चेदाश्रयैकदेशासिद्धिप्रसङ्गात्, प्रमाणं च शास्त्रं, तच्च ताननन्तत्वेन प्रतिपादयतीति तद्विरुद्धत्वात् कालात्ययापदिष्ट इत्यर्थः, विगीतः कालः सावधिः कालत्वान्माससंवत्सरादिवदिति वक्तुं शक्यत्वेऽप्यतीतकल्पानामानन्त्यं हि शास्त्रबलादभ्युपगतं, तथा सङ्ख्यावत्त्वसाधकहेतोः शास्त्रबाधाच्चेतनानन्त्यमभ्युपगन्तव्यमित्यर्थः दृष्टान्तस्य साध्यविकलत्वं कण्ठोक्तं विकल्पमुखेन सोपाधिकत्वकालात्ययापदेशसिद्धसाधनता अभिप्रेताः, घटसर्षपादिव्यक्तिबाहुल्यानां परस्परं सङ्ख्यावधिन्यूनाधिकभावे सत्यपि तथात्वेन तेषामानन्त्यं दर्शयितुं दश घटाः सहस्रं माषा इत्युक्तं, देशकालाद्युपाधिमदित्यत्रादि–शब्देन कर्ता विवक्षितः, एतत्कुलालनिर्मिता घटा दशेत्यपि वक्तुं शक्यत्वात् आत्मस्वरूपानन्त्यादिति देशाद्युपाधिराहित्ये आत्मस्वरूपमात्रस्यासङ्ख्येयत्वादित्यर्थः, यत्त्वित्यादिना भिन्नत्वेनानात्मत्वादिप्रसङ्गमनूदितं परिहरति–

मू० तदयुक्तं वस्तुतः परिच्छिन्नानामपि देशकालपरिच्छेदस्य न्यूनाधिकभावेनानियमदर्शनाद्देशकालसम्बन्धेयत्तायाः प्रमाणान्तरायत्तनिर्णयत्वेन ब्रह्मणः सर्वदेशकालसम्बन्धस्यापि प्रमाणान्तरादापततो विरोधाभावात्, वस्तुतः परिच्छेदमात्रादपि सर्वप्रकारपरिच्छेदरहितत्वाभावादानन्त्यासिद्धिरिति चेत्, तद्भवतोऽप्यविद्याविलक्षणत्वं ब्रह्मणोऽभ्युपयतः समानम् ।

टी० "तदयुयुक्त"मिति, न हीति, घटो न भिन्नः घटत्वात् यद्भिन्नं न तद् घटः यथा पट इत्युक्ते यथा कालात्ययापदिष्टत्वं तथा त्वदुक्तव्यतिरेकिणामपि कालात्ययापदिष्टत्वमित्यर्थः वस्तुतः परिच्छिन्नत्वे देशकालपरिच्छेदप्रसङ्गं दूषयति "यत्वि"ति, भिन्नत्वे वस्तुतः परिच्छेदादिति इदमिदं न भवतीति सामानाधिकरण्यानर्हत्वं वस्तुतः परिच्छेद इति मृषावाद्यभिमतमिति ज्ञापितं सिद्धान्त्यभिमतः प्रकारान्तरेण वस्तुपरिच्छेदस्तु मृषावाद्यनभिमतः तद्विपरीतरूपस्यापरिच्छेदस्य निर्विशेषत्वविरोधात्, अतो मृषावादिना स्वाभिमतवस्तुपरिच्छेदस्य देशकालपरिच्छेदप्रयोजकत्वाभिमानेन देशकालपरिच्छेदौ प्रसञ्जितौ, तौ दूषयति "तदयुक्त"मिति, कुत इत्यपेक्षायामप्रयोजकत्वं वक्तुं तदुपयोगिनमर्थमाह "वस्तुत इति, ततः किमित्यत्राह "देशकाले"ति, प्रमाणान्तरायत्तनिर्णयत्वेनेति वस्तुपरिच्छेदोऽप्रयोजक इति भावः, प्रतिबन्द्यभिप्रायेणैवमुक्तम् अयमर्थः देशकालपरिच्छेदयोर्न्यूनाधिकभावो दृश्यते पराभिमतस्य वस्तुपरिच्छेदस्य तु स नास्ति, तथाऽपि परिच्छेदत्वात् सोऽपि न्यूनाधिकभाववानिति प्रसञ्जनस्य प्रमाणबाधितत्वेन परिच्छेदत्वं यथा न्यूनाधिकभाववत्त्वस्याप्रयोजकं तथा वस्तुनः परिच्छिन्नत्वमपि देशकालपरिच्छेदयोरप्रयोजकं प्रमाणबाधादिति । यद्वा यथा वस्तुतः परिच्छेदो मुहूर्तावधिककालपरिच्छेदविशेषे माषमात्रावधिकदेशपरिच्छेदविशेषे च प्रयोजक इत्यभ्युपगन्तुमयुक्तं तयोर्न्यूनाधिकभावग्राहिप्रमाणेन बाधात्, एवं देशकालपरिच्छेदविशेषस्येव देशकालपरिच्छेदमात्रस्यापि प्रमाणबाधाद्वस्तुपरिच्छेदो न प्रयोजक इति भावः । अथवा प्रयोज्याकारतारतम्यं प्रयोजकाकारतारतम्यनिबन्धनं दृष्टं यथा पतनतारतम्यं गुरुत्वतारतम्यनिबन्धनं, यथा वा गतिशैघ्र्यतारतम्यं वेगतारतम्यनिबन्धनम्, अतस्तारतम्यवति प्रयोज्यधर्मे प्रयोजकधर्मेण तारतम्यवता भाव्यम्, अतोवस्तुपरिच्छेदस्य देशकालपरिच्छेदप्रयोजकत्वे सति न्यूनाधिकभाववत्त्वप्रसङ्गः, न च वस्तुपरिच्छेदो न्यूनाधिकभाववान् दृश्यते, तस्माद्देशकालपरिच्छेदप्रयोजकत्वं तस्यानुपपन्नम्, अतो वस्तुतः परिच्छिन्नस्यापि ब्रह्मणोदेशकालप-

रिच्छेदाभाव उपपन्न इत्यर्थः । भाष्ये न्यूनाधिक्याभावेनानियमदर्शनादिति प्रमाणान्तरायत्तनिर्णयत्वेन चेति निर्देशेनायमर्थो विवक्षित इति स्फुटमवगम्यते । अथानन्त्यश्रुतेः सङ्कोचं शङ्कते "वस्तुतः परिच्छेदमात्रादपी"ति, सङ्कोचस्य परपक्षेऽपि तुल्यतां दर्शयति तद्वतोऽपी"ति, ततः—

मू० अतस्सतोऽविद्याविलक्षणत्वाभ्युपगमाद्ब्रह्मणोऽपि भिन्नत्वेन भेदप्रयुक्ता दोषास्सर्वे तवापि प्रसज्येरन्, यद्यविद्याविलक्षणत्वं नाभ्युपेयते तर्ह्यविद्यात्मकत्वमेव ब्रह्मणः स्यात् सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणवाक्यमपि तत एवापार्थकं स्यात्, भेदतत्त्वानभ्युपगमे हि स्वपक्षपरपक्षसाधनदूषणादिविवेकाभावात्सर्वमसमञ्जसं स्यात्, आनन्त्यप्रसिद्धिश्च देशकालपरिच्छेदरहितत्वमात्रेण न वस्तुतोऽपि परिच्छेदरहितत्वेन तथाविधस्य शशविषाणायमानस्यानुपलब्धेः, ।

टी० किमित्यत्राह "अतः सतो विद्ये"ति, प्रसङ्गदार्ढ्याय प्रसञ्जकस्य विपर्ययेऽनिष्टमाह "यद्यविद्ये"ति, ततोऽपि किमित्यत्राह "सत्यं ज्ञानमि"ति, परमार्थादन्यत्वं वस्तुपरिच्छेदः, स तु ब्रह्मणो नास्तीति चेत्तदयुक्तं परमार्थादन्यत्वं हि मिथ्यात्वं तच्च बाध्यत्वं बाधफलं च कदाचिन्निवृत्तिरिति तस्य कालपरिच्छेदान्तर्भावात्, अतो विलक्षणत्वमात्रं वस्तुपरिच्छेद इति त्वया वक्तव्यम्, उक्तं च अतो विद्याविलक्षणब्रह्मणोवस्तुपरिच्छेदप्रसङ्गो दुर्वारः पूर्वस्मिन् ग्रन्थे अविद्याब्रह्मणोर्भेदानभ्युपगमे दूषणमुक्तम् । अथ सामान्येन भेदो नाम कश्चिदस्तीत्यनभ्युपगमे दूषणमाह "भेदतत्त्वे"ति, स्वपक्षो निर्दूषणः प्रबलः परपक्षः सदूषणो दुर्बल इति भेदः किमस्ति वा न वा? अस्ति चेद्भेदाङ्गीकारः, न चेत्परपक्ष एव प्रबलः स्यात्स्वेनापि स एवाभ्युपगतः स्यात्स भेदोऽपरमार्थ इति चेत्ततोऽपि परपक्षप्राबल्यं स्यादित्यर्थः । ब्रह्माज्ञानपक्षं खण्डयन् वैशेषिकः

स्वाभिमतनिर्वाहमाह "आनन्त्यप्रसिद्धिश्चे"ति, सात्तात्सिद्धान्तिपक्षे वस्त्वपरिच्छेद उपपन्न इत्याह–

सू० भेदवादिनस्तु सर्वचिदचिद्वस्तुशरीरत्वेन ब्रह्मणस्सर्वप्रकारत्वात्स्वतः परतोऽपि परिच्छेदो न विद्यते, तदेवं कारणाद्भिन्नस्य कार्य्यस्य सत्यत्वाद्ब्रह्मकार्यं कृत्स्नं जगद्ब्रह्मणोऽन्यदेवेति प्राप्ते प्रचक्ष्महे ।

## सू० तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १५ ॥

तस्मात्परमकारणाद्ब्रह्मणोऽनन्यत्वं जगतः आरम्भण–शब्दादिभ्यः तदुपपादयद्भ्योऽवगम्यते

टी० "भेदवादिनस्त्वि"ति, ब्रह्मणः सर्वप्रकारत्वादित्यनेन सर्ववस्तुसामानाधिकरण्यार्हत्वं वस्त्वपरिच्छेद इति भाष्यकाराभिप्राय इत्यवगम्यते, इदमिदं न भवतीति हि वस्तुपरिच्छेदः, इदमिदं भवतीति निर्देशयोग्यत्वं वस्त्वपरिच्छेदः, सर्ववस्तुसामानाधिकरण्यार्हत्वम् इत्यर्थः, अनेकविशेषणानाम् एकविशेष्यपर्य्यन्तताऽभिधानं हि सामानाधिकरण्यकृत्यं तच्च वस्तुनस्तथाविधत्वात् । यद्वा वस्त्वपरिच्छेदो नाम वस्तुगतस्वभावविशेषो देशकालापरिच्छेदविलक्षणः, यथा देशकालपरिच्छेदसाम्येऽपि षड्वर्णस्वर्णस्य दशवर्णात् स्वर्णात् परिच्छेदो देशकालपरिच्छेदविलक्षणो दृश्यते, षड्वर्णतया परिच्छेदो दशवर्णस्य स्वर्णस्य नास्ति तथा ब्रह्मणोऽपि वस्त्वपरिच्छेदो नाम स्वभावतोऽपरिच्छेदः गुणानन्त्यमिति फलितम् । उक्तं प्रकारद्वयं साधीयः वस्त्वन्तराप्रतिहतिर्वस्त्वपरिच्छेद इति केचित् । आलोकादिर्हि सर्वदेशसम्बन्धयोग्योऽपि प्रतिहन्यते न तथेत्यर्थः । केचिदेवमाहुः–वस्तुपरिच्छेदो वस्तुनः परिमितत्वं तदभावो वस्त्वपरिच्छेदः देशापरिच्छेदस्तत्कार्यः वस्तुनः परिमितत्वाभावाद्धि सकलदेशसम्बन्ध इति इतोऽपि पूर्वोक्तपक्षद्वयं वरं, स्वतः परतोऽपि परिच्छेदो न विद्यत इति स्वत इति घटादिव्यावृत्तिः, घटादयो हि स्वतः परिच्छिन्नाः परत इति धर्मभूत-

ज्ञानव्यावृत्तिः, तद्धि पराधीनसङ्कोचम्, एवं देशकालपरिच्छेदाभावः उक्तः । यद्वा स्वत इति स्वतःपरिमितत्वाभाव उक्तः, अयं वस्त्वपरिच्छेदः तत्कार्यपरिमितदेशकाललसम्बन्धाभाव उक्तः परत इति । अथ वैशेषिकपक्षमुपसंहरन् सूत्रमवतारयति "तदेवमि"ति, तदनन्यत्वमारम्भणशब्दादिभ्यः कस्य कस्मादनन्यत्वमित्यत्राह "तस्मादि"ति, पूर्ववाक्यखण्डानुपादानेनारम्भण–शब्दोपादनस्य हेतुमाह "तदुपपादयद्भ्" इति, पूर्ववाक्ये एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातं तत्र दृष्टान्तश्चोक्तः प्रतिज्ञादृष्टान्तवाक्यद्वयं प्रकृत्यधिकरण उपात्तमुक्तदृष्टान्तेऽपि वैशेषिकमतेन कारणात् कार्यस्यान्यत्वादेकविज्ञानेन सर्वविज्ञानानुपपत्तिमाशङ्क्य तदुपपादयति–

सू० आरम्भण–शब्द आदिर्येषां वाक्यानां तान्यारम्भणशब्दादीनि वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत् अनेन जीवेनात्मना ऽनुप्रविश्य सन्मूलास्सौम्येमास्सर्वाः प्रजास्सदायतनाः सत्प्रतिष्ठाः एतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इत्येतानि प्रकरणान्तरस्थान्यप्येवञ्जातीयकान्यत्राभिप्रेतानि, एतानि हि वाक्यानि चिदचिदात्मकस्य जगतः परस्माद्ब्रह्मणोऽनन्यत्वमुपपादयन्ति, तथा हि "स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कृत्स्नस्य जगतो ब्रह्मैककारणत्वं कारणात्कार्य्यस्यानन्यत्वं च हृदि निधाय कारणभूतब्रह्मविज्ञानेन कार्य्यभूतस्य सर्वस्य विज्ञाने प्रतिज्ञाते सति कृत्स्नस्य ब्रह्मैककारणतामजानता शिष्येण कथं नु भगवः स आदेश इत्यन्यज्ञानेनान्यज्ञाततासम्भवं चोदितो जगतो ब्रह्मै-

कत्कारणतामुपदेक्ष्यन् लौकिकप्रतीतिसिद्धं कारणात्कार्य्यस्यानन्यत्वं तावत् यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादिति दर्शयति यथैकमृत्पिण्डारब्धानां घटशरावादीनां तस्मादनतिरिक्तद्रव्यतया तज्ज्ञानेन ज्ञाततेत्यर्थः ॥

टी० वाचारम्भणमित्यादिवाक्यम् अतस्तदिदं वाक्यमनेन सूत्रेणोपात्तमित्यर्थः । तर्ह्यारम्भण–शब्दादिभ्य इति किमर्थमुक्तं न तु वाचादिभ्य इत्युच्यते–केचिद्वाचारम्भणमित्येकं पदं व्याचक्षते वागालम्बनमिति "यथा वाचा दिशा निशे"ति, वचनात्तद्व्यावृत्त्यर्थं वाचेति पदान्तरमारम्भणमित्यपि पदान्तरमिति दर्शयितुमारम्भण–शब्दादिभ्य इत्युक्तं, समासस्य षष्ठीतत्पुरुषत्वव्यावृत्त्यर्थं व्याचष्टे "आरम्भणे"ति, आदि–शब्दोपात्तानि वाक्यान्याह "सदेवे"ति, एतदभिप्रेतान्याह "प्रकरणान्तरे"ति, एषां वाक्यानामनन्यत्वबोधकतामुपपादयति "तथा ही"ति, एकविज्ञानेन सर्वविज्ञानं प्रतिजानतोऽभिप्रायमाह "कृत्स्नस्ये"ति, दृष्टान्तवाक्यं व्याचष्टे "यथे"ति, मृन्मयमिति पदं व्याचष्टे मृत्पिण्डारब्धानामिति वाक्याभिप्रेतमर्थमाह "तस्मादनतिरिक्तद्रव्यतया तज्ज्ञानेने"ति, कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितमित्यादिश्रुत्यन्तरानुगुण्याद् दृष्टान्तसामर्थ्याद् दार्ष्टान्तिकसामर्थ्याच्च तज्ज्ञानेनेति व्याख्यातं, न हि मृत्पिण्डसत्तया घटशरावादि ज्ञातं भवति, न हि परब्रह्मसद्भावात् सर्वं जगद्विज्ञातं च भवति। वाचारम्भणमित्यादिवाक्यस्य शङ्कामाह–

सू० अत्र काणादवादेन कारणात्कार्य्यस्य द्रव्यान्तरत्वमाशङ्क्य लोकप्रतीत्यैव कारणात्कार्य्यस्यानन्यत्वमुपपादयति वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति आरभ्यते–आलभ्यते स्पृश्यत इत्यारम्भणं "कृत्यल्युटो

बहुल"मिति कर्मणि ल्युट्, वाचा वाक्पूर्वकेण व्यवहारेण हेतुनेत्यर्थः, घटेनोदकमाहरेत्यादिवाक्पूर्वको ह्युदकाहरणादिव्यवहारः, तस्य व्यवहारस्य सिद्धये तेनैव मृद्द्रव्येण पृथुबुध्नोदराकारत्वादिलक्षणो विकारः संस्थानविशेषस्तत्प्रयुक्तं च घट इत्यादि नामधेयं स्पृश्यते उदकाहरणादिव्यवहारविशेषसिध्यर्थं मृद्द्रव्यमेव संस्थानान्तरनामधेयान्तरभाग्भवति ।

टी० "अत्रे"ति, कार्यमिथ्यात्वपक्षे प्रतीतिमात्रेण सतः कार्यस्य वागारब्धत्वाभावद्वाचः पूर्वमपि प्रतीयमानत्वात् परिणामपक्षे च ब्रह्मकार्यस्य जगतः शब्दपरिणामत्वाभावाच्चारम्भण–शब्दस्योपादानार्थत्वमयुक्तम् आरभ्यते आलभ्यते स्पृश्यत इत्यारम्भणमिति आलम्भः स्पर्शहिंसयोरिति निघण्टुकाराः, नामधेयस्य मृदारब्धत्वाभावाद्विकारनामधेययोरुभयोरप्यारम्भण–शब्दवाच्यत्वसिद्धये स्पर्शार्थत्वेन व्याख्यातं विभ्राजमानः सरिरस्य मध्यादित्यत्र यथा सरिर–शब्देन सलिलमुच्यते तद्वदारभ्यत इत्यत्रापि रलयोरभेदो विवक्षित इति भावः । वाचेति तृतीयान्तपदम् अजहल्लक्षणेयं विकारनामधेययोरुभयोरपि हेतुत्वाय वाक्पूर्वकेण व्यवहारेण हेतुनेति व्याख्यातं, हेतुत्वं च प्रयोजनतया न तु साधनतया हेतुत्वमित्यर्थः । तदाह "तस्य व्यवहारस्य सिद्धय" इति, केन स्पृश्यत इत्यपेक्षायां पूर्ववाक्यप्रस्तुनेन मृद्द्रव्येणेत्याह "तेनैवे"ति, धर्मिपरत्वव्यावृत्त्यर्थं विकार–शब्दं व्याचष्टे "संस्थानविशेष"इति स्पर्श–शब्दार्थं विवृण्वन्नुक्तमर्थं संग्रहेणाह "उदकाहरणादी"ति, व्यवहारपूर्वकव्यवहारसिद्धयर्थं कारणद्रव्यमेवावस्थान्तरनामान्तरभाग् भवतीत्युक्तम् आस्ते शेत इत्यादिष्ववस्थान्तरेणापि बुद्धिशब्दान्तरादयो दृश्यन्ते घटः पट इत्यादिषु वस्त्वन्तरत्वेनापि बुद्धिशब्दान्तरादयो दृश्यन्ते, अत्र त्ववस्थान्तरनिबन्धनत्वे किं निश्चायकमित्यपेक्षायां प्रत्यभिज्ञाप्रत्यक्षमिति श्रुतिराहेत्याह–

सू० अतो घटाद्यपि मृत्तिकेत्येव सत्यं मृत्तिका द्रव्यमित्येव सत्यं प्रमाणेनोपलभ्यत इत्यर्थः । न तु द्रव्यान्तरत्वेन, अतस्तस्यैव मृद्धिरण्यादेर्द्रव्यस्य संस्थानान्तरभाक्त्वमात्रेणैव बुद्धिशब्दान्तरादय एवोपपद्यन्ते, यथैकस्यैव देवदत्तस्यावस्थाविशेषैर्बालो युवा स्थविर इति बुद्धिशब्दान्तरादयः कार्य्यविशेषाश्च दृश्यन्ते, यदुक्तं सत्यामेव मृदि घटो नष्ट इति व्यवहारात्कारणादन्यत्कार्य्यमिति तदुत्पत्तिविनाशादीनां कारणभूतस्यैव द्रव्यस्यावस्थाविशेषत्वाभ्युपगमादेव परिहृतं, तत्तदवस्थस्यैकस्यैव तस्यैव द्रव्यस्य ते ते शब्दास्तानि तानि च कार्य्याणीति युक्तं द्रव्यस्य तत्तदवस्थत्वं कारकव्यापारायत्तमिति तस्यार्थवत्त्वम्, अभिव्यक्त्यनुबन्धीनि चोद्यानि तस्या अनभ्युपगमादेव परिहृतानि,

टी० अतो घटाद्यपीति, सत्य-शब्दं व्याचष्टे "प्रमाणेनोपलभ्यत" इति, एवकारं व्याचष्टे "न तु द्रव्यान्तरत्वेन"ति, विकारासत्यत्वं विवक्षितं चेदितिकरणवैयर्थ्यं स्यात्, द्रव्यान्तरत्वसाधकतया परोक्तानां बुद्धिशब्दान्तरादीनां सामान्येनान्यथासिद्धिमाह "अत" इति, दृष्टान्तमाह "यथैकस्ये"ति, बालयुवशरीराणामपि वस्त्वन्तरत्वं वैशेषिकैरुच्यत इति दृष्टान्तोऽपि विप्रतिपन्न इति चेन्न बालयुवादिशब्दाः शरीरद्वारा शरीरिणमभिदधते, तस्य च नश्वरत्वाभावाच्चेतनपर्य्यन्तबुद्धिशब्दान्तरादयोऽवस्थानिबन्धना एवेति । यद्वा आस्ते शेते तिष्ठति गच्छतीत्यादिवत् बुद्धिशब्दान्तरादीनामवस्थाभेदनिबन्धनत्वोपपत्तेर्बालयुवादिशरीरस्याबाधितप्रत्यभिज्ञागोचरस्याभङ्गुरत्वसिद्धिवत्कारेण दृष्टान्ततयोपन्यासः । भावाभावविरोधं पृथक् परिहरति "यदुक्तमि"ति, तस्य परिहृतत्वं दर्शयन्-

कार्यभेदं परिहरति "तत्तदवस्थस्य तस्यैवे"ति, कारकव्यापारवैयर्थ्यं परिहरति "द्रव्यस्ये"ति, अभिव्यक्तिपक्षचोद्यान्यनभ्युपगमात् परिहरति "अभिव्यक्त्यनुबन्धिनी"ति, अभिव्यक्तिरनभ्युपेता चेत् उत्पत्तिः स्वीकृता स्यात्, तदानीमसत्कार्यवादः स्यादित्यत्राह—

सू० उत्पत्त्यभ्युपगमेऽपि सत्कार्य्यवादो न विरुध्यते सत एवोत्पत्तेः, विप्रतिषिद्धमिदमभिधीयते पूर्वमेव सत्तदुत्पद्यते चेति, अज्ञातोत्पत्तिविनाशयाथात्म्यस्येदं चोद्यं द्रव्यस्योत्तरोत्तरसंस्थानयोगः पूर्वपूर्वसंस्थानसंस्थितस्य विनाशः स्वावस्थस्य तूत्पत्तिः, अतः सर्वावस्थस्य द्रव्यस्य सत्त्वात्सत्कार्य्यवादो न विरुध्यते, संस्थानस्यासत उत्पत्तावसत्कार्य्यवादप्रसङ्ग इति चेत् असत्कार्य्यवादिनोऽप्युत्पत्तेरनुत्पत्तिमत्त्वे सत्कार्य्यवादप्रसङ्गः, उत्पत्तिमत्त्वे चानवस्था, अस्माकं त्ववस्थानां पृथक्प्रतिपत्तिकार्य्ययोगानर्हत्वादवस्थावत एवोत्पत्त्यादिकं सर्वमिति निरवद्यं, कपालत्वचूर्णत्वपिण्डत्वावस्थाप्रहाणेन घटत्वावस्थावदेकत्वावस्थाप्रहाणेन बहुत्वावस्था, तत्प्रहाणेनैकत्वावस्था चेति न कश्चिद्विरोधः, तथा सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति सदेवेदम् इदानीम्

टी० "उत्पत्त्यभ्युपगम" इति, अनित्यधर्मोऽवस्था, चोद्यं शङ्कते "संस्थानस्ये"ति, परिहरति "असत्कार्ये"ति, अयमर्थः—यथोत्पत्तेरुत्पत्तिचोद्यं धर्मान्तरारोपणेन नित्यसमावज्जात्युक्तिर्हि भवति, तथाऽवस्थायामुत्पत्तिचोद्यमपि जात्युक्तिः । ननु तत्रोत्पत्तेरुत्पत्तिचोद्यं जात्युक्तिर्भवति न त्ववस्थाया उत्पत्तिकथनं जात्युक्तिरिति चेन्न अवस्थैवोत्पत्तिरित्यभ्युपगमात्, अवस्थाया उत्पत्तिमत्त्वचोदनमुत्पत्तेरुत्पत्तिमत्त्वचोदनमेवेति जात्युक्तिरिति

तदेतभिप्रेत्य प्रतिवन्दीमुखेनोक्तमुत्पत्तेरनुत्पत्तिमत्त्व इति, अस्माकं त्विति अपृथक्सिद्धधर्मतया पृथक्प्रतिपत्तिकार्यानर्हव्यतिरिक्तानाम् उत्पत्त्यादिकं पृथगपेक्षते पृथक्प्रतिपत्तिकार्यानर्हधर्माः पृथगुत्पत्तिनिरपेक्षाः, अत एव ह्युत्पत्तेरुत्पत्त्यादिनैरपेक्ष्यं, तस्मादपृथक्सिद्धधर्मास्तु स्वयं धर्मिण उत्पत्त्याद्यवस्थाभूता इत्यर्थः, अवस्थैव वस्तुन उत्पत्तिर्न त्ववस्थाया उत्पत्तिर्नामास्तीति स्वपक्षवैषम्यद्योतनार्थस्तु-शब्दः । संख्याभेदं परिहरति "कपालत्वे"ति, सद्वारकत्वादविरोधः कालभेदाच्चाविरोध इत्यर्थः । एवं वाचारम्भणमित्यादिवाक्यस्यार्थ उक्तः । अथ सूत्रस्यादि-शब्दोपात्तेषु वाक्येषु सदेवेत्यादिकं दार्ष्टान्तिकवाक्यं व्याचष्टे 'तथे"ति, तथाऽनन्यत्वमेवोपपादितमित्यन्वयः, सच्छब्दः प्रमाणसम्बन्धार्हतां वदति । यद्वा ब्रह्म वदति अन्यतरार्थत्वेऽप्यनन्यपदार्थत्वं सिध्यति सदेवेत्यवधारणेन कदाचिदसत्यत्वं व्यावर्तितम् एकमेवेति नामरूपविभागाभाव उक्तः । अद्वितीयपदेनाधिष्ठात्रन्तरनिषेध इत्यर्थः सदेवेत्यादिवाक्यस्थमिदं-शब्दं व्याचष्टे-

सू० विभक्तनामरूपत्वेन नानारूपं जगदेकम् अग्रे नामरूपविभागाभावेनैकमेवासीत्, सर्वशक्तित्वेनाधिष्ठात्रन्तरासद्भतयाऽद्वितीयं चेत्यनन्यत्वमेवोपपादितं तथा तदैक्षत बहु स्यां प्रजायेयेति वक्ष्यमाणतेजःप्रभृतिविविधविचित्रस्थिरचरूपजगत्त्वेनात्मनोबहुभवनं संकल्प्य जगत्सर्गाभिधानात् कार्य्यभूतस्य जगतः परमकारणात्परस्माद्ब्रह्मणोऽनन्यत्वमवसीयते सच्छब्दवाच्यस्य परस्य ब्रह्मणः सर्वज्ञस्य सत्यसंकल्पस्य निरवद्यस्यैव सदेवेदमिति निर्देशार्हजगत्त्वं सच्छब्दवाच्यस्य च जगतो-

टी० "विभक्तनामरूपत्वेने"ति, इदं जगत्सदेव चेत्कथं सृष्टाद्युपपत्तिरित्यत्राह "अग्रे"इति, अद्वितीयपदं व्याचष्टे "सर्वशक्तित्वेने"ति, एषां पदानामुक्तार्थपरत्वमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनार्थत्वादे-

वावगम्यते, न हि सजातीयविजातीयादिव्यावृत्त्या प्रतिज्ञोपपादनोपयोगः, एषां पदानामुक्तार्थैकपरत्वमुपरितनवाक्यैरप्युपपादयति "तथा तदैक्षते"ति, तेजःप्रभृतीति संकल्पानन्तरं तेजःप्रभृतिसृष्टिप्रतिपादनाद्बहु स्यामिति बहु–शब्दस्तेजःप्रभृतिरूपेण बहुत्वपर इत्यर्थः, बहु–शब्दोक्तनामरूपविभागाभाव एक–शब्दोक्त इति गम्यते, ऐक्षतेत्यनेन अद्वितीयपदस्याधिष्ठात्रन्तरनिवारकत्वं ज्ञातं कथमसतस्सज्जायेतेत्यनेन सदेवेत्यवधारणस्य कदाचिदसत्त्वव्यावृत्तिपरत्वमवगतं कारणभूतस्यैव ब्रह्मणोबहुभवनसंकल्पाभिधानात्कार्यकारणयोरनन्यत्वं च लब्धमित्याह "तथा तदैक्षते"ति, व्यष्टिसृष्टिसंकल्पवाक्यस्य शङ्काविशेषव्युदासकत्वात्तद्व्युदसनीयां शङ्कामाह "सच्छब्दवाच्यस्ये"ति, सच्छब्दस्य ब्रह्मपरत्वे इदं–शब्दवाच्यजगत्सामानाधिकरण्यमनुपपन्नमित्यभिप्रायेणाह "सच्छब्दवाच्यस्ये"ति, सच्छब्दस्य जगत्परत्वे तदैक्षतेत्यादिभिर्विरोध इत्यभिप्रायेणाह "सच्छब्दवाच्यस्यैव जगत" इति, चेतनांशस्यैक्यानुपपत्तिमभिप्रेत्याह–

मू० नामरूपविभागाभावेनैकत्वमद्वितीयत्वमधिष्ठात्रन्तरानपेक्षत्वं पुनरपि तस्यैव विविधविचित्रस्थिरचरस्वरूपजगत्त्वेन बहुभवनसंकल्परूपेक्षणं यथासंकल्पं सर्गश्च कथमुपपद्यत इत्याशङ्क्याह सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी"ति तासां त्रिवृतं त्रिवृतमित्यादि तिस्रो देवता इति कृत्स्नमचिद्वस्तु निर्दिश्य स्वात्मकजीवानुप्रवेशेनैतद्विचित्रनामरूपभाक्करवाणीत्युक्तम्, अनेन जीवेनात्मना मदात्मकजीवेनात्मतया अनुप्रविश्यैतद्विचित्रनामरूपभाक्करवाणीत्यर्थः, स्वात्मनो जीवस्य चात्मतयाऽनुप्रवेशकृतं नामरूपभाक्त्वमित्युक्तं भवति, तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभवदिति श्रुत्यन्तरेण स्पष्टं सजीवं

जगत्परेण ब्रह्मणाऽऽत्मतयाऽनुप्रविष्टमिति तदेतत्कार्य्यावस्थस्य च कारणावस्थस्य च चिदचिद्वस्तुनः सकलस्य स्थूलस्य सूक्ष्मस्य च परब्रह्मशरीरत्वं, परस्य च ब्रह्मण आत्मत्वमन्तर्य्यामिब्राह्मणादिषु सिद्धं स्मारितम्, अनेन पूर्वोक्ता शङ्का निरस्ता, अचिद्वस्तुनि सजीवे ब्रह्मण्यात्मतयाऽवस्थिते नामरूपव्याकरणवचनाच्चिदचिद्वस्तुशरीरकं ब्रह्मैव जगच्छब्दवाच्यमिति सदेवेदमग्र एकमेवासीदित्यादि सर्वमुपपन्नतरं शरीरभूतचिदचिद्वस्तुगताः सर्व विकाराश्चापुरुषार्थाश्चेति ब्रह्मणो निरवद्यत्वं कल्याणगुणाकरत्वं च सुस्थितम् ।

टी० "नामरूपविभागाभावेनैकत्वमि"ति, सेयमित्यादि उदाहृतवाक्यसमुदायस्यार्थोऽन्यत्रोक्तः, तत्र वाक्यैकदेशेनोक्तार्थविरोधशङ्कां परिहरिष्यन्नुदाहृतवाक्यसमुदायप्रतिपन्नमर्थं साधारण्येन वदति "तिस्र"इति, अस्मिन्वाक्ये स्वात्मकजीववाचिपदं दर्शयन्ननुप्रवेशवत् गगनादिव्यावृत्त्यर्थं नियन्तृतयाऽनुप्रवेशं च व[1]दति "अनेने"ति, स्वात्मकजीवेनेत्युक्ते मृदात्मक इतिवत्स्यादिति शङ्कायां विवक्षितार्थविशेषमाह "स्वात्मनो जीवस्य चे"ति, सिंहेन भूत्वा बहवो मया[2] हता इतिवज्जीवेनात्मनेत्यस्यार्थ इति भावः । तम[3]र्थं श्रुत्यन्तरेण स्पष्टयति "तत्सृष्ट्वे"ति, "आत्मतयाऽनुप्रविष्टमि"ति, श्रुत्यन्तरेण स्पष्टमित्यन्वयः, बहुत्वे सति ह्यनुप्रवेशः, स तु कारणावस्थाया एकत्वान्नोपपद्यत इत्यत्राह–

सु० तदेत"दधिकं तु भेदनिर्देशा"दित्यनन्तरमेव वक्ष्यति, तथा

१ दर्शयति इति पा० ।

२ मयाऽत्ता इति पा० ।

३ इममर्थमिति ।

"ऐतदात्म्यमिदं सर्व"मिति कृत्स्नस्य चेतनाचेतनस्य ब्रह्मतादात्म्यमुपदिशति, तदेव च तत्त्वमसीति निगमयति तथा प्रकरणान्तरस्थेष्वपि वाक्येषु सर्वं खल्विदं ब्रह्म आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्, इदं सर्वं यदयमात्मा ब्रह्मवेदं सर्वमात्मवेदं सर्वमित्यनन्यत्वं प्रतीयते, तथाऽन्यत्वं च निषिध्यते "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद, नेह नानाऽस्ति किंचन, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति, तथा "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्ये"दित्यविदुषो द्वैतदर्शनं विदुषश्चाद्वैतदर्शनं प्रतिपादयदनन्यत्वमेव तात्त्विकमिति प्रतिपादयति, तदेवमारम्भणशब्दादिभ्योजगतः परमकारणात्परस्माद्ब्रह्मणोऽनन्यत्वमुपपाद्यते। अत्रेदं तत्त्वं चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्मैव सर्वदा सर्व—शब्दाभिधेयं तत्कदाचित्स्वस्मात्स्वशरीरतयाऽपि पृथग्व्यपदेशानर्हंसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरं तत्कारणावस्थं ब्रह्म कदाचिच्च विभक्तनामरूपव्यवहारार्हंस्थूलदशापन्नचिदचिद्वस्तुशरीरं, तच्च कार्य्यावस्थमिति कारणात्परस्माद्ब्रह्मणः कार्य्यरूपं जगदनन्यत् शरीरभूतचिदचिद्वस्तुनः शरीरिणो ब्रह्मणश्च कारणावस्थायां कार्यावस्थायां च श्रुतिशतसिद्धया स्वभावव्यवस्थया गुणदोषव्यवस्था च "न तु दृष्टान्तभावा"दित्यत्रोक्ता ।

टी० "तदेतदि"ति, ततः किमित्यत्राह "अनेने"ति, पूर्वोक्ताशङ्का इदं-शब्दसामानाधिकरण्येन ब्रह्मणि जगद्गतदोषाशङ्केत्यर्थः । तदुपपादयति अचिद्वस्तुनीत्यादिनाऽनन्तरवाक्येन उपपन्नतरं-मुख्यमेवेति भावः । अथ प्रकरणान्तरस्थवाक्यानामप्येतत्सूत्राभिप्रेतत्वात्तैरनन्यत्वमुपपादयति "तथा प्रकरणान्तरस्थेष्वि"ति, द्वैतदर्शनस्यातात्त्विकत्वं कदाचिन्निवृत्तिवचनेनापि सिद्धमित्याह "यत्र त्वस्ये"ति, तदेवमित्यादि ब्रह्मणश्चिदचितोरुत्पत्तिप्रलयश्रवणात् कारणात्कार्यस्यानन्यत्वात्कारणावस्थायां बहुत्वाभावाच्छरीरशरीरिभावस्यानुपपन्नत्वेन स्वभावव्यवस्था न स्यादित्यत्राह । यद्वा भेदव्यपदेशादित्यादिभिः सूत्रैर्भेदोपपादनेनेदमनन्यत्वोपपादनं व्याहतमित्यत्राह "अत्रेदं तत्त्व"मिति, विशिष्टात्कारणाद्विशिष्टं कार्यं जायत इति शरीरशरीरिभावादिरुपपद्यत इत्यर्थः । ब्रह्माज्ञानवादिभिरस्य सूत्र-स्योक्तमर्थं दूषयति—

मू० ये तु कार्य्यकारणयोरनन्यत्वं कार्य्यस्य मिथ्यात्वाश्रयणेन वर्णयन्ति न तेषां कार्य्यकारणयोरनन्यत्वं सिध्यति सत्यमिथ्यार्थयोरैक्यानुपपत्तेः, तथा सति ब्रह्मणो मिथ्यात्वं जगतः सत्यत्वं वा स्यात । ये च कार्य्यमपि पारमार्थिकमभ्युपयन्त एव जीवब्रह्मणोरौपाधिकमन्यत्वं स्वाभाविकं चानन्यत्वम्, अचिद्ब्रह्मणोस्तु द्वयमपि स्वाभाविकमिति वदन्ति तेषामुपाधिब्रह्मव्यतिरिक्तवस्त्वन्तराभावान्निरवयवस्याखण्डितस्य ब्रह्मण एवोपाधिसम्बन्धाद्ब्रह्मस्वरूपस्यैव हेयाकारपरिणामाच्च शक्तिपरिणामाभ्युपगमे शक्तिब्रह्मणोरनन्यत्वाच्च जीवब्रह्मणोः कर्म्मवश्यत्वापहतपाप्मत्वादिव्यवस्थावादिभ्योऽचिद्ब्रह्मणोश्च परिणामापरिणामवादिभ्यः श्रुतयो व्याकुप्येयुः । ये पुनर्निरस्तनिखिलभे-

कर्तृत्वादिसमस्तविकल्पविभवं सर्वशक्तियुक्तं सन्मात्रद्रव्यमेव कारणं ब्रह्म तच्च प्रलयवेलायां शान्ताशेषसुखदुःखानुभवविशेषं स्वप्रकाशमपि सुषुप्तात्मवदचि[1]द्विलक्षणमवस्थितं सृष्टिवेलायां मृत्तिकाद्रव्यमिव घटशरावादिरूपं समुद्र इव च फेनतरङ्गबुद्बुदादिरूपो भोक्तृभोग्यनियन्तृरूपेणांशचया ऽवस्थमवतिष्ठते, अतो भोक्तृत्वभोग्यत्वनियन्तृत्वानि तत्प्रयुक्ताश्च गुणदोषाः शरावत्वघटत्वमणिकत्ववत्तद्गतकार्य्यभेदवच्च व्यवतिष्ठन्ते, भोक्तृभोग्यनियन्तृणां सदात्मनैकत्वं च घटशरावमणिकादीनां मृदात्मनैकत्ववदुपपद्यते, अतस्सन्मात्रमेव द्रव्यं सर्वावस्थावस्थितमिति ब्रह्मणोऽनन्यज्जगदातिष्ठन्ते, तेषां सकलश्रुतिस्मृतीतिहासपुराणन्यायविरोधः, सर्वा हि श्रुतयस्सस्मृतीतिहासपुराणास्सर्वेश्वरेश्वरं सदैव सर्वज्ञं सर्वशक्तिं सत्यसंकल्पं निरवद्यं देशकालानवच्छिन्नानवधिकातिशयानन्दं परमकारणं ब्रह्म प्रतिपादयन्ति, न पुनरीश्वरादपि परमीश्वरांशि सन्मात्रं, तथा हि सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति, ब्रह्म वा इदमग्र आसीदेकमेव तदेकं सन्न व्यभवत् तच्छ्रेयोरूपमत्यसृजत् क्षत्रं यान्येतानि देवक्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्ज्जन्यो यमो मृत्युरीशान इति, आत्मा वा इदमेकमेवाग्र आसीत् नान्यत्किञ्चन

१ सुषुप्ता त्मवदचिदविलक्षणमिति पा० ।

मिषत्स ऐक्षत लोकान्नु सृजा इति, एको ह वै नारायण आसीत् न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्य्यः स एकाकी न रमते तस्य ध्यानान्तस्थस्ये"त्यादिभिः परमकारणं सर्वेश्वरेश्वरो नारायण एवेत्यवगम्यते

टी० "ये त्वि"ति, भास्करमतं दूषयति "ये चे"ति, निरवयवत्वादिविशेषणं ब्रह्मणि दोषसम्बन्धज्ञापनाय, शक्तिपरिणामाभ्युपगम इति, शक्तेर्ब्रह्मानन्यत्वाभ्युपगमात्तेनापि व्याकुलमेवेत्यर्थः । यादवप्रकाशमतं निरस्यति "ये पुनरि"ति, विप्लवो—विकारः तेषामित्यादि सदैव सर्वज्ञमित्यनेन कारणावस्थायामपि सर्वज्ञत्वादिकं विवक्षितं, यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः तस्मादेतद् ब्रह्म नामरूपमन्नं च जायत इति हि श्रुतिः,

मू० सद्ब्रह्मात्मशब्दा हि तुल्यप्रकरणस्थास्तत्तुल्यप्रकरणस्थेन नारायण—शब्देन विशेषितास्तमेवावगमयन्ति, तमीश्वराणां परमं महेश्वरं तद्दैवतानां परमं च दैवतं, स कारणं करणाधिपाधिपो न तस्य कश्चिज्जनिता न चाधिप" इतीश्वरस्यैव कारणत्वं श्रूयते, स्मृतिरपि मानवी "ततः स्वयम्भूर्भगवानिति, प्रकृत्य "सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु वीर्य्यमवा[1]सृजदि"ति, इतिहासपुराणान्यपि पुरुषोत्तममेव परमकारणमभिदधति "नारायणो जगन्मूर्तिरनन्तात्मा सनातनः। स सिसृक्षुः सहस्रांशादसृजत्पुरुषान् द्विधा। विष्णोः स-

१ वीर्यमपासृजदिति पा० ।

काशादुद्भूतं जगत्तच्चैव च स्थित”मित्यादिषु, न चेश्वरः सन्मात्रमेति वक्तुं शक्यं तस्य तदंशत्वाभ्युपगमात्सविशेषत्वाच्च, न च तस्य ज्ञानानन्दाद्यनन्तकल्याणगुणयोगः कादाचित्क इति वक्तुं शक्यते, तेषां स्वाभाविकत्वेन सदातनत्वात्, पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, यः सर्वज्ञः सर्वविदित्यादिभ्यः ज्ञानानन्दादिशक्तियोग एवास्य स्वाभाविक इति मा वोचः शक्तिस्स्वाभाविकी ज्ञानबलक्रिया च स्वाभाविकीति पृथङ्निर्देशाल्लक्षणाप्रसङ्गाच्च ।

टी० महोपनिषद्येव नारायणकारणत्वं श्रूयते अन्यत्र तु सद्ब्रह्मात्मादीनां तत्कथं सर्वोपनिषत्स्वीश्वरस्य कारणत्वं श्रूयत इत्यत्राह “सद्ब्रह्मे”ति, सद्ब्रह्म-शब्दौ दृष्टान्तार्थौ, यथा सद्-ब्रह्मशब्दौ सामान्यविशेषशब्दार्थतया स्वीकृतौ तद्वदिति भावः । तमीश्वराणामित्यादि ईश्वरस्यैवेत्येवकारेण “न चास्य कश्चिदित्युक्तनिषेधो विवक्षितः, ततः स्वयंभूरित्यत्र भगवच्छब्द ईश्वरवाचीति भावः । न्यायविरोधमाह “न चे”ति, सविशेषत्वाच्च-नियन्तृत्वरूपविशेषवत्त्वात्, सन्मात्रं हि नियन्तृत्वादिविशेषरहितं शक्तिश्च स्वाभाविकीत्यादिशक्तिविशेषे अघटितघटनासामर्थ्यरूपे शक्ति-शब्दोवर्तते ज्ञानादिकार्यकरत्वे च तत्रोभयमप्यसंकुचितं शक्ति-शब्देनोच्यते तत्सङ्कोचेन पृथङ्निर्देशवैयर्थ्यमाशङ्क्याह “लक्षणाप्रसङ्गाच्चे”ति, ज्ञानादिशब्दैस्तत्तच्छक्तिः प्रतिपाद्या चेल्लक्षणा शक्तिशब्दस्य सङ्कोचोऽप्यस्वरसः, असङ्कोचे पृथङ्निर्देशवैयर्थ्यमित्यर्थः ।

सू० न च पाचकादिवत्सर्वज्ञ इत्यादिषु शक्तिमात्रे कृत्प्रत्यय इति वक्तुं शक्यं कृत्प्रत्ययमात्रस्य शक्तावस्मरणात्, “शक्तौ हस्तिकपाटयो”रित्यादिषु केषांचिदेव कृत्प्रत्ययानां

शक्तिविषयत्वस्मरणात्, पाचकादिषु त्वगत्या लक्षणा समाश्रीयते । किञ्चेश्वरस्य तदंशविशेषत्वात्तस्य चांशित्वे तरङ्गात्समुद्रस्येवांशादंशिनोऽधिकत्वात्, तमीश्वराणां परमं महेश्वरं, न तत्समश्चाभ्यधिकश्च दृश्यत इत्यादीनीश्वरविषयाणि परःशतानि वचांसि बाध्येरन् । किञ्च सन्मात्रस्य सर्वात्मकत्वेंऽशित्वे चेश्वरस्य तदंशविशेषत्वात्तस्य सर्वात्मकत्वांशित्वोपदेशा व्याहन्येरन्, न हि मणिकात्मकत्वं तदंशत्वं वा घटशरावादेः स्वांशेषु सर्वेषु सन्मात्रस्य पूर्णत्वेनेश्वरांशेऽपि तस्य पूर्णत्वात्तदात्मकानि तदंशाश्चेतराणि वस्तूनीति चेत् न घटेऽपि सन्मात्रस्य पूर्णत्वादीश्वरस्यापि घटात्मकत्वात्तदंशत्वप्रसङ्गात्,

टी० न लक्षणा शक्तिमात्रेऽपि प्रत्ययविधानादित्यत्राह "न चे"ति, "शक्तौ हस्तिक[1]पाटयोरि"त्यादिष्वित्यत्रादि–शब्देन शकि लिङ् चेत्यादिसूत्रं विवक्षितं, शकि लिङ् चेत्यत्र च–शब्दात् कृत्प्रत्ययान्तराणामपि शक्तौ विधानं सूचितं, तत्र विशेषविधानाभावे ऽपि पाचकादिषु शक्तौ कृदन्तत्वेन प्रयोगदर्शनात् कतिपयविधानमुपलक्षणमिति चेन्न विशेषोपादानान्यथानुपपत्त्या कृन्मात्रस्य शक्त्यर्थत्वानुपपत्तेरित्यर्थः, शक्तिविषयप्रत्ययाभावे ऽपि पाचकादिषु शक्त्यर्थत्वं दृश्यत इत्यत्राह "पाचकादिष्वि"ति,

भा० न च सन्मात्रस्य घटोऽस्ति पटोऽस्तीति वस्तुधर्मतयाऽवगतस्य द्रव्यत्वं कारणत्वं चोपपद्यते, व्यवहारयोग्यता हि सत्त्वं विरोधिव्यवहारयोग्यता तद्व्यवहारयोग्यस्यासत्त्वं द्रव्यमेव सदित्यभ्युपगमे क्रियादीनामसत्त्वप्रसङ्गः, क्रियादिषु काशकुशावलम्बनेऽपि सर्वत्रैकरूपा सत्ता दुरुपपादा

---

१ हस्तिकवाटयोरिति तु द्राविडाः पठन्ति ।

सदात्मना च सर्वस्याभिन्नत्वे सर्वज्ञत्वेन सर्वस्वभावप्रतिसन्धानात्सर्वगुणदोषसंकरप्रसङ्गश्च पूर्वमेवोक्तः, अतो यथोक्तप्रकारमेवानन्यत्वम् । अथोच्येत एकस्यैवावस्थान्तरयोगेऽपि बुद्धिशब्दान्तरादयो बालत्वयुवत्वादिषु दृश्यन्ते मृद्दारुहिरण्यादिषु द्रव्यान्तरत्वेऽपि दृश्यन्ते तत्र मृद्घटादिषु कार्य्यकारणेषु बुद्धिशब्दान्तरादयोऽवस्थानिबन्धना एवेति कुतो निर्णीयत इति तत्रोत्तरम्—

## सू० भावे चोपलब्धेः ॥ १६ ॥

कुण्डलादिकार्य्यसद्भावे च कारणभूतस्य हिरण्यस्योपलब्धेः, इदं कुण्डलं हिरण्यमिति हिरण्यत्वेन प्रत्यभिज्ञानादित्यर्थः, न चैवं हिरण्यादिषु द्रव्यान्तरेषु मृदादय उपलभ्यन्ते, अतो बालयुवादिवत्कारणभूतमेव द्रव्यमवस्थान्तरापन्नं कार्य्यमिति गीयते ।

टी० न च सन्मात्रस्येति अनुवर्त्तमानं सन्मात्रं किं वस्तुधर्मः ? उत द्रव्य?मिति विकल्पमभिप्रेत्य धर्मपक्षे दूषणमाह "न चे"ति, सत्त्वप्रसङ्गादसत्त्वं शिक्षयति "विरोधी"ति, द्रव्यपक्षे दूषणमाह "द्रव्यमेवे"ति, क्रियादिष्विति काशस्य कुशत्वेन कुशस्यानेऽवलम्बनं काशकुशावलम्बनम् अमुख्यमित्यर्थः द्रव्यसम्बन्धः क्रियादेः सत्त्वं चेदेकं प्रयोजकं न स्यादित्यर्थः स्वोक्तस्यैव सूत्रार्थत्वमुपसंहरति "अत" इति, मृत्तिकेत्येव सत्यमिति वाक्योक्तप्रत्यभिज्ञाप्रत्यक्षसिद्धानन्यत्वं वदत उत्तरसूत्रस्य शङ्कामाह "अथोच्यते इति सू० भावे चोपलब्धेः, कस्य भावे कस्योपलब्धेरित्यत्राह कुण्डलादी"ति, इदं कुण्डलं हिरण्यमिति सामानाधिकरण्येन प्रत्यभिज्ञानमत्राभिप्रेतं समवायिकारणानुवृत्तिं वदतोऽसत्कार्यवादिनोऽप्यभिमतताया वैयधिकरण्येन प्रत्यभिज्ञायाः स्वपक्षासाधकत्वात् तथाऽपि बुद्धिशब्दान्तरादिभिर्वस्त्वन्तरत्वं कल्प्यत इत्यत्राह—

भा० द्रव्यान्तरवादिनाऽप्यभ्युपेतेनावस्थान्तरयोगेन बुद्धिशब्दान्तरादिषूपपन्नेष्वनुपलब्धद्रव्यान्तरकल्पनानुपपत्तेश्च, न च जातिनिबन्धनेयं प्रत्यभिज्ञा जात्याश्रयभूतद्रव्यान्तरानुपलब्धेः, एकमेव हि हेमजातीयं द्रव्यं कार्य्यकारणोभयावस्थं दृश्यते, न च द्रव्यभेदे समवायिकारणानुवृत्त्या कार्ये प्रतिसन्धानमिति वक्तुं शक्यं द्रव्यान्तरत्वे सत्याश्रयानुवृत्तिमात्रेण तदाश्रिते द्रव्यान्तरे प्रतिसन्धानानुपलब्धेः, गोमयादिकार्य्ये वृश्चिकादौ गोमयादिप्रतिसन्धानं न दृश्यत इति चेन्न तत्राप्याद्यकारणभूतपृथिवीद्रव्यप्रत्यभिज्ञानात्, अग्निकार्य्ये धूमेऽग्निप्रत्यभिज्ञानं न दृश्यत इति चेद् भवतु न तत्र प्रत्यभिज्ञानं तथाऽपि न दोषः अग्नेर्निमित्तकारणमात्रत्वात् अग्निसंयुक्तार्द्रेन्धनाद्धि धूमो जायते गन्धैक्याच्चार्द्रेन्धनकार्यमेव धूमः अतः कार्यभावे च तदेवेदमित्युपलब्धेर्बुद्धिशब्दान्तराद्योऽवस्थाभेदमात्रनिबन्धना इत्यवगम्यते

टी० "द्रव्यान्तरवादिने"ति, अभ्युपेतेन असमवायिकारणत्वेनाभ्युपेतेनेत्यर्थः, अनन्यथासिद्धं हि कल्पकं बुद्धिशब्दान्तरादीनामन्यथासिद्धत्वाच्च कल्पकत्वमित्यर्थः, न चेति सोऽयं गौरित्यादिषु जातिनिबन्धनं प्रत्यभिज्ञानं दृष्टं तथाऽत्रापि जातिनिबन्धनमित्यर्थः । परिहरति "जात्याश्रये"ति, तत्र हि व्यक्तिद्वयोपलब्धिरस्ति अत्र तु न तथा व्यक्त्यन्तरमुपलभ्यत इत्यर्थः । कथमुपलभ्यत इत्यत्राह "एकमेवे"ति, पुनः शङ्कते "न चे"ति, परिहरति "एवमेवे"ति, पुनः शङ्कते "न चे"ति, परिहरति "द्रव्यान्तरत्वे सती"ति, न हि घटस्थे जले घटो जलमिति सामानाधिकरण्येन प्रत्यभिज्ञानं भवतीत्यर्थः । चोद्यं शङ्कते "गोमये"ति, परि-

हरति "ने"ति, अयमर्थः समवायिकारणानुवृत्तिं वदता त्वयाऽपि प्रतिसन्धानाभावचोद्यं परिहरणीयं तत्रादिकारणपृथिवीप्रत्यभिज्ञानमस्तीति वदसि चेत्तदस्माकमपि तुल्यमिति पुनरप्यापातप्रतीतिनिबन्धनं चोद्यं शङ्कते "अग्निकार्य"इति, परिहरति 'भवत्वि"ति, निमित्तकारणाप्रत्यभिज्ञानं न दोषः उपादानमेव प्रत्यभिज्ञातव्यं, तच्च धूमे गन्धवत्त्वात् पृथिवीत्वं प्रत्यभिज्ञायत इत्यर्थः । सूत्रार्थमुपसंहरति "अत"इति, अधिकरणार्थेन सूत्रस्यान्वितत्वमाह–"तस्मादि"ति,

सू० तस्मात्कारणादनन्यत्कार्यम्,

इतश्च

सू० सत्त्वाच्चापरस्य ॥ १७ ॥

अपरस्य–कार्यस्य कारणे सत्त्वाच्च कारणात्कार्यस्यानन्यत्वं लोकवेदयोर्हि कार्यमेव कारणतया व्यपदिश्यते यथा लोके सर्वमिदं घटशरावादिकं पूर्वाह्णे मृत्तिकैवासीदिति, वेदे च सदेव सोम्येदमग्र आसीदिति ॥

टी० सू० सत्त्वाच्चापरस्य, कारणे सत्त्वात्कारणावस्थायां सत्त्वात्, केचिदनयोः सूत्रयोरिमां भिदामाहुः–सोऽयमिति ज्ञानं प्रत्यभिज्ञा, सा पूर्वोक्ता अयं स इति ज्ञानमभिज्ञा साऽत्रोच्यते अथवा पूर्वत्रैकद्रव्यताविषयबुद्धिरुक्ता,अत्र तु तथा व्यपदेश उच्यत इति भिदा, अत एव ह्युत्तरसूत्रे असद्व्यपदेशान्नेति चेदित्युक्तम्, एतदभिप्रायेण भाष्येऽपि कार्यमेव कारणतया व्यपदिश्यत इत्युक्तम्, श्रुतिसिद्धं प्रत्यभिज्ञानं पूर्वमुक्तं लोकवेदयोरुभयत्रापि व्यपदेशस्त्वत्रोक्तः, अत्र कार्ये कारणव्यपदेशोन कथितः कारणे कार्यव्यपदेश उक्तः, अत्र हेतुः सदेवेदमग्र एकमेवेति श्रुत्यनुसारः ॥ ननु मृदयं घट इति प्रत्यभिज्ञा ज्वालाप्रत्यभिज्ञानवत् भ्रान्ता स्यात् बुद्धिशब्दान्तरादिभिर्वस्त्वन्तरस्य साधितत्वात्, नैवं ज्वालायां ह्यनन्यथासिद्धहेतुना भेदसिद्धेः प्रत्यभिज्ञानस्य भ्रान्तत्वनिर्णयः अत्र बुद्धिशब्दान्तरादयोऽन्यथासिद्धाः, ज्ञानं तु स्वतः प्रमाणमिति यथोक्त एवार्थः ।

## सू० असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च ॥ १८ ॥

यदुक्तं कारणे कार्यस्य सत्त्वं लोकवेदाभ्यामवगम्यत इति तदयुक्तम्, असद्व्यपदेशात असदेवेदमग्र आसीत असद्वा इदमग्र आसीत् इदं वाऽग्रे नैव किंचनासीत् इति, लोके च सर्वं घटशरावादिकं पूर्वाह्णे नासीदिति अतोयथोक्तं नोपपद्यते इति चेत् तन्न धर्मान्तरेण तथा व्यपदेशात् स खल्वसद्व्यपदेशस्तस्यैव कार्यद्रव्यस्य पूर्वकाले धर्मान्तरेण संस्थानान्तरेण न भवदभिप्रेतेन तुच्छत्वेन सत्त्वासत्त्वे हि द्रव्यधर्मावित्युक्तं, तत्र सत्त्वधर्माद् धर्मान्तरमसत्त्वम् इदं–शब्दनिर्दिष्टस्य जगतः सत्त्वधर्मो नामरूपे असत्त्वधर्मस्तु तद्विरोधिनी सूक्ष्मावस्था अतो जगतो नामरूपयुक्तस्य तद्विरोधिसूक्ष्मदशापत्तिरसत्त्वं कथमिदवमगम्यते वाक्यशेषाद्युक्तेः शब्दान्तराच्च वाक्यशेषस्तावत् इदं वाऽग्रे नैव किंचन आसीत् इत्यत्र तदसदेव मनोऽकुरुत स्यामितीति अनेन वाक्यशेषगतेन मनस्कारलिङ्गेन असच्छब्दार्थे तुच्छातिरिक्ते निश्चिते तदैकार्थ्यात् असदेवेदमित्यादिष्वप्यसच्छब्दस्यायमेवार्थ इति निश्चीयते, युक्तेश्च असत्त्वस्य धर्मान्तरत्वमवगम्यते युक्तिर्हि सत्त्वासत्त्वे पदार्थधर्मावववगमयति मृद्द्रव्यस्य पृथुबुध्नोदराकारयोगो घटोऽस्तीति व्यवहारहेतुः, तस्यैव तद्विरोध्यवस्थान्तरयोगो घटो नास्तीति व्यवहारहेतुः, तच्च

कपालाद्यवस्थायास्तद्विरोधित्वेन सैव घटावस्थस्य नास्तीति व्यवहारहेतुः । न च तद्व्यतिरिक्तो घटाभावो नाम कश्चिदुपलभ्यते, न च तत्कल्प्यते तावतैवाभावव्यवहारोपपत्तेः, तथा शब्दान्तराच्च पूर्वकाले धर्मान्तरयोग एवावगम्यते शब्दान्तरं च पूर्वपूर्वादाहृतं सदेव सोम्येदमग्र आसीदित्यादिकं तत्र हि श्रुतस्तु खलु सोम्यैवं स्यादिति तुच्छत्वमाक्षिप्य सदेव सोम्येदमग्र आसीदिति व्यवस्थापितं तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियतेति सुस्पष्टमुक्तम्, इदानीं कार्यस्य कारणादनन्यत्वे निदर्शनद्वयं द्वाभ्यां सूत्राभ्यां दर्शयति—

टी० सू· असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद् युक्तेः शब्दान्तराच्च, यदुक्तमिति सत्त्वासत्त्वे हि द्रव्यधर्मावित्युक्तमिति व्यवहारयोग्यता सत्त्वं विरोधिव्यवहारयोग्यता तद्व्यवहारयोग्यस्य असत्त्वमित्युक्तमित्यर्थः, धर्मान्तरेणेति अत्र धर्मान्तर—शब्दस्यार्थमाह "तत्रे"ति, सत्त्वासत्त्वयोरापेक्षिकत्वमभिप्रेत्याह "इदं—शब्दनिर्दिष्टस्ये"ति, वाक्यशेषादिति असद्वा इदमग्र आसीदित्यत्र तदात्मानं स्वयमकुरुतेति वाक्यशेषः, अश्रुतवाक्यशेषेषु प्रदेशेषु निर्वाहमाह "तदैकार्थ्यादि"ति, युक्तेश्चेति पिण्डत्वकपालत्वावस्थयोः साधारणमाह "तस्यैव तद्विरोध्यवस्थान्तरयोगो घटो नास्तीति व्यवहारहेतु"रिति, एतद्विवृणोति "तत्रे"ति, न च तद्व्यतिरिक्त इति, अभावान्तरवादिनाऽपि अभावाभावोभाव इत्यभ्युपगतः, अन्यथाऽनवस्थाप्रसङ्गात् तद्वत्सर्वत्राभावव्यवहारस्य विरोध्यवस्थान्तरेणैवोपपन्नत्वान्न तद्व्यतिरिक्तस्य कल्पनमित्यर्थः । पिण्डत्वकपालत्वे घटस्य प्राक्प्रध्वंसाभावौ घटत्वमेव पटादन्योन्याभावः, कालविशेषविशिष्टदेशविशेषत्वं संसर्गाभावः, यथा मध्यान्हविशेषितप्राङ्गणत्वं, यद्वा घटस्याल्पत्वविशेषितदेशान्तरसंसर्गपिण्डत्वकपालत्वेष्वन्यतमस्तद्देशापेक्षया संसर्गा-

भावः, उत्तरसूत्रद्वयकृत्यमाह "इदानीमि"ति, निदर्शनत्वेन वक्ष्यमाणस्य पटादेरपि विप्रतिपन्नत्वात् न दृष्टान्तत्वमुपपद्यत इति शङ्काव्युदासार्थम् इदानीमित्युक्तं, पूर्वसूत्रैरनन्यत्वे साधिते सतीत्यर्थः, निदर्शनद्वयमिति लौकिकं वैदिकमिति निदर्शनयोर्विभागः बहूनामेकावस्थत्वे एकस्य बहुत्वावस्थत्वे च दृष्टान्त इति वा विभागः ॥

## सू० पटवच्च ॥ १९ ॥

भा० तथा तन्तव एव व्यतिषङ्गविशेषभाजः पट इति नामरूपकार्यान्तरादिकं भजन्ते तद्वद् ब्रह्मापि

टी० सू० पटवच्च, इह बहूनामेकावस्थत्वे लौकिकदृष्टान्त उक्तः व्यतिषङ्गो—मिथः संसर्गः । ननु तन्तुबहुत्वाप्रहाणेन पटैत्वदर्शनात् द्रव्यभेदाभावाच्च एकस्मिन् एव द्रव्ये युगपद्बहुत्वैकत्वे वर्तेते इति भिन्नाभिन्नत्वमभ्युपगतं स्यात् उच्यते—दूष्यभिन्नाभिन्नत्वाविवेकनिबन्धनमिदं परिचोदनं, न हि भिन्नाभिन्नशब्दवाच्यं सर्वं दूष्यमपि तु यत्र भावाभावाविरोधः तदेव भिन्नाभिन्नत्वं दूष्यं तच्च धर्मधर्मिणोर्धर्मिद्वयस्य च मिथस्तादात्म्यतदभावलक्षणं यथा जातिर्व्यक्तिर्भवति न भवति चेति यथा खण्डो मुण्डो भवति न भवति चेति, न चैवं तन्तुपटेषु भावाभावाविरोधः तन्तुभ्यः पटो ह्यभिन्न एवावगतः न तु भिन्नः तन्तवश्च मिथो भिन्ना एवाभ्युपगताः, न त्वभिन्नाः तेषां च पटादभिन्नत्वं नाम तस्य परस्परसंसृष्टेभ्यस्तेभ्योऽनन्यत्वं, न च तेषामन्योन्याभेदः, यद्यभेदो नाम एकस्य तन्तोस्तन्त्वन्तरानतिरेकः तर्हि द्वितीयतन्त्वनुपलम्भप्रसङ्गः परिमाणाधिक्यं च न स्यात् यदि संसर्ग एवाभेदः नास्ति विवादः स्याद्यद्येकत्वं सङ्ख्योत्पत्तिः सा तर्हीष्टा, पटत्वावस्थाप्राप्तावेव एकत्वोत्पत्त्यभ्युपगमात् तर्हि भेदाभेदाभ्युपगम इति चेन्न तस्य भेदप्रतिक्षेपकत्वाभावात्, यथा विशिष्टे वस्तुनि विशेष्यैक्यं न विशेषणभेदप्रतिक्षेपकं तद्वत् कथं तत्तुल्यत्वमुच्यते तन्तुषु तन्तुत्वस्येव पटत्वस्य प्रत्येकतन्तुपरिसमाप्तत्वाभावात् कृत्स्नतन्तुवृत्तिना पटत्वेन तन्तव एककार्यतां भजन्ते, पृथगवस्थान-

दशायां कस्यचिदनंशभूता अपि तन्तवः पटत्वावस्थायां सङ्घातापेक्षयां-ऽशत्वं भजन्ते, अतस्तन्तुगताश्च संस्थानवर्णपरिमाणादयः पटस्य प्रादेशिकविशेषणानि भवन्ति गगनस्य दुन्दुभ्यादिशब्दवत् भेदकाकारेण विनांशभेदस्य प्रतिपत्तुं वक्तुं चाशक्यत्वात् अंशभेदो नाम विशेषणभेदः अंशिन एकत्वं च विशेष्यैक्यमिति फलितम्, इयान् विशेषः केचित्प्रादेशिकधर्मा-यावद्द्रव्यभाविनः, केचिदयावद्द्रव्यभाविनश्चेति, यतो नभसि प्रादेशिकविशेषाः कादाचित्काः अत एव तत्र स्वाभाविकांशभेदवादोऽपि निरस्तः। ननु गगनं घटाद्युपाधिभिः कार्त्स्न्येन सम्बध्यते चेद् गगनस्याल्पत्वं घटस्य विभुत्वं वा स्यात् गगनांशभेदेन चेत् सोंऽशभेदः किमुपाधिकृतः तदानीं तस्याप्युपाधेः कार्त्स्न्येन सम्बन्धायोगात्, अंशभेदेन सम्बन्धार्थमुपाध्यन्तरापेक्षायामनवस्था स्यात् अतो घटादिसंयुक्तगगनांशभेदः स्वाभाविक इत्यभ्युपगन्तव्यः, नैवं गगनादिव्यापकपदार्थानां तत्तत्सूक्ष्मतरोपाध्यन्वितात्यल्पांशभेदानां स्वाभाविकत्वे परमाणुपुञ्जात्मकत्वप्रसङ्गात् क्षणिकत्वप्रसङ्गाच्च गगनादीनां परिमाणविशेषाः क्षणिकाः क्षणिकसंयोगादयश्च गगनादिभिः किं कालानवच्छिन्नैःसम्बध्यन्ते? उत कालभेदावच्छिन्नैः? क्षणोपाधयश्च किं कालेनानवच्छिन्नेन सम्बध्यन्ते? उतावच्छिन्नेन? आद्ये गगनादीनां क्षणकालवर्तित्वं परिणामविशेषसंयोगादीनां नित्यत्वादिकं वा स्यात्, द्वितीये च अवच्छेदकोपाधीनां पूर्ववदनवच्छिन्नगगनादिना सम्बन्धायोगेन अवच्छिन्नेन सम्बन्धसिद्ध्यर्थम् अवच्छेदकोपाध्यन्तरापेक्षया अनवस्था स्यादिति तत्परिहाराय गगनादेः प्रतिक्षणभेदस्य स्वाभाविकत्वमुपगन्तव्यमिति गगनादीनां क्षणिकत्वं स्यात्, एवं ब्रह्मपर्यन्तानां व्यापकपदार्थानां क्षणिकत्वं परमाणुपुञ्जात्मकत्वं स्यात्, त्वया च भिन्नाभिन्नत्वमभ्युपगतम्, अतो भिन्नाभिन्नस्वभावक्षणिकपरमाणुपुञ्जकारणकं जगदिति ब्रह्मकारणवादः परित्यक्तः स्यात्, अतो गगनादिषु प्रदेशभेद औपाधिकोऽभ्युपगन्तव्यः, उपाधिश्च न कृत्स्नाकाशेन सम्बध्यते परिमितत्त्वात्, नापि स्वतोभिन्नांशेन स्वतोंऽशभेदे पूर्वोक्तदूषणस्य दुस्तरत्वात्, नाप्युपाध्यन्तरभिन्नेन तन्नैरपेक्ष्यात्, तन्नैरपेक्ष्यं चोपाधित्वादेव

स्वतस्तदाकाररहिते वस्तुनि तदाकारनिष्पादनसमर्थो ह्युपाधिः स्वतो निर्दुःखे ह्यात्मनि उपाधिर्दुःखहेतुः, स हि न पूर्वमेवात्मनि सहजदुःखान्तरयोगमपेक्षते, अत उपाधिः कश्चित् कल्प्याकारकल्पने सहतज्जातीययोगं नापेक्षते । किञ्च उपाधिसम्बन्ध एव गगनस्य भेदः अर्थान्तरादर्शनात् तावता भेदव्यवहारे सम्भवत्यर्थान्तरकल्पनायोगाच्च उपाधिसम्बन्धरूपो भेदश्च स्वावच्छेद्यवस्त्ववच्छेदे भेदान्तरनिरपेक्षः भेदत्वात् स्वतःसिद्धभेदवत्, न हि देहात्मनोर्भेदः स्वाश्रयावच्छेदे भेदान्तरमपेक्षते, अतो न स्वतो नभसि भिन्नांशत्वं पटस्यांशभेदे सत्यपि भावाभावविरोधगर्भे भिन्नाभिन्नत्वं नास्तीति दर्शितम् । तन्नांशभेदश्च विशेषणभेदे पर्यवस्यतीत्युक्तम्, अतो निर्दोषः सत्कार्यवादः ॥

## सू० यथा च प्राणादिः ॥ २० ॥

भू० यथा च वायुरेक एव शरीरे वृत्तिविशेषं भजमानः प्राणापानादिनामरूपादिकार्यान्तराणि भजते तद्वद् ब्रह्मैकमेव विचित्रस्थिरचरूपं जगद् भवतीति परमकारणात्परस्माद् ब्रह्मणोऽनन्यत्वं जगतः सिद्धम् ॥ आरम्भणाधिकरणं समाप्तम् ॥

टी० सू० यथा च प्राणादिः, एकस्य बहुत्वावस्थत्वे वैदिकदृष्टान्तोऽत्र प्रदर्श्यते अधिकरणार्थमुपसंहरति "इती"ति, ॥ आरम्भणाधिकरणं समाप्तम् ॥

इतरव्यपदेशाधिकरणम् ।

## सू० इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥

भू० जगतो ब्रह्मानन्यत्वं प्रतिपादयद्भिस्तत्त्वमसि अयमात्मा ब्रह्मेत्यादिभिर्जीवस्यापि ब्रह्मानन्यत्वं व्यपदिश्यत इत्युक्तं, तत्रेदं चोद्यते यदीतरस्य जीवस्य ब्रह्मभावोऽमीभिर्वा-

क्यैर्व्यपदिश्यते तदा ब्रह्मणः सार्वज्ञ्यसत्यसङ्कल्पत्वादियुक्तस्यात्मनो हितरूपजगदकरणमहितरूपजगत्करणमित्यादयो दोषाः प्रसज्येरन्, आध्यात्मिकाधिदैविकाधिभौतिकानन्तदुःखाकरं चेदं जगत्, न चेदृशे स्वानर्थे स्वाधीनो बुद्धिमान्प्रवर्तते जीवाद्ब्रह्मणो भेदवादिन्यः श्रुतयो जगद्ब्रह्मणोरनन्यत्वं वदता त्वयैव परित्यक्ताः भेदे सत्यनन्यत्वासिद्धेः, औपाधिकभेदविषया भेदश्रुतयस्स्वाभाविकाभेदविषयाश्चाभेदश्रुतय इति चेत्तचेदं वक्तव्यं स्वभावतः स्वस्मादभिन्नं जीवं किमनुपहितं जगत्कारणं ब्रह्म जानाति वा न वा, न जानाति चेत्सर्वज्ञत्वहानिः, जानाति चेत्स्वस्मादभिन्नस्य जीवस्य दुःखं स्वदुःखमिति जानतो ब्रह्मणोहिताकरणाहितकरणादिदोषप्रसक्तिरनिवार्य्या

टी० सू० इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ किं ब्रह्मणो जगत्कारणत्वं सम्भव ? त्युत ने ? ति किं ब्रह्मणो जगत्स्रष्टृत्वे हिताकरणादिदोषः प्रसज्यते ने ? ति किं ब्रह्मणस्तत्त्वमसीत्यादिसामानाधिकरण्यावगतं तादात्म्यमैक्यलक्षण ? मुतात्मशरीरभावलक्षण ? मिति, किमात्मशरीररूपतादात्म्य एव भेदश्रुतिसामञ्जस्य ? मुतैक्यलक्षणेऽपीति, यदा स्वरूपैक्यलक्षणतादात्म्येऽपि भेदश्रुतिसामञ्जस्यं तदा तत्त्वमस्यादिवाक्यानां स्वरूपैक्यपरत्वेन हिताकरणादिदोषप्रसङ्गात् ब्रह्मकारणत्वासम्भव इति फलं, यदाऽऽत्मशरीरभाव एव भेदश्रुतिसामञ्जस्यं तदा तत्त्वमस्यादिवाक्यानां शरीरात्मभावपरतया हिताकरणादिदोषप्रसङ्गाभावात् ब्रह्मकारणत्वसम्भव इति सिध्यति, अवान्तरसङ्गतिमाह "जगत" इति, सार्वज्ञ्यसत्यसङ्कल्पत्वादियुक्तस्येति, हितानभिज्ञश्चेदहितजगत्कारणत्वमुपपद्यते तन्न सर्वज्ञ-

त्वात् हितत्रस्यापि हि सत्यसङ्कल्पत्वाभावादहितजगत्कारणत्वमिति न वाच्यं सत्यसङ्कल्पत्वादिति भावः । भेदश्रुतिभिर्जीवविलक्षणत्वप्रतिपादनाच्च दोष इति वदन्तं सिद्धान्तिनमाशङ्क्याह "जीवाद् ब्रह्मण" इति भास्करमतमनूद्य दूषयति "औपाधिके"ति अहितकरणादीति, आदिशब्देन सुखदुःखभोक्तृत्वं विवक्षितं ब्रह्माज्ञानवादिनोऽस्मिन्नधिकरणेऽनवकाशत्वमाह–

सू० जीवब्रह्मणोरज्ञानकृतो भेदस्तद्विषया भेदश्रुतिरिति चेत् अ,त्रापि जीवाज्ञानपक्षे पूर्वोक्तो विकल्पस्तत्फलं च तदवस्थं ब्रह्माज्ञानपक्षे स्वप्रकाशस्वरूपस्य ब्रह्मणोऽज्ञानसाक्षित्वं तत्कृतजगत्सृष्टिश्च न सम्भवति, अज्ञानेन प्रकाशस्तिरोहितश्चेति तिरोधानस्य प्रकाशनिवृत्तिकरत्वेन प्रकाशस्यैव स्वरूपत्वात्स्वरूपनिवृत्तिरेवेति स्वरूपनाशादिदोषसहस्रं प्रागेवोदीरितम्, अत इदमसङ्गतं ब्रह्मणो जगत्कारणत्वमिति प्राप्तेऽभिधीयते–

**सू० अधिकं तु भेदनिर्देशात् ॥ २२ ॥**

तु–शब्दः पक्षं व्यावर्तयति, आध्यात्मिकादिदुःखयोगार्हात्प्रत्यगात्मनोऽधिकमर्थान्तरभूतं ब्रह्म कुतः–भेदनिर्देशात्प्रत्यगात्मनो हि भेदेन निर्दिश्यते परं ब्रह्म "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति स कारणं करणाधिपाधिपः "तयोरन्यः

१ तत्रापीति पा० ।

पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति "ज्ञाज्ञौ द्वावजावीशनीशौ प्राज्ञेनात्मना संपरिष्वक्तः प्राज्ञेनात्मनान्वारूढः अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः प्रधानक्षेत्रज्ञपतिर्गुणेशः नित्यो नित्यानां चेतनश्चेतनानाम् एको बहूनां यो विदधाति कामान् यो व्यक्तमन्तरे सञ्चरन् यस्याव्यक्तं शरीरं यमव्यक्तं न वेद योऽक्षमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद योमृत्युमन्तरे सञ्चरन् यस्य मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादिभिः ॥

## सू० अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

टी० "जीवब्रह्मणो"रिति, अधिकं तु भेदनिर्देशात्, दुःखयोगार्हादित्यत्रार्ह–शब्दो मुक्त्यावृत्तिपरः, एवं श्रुतिर्दर्शिता । अथ श्रुत्यर्थोपपत्तिरुच्यते सू. अश्मादिवच्च तदनुपपत्तिः, चिदचिद्वाचकशब्दैः सामानाधिकरण्ये तुल्येऽपि यथा ब्रह्मणो जडस्य च स्वरूपैक्यासम्भवाद्व्यावृत्तिरभ्युपेता ब्रह्माज्ञानवादिना तथा चेतनस्यापीत्यभिप्रायेणाह–

सू० अश्मकाष्ठलोष्टतृणादीनामत्यन्तहेयानां सततविकारास्पदानामचिद्विशेषाणां निरवद्यनिर्विकारनिखिलहेयप्रत्यनीककल्याणैकतानस्वेतरसमस्तवस्तुविलक्षणानन्तज्ञानानन्दैकस्वरूपनानाविधानन्तमहाविभूतिब्रह्मस्वरूपैक्यं यथा नोपपद्यते तथा चेतनस्याप्यनन्तदुःखयोगार्हस्य खद्योतकल्पस्यापहतपाप्मेत्यादिवाक्यावगतसकलहेयप्रत्यनीकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरब्रह्मभावानुपपत्तिः

सामानाधिकरण्यनिर्देशो यस्यात्मा शरीरमित्यादिश्रुते- र्जीवस्य ब्रह्मशरीरत्वात् ब्रह्मणो जीवशरीरतया तदात्मत्वेनावस्थितेर्जीवप्रकारब्रह्मप्रतिपादनपरश्चैतदविरोधी, प्रत्युतैतस्यार्थस्योपपादकश्चेत्यवस्थितेरिति काशकृत्स्न इत्यादिभिरसकृदुपपादितम् । अतस्सर्वावस्थं ब्रह्म चिदचिद्वस्तुशरीरमिति सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणं तदेव ब्रह्म स्थूलचिदचिद्वस्तुशरीरं जगदाख्यं कार्य्यमिति जगद्ब्रह्मणोः सामानाधिकरण्योपपत्तिः जगतो ब्रह्मकार्य्यत्वं ब्रह्मणोऽनन्यत्वमचिद्वस्तुनोजीवस्य च ब्रह्मणश्च परिणामित्वदुःखित्वकल्याणगुणाकरत्वस्वभावासङ्करस्सर्वश्रुत्यविरोधश्च भवति, सदेव सोम्येदमग्र आसीदेकमेवेत्यविभागावस्थायामचिद्युक्तजीवस्य ब्रह्मशरीरतया सूक्ष्मरूपेणावस्थानम् अवश्याभ्युपगन्तव्यं, वैषम्यनैर्घृण्ये न सापेक्षत्वान्न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते चे''ति सूत्रद्वयोदितत्वात्तदानीमपि सूक्ष्मरूपेणावस्थानस्य अविभागस्तु नामरूपविभागाभावादुपपद्यते, अतो ब्रह्मकारणत्वं सम्भवत्येव ।

टी० "अश्मकाष्ठे''ति, तर्हि जीवसामानाधिकरण्यं कथमित्यत्राह "सामानाधिकरण्ये''ति, अवस्थितेरिति काशकृत्स्न इति सूत्रमेतदधिकरणशेषमित्यभिप्रायेणाह "अवस्थिते''रिति, आदि–शब्देन, न तु दृष्टान्तभावादुभयेऽपि हि भेदेनैनमधीयत इत्यादिकं विवक्षितम्, उभयेऽपीत्यादिसूत्रं भेदज्ञापनार्थमपि घटकवाक्यविषयम्, इत्थं चेतनसामानाधिकरण्यनिर्वाहः कृतः । चिदचिदात्मकजगत्सामानाधिकरण्यनिर्वाहमाह "अतस्सर्वे''ति, कारणावस्थायामेकत्वावधारणाच्चिदचिच्छरीरकत्वाभावेन

गुणदोषव्यवस्था नोपपद्यत इत्यत्राह "सदेवे"ति, अविभागः कथमित्यत्राह "अविभाग"स्त्विति, अनयोः सूत्रयोः परोक्तमर्थं दूषयति—

भू० ये पुनरस्यैव जीवस्याविद्यावियुक्तावस्थामभिप्रेत्यैवं भेदं वर्णयन्ति तेषामिदं सर्वमसङ्गतं स्यात्, न हि तदवस्थस्य सर्वज्ञत्वं सर्वेश्वरत्वं समस्तकारणत्वं सर्वात्मकत्वं सर्वनियन्तृत्वमित्यादीनि सन्ति अनेनैव रूपेण ह्याभिः श्रुतिभिः प्रत्यगात्मनो भेदः प्रतिपाद्यते तस्य सर्वस्याविद्यापरिकल्पितत्वात् तत्सर्वं ह्यविद्यापरिकल्पितं त्वन्मतेन चाविद्यापरिकल्पितस्याविद्यावस्थायां शुक्तिकारजतादिभेदवत्परस्परभेदोऽच सूत्रकारेणाधिकं तु भेदनिर्देशादित्यादिषु प्रतिपाद्यते ब्रह्मजिज्ञासा कर्त्तव्येति जिज्ञास्यतया प्रक्रान्तस्य ब्रह्मणो जगज्जन्मादिकारणस्य वेदान्तवेद्यत्वं तस्य च स्मृतिन्यायविरोधपरिहारश्च क्रियते अपीतौ तद्वत्प्रसङ्गादसमञ्जसं, न तु दृष्टान्तभावादिति सूत्रद्वयमेतदधिकरणसिद्धमनुवदति—

टी० "ये पुनरि"ति, जीवादविद्यावियुक्तस्य ब्रह्मणः किं भेद उच्यते? उताविद्यासंसृष्टस्येश्वरस्ये? ति, विकल्पमभिप्रेत्य प्रथमं पक्षं दूषयति "तेषामि"ति, ततः किमित्यत्राह "अनेनैवे"ति, तेषां तदानीमभावः कथमित्यत्राह "तत्सर्वमि"ति, तस्य सर्वस्याविद्यापरिकल्पितत्वादिति पाठे असङ्गतं स्यादिति पूर्वेणान्वयः तत्सर्वं ह्यविद्यापरिकल्पितं त्वन्मत इति पाठोऽस्ति अविद्यापरिकल्पितस्येश्वरस्य भेद उच्यत इति पक्षं दूषयति "न चाविद्ये"ति, कल्पितभेदो न प्रतिपाद्यते अकल्पितजीवस्वरूपज्ञानस्य प्रक्रान्तत्वादित्यर्थः, वेदान्तवेद्यत्वमिति समन्वयाध्यायार्थः, स्मृतिन्यायविरोधपरिहार इति द्वितीयाध्यायार्थः । किञ्च तत्त्वमस्यादिवाक्यार्थप्रतिबो-

धनात् प्रागीश्वरस्य भेदेन प्रतिपद्यमानस्य मिथ्याभूतैर्जीवगतदोषैरात्मनो लेपाभावं पश्यत उदासीनवृत्तेर्हिताकरणाद्यप्रसक्तिः ऐक्यज्ञानोदयात् पश्चाज्जगत्स्रष्टृत्वं दुःखादिभोक्तृत्वं च नास्तीति न हिताकरणादिप्रसक्तिरिति च परैरुच्यते तदयुक्तं वक्तृणां स्ववाक्यविषयादधिकविषयज्ञानवत्त्वात् समस्तशास्त्रयोनिभूतस्येश्वरस्य ब्रह्मणः शास्त्रेभ्योऽप्यधिकविषयज्ञानतया सर्वज्ञत्वं हि शास्त्रयोनित्वादित्यत्र परैः समर्थितम् । अतः शास्त्रादप्यधिकार्थाभिज्ञस्येश्वरस्य तत्त्वमस्यादिवाक्यार्थानवबोधाद् भेदेन प्रतिपत्तेरहितकरणादिदोषपरिहारोऽनुपपन्नः, अहमात्मा गुडाकेश सर्वभूताशयस्थितः । क्षेत्रज्ञं चापि मां विद्धीत्यर्जुनादीनां तत्त्वमुपदिशत ईश्वरस्य ऐक्याज्ञानाभावोऽनुपपन्नः ऐक्यज्ञाने जाते सति स्रष्टृत्वभोक्तृत्वाद्यभावादहितकरणाद्यप्रसक्तिश्चायुक्ता गीतोपदेशात्पश्चादपि ईश्वरेण संसारस्य प्रवर्त्यमानत्वात्, न च वाच्यमिदानीं संसारप्रवृत्तिर्नेश्वराधीना किन्तु चक्रभ्रमणवद्वासनयाऽनुवर्तत इति अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिष्विति संसारप्रवर्तनस्य स्वेच्छाधीनत्वाभिधानात् मत्प्रसादात्तरिष्यतीति भविष्यतः संसारसन्तरणस्य स्वप्रसादाधीनत्वाभिधानाच्च, न हि चक्रभ्रमनिवृत्तेः पूर्ववेगोपरतिनिबन्धनायाः पुरुषविशेषप्रसादापेक्षत्वं बाधितानुवृत्तिश्चानुपपन्नेत्युक्तम् । किञ्च वासनाधीना संसारानुवृत्तिः किमवधीमती? उतावधिविधुरा? प्रथमे "अनादिर्भगवान् कालो नान्तोऽस्य द्विज! विद्यते । अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः" इति शास्त्रविरोधः, द्वितीये वाक्यार्थज्ञानवैयर्थ्यप्रसङ्गः वाक्यार्थज्ञानोदयेऽपि बन्धभ्रमानुवृत्तेरवसानाभावात्, आगामिनां स्वर्गनरकादिसर्गाणामीश्वरसङ्कल्पाधीनत्वादहितकरणदोषस्य दुर्वारत्वात्स्वप्नदृश्यभावानां वैचित्र्याज्जीवप्राज्ञपृथक्त्वोपपत्तिरिति दोषपरिहारश्चानुपपन्नः स्वप्नद्रष्टुः पुरुषस्य स्वाप्नपुरुषान्तरस्य च परस्परैक्यज्ञानाभावात् परस्परदुःखापादनं नाहितकरणदोषावहं स्वप्ने सर्पव्याघ्रादिभिः पीड्यमानस्य परवशतया स्वाहि-

१ वैचित्र्यवज्जीवप्राज्ञेति पा० ।

तकरणं न स्यात् ऐक्यज्ञानवतः स्वतन्त्रस्येश्वरस्य नरकादिस्वर्गे स्वाहितकरणादिप्रसङ्गो दुष्परिहारः पृथिवीपाषाणत्वाद्यविशेषेऽपि वज्रवैदूर्य्यसूर्यकान्तादिवैचित्र्यदेकस्मिन्नपि वृक्षे पत्रपुष्पफलादिवच्च ब्रह्मानन्यत्वेऽपि जीवप्राज्ञपृथक्त्वप्रतिपादकमश्मादिवदिति सूत्रमितरैर्व्याख्यातं सर्वैरपि तदयुक्तमीश्वरस्य मृषा वा परमार्थतो वा सार्वज्ञ्यस्य श्रौतस्य सर्वाभ्युपगतत्वात् स्वानन्यतया सर्वं जानत ईश्वरस्य नरकसृष्टिपापकरणतत्फलप्रदानादिषु स्वाहितकरणप्रसङ्गस्यानिवार्यत्वात्, अहितकरणस्य दोषत्वं हि फलभोक्तुः स्वानन्यत्वज्ञाननिबन्धनं न त्ववैचित्र्यकृतं पाणिपादचक्षुःश्रोत्रादीनाम् आकारवैचित्र्ये सत्यपि स्वप्ने वा प्रबोधे वा दुःखितमात्मानं स्वानन्यत्वेन जानतो दुःखं साक्षात्कुर्वतश्चेतनस्य स्वहस्तादिच्छेदनं हि स्वाहितकरणमेव भवति । ननु स्वशरीरगतत्वेन दुःखं जानत ईश्वरस्यापि स्वाहितकरणं स्यात् न, शरीरगतत्वेन दुःखज्ञानस्य क्वचिदप्यपुरुषार्थकत्वदर्शनाभावात् आत्मगतं हि दुःखं जीवानां न शरीरगतं स्वशरीरगतत्वेन छेदनभेदनदहनादिकं जानतः स्वात्मनि दुःखदर्शनात् शरीरभूतजगत्संहारादिव्यापारः परमात्मनश्चाहितकरणं स्यात्, नैवं छेदनादेर्दुःखहेतुतायाः शरीरमात्रान्वयप्रयुक्तत्वाभावात् स्वकर्मभोगार्थशरीरप्रतिकूलत्वं हि छेदनादीनां दुःखावहत्वे प्रयोजकम् एवं कर्मारब्धेन कर्मवश्येन वा वस्तुनोऽनन्यत्वं जानत ईश्वरस्य सर्वशक्तेः स्वाहितकरणादिदोषप्रसङ्गो ह्यपरेषां सर्वेषामवर्जनीयः मृषावादिनस्त्वीश्वरत्वं तदनुबन्धिगुणजातं चाविद्याकल्पितमिति वदतः स ईशोऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय पराऽस्य शक्तिर्विविधैव श्रूयते । स्वाभाविकी ज्ञानबलक्रिया चेत्यादिश्रुतिविरोधो ह्यधिक इति वैषम्यं वैलक्षण्यमपीतावित्यादिनाऽधिकरणान्तरोक्तमित्यत्राह अपीतावित्यादि न अपीतावित्यादिसूत्रद्वयं तत्र सङ्गतमपीतावित्यादिसूत्रमस्मिन्नधिकरणे पूर्वपक्षसूत्रेण सङ्गतं तथा परिहारसूत्रं च सिद्धान्तसूत्रेण सङ्गतम् अपीतावित्यादिसूत्रद्वये ब्रह्मण्यचिद्गतदोषशङ्कापरिहारः कृतः, इतरव्यपदेशादित्यादौ चिद्गतदोषशङ्कापरिहारः, एवं विलक्षणत्वे सिद्धे सामानाधिकरण्यनिर्वाहार्थमवस्थि-

तेरिति काशङ्कत्त्व इति सूत्रमत्रैव सङ्गतम्, एवं सूत्रत्रयमेतदधिकरणशेषमित्यर्थः । अधिकरणसिद्धमनुवदति—तस्य शेषत्वेन वदतीत्यर्थः ।

सू० तच्च हि विलक्षणयोः कार्य्यकारणभावसम्भव एवाधिकरणार्थः असदिति, चेन्न प्रतिषेधमात्रत्वादिति च पूर्वाधिकरणस्थमनुवदति इतरव्यपदेशाधिकरणं समाप्तम् ॥

टी० तस्याऽधिकरणस्यायमर्थो न प्रतिपाद्यश्चेत्तत्र कोऽर्थः प्रतिपाद्य इत्यत्राह "तत्र ही"ति, तत्रासत्कार्यवादनिराकरणं दृश्यत इति विलक्षणयोः कार्यकारणभावसम्भव एव कथं प्रतिपाद्यते इत्यत्राह "असदि"ति, प्रसङ्गादारम्भणार्थादनुवादस्तस्मिन्नधिकरणे अभेदश्रुत्यविरोधेन भेदश्रुतीनां मुख्यार्थप्रतिपादनमत्रैव क्रियत इत्यर्थः । इतरव्यपदेशाधिकरणं समाप्तम् ॥

उपसंहारदर्शनाधिकरणम् ।

सू० उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

परस्य ब्रह्मणः सर्वज्ञस्य सत्यसङ्कल्पस्य स्थूलसूक्ष्मावस्थसर्वचेतनाचेतनवस्तुशरीरतया सर्वप्रकारत्वेन सर्वात्मकत्वं सकलेतरविलक्षणत्वं चाविरुद्धमिति स्थापितम्, इदानीं सर्वज्ञस्य सत्यसङ्कल्पस्य परस्य ब्रह्मणः सङ्कल्पमात्रेण विचित्रजगत्सृष्टियोगो न विरुद्ध इति स्थाप्यते—

सू० उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि, अवान्तरसङ्गतिमाह "परस्ये"ति, सत्यसङ्कल्पत्वादिभिर्वैलक्षण्यं प्रतिपादितं, तत्र सत्यसङ्कल्पमात्रपरिकरत्वमनुपपन्नमिति तस्य सत्यसङ्कल्पत्वस्य सङ्कुचितवृत्तित्व शङ्कयोत्थानात्सङ्गतिरित्यर्थः सर्वात्मत्वं सर्वभाव इत्यर्थः । किं ब्रह्मणो जगत्कारणत्वं सम्भवति नेति किं कार्यजननसमर्थस्य कार्यजनकत्वं नियमेन सहकार्यन्तरापेक्ष? मुत ने? ति विचारः, यदाऽपेक्षानियमस्तदा सहका-

रिशून्यस्य कारणत्वासम्भवः, यदा न सहकार्यपेक्षानियमस्तदा कारणत्व-सम्भव इति सिद्धम् । पूर्वपक्षोत्थानमाक्षिपति—

सू० ननु च परमितशक्तीनां कारककलापोपसंहारसापेक्षत्व-दर्शनेनैव सर्वशक्तेर्ब्रह्मणः कारककलापानुपसंहारेण जग-त्कारणत्वविरोधः कथमाशङ्क्यते उच्यते लोके तत्तत्का-र्य्यजननशक्तियुक्तस्यापि तत्तदुपकरणापेक्षित्वदर्शनात्सर्व-शक्तियुक्तस्य परस्य ब्रह्मणोऽपि तत्तदुपकरणविरहिणः स्रष्टृत्वं नोपपद्यत इति कस्यचिन्मन्दधियः शङ्का जायत इति सा निराक्रियते घटपटादिकारणभूतानां कुलालकु-विन्दादीनान्तत्तज्जननसामर्थ्ये सत्यपि कानिचिदुपकर-णान्युपसंहृत्यैव जनयितृत्वं दृश्यते तज्जननाशक्ताः कार-ककलापोपसंहारेऽपि जनयितुं न शक्नुवन्ति, शक्ताः पुनः कारककलापोपसंहारे जनयन्तीत्येतावानेव विशेषः, ब्रह्म-णोऽपि सर्वशक्तेः सर्वस्य जनयितृत्वं तदुपकरणानुपनु-संहारे नोपपद्यते प्राक् सृष्टेश्चासहायत्वं सदेव सोम्येद-मग्र आसीत् एको ह वै नारायण आसीदित्येवमादिषु प्रतीयते, अतः स्रष्टृत्वं नोपपद्यत इत्येवं प्राप्ते तदिद-माशङ्कते "उपसंहारदर्शनान्नेति चे"दिति, परिहरति "न क्षीरवद्धि" इति, न सर्वेषां कार्य्यजननशक्तानामुपसं-हारसापेक्षत्वमस्ति यथा क्षीरजलादेर्दधिहिमजननश-क्तस्य तज्जनने, एवं ब्रह्मणोऽपि स्वयमेव सर्वजननशक्तेः सर्वस्य जनयितृत्वमुपपद्यते हीति प्रसिद्धवन्निर्देशश्चो-

क्षस्य मन्दताख्यापनाय क्षीरादिष्वातञ्चनाद्यपेक्षा सा तदध्यादिभावाय अपि तु शैघ्र्यार्थं रसविशेषार्थं च

टी० "ननु चे"ति, सर्वशक्तेरुपकरणविरहः कारणत्वविरोधीति शङ्कैव न जायते सर्वशक्तित्वादिति चोदितम् उपकरणसापेक्षत्वनिरपेक्षत्वरूपं न शक्ताशक्तयोर्वैषम्यं शक्तः परिकरसम्पत्तौ करोति, अशक्तस्तु परिकरसम्पत्तावपि न करोतीति तयोर्वैषम्यं, तस्माद् ब्रह्मणः सङ्कल्पमात्रपरिकरत्वमयुक्तमित्यनुत्थानचोद्यपरिहारं संग्रहेणाह "उच्यत इत्यादिना. सूत्रमर्थं विवृण्वन् पूर्वपक्षमाह "घटपटादौ"ति, ततः किमित्यत्राह "प्राक्सृष्टेश्चे"ति, सूत्रे चोद्यखण्डोऽव्याख्यातः । परिहारखण्डं व्याचष्टे "न क्षीरवद्धी"ति, जलं स्वयमेव हिमरूपेण परिणमति, रविकिरणास्तु तदुत्सर्गमात्रहेतव इति भावः । क्षीरस्यातञ्चनकार्यौ शैघ्र्यरसविशेषार्थौ । अथ वैदिकं दृष्टान्तमाह–

## सू० देवादिवदपि लोके ॥ २५ ॥

सू० यथा देवादयः स्वे स्वे लोके सङ्कल्पमात्रेण स्वापेक्षितानि सृजन्ति तथाऽसौ पुरुषोत्तमः कृत्स्नं जगत्सङ्कल्पमात्रेण सृजति, देवादीनां वेदावगतशक्तीनां दृष्टान्ततयोपादानं ब्रह्मणो वेदावगतशक्तेः सुखग्रहणायेति प्रतिपत्तव्यम् । उपसंहारदर्शनाधिकरणं समाप्तम् ॥

टी० सू· देवादिवदपि लोके, दृष्टान्तान्तरोपादानफलमाह "देवादीनामि"ति, उपसंहारदर्शनाधिकरणं समाप्तम् ॥

कृत्स्नप्रसक्त्यधिकरणम् ।

## सू० कृत्स्नप्रसक्तिनिरवयवत्वशब्दकोपो वा ॥ २६ ॥

सदेव सोम्येदमग्र आसीत् इदं वा अग्रे नैव किञ्चनासीत् आत्मा वा इदमेक एवाग्र आसीत इत्यादिषु

कारणावस्थायां ब्रह्मैकमेव निरवयवमासीदिति कारणावस्थायां निरस्तचिदचिद्विभागतया निरवयवं ब्रह्मैवासीदित्युक्तम्

टी० सू० कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा, दृष्टान्ततयोपन्यस्तस्य क्षीरजलादेः सावयवत्वं दृष्टं तद्वद् ब्रह्मणोऽपि सावयवत्वं निरवयवत्वे कृत्स्नप्रसक्तिर्वा स्यादिति शङ्कया सङ्गतिः, किं ब्रह्मणोजगत्कारणत्वं सम्भवति ने? ति तदर्थं किं ब्रह्मणो जगदाकारेण कार्यत्वे निरवयवत्वश्रुतिर्बाध्यते ने? ति तदर्थं किं सर्वशक्तियोगो युज्यते ने? ति यदा न युज्यते तदा निरवयवत्वश्रुतिबाधप्रसङ्गात् कारणत्वासम्भवः, यदा युज्यते तदा निरवयवत्वश्रुत्यबाधात् कारणत्वसम्भव इति सदेवेत्यादि एकमेवाद्वितीयमित्यत्रानन्तरवाक्यं प्रसिद्धत्वादनुदाहृतमप्यर्थत उपात्तं, तत्रैकशब्दस्त्ववयवतोऽपि विभागासहः यावद् बाधं हि सङ्कोचः, इह तदभावादसङ्कुचितमेकपदं विभागासहमिति भावः। एकशब्दसिद्धनिरवयवत्वं ब्रह्मण इति ज्ञापनार्थं सदेवेति वाक्यमुपात्तम्, इदं वा इति अत्र नैव किञ्चनासीदिति देवादिप्राणिजाताभाव उच्यते अत्रापि न द्यौरासीन्न पृथिवीत्यादिकं प्रतीकग्रहणेनोपात्तं भवति, द्युपृथिव्यादिजगदवयवाभावकथनात् निरवयवत्वसिद्धिरिति भावः। आत्मा वा इदमित्यत्राप्येकशब्दोऽवयवतोऽपि विभागासहः। उदाहृतवाक्यानामर्थमाह "इत्यादिष्वि"ति, आदि-शब्दान्निष्कलं निष्क्रियमित्यादि गृह्यते, एकमेवेति व्याख्येयपदं निरवयवमिति व्याख्यानम्,। उदाहृतश्रुत्यर्थफलितमाह "कारणावस्थायामि"ति, निरवयवत्वस्य कारणवाक्यप्रतिपन्नत्वात् कारणावस्थायां चिदचिद्विभागाभावसिद्धिरित्यर्थः। विरोधं दर्शयितुमाह—

सू० तदविभागमेकं निरवयवमेव ब्रह्म बहु स्यामिति सङ्कल्प्य आकाशवाय्वादिविभागं ब्रह्मादिस्तम्बपर्यन्तं चेचविभागं चाभवत् इति चोक्तम्, एवं सति तदेव परं ब्रह्म

कृत्स्नं कार्य्यत्वेनोपयुक्तमित्यभ्युपगन्तव्यम् । अथ चिदंशः क्षेत्रज्ञविभागविभक्तः, अचिदंशश्चाकाशादिविभागविभक्त इत्युच्यते, तदा सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयं ब्रह्मैकमेवात्मैक एवेत्येवमादयः कारणभूतस्य ब्रह्मणो निरवयवत्ववादिनः शब्दाः कुप्येयुः बाधिता भवेयुः, यद्यपि सूक्ष्मचिदचिद्वस्तुशरीरं ब्रह्म कारणं स्थूलचिदचिद्वस्तुशरीरं ब्रह्म कार्य्यमित्यभ्युपगम्यते, तथाऽपि शरीर्य्यंशस्यापि कार्य्यत्वाभ्युपगमादुक्तदोषो दुर्वारः, तस्य निरवयवस्य बहुभवनं च नोपपद्यते कार्य्यत्वानुपयुक्तांशस्थितिश्च नोपपद्यते तस्मादसमञ्जसमेवा[1]भाति अतो ब्रह्मकारणत्वं नोपपद्यत इत्याक्षिप्ते समाधत्ते ॥

## सू० श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तु-शब्द उक्तदोषं व्यावर्तयति नैवमसामञ्जस्यं कुतः श्रुतेः, श्रुतिस्तावन्निरवयवत्वं ब्रह्मणस्ततो विचित्रसर्गं चाह, श्रौतेऽर्थ यथाश्रुति प्रतिपत्तव्यमित्यर्थः । ननु च श्रुतिरप्यग्निना सिञ्चेदितिवत्परस्पराऽन्वयायोग्यामर्थं प्रतिपादयितुं समर्था अत आह-

टी० "तदविभाग"मिति, एकन्निरवयवमविभागमित्यन्वयक्रमः, वेदान्तेष्वेक-शब्देन प्रतिपादितत्वान्निरवयवमतो निरस्तचिदचिद्विभागमित्यर्थः । सिद्धान्तिनाऽनभ्युपगतेऽप्यापातप्रतीते स्वरूपैक्यपक्षे दूषणमाह "एवं सती"ति, तत्रांशभेदेन परिहारं शङ्कते "अथे"ति, सौत्रं पदमाख्यातरूपेण दर्शयति 'कुप्येयुरि"ति, । मुख्यार्थायोगाद् व्याचष्टे "बाधिता

१ असमञ्जसमिवाभाति पा० ।

भावेयुरि''ति, । बाधफलभूतकोप–शब्देन बाध उपचरित इति भावः । यद्यपीति एकशरीरे शरीरयंशः परिसमाप्त इति नान्यत्र स्यादित्यर्थः सू· श्रुतेस्तु शब्दमूलत्वात्, श्रुतेस्त्विति सूत्रखण्डं व्याचष्टे तु–शब्द इत्यादिना । खण्डान्तरं शङ्क्याऽवतारयति ''ननु चे''ति,

सू० शब्दमूलत्वादिति शब्दैकप्रमाणकत्वेन सकलेतरवस्तुविसजातीयत्वादस्यार्थस्य विचित्रशक्तियोगो न विरुध्यत इति न सामान्यतोदृष्टं साधनं दूषणं वाऽर्हति ब्रह्म ॥

**सू० आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥**

किञ्चैवं वस्त्वन्तरसम्बन्धिनो धर्मस्य वस्त्वन्तरे चारोपणे सत्यचेतने घटादौ दृष्टा धर्मास्तद्विसजातीये चेतने नित्ये आत्मन्यपि प्रसज्यन्ते, तदप्रसक्तिश्च भावस्वभाववैचित्र्यादित्याह ''विचित्राश्च ही''ति, यथाऽग्निजलादीनामन्योन्यविसजातीयानामौष्ण्यादिशक्तयश्च विसजातीया दृश्यन्ते तद्वल्लोकदृष्टसर्वविसजातीये परे ब्रह्मणि तत्र तत्राहृष्टाः सहस्रशः शक्तयस्सन्तीति न किञ्चिदनुपपन्नं, यथोक्तं भगवता पराशरेण ''निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः । कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते'' ॥ इति, सामान्यदृष्ट्या परिचोद्य ''शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः । यत[1]शोब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः । भवन्ति तपतां श्रेष्ठ । पावकस्य यथोष्णते''ति श्रुतिश्च किंस्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवीनिष्टतक्षुः मनीषिणो मनसा पृच्छते तु तद्य-

१ यतोऽतोब्रह्मस्तास्तु पा· ।

दध्यतिष्ठद्भुवनानि धारयन् । ब्रह्मवनं ब्रह्म स वृक्ष आसीत् यतोद्यावापृथिवी निष्टतक्षुः मनीषिणोमनसा विब्रवीमि वो ब्रह्माध्यतिष्ठद् भुवनानि धारयन्निति

टी० "शब्दमूलत्वादिती"ति, अग्निना सिञ्चेदित्यादिषु सेचनसाधनतानर्हत्वं धर्मिणः प्रत्यक्षसिद्धम् अतो न तदर्हत्वं वाक्यं प्रतिपादयति प्रमाणान्तरागोचरस्य तु धर्मिणो विलक्षणत्वं शास्त्रेण प्रतिपाद्यमिति विलक्षणधर्मिणो विलक्षणधर्मयोगो न विरुद्ध इत्यर्थः । सामान्यतो दृष्टमिति लोके द्रव्यत्वादग्निरनुष्ण इतिवद्येन केनचिदाकारेण यस्य कस्यचित्साहचर्य्यमात्रदर्शनेन तत्सामान्याद्यत्साधनं दूषणं वा क्रियते न तदर्हतीत्यर्थः सू॰ आत्मनि चैवं विचित्राश्च हि, तदप्रसक्तिश्चेत्यध्याहारेण व्याख्यातम् । उक्तस्फुटीकरणायाह 'यथोक्तमि'ति, पुराणवचनस्य स्फुटार्थत्वात् पूर्वोपादानं वचनद्वयमध्यगतस्य परिचोद्यैति पदस्य यथोक्तमिति पूर्वेणान्वयः । पुराणश्रुतिवचनयोरर्थमाह—

श्रु० सामान्यतो दृष्टं चोद्यं सर्ववस्तुविलक्षणे परे ब्रह्मणि नावतरतीत्यर्थः ॥ इतश्च

## सू० स्वपक्षदोषाच्च ॥ २९ ॥

स्वपक्षे प्रधानादिकारणवादे लौकिकवस्तुविसजातीयत्वाभावेन प्रधानादेर्लोकदृष्टा दोषास्तत्र भवेयुरिति सकलेतरविलक्षणं ब्रह्मैव कारणमभ्युपगन्तव्यं, प्रधानं च निरवयवं तस्य निरवयवस्य प्रधानस्य कथमिव महदादिविचित्रगदारम्भ उपपद्यते सत्त्वं रजस्तम इति, तस्यावयवा विद्यन्त इति चेत् तत्रेदं विवेचनीयं किं सत्त्वरजस्तमसां

सम्बद्धः प्रधानम्? उत सत्त्वरजस्तमोभिरारब्धं प्रधान? मन्वन्तरे कल्पे प्रधानं कारणमिति स्वाभ्युपगमविरोधः, स्वाभ्युपगतसंख्याविरोधश्च, तेषामपि निरवयवानां कार्यारम्भविरोधश्च, सम्बद्धपक्षे च तेषां निरवयवत्वेन प्रदेशभेदमनपेक्ष्य संयुज्यमानानां न स्थूलद्रव्यारम्भकत्वसिद्धिः, परमाणुकारणवादेऽपि तथैव, अणवो हि निरंशाः निष्प्रदेशाः प्रदेशभेदमनपेक्ष्य परस्परं संयुज्यमाना अपि न स्थूलकार्य्यारम्भाय प्रभवेयुः ॥

## सू० सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

सकलेतरवस्तुविसजातीया परा देवता सर्वशक्त्युपेता च तथैव परां देवतां दर्शयन्तीह श्रुतयः "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च। तथा, "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः," इति सकलेतरविसजातीयतां परस्याः देवतायाः प्रतिपाद्य

टी० "सामान्यत" इति सू· स्वपक्षदोषाच्च, दर्शनानुगुणमनुमीयमानस्यैव लोकदृष्टप्रसङ्ग इत्यर्थः, स्वाभ्युपगमविरोधः प्रधानस्य परमकारणत्वासिद्धिः संख्याविरोधश्चतुर्विंशतितत्त्वाधिक्यात् प्रदेशभेदमनपेक्ष्य संयुज्यमानानामिति, असंयुक्तप्रदेशभेदरहितसंयोगवतामित्यर्थः लोके हीष्टकादयः पूर्वपूर्वासंयुक्तैः प्रदेशैः संयुज्यमानाः पृथुकार्यारम्भका दृष्टा इत्यर्थः, सू· सर्वोपेता च तद्दर्शनात्, श्रुत्या निरवयवत्वकार्यत्वप्रतिपादनात् तदनुगुणशक्तियोगः कल्प्यः, धर्म्मिवैजात्यं च कल्प्यमित्युक्तम्, इदानीं धर्म्मिवैलक्षण्यविलक्षणधर्मयोः कण्ठोक्तिः प्रदर्शिता इति भेदः, अपहतपाप्मेत्यादिना धर्म्मिवैलक्षण्यसिद्धिः, एवं धर्म्मिवैलक्षण्याद्‌[illegible]

कल्पनादपि सर्वशक्तित्वकार्येण सत्यसङ्कल्पत्वेन विलक्षणशक्तिप्रतीतिरा-सत्वेत्यभिप्रायेणाह–

सू० सत्यकामः सत्यसङ्कल्प इति सर्वशक्तियोगं प्रतिपादयन्ति, तथा, "मनोमयः प्राणशरीरो भारूपः सत्यकामः सत्यसङ्कल्पः आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तो वाक्यनादर" इति च ।

**सू० विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥**

यद्यप्येकमेव ब्रह्म सकलेतरविलक्षणं सर्वशक्ति तथाऽपि न तस्य कार्यं करणं च विद्यत इति करणविरहिणस्तस्य न कार्यारम्भः सम्भवतीति चेत् तत्रोत्तरं शब्दमूलत्वात्, विचित्राश्च हीत्युक्तं शब्दैकप्रमाणकं सकलेतरविलक्षणं तत्तत्करणविरहेणापि तत्तत्कार्य्यसमर्थमित्यर्थः, तथा च श्रुतिः "पश्यत्यचक्षुः स शृणोत्यकर्णः अपाणिपादो जवनो ग्रहीता इत्येवमाद्या कृत्स्नप्रसक्त्यधिकरणं समाप्तम ॥

टी० "सत्यकामः सत्यसङ्कल्प" इति, सू० विकरणत्वान्नेति चेत्तदुक्तम् उपसंहारदर्शनादिति सूत्रे परिकराभावेऽपि सङ्कल्पमात्रेण सृष्टयुपपत्तिरुक्ता अत्र तु दण्डचक्रादिपरिकरनिरपेक्षस्यापि करणकलेवरापेक्षा दृष्टेति शङ्का-परिह्रियत इति विशेषः, न तस्येति वाक्ये कार्य–शब्देन शरीरमुच्यते कर-णमिन्द्रियं सूत्रे भाष्ये च करण–शब्दः कार्यस्य शरीरस्याप्युपलक्षणार्थः अत्र मृषावादिनः आहुः–निरवयवं ब्रह्म एकदेशेन कार्योपयुक्तं चेति व्याहतमतस्तदुभयं न शास्त्रेण शक्यप्रतिपादनं शब्दस्याकाङ्क्षासन्निधि-योग्यतापेक्षाप्रतिपादनात् अतः परमार्थरूपेण निरवयवस्य सावयवत्वम-विद्याकल्पितरूपभेदेनेति वाच्यं न हि चन्द्रद्वित्वाभावेऽपि चन्द्रो बहुधा विभज्यते इति, अत्रोच्यते तत्र तावच्छब्दमूलत्वादिति सूत्राननुगुणत्वं

तदा मिथ्यात्वादिति हि वक्तव्यं प्रपञ्चमिथ्यात्वगोचरशब्दो विवक्षित इति चेन्न नात्मा श्रुतेः, शब्दविशेषादनावृत्तिः शब्दादितिवदत्रापि मिथ्याविषयत्वाप्रतीतेः, प्रपञ्चमिथ्यात्वविषयस्य कस्यचिदपि वाक्यस्याभावाच्च । किञ्चाविद्याकल्पितरूपेण सावयवं ब्रह्मेति ननूक्तं भवद्भिः अविद्या किं ब्रह्मैकदेशाश्रया तदेकदेशे कार्यं कल्पयति? उत कृत्स्नब्रह्मणि? आद्ये सावयवत्वप्रसङ्गः, द्वितीये अविद्यानिर्मुक्तब्रह्मासम्भवः, ततश्च सुषुप्तौ सत्सम्पत्तिः द्रष्टव्यत्वमिन्द्रियागोचरत्वमतोज्यायानित्यादिकमनुपपन्नं स्यात् विकृतेन ब्रह्मणा नित्यसम्पन्नत्वात् तस्यैन्द्रियकत्वादतो ज्यायस्त्वाभावाच्चेति भवद्भिरेवोक्तं यदेव ब्रह्म काल्पनिकरूपेण कारणं तदेव परमार्थतोऽविद्यानिर्मुक्तमिति चेत्परमार्थतोऽविद्यानिर्मुक्तत्वं नाम किं निवृत्ताविद्यत्वम्? उतानिवृत्तस्याप्यविद्यासंसर्गस्यापरमार्थत्वं? प्रथमे च किं ब्रह्मस्वरूपे क्वचिदविद्याविरहः? उत सर्वत्र? आद्ये सावयवत्वम्, इतरत्र संसारभ्रमानवभासप्रसङ्गः, प्रथमविकल्पे द्वितीयशिरसि चापरमार्थभूतोऽविद्यासंसर्गः किं ब्रह्मणि क्वाचित्कः? उत सार्वत्रिकः? आद्ये सावयवत्वं, द्वितीये कृत्स्नप्रसक्तिरङ्गीकृता स्यात्, कृत्स्नस्य ब्रह्मणोऽविद्यातिरोहितत्वात्परमार्थभूतोऽविद्यायोगो नास्तीति चेत् न, तावताऽविद्यानिर्मुक्तब्रह्मासिद्धिः, अविद्यानिर्मुक्तब्रह्मासिद्धिः अविद्यायोगो यादृशोऽभिमतस्तादृशस्यानिवृत्तत्वात्, यथा स्वप्नदृष्टापरमार्थपङ्कसंसर्गाभावेन जाग्रद्दशायां परमार्थपङ्कलिप्तो न लिप्तो न भवति । किञ्च किमविद्याकल्पितरूपमित्यविद्याविशिष्टं ब्रह्म विवक्षितम्? उतोपलक्षित? मुत त्रिगुणात्मकं प्रधानम्? अविद्याकल्पितरूपमिति विवक्षितम्? आद्ये विशेषणांशस्येव विशेष्यांशस्यापि सावयवत्वं स्यात्, द्वितीये विशेष्यांशस्येव सावयवत्वं स्यात्, तृतीये च प्रधानं सावयवं परिणमते चेत् ब्रह्मणः कथं कारणत्वं प्रकृतेर्ब्रह्माश्रयत्वेनेति चेत् तर्ह्यनादेरबाधितायास्तस्या अविद्याकल्पितत्वाभावेन प्रकृतिशरीरकं ब्रह्म वास्तवप्रपञ्चकारणमित्यभ्युपगमोवरं सकलप्रमाणन्यायानुपरोधित्वात् । ननु प्रकृतिविशिष्टस्य कारणत्वे विशेष्यांशस्यापि सावयवत्वं त्वन्मतेऽपि स्यात्, नैवं विशिष्टताङ्गीकारे

विशेषणविशेष्ययोः स्वभावव्यवस्थादर्शनाच्छरीरविशिष्टस्य प्रवृत्तिहेतुत्वेऽपि शरीरात्मनोः स्वभावव्यवस्था हि दृश्यते विशिष्टस्य कारणत्वमेव ह्यभ्युपगतं न तु सावयवत्वं तत्तु विशेषणांशस्यैव, अतो न कश्चिद्दोषः, आत्मनि स्वप्नदर्शिनि स्वरूपानुपमर्देन विविधसृष्टिवन्मायाविनो हस्त्यादिसृष्टिवच्च ब्रह्मस्वरूपानुमर्देन ब्रह्मस्वरूपानुपमर्देनेनाकारसृष्टिरिति आत्मनि चैवमिति सूत्रव्याख्यानमप्ययुक्तं स्वप्नसृष्टिवाक्यस्य परमात्मविषयत्वात्स हि कर्ता तस्मिन् लोकाः स्थिता इति हि वाक्यशेषः, ततश्च परमात्मकारणत्वविमतौ तदेव दृष्टान्तत्वेन वक्तुमयुक्तं मन्त्रौषधादिभिः सृजतो मायाविनश्च हस्त्यादिकार्यं प्रत्युपादानत्वाभावात्सावयवत्वाच्च घटशरावादिकं प्रति कुलालादेरिव कर्तृत्वमात्रमिति निरवयवस्याकृत्स्नप्रसक्तौ दृष्टान्तत्वमनुपपन्नं । यादवमिश्रास्तु भोक्तृभोग्यनियन्तृष्वन्यतमांशे कृत्स्नपरिसमाप्तेरितरांशद्वयासम्भव इति पूर्वपक्षं कृत्वा स्वतोनिरवयवमपि सर्वशक्तियोगात् परिणामेन सावयवं बहु भवतीति सिद्धान्तयन्ति, तदयुक्तमेकस्य बीजस्य शक्तिमतः परिणामेन शाखापत्रपुष्पादिरूपेणेव प्रकृत्यादिरूपेण बहुभवने प्रकृतिपुरुषेश्वराणाम् अनादित्वनित्यत्वश्रुतिविरोधस्यावर्जनीयत्वात् सद्द्रव्यमात्रानादितया तेषामनादित्वे शाखापत्रपुष्पादीनामपि तथाऽनादित्वात्तैरविशेषप्रसङ्गः, परिणामानपेक्षानाद्यंशभेदे स्वतोनिरवयवत्वं न स्यात् निरवयवत्वश्रुतिरीश्वरांशविषयेति चेत्तर्हि जगदुपादानस्य ब्रह्मणः कृत्स्नप्रसक्तिनिरवयत्वविरोधोऽपरिहृतः स्यात् निरंशस्योपादानत्वाभावात्, एवं जीवानामपि प्रत्येकं निरवयवत्वे दोषः समानः भोक्त्रंशस्याप्युपादानत्वाभावात् प्रकृत्यंशस्य तदुभयविरोधपरिहारे प्रधानकारणवादे द्वयं परिहृतं स्यात् न तु ब्रह्मकारणवादे । किञ्च निरवयवत्वाकृत्स्नोपयोगविषयश्रुतिबलात् ब्रह्मणो विलक्षणत्वेऽपि निरवयवत्वमाकाशशब्दरसादीनां निरवयत्वादविलक्षणं सावयवतया परिणामप्रतिभटमित्युक्तदोषप्रसङ्ग इत्याशङ्क्य निरवयवत्वमपि शब्दमूलत्वादपूर्वं ब्रह्मणस्सावयवतया परिणामार्हत्वानिवारकमिति व्याख्यातं तदप्ययुक्तं धर्मिवैलक्षण्ये सति विलक्षणधर्मासम्भवशङ्कानुदयात्, धर्मवैलक्षण्याभावे

हि धर्म्मिवैलक्षण्यमेव न स्यात्, तस्माद्विलक्षणधर्म्मयोगे श्रुतेरिति प्रतिपादिते तदसम्भवशङ्कायां तत्सम्भवाय शब्दमूलत्वादिति धर्म्मिवैलक्षण्यप्रतिपादनमेव युक्तं, तथा सर्वोपेतेत्यधिकरणान्तरं च वर्णितम्, अशब्दमस्पर्शं सर्वकर्मा सर्वकामः बहु स्यामासीनो दूरं व्रजति शयानो याति सर्वतः अनेजदेकं मनसो [1]जवीयस्तद्धावतोऽन्यानत्येति तिष्ठत् पश्यत्यचक्षुरिति विरुद्धकार्य्याणां भ्रान्तिसिद्धत्वपूर्वपक्षीकृत्यांशभेदेनोपपन्नानि तानि सत्यानि तेषां च कार्य्याणां चक्षुःश्रोत्रपाणिपादादिसापेक्षत्वव्याप्तिभङ्गेन सर्वशक्तियोगोपपत्तेरिति सिद्धान्तितं तत्राधिकरणभेदोऽनुपपन्नः सर्वोपेता चेति च–शब्देन पूर्वसूत्रसाध[2]नस्यैवोपपादकत्वावगमात् प्रकृतं साध्यं प्रत्युपयोगितया पाश्चात्यसूत्रद्वयार्थस्य तदार्थसम्भवाच्च, तत्सम्भवश्च फलफलिभावे दर्शितः सर्वनामरूपोपेतत्वं च सर्वोपेत–शब्दार्थ उक्तः, भाष्ये तत्तदनुक्तिस्तस्योपपादकत्वाभावात् निरवयस्यापि सर्वकारणत्वे सर्वशक्त्यन्वय एव ह्युपपादकः नामरूपोपेतत्वं तू[3]पाधिकोटिघटितं, श्रुतिवाक्यं तु श्रुतेस्त्वित्यैव विवक्षितम् अत इह तदनुपादानम् ॥ कृत्स्नप्रसक्त्यधिकरणं समाप्तम् ॥

प्रयोजनवत्त्वाधिकरणम् । **सू० न प्रयोजनवत्त्वात् ॥ ३२ ॥**

यद्यपीश्वरः प्राक्सृष्टेरेक एव सन् सकलेतरविलक्षणत्वेन सर्वार्थशक्तियुक्तः स्वयमेवं विचित्रं जगत्स्रष्टुं शक्नोति तथाऽपीश्वरस्य कारणत्वं न सम्भवति, प्रयोजनवत्त्वाद् विचित्रसृष्टेः, ईश्वरस्य च प्रयोजनाभावात् बुद्धिपूर्वकारिणामारम्भे द्विविधं हि प्रयोजनं स्वार्थः परार्थो वा, न हि परस्य ब्रह्मणः स्वभावत एवावाप्तसमस्तकामस्य जगत्सर्गेण किञ्चन प्रयोजनमनवाप्तमवाप्यते, नापि

१ अनेजतेकं मनसोदवीयस्तद्धावतोऽन्यानत्येति तिष्ठत् ।
२ पूर्वसूत्रसाध्यस्यैवेति पा ।
३ तूपपाद्यकोटिघटकमिति पा० ।

परार्थः आप्तसमस्तकामस्य परार्थता हि परानुग्रहेण भवति न चेदृग्गर्भजन्मजरामरणनरकादिनानाविधानन्तदुःखबहुलं जगत्करुणावान्सृजति, प्रत्युत सुखैकतानमेव सृजेज्जगत्करुणया सृजन् ।

टी० सू० न प्रयोजनवत्त्वात्, सङ्गतिः स्पष्टा कारणत्वं सम्भवति ? नेति विचारः तदर्थमवाप्तसमस्तकामस्य लीलाप्रयोजनं नेति लीलायां वैषम्यनैर्घृण्ये प्रसज्येते नेति च, यदा प्रसज्येते यदा च लीला न प्रयोजनं तदा लीलारूपव्यापारासम्भवात् कारणत्वासम्भवः यदा न वैषम्यादिप्रसङ्गः यदा च लीलाप्रयोजनं तदाऽवाप्तसमस्तकामस्य लीलारूपव्यापारसम्भवात्, कारणत्वसम्भव इति सिध्यति, प्रयोजनवत्त्वं कस्येत्यपेक्षायां पूरयति "विचित्रसृष्टेरि"ति, तस्य नेति पदेनान्वयस्य विरुद्धत्वादभिप्रेतमाह "ईश्वरस्य चे"ति, तदेव विवृणोति "बुद्धिपूर्व"ति,—

सू० अतः प्रयोजनाभावाद्ब्रह्मणः कारणत्वं नोपपद्यत इति, एवं प्राप्ते प्रचक्ष्महे—

## सू० लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

अवाप्तसमस्तकामस्य परिपूर्णस्य स्वसंकल्पविकार्य्यविविधविचित्रचिदचिन्मिश्रजगत्सर्गे लीलैव केवलं प्रयोजनं लोकवत्, यथा लोके सप्तद्वीपां मेदनीमधितिष्ठतः सम्पूर्णशौर्य्यवीर्यपराक्रमस्यापि महाराजस्य केवललीलैकप्रयोजनाः कन्दुकाद्यारम्भा दृश्यन्ते तथैव परस्यापि ब्रह्मणः स्वसंकल्पमात्रावक्लृप्तजगज्जन्मस्थितिध्वंसादेर्लीलैव प्रयोजनमिति निरवद्यम् ॥

टी० सू० लोकवत्तु लीलाकैवल्यम्, लीलैव केवलेति पक्षवन्ध्यपूर्वकदृष्टादिव्यावृत्त्यर्थः केवल—शब्दः प्रयोजनान्तरानुद्देशेन प्रवृत्तत्वेऽपि यदृ-

च्छोपनतप्रयोजनस्यार्थात् सिद्धिव्युदासार्थ एवकारः । ननु कन्दुकाद्यारम्भणस्य लीलात्वं युक्तं तत्र गौरवाभावात् जगद्व्यापारस्य तु लीलात्वमनुपपन्नं महायासरूपत्वादिति शङ्कानिवृत्त्यर्थमाह "स्वसङ्कल्पमात्राऽवक्लृप्ते"ति,

## सू० वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥

भू० यद्यपि परमपुरुषस्य सकलेतरचिदचिद्वस्तुविलक्षणस्याचिन्त्यशक्तियोगात्प्राक्सृष्टेरेकस्य निरवयवस्यापि विचित्रचिदचिन्मिश्रजगत्सृष्टिः सम्भाव्येत तथाऽपि देवतिर्य्यङ्मनुष्यस्थावरात्मनोत्कृष्टमध्यमापकृष्टसृष्ट्या पक्षपातः प्रसज्येत अतिघोरदुःखयोगकरणान्नैर्घृण्यं चावर्जनीयमिति तत्रोत्तरं न सापेक्षत्वादिति, न प्रसज्येयातां वैषम्यनैर्घृण्ये कुतः सापेक्षत्वात्, सृज्यमानदेवादिक्षेत्रज्ञकर्म्मसापेक्षत्वाद्विषमसृष्टेर्देवादीनां क्षेत्रज्ञानां देवादिशरीरयोगं तत्तत्कर्म्मसापेक्षत्वं दर्शयन्ति हि श्रुतिस्मृतयः "साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्म्मणा भवति पापः पापेन कर्म्मणा" तथा भगवता पराशरेणापि देवादिवैचित्र्यहेतुः सृज्यमानानां क्षेत्रज्ञानां प्राचीनकर्म्मशक्तिरेवेत्युक्तं, "निमित्तमात्रमेवासौ सृज्यानां सर्गकर्म्मणि । प्रधानकारणीभूता यतो वै सृज्यशक्तयः" ॥ निमित्तमात्रं मुक्त्वैव नान्यत्किञ्चिदपेक्षते । नीयते तपसां श्रेष्ठ ! स्वशक्त्या वस्तु वस्तुता"मिति स्वशक्त्या स्वकर्म्मणैव देवादिवस्तुताप्राप्तिरिति ॥

टी० सू० वैषम्यनिर्घृण्ये न सापेक्षत्वात्तथा दर्शयति, वैषम्य-शब्दः पक्षपात-शब्देन व्याख्यातः । कस्य किमपेक्षमित्यत्राह "सृज्यमाने"ति, ईश्वरश्चेत् सृष्टौ कार्यसापेक्षः किं तु वैषम्यांश एव तदपेक्षा अतो विषमसृष्टेरित्यध्याहृतं निमित्तमात्रमेवासावित्ति अप्रधानकारणं निमित्त-शब्देन विवक्षितं प्रधानकारणीभूता इति तत्रैव निर्देशात्, यथा "निमित्तमात्रं भव सव्यसाचिन्" इति, तद्गुत्पाधान्यं चासाधारणकारणत्वं साधारणकारणत्वम् अप्राधान्यं यथा क्षेत्रसलिलादिकं सर्वसस्यसाधारणकारणं तत्तद्बीजशक्तिविशेषाङ्कुरविशेषोत्पत्तावसाधारणकारणं तथेश्वरस्य साधारणकारणत्वान्निमित्तमात्रत्वं कर्मणां विषमसृष्ट्यसाधारणकारणत्वात्प्राधान्यमित्यर्थः ॥

## सू० न कर्म्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च ॥ ३५ ॥

सू० प्राक्सृष्टेः क्षेत्रज्ञा नाम न सन्ति कुतः अविभागश्रवणात् "सदेव सोम्येदमग्र आसीदि"ति अतस्तदानीं तदभावात्तत्कर्म न विद्यते कथं तदपेक्षं सृष्टिवैषम्यमित्युच्यत इति चेन्न अनादित्वात्, क्षेत्रज्ञानान्तत्कर्म्मप्रवाहाणां च तदनादित्वेऽप्यविभाग उपपद्यते च यतस्तत्क्षेत्रज्ञवस्तुपरित्यक्तनामरूपं ब्रह्मशरीरतयाऽपि पृथग्व्यपदेशानर्हम् अतिसूक्ष्ममवतिष्ठते तथाऽनभ्युपगमे अकृताभ्यागमकृतविप्रणाशप्रसङ्गश्च, उपलभ्यते च तेषामनादित्वं "न जायते म्रियते वा विपश्चि"दिति, सृष्टिप्रवाहानादित्वं च "सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पय"दित्यादौ, "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते" इति नामरूपव्याकरणमात्रश्रवणात् क्षेत्रज्ञानां स्वरूपानादित्वं सिद्धं, स्मृतावपि "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभा-

वपी”ति, अतस्सर्वविलक्षणत्वात्सर्वशक्तित्वाल्लीलैकप्रयोजनत्वात् क्षेत्रज्ञकर्मानुगुण्येन विचित्रसृष्टियोगाद्ब्रह्मैव जगत्कारणम् ।

टी० सू० न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च, अपि-शब्दं व्याचष्टे “तदनादित्वेऽपी”ति, उपपद्यते चेत्यत्र च-शब्दाभिप्रेतार्थमाह “अकृताभ्यागमे”ति, स्वरूपानादित्वे सत्यपि सृष्टिप्रवाहानादित्वे सति हि कर्मप्रवाहानादित्वसिद्धिः, अतः सृष्टिप्रवाहानादित्वं दर्शयति “सूर्य्याचन्द्रमसा”विति, प्रतिकल्पमधीतस्यास्य वाक्यस्यार्थवत्त्वात्सृष्टेरनादित्वसिद्धिः, तत्तत्सूत्रोक्तानर्थान् यथाक्रमं वदन्नधिकरणार्थमुपसंहरति “अत”इति,

## सू० सर्वधर्म्मोपपत्तेश्च ॥ ३६ ॥

भा० प्रधानपरमाण्वादीनां कारणत्वे यद्धर्म्मवैकल्यमुक्तं वक्ष्यमाणं च तस्य सर्वस्य धर्म्मजातस्य कारणत्वोपपादिनो ब्रह्मण्युपपत्तेश्च ब्रह्मैव जगत्कारणमिति स्थितम । प्रयोजनवत्त्वाधिकरणं समाप्तम् ।

इति श्रीमद्भगवद्रामानुजाचार्य्यविरचिते शारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य प्रथमः पादः ॥ १ ॥

——o——

टी० सू० सर्वधर्म्मोपपत्तेश्च, इदं सूत्रं सर्वाधिकरणशेषं के धर्माः कस्मिन्नुपपत्तिः किं व्यवच्छेद्यमित्यपेक्षायां व्याचष्टे “प्रधाने”ति, पञ्चम्या अन्वयं दर्शयति “ब्रह्मैवे”ति, परमप्रकृतिसाध्येनान्वय इत्यर्थः, इदमधिकरणं ब्रह्माज्ञानपक्षे न सङ्गच्छते जगद्व्यापारस्य निष्प्रयोजनतया चोदिते लीलात्वेन परिहारात् प्रपञ्चस्य भ्रान्तिपरिकल्पितत्वे भ्रान्तकृत्यस्य निष्प्रयोजनत्वं न दोष इति हि वक्तव्यं, न हि शुक्तिरूप्यचन्द्रद्वित्वाध्यासादिकं प्रयोजनाय प्रवर्तते, न च पित्तोपहतः प्रयोजनाकाङ्क्षया घटं भिनत्ति गृहं च दहति

न हि स्वप्नदर्शी प्रयोजनापेक्षया स्वशिरश्छेदं पश्यति । ननु भ्रान्तस्यापि हि क्रीडा सम्भवति अतस्तदुक्तिरिति चेन्न, केषांचिद्व्यापाराणां क्रीडातुल्यत्वेऽपि स्वशिरःप्रहारादीनामिव भ्रान्तव्यापारत्वादेव तेषां क्रीडात्वानुपपत्तेः । किञ्च बहु स्यामिति सङ्कल्पेन हीश्वरः सृष्ट्यादि करोति तदयुक्तं, न हि कश्चिद् भ्रान्तः स्यामिति सङ्कल्प्य भ्राम्यति । किञ्चेश्वरस्सर्वज्ञश्चेत्स्वानर्थरूपसंसारप्रवर्त्तनं क्रीडेति न मन्यते अज्ञश्चेत्सर्वज्ञत्वश्रुतिविरोधः विवेकज्ञाननिष्पादनेन स्वानर्थपरिहाराय जगत्सृजतीति चेत् तथाऽपि लीलात्वमनुपपन्नं, न हि व्याध्युपहतस्यौषधानयनप्रवृत्तिर्लीला भवति स्वयं प्रयोजनरूपव्यापारो हि लीला, ऋग्वेदादिप्रवर्तकस्य शास्त्रादधिकविषयज्ञानवत ईश्वरस्य जगत्सृष्टिनिष्पाद्यं विवेकज्ञानं न सम्भवति यस्सर्वज्ञस्सर्ववित् तस्मादेतद् ब्रह्म नामरूपमन्नं च जायत इति हि श्रुतिः यदीश्वरस्स्वबन्धभ्रमनिवर्तनाय जगत्सृजति तर्हि बन्धच्छेदनोपयिकानेवार्थान्सृजतु किमर्थं बन्धवर्धकानर्थकामादीन् सृजति । किं च किं भ्रान्तिहेतुर्लीला ? उत भ्रान्तिकार्या ? उत भ्रान्तिरेव, नाद्यः लीलया स्वभ्रमसम्पादनानुपपत्तेः न द्वितीयः, प्रथमसङ्कल्पस्य लीलात्वानुपपत्तेः, तद्द्वेवोत्तरत्रापि लीलामन्तरेण भ्रमोपपत्तेश्च, नापि तृतीयः द्विचन्द्रज्ञानस्य लीलात्वाप्रसिद्धेः, स्वयमभ्राम्यन्नीश्वरो लीलया परान्मोहयतीति चेन्न त्वन्मते भ्रान्त्या विना परदर्शनायोगात्परदर्शने सम्भवति तेषां स्वानन्यत्वज्ञानाच्च निर्विशेषसन्मात्रस्य ब्रह्मणो निर्विशेषत्वादेव न लीलासम्भवः, ईश्वरस्य तु सर्वज्ञत्वेन संसारमहितत्वेन जीवान्स्वानन्यत्वेन च जानतो जन्मजरामरणादिनिर्वर्तननरकयातनादिव्यापारो न लीला भवितुमर्हति, अत इदमधिकरणं ब्रह्माज्ञानवादिनां विरुद्धम् । वैषम्येत्यादि सूत्राणि चाधिकरणान्तरं सर्वैर्वर्णितं, न च तद्युक्तं फलफलिभावेन प्रकृतिसाध्येन तेषामन्वितार्थत्वात्, फलफलिभावश्च दर्शितः कर्मसापेक्षतया वैषम्यनैर्घृण्यपरिहारश्च भ्रान्तब्रह्मवादिनां न घटतेऽपि पित्तोपहतो हि शुभाशुभानपेक्षः किञ्चित्स्तौति सान्त्ववादिनमपि कञ्चन निन्दति कांश्चिदम्भसा सिञ्चति कांश्चिन्मुसलेन हन्ति न च तस्मि-

न्वैषम्यनैर्घृण्ययोर्दोषरूपता । न च युक्त्या परिहर्तव्यत्वं सापेक्षत्वादिति पदं च विषमसृष्ट्या सम्बन्धमर्हति न ईश्वरश्चेत् कर्मसापेक्षः तस्य स्वतन्त्रत्वात्सृष्टिश्चेन्न कर्मसापेक्षा समष्टितत्त्वसृष्टौ सर्वशक्तितयेश्वरस्य निरपेक्षत्वात् यस्मिन्नंशे वैषम्यनैर्घृण्यप्रसङ्गस्तत्रैव हि कर्मणोऽपेक्षा अतः प्राप्ताप्राप्तविवेकेन वैषम्यांशस्य कर्मसापेक्षत्वाद्विषमसृष्टेरित्युक्तम्, उपपद्यत इति चानादित्वमुपपद्यत इति व्याख्यातं तदानीमविभागादिति शङ्कितहेतुरपरिहृतः स्यात् अतः क्षेत्रज्ञानामनादित्वेऽपि अविभाग उपपद्यत इति व्याख्यातम् । उक्तलक्षणस्याविभागस्य तथात्वोपपादकत्वेन अकृताभ्यागमादिप्रसङ्गरूपस्तर्कोऽपि सूत्राभिप्रेतो भवतीत्यभिप्रायेणाह "तथाऽनभ्युपगम" इति, अकृताभ्यागम—शब्देन मुक्तानामप्युत्पत्तिप्रसङ्गोऽभिप्रेतः एवमुपपद्यत उपलभ्यत इति द्वयं यथाक्रमम् अविभागानादित्वयोः समर्थनपरं सर्वधर्मोपपत्तेश्चेति सूत्रं निर्विशेषवादेऽत्यन्तमघटितमिति दुरपह्नवं ब्रह्मणो महामायत्वात्तस्मिन्मायाकल्पितधर्मोपपत्तिरिति तु श्रद्धामात्रम् अशाब्दतत्वात्, पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतिविरोधाच्च । यादवमिश्रानुसारिणस्तु सू· सर्वधर्मोपपत्तेश्चेति सूत्रमप्यधिकरणान्तरमाहुः तत्र चैतन्यशक्तिक्रियाशक्तिपरिणामशक्तिरूपाः सर्वे धर्मा ब्रह्मणि नोपपद्यन्ते नित्यसर्गादिप्रवृत्तिप्रसङ्गात्, न चेच्छया नित्यप्रसङ्गपरिहारः इच्छाया नित्यत्वे नित्यप्रसङ्गात्, अनित्यत्वेऽपि हेतुसापेक्षत्वात् हेतोश्चामानकत्वात् कथञ्चिद्धेत्वन्वेषणे तस्यापि नित्यानित्यविकल्पे पूर्वोक्तदोषप्रसङ्गादिच्छया व्यवस्थाऽनुपपत्तेर्नित्यसर्गप्रसङ्गः । अतो ब्रह्मणि सर्वे धर्मा नोपपद्यन्त इति पूर्वपक्षः कृतः । इच्छायाः प्रलयकालात्ययज्ञानजन्यत्वात् तज्ज्ञानस्य प्रलयादौ किञ्चित्कालं स्वप्स्यामि ततः प्रबोद्धाहे इति सङ्कल्पस्य नष्टत्वेऽपि तदाहितविशेषप्रबोधशक्त्या प्रलयकालात्यये जन्यत्वात् प्रलयकालस्य प्रकृतिपरिणामरूपत्वादन्त्यपरिणामस्य नित्यप्रसङ्गाभावादिच्छायाः कादाचित्कत्वोपपत्तेर्नित्यसर्गादिप्रसङ्गाभावात् ब्रह्मणि ज्ञानक्रियापरिणामशक्तिरूपसर्वधर्मोपपत्तेरिति राद्धान्तितं तत्र तावदधिकरणा-

न्तरत्वमयुक्तं सन्मात्रस्यापि ब्रह्मणः प्रकृत्यंशेन महदाद्युपादानत्वात् परिणामशक्तिमतोऽपि प्रकृत्यंशस्यान्तर्यामिब्राह्मणादिष्वीश्वरनियाम्यत- याऽवगतस्य स्वातन्त्र्येण परिणामायोगात् सदेव सोम्येदमग्र आसीत्तदै- क्षत बहु स्यां सोऽकामयतेति जगत्सर्वादिविषयस्येश्वरसङ्कल्पस्य कादा- चित्कत्वावगमाच्च नित्यसर्गादिप्रवृत्त्यप्रसङ्गेन पूर्वपक्षोत्थानासम्भवाद्द्वि- परार्द्धकालभाविसदृशतरसूक्ष्मपरिणामपरम्परास्वन्त्यपरिणामलक्षणस्य प्रल- यकालात्ययस्य ज्ञानं सिसृक्षाहेतुः, तत्र यदुक्तं सुषुप्तस्येश्वरस्यस्य पूर्व- सङ्कल्पाहितविशेषा प्रबोधशक्तिः प्रलयकालात्ययसहकृता प्रबोधं जनयति तेन प्रलयात्ययं ज्ञात्वा सङ्कल्पयतीति तदयुक्तं स्वतः सर्वज्ञस्य ज्ञानसङ्को- चककर्मपारवश्यरहितस्येश्वरस्य स्वापायोगात्स्वेच्छया स्वाप इति चेन्न इच्छानुपपत्तेः, अज्ञानांशेऽपि ज्ञानमेव हि सर्वे वाञ्छन्ति न तु ज्ञानलोपं निद्राया अभिमतत्वं दृश्यत इति चेत् आहाराजरणतीव्रामयदुःखपरिश्रम- तमोगुणाभिभूतानां तत्तदनिष्टशमनाय निद्राकाङ्क्षा, लघुशरीरस्य व्याध्या- द्यपहितस्य प्रसन्नमनसो विचित्रमभिमतं विषयमवलोकयतो हि निद्रा- नभिमतैवेति, अत ऊर्मिषट्कातिगस्यानामयस्य सर्वशक्तेस्तमसः परमेश्व- रस्य कथञ्ज्ञानलोपोऽभिमतः स्यात् प्रबोधशक्तेः पूर्वसङ्कल्पाहितविशेष- त्वमप्ययुक्तं विशेषस्य प्रबोधजननयोग्यतालक्षणत्वाद्योग्यतान्तरानुपपत्ते- र्द्रव्यस्यैव सर्वविधयोग्यतापादनदर्शनाच्च, स च योग्यतालक्षणविशेषः किं प्रलयकालात्ययज्ञानात्प्रबोधमीश्वरे जनयति? उताज्ञानात्? न प्रथमः योग्यतायाश्चैतन्याभावात्, द्वितीये सयोग्यतारूपविशेषस्तदानीमीश्वरा- धिष्ठितो न वा? न प्रथमः अप्रबुद्धस्याधिष्ठातृत्वायोगात् । द्वितीये चानधिष्ठितस्य विशेषस्य यथाप्रबोधकार्यकरत्वम् एवमीश्वरानधिष्ठितस्य प्रकृत्यंशस्यैव जगज्जननसम्भवात् प्रबोधपरिकल्पनं विफलं तद्धि कल्प्यं अश्रुतत्वात्प्रबोधानन्तरभावितया त्वदभिमतसङ्कल्प एव हि तदैक्षतेति श्रुतः न तु प्रबोधः अप्रबुद्धस्य सङ्कल्पायोगात् तत एव प्रबोधः कल्प्यत इति चेन्न स्वापप्रबोधयोरुभयोः कल्पनादपीश्वरज्ञानस्य नित्यतामात्रक- ल्पनस्य न्याय्यत्वाच्छ्रुत्यनुरोधित्वाच्च स्वापप्रबोधावपि वचनासद्भावेति

चेत् नित्यज्ञानत्वं च वचनसिद्धं तद्वचनं ज्ञानशक्तिनित्यत्वपरमिति चेत्स्वापप्रबोधवचनमपि जगद्व्यापारवैमुख्योन्मुख्यविषयं स्यात् इयान्विशेषः क्वचिज्ज्ञानलोपस्याभिमतत्वानुपपत्तिः शक्तेराहितविशेषत्वानुपपत्तिरीश्वरानधिष्ठितायाः कार्यकरत्वेऽतिप्रसङ्गश्च जगत्सर्गादिविषयसङ्कल्पातिरेकेण स्वापप्रबोधयोरश्रुतयोः परिकल्पनगौरवं चान्यत्र तद्विरहश्चेति । किञ्च स्वापशब्दस्यामुख्यत्वं चाग्रप्राधान्यायसिद्धं "यदा स्वपिति शान्तात्मा तदा सर्वं निमीलतीति ह्युच्यते निमीलनशब्दस्य हि प्रवृत्त्यनर्हसूक्ष्मदशापत्तिविषयत्वममुख्यं प्रबोधानन्तरभाविसङ्कल्पानुपपत्तिश्च भवतां, बहु स्यां प्रजायेयेति हि सङ्कल्पः प्रकृतिपुरुषेश्वरस्वरूपेण बहु स्यां महदादिरूपेण प्रजायेयेति हि भवद्भिर्व्याख्यातं प्रकृत्यधिकरणे, ईश्वरांशस्य विभागो नाम प्रबोध एव न हि खण्डितत्वमतः प्रबोधात्सङ्कल्पः सङ्कल्पाद्विभाग इत्यन्योन्याश्रयः, बहु स्यामिति सङ्कल्पः पूर्वं प्रलयादाविति चेत् न प्रजायेयेति सङ्कल्पतुल्यकालताप्रतीतिस्वारस्यात् सोऽपि सङ्कल्पः पूर्वं प्रलयादाविति चेत् न तत्तेज ऐक्षत तदपोऽसृजतेत्यादिसर्गानन्तरपूर्वभाविसङ्कल्पपरप्रकरणविरोधात् सदेव सोम्येदमग्र आसीदेकमेवेति पूर्ववाक्यविरोधाच्च । स एकाकी न रमतेत्यरतिरपि हि न प्रलयारम्भे युज्यते । अतः सङ्कल्पानुपपत्तेश्च राद्धान्तवर्णनमयुक्तम् ॥ प्रयोजनवत्त्वाधिकरणं समाप्तम् ॥

इति श्रुतप्रकाशिकायां द्वितीयस्याध्यायस्य प्रथमः पादः ॥ १ ॥

---

## अथ द्वितीयाध्यायस्य द्वितीयः पाद आरभ्यते ॥

रचनाऽनुपपत्त्यधिकरणम् ।

## सू० रचनाऽनुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ १ ॥

भा० उक्तं जगज्जन्मादिकारणं परं ब्रह्मेति, तच्च परैरज्ञात्वा विना दोषाश्च परिहृताः, इदानीं स्वपक्षरक्षणाय परपक्षाः प्रतिक्षिप्यन्ते, इतरथा कस्यचिन्मन्दधियस्तेषां पक्षाणां युक्त्याभासमूलतामजानतः प्रामाणिकत्वशङ्कया वैदिक-

पक्षे किञ्चिच्छ्रद्धावैकल्यं जायेतापि, अतः परपक्षप्रतिक्षेपायानन्तरः पादः प्रवर्तते, तत्र प्रथमं तावत्कापिलमतं निरस्यते वैदिकानुमतसत्कार्यवादाद्यर्थसंग्रहेण तस्य सत्यक्षनिक्षेपसम्भावनाभ्रमहेतुत्वातिरेकात् ईक्षतेर्नाशब्दमित्यादिभिर्वैदिकवाक्यानामतत्परत्वमात्रमुक्तम् अत्रैव तत्पक्षस्वरूपप्रतिक्षेपः क्रियत इति न पौनरुक्त्याशङ्का, एषा साङ्ख्यानां दर्शनस्थितिः "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" इति तत्त्वसंग्रहः, मूलप्रकृतिर्नाम सुखदुःखमोहात्मकानि लाघवप्रकाशचलनोपष्टम्भनगौरवावरणकार्याण्यत्यन्तातीन्द्रियाणि कार्य्यैकनिरूपणविवेकान्यन्यूनातिरेकाणि समतामुपेतानि सत्त्वरजस्तमांसि द्रव्याणि, सा च सत्त्वरजस्तमसां साम्यरूपा प्रकृतिरेका स्वयमचेतनाऽनेकचेतनभोगापवर्गार्थानित्या सर्वगता सततविक्रिया न कस्यचिद्विकृतिः,

टी० सू० रचनाऽनुपपत्तेश्च नानुमानम्प्रवृत्तेश्च, प्रथमाध्यायार्थपूर्वकं प्रथमपादार्थं वदन् द्वितीयपादेन सङ्गतिमाह "उक्त"मिति, स्वपक्षे कारणविषये परोक्तदोषाः परिहृताः परपक्षोक्तकारणविषयं दूषणं क्रियत इत्यर्थः अनेन तृतीयपादस्य पूर्वभावित्वशङ्का निरस्ता । तत्र कार्यविषये परोक्तदूषणपरिहारो हि क्रियते अतः कारणविषये स्वमतस्थापनं परपक्षदूषणं च सङ्गतं किमर्थं परपक्षप्रतिक्षेप इत्यत्राह "इतरथे"ति, कापिलमतनिराकरणस्याभ्यहेतुमाह "तत्रे"ति, सत्कार्यवादादीति, आदि–शब्देन चतुर्विंशतितत्त्वस्वीकारो विवक्षितः। पौनरुक्त्यमाशङ्क्य निराकरोति "ईक्षते"रिति, किं ब्रह्मकारणवाद एकान्ततः श्रद्धेयः? उत ने? ति तदर्थं प्रधानं जग-

त्कारणं ने? ति किं प्रधानस्य पुरुषसन्निधानात् पङ्गुसन्निधानादन्धस्येव प्रवृत्तिः सम्भवति ने? ति किमन्धस्य पङ्गुसन्निधानात् मार्गावलोकनव्यापारवत्पुरुषसन्निधानात्तच्छायाद्यापत्त्या वा ज्ञातृत्वं सम्भवति ने? ति, यदा ज्ञातृत्त्वसम्भवः तदा प्रवृत्तिसम्भवात् प्रधानकारणत्वमुपपन्नमिति नैकान्ततो ब्रह्मकारणवादः श्रद्धेयः । यदा ज्ञातृत्वासम्भवः तदा प्रवृत्त्यसम्भवात् प्रधानकारणवादानुपपत्तेर्ब्रह्मकारणवाद एकान्ततः श्रद्धेय इति सिध्यति, यः एषेत्यादि तत्त्वसंग्रहश्लोकं व्याचष्टे मूलप्रकृतिर्नामेत्यादिना, उपष्टम्भनं, धारणमत्यन्तातीन्द्रियाणि नित्यानुमेयानीत्यर्थः, समतामुपेतानीत्युक्ते केनचिदाकारेण साम्यं स्यादिति तद्व्यावृत्त्यर्थं सम–शब्दव्याख्यानायान्यूनानतिरिक्तानीत्युक्तं सत्त्वरजस्तमः समूहः प्रकृतिरित्यर्थः ।

भा० अपि तु परमकारणमेव महदाद्यास्तद्विकृतयोऽन्येषां च प्रकृतयः सप्त महानहङ्कारः शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं रसतन्मात्रं, गन्धतन्मात्रमिति, तत्राहङ्कारस्त्रिविधो वैकारिकस्तैजसो भूतादिश्च, क्रमात्सात्त्विकोराजसस्तामसश्च, तत्र वैकारिकः सात्त्विक इन्द्रियादिर्भूतादिस्तामसो महाभूतहेतुभूततन्मात्रहेतुः, तैजसो राजसस्तूभयानुग्राहकः, आकाशादीनि पञ्चमहाभूतानि श्रोत्रादीनि पञ्चज्ञानेन्द्रियाणि वागादीनि पञ्चकर्मेन्द्रियाणि मन इति केवलविकाराः षोडश, पुरुषस्तु निष्परिणामत्वेन न कस्यचित्प्रकृतिर्न कस्यचिद्विकृतिः, तत एव निर्धर्मकश्चैतन्यमात्रवपुर्नित्यो निष्क्रियः सर्वगतः प्रतिशरीरं भिन्नश्च, निर्विकारत्वान्निष्क्रियत्वाच्च तस्य कर्तृत्वं भोक्तृत्वं च न सम्भवति, एवं भूतेऽपि तत्त्वे मूढाः प्रकृतिपुरुषसन्निधिमात्रेण पुरुषस्य

चैतन्यं प्रकृतावध्यस्य प्रकृतेश्च कर्तृत्वं स्फटिकमणाविव जपाकुसुमस्यारुणिमानं पुरुषेऽध्यस्याहुः कर्ता भोक्तेति मन्यन्ते, एवमज्ञानाद्भोगस्तत्त्वज्ञानाच्चापवर्गः तदेव[1] प्रत्यक्षानुमानागमैः साधयन्ति, तत्र प्रत्यक्षसिद्धेषु पदार्थेषु नातीव विवादा[2]स्पदमस्ति, आगमोऽपि कपिलादिसर्वज्ञज्ञानमूल इति सोऽपि प्रथमे काण्डे प्रमाणलक्षणे निरस्तप्रायः। यदिदं प्रधानमेव जगत्कारणमित्यनुमानं तन्निरसनेन तन्मतं सर्वं निरस्तं भवतीति तदेव निरस्यते—

टी० विकृतिः—कार्यं महदाद्या इति स्वकारणापेक्षया विकृतयः स्वकार्यापेक्षया प्रकृतय इत्यर्थः। षोडशकश्च विकार इत्यत्र च एवकारार्थः, षोडशको विकार एवेत्यर्थः। न प्रकृतिरित्यादि श्लोकखण्डं व्याचष्ट 'पुरुषस्त्वि'ति, निर्द्धर्मकः ज्ञातृत्वरहितः तद्धन्तःकरणस्येति तन्मतं तर्हि भोगमोक्षौ न स्यातामित्यत्राह "एवम्भूतेऽ"पीति, तत्त्वमर्थस्थितिः तदेतदिति नातीव विवादपदमस्तीति सत्कार्यवादसमवायानभ्युपगमादिभिर्न विवाद इत्यर्थः। अभिव्यक्त्यवस्थावैषम्यादिकमभिप्रेत्य नातीवेत्युक्तं निरस्तप्राय आगमः किं कपिलप्रोक्तः? उत वेदः? तत्र वेदस्य प्रधानादिपरत्वव्यावृत्तिः प्रथमाध्याये दर्शिता, कपिलागमस्य तु निरासो धर्मविचारारम्भे फलित इत्यर्थः। अनुमानमेकं स्थितं तस्मिन्निरस्ते सर्वेऽपि निरस्तं भवतीत्याह "यदिद"मिति, अनुमानव्युदासाय प्रथमं विषयशुद्धिं करोति—

सू० ते चैवं वर्णयन्ति, कृत्स्नस्य जगतः एकमूलत्वमवश्याभ्युपगमनीयम् अनेकेभ्यः कार्योत्पत्त्यभ्युपगमे कारणानवस्थानात् तन्तुप्रभृतयो ह्यवयवाः स्वांशभूतैः षड्भिः पार्श्वैः परस्परं संयुज्यमाना अवयविनमुत्पादयन्ति, ते च तन्त्वा-

१ तदेतत्प्रत्यक्षेति पा०।
२ विवादपदमस्तीति पा०।

दयः स्वावयवैस्तथाभूतैरुत्पाद्यन्ते, ते च तथाभूतैः स्वावयवैरिति परमाणुभिरपि स्वकीयैः षड्भिः पार्श्वैः संयुज्यमानैरेव स्वकार्य्योत्पादनमभ्युपेतव्यम्। अन्यथा प्रथिमाऽनुपपत्तेः, परमाणवोऽप्यंशित्वेन स्वांशैस्तथैवोत्पाद्यन्ते, ते च स्वांशैरिति न क्वचित्कारणव्यवस्थितिः, अतः कारणव्यवस्थासिद्ध्यर्थमेकं द्रव्यं विविधविचित्रपरिणामशक्तियुक्तं स्वयमप्रच्युतस्वरूपमेव महदाद्यनन्तावस्थाश्रयः कारणमाश्रयणीयं, तच्चैकं कारणं गुणत्रयसाम्यरूपं प्रधानमिति तत्कल्पनहेतूनुपन्यस्यन्ति "भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च । कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ॥ कारणमस्त्यव्यक्त"मिति, अयमर्थः विश्वरूपमेव वैश्वरूप्यं विचित्रसन्निवेशं तनुभुवनादिकृत्स्नं जगत्, तच्च जगद्विचित्रसन्निवेशत्वेन कार्य्यभूतं तत्स्वरूपाव्यक्तकारणकं, कुतः कार्य्यत्वात्, कार्य्यस्य हि सर्वस्य तत्स्वरूपात्कारणविशेषाद्विभागस्तस्मिन्नेवाविभागश्च दृश्यते, यथा घटमुकुटादेः कार्य्यस्य तत्स्वरूपान्मृत्सुवर्णादेः कारणाद्विभागस्तस्मिन्नेव चाविभागः,

टी० ते चैवमित्यादिना, अनेकेभ्यः कार्योत्पत्तौ कारणानवस्थानमुपपादयति "तन्तुप्रभृतय"इति, असंयुक्तप्रदेशेन संयुक्तैरेव पृथ्व्यादिकार्योत्पादनं दृश्यते, यद्यसंयुक्तप्रदेशभेदमनपेक्ष्यैकत्र सर्वे संयुज्यन्ते तर्ह्येकः स्यात् परमाणोरनतिरिक्तप्रदेशतया पृथ्व्यादिकार्य्यं नोत्पद्यते प्रदेशभेदः परमाणोरस्तीति चेत् सांशत्वात्तस्याप्यारम्भकापेक्षयाऽनवस्थेत्यर्थः, अत इति एकस्मिन्कार्ये कृत्स्नस्य कारणस्य निरवशेषान्वयव्यावृत्त्यर्थमाह "स्वयम-

प्रच्युते''ति, एवं परमाणुव्यावृत्तिः सिद्धा । अथ ब्रह्मव्यावृत्त्यर्थमाह ''तच्चैक''मिति, भेदानामित्यादिश्लोकं व्याचष्टे ''अयमर्थ''इति, वैश्वरूप्यपदं व्याचष्टे विश्वरूपमित्यादिना, कारणकार्यविभागादित्येतद्व्याचष्टे ''कार्यस्य ही''ति, व्याप्तिप्रदर्शनमित्यर्थः । व्याप्तिस्थलमाह ''यथे''ति, पक्षधर्मताबलसिद्धमर्थमाह–

सू० अतो विश्वरूपस्य जगतस्तत्स्वरूपात्प्रधानादुत्पत्तिस्तस्मिन्नेव लयश्चेति प्रधानकारणकमेव जगत् गुणत्रयसाम्यरूपं प्रधानमेव जगत्स्वरूपकारणं तस्वरजस्तमोमयसुखदुःखमोहात्मकत्वाज्जगतः, यथा च मृदात्मनोघटस्य मृद्द्रव्यमेव कारणं तदेव हि तदुत्पत्त्याख्यशक्तिप्रकृतिमत् तथा दर्शनात् अव्यक्तस्य गुणसाम्यरूपस्य देशतः कालतश्चापरिमितस्यैव कारणत्वं भेदानां महदहङ्कारतन्मात्रादीनां परिमितत्वादवगम्यते, महदादीनि च घटादिवत्परिमितानि कृत्स्नजगदुत्पत्तौ न प्रभवन्ति अतस्त्रिगुणं जगद्गुणत्रयसाम्यरूपप्रधानैककारणकमिति निश्चीयते, अत्रोच्यते सू० रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च, अनुमीयत इत्यनुमानं न भवदुक्तं प्रधानं विचित्रजगद्रचनासमर्थम् अचेतनत्वे सति तत्स्वभावाभिज्ञाऽनधिष्ठितत्वात् यदेवं तत्तथा, यथा रथप्रासादादिनिर्माणे केवलदार्वादिकम् ॥

टी० 'अतो विश्वरूपस्ये''ति, कार्यं सरूपकारणकमस्तु तत्कथं प्रधानकारणत्वसिद्धिरिति शङ्कायां समन्वयादिति पदं व्याचष्टे ''सत्त्वरजस्तमोमये''ति, शक्तितः प्रवृत्तेश्चेत्येतद्व्याचष्टे 'तदेव ही'' ति, सरूपत्वं महदादीनामप्यस्तीति तेषां कारणत्वशङ्कायां भेदानां परिमाणादित्येत-

त्स्वाचष्टे "अव्यक्तस्ये"ति, निगमयति "अत" इति, जगद्विचित्रसन्निवेश-त्वात् कार्यं रथादिवत् जगत्स्वसमानरूपकारणकं कार्यत्वात् यत्कार्यं तत्स्वसमानरूपकारणकं दृष्टं यथा घटादीत्यनुमानशरीरम् अत्र सत्त्व-रजस्तमोमयसुखदुःखमोहानां कार्येऽन्वयदर्शनात् तदुत्पादनशक्तं सत्त्व-रजस्तमोमयमेव कारणं तस्य परिमितत्वे कृत्स्नकारणत्वानुपपत्त्या तस्यापि कारणापेक्षयाऽनवस्थानाच्चापरिच्छिन्नं वस्तु कारणं भवतीति पक्षधर्मता-बलात् सिद्धं यथा कार्यत्वात् सकर्तृकत्वेऽनुमीयमाने पक्षधर्मताबलादी-श्वरसिद्धिः तद्वत्तत्र निमित्तमत्रोपादानमिति विशेषः, अत्रोच्यत इत्यादि अनुमानशब्दस्यानुमितिपरत्वे कस्येत्यपेक्षायां प्रधानस्येति धर्मिवाचिषष्ठ्य-न्तपदाध्याहारप्रसङ्गात्तन्निरपेक्षनिर्वाहे सम्भवति तस्यैव न्याय्यत्वात् आह "अनुमीयत"इति, प्रत्यनुमीयत इति प्रत्यनुमानोपयोगिनीं व्याप्तिं शिक्ष-यति न भवदुक्तमित्यादिना, अपेक्षितान्वयव्यतिरेकौ दृष्टान्ते दर्शय-न्सूत्रस्य वाक्यार्थमाह–

सू० दार्वादेरचेतनस्य तज्ज्ञाऽनधिष्ठितस्य कार्य्यारम्भानुपपत्त-दर्शनात् तज्ज्ञाऽनधिष्ठितस्य कार्य्यारम्भप्रवृत्तेर्दर्शनाच्च न प्राज्ञाऽनधिष्ठितं प्रधानं कारणमित्युक्तं भवति, चकारा-दन्वयस्यानैकान्त्यं समुच्चिनोति, न ह्यन्वितं शौक्ल्यं गोत्वा-दिकारणत्वव्याप्तं न च वाच्यं माभूदन्वितानामपि शौ-क्ल्यादिधर्म्माणां कारणत्वं द्रव्यस्य तु हेमादेः कार्य्या-न्वितस्य कारणत्वव्याप्तिरस्त्येव सत्त्वादीन्यपि द्रव्याणि कार्य्यान्वितानि कारणत्वव्याप्तानीति यतः सत्त्वादयो द्रव्यधर्म्मा न तु द्रव्यस्वरूपं सत्त्वादयो हि पृथिव्यादि-द्रव्यगतलघुत्वप्रकाशादिहेतुभूतास्तत्स्वभावविशेषा एव न तु मृद्धिरण्यादिवद् द्रव्यतया कार्य्यान्विता उपलभ्यन्ते गुणा इत्येव च सत्त्वादीनां प्रसिद्धिः । यच्च कारणव्यवस्था-

सिद्धये जगत एकमूलत्वमुक्तं तदपि सत्त्वादीनामनेकत्वान्नोपपद्यते अत एव कारणव्यवस्था च न सिद्ध्यति ।

टी० दार्वादेरित्यादिना, प्रथमस्य च–शब्दस्यार्थमाह "चकारादि"ति, कार्येऽन्वितस्य मृदादेः कारणत्वं दृश्यते तथा सत्तादिमयसुखदुःखादेः कार्येऽन्वयात् कार्ये सत्त्वाद्यन्वयः सिद्ध इति सत्त्वादीनां कारणत्वमिति हि युक्तं तस्य शौक्ल्यादिष्वनैकान्त्यमित्यर्थः कार्ये समन्वितद्रव्यत्वादिति चेत् द्रव्यत्वमसिद्धमित्याह माभूदित्यादिना, सत्त्वादयो हीति लघुत्वादिकार्यद्वारा सत्त्वादीनां सुखदुःखादिहेतुत्वमिति मन्तव्यं गुणा इत्येव चेति सत्त्वादीनां द्रव्यत्वस्याप्रामाणिकतया गुण–शब्दस्यास्वारस्यमयुक्तमिति भावः । जगत्प्राज्ञानधिष्ठितचेतनकारणकं न भवति कार्यत्वात् यत्कार्यं तत्स्वाभिज्ञाऽनधिष्ठिताचेतनोपादानकं न भवति यथा घटादिकं चेतनाधिष्ठितकारणकं दृष्टं यत्प्राज्ञाधिष्ठिताचेतनोपादानकं न भवति तत्कार्यमपि न भवति यथा नित्यं तुच्छं वेति, प्रत्यनुमानशरीरम् । यद्वा नात्र प्रत्यनुमानं विवक्षितमीश्वरानुमान इव विशेषविरोधो विवक्षितः, अचेतनत्वं प्राज्ञाधिष्ठितत्वं साधयेदिति तदुपयोगिनी व्याप्तिर्दर्शिता, यच्चेति सत्त्वादीनामनेकत्वादेकमूलत्वं नास्तीत्यर्थः । अत एवेति अनेकत्वादेव कारणव्यवस्था च नास्तीत्यर्थः अनेकत्वाभ्युपगमं दर्शयति–

सू० साम्यावस्थाः सत्वादय एव हि प्रधानमिति[1] तन्मतम् अतः कारणबहुत्वादनवस्था तदवस्थैव । न च तेषामपरिमितत्वेन व्यवस्थासिद्धिः अपरिमितत्वे हि त्रयाणामपि सर्वगतत्वेन न्यूनाधिकभावाभावाद्वैषम्यासिद्धेः कार्य्यारम्भासम्भवात् कार्य्यारम्भायैव परिमितत्वमवश्याश्रयणीयं यच्च रथादिषु स्पष्टं चेतनाधिष्ठितत्वं दृष्टं तद्व्यतिरिक्तं सर्वं पक्षीकृतमित्याह–

१ त्वन्मतमिति पा० ।

## सू० पयोऽम्बुवच्चेत्तत्रापि ॥ २ ॥

यदुक्तं प्रधानस्य प्राज्ञाऽनधिष्ठितस्य विचित्रजगद्रचनाऽनुपपत्तिरिति तन्न यतः पयोऽम्बुवत्प्रवृत्तिरुपपद्यते पयसस्तावद्दधिभावेन परिणममानस्यानन्यापेक्षस्याद्यपरिस्पन्दनप्रभृतिपरिणामपरम्परा स्वत एवोपपद्यते, यथा च वारिदविमुक्तस्याम्बुन एकरसस्य नालिकेरतालचूतकपित्थनिम्ब[१]तिन्तिण्यादिविचित्ररसरूपेण परिणामप्रवृत्तिः स्वत एव दृश्यते, तथा प्रधानस्यापि परिणामस्वभावस्यान्यानधिष्ठितस्यैव प्रतिसर्गावस्थायां सदृशपरिणामेनावस्थितस्य सर्गावस्थायां गुणवैषम्यनिमित्तविचित्रपरिणाम उपपद्यते ।

टी० "साम्यावस्था" इति, ततः किमित्यत्राह "अत" इति, बहूनां कारणानां विषमावस्थत्वेनैव कारणत्वदर्शनात् परिमितानामेव वैषम्यदर्शनाच्च विषमावस्थानां परिमितानां पार्श्वविशेषैः संयुक्तानामेव पृथुकार्यारम्भकत्वं स्यात् तेषामपि विषमत्वात् परिमितत्वात्कार्यत्वात् कारणान्तरसापेक्षत्वं स्यात् तेषामपि तस्यारम्भाय विषमत्वात् परिमितत्वाच्च सकारणत्वमित्यनवस्थेत्यर्थः । अपरिमितत्वाच्चानवस्थेत्यत्राह "अपरिमितत्वे ही"ति, कार्यारम्भायैव परिमितत्वमवश्याश्रयणीयमिति कार्यारम्भसिध्यर्थं वैषम्यसिध्यर्थं परिमितत्वमाश्रयणीयं तथा सति तेषामपि सकारणत्वमित्यनवस्थेत्यर्थः । उत्तरसूत्रमवतारयति "यच्चे"ति, क्षीरादिदृष्टान्तेन प्राज्ञानधिष्ठितत्वं साधयाम इति चेत् तत्पक्षीकृतं तत्रापि प्राज्ञाधिष्ठितत्वं सिषाधयिषितमित्यर्थः पयोऽम्बुवच्चेत्तत्रापि आद्यपरिस्पन्देति चक्रभ्रमपरिणामादिव्यावृत्त्यर्थमाद्यशब्दः, परिस्पन्द–शब्देनान्यथाभावोद्योगो विवक्षितः न तु चलनं,

---

१ तिन्त्रिण्यादि इति पा० ।

सु० यथोक्तं "परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषा-द्दिति तदेवमव्यक्तमन्यानपेक्षं प्रवर्तत इति चेत् अत उत्तरं "तत्रापी"ति यत्तु क्षीरजलादिदृष्टान्ततया निदर्शितं तत्रापि प्राज्ञाऽनधिष्ठाने प्रवृत्तिर्नोपपद्यते तदपि पूर्वमेव पक्षीकृतमित्यभिप्रायः । उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धीत्यत्र दृष्टपरिकरान्तररहितस्यापि स्वासाधारण-परिणाम उपपद्यत इति यतावदुक्तं न प्राज्ञाधिष्ठितत्वं पराकृतं, योऽप्सु तिष्ठन्नित्यादिश्रुतेः, ॥

## सू० व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ३ ॥

इतश्च सत्यसङ्कल्पेश्वराधिष्ठानानपेक्षपरिणामित्वे सर्गव्यतिरेकेण प्रतिसर्गावस्थाया अनवस्थितिप्रसङ्गाच्च न प्राज्ञानधिष्ठितं प्रधानं कारणं प्राज्ञाधिष्ठितत्वे तस्य सत्य-सङ्कल्पत्वेन सर्गप्रतिसर्गविचित्रसृष्टिव्यवस्थासिद्धिः, न च वाच्यं प्राज्ञाधिष्ठितत्वेऽपि तस्यावाप्तसमस्तकामस्य परिपूर्णस्यानवधिकातिशयानन्दस्य निरवद्यस्य निरञ्जनस्य सर्गप्रतिसर्गव्यवस्थाहेत्वभावाद्विषमसृष्टौ निर्दयत्वप्रसङ्गाच्च समानोऽयं दोष इति परिपूर्णस्यापि लीलार्थं प्रवृत्तिसम्भवात् ।

टी० यथोक्तमिति प्रतिप्रतीति वस्तुषु प्रत्येकं गुणानामङ्गाङ्गिभावेनावस्थानरूपवैषम्यात्सलिलवत्स्वत एव परिणामाज्जगत्प्रवृत्तिश्चेतननिरपेक्षोपपद्यत इत्यर्थः । रचनानुपपत्तेरिति पूर्वसूत्रनिर्देशसामर्थ्यानुरोधादिहाप्यनुपपत्तेरित्यध्याहार उपपन्न इत्यभिप्रायेण नोपपद्यत इत्युक्तं, विरोधमाशङ्क्य परिहरति "उपसंहारे"ति, शरीरव्यतिरिक्तदण्डचक्रादिस्थानी-

याचिद्रूपपरिकरान्तरनैरपेक्ष्यमुक्तमित्यविरोध इत्यर्थः । सू० व्यतिरेकानवस्थितेश्चानपेक्षत्वात्, इतश्चेति वाक्यभेदः व्यतिरेकशब्दं व्याचष्टे "सर्गे"ति प्रतिसर्गावस्थयाऽनवस्थितिप्रसङ्गाच्चेति प्रतिसर्गावस्थोपलक्षितावस्थानाभावप्रसङ्गाच्चेत्यर्थः, न चेत्यादि अवाप्तसमस्तकामस्य अब्भक्ष इतिवत् अवधारणगर्भमिदम् अवाप्ता एव समस्ताः कामा येन सोऽवाप्तसमस्तकामः अवाप्तव्यं नास्तीत्यर्थः । कुत इत्यत्राह "परिपूर्णस्य" गुणविभूतिभिः परिपूर्णत्वादवाप्तव्यं नास्तीत्यर्थः विभूत्यादेरननुकूलत्वेऽप्यवाप्तसमस्तकामत्वं नास्तीत्यत्राह । यद्वा तिष्ठन्तु गुणा विभूतयश्च तथाऽपि स्वेनैवाप्तसमस्तकामत्वमाह "अनवधिकातिशयानन्दस्ये"ति, निरवद्यस्याकर्मवश्यस्य निरञ्जनस्यागुणवश्यस्य सर्गस्थितिप्रलयाः रजःसत्त्वतमःकार्याः गुणवश्यत्वं च, कर्मवश्यस्य अकर्मवश्यस्येश्वरस्य गुणवश्यत्वाभावात् गुणानुगुणेच्छया सर्गादिव्यापारो न सम्भवतीति भावः । इति न च वाच्यमित्यन्वयः ॥

सू० सर्वज्ञस्य तस्य परिणामविशेषापन्नप्रकृतिदर्शनरूपसर्गविशेषहेतोस्सम्भवात् क्षेत्रज्ञकर्म्मणामेव विषमसृष्टेर्व्यवस्थापकत्वाच्च । नन्वेवं क्षेत्रज्ञपुण्यापुण्यरूपकर्म्मभिरेव सर्वाः व्यवस्थाः सिद्ध्यन्तीति कृतमीश्वरेणाधिष्ठात्रा पुण्यापुण्यरूपानुष्ठितकर्म्मसंस्कृता प्रकृतिरेव पुरुषार्थानुरूपं तथा तथा व्यवस्थया परिणंस्यते यथा विषादिदूषितानामन्नपानादीनामौषधिविशेषाप्यायितानां च सुखदुःखहेतुभूतः परिणामविशेषो देशकालव्यवस्थया दृश्यत अतस्सर्गप्रतिसर्गव्यवस्था देवादिविषमसृष्टिः कैवल्यव्यवस्था च सर्वप्रकारपरिणामशक्तियुक्तस्य प्रधानस्यैवोपपद्यते इति । अनभिज्ञो भवान्पुण्यापुण्यकर्म्मस्वरूपयोः पुण्यापुण्यस्वरूपे

हि शास्त्रैकसमधिगम्ये, शास्त्रं चानादिनिधनाविच्छिन्न-पाठसंप्रदायानाघ्रातप्रमादादिदोषगन्धवेदाख्याक्षरराशिः तच्च परमपुरुषाराधनतद्विपर्य्ययरूपे कर्म्मणी पुण्यापुण्ये तदनुग्रहनिग्रहायत्ते च तत्फले सुखदुःखे इति वदति तथा चाह द्रमिडाचार्य्यः "फलसंविधित्सया हि कर्मभि-रात्ममानं पिप्रीषन्ति स प्रीतोऽलं फलायेति शास्त्रमर्य्या-दे"ति॥

टी० सर्वज्ञस्येत्यादि सर्गप्रतिसर्गव्यवस्याहेतुरीश्वरेणानुसन्धीय-माना प्रकृतेः परिणामविशेषापत्तिः, न च तया स्वातन्त्र्यहानिः प्रत्युत स्वातन्त्र्यपूर्तिरेव परिणामविशेषापत्तौ सत्यामेव सर्गादिव्यापारस्य तत्स-ङ्कल्पायत्तत्वात् यथासङ्कल्पमनुष्ठानं हि स्वातन्त्र्यमिति भावः। नन्वित्यादि कालादिव्यवस्थायां दृष्टान्तमाह "यथे" ति, उष्णवर्जिते शीतवर्जिते वा वर्त्तमानस्य पथ्यापथ्यविभागो देशव्यवस्था कैवल्यव्यवस्था मोक्षव्यवस्था परिहरति "अनभिज्ञ इत्यादिना,कपिलागमादिव्यावृत्त्यर्थमाह "शास्त्रं चे"ति, ततः किमित्यत्राह "तच्चे"ति, शास्त्रज्ञैरेवमुक्तमित्याह "तथा-हे"ति, इष्टापूर्ते श्रौतस्मार्तकर्मणी, बाहुविध्यं देवताफलादिभेदेन भुव-नस्य नाभिः तद्यथा रथस्यारेषु नेमिरर्पिता इत्यादिश्रुतिप्रक्रियया ऽन्तर्या-मिरूपेण सर्वाधारभूत इत्यर्थः। बिभर्त्ति आराधनतया स्वीकरोति पापस्य तदपराधरूपत्वज्ञापनार्थं च भगवद्गीतावचनं दर्शयति—

भू० तथा च श्रुतिः "इष्टापूर्तं बहुधाजातं जायमानं विश्वं बि-भर्ति भुवनस्य नाभिरि"ति तथा च भगवता स्वयमेवोक्तं "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततं स्वकर्मणा तमभ्य-र्च्य सिद्धिं विन्दति मानव" इति, "तानहं द्विषतः क्रूरा-न्संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव यो-

निधि" ति, स च भगवान्पुरुषोत्तमोऽवाप्तसमस्तकामः सर्वज्ञः सर्वेश्वरः सत्यसङ्कल्पः स्वमहात्म्यानुगुणलीलाप्रवृत्तः एतानि कर्म्माणि समीचीनान्येतान्यसमीचीनानीति कर्म्मद्वैविध्यं संविधाय तदुपादानोचितदेहेन्द्रियादिकं तन्नियमनशक्तिं च सर्वेषां क्षेत्रज्ञानां सामान्येन प्रदश्र्य स्वशासनाववोधिशास्त्रं च प्रदर्श्य तदुपसंहारार्थं चान्तरात्मतयाऽनुप्रविश्य—

टी० "तथा चे" ति, तेषां सततयुक्तानामिति वचनस्य वक्ष्यमाणत्वादत्र नोपपादितम् एभिर्वचनैः प्रस्तुतचोद्यस्य किमुक्तं भवति दयालुः सन् संसारिणोऽहितरूपकर्मणि कथं प्रवर्तयति कर्मसापेक्षनिग्रहानुग्रहानुग्रहत्वे स्वातन्त्र्यहानिः, तस्य स्वतन्त्रत्वे जीवानां फलान्वयानुपपत्तिरित्यत्राह "स भगवानि" ति, निर्दोषत्वं मङ्गलगुणत्वं च भगवच्छब्दार्थः, ताभ्यां वैलक्षण्य पुरुषोत्तमशब्दार्थः विविधफलप्रदानसर्गाद्युपयोगिविशेषणानि सर्वज्ञत्वादीनि सर्गादेरायासरूपत्वान्न लीलात्वमित्यत्राह "स्वमाहात्म्ये" ति, सर्वं तदिच्छाधीनं चेज्ज्योतिष्टोमादेः पुण्यत्वं ब्रह्महत्यादेः पापत्वं च विपर्ययेण स्यातामित्यत्राह "एतानि कर्माणीत्या" दि, अनादिपुण्यापुण्यव्यवस्था च तदीयानादिस्वातन्त्र्यनिबन्धनेत्यर्थः सर्वप्रवृत्तेस्तदिच्छाधीनत्वात् क्षेत्रज्ञानां सुखादिभोक्तृत्वं न स्यात्, तस्य निर्दयत्वादिप्रसङ्गश्चेत्यत्राह "तदुपादानोचिते" ति, यथा पितृभ्यामुत्पाद्य वर्द्धितः शिक्षितोऽर्थगृहक्षेत्रदानादिनोपकृतः पुत्रः पितृदत्तैरेवार्थादिभिर्यज्ञादिकं वा करोति विषयचापलं वाऽनुवर्त्तते न तत्र पित्रोर्दोषः तदधीनवैभवत्वं च पुत्रस्य न हीयते तद्वदिति भावः । सामान्येन प्रदिश्येति देहेन्द्रियादिकं सर्वेषां ददाति न तु कस्य चिद्दत्त्वा चिन्न कस्यचिन्न ददाति देहेन्द्रियादिवैषम्यं तु कर्मकृतमित्यभिप्रेत्याह देहेन्द्रियादिकमित्यादि परमात्मनः शक्तस्याप्यनिवारणं दोष इति चेन्न उपेक्षकत्वं प्रयोजयितृत्वमनुमन्तृत्वं चेति त्रयमस्ति तत्र प्रयोजयितृत्वमप्रवृत्तस्य प्रवर्तकत्वं तच्चा-

ज्ञापयितृत्वमनुमन्तृत्वमर्थयितृत्वमुपदेष्टृत्वं च त्रिधा अनुमन्तृत्वं प्रवृत्तस्य प्रवर्तकत्वम् उपेक्षकत्वमौदासीन्यं तत्र भगवतः पुण्यपापयोः प्रयोजयितृत्वं नास्ति प्रथममुपेक्षमाण एवास्ते पश्चादनुमन्तृत्वमस्त्येव अभिमते प्रवृत्तं केनचिद्विघ्नेन निवृत्तमविघ्नं प्रवर्तयति पश्चात् फलं च ददाति आज्ञातिलङ्घनप्रवृत्तत्वेन कुपितत्वात् भगवाननुमन्ता भवति ।

सू० अनुमन्तृतया च नियच्छँस्तिष्ठति, ते चेतनास्तु तदाहितशक्तयस्तत्प्रदिष्टकरणकलेवरादिकास्तदाधाराश्च स्वयमेव स्वेच्छानुगुण्येन पुण्यापुण्यरूपे कर्मणी उपाददते, ततश्च पुण्यरूपकर्मकारिणं स्वशासनानुवर्तिनं ज्ञात्वा धर्मार्थकाममोक्षैर्वर्धयते, शासनातिवर्तिनं च तद्विपर्ययैर्योजयति अतः स्वातन्त्र्यादिवैकल्यचोद्यानि नावकाशं लभन्ते । दया हि नाम—

टी० अनुमतिः फलदानमुभयमपि दण्डप्रकार एव तथा च दृश्यन्ते राजानो हि स्वशासनातिवृत्तिप्रवृत्तं ज्ञात्वा कोपात्तथा करोत्वित्यनुमन्यन्ते अनुमतिश्च कोपकृतो दण्डविशेष एवातीवानूकूल्यप्रातिकूल्यप्रवृत्तयोरुत्तरोत्तरहिताहितकर्मसु प्रयोजयिता च भवति भगवान्, अहितप्रवृत्तविषय उपेक्षकत्वेऽनुमन्तृत्वे प्रयोजयितृत्वे च तस्य निर्दयत्वादिप्रसङ्ग इति चेत्ततः किं दया चेद्गुणः निग्रहश्चेद्दोष इति न नियमोऽस्ति लोकेऽस्थानदयायाः स्थाननिग्रहस्य च गुणत्वदोषत्वदर्शनाभावात्, राजादीनां दण्ड्यादण्डनादेर्दोषत्वं शास्त्रवश्यत्वेऽज्ञत्वप्रयुक्तमिति चेत्, तर्हि तेषामनुग्रहादेर्गुणत्वमपि सेवज्ञत्वप्रयुक्तं स्यात् तत्रैव निग्रहानुग्रहादेर्दोषत्वगुणत्वदर्शनात् अतो निर्दयत्वहेतुरनैकान्तिकः, शक्तस्यापीश्वरस्य कथमुपेक्षकत्वंनोपेक्षणं शास्त्रप्रवर्तनमुखेन सामान्येनाहितप्रवृत्तिनिवारणस्य कृतत्वात्, प्रवृत्तिकाले तु विशेषतोऽनिवारकत्वाभावरूपमुपेक्षकत्वं स्वातन्त्र्यात्, तच्च स्वातन्त्र्यं दोष इति चेत् तत्र किं प्रमाणम् ईश्वरस्याप्र-

त्यक्तत्वान्न तत्प्रमाणं यद्यनुमानं तत्रेदं वक्तव्यं किमीश्वराख्यं धर्मिणं शास्त्रैकसमधिगम्यमभ्युपगम्य तत्स्वातन्त्र्यस्य दोषत्वमनुमीयते? उताभ्युपगम्य? अनभ्युपगमे हेतोराश्रयासिद्धिः, अभ्युपगमे धर्मिग्राहकप्रमाणेन शास्त्रेण तस्य गुणत्वेन प्रतिपन्नत्वात् कालात्ययापदिष्टत्वमिति । एतदभिप्रेत्याह "अनुमन्तृतया च नियच्छँस्तिष्ठती"ति, क्षेत्रज्ञास्त्वित्यत्र अनुमन्तृतया नियन्तृत्वाद् धारकत्वात्सामान्येन देहेन्द्रियादिप्रदत्वाच्च सर्वं तदधीनमित्यभिप्रायेण तदाहितशक्तय इत्यादिकं विशेषणमुक्तं, पुण्यापुण्ययोः प्रवृत्तस्य प्रवृत्तिस्तदनुगुणेच्छया तदनुगुणज्ञानं च क्षेत्रज्ञाधीनमेव भगवत उपेक्षकत्वात् तत्रोपेक्षकत्वात् तत्रोपेक्षकत्वमपि स्वातन्त्र्यविशेष एवेत्यभिप्रायेणाह "स्वयमेव स्वेच्छानुगुण्येने"ति, कर्मानुगुणफलप्रदत्वे स्वातन्त्र्यवैकल्यं नोचेन्निर्दयत्वादिप्रसङ्ग इत्यत्राह "अत" इति, स्वातन्त्र्यादिवैकल्य-शब्देन दयावैकल्यं सर्वेषु समत्ववैकल्यं जीवानां फलान्वयराहित्यं च विवक्षितम् एतत्कर्मकारिण एतत्फलं दास्यामीति तस्य सङ्कल्पः, तत्र यथासङ्कल्पं कुर्वतस्तस्य स्वातन्त्र्यपौष्कल्यमेवेति भावः । अपराधिनं दण्डयतोऽनपराधिनमदण्डयतश्च राज्ञो न हि स्वातन्त्र्यवैकल्यं तद्वदिति तर्हि निर्दयत्वमिति शङ्कायां दयास्वरूपं शिक्षयति "दया ही"ति, उपजीविनामुपजीव्यापदि यद्दुःखासहिष्णुत्वं तद्व्यावृत्त्यर्थमाह—

श्रू स्वार्थनिरपेक्षा परदुःखासहिष्णुता, सा च स्वशासनातिवृत्तिव्यवसायिन्यपि वर्तमाना न गुणायावकल्पते प्रत्युतापुंस्त्वमेवावहति तन्निग्रह एव तत्र गुणः, अन्यथा शत्रुनिग्रहादीनामगुणत्वप्रसङ्गात स्वशासनातिवृत्तिव्यवसायिनि वृत्तिमात्रेणानाद्यनन्तकल्पोपचितदुर्विषहानन्तापराधानङ्गीकारेण निरतिशयसुखसंवृद्धये स्वयमेव प्रयतते यथोक्तं "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ तेषामेवानुकम्पार्थम-

हमज्ञानजं तमः । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वते''ति, अतः प्राज्ञानधिष्ठितं प्रधानमकारणम् । अथ स्याद्यद्यपि प्राज्ञानधिष्ठितायाः प्रकृतेः परिस्पन्दप्रवृत्तिरपि न सम्भवतीत्युक्तं, तथाऽप्यनपेक्षाया एव परिणामप्रवृत्तेः सम्भवति तथा दर्शनात् धेन्वादिनोपभुक्तं हि तृणोदकादि स्वयमेव क्षीराद्याकारेण परिणममानं दृश्यते, अतः प्रकृतिरपि स्वयमेव जगदाकारेण परिणंस्यत इति तत्राह—

**सू० अन्यत्राभावाच्च न तृणादिवत् ॥ ४ ॥**

नैतदुपपद्यते तृणादेः प्राज्ञानधिष्ठितस्य परिणामाभावाद्दृष्टान्तासिद्धेः, कथमसिद्धिः अन्यत्राभावात् यदि हि तृणोदकादिकमनुडुदाद्यु[१]पभुक्तम् ।

टी० ''स्वार्थनिरपेक्षे''ति, तर्हि दयाया अनवकाशत्वप्रसङ्ग इत्यत आह ''स्वशासनातिवृत्तौ''ति, यथोक्तमित्यत्र प्रीतिपूर्वकं ददामीत्यन्वयः सततयुक्तानामित्यत्राशंसार्थेनाशंसायां क्त इति सूत्रविहितेन क्तेनोपासकप्रीतिरुक्तत्वात्, तस्याशंसार्थत्वमविवक्षितं चेत् सततयुक्तानां भजतामिति पौनरुक्त्यम् अनपेक्षितकथनमपेक्षिताकथनं च स्यातां तस्मादयमर्थः । सूत्रार्थमुपसंहरति ''अत''इति, ईश्वरस्य स्वातन्त्र्यवैकल्यादिप्रसङ्गाभावेन कर्मणां तदाराधनरूपतयैव फलप्रदत्वात्सर्गप्रतिसर्गादिव्यवस्थासिद्ध्यर्थं ब्रह्मैककारणत्वं सिद्धमित्यर्थः । उत्तरसूत्र शङ्कामाह ''अथ स्यादि''ति, धेन्वादिनेति केवलदार्वादिव्यावृत्त्यर्थं चित्सन्निधिमात्रमेवोपगन्तव्यं न तु संकल्पविशेषवत्पुरुषाधिष्ठितत्वं गवि सुप्तायामपि तदुपयुक्ततृणादेः क्षीरादिभावदर्शनात्, न च तदपि पक्षीकार्यं तावता कार्यं सम्भवत्यधि-

१ अनुडुदाद्युपयुक्तमिति पा० ।

ककल्पनायोगादिति भावः । सू॰ अन्यत्राभावाच्च न तृणादिवत्, केवला-
चिन्मात्रस्य प्रपरिणामे दृष्टान्तत्वं विवक्षितं चेत्तद्दूषितम् ।

सू॰ प्रक्षीणं वा क्षीराकारेण परि[1]णंस्यते ततः प्राज्ञानधिष्ठित-
मेव परिणमत इति वक्तुं श[2]क्येत, न चैतदस्ति, अतो-
धेन्वाद्युपभुक्तं प्राज्ञ एव क्षीरीकरोति पयोऽम्बुवच्चेत्तत्रा-
पीत्युक्तमेवात्र प्रपञ्चितं तत्रैव व्यभिचारप्रदर्शनाय ॥

**सू॰ पुरुषाश्मवदिति चेत्तथाऽपि ॥ ५ ॥**

अथोच्येत यद्यपि चैतन्यमात्रवपुः पुरुषो निष्क्रियः
प्रधानमपि दृक्शक्तिविकलं तथाऽपि पुरुषसन्निधानादचे-
तनं प्रधानं प्रवर्तते तथा दर्शनात्, गमनशक्तिविकलदृक्-
शक्तियुक्तपङ्गुसन्निधानात्तच्चैतन्योपकृतो दृक्शक्तिवि-
कलः प्रवृत्तिशक्तियुक्तोऽन्धः प्रवर्तते अयस्कान्ताश्मसन्नि-
धानाच्चायः प्रवर्तते, एवं प्रकृतिपुरुषसंयोगकृतो जगत्सर्गः
प्रवर्तते यथोक्तं "पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधा-
नस्य । पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः" इति,
पुरुषस्य प्रधानोपभोगार्थं कैवल्यार्थं च पुरुषसन्निधाना-
त्प्रधानं सर्गादौ प्रवर्तत इत्यर्थः, अत्रोत्तरं "तथाऽपी"ति,
एवमपि प्रधानस्य प्रवृत्त्यसम्भवस्तदवस्थ एव पङ्गोर्गमन-
शक्तिविकलस्यापि मार्गदर्शनतदुपदेशादयः कादाचित्का-
विशेषाः सहस्रशः सन्ति, अन्धोऽपि चेतनः सन् तदुप-
देशाद्यवगमेन प्रवर्तते तथाऽयस्कान्तमणेरप्ययःसमीपग-

---

१ पर्यणंस्यतेति पा॰ ।
२ अशक्ष्यतेति पा॰ ।

मनादयस्सन्ति, पुरुषस्य तु निष्क्रियस्य न तादृशा विकाराः सम्भवन्ति सन्निधानमात्रस्य नित्यत्वेन नित्यसर्गप्रसङ्गो नित्यमुक्तत्वेन बन्धाभावोऽपवर्गाभावश्च ॥

टी० प्रहीणं वेति चित्संनिधिमात्रेण परिणामो दूषितः, अनुडुदाद्युपयुक्तमिति सङ्कल्पविशेषान्वितचेतनविशेषाधिष्ठानेन परिणामित्वं तु परस्यानिष्टमित्यभिप्रेतम् । प्राज्ञाऽनधिष्ठमिति, एवं विकल्पत्रयमत्राभिप्रेतम् अदृष्टविशेषवदात्मसंयोगाद्धेनूपयुक्ततृणादेः क्षीरभाव इतिचेन्न अदृष्टस्याप्यनुडुदाद्युपयुक्तप्रहीणतृणतुल्ययोगक्षेमतया तस्यापि कार्यकरत्वे प्राज्ञाधिष्ठानमपेक्षितमित्येतत्सर्वमधिकशङ्कापरिहाररूपमर्थजातमिहोपपादितं, सूत्रप्रयोजनमाह "प्रपञ्चितमि"ति, उक्तशङ्काविशेषपरिहाररूपं प्रपञ्चनं, तत्रैव–पयोदृष्टान्त एवेत्यर्थः ॥ सू॰ पुरुषाश्मवदिति चेत्तथाऽपि, उदाहृतामार्यां व्याचष्टे "पुरुषस्ये"ति, उपभोग–शब्देन दर्शनशब्दो व्याख्यातः तथापीति सूत्रखण्डं व्याचष्टे "एवमपी"ति, प्रवृत्त्यसम्भवस्तदवस्थ इति पूर्वापरसूत्रस्यानुपपत्ति–शब्दानुरोधेनाध्याहारः कृतः नित्यनिर्विकारस्य पुरुषस्य पङ्गोर्मार्गदर्शनोपदेशादिवत्कादाचित्कविशेषोऽस्ति अन्धस्य तदुपदेशावगतिवन्न प्रकृतेर्विशेषोऽस्ति अयस्कान्तस्य समीपगमनादिवत् पुरुषस्य न विकारसम्भवः विभुत्वात्समीपगमनापेक्षा न चेन्नित्यसर्गप्रसङ्ग इत्यर्थः ॥

## सू० अङ्गित्वानुपपत्तेश्च ॥ ६ ॥

भा० गुणानामुत्कर्षनिकर्षनिबन्धनाङ्गाङ्गिभावाद्धि जगत्प्रवृत्तिः प्रतिप्रतिगुणाश्रयविशेषादिति वदद्भिर्भवद्भिरभ्युपगम्यते प्रतिसर्गावस्थायान्तु साम्यावस्थानां सत्त्वरजस्तमसामन्योन्याधिक्यन्यूनत्वाभावादङ्गाङ्गिभावानुपपत्तेर्न जगत्सर्ग उपपद्यते, तथाऽपि वैषम्याभ्युपगमे नित्यसर्गप्रसङ्गः, अतश्च न प्राज्ञानधिष्ठितं प्रधानं कारणम् ॥

सू० अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॥ ७ ॥

दूषितप्रकारातिरिक्तप्रकारान्तरेण प्रधानानुमितौ च प्रधानस्य ज्ञातृत्वशक्तिवियोगात् त एव दोषाः प्रादुष्ष्युः, अतो न कथञ्चिदप्यनुमानेन प्रधानसिद्धिः ॥

सू० अभ्युपगमेऽप्यर्थाभावात् ॥ ८ ॥

अनुमानेन प्रधानसिद्ध्यभ्युपगमेऽपि प्रधानेन प्रयोजनाभावान्न तदनुमातव्यं "पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्ये"ति प्रधानस्य प्रयोजनं पुरुषभोगापवर्गावभिमतौ तौ च न सम्भवतः पुरुषस्य चैतन्यमात्रवपुषोनिष्क्रियस्य निर्विकारस्य निर्मलस्य तत एव नित्यमुक्तस्वरूपस्य प्रकृतिदर्शनरूपो भोगस्तद्वियोगरूपोऽपवर्गश्च न सम्भवति एवंरूपस्यैव प्रकृतिसंनिधानात्तत्परिणामविशेषसुखदुःखदर्शनरूपभोगसम्भावनायां प्रकृतिसंनिधानस्य नित्यत्वेन कदाचिदप्यपवर्गो न सेत्स्यति ॥

सू० विप्रतिषेधाच्चासमञ्जसम् ॥ ९ ॥

विप्रतिषिद्धं चेदं सांख्यानां दर्शनं, तथाहि प्रकृतेः परार्थत्वेन दृश्यत्वेन भोग्यत्वेन प्रकृतेर्भोक्तारमधिष्ठातारं द्रष्टारम्

टी० सू० अङ्गित्वानुपपत्तेश्च, एवं परोक्तानुमानस्य प्राज्ञाधिष्ठितत्वप्रसङ्गमुखेन च विषमावस्थत्वप्रसङ्गमुखेन विशेषविरोध उक्तः अनुमानान्तरेऽप्युक्तदूषणमतिदिशति सू० अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात्, ज्ञातृत्वे सति हि सङ्कल्पादधिष्ठात्रन्तरनिरपेक्षप्रवृत्त्युपपत्तिः, तच्च नास्ति तस्मान्नित्यसर्गादिप्रसङ्ग इत्यर्थः । अचेतनत्वादेव प्राज्ञाधिष्ठितत्वं प्रसजेदिति भावः । इदं । विषयमावस्थत्वप्रसङ्गस्यापि दर्शनार्थमुक्तम् अभ्युपग-

मेऽप्यर्थाभावात् कस्याभ्युपगम इत्यपेक्षायां पूर्वसूत्रप्रत्यासत्त्याऽनुमितिरेवार्थतो बुद्धिस्थेत्यभिप्रायेण "अनुमानेनेति प्रवृत्तिस्त्वनेकसूत्रव्यवहितत्वान्न सा ऽनुबन्धमर्हतीति भावः । नित्यनिर्विकारस्यापि भोगापवर्गाभ्युपगमशङ्कायामनन्तरसूत्रं सू॰ विप्रतिषेधाच्चासमञ्जसम्, परात्वर्थप्रतियोगित्वेनाह—

मू॰ साक्षिणं च पुरुषमभ्युपगम्य प्रकृत्यैव साधनभूतया तस्य कैवल्यमपि प्राप्यं वदन्त एव तस्य नित्यनिर्विकारचैतन्यमात्रस्वरूपतया अकर्तृत्वं कैवल्यं च स्वरूपमेवाहुः । तत एव बन्धमोक्षसाधनानुष्ठानं मोक्षं च प्रकृतेरेवाहुः एवंभूतनिर्विकारोदासीनपुरुषसंनिधानात्प्रकृतेरितरेतराध्यासेन सर्गादिप्रवृत्तिं पुरुषभोगापवर्गार्थत्वं चाहुः । "सङ्घातपरार्थत्वात् त्रिगुणादिविपर्य्ययादधिष्ठानात् । पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थं प्रवृत्तेश्च । "तस्माच्च विपर्य्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य। कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्चे"ति पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्येत्युक्त्वैवमाहुः "तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित्संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिरिति, तथा "तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् । गुणकर्तृत्वे च तथा कर्त्तेव भवत्युदासीनः । पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः" इति साक्षित्वद्रष्टृत्वभोक्तृत्वादयो नित्यनिर्विकारस्याकर्तुरुदासीनकैवल्यैकस्वरूपस्य न सम्भवन्ति, एवंरूपस्य तस्याध्यास-

न्नतो भ्रमोऽपि न सम्भवति अध्यासभ्रमयोरपि विकारत्वात्प्रकृतेश्च तौ न सम्भवतः, तयोश्चेतनधर्म्मत्वात् । अध्यासो हि नाम चेतनस्यान्यस्मिन्नन्यधर्मानुसन्धानं, स च चेतनधर्म्मो विकारश्च । न च पुरुषस्य प्रकृतिसन्निधिमात्रेणाध्यासादयः सम्भवन्ति, निर्विकारत्वादेव सम्भवन्ति चेन्नित्यं प्रसज्येरन् सन्निधेरकिञ्चित्करत्वं च, न विलक्षणत्वादित्यत्र प्रतिपादितं, प्रकृतिरेव संसरति बध्यते मुच्यते चेत्कथं नित्यमुक्तस्य पुरुषस्योपकारिणी सेत्युच्यते, वदन्ति हि "नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः । गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरती"ति, यथा प्रकृतिर्येन पुरुषेण यथास्वभावा दृष्टा तस्मात्पुरुषात्तदानीमेव निवर्तत इति चाहुः "रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् । पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः । प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति । या दृष्टास्मीऽति पुनर्न दर्शनमुपैति पुरुषस्ये"ति तदप्यसङ्गम ॥

टी० "अधिष्ठातारमि"ति, अधिष्ठाता—स्वतन्त्रः साक्षी—स्वरूपेणानुसन्धाता द्रष्टा—इन्द्रियादिभिर्द्रष्टा । उक्तार्थविषयं तद्वन्यमाह "सङ्घाते"ति, त्रिगुणादिविपर्ययात् आदि–शब्दः कार्य्यपरः त्रिगुणतत्कार्यं जडं जडस्याधिष्ठातृत्वायोगात् तदन्योऽधिष्ठातेत्यर्थः, अधिष्ठानादिति, अधिष्ठेयात् त्रिगुणादेरधिष्ठातुर्विलक्षणत्वात् कर्मकर्तृविरोधादित्यर्थः कैवल्यार्थं प्रवृत्तेश्च, न हि त्याज्यमेव त्यागकर्त्तेत्यर्थः, उक्तार्थानां विप्रतिषेधं शंदयति "साक्षित्वे"ति, चेतनधर्मा विकारश्चेति चेतनधर्मत्वान्न प्रधानस्य

सम्भवति विकाररूपत्वान्नात्मनः सम्भवतीत्यर्थः । प्रथमभ्रमोऽध्यासस्तन्मूला अन्ये भ्रमशब्दवाच्याः । प्रकृतिदर्शनं पुरुषकर्तृकं स्वात्मकर्तृकं चानुपपन्नमित्याह–

सू० पुरुषो हि नित्यमुक्तत्वान्निर्विकारत्वान्न तां कदाचिदपि पश्यति नाध्यस्यति च, स्वयं च स्वात्मानं न पश्यति अचेतनत्वात् पुरुषस्य स्वात्मदर्शनं स्वदर्शनमिति नाध्यस्यति च स्वयमचेतनत्वात्पुरुषस्य च दर्शनरूपविकारासम्भवात् । अथ सन्निधिमात्रमेव दर्शनमित्युच्यते सन्निधेर्नित्यत्वेन नित्यदर्शनप्रसङ्ग इत्युक्तं, स्वरूपातिरिक्तकादाचित्कसन्निधिरपि नित्यनिर्विकारस्य नोपपद्यते । किञ्च मोक्षहेतुस्तु स्वसन्निधिमात्रमेव दर्शनं चेद्बन्धहेतुरपि तदेवेति नित्यवद्बन्धो मोक्षश्च स्याताम्, अयथादर्शनं बन्धहेतुः, यथावत्स्वरूपदर्शनं मोक्षहेतुरिति चेत् उभयविधस्यापि दर्शनस्य संनिधानरूपतानऽतिरेकात सदोभयप्रसङ्ग एव, सन्निधेरनित्यत्वे तस्य हेतुरन्वेषणीयस्तस्यापीत्यनवस्था । अथैतद्दोषपरिजिहीर्षया स्वरूपसद्भाव एव सन्निधिरिति तदा स्वरूपस्य नित्यत्वेन नित्यवद्बन्धमोक्षौ, अत एवमादेर्विप्रतिषेधात सांख्यानां दर्शनमसमञ्जसम् ॥ येऽपि कूटस्थनित्यनिर्विशेषस्वप्रकाशचिन्मात्रं ब्रह्माविद्यासाक्षित्वेनापारमार्थिकबन्धमोक्षभागिति वदन्ति तेषामप्युक्तनीत्याऽविद्यासाक्षित्वाध्यासाद्यसम्भवादसामञ्जस्यमेव ॥

टी० पुरुषोहीत्यादिना, सन्निधेः स्वरूपानतिरिक्तत्वे च दूषणा-

माह—अथेत्यादिना, अस्मिन्सांख्यपक्षनिरासे मायावादिनामनवकाशत्व-
माह "येऽपी"ति, निर्विकारस्याविद्यानुभवाध्यासायोगादित्यर्थः ॥

सू० इयांस्तु विशेषः सांख्या जननमरणप्रतिनियमादिव्यवस्थासिद्ध्यर्थं पुरुषबहुत्वमिच्छन्ति। ते तु तदपि नेच्छन्तीति सुतरामसामञ्जस्यम्। यत्तु प्रकृतेः पारमार्थ्यापारमार्थ्यविभागेन वैषम्यमुक्तं, तदयुक्तं पारमार्थिकत्वेऽप्यपारमार्थिकत्वेऽपि नित्यनिर्विकारस्वकाशैकरसचिन्मात्रस्य स्वव्यतिरिक्तसाक्षित्वाद्यनुपपत्तेः, अपारमार्थिकत्वे तु तस्य दृश्यत्वबाध्यत्वाभ्युपगमात्सुतरामसङ्गतम्, औपाधिकभेदाभेदवादेऽपि उपाधिसम्बन्धिनो ब्रह्मणोऽयमेव स्वभाव इत्युपाधिसम्बन्धाद्यनुपपत्तेरसामञ्जस्यं पूर्वमेवोक्तम्।

रचनानुपपत्त्यधिकरणं समाप्तम् ॥

टी० अधिकं दूषणमाह "इयांस्त्व"ति, दृश्यत्वबाध्यत्वाभ्युपगमादिति यदविद्याविरोधि तदेव तत् साक्षीति वचनसङ्गतमित्यर्थः। यद्वा अविद्यानुभवरूपदर्शनं तद्बाधकदर्शनमपि विकार स तु निर्विकारस्य नोपपद्यते इत्यर्थः अयमेव स्वभाव इति नित्यनिर्विकारत्वनिर्दोषत्वादिस्वभाव इत्यर्थः। हेयप्रत्यनीकत्वकल्याणैकतानत्वश्रुतिविरोधोऽभिप्रेतः सर्वैरपि परैः प्रवृत्तेश्चेति सूत्रान्तरं कृतं तत्र जगद्रचनासिद्ध्यर्था प्रकृतेराद्या गुणसाम्यप्रच्युतिव्यापाररूपा प्रवृत्तिः साऽपि प्रधानस्य स्वतन्त्रत्वेऽनुपपन्ना मृदादिष्वदर्शनादिति शङ्करभास्कराभ्यां रथशकटादिष्वदर्शनादिति यादवमिश्रैश्च व्याख्यातं, तदयुक्तं चेतनाधिष्ठितस्यैवाचेतनस्य कार्यकरत्वदर्शनरूपयुक्तेर्भेदाभावात् जगद्रचनाऽनुरूपव्यापारस्य तदर्थस्याद्यव्यापारस्य च तुल्यन्यायविषयतया तुल्यार्थानां विषयवाक्यानामिव सूत्रभेदप्रणयने प्रयोजनाभावाच्च अतोऽन्वयव्यतिरेकरूपेणोभयव्याप्तिदर्शकमेकं सूत्रं पयसोवत्सवृद्धये प्रवृत्तिवदम्बुनोलोकोपकाराय स्यन्दनप्रवृत्त

वच्च प्रधानस्य स्वत एव पुरुषार्थानुगुणा प्रवृत्तिरिति पयोऽम्बुवदित्यंशो व्याख्यातः, ततोऽपि दध्यादिपरिणामे नालिकेरादिरसात्मना च परिणामे च प्रवृत्तिवदिति व्याख्यानं युक्तं कारणावस्थस्य प्रधानस्य कार्यजगद्रूपेण परिणतौ चेतनाधिष्ठाननिरपेक्षत्वं वदता पूर्वपक्षिणा चेतनसम्बन्धानपेक्षतया प्रतिपक्षपरिणामस्य प्रदर्शयितुं युक्तत्वात्पुरुषार्थसिद्ध्यनुगुणत्वदूषणस्याभ्युपगमेऽप्यर्थाभावादिति वक्ष्यमाणतयाऽत्र तत्पृथगुक्तेर्विफलत्वात् कार्यं प्रति पुरुषस्य फलित्वमेव निमित्तत्वम्, अतो नाधिष्ठानापेक्षेति शङ्का च परिहर्त्तव्येति चेन्न फलित्वस्य पुरुषसन्निधितुल्ययोगक्षेमतयाऽन्यत्राभावाच्च न तृणादिवदिति न्यायेनार्थतः परिहृतत्वात्तत्पुरुषस्य फलित्वमात्रेण कार्य्यं प्रति निमित्तत्वेऽनडुदाद्युपयुक्तं तृणादिकमपि हि क्षीरीभवेदिति हि तर्कः समानः, अम्बुनः स्पन्दने च निम्नभूम्यपेक्षाऽस्तीति परिहारश्च न साधीयान् चेतनस्यापेक्षत्वापादने निम्नभूम्यपेक्षणस्यानुपयोगात् उपसंहारनिदर्शनाच्चेति चेत् क्षीरवद्धीति सूत्रेणास्य सूत्रस्य व्याहृतिपरिहारश्च लोकदृष्टिशास्त्रदृष्टिभेदादित्युक्तं, तस्मिन्नधिकरणे बाह्यनिमित्तनिरपेक्षतायां लोकदृष्ट्या दर्शितस्य दृष्टान्तस्यात्र प्रतिपक्षतया शास्त्रदृष्ट्या स्वपक्षेण साध्यवैकल्ये परिचोदिते निरुत्तरत्वापत्तेः, तदयुक्तम् अतो दण्डचक्रादिवदुपकरणान्तरनैरपेक्ष्यं तत्राभिप्रेतमित्येव परिहर्त्तव्यम्, अन्यत्राभावाच्च न तृणादिवदित्यस्यानन्तरमभ्युपगमेऽप्यर्थाभावादिति सूत्रं व्याख्यातं भाष्ये त्वन्त्यसूत्रात्पूर्वंविवेशितं तत्र हेतुर्वृत्त्यनुरोध इति ज्ञातव्यम् अर्थात्सङ्गतिश्चान्यथा स्यात्, प्राज्ञस्यैव क्षीरीभावनिमितत्वेऽभिहिते परोक्तपक्षेऽपि चेतनान्वयः सुवच इति शङ्कायां परिहारपरं पुरुषाश्मवदिति सूत्रं सङ्गच्छते अभ्युपगमेऽप्यर्थाभावादिति भोगापवर्गरूपप्रयोजनाभावाद्दूषिते पुरुषाश्मवदिति चेदिति पङ्ग्वन्धायस्कान्तलोहदृष्टान्तनिबन्धनशङ्कायाः कथं सङ्गतिः, प्रवृत्त्युपपत्तौ हि पङ्ग्वन्धादिदृष्टान्तः न पुरुषार्थोपपत्तौ अयस्कान्तलोहयोः प्रयोजनभाक्त्वाभावात् व्याप्तिनिबन्धनङ्कत् स्वानुपपत्तिसूक्तासु चाभ्युपगमेन परिहारोक्तिर्घटते, एकं कारणं त्रीणि तानि सप्तेन्द्रियाणि तान्येकादशमहतस्तन्मात्रासर्गः अहङ्कारादिति प्रतिषेधो दर्शितः शाङ्करे, अन्तर्भावानन्त-

भावाभ्यां विवक्षावशात् सद्वारकाद्वारभावाच्च तादृशविप्रतिषेधस्य सुपरिहरत्वात् भाष्ये तथाऽनादरः वेदान्तविरोधादिति भास्करः असामञ्जस्यप्रतिज्ञानस्य परस्परव्याहतिनिबन्धनत्वौचित्यात्तद्वाचित्वस्वारस्याच्च भाष्ये तदनादरः वेदान्तविरोधादिति विवक्षितं वेदाद्यसूत्रस्य प्रधानकारणत्वप्रतिक्षेप एव साध्यतयाऽन्वीयत इति प्रतिज्ञान्तरासाधारणहेतुपरतया विप्रतिषेधव्याख्यानं भाष्ये, तेन परमसाध्यप्रधानकारणवादनिषेधः सिध्यतीति निर्विशेषज्ञप्तिमात्रस्य प्रवर्तकत्वानुपपत्तिर्मृषावादिनामपि तुल्या, स्वरूपव्यपाश्रयमौदासीन्यं मायाव्यपाश्रयं प्रवर्तकत्वमित्यविरोधश्चानुपपन्नः, मायायाश्च ब्रह्मणि सर्वविधाध्यासकार्यजनप्रकृतौ स्वतन्त्रत्वे तद्वत्साङ्ख्याभिमतप्रधानस्यापि प्रवृत्त्युपपत्तेः, तस्या ईश्वराधीनत्वे मायाप्रवृत्तेरीश्वराध्यासः अध्यस्तेश्वरवशान्मायाप्रवृत्तिरित्यन्योन्याश्रयः, तदध्यासस्यानादित्वे प्रधानस्यापि पुरुषे स्वधर्माणामनाद्याध्यासमुखेन जगत्प्रवृत्तिहेतुत्वमिति तुल्यं नित्यसर्गप्रसङ्गश्च तुल्यः प्रधानस्येवाविद्यायाः सन्निहितत्वात्, अध्यस्तेश्वरेच्छयाऽनित्यप्रसङ्ग इति चेत् न ईश्वरेच्छया अध्यासनिबन्धनत्वात् अध्यासहेतोर्मायायाः सदा सन्निहितत्वात् चेत्रेच्छाया इव कर्मणा व्यवस्थापयितुमशक्यत्वाच्च नित्येच्छाप्रसङ्गात्। यादवार्यैस्तु प्रवृत्तेश्चेति पदं रथशकटादीनां स्पन्दात्मकप्रवृत्तेश्चेतनसापेक्षत्वदर्शनादिति व्याख्यातं, तत्र च पूर्वोक्तमेवोत्तरमनुसन्धेयम् । अर्थान्तरं च तैरभिहितं स्वफलाय प्रवृत्ताः शकुनादयः स्वफलाय प्रवृत्तानां मनुष्याणां शुभाशुभे सूचयन्ति, तत्र शकुनिकर्म न पुरुषप्रतर्कं । पुरुषकर्म च न शकुनिप्रवर्तकम्, अतश्च उभयकर्माभिज्ञेनेश्वरेण सर्वशक्तिना शकुनिचेष्टितपुरुषफलादिकं सर्वं सङ्गमयितव्यमिति तदपि मन्दं शकुनिसंनिधानस्य पुरुषव्यापारद्वारा पुरुषफलोपयोऽगितया तदुपयोगिवृक्षादेरिव तदौपयिकशकुनिसंनिधानादीनामपि तत्फलभोक्तृपुरुषकर्मनिबन्धनप्रवृत्तेश्चेतनसापेक्षत्वेऽपि परिणामप्रवृत्तेस्तन्नैरपेक्ष्ययुक्तमिति शङ्कापरमन्यत्राभावाच्चेत्यादिसूत्रं व्याख्यातं तच्च पयोऽम्बुवच्चेदिति सूत्रस्यैव परिणामप्रवृत्तौ नैरपेक्ष्यपरिहारपरत्वोपपादनं

युक्तम् अतः पयोऽम्बुवदित्युक्तस्य प्रपञ्चमिदम् अभ्युपगमेऽप्यर्थाभावादिति प्रकृतेः प्रतिसर्गादिव्यवस्थासिद्ध्यर्थं सहकारिकारणाऽभ्युपगमेऽपि तादृशसहकारिरूपार्थाभावान्नित्यसर्गादिप्रवृत्तिनित्यतदभावप्रसङ्गपरिहार उपपन्न इति च व्याख्यातं साङ्ख्यैः, प्रकृतिपरिणामसङ्ख्याविशेषव्यतिरेकेण प्रतिसर्गादिव्यवस्थानिमित्तभूतार्थविशेषानभ्युपगमाच्छङ्कापरिहारा उभावपि निष्फलौ विप्रतिषेधादिति सूत्रमेवमपि व्याचक्षते हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गं सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तमिति प्रकृतेर्व्यक्तविपरीतत्वमभ्युपगम्यते, तद्धि प्रतिषिद्धं व्यक्तवद्धेतुमत्त्वानित्यत्वाभ्युपगमेऽनुमानप्रवृत्तिसम्भवद् वृक्षस्य परिणामपरम्परां प्राप्तस्यावृक्ष इव त्रिगुणात्मकप्रधानस्यापि परिणामपरम्परया त्रैगुण्यातिक्रमेणावस्थान्तरं तन्मूलं स्यात् तस्याऽपि प्रहाणेन ततोऽप्यवस्थान्तमिति क्वचिदपि न तत्त्वनिष्ठाप्रधानस्यानित्यत्वं सहेतुकत्वं तत्त्वसङ्ख्यानियमासिद्धिश्चातोऽसमञ्जसमिति इदमप्यनुचितम् अनित्यत्वप्रसङ्गादीनां विप्रतिषेधशब्दवाच्यत्वाभावान्मिथोविरुद्धार्थभाषणं हि विप्रतिषिद्धाभिधानम्॥ रचनाऽनुपपत्त्यधिकरणं समाप्तम्॥

महद्दीर्घाधिकरणम् ।

## सू० महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ १० ॥

**प्रधानकारणवादस्य युक्त्याभासमूलतया विप्रतिषिद्धत्वाच्चासामञ्जस्यमुक्तं, संप्रति परमाणुकारणवादस्याप्यसामञ्जस्यं प्रतिपाद्यते महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यामिति, असमञ्जसमिति वर्तते, वा—शब्दश्चार्थे, ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्यां महद्दीर्घवत् त्र्यणुकोत्पत्तिवादवदन्यच्च तदभ्युपगतं सर्वमसमञ्जसम् ।**

टी० सू० महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्, सङ्गतिमाह "प्रधाने"ति, प्रधानकारणवादस्यासत्त्वेन धीस्थत्वात्तद्दूषितम् आनुमानिकप्रधानकारणत्वे निरस्ते आनुमानिकपरमाणुकारणत्वं स्यादिति प्रस्ता-

वात् सङ्गतिरित्यर्थः प्रधानकारणवादसाम्येऽपि शैवमतस्य पश्चान्निरासस्तु बाह्यत्वाधिक्याद्वेदबाह्यमतानन्तर्यस्य युक्तत्वात् । किं विपक्वजीवादृष्टसचिवाः परमाणवो जगत्कारणमुत? न परिमाणूनां संयोगद्वाराऽवयव्यारम्भकत्वे कारणानवस्थितिकार्यप्रथिमासिद्ध्योरन्यतरप्रसक्तिरवर्जनीया ने?ति, यदा न प्रसक्तिस्तदा परमाणूनां जगदारम्भकत्वोपपत्तेर्ब्रह्मकारणवादस्य अद्वैयतमत्वहानिः, यदा प्रसक्तिरवर्जनीया तदा परमाणुकारणवादानुपपत्तेर्ब्रह्मकारणवादस्य अद्वैयतमत्वं,वा—शब्दश्चार्थे समुच्चय इत्यर्थः दूष्यसमुच्चयोऽभिप्रेतः ह्रस्वं द्व्यणुकं परिमण्डलं परमाणुः, महद्दीर्घं त्र्यणुकं तच्च द्व्यणुकत्रयारब्धं त्र्यणुकस्य द्व्यणुकत्रयारब्धत्वेऽपि सूत्रे द्व्यणुकेन परमाणुना चारब्धत्वं प्रतीयत इवेति तद्व्यावृत्त्यर्थमन्यच्च तदभ्युपगतमित्युक्तस्य घटादिकार्यान्तरव्यावृत्त्यर्थं चाह—

सू० परमाणुभ्यो द्व्यणुकादिक्रमेण जगदुत्पत्तिवादवदन्यदप्यसमञ्जसमित्यर्थः, तथा हि तन्तुप्रभृतयो ह्यवयवाः स्वांशैः षड्भिः पार्श्वैः संयुज्यमानाः अवयविनमुत्पादयन्ति परमाणवोऽपि स्वकीयैः षड्भिः पार्श्वैः संयुज्यमाना एव द्व्यणुकादीनामुत्पादका भवेयुः, अन्यथा परमाणूनां प्रदेशभेदाभावे सति सहस्रपरमाणुसंयोगेऽप्येकस्मात्परमाणोरनतिरिक्तपरिमाणतया अणुत्वह्रस्वत्वमहत्त्वदीर्घत्वाद्यसिद्धिः स्यात्, प्रदेशभेदाभ्युपगमे परमाणवोऽपि सांशाः स्वीयैरंशैस्ते च स्वकीयैरंशैरित्यनवस्था। न च वाच्यमवयवाल्पत्वमहत्त्वाभ्यां हि सर्षपमहीधरयोर्वैषम्यं परमाणोरप्यनन्तावयवत्वे अवयवानन्त्यसाम्यात्सर्षपमहीधरयोर्वैषम्यासिद्धेरवयापकर्षकाष्ठाऽवश्यमभ्युपगमनीयेति परमा-

णूनां प्रदेशभेदाभावे सत्येकपरिमाणुपरिमाणातिरेकी प्रथिमा न जायेतेति सर्षपमहीधरयोरेवासिद्धेः ।

टी० "परमाणुभ्य" इति, भाष्यस्थत्र्यणुकशब्द एव कार्यान्तरस्योपलक्षणं परमाणुभ्यो द्व्यणुकादिकार्योत्पत्तिवादवत् गगननित्यत्वादिकमन्यत्तदभ्युपगतमसमञ्जसमित्यर्थः. सूत्रे ह्रस्वपरिमण्डल-शब्दाभ्यां कारणद्वयमुक्तं महद्दीर्घशब्दोऽणुह्रस्वस्य द्व्यणुकस्याप्युपलक्षणं द्व्यणुकपरिमाणुभ्यां त्र्यणुकद्व्यणुकादिकार्य्यवदन्यच्चासमञ्जसमित्यर्थः कार्य्यद्वयोपलक्षणमुत्तरत्र वक्ष्यते । महद्दीर्घशब्दौ भावप्रधानौ महत्त्वं दीर्घत्वं च, अतः सामानाधिकरण्याभावादान्महत इत्यादिना महच्छब्दस्यात्वाभावः, एवं भावप्रधानाभ्यां महद्दीर्घशब्दाभ्यां तद्गुणकं त्र्यणुकं लक्ष्यते, परमाणुभ्यो द्व्यणुकाद्युत्पत्त्यनुपपत्तिः कथमित्यत्राह "तथा ही"ति, अणुत्वह्रस्वत्वे द्व्यणुकस्य धर्मौ महत्त्वदीर्घत्वे त्र्यणुकस्य, न च वाच्यमित्यादि सर्षपमहीधरवैषम्यसिद्ध्यर्थं परमाणूनां निरवयवत्वमास्थेयम् अन्यथा अवयवानन्त्य साम्यात् तयोर्वैषम्यासिद्धेरित्यर्थः । परिहरति "परमाणूनामि"ति, निरवयवत्वे सहस्रपरमाणुसंयोगेऽप्येकपरमाण्वनतिरिक्तपरिमाणतया सर्षपमहीधराख्यधर्म्यसिद्धेः परमाणूनां सांशत्वमास्थेयमित्यर्थः । एवं वैषम्याख्यधर्मसिद्ध्यर्थं निरवत्वमुक्तं सर्षपमहीधराख्यधर्मिसिद्ध्यर्थं सावयवत्वमुक्तम् ।

स्० किं कुर्म्म इति चेद्वैदिकः पक्षः परिगृह्यताम् ॥ यत्तु परैर्ब्रह्मकारणवाददूषणपरिहारमिदं सूत्रव्याख्यातं तदसङ्गतं पुनरुक्तं च, ब्रह्मकारणवादे परोक्तान्दोषान् पूर्वस्मिन् पादेपरिहृत्य परपक्षप्रतिक्षेपो ह्यस्मिन् पादे क्रियते चेतनाद्ब्रह्मणो जगदुत्पत्तिसम्भवश्च न विलक्षणत्वादित्यत्रैव प्रपञ्चितः, अतो ह्रस्वपरिमण्डलाभ्यां महद्दीर्घाणुह्रस्वोत्पत्तिवदन्यच्च तदभ्युपगतसर्वमसमञ्जसमित्येव सूत्रार्थः । किमत्रान्यदसमञ्जसमित्याह

## सू० उभयथा न कर्मातस्तदभावः ॥ ११ ॥

परमाणुकारणवादे हि परमाणुगतकर्मजनिततत्संयोगपूर्वकद्व्यणुकादिक्रमेण जगदुत्पत्तिरिष्यते तच्च निखिलजगदुत्पत्तिकारणभूतपरमाणुगतमाद्यं कर्मादृष्टकारितमित्यभ्युपगम्यते । अग्नेरूर्द्ध्वज्वलनं वायोस्तिर्य्यग्गमनमणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानीति, तदिदं परमाणुगतं कर्म स्वगतादृष्टकारितमात्मगतादृष्टकारितं वा? उभयथाऽपि न सम्भवति क्षेत्रज्ञपुण्यपापानुष्ठानजनितस्यादृष्टस्य परमाणुगतत्वासम्भवात्, सम्भवे च सर्व्वदोत्पादकत्वप्रसङ्गः ॥

टी० किं कुर्म्म इति चेदिति सावयवत्वे वैषम्यासिद्धिः, निरवयवत्वे धर्म्यसिद्धिरिति किमवलम्बनीयमित्यर्थः । वैदिकः पक्षः परिगृह्यतां युक्तिबाधागोचरशास्त्रैकसमधिगम्यार्थः स्वीक्रियताम् । तत्र हि न ह्यल्पेन विपुलस्योत्पत्तिः दशगुणं बृहतो ब्रह्मणः कारणादल्पस्य कार्य्यत्वं हि प्रतिपाद्यते तत्तु न युक्तिबाधगोचर इत्यर्थः, अस्य सूत्रस्य परोक्तनिर्वाहमनूद्य दूषयति यत्त्वित्यादिना, असङ्गतं-पादसङ्गतिर्नास्ति पुनरुक्तं च अनपेक्षितं चेत्यर्थः । तत्रासङ्गतिमुपपादयति "ब्रह्मकारणे"ति, पुनरुक्तिमुपपादयति "चेतनादि"ति, एवं हि परैर्व्याख्यातं तथा विलक्षणाभ्यां परमाणुद्व्यणुकाभ्यां विलक्षणम् द्व्यणुकादिकार्य्यमुत्पद्यते तथा विलक्षणात् ब्रह्मणो विलक्षणं जगदुत्पद्यत इति तदिदमसङ्गतिपुनरुक्तिमनुपपन्नमित्यर्थः । अत इति अत्र कारणद्वयोपादानं कार्यद्वयोपादानं च स्पष्टमुक्तं ह्रस्वपरिमण्डलाभ्यां महद्दीर्घाणुह्रस्वोत्पत्तिवदित्युक्तेर्द्व्यणुकात् त्र्यणुकोत्पत्तिः, परमाणोर्द्व्यणुकोत्पत्तिरित्यर्थः । उत्तरसूत्रशङ्कामाह "किमत्रे"ति, सू० उभयथाऽपि न कर्मास्तदभावः ॥

सू० आत्मगतस्य चादृष्टस्य परमाणुगतकर्मोत्पत्तिहेतुत्वं न

सम्भवति । अथादृष्टवदात्मसंयोगादणुषु कर्मोत्पत्तिस्तदा तस्यादृष्टप्रवाहस्य नित्यत्वेन नित्यसर्गप्रसङ्गः । नन्वदृष्टं विपाकापेक्षं फलायालं कानिचिददृष्टानि तदानीमेव विपच्यन्ते कानिचिज्जन्मान्तरे कानिचित्कल्पान्तरे, अतो विपाकापेक्षत्वान्न सर्वदोत्पादकत्वप्रसङ्ग इति नैतत् अनन्तैरात्मभिरसङ्केतपूर्वकमयुगपदनुष्ठितानेकविविधकर्मजनितानामदृष्टानामेकस्मिन् काले एकरूपविपाकस्याप्रामाणिकत्वात्, अत एव युगपत्सर्वसंहारो द्विपरार्द्धकालमविपाकेनावस्थानं च न सङ्गच्छते । न चेश्वरेच्छाहितविशेषादृष्टसंयोगादणुषु कर्म, आनुमानिकेश्वरासिद्धेः, शास्त्रयोनित्वादित्यत्रोपपादितत्वात्, अतो जगदुत्पत्तेरणुगतकर्मपूर्वगत्वाभावः ॥

## सू० समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १२ ॥

समवायाभ्युपगमाच्चासमञ्जसं कुतः साम्यादनवस्थितेः समवायस्याप्यवयविजातिगुणवदुपपादकान्तरापेक्षासाम्यादुपपादकान्तरस्यापि तथेत्यनवस्थितेरसमञ्जसमेव

टी० आत्मगतस्य चेति व्यधिकरणत्वादित्यर्थः विपाकः फलार्हदशा, स चेति संयोगशब्दः परम्परया सम्बन्धपरः ईश्वराहितविशेषादृष्टवदात्मसंयोगादित्यर्थः । दूषयति "आनुमानिके"ति, सिद्धेऽपीश्वरे तस्य नित्येच्छायाः पराभ्युपगमान्नित्यसर्गप्रसङ्गस्य पूर्वोक्तया दिशा स्फुटत्वात्तदनुक्तिः । सू० समवायाभ्युपगमाच्च साम्यादनवस्थितेः, प्रथमपञ्चम्यन्तपदस्य परमसाध्येनान्वयं दर्शयन् व्याचष्टे "समवाये"ति, समवायाभ्युपगम-

स्यासामञ्जस्यहेतुत्वोपपादिकाऽनवस्थितिरित्यभिप्रायेणाह "कुत" इति, अनवस्थित्युपपादकं साम्यपदमित्यभिप्रायेण साम्यादनवस्थितेरित्युपादानं, तत्र साम्यं केनाकारेणेत्यत्राह "अवयविजातिगुणवदुपपादकान्तरापेक्षा साम्यादि"ति, अत्यन्तभेदसाम्यादिति परे, तदयुक्तं भिन्नयोर्घटयोः समवायाभावाद्भेदस्य समवायकल्पकत्वेन वैशेषिकैरनुक्तत्वाच्च, इह-प्रत्ययसाम्यादित्यन्ये तच्चायुक्तं कुण्डबदरयोः समवायाभावात्, तस्मादिह प्रत्ययविशेषस्य निर्वाहकान्तरसापेक्षत्वं साम्यमित्यर्थः। अवयविजातिगुणानामुपपादकान्तरापेक्षा कथं समवायस्य तदपेक्षासाम्यं वा कथं? तत्र स्वपरनिर्वाहकत्वं वा स्यादित्याशङ्क्याह-

भा० एतदुक्तं भवति अयुतसिद्धानामाधाराधेयभूतानामिह-प्रत्ययहेतुर्यः सम्बन्धः समवाय इति समवायोऽभ्युपगम्यते अपृथक्स्थित्युपलब्धीनां जात्यादीनां तथाभावस्य निर्वाहकत्वेन चेत्समवायोऽभ्युपगम्यते समवायस्यापि तत्साम्यात्तथाभावहेतुरन्वेषणीयः, तस्यापि तथेत्यनवस्थितिः, समवायस्य तदपृथक्सिद्धत्वं स्वभाव इति परिकल्प्यते चेत् जातिगुणादीनामेवैष स्वभावः परिकल्पनीयः न पुनरदृष्टचरं समवायमभ्युपगम्य तस्यैष स्वभाव इति कल्पयितुं युक्तमिति, समवायस्य नित्यत्वे अनित्यत्वे चायं दोषः समानः। नित्यत्वे दोषान्तरं चाह-

**सू० नित्यमेव च भावात् ॥ १३ ॥**

समवायस्य सम्बन्धत्वात् सम्बन्धस्य नित्यत्वे सम्बन्धिनो जगतश्च नित्यमेव भावादसमञ्जसम् ॥

टी० "एतदुक्त"मिति, अयुतसिद्धिरपृथक्सिद्धिः पृथक्सिद्धानामाधाराधेयभावोपपादकः संयोगः, अपृथक्सिद्धानां तु तदुपपादकः समवाय

इत्यर्थः, तथाभावस्यापृथक्स्थित्युपलब्धित्वस्येत्यर्थः, संयोगस्तु प्रत्यक्षसिद्धः अनुपलब्धं समवायं कल्पयित्वा तस्योपपादकान्तरनैरपेक्ष्यकल्पनादपि प्रत्यक्षसिद्धस्यापृथक्सिद्धवस्त्वाधाराधेयभावस्यैव सम्बन्धस्योपपादकान्तरनैरपेक्ष्यकल्पनं युक्तं धर्मिकल्पनातो वरं धर्मकल्पनेति न्यायादित्यर्थः ॥ उत्तरसूत्रमवतारयति "समवायस्ये"ति, समवायस्यानित्यत्वं बहुत्वं च प्राभाकराभ्युपेतं वैशेषिकैरेकत्वं नित्यत्वं चाभ्युपेतमिति तस्य पक्षे सूत्रमिदमुच्यते सू· नित्यमेव च भावात्, समवायस्य संबन्धत्वादिति सम्बन्धिविनाशविनाशित्वं संयोगे दृष्टमिति समवायस्यापि सम्बन्धत्वादेव सम्बन्धिविनाशविनाशित्वोपपत्तेस्तन्नित्यत्वाय सम्बन्धिजगन्नित्यत्वं स्यात्, ततश्च जगत्कारतयापरमाण्वीश्वरक्लृप्तिरयुक्तेत्यर्थः । दिक्कालादिद्रव्यतद्गतसङ्ख्यापरिणामादिनित्यसम्बन्धिसद्भावान्नित्यत्वोपपत्तिरिति चेन्न घटाद्यनित्यसम्बन्धिविनाशप्रयुक्तानित्यत्वस्यावर्जनीयत्वान्नित्यत्वविरोधाद‌नित्यत्वं न स्यादिति चेत् अनित्यत्वविरोधान्नित्यत्वमेव न स्यात् उभयात्मकत्वं विरुद्धमिति चेत् तर्हि नित्यत्वानित्यत्वरूपविरुद्धाकारयोगाय समवायानेकत्वमभ्युपगन्तव्यं । किञ्च समवायस्य घटतद्गुणादीन्प्रति सम्बन्धात्मकत्वस्वरूपं न वा स्वरूपं चेत् घटादिविनाशे स्वरूपाभावादनित्यत्वं, न चेत् स्वरूपस्य दुर्निरूपतया समवायस्य तुच्छत्वमेव स्यात् पदार्थत्वाद्याकारेण सुनिरूपितमिति चेत् न तस्य द्रव्यादिव्यावृत्तत्वाभावात् अव्यावृत्तत्वे हि द्रव्यान्तर्भावेन तदतिरिक्तसमवायस्य तुच्छतैव स्यात् इति पदार्थषट्कवादो हीयेत, तत्तस्मादयुतसिद्धं सम्बन्धिनं प्रतिसम्बन्धात्मकत्वमेव समवायस्य द्रव्यावृत्तं स्वरूपमिति घटतद्गुणादीन्प्रति सम्बन्धात्मकत्वं स्वरूपं घटादिविनाशान्नास्तीत्यनित्यत्वं दुर्वारं नित्यसम्बन्धिनोः सम्बन्धात्मकत्वं स्वरूपमस्तीति चेत् अनित्यसम्बन्धिनोः सम्बन्धात्मकत्वं स्वरूपं नास्तीत्यनित्यत्वैव स्यात्, अयुतसिद्धयोः सम्बन्धात्मकत्वमात्रं स्वरूपमिति चेत् तथाऽपि नित्यानित्यरूपसम्बन्धिद्वैविध्येन उभयप्रसक्तिर्दुर्वारा अतस्तदुभयविरोधपरिहाराय घटादिनित्यत्वं वा समवायानेकत्वं वाऽभ्युपगन्तव्यं स्यात् तत्र घटादिनित्यत्वे प्रत्यक्षविरोधः परमाण्वीश्वरक्लृप्त्यनुपपत्तिश्च

स्यात् समवायानेकत्वे तु पूर्वसूत्रोक्तप्रकारेण समवायस्यैवाकल्पनीयत्वात् तदेकत्वं दूरोत्सारितम् ॥

## सू० रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १४ ॥

भू० परमाणूनां पार्थिवाप्यतैजसवायवीयानां चतुर्विधानां रूपरसगन्धस्पर्शवत्त्वाभ्युपगमादभिमतनित्यत्वसूक्ष्मत्वनिरवयवत्वादिविपर्ययेणानित्यत्वस्थूलत्वसावयवत्वादि प्रसज्येते, रूपादिमतां घटादीनामनित्यत्वं तथाविधकारणान्तरारब्धत्वादिदर्शनान्न हि दर्शनानुगुण्येनादृष्टोऽर्थः कल्प्यमानः स्वाभिमतविशेषे व्यवस्थापयितुं शक्यः, दर्शनानुगुण्येन हि परमाणूनां रूपादिमत्त्वं च त्वया कल्प्यते अतोऽप्यसमञ्जसम् । अथैतद्दोषपरिजिहीर्षया परमाणूनां रूपादिमत्त्वं नाभ्युपगम्यते तत्राह–

## सू० उभयथा च दोषात् ॥ १५ ॥

भू० न केवलं परमाणूनां रूपादिमत्त्वाभ्युपगम एव दोषः रूपादिविरहेऽपि कारणगुणपूर्वकत्वात् कार्य्यगुणानां पृथिव्यादयोरूपादिशून्याः स्युः, तद्दोषपरिजिहीर्षया रूपादिमत्त्वाभ्युपगमे पूर्वोक्तदोष इत्युभयथा च दोषादसमञ्जसम् ।

टी० सू॰ रूपादिमत्त्वाच्च विपर्ययोदर्शनात्, प्रसञ्जकाकारस्य पराभ्युपगममाह "परमाणूना"मिति, विपर्यय–शब्दस्य पराभ्युपगतार्थविपर्ययपरत्वात्तद्वैशद्याय पराभ्युपगमप्रकारं दर्शयति "अभिमतानित्यत्वे"ति, दर्शनादिति सौत्रं पदं विवृणोति "रूपादिमता"मिति, परमाणूनाम् अयं विशेषो यद् घटादिवैधर्म्येण नित्यत्वं तद्धि धर्मिग्राहकप्रमाणासिद्धमित्य-

पेक्षायां दर्शनादिति पदाभिप्रेतं विवृणोति "न ही"ति, सू० उभयथा च दोषात्, न केवलमिति, अन्यथा चेति नोक्तमपि तूभयथेत्युक्तम्, अत्र शिरोऽन्तरं नास्तीत्यभिप्रायः ।

## सू० अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १६ ॥

सू० कापिलपक्षस्य श्रुतिन्यायविरोधपरित्यक्तस्यापि सत्कार्य्यवादादिना क्वचिदंशे वैदिकैः परिग्रहोऽस्ति अस्य तु काणादपक्षस्य केनाप्यंशेनापरिग्रहादनुपपन्नत्वाच्चात्यन्तमनपेक्षैव निश्श्रेयसार्थिभिः कार्या । महद्दीर्घाधिकरणं समाप्तम् ॥

समुदायाधिकरणम् ।

## सू० समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १७ ॥

परमाणुकारणवादिनो वैशेषिका निरस्ताः सौगताश्च जगतः परमाणुकारणत्वमभ्युपगच्छन्तीत्यनन्तरं तन्मतेऽपि जगदुत्पत्तितद्व्यवहारादिकं नोपपद्यते इत्युच्यते, ते च चतुर्विधाः, केचित्पार्थिवाप्यतैजसवायवीयपरमाणुसंघातरूपान् भूतभौतिकान् बाह्यांश्चित्तचैत्तरूपांश्चाभ्यन्तरार्थान् प्रत्यक्षानुमानसिद्धानभ्युपयन्ति । अन्ये तु बाह्यार्थान् सर्वान् पृथिव्यादीन् विज्ञानानुमेयान् वदन्ति । अपरे त्वर्थशून्यं विज्ञानमेव परमार्थं सत्, बाह्यार्थास्तु स्वप्नार्थकल्पा इत्याहुः त्रयोऽप्येते स्वाभ्युपगतं वस्तु क्षणिकमाचक्षते उक्तभूतभौतिकचित्तचैत्तव्यतिरिक्तमात्माकाशादिकं स्वरूपेणैव नानुमन्यन्ते । अन्ये तु सर्वशून्यत्वमेव संगिरन्ते, तत्र ये बाह्या-

र्थास्तित्ववादिनस्ते तावन्निरस्यन्ते, ते चैवं मन्यन्ते रूपरसस्पर्शगन्धस्वभावाः पार्थिवाः परमाणवो रूपरसस्पर्शस्वभावाश्चाप्या रूपरसस्पर्शस्वभावास्तैजसाः स्पर्शस्वभावाश्च वायवीयाः पृथिव्यप्तेजोवायुरूपेण संहन्यन्ते तेभ्यश्च पृथिव्यादिभ्यः शरीरेन्द्रियविषयरूपसंघाता भवन्ति तत्र च शरीरान्तर्वर्तिग्राहकाभिमानरूढो विज्ञानसंतान एवात्मत्वेनावतिष्ठते, तत एव सर्वो लौकिकव्यवहारः प्रवर्तत इति, तत्राभिधीयते—

**सू० समुदाये उभयहेतुकेऽपि तदप्राप्तिः ॥ १७ ॥**

योऽयमणुहेतुकः पृथिव्यादिभूतात्मकः समुदायः, यश्च पृथिव्यादिहेतुकः शरीरेन्द्रियविषयरूपसमुदायस्तस्मिन्नुभयहेतुकेऽपि समुदाये तत्प्राप्तिर्नोपपद्यते जगदात्मकसमुदायोत्पत्तिर्नोपपद्यत इत्यर्थः ॥

टी० सू· अपरिग्रहात्त्वात्यन्तमनपेक्षा, अत्यन्त–शब्दव्यावर्त्यं कापिलमित्यभिप्रेत्याह "कापिले"ति, वेदविरुद्धार्थत्वं दूषणमुक्तं भवति, नित्यमेव च भावादिति सूत्रं परैरेवं व्याख्यातं परमाणूनां प्रवृत्तिस्वभावत्वे नित्यसर्गः, निवृत्तिस्वभावत्वे प्रलयान्तेऽपि न सर्गः, उभयस्वभावत्वं विरुद्धम्, अनुभयस्वभावत्वे अदृष्टवशात्प्रवृत्तिरित्यदृष्टस्य च नित्यसद्भावात् नित्यसर्ग इति, तदयुक्तम् उभयथेति वत्सर्वत्रेतिवच्च विकल्पद्योतकपदाभावात्, अयं च विकल्पो ब्रह्मकारणवादेऽपि सुवचः तथा सति ब्रह्म स्वेच्छायां सत्यां प्रवर्तते, इतरथा निवर्तते इति हि वक्तव्यं, तर्हीश्वरेच्छया परमाणवोऽपि प्रवर्तन्त इति तुल्यमुत्तरं प्राप्नोति, अतः स्वपक्षे तुल्यत्वात् सूत्रस्यैतदर्थमयुक्तम् आनुमानिकेश्वरासिद्धिर्बाधकयुक्तिरिति चेत्, उभयथाऽपि न कर्मेत्यत्रैव सापेक्षितत्वाद्विवक्षितेति सूत्रवैयर्थ्यं स्यात्, उभयथा-

च दोषादिति, गन्धरसरूपस्पर्शगुणा स्थूला भूः, त्रिगुणाः सूक्ष्मा आपः, द्विगुणं सूक्ष्मं तेजः, स्पर्शगुणः सूक्ष्मो वायुरिति पृथिव्यादिभूतानामुपचितापचितगुणत्वं कल्प्यते न वा कल्प्यते चेत् गुणोपचयापचयस्य मूर्त्युपचयापचयनिबन्धनत्वस्य कार्य्यभूतेषु दर्शनात् गुणोपचयापचयवत्त्वेन परमाणूनामपि मूर्त्युपचयापचयवत्त्वादपरमाणुत्वं स्यात्, उपचितापचितगुणकत्वं न कल्प्यते चेत्सर्वपरमाणूनामेकरूपत्वं स्यात्, एकैकगुणकतया ऐकरूप्ये पृथिव्यादिषु रूपाद्यनुपलब्धिप्रसङ्गः, चतुर्गुणकतयैकरूप्ये वाय्वादिष्वपि रूपाद्युपलब्धिप्रसङ्ग इति व्याख्यातं, तत्रोपचितापचितगुणकत्वे मूर्त्युपचयादपरमाणुत्वमिति तन्नित्यत्वादिविपर्य्ययेणानित्यत्वस्थूलत्वादिप्रसङ्गात् पूर्वसूत्रोक्तत्वादविशिष्टमतोऽत्र तदुक्तिर्विफला विकल्पभेदेन तदापादनं प्रयोजनमिति चेन्न सुखभेदस्य दुःस्थत्वाद्गुणोपचयस्य मूर्त्युपचयहेतुकतया ह्यपरमाणुत्वमापादितं, तदयुक्तं गुणोपचयशब्दः किं गुणबाहुल्यपरः? उतापेक्षिकप्रकर्षपरः? उतोत्पत्तिपरः? नाद्यः सार्वज्ञ्याद्यनेकगुणकस्येश्वरस्योपचितस्वरूपत्वाभावेनानैकान्त्यात्, न द्वितीयः जीवापेक्षया प्रकृष्टज्ञानस्य तस्योपचयात्मकत्वाभावात्, न तृतीयः, परमाणुषु स्पर्शादिगुणानां नित्यत्वाभ्युपगमात्, उत्पत्तावपि बुद्धिसुखदुःखाद्युत्पत्तिमदनेकगुणकस्य जीवस्योपचयात्मकत्वाभावाच्च । अन्येऽपि उभयथाऽपि न कर्मेत्यादिकम् एवं व्याचक्षते किमागन्तुकेभ्यो हेतुभ्यः परिमाणुगतकर्मोत्पत्तिः? उत प्रलयदशायामपि स्थितेभ्यो हेतुभ्य? इति, प्रथमे आगन्तुकहेतोरपि हेत्वन्तरापेक्षयाऽनवस्था, द्वितीये सदा सर्गप्रसङ्ग इति, अयं विकल्पस्तावदनिर्द्धारितविशेषो हेतुमात्रेण नावतरितुमर्हति अणुमनसोश्चाद्यं कर्मेत्यदृष्टकारितानीति हेतुविशेषस्य सूत्रितत्वादुक्तानादरेण दूषणानुपपत्तेः, स्थिते चादृष्टे तस्य तदानीमागन्तुकत्वशङ्का नोदेति, अदृष्टस्य पूर्वकल्पसम्पादितत्वात्, तस्मादात्मगतमणुगतं वेत्येव विकल्प? उपपद्यते । ननु प्रत्यात्मनियतभोगसाधनस्यादृष्टस्यानुगतत्वशङ्का न भवितुमलं कथं विकल्प इति चेन्न अदृष्टस्य कारणत्वेऽभिहिते कारणत्वस्य सामान्यरूपत्वाददृष्टस्य च समवायितया कारणत्वासम्भवात् असमवायित्वनिमित्तत्वशङ्कोपपत्तेः, नित्यमेव

च भावादित्यत्र प्रलयेऽप्यदृष्टसम्भवादित्यत्र प्रलयेऽप्यदृष्टसम्भवादणुषु नित्यकर्मोत्पत्तिप्रसङ्ग इति व्याख्यातं तदप्ययुक्तम् उभयथाऽपि न कर्मेति सूत्र एवादृष्टवदात्मसंयोगस्य कारणत्वेन शङ्कासम्भवात् परिहारस्यापि तत्रैव विवक्षितत्वोपपत्तेः, तत्रापेक्षितमस्मिन् सूत्रे कण्ठोक्तमिति चेन्न तथा सत्यस्य सूत्रस्य तदनन्तरभावित्वापत्तेः, इदं हि समवायव्युदाससूत्रव्यवहितमतस्तेन व्यवहितत्वादनेनाव्यवहितत्वाच्च समवायस्य वैशेषिकाभिमते नित्यत्वपक्ष एव दूषणपरत्वं युक्तम्, उभयथा च दोषादित्यत्रापि पार्श्वभेदेन संयोगे एकभागेनैव सर्वैः संयोगे च दोष इत्युक्तं; तथात्वे तु महद्दीर्घवद्वेति सूत्रेणैव द्व्यणुकादिक्रमेण कार्योत्पत्त्यसामञ्जस्यं दृष्टान्तीकुर्वता परमाणूनां पार्श्वभेदाभेदप्रयुक्तदूषणजातमभिप्रेतमिति इह तदुक्तिः पुनरुक्तिः स्यात्, तस्य च सूत्रस्य पराभिमतार्थपरत्वानुपपत्तिश्च दर्शिता । अत इदं सूत्रं परमाणूनां रूपादिमत्त्व इव तद्विरहे दोषप्रतिपादकमिति युक्तं, महद्दीर्घाधिकरणं समाप्तम् ॥

सू० परमाणूनां पृथिव्यादिभूतानां च क्षणिकत्वाभ्युपगमात्क्षणविनाशिनः परमाणवो भूतानि च कदा संहतौ व्याप्रियन्ते कदा वा संहन्यन्ते कदा च विज्ञानविषयभूताः कदा च हानोपादानादिव्यवहारास्पदतां भजन्ते को वा विज्ञानात्मा कं च विषयं स्पृशति कश्च विज्ञानात्मा कमर्थं कदा वेदयते कं वा विदितमर्थं कश्च कदोपादत्ते स्प्रष्टा हि नष्टः स्पृष्टश्च नष्टः, तथा वेदिता विदितश्च नष्टः कथं चान्येन स्पृष्टमन्यो वेदयते कथं चान्येन विदितमर्थमन्य उपादत्ते सन्तानानामेकत्वेऽपि सन्तानिभ्यस्तेषां वस्तुतो वस्त्वन्तरत्वानभ्युपगमान्न तन्निबन्धनं व्यवहारादिकमुपपद्यते अहमर्थ एवात्मा, स च ज्ञातैवेति चोपपादितं पुरस्तात् ॥

टी० सू० समुदाय उभयहेतुकेऽपि तदप्राप्तिः, सङ्गतिमाह "परमाणव"ति, असत्कार्यवादसाम्यात् कार्य्यविशेषे शरीरे क्षणिकत्वाभ्युपगमसाम्याद्वा धीस्थतया वैशेषिकमतनिरासानन्तरं बौद्धनिरास इति केचित्परमाणूनामैकान्तत्वचातुर्विध्याभ्युपगमसाम्याद्धीस्थतया बौद्धमतनिरास इति सङ्गतिः, आर्हतमते स्थिरत्वास्थिरत्वादिभिरनैकान्त्यमैकविध्यं च परमाणूनां हि स्वीकृतं, न हि सर्वैरपि बौद्धैः परमाणुकारणत्वमङ्गीकृतमित्यत्राह "ते चतुर्विधा" इति, वैभाषिकसौत्रान्तिकयोः परमाणुकारणवादाभ्युपगमेन प्रस्तावे सति बौद्धत्वसाजात्याद्योगाचारमाध्यमिकयोरपि निरासः क्रियत इत्यर्थः । किं क्षणिकाः परमाणवो जगदारम्भका नेऽति क्षणिकानां तेषां किं सङ्घातकारणत्वं सम्भवति नेऽति अस्थिरादिषु स्थिरत्वादिरूपा अविद्या परमाणूनां पृथिव्यादिसङ्घातहेतुत्वमुपपादयति नेऽति यदोपपादयति तदा संघातहेतुत्वोपपत्तेः परमाणूनां क्षणिकानां कारणत्वं स्यात्, यदा नोपपादयति तदा सङ्घातहेतुत्वानुपपत्तेः क्षणिकानां परमाणूनां जगदारम्भकत्वं न स्यात् । वैभाषिकादीनामभ्युपगमप्रकारं यथाक्रममाह केचिदित्यादिना, चित्तचैत्तरूपानिति चित्तं ज्ञानसन्तानः, चैत्तं रागादिकं रूपविज्ञानवेदनासंज्ञासंस्काराः पञ्चस्कन्धाः, भूतेन्द्रियविषया रूपस्कन्धः, तत्तद्विषयग्राहकत्वेनाहमित्यभिमानारूढा ज्ञप्तिरेव विज्ञानस्कन्धः, प्रियाप्रियानुभयानुभवजन्यसुखदुःखोपेक्षात्मकचित्तस्यावस्थाविशेषो वेदनास्कन्धः, संज्ञास्कन्धः सविकल्पकः प्रत्ययः, संस्कारस्कन्धो रागद्वेषमोहादयः, कायस्थत्वादान्तरचित्तविषयत्वाद्वा रूपस्कन्धोऽपि चित्तचैत्तान्तर्गत इति वाचस्पत्यादयः शाङ्करभाष्यं च । रूपस्कन्धव्यतिरिक्तस्कन्धचतुष्टयं चित्तचैत्तान्तर्गतमिति भास्करभाष्ये, तदिदमाह "चित्तचैत्तरूपांश्चाभ्यन्तरानर्थानि"ति, अन्ये त्विति पृथिव्यादिविषयज्ञानेन तत्तद्विषयानुमानमित्यर्थः । तत्र चेति अहं जानामीति ग्राहकत्वेनाभिमानो ग्राहकाभिमानः तमारूढ इत्यर्थः । तत्प्राप्तिः समुदायत्वप्राप्तिरित्यर्थः । क्षणिकत्वमस्तु तेन कथं समुदायत्वाप्राप्तिरित्यत्राह "क्षणध्वंसिन"इति, संहतौ व्याप्रियन्त इति व्यापारश्चलनं किं-शब्दः

क्षेपे । विषयं स्पृशति इन्द्रियेण सम्बद्धं करोति इन्द्रियव्यापारो ज्ञानं हानोपादानादि च नोपपद्यत इत्यर्थः कदा–न कदाचिदिति भावः । उपपादयति "स्पष्टा ही"ति, ततः किमित्यत्राह "कथमि"ति, एकसन्तानत्वादुपपद्यत इत्यत्राह "सन्तानानामि"ति, स्थिरत्वेनानुयायित्वेन सन्तानस्य वस्त्वन्तरत्वानभ्युपगमादित्यर्थः, विज्ञानस्य चात्मत्वमयुक्तमित्याह "अहमर्थ एवे"ति, अणुहेतुको भूतभौतिकसङ्घातः पञ्चस्कन्धैरारब्धः पञ्चस्कन्धीरूपसङ्घातश्चोभयहेतुकसमुदाय इति परैर्व्याख्यातं, तत्र स्कन्धानामुपपन्नत्वे तत्समुदायात्मा पञ्चस्कन्धी न दुष्यति इति स्कन्धानामेव निराचिकीर्षितत्वे तद्धेतुकसमुदाय–शब्देन तेषामुपस्थानमतिक्लिष्टं समुदायो गर्भरूपः मातृभुक्ताहारः कर्म च तद्धेतुरिति तन्निरासपरं यादवप्रकाशैर्व्याख्यातं तदप्ययुक्तं गर्भारम्भदूषणादपि जगदारम्भदूषणस्य प्राधान्येन चास्मिन् पादे प्रक्रान्तत्वात्, अतस्समुदायशब्दस्यैवमर्थः प्रतिपादितः ॥

## सू० इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वात् ॥ १९ ॥

भा० अविद्यादीनामितरेतरहेतुत्वेनोपपन्नं सङ्घातभावादिकमिति चेत् एतदुक्तं भवति यद्यपि क्षणिकास्सर्वे भावास्तथाऽप्यविद्ययैतत्सर्वमुपपद्यते अविद्या हि नाम विपरीतबुद्धिः क्षणिकादिषु स्थिरत्वादिगोचरा तया संस्काराख्या रागद्वेषादयो जायन्ते ततश्चित्ताभिज्वलनरूपं विज्ञानं, ततश्च नामाख्याश्चित्तचैत्ताः पृथिव्यादिकं च रूपिद्रव्यम् ।

सू· इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न संघातभावानिमित्तत्वात् ॥ १९ ॥ अयमेवाकृत्रिमोवृत्तिसिद्धः पाठः, अविद्यादीनामिति प्रत्यय–शब्दो हेतुवाची संघातभावादिकमित्यादि–शब्देन विज्ञानविषयत्वं व्यवहारस्य.

दत्वं च विवक्षितम् अविद्यादयः के कथं तेषामन्योन्यहेतुत्वं तेन संघातभावोपपत्तिः कथमित्यत्राह "एतदुक्तं भवति" इति, अविद्यां विवृणोति "क्षणिकादि"ष्विति, आदिशब्दद्वयं कार्य्यत्वनित्यत्वादिमिथोविरुद्धाकारपरं क्षणिककार्य्यदुःखशून्यस्वभावेषु पदार्थेषु स्थायिनित्यसुखवस्तुत्वबुद्धिरित्यर्थः, तस्या रागादिहेतुत्वं स्फुटं रागादयः संस्काराः, ते च ग्राहकाभिमानारूढस्य सूक्ष्मचित्तसन्तानस्य प्रदेशान्तरं नीयमानस्य प्रतिक्षणमुपजायमानस्य दीपसन्तानस्येव मातृकुक्षिप्रवेशहेतवः गर्भगतस्य तदनन्तरभाविनी विषयज्ञप्तिर्विज्ञानं, तदिदमाह "ततश्चित्ताभिज्वलनरूपमि"ति, ततश्चेति तदुत्तरोत्तरविषयविज्ञप्तिश्चित्तं, तेन सहजन्मविनाशभाजः स्पर्शवेदनासंज्ञाचेतनानिवर्तकविचारप्रीतिरेकाग्रताश्रद्धावीर्य्यस्मृतिप्रज्ञादयः कुशलाकुशलरूपा धर्माः, एते चित्तचैत्तनामाख्याः, ततश्च पृथिव्यादिकं च रूपिद्रव्यमिति कालातिक्रमेण पुञ्जीभावसिद्धिरित्यर्थः ॥

भू० ततः षडायतनाख्यमिन्द्रियषट्कं, ततः स्पर्शाख्यः कायः ततो वेदनादयश्च ततश्च पुनरप्यविद्यादयो यथोक्ता इत्यनादिरियमविद्यादिकाऽन्योन्यमूला चक्रपरिवृत्तिः, एतच्च सर्वं पृथिव्यादिभूतभौतिकसङ्घातमन्तरेण नोपपद्यते, अतः सङ्घातभावादिकमुपपन्नमिति तत्रोत्तरं न सङ्घातभावानिमित्तत्वादिति नैतदुपपद्यते एषामविद्यादीनां पृथिव्यादिभूतभौतिकसङ्घातभावं प्रत्यनिमित्तत्वात् न खलु अस्थिरादिषु स्थिरत्वादिबुद्ध्यात्मिकाऽविद्या तन्निमित्ता रागद्वेषादयो वाऽर्थान्तरस्य क्षणिकस्य संहतिहेतुतां प्रतिपद्यन्ते ।

टी० तत इन्द्रियषट्कनिष्पत्तिमाह "तत" इति, अत्र स्पर्शशब्दश्चैत्तकुशलधर्मान्तर्गतस्पर्शादर्थान्तरपरः कायवाचित्वात्, ततो वेदनादय इति वेदना सुखदुःखादिबुद्धिः, आदि-शब्देन तृष्णोपादानभवजातिज-

रामरणशोकपरिवेदनदुःखदौर्मनस्यानि उपक्लेशरूपमदमानादय उपवासाश्च गृह्यन्ते, अत्र तृष्णा वाक्कायचेष्टा, भवशब्दो धर्माधर्मवाची ततः स्कन्धप्रादुर्भावो जातिः, मानसदुःखं दौर्मनस्यम्, अविद्यादिभिर्वेदनादयः, वेदनादिभिरविद्यादयः अविद्यादिभिर्जन्मजरादयस्तैरविद्यादय इति वा स्यादितरेतरप्रत्ययत्वमुभयथापि नार्थभेदः, वेदनादिषु जन्मजरादीनामन्तर्गतत्वात् एतच्चेति, अविद्यादिभिः सङ्घातः सङ्घातादविद्यादिकमिति उपलभ्यमानं चक्रकम् । अविद्यादिहेतुभूतसङ्घातानभ्युपगमे तु नोपपद्यत इत्यर्थः । अविद्यादीनां स्वरूपेण कार्यकरत्वानुपपत्तिमाह—

रत्न० शुक्तिकाररजतादिबुद्धिर्हि न शुक्त्याद्यर्थसंहतिहेतुर्भवति । किञ्च यस्य क्षणिके स्थिरत्वबुद्धिः स तदैव नष्ट इति कस्य रागादय उत्पद्यन्ते संस्काराश्रयं स्थिरमेकद्रव्यमनभ्युपगच्छतां संस्कारानुवृत्तिरपि न शक्या कल्पयितुम् ॥

सू० उत्तरोत्पादे च पूर्वनिरोधात् ॥ १९ ॥

इतश्च क्षणिकत्वपक्षे जगदुत्पत्तिर्नोपपद्यते उत्तरक्षणोत्पत्तिवेलायां पूर्वक्षणस्य विनष्टत्वात् तस्योत्तरक्षणं प्रति हेतुत्वानुपपत्तेः, अभावस्य हेतुत्वे सर्वं सर्वत्र सर्वदोत्पद्येत । अथ पूर्वक्षणवर्तित्वमेव हेतुत्वमित्युच्यते एवं तर्हि कश्चिदेव घटक्षणस्तदुत्तरकालभाविनां सर्वेषामेव गोमहिषाश्वकुड्यपाषाणादीनां त्रैलोक्यवर्तिनां हेतुः स्यात् । अथैकजातीयस्यैव पूर्वक्षणवर्त्तिनो हेतुत्वमिष्यते तथाऽपि सर्वदेशवर्त्तिनामुत्तरक्षणभाविनां घटानामेक एव पूर्वक्षणवर्ती घटो हेतुः स्यात् । अथैकस्यैव हेतुरेक इति मनुषे तथाऽपि कस्यैकस्य को हेतुरिति न ज्ञायते । अथ यस्मि-

न्देशे घटक्षणः स्थितस्तद्देशसम्बन्धिन उत्तरघटक्षणस्य स हेतुरिति किं देशस्य स्थिरत्वं मनुषे । किंच चक्षुरादिसंप्रयुक्तस्यार्थस्य ज्ञानोत्पत्तिकाले अनवस्थितत्वान्न कस्यचिदर्थस्य ज्ञानविषयत्वं सम्भवति ॥

## सू० असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा [1]वा ॥ २० ॥

असत्यपि हेतौ कार्य्यमुत्पद्यते चेत्सर्वं सर्वंच सर्वदोत्पद्यतेत्युक्तं, न केवलमुत्पत्तिविरोध एव प्रतिज्ञा च भवतामुपरुध्येत अधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययाश्चत्वारो विज्ञानोत्पत्तौ हेतवः इति वः प्रतिज्ञा, अधिपतिरिन्द्रियम् ।

टी० "शुक्तिके"ति, न हि शुक्तिरजतादौ रजतादिभ्रमे सति शुक्तिकाद्वयं संहतं भवतीत्यर्थः । यद्वा न शुक्तिरङ्गुलीयकादिकार्यकरी भवतीत्यर्थः । सूत्राभिप्रेतं सहकारिवैकल्यमाह "किञ्चे"ति, संस्कारेणेति चेत् तत्राह "संस्काराश्रय"मिति, संस्कारश्च तदाश्रयश्च नष्ट इत्यर्थः । सू० उत्तरोत्पादे च पूर्वनिरोधात्, क्षण-शब्दः क्षणिकपदार्थवाची किं देशस्येत्यादिभाष्यानन्तरमिदमपि पदकपर्वाभिप्रेतं यद्देशसंतानस्थितोयोघटः स तद्देशसंतानसम्बन्धिन उत्तरघटक्षणस्य हेतुरिति चेन्न देशान्तरं नीयमानस्य तस्याप्युत्तरोत्तरं नीयमानस्य देशान्तरसम्बन्धिसन्तानदर्शनादिति । उक्तं दूषणं नवस्तुन्येव ज्ञानेऽपि तुल्यमित्यभिप्रायेणाह "किञ्चे"ति, सू० असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा, सहकार्यालोकादिः आलम्बनं विषयः, समनन्तरप्रत्ययः, अनन्तरपूर्वक्षणप्रत्ययः । अनुपरोधं शङ्कते—

सू० अथ प्रतिज्ञानुपरोधाय घटक्षणे स्थित एव घटक्षणान्त-

१ पुस्तकान्तरे वा-शब्दोन विद्यते ।

रोत्पत्तिरिष्यते तथा च सति द्वयोः कार्यकारणयोर्घटक्षणयोर्यौगपद्येनोपलब्धिः प्रसज्येत । न च तथोपलभ्यते क्षणिकत्वप्रतिज्ञा चैवं हीयेत, क्षणिकत्वं स्थितमेवेति चेत् इन्द्रियस[1]म्बन्धज्ञानयोर्यौगपद्यं प्रसज्येत ॥

## सू० प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २१ ॥

एवं तावदसत उत्पत्तिर्निरस्ता सतो निरन्वयविनाशोऽपि नोपपद्यत इत्युच्यते क्षणिकत्ववादिभिर्मुद्गराभिघाताद्यनन्तरभावितयोपलब्धियोग्यः सदृशसन्तानावसानरूपः स्थूलो यः सदृशसंताने प्रतिक्षणभावी चोपलब्ध्यनर्हः सूक्ष्मश्च यो निरन्वयोविनाशः प्रतिसंख्याप्रतिसंख्यानिरोधशब्दाभ्यामभिधीयेते तौ न सम्भवत इत्यर्थः, कुतः अविच्छेदात्सतो निरन्वयविच्छेदासम्भवात्, असम्भवश्च सत उत्पत्तिविनाशौ नामावस्थान्तरापत्तिरेव अवस्थायोगि तु द्रव्यमेकमेव स्थिरमिति कारणादनन्यत्वं कार्यस्योपपादयद्भिरस्माभिस्तदनन्यत्वमारम्भणशब्दादिभ्य इत्यत्र प्रतिपादितः, निर्वाणस्य दीपस्य निरन्वयविनाशदर्शनादन्यत्रापि विनाशो निरन्वयोऽनुमीयत इति चेन्न घटशरावादौ मृदादिद्रव्यानुवृत्त्युपलब्ध्या सतो द्रव्यस्यावस्थान्तरापत्तिरेव विनाश इति निश्चिते सति प्रदीपादौ सूक्ष्मदशापत्त्याऽप्यनुपलम्भोपपत्तेः, तत्राप्यवस्थान्तरापत्तिकल्पनस्यैव युक्तत्वात् ।

---

१ इन्द्रियसंप्रयोगज्ञानयोरिति पा० ।

टी० "अथे"ति, पूर्वक्षणस्योत्तरक्षणानुवृत्तौ युगपदुपलब्धिप्रसङ्गः क्षणिकत्वहानिश्चेति दूषणद्वयमाह "तथा चेत्या"दिना, शङ्कते "क्षणिकत्व"मिति, क्षणिकत्वं स्थितमेवेति चेदिति उत्तरक्षणः पूर्वक्षणवर्ती चेदित्यर्थः । दूषयति "इन्द्रियसंप्रयोगज्ञानयोर्यौगपद्यं प्रसज्येते"ति, ततः कार्य्यकारणभावाभावप्रसङ्ग इत्यर्थः युगपदुपलब्धिप्रसङ्गश्चार्थसिद्धः ज्ञानतत्कारणयौगपद्यप्रसङ्गः प्रदर्शनार्थः अर्थेष्वपि कारणभूतघटक्षणकार्यभूतघटक्षणयोर्यौगपद्यप्रसङ्ग इत्यभिप्रायः । सू॰ प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात्, तदनन्यत्वमित्यत्र प्रतिपादित इति वस्त्वन्तरानुपलब्धेः बुद्धिशब्दान्तरादीनामन्यथोपपत्तेश्चेत्यर्थः । निर्वाणस्येति अबाधितप्रत्यभिज्ञया मृदनुवृत्तौ सत्यान्न तदपह्नवो युक्तः दृष्टेनादृष्टकल्पनं हि युक्तं न तु दृष्टहानमित्यर्थः ॥ सू॰ उभयथा च दोषात्, न च प्रतीयते—न तुच्छत्वेन प्रतीयत इत्यर्थः, सू॰ आकाशे चाविशेषात्, बाह्येत्यादि क्षणिकत्वदूषणोपयुक्तत्वाभावात् प्रसङ्गात्सङ्गतिरित्यर्थः, चाक्षुषत्वेऽप्यविरोध इति, अनेनानुमेयत्वमप्यनुमतमित्यवगम्यते । यद्वा चाक्षुषमेव तथाऽपि तत्प्रयुक्तविरोधो नास्तीत्यर्थः । सू॰ अनुस्मृतेश्च, प्रत्यभिज्ञानादित्यर्थः, स्मृतिसादृश्यादनुस्मृतिशब्देनाभिधानं घटादिषु ज्वालादिष्विवेति उत्पत्तिविनाशसामग्र्यनुवृत्त्यभावादित्यर्थः, तच्च कार्यकारणेति तर्कानुगृहीतप्रत्यभिज्ञाप्रत्यक्षेण तर्कविरुद्धमनुमानं बाधितमित्यर्थः, कार्यकारणभावानुपपत्त्यादिभिरिति प्रत्यक्षानुमानसाधारणं दूषणमुक्तम्, अथ प्रत्यक्षस्य क्षणिकविषयत्वं दूषयति "किंचे"ति, तस्यैवेति यथा वस्तुनो नीलत्वोत्पलत्वयोगो न वस्त्वन्तरत्वसाधकस्तथा कालद्वययोगोऽपि सम्भवतीत्यर्थः, अनुमानद्वयमपि दूषयति "यत्त्वि"ति तदभिमतविपरीतसाधनत्वात् विपर्ययेणापि व्याप्तिसद्भावात् विरुद्धं विपरीतस्यापि साधकमित्यर्थः । विपरीतव्याप्तिं दर्शयति "सत्त्वादि"ति, प्रकरणसमत्वमुक्तमर्थक्रियाकारित्वस्य हेतोरभिमतविरुद्धस्यैव साधकत्वमाह "किंचे"ति, व्यापारासम्भवात्—व्यापारस्य हेतुत्वमाश्रयत्वं च न सम्भवति उत्पत्त्यनन्तरक्षण एव विनष्टत्वात् अतो नाभिमतकार्यकरणत्वमित्यर्थः, समीहितविपर्ययसाधनोविरुद्ध इति विरुद्धलक्षणं

घटलक्षणसत्त्वस्य हेतोः सोपाधिकमाह "तथाऽन्त्ये"ति, आनन्तर्याद्युक्तमिति, न हि घटे तिष्ठति कपालोत्पत्तिः, अपि तु विनाशादनन्तरमेवोत्पत्तिः मुद्गराभिघातानन्तरभावी विनाश इति अनन्तरभाविनं प्रतिहेतुत्वं युक्तं न तु व्यवहितं प्रतीत्यभिप्रायः, पूर्वेति ज्ञानं यथा स्वविषयं दर्शयति तस्य तथात्वमेव अन्यथाऽतिप्रसङ्ग इत्यर्थः किंचेत्यादि प्रमातृप्रमेययोरित्यादिना स्वार्थानुमानस्य दुर्वचत्वयुक्तं, तथेत्यादिना परार्थानुमानानुपपत्तिरुक्ता, न च प्रत्यभिज्ञायाः सामग्र्यनुपपत्तिर्वक्तुं शक्यते संस्कारसविवेन्द्रियसंप्रयोगस्य सामग्रीत्वात् लिकुचस्य कर्पूरसाहचर्यात् विलक्षणकार्यकरत्वं दृष्टं, तद्वदतीतविषये स्मृतित्वात् संनिहितविषयोनुभवत्वात् प्रत्यभिज्ञास्वरूपं दुर्घटमिति चेन्न एकज्ञानतयैवावभासमानत्वात् संप्रतिपन्नैकज्ञानवत् एकत्वं हि प्रतीयते, नापि विषयानुपपत्तिः, एकस्य वस्तुनः कालद्वयसम्बन्धविषयत्वात् कालविशिष्टाकारे कालान्तरान्वयपरत्वाभावात् ॥

## सू० उभयथा च दोषात् ॥ २२ ॥

म्र० क्षणिकत्ववादिभिरभ्युपेतात्तुच्छादुत्पत्तिरुत्पन्नस्य तुच्छतापत्तिश्च न सम्भवतीत्युक्तं, तदुभयप्रकाराभ्युपगतो दोषश्च भवति तुच्छादुत्पत्तौ तुच्छात्मकमेव कार्य्यं स्यात् यद्धि यस्मादुत्पद्यते तत्तदात्मकं दृष्टं, यथा मृत्सुवर्णादेरुत्पन्नं मणिकमुकुटादि मृत्सुवर्णाद्यात्मकं दृष्टं, न च जगत्तुच्छात्मकं दृष्टं भवद्भिरभ्युपगम्यते न च प्रतीयते, सतोनिरन्वयविनाशे सति एकक्षणादूर्द्ध्वं कृत्स्नस्य जगतस्तुच्छतापत्तिरेव स्यात्, पश्चात्तु तुच्छाज्जगदुत्पत्तावनन्तरोक्तं तुच्छात्मकत्वमेव स्यात्, अत उभयथाऽपि दोषान्न भवदुक्तप्रकारावुत्पत्तिनिरोधौ ॥

## सू० आकाशे चाविशेषात् ॥ २३ ॥

बाह्याभ्यान्तरवस्तुनः स्थिरत्वप्रतिपादनाय प्रतिसंख्याप्रतिसंख्यानिरोधयोस्तुच्छरूपता निराकृता, तत्प्रसङ्गेन ताभ्यां सह तुच्छत्वेन सौगतैः परिगणितस्याकाशस्यापि तुच्छता प्रतिक्षिप्यते आकाशे च निरुपाख्यता न युक्ता भावरूपत्वेनाभ्युपगतपृथिव्यादिवदाकाशस्यापि अबाधितत्वप्रतीतिसिद्धत्वाविशेषात्, प्रतीयते ह्याकाशेऽच श्येनः पतत्यत्र गृध्र इति श्येनादिपतनप्रदेशत्वेन, न च पृथिव्याद्यभावमात्रमाकाश इति वक्तुं शक्यं विकल्पासहत्वात् पृथिव्यादेः प्रागभावः, प्रध्वंसाभाव इतरेतराभावोऽत्यन्ताभावो वा आकाशः सर्वथाऽप्याकाशप्रतीत्यनुपपत्तिः स्यात्प्रागभावप्रध्वंसाभावयोराकाशत्वे पृथिव्यादिषु वर्तमानेषु आकाशप्रतीत्ययोगात् निराकाशं जगत्स्यात्, इतरेतराभावस्याकाशत्वेऽपीतरेतराभावस्य तत्तद्वस्तुगतत्वेन तेषामन्तराले आकाशप्रतीतिर्न स्यात्, अत्यन्ताभावस्तु पृथिव्यादीनां न सम्भवति अभावस्य विद्यमानपदार्थावस्थाविशेषत्वोपपादनाच्चाकाशस्य अभावरूपत्वेऽपि न निरुपाख्यत्वम् अण्डान्तर्वर्तिनः आकाशस्य त्रिवृत्करणोपदेशप्रदर्शितपञ्चीकरणेन रूपवत्त्वाच्चाक्षुषत्वेऽप्यविरोधः ॥

## सू० अनुस्मृतेश्च ॥ २४ ॥

पूर्वं प्रस्तुतं वस्तुनः स्थिरत्वमेवोपपाद्यते, अनुस्मरणं पूर्वानुभूतवस्तुविषयं ज्ञानं प्रत्यभिज्ञानमित्यर्थः, तदेवेदमिति सर्वं वस्तुजातमतीतकालानुभूतं प्रत्यभिज्ञायते, न च भव-

द्भिर्ज्वालादिष्विव सादृश्यनिबन्धनोऽयमेकत्वव्यामोह इति वक्तुं शक्यं व्यामुह्यतो ज्ञातुरेकस्यानभ्युपगमात्, न ह्यन्यानुभूतेनैकत्वं सादृश्यं वा स्वानुभूतस्यान्योऽनुसंधत्ते, अतो भिन्नकालवस्त्वाश्रयसादृश्यानुभवनिबन्धनमेकत्वव्यामोहं वदद्भिर्ज्ञातुरेकत्वमवश्याश्रयणीयं, न च ज्ञेयेष्वपि घटादिषु ज्वालादिष्विव भेदसाधनप्रमाणमुपलभामहे, येन सादृश्यनिबन्धनां प्रत्यभिज्ञां कल्पयेम, यदपि चेदमुच्यते प्रत्यक्षानुमानाभ्यां घटादेः क्षणिकत्वं सिध्यति प्रत्यक्षं तावद्वर्तमानार्थविषयमवर्तमानाद्वस्तुनो व्यावृत्तं स्वविषयमवगमयति नीलमिव पीतात्, एवं च भूतभविष्यद्भ्यां वर्तमानस्य वस्त्वन्तरत्वमवगतं भवति, अनुमानमप्यर्थक्रियाकारित्वात्सत्त्वाच्च घटादि क्षणिकं यदक्षणिकं शशविषाणादि तदनर्थक्रियाकार्य्यसच्च, तथा अन्त्यघटक्षणसत्त्वात्पूर्वघटक्षणसत्त्वानि विनाशीनि घटक्षणसत्त्वात् अन्त्यघटक्षणसत्त्ववदिति ॥

तच्च कार्यकारणभावानुपपत्त्यादिभिः पूर्वमेव निरस्तं, किंच प्रत्यक्षगम्यावर्तमानमात्रस्यावर्तमानाद्व्यावृत्तिर्न वर्त्तमानस्य वस्त्वन्तरत्वमवगमयति, अपि तु वर्तमानकालयोगितामात्रं, न च तावता वस्त्वन्तरत्वं सिध्यति तस्यैव कालान्तरयोगसंभवात्। यत्तु सत्त्वादर्थक्रियाकारित्वाच्चेति क्षणिकत्वे हेतुद्वयमुक्तं, तदभिमतविपरीतसाधनत्वाद्विरुद्धं, सत्त्वादर्थक्रियाकारित्वाद्वा घटादिस्थास्नु यदस्थास्नु तदसदनर्थक्रियाकारि च यथा शशविषाणमित्यपि हि वक्तुं शक्यं किं

च अर्थक्रियाकारित्वमक्षणिकत्वमेव साधयेत् क्षणिकत्वमेव साधयेत् क्षणध्वंसिनो हि व्यापारासंभवादर्थक्रियाकारित्वं न संभवतीत्युक्तं तथाऽन्त्यघटक्षणस्य हेतुतो नाशदर्शनादितरेऽपि घटक्षणा हेत्वपेक्षविनाशाः स्युरिति आमुद्गरादिहेतूपनिपातात्स्थास्नुत्वमेव, न च वाच्यं न मुद्गराद्यो विनाशहेतवः अपि तु कपालादिविसदृशसन्तानोत्पत्तिहेतव इति कपालत्वावस्थापत्तिरेव घटादीनां विनाश इत्युपपादितत्वात्कपालोत्पत्तिव्यतिरिक्तत्वाभ्युपगमेऽपि विनाशस्य विनाशहेतुत्वमेव मुद्गरादेरानन्तर्याद्युक्तम् अतः प्रत्यभिज्ञयास्थिरत्वमवगम्यमानं न केनापि प्रकारेणाह्नोतुं शक्यं, पूर्वापरकालसम्बन्ध्यर्थैक्यविषयायाः प्रत्यभिज्ञाया अन्यविषयत्वं ब्रुवन्नीलादिज्ञानानामपि नीलादेरर्थान्तरविषयत्वं ब्रूयात् । किञ्च प्रमातृप्रमेययोः क्षणिकत्वं वदद्भिर्व्याप्त्यवधारणतत्स्मरणपूर्वकानुमानाभ्युपगमोऽपि दुःशकः तथेदं क्षणिकमित्यादिप्रतिज्ञापूर्वकहेतूपन्यासादिकमपि नोपपद्यते भवतां, प्रतिज्ञोपक्रमक्षण एव वक्तुर्विनष्टत्वात्, न ह्यन्येनोपक्रान्तम् अजानद्भिरन्यैः समापयितुं शक्यम् ।

## सू० नासतोऽदृष्टत्वात् ॥ २५ ॥

भा० एवं तावद्वैभाषिकसौत्रान्तिकयोर्बाह्यार्थास्तित्ववादिनोः साधारणानि दूषणान्युक्तानि तत्र यदुक्तं संप्रयुक्तस्यार्थस्य ज्ञानोत्पत्तिकाले अनवस्थितत्वान्न कस्यचिदर्थस्य

ज्ञानविषयत्वं सम्भवतीति तत्र सौत्रान्तिकः प्रत्यवतिष्ठते न ज्ञानकालेऽवस्थानमर्थस्य ज्ञानाविषयत्वहेतुः ज्ञानोत्पत्तिहेतुत्वमेव हि ज्ञानविषयत्वं, न चैतावता चक्षुरादेर्ज्ञानविषयत्वप्रसङ्गः स्वाकारसमर्पणेन ज्ञानहेतोरेव ज्ञानविषयत्वाभ्युपगमात् ज्ञाने स्वाकारं समर्प्य विनष्टोऽप्यर्थो ज्ञानगतेन नीलाद्याकारेणानुमीयते, न च पूर्वपूर्वाज्ञानेनोत्तरज्ञानाकारसिद्धिः नीलज्ञानसन्ततौ पीतज्ञानानुत्पत्तिप्रसङ्गादतोऽर्थकृतमेव ज्ञानवैचित्र्यमिति । अत्रोच्यते नासतोऽदृष्टत्वात्, इति, योऽयं ज्ञाने नीलादिराकार उपलभ्यते स विनष्टस्यासतोऽर्थस्याकारो भवितुं नार्हति कुतः, अदृष्टत्वान्न खलु धर्मिणि विनष्टे तद्धर्मस्यार्थान्तरे संक्रमणं दृष्टं प्रतिविम्बादिकमपि स्थिरस्यैव भवति तत्रापि न धर्ममात्रस्य अतोऽर्थवैचित्र्यकृतं ज्ञानवैचित्र्यमर्थस्य ज्ञानकाले अवस्थानादेव संभवति पुनरपि साधारणं दूषणमाह—

**सू० उदासीनानामपि चैवं सिद्धिः ॥ २६ ॥**

एवं क्षणिकत्वासदुत्पत्त्यहेतुकविज्ञानाशाद्यभ्युपगमे उदासीनानामनुद्युञ्जानामपि सर्वार्थसिद्धिस्स्यात् इष्टप्राप्तिरनिष्टनिवृत्तिर्वा प्रयत्नादिभिः साध्यते क्षणध्वंसे हि सर्वेषां भावानां पूर्वपूर्ववस्तु तद्गतोवा विशेषः संस्कारादिकोऽविद्यादिर्वा उत्तरत्र न कश्चिदनुवर्तत इति प्रयत्नादिभिः साध्यं न किञ्चिदस्ति, एवं सत्यहेतुसाध्यत्वा-

त्सर्वैसिद्धीनामुदासीनानामप्यैहिकामुष्मिकफलं मोक्षश्च सिद्ध्येत् । समुदायाधिकरणं समाप्तम् ॥

टी० सू० नासतो दृष्टत्वात्, सौत्रान्तिकस्य प्रत्यवस्थानावसरं दर्शयति 'तत्र यदुक्तमि''ति, उत्तरोत्पादे चेत्यादिसूत्रषट्कं दृष्टमुखेन दूषणपरम् अतो दृष्टानुबन्धिदूषणान्तरं सौत्रान्तिकावसरः दृष्टानुबन्धिदूषणपरिहारार्थः योगाचारमतमाशङ्क्य दूषयति "न च पूर्वे''ति, विनष्टस्याकारः प्रतिबिम्बित इत्यत्राह "प्रतिबिम्बादिकमि''ति, आदि–शब्देन स्फटिके जपाकुसुमस्य छायापत्तिर्विवक्षिता तत्रापीति न केवलं धर्ममात्रस्य प्रतिबिम्बो दृष्टः धर्मिण एव तु दृष्ट इत्यर्थः सू० उदासीनानानामपि चैवं सिद्धिः, उदासीनानामर्थसिद्धेरनिष्टत्वमाह "इष्टे''ति, प्रयत्नसाध्यत्वादसम्भवमाह "तणध्वंसे ही''ति, स्वर्गादिहेतुभूतविशेषः संस्कारादिः मोक्षहेतुर्विशेषो विद्यादिः–समुदायाधिकरणं समाप्तम् ॥

उपलब्ध्यधिकरणम् । **सू० नाभाव उपलब्धेः ॥ २७ ॥**

भा० विज्ञानमात्रास्तित्ववादिनो योगाचाराः प्रत्यवतिष्ठन्ते यदुक्तमर्थवैचित्र्यकृतं ज्ञानवैचित्र्यमिति तन्नोपपद्यते अर्थवज्ज्ञानानामेव साकाराणां स्वयमेव विचित्रत्वात् तच्च स्वरूपवैचित्र्यं वासनावशादेवोपपद्यते, वासना च विलक्षणप्रत्ययप्रवाह एव यद् घटाकारं ज्ञानं कपालाकारज्ञानस्योत्पादकं तत्पूर्वघटज्ञानं तस्य च तथाविधस्योत्पादकं ततः पूर्वघटज्ञानमित्येवंरूपः प्रवाह एव वासनेत्युच्यते, कथं बहिष्ठसर्षपमहीधरादिकारान्तरस्य ज्ञानस्यैवेत्युच्यते इत्थमर्थस्यापि व्यवहारयोग्यत्वं ज्ञानप्रकाशायत्तम् अन्यथा स्वपरवेद्ययोरनतिशयप्रसङ्गात् प्रकाश-

मानस्य च ज्ञानस्य साकारत्वमवश्याश्रयणीयं निराकारस्य प्रकाशायोगात्, एकश्चायमाकार उपलभ्यमानो ज्ञानस्यैव तस्य च बहिर्वदवभासोऽपि भ्रमकृतः, ज्ञानार्थयोः सहोपलम्भनियमाच्च ज्ञानादव्यतिरिक्तोऽर्थः । किञ्च बाह्यमर्थमभ्युपयद्भिरपि घटपटादिविज्ञानेषु

टी० सू० नाभाव उपलब्धेः किमर्थशून्यज्ञानवादे जगदुत्पत्तिः सम्भवति नेति स पक्षः समीचीनयुक्तिमूलो नेति घटाद्याकारो ज्ञानाकार उतार्थाकार? इति, उतार्थासाधारण्यं नाम तत्तदर्थसारूप्यम्? उतार्थसम्बन्ध? इति किं घटाद्याकारातिरेकेणार्थव्यवहारानुगुण्यं नाम ज्ञानाकारो भासते न वेति यदाऽऽकाशान्तरं न भासते यदा चार्थसारूप्यलक्षणसमर्थासाधारण्यं तदा घटाद्याकारो विज्ञानाकार इति विज्ञानमात्रवादस्य सम्यग्युक्तिमूलत्वात्तत्र जगदुदयसम्भवः यदा ज्ञानस्य तत्तदर्थव्यवहारानुगुण्यमाकारान्तरं भासते यदा चार्थसाधारण्यं तत्संबन्धलक्षणं तदा घटाद्याकारस्य ज्ञानाकारत्वाभावाद्योगाचारमतस्य युक्तिशून्यतया तत्पक्षे न जगदुत्पत्तिसम्भवः । वैचित्र्यं कथमित्यत्राह "स्वरूपे"ति, विजातीयज्ञानोत्पत्तिः कथमित्यत्राह "यद्घटाकारे"ति, विसजातीयज्ञानसन्तानेषु चरमज्ञानं विजातीयोत्पादनशक्तमित्यर्थः, यथार्थाभ्युपगमेऽपि विजातीयघटादेर्विजातीयकपालाद्युत्पादकत्वं तथेति भावः । ज्ञानार्थयोरिति द्विचन्द्रज्ञाने चन्द्रद्वयसहोपलम्भनियमाद् द्वितीयचन्द्रस्य चन्द्राद्व्यतिरिक्तत्वं तद्वदिति भावः किञ्चेत्यादि ज्ञानानामेव वासनावशाद्वैचित्र्योपपत्तेश्चरमज्ञानस्यैवार्थवद्विजातीयोत्पादनशक्तत्वाच्च ज्ञानानां साकारतयैव प्रकाशमानत्वेनाकारद्वयानुपलब्ध्या ज्ञानस्यैव तत्तदाकारभाक्त्वाच्च सहोपलम्भनियमाच्च बाह्यार्थाभ्युपगमेऽपि

मू० ज्ञानस्य तत्तदर्थासाधारण्यं तत्तदर्थसारूप्यमन्तरेणोपपद्यत इत्यवश्यं ज्ञानेऽर्थसरूपं रूपमास्थेयं तावतैव सर्वव्यव-

हारोपपत्तेः, तद्व्यतिरिक्तार्थकल्पना निष्प्रामाणिका, अतो विज्ञानमात्रमेव तत्त्वं न बाह्यार्थोऽस्तीत्येवं प्राप्त प्रचक्ष्महे नाभाव उपलब्धेरिति, ज्ञानव्यतिरिक्तस्यार्थस्याभावो वक्तुं न शक्यते कुतः उपलब्धेः ज्ञातुरात्मनोऽर्थविशेषव्यवहारयोग्यताऽऽपादनरूपेण ज्ञानस्योपलब्धेः, एवमेव हि सर्व लौकिकाः प्रतियन्ति घटमहं जानामीति

टी० ज्ञानस्य तत्तदर्थासाधारण्यस्य तत्तदर्थसारूप्यनिबन्धनत्वाच्च तावतैव सर्वव्यवहारोपपत्तेश्च ज्ञानमात्रमेव तत्त्वमित्यर्थः एवं प्राप्त इत्यादि ज्ञातुरात्मनोऽर्थविशेषव्यवहारयोग्यतापादानरूपेणेत्यनेन निराकारस्य प्रकाशायोगादिति हेतुः प्रत्युक्तः, न नीलादिर्ज्ञानाकारः तत्तन्नीलाद्यर्थव्यवहारानुगुण्यमेव ज्ञानस्याकार इत्यस्यार्थस्योक्तत्वात् उपलब्धिं दर्शयति "एवमेव ही"ति, एवं रूपेणेति ज्ञानं सकर्मकं सकर्तृकमेव भासते तत्र ज्ञानमात्रस्यैव पारमार्थ्यं किमनेनैव ज्ञानेन साध्यते ?

सू० एवंरूपेण सकर्मकेण सकर्तृकेण ज्ञाधात्वर्थेन सर्वलोकसाक्षिकमपरोक्षमवभासमानेनैव ज्ञानमात्रमेव परमार्थ इति साधयन्तः सर्वलोकोपहासोपकरणं भवन्तीति वेदवादच्छद्मप्रच्छन्नबौद्धनिराकरणे निपुणतरं प्रपञ्चितम् । यत्तु सहोपलम्भनियमादभेदो नीलतद्धियोरिति तत्स्ववचनविरुद्धं साहित्यस्यार्थभेदहेतुकत्वात्तदर्थव्यवहारयोग्यतैकस्वरूपस्य ज्ञानस्य तेन सहोपलम्भनियमः तस्मादवैलक्षण्यसाधनमिति च हास्यं, निरन्वयविनाशिनां ज्ञानानामनुवर्तमानस्थिराकारविरहाद्वासना च दुरुपपादा विनष्टेन पूर्वज्ञानेनानुत्पन्नमुत्तरज्ञानं कथं वास्यते, अतो

ज्ञानवैचित्र्यमप्यर्थवैचित्र्यकृतमेव तत्तदर्थव्यवहारयोग्यता-
पादानरूपतया साक्षात्प्रतीयमानस्य ज्ञानस्य तत्तदर्थसम्ब-
न्धायत्तं तत्तदसाधारण्यं सम्बन्धश्च संयोगलक्षणः, ज्ञान-
मपि हि द्रव्यमेव प्रभाद्रव्यस्य प्रदीपगुणभूतस्येव ज्ञान-
स्याप्यात्मगुणभूतस्य द्रव्यत्वमविरुद्धमित्युक्तम् अतो न
बाह्यार्थाभावः । यत्परैः स्वप्नज्ञानदृष्टान्तेन जागरितज्ञा-
नानामपि निरालम्बनत्वमुक्तं तत्राह—

उत ज्ञानान्तरेण? चरमः पक्षोऽनुपलब्धिनिरस्तः, प्रथमे च सकर्मके च सकर्तृके ज्ञाने अपरोक्षं भासमाने तत्र कस्यचिदंशस्यापारमार्थ्ये तदन्यस्याप्यपारमार्थ्यप्रसङ्गः, तस्मादपरोक्षसिद्धौ सर्वं ज्ञानवत्सत्यमित्यर्थः । यत्त्विति साहित्यं द्वयोरेवेति तद्भेदसाधकम्, उपलम्भनियमो भिन्नेष्वभिन्नेष्वपि नास्तीति असाधारणोऽनैकान्तिकत्वम् । किञ्च भेदहेतोर्नियमो भेदस्यैव साधक इत्यभिप्रायेणोक्तं तदर्थेत्यादि, तत्तदसाधारण्यस्य तत्तसारूप्यनिबन्धनत्वं परिहरति "तत्तदर्थे"ति, सम्बन्धश्चेति साक्षात्सम्बन्धः संयोग इत्यर्थः, संयोगो हि द्रव्ययोरित्यत्राह "ज्ञानमपि ही"ति, द्रव्यस्य द्रव्यान्तरधर्मतैकस्वरूपत्वं कथमिति शङ्कायां प्रदीपदृष्टान्तेन परिहरति "प्रभाद्रव्यस्ये"ति, उत्तरसूत्रमवतारयति "यत्परै"रिति,

## सू० वैधर्म्याच्च न स्वप्नादिवत् ॥ २८ ॥

स्वप्नज्ञानवैधर्म्याज्जागरितज्ञानानामर्थशून्यत्वं न युज्यते
वक्तुं, स्वप्नज्ञानानि हि निद्रादिदोषदुष्टकरणजन्यानि
बाधितानि च, जागरितज्ञानानि तु तद्विपरीतानीति तेषां
न तत्साम्यं, सर्वेषां च ज्ञानानामर्थशून्यत्वे भवद्भिः सा-
ध्योऽप्यर्थो न सिद्ध्यति, निरालम्बनानुमानज्ञानस्याप्यर्थशू-

न्यत्वात्, तस्यार्थवत्त्वे ज्ञानत्वस्यानैकान्त्यात्सुतरामर्थशून्यत्वासिद्धिः ॥

## सू० न भावोऽनुपलब्धेः ॥ २९ ॥

न केवलस्यार्थशून्यस्य ज्ञानस्य भावः संभवति, कुतः क्वचिदप्यनुपलब्धेः, न ह्यकर्तृकस्याकर्मकस्य वा ज्ञानस्य क्वचिदुपलब्धिः, स्वप्नज्ञानादिष्वपि नार्थशून्यत्वमिति ख्यातिनिरूपणे प्रतिपादितम् ॥ उपलब्ध्यधिकरणं समाप्तम् ॥

टी० सू· वैधर्म्याच्च न स्वप्नादिवत् सोपाधिकत्वं स्वप्नादेर्मिथ्यात्वाभ्युपगमेनोक्तं सूत्रकारैः, तदेव नास्तीति वक्ष्यते न भावोऽनुपलब्धेः, क्वचिदपीत्यस्यायमभिप्रायः सुषुप्तौ केवलधर्मिस्फुरणमेव न धर्मभूतज्ञानस्येति कथं क्वचिदनुपलब्धिः स्वप्ने ह्यर्थशून्यं ज्ञानमित्यत्राह "स्वप्नज्ञानादिष्वपि" इति, उपलब्ध्यधिकरणं समाप्तम् ॥

सर्वथाऽनुपपत्त्यधिकरणम् ।

## सू० सर्वथाऽनुपपत्तेश्च ॥ ३० ॥

अत्र सर्वशून्यत्ववादी माध्यमिकः प्रत्यवतिष्ठते—शून्यवाद एव हि सुगतमतकाष्ठा, शिष्यबुद्धियोग्यताऽनुगुण्येनार्थाभ्युपगमादिना क्षणिकत्वादय उक्ताः, विज्ञानं बाह्यार्थाश्च सर्वे न सन्ति शून्यमेव तत्त्वम् अभावापत्तिरेव च मोक्ष इत्येव बुद्धस्याभिप्रायः, तदेव हि युक्तं शून्यस्याहेतुसाध्यतया स्वतःसिद्धेः, सत एव हि हेतुरन्वेषणीयः, तच्च सद्भावादभावाच्च नोत्पद्यते भावात्तावन्न कस्यचिदुत्पत्तिर्दृष्टा न हि घटादिरनुपमर्दिते पिण्डादिके जायते । नाप्यभावादुत्पत्तिः सम्भवति, नष्टे पिण्डादिके ह्यभावादुत्प-

द्यमानं घटादिकमभावात्मकमेव स्यात्, तथा स्वतः पर-तश्चोत्पत्तिर्न सम्भवति स्वतस्स्वोत्पत्तावात्माश्रयदोषप्रस-ङ्गात् प्रयोजनाभावाच्च ॥

सू· सर्वथाऽनुपपत्तेश्च, किं माध्यमिकेनोक्तः सर्वशून्यवादः सम्भवति? ने? ति किं सर्वं कार्यं भावरूप? मुताभावरूप? मिति सर्वकार्येष्वपि भाव एव कारण? मुताभाव? इति, किं भावान्तरमभावरूपम्? उत तुच्छं नामा-र्थान्तरं? यदा अतुच्छनामाऽर्थान्तरमभावः? तदा सर्वकार्येष्वभाव एव कार-णमिति कार्य्यस्याप्यभावात्मकतया शून्यवादः उपपन्नः स्यात्, यदा भावा-न्तरमभावः तदा सर्वकार्येषु भाव एव कारणमिति कार्यस्यापि भावरूप-त्वात्सर्वशून्यवादोऽनुपपन्नः स्यात्, अहेतुसाध्यतयेति सतो हेत्वभावादेव शून्यसिद्धिः न तु साधकहेत्वन्तरापेक्षयेत्यर्थः । कथं सतो हेत्वभाव इत्यत्राह "तच्चे"ति, न हीति विनाशादेव जायते इत्यर्थः ॥

परतः परोत्पत्तौ परत्वाविशेषात् सर्वेषां सर्वेभ्य उत्पत्ति-प्रसङ्गः, जन्माभावादेव विनाशस्याप्यभावः, अतः शून्य-मेव तत्त्वम्, अतो जन्मविनाशसदसद्वादयो भ्रान्तिमात्रं, न च निरधिष्ठानभ्रमासम्भवाद्भ्रमाधिष्ठानं किञ्चित्पार-मार्थिकं तत्त्वमाश्रयितव्यं दोषदोषाश्रयत्वज्ञातृत्वाद्यपार-मार्थ्येऽपि भ्रमोपपत्तिवदधिष्ठानापारमार्थ्येऽपि भ्रमोप-पत्तेः, अतः शून्यमेव तत्त्वमिति प्राप्ते उच्यते—

## सू॰ सर्वथाऽनुपपत्तेश्च ॥

सर्वथाऽनुपपत्तेः सर्वशून्यत्वं च भवदभिप्रेतं न सम्भवति, किं भवान्सर्वं सदिति वा प्रतिजानीते? असदिति वा? अ-न्यथा वा? सर्वथा तवाभिप्रेतं तुच्छत्वं न सम्भवति, लोके भावाभावशब्दयोस्तत्प्रतीत्योश्च विद्यमानस्यैव वस्तुनोऽव-

स्थाविशेषगोचरत्वस्य प्रतिपादितत्वात्, अतस्सर्वं शून्यमिति प्रतिजानता सर्वं सदिति प्रतिजानतेव सर्वस्य विद्यमानस्यावस्थाविशेषयोगितैव प्रतिज्ञाता भवति इति भवदभिमता तुच्छता न कुतश्चिदपि सिध्यति। किञ्च कुतश्चित्प्रमाणाच्छून्यत्वमुपलभ्य शून्यत्वं सिषाधयिषता तस्य प्रमाणस्य सत्यत्वमभ्युपेत्यं, तस्यासत्यत्वे सर्वं सत्यं स्यादिति सर्वथा सर्वशून्यत्वं चानुपपन्नम् ॥ सर्वथाऽनुपपत्त्यधिकरणं समाप्तम् ॥

टी० प्रयोजनाभावाच्चेति स्वयं विद्यमानत्वादुत्पत्तिनैरपेक्ष्यं प्रयोजनाभावः, स्वसत्ता ह्युत्पत्तेः प्रयोजनं, पूर्वमेव सत्त्वाच्चोत्पत्त्या प्रयोजनं किं सत उत्पत्तिः? उतासतः? सच्चेन्नोत्पत्त्यपेक्षा, असच्चेच्छशविषाणवन्नोत्पत्तिरिति भावः। न चेत्यादि ब्रह्माज्ञानवादिचोद्यनिराकरणं पूर्वपक्षमुपसंहरति "अत" इति, सर्वथा—शब्देन प्रमाणविकल्पानुपपत्तिः प्रमेयविकल्पानुपपत्तिश्च विवक्षिता। तत्र प्रमेयं विकल्पयति "किं भवानि" ति अन्यथा वा किमुभयात्मकत्वेन? उतानुभयात्मकत्वेनेत्यर्थः, उभयात्मकत्वेऽनुभयात्मकत्वे चावस्थान्तरापत्तिरेवोक्ता स्यात्, लोकप्रतीत्या पराभ्युपगमप्रकारेण वा सत्त्वासत्त्वयोरवस्थाविशेषरूपत्वात्, न हि शून्यवादिन उभयप्रकारातिरेकेण साधनदूषणव्यवहारसम्भवः, घटत्वं स्वापेक्षया सत्कपालापेक्षया असदित्युभयात्मकत्वं, घटःस्वापेक्षया नासन् कपालापेक्षया असन् अतोऽनुभयात्मकत्वमप्यवस्थाविशेष इति, सदिति प्रतिजानतेवेति, किं सदिति विकल्पो द्रष्टव्यार्थ इत्युक्तं भवति। प्रमाणानुपपत्तिमाह "किं च" ति, प्रमाण—शब्दः प्रमितेरप्युपलक्षणार्थः किं सर्वं शून्यमिति प्रमितिस्तत्कारणं वा सत्य? मुत न सत्यं? सत्यं चेत् न सर्वशून्यत्वम् असत्यं चेन्नितरामित्यर्थः, अधिकरणत्रयात्मको बौद्धमतनिरासः अणुहेतुको भूतभौतिकसंहतिरूपः स्कन्धहेतुकः पञ्चस्कन्धीरूप इत्युभयहेतुकः समुदाय इति

परे । चित्तचैत्तहेतुकश्चाभ्यन्तरो बाह्यश्च भूतभौतिकसङ्घात इत्यपरे तत्र पञ्चस्कन्धीरूपसमुदायानादरहेतुः पूर्वोक्तः, उभयथा च दोषादित्यत्राविद्यारागादीनां विनाशः सपरिकरात्सम्यग्ज्ञानाच्चेद्विनाशस्य निर्हेतुकत्वप्रतिज्ञाभङ्गः, स्वयमेवाविद्याविनाशश्चेत्सर्वमुक्तिप्रसङ्गः मोक्षमार्गोपदेशानर्थक्यं चेति परे, तदयुक्तम् उदासीनानाम् अपि चैवं सिद्धिरिति सूत्रे ऐहिकामुष्मिकफलसाधनप्रवृत्तिवैयर्थ्यस्य वक्ष्यमाणतया पुनरुक्तिप्रसङ्गात्, नासतो दृष्टत्वादित्यत्राभावाद् भावोत्पत्तिरनुपपन्ना असतः शशविषाणादेः सदुत्पत्त्यदर्शनात् अभावादुत्पत्त्यभ्युपगमे शशविषाणादिभ्योऽप्यङ्कुरादयो जायेरन्निति परे, तच्चायुक्तम् उत्तरोत्पादे च पूर्वनिरोधादन्यत्रैवाभावाद् भावोत्पत्तौ दूषणस्य दर्शितत्वात् तत्रैव हि कार्योत्पत्तिदशायां क्षणिकस्य कारणस्यावस्थानाभावनिबन्धनं दूषणं दर्शितं दूषणभेदान्न पुनरुक्तिरिति चेन्न दूषणभेदाभावात् कथंचिद्दूषणभेदोत्प्रेक्षणेऽप्यभावात् भावोत्पत्त्यनुबन्धितया सर्वस्य दूषणस्यैकसूत्राभिप्रेतत्वसम्भवात् शब्दविरोधाभावात् पूर्वनिरोधादिति हि शब्दो न ह्यत्रेदं दूषणं विवक्षितं न त्वन्यद्विवक्षितमिति वक्तुं शक्यते निरोधस्य शाब्दत्वात्तनुबन्धिदूषणस्याभिप्रेतत्वाच्च आभिप्रायिकत्वे हि इयदेवाभिप्रेतव्यं नान्यदिति को निवारकः पृथग्योगकरणमेव निवारकमिति चेन्न तस्यार्थान्तरपरत्वेन प्रयोजनवत्तरत्वात् क्षणिकत्वप्रयुक्तदूषणस्य साधारणत्वादसाधारणदूषणेन सौत्रान्तिकनिरसनं हि प्रयोजनवत्तरम्, अपेक्षितस्य शाब्दत्वे सम्भवति कथं तदुपेक्षणेनान्यथासिद्धानपेक्षितार्थान्तरपरत्वाश्रयणं युक्तं नीलादिराकार इति पदद्वयाध्याहारस्तदा स्यादिति चेत्तत्रापि तुल्यं भावस्योत्पत्तिरिति पदद्वयाध्याहारेण हि भवद्योजना । नन्वेवं तर्ह्युदासीनामित्यनन्तरसूत्रे कथं साधारणदूषणोक्तिः, न परपक्षेष्वसाधारणदूषणान्वितेषु साधारणदूषणमप्यनुसन्धेयमिति प्रदर्शनार्थत्वात्तदुक्तेः, वैधर्म्याच्चेत्यादिसूत्रव्याख्यानं परेषां स्वयं वि[1]रुद्धं कृत्स्नप्रपञ्चमिथ्यात्वनिरासकत्वा-

१ स्वपक्षविरुद्धम् ।

त्तस्य सूत्रस्य । ननु न विरोधः ज्ञानार्थयोरभेदो योगाचाराभिमतः, वयं तु भेदमङ्गीकृत्यार्थमिथ्यात्वं ब्रूम इति चेत् अर्थमिथ्यात्वस्यैव योगाचाराभिमतत्वात्, अन्यथा ज्ञानमिथ्यात्वार्थसत्यत्वयोरन्यतरप्रसङ्गात् । नन्वर्थतुच्छत्वं तदभिमतं वयं तु तन्निरासेनानिर्वाच्यत्वं ब्रूम इति चेत् तुच्छत्वमिति किमप्रतीतत्वं विवक्षित? मुत प्रतीतत्वेऽपि बाधार्हत्वं? न तावदप्रतीतत्वं योगाचाराभिमतं सहोपलम्भनियमस्य तैरुच्यमानत्वात्, द्वितीये तु शब्दवैषम्यमेव तेषां युष्माकं च प्रतीतत्वे सति बाधार्हत्वस्योभयाभिमतत्वाच्च । अस्तु वा किञ्चिद्वैषम्यं भवतां यन्येष्वन्ययन्यात्तदानीमपि सूत्रं विरुद्धं कारणदोषबाधकप्रत्यययोरनिर्वाच्यपक्षेऽप्युपाधित्वोपपत्तेरविशिष्टत्वात्, न ह्यनिर्वाच्यपक्षास्पर्शी कश्चिदुपाधिः सूचितः व्याख्यातश्च, अतो विरुद्धत्वं स्थितं न भावोऽनुपलब्धेरिति उत्तरोत्तरज्ञानवैचित्र्यहेतुतया सुगताभिमतानाम् अनादिवासनानां न भावः अर्थानुपलब्धेश्च । यद्वाऽर्थनाश्रयेण विना धीवैचित्र्यहेतुभूतवासनानुपलब्धेश्च अर्थोपलब्धिनिबन्धना स्थिराश्रयनिष्ठा हि वासनेति व्याख्यातं, तत्रार्थाभावेऽपि स्वप्नानुभवजन्याः पाश्चात्यस्मृतिहेतुभूता वासना जायन्ते तद्वदिहापि सम्भवतीत्युक्ते किमुत्तरं स्वाप्नानि ज्ञानानि च न विषयशून्यानीति वक्तव्यमिति चेत् तर्हि हेत्वन्तरसापेक्षयोजनाया अपि सूत्रस्य नैरपेक्ष्यसिद्ध्यर्थं चरमहेतुविषयतया वर्णनं युक्तम्, अतोऽर्थशून्यज्ञानानामनुपलब्धिपराहतत्वपरं सूत्रमिदं वासनानामाश्रयानुपलब्धेरिह पृथक्कथनमपेक्षितम् अनुस्मृतेश्चेति सूत्रे तदवगमात्, पूर्वानुभवजनितसंस्काराश्रयस्य स्थिरस्याभावे प्रतिसन्धानानुपपत्तिस्तत्रावगता सर्वथानुपपत्तेश्चेति सूत्रमपि सुगतमात्रविषयं, न तु शून्यवादप्रतिक्षेपपरं तस्य तु सर्वप्रमाणविरुद्धत्वान्निरसनानादर इति परे । तदयुक्तं नास्तिक्यकाष्ठागतस्यासत्तर्कारस्य तस्यावश्यं निरसनीयत्वात्, यदि सर्वप्रमाणविरोधेन दुर्बलतया न तन्निरासः तर्हि पक्षान्तराणामपि तत्तत्प्रत्यनीकप्रमाणविरुद्धतया दुर्बलत्वात्तन्निरासस्यानादरणीयता किं न स्यात्, वस्तुतो दुर्बलत्वेऽप्यापाततः प्राबल्यप्रतीतेस्तन्निरसनीयत्वमिति चेत्तच्छून्यवादेऽपि तुल्यं, पक्षान्तराणां कतिप-

यप्रमाणानुगुण्यात्प्राबल्यावभासः, शून्यवादस्य तु सर्वप्रमाणविरोधान्न प्राबल्यावभास इति चेत् पक्षान्तरेषु प्रमाणानुगुणांशस्य निरसनमशक्यं विरुद्धांशस्य तु प्राबल्यावभासाभावात् किन्निरसनेन, विरुद्धांशस्य प्रमाणविरोधनिमित्तदौर्बल्यस्यापाततो ऽनवभासात्तज्ज्ञापनमपेक्षितमिति चेत्त शून्यवादस्यापि कार्त्स्न्येन प्रमाणविरोधस्य ज्ञाप्यत्वात् तन्निरसनमपेक्षितं । यदि विरुद्धैकदेशमपि मतं निरस्यते तर्हि कार्त्स्न्येन विरुद्धस्य निरसनीयत्वं किं पुनर्न्यायसिद्धम् । किंच यद्यपि प्रमाणविरोधोऽवभासते तथाऽपि तदुक्तकुतर्काणां प्रबलत्वभ्रमो निराकरणीयः, अन्यथा ज्वालाभेदयुक्त्या तदैक्यज्ञानस्येव प्रमाणज्ञानानामपि भ्रान्तित्वशङ्काप्रसङ्गात्, अतो ऽपेक्षितत्वाच्छब्दानुरोधाच्च शून्यवादप्रतिक्षेपपरमिदं सूत्रमिति युक्तम् । अन्ये त्वेवं वर्णयन्ति मातृशरीरं प्राप्तात् कर्मणः प्रथमं हृदयवस्तु स्त्रीन्द्रियपुरुषेन्द्रिययोरन्यतरसचिवोऽष्टद्रव्यकलापस्तदनन्तरं चित्तमप्युत्पद्यते तस्माच्चित्तात्पूर्वस्माच्च कलापान्मातृभुक्ताहाराच्च यथायथमष्टद्रव्यकलाप उत्पद्यते चक्षुरादीनि च, कर्मशब्दश्च पूर्वकर्मवासितविलक्षणचित्तसंतानपरः, एवमुभयहेतुके कर्ममातृभुक्ताहारहेतुकेऽपि गर्भे समुदायस्याप्राप्तिः संयोजयितुः स्थिरस्य प्रशासितुरीश्वरस्यानभ्युपगमादिति तदयुक्तं परपक्षेषु जगत्कारणानुपपत्तेर्वक्तव्यत्वात् संयोजकेश्वरानभ्युपगमरूपहेतोः कृत्स्नजगदुत्पत्तिप्रतिक्षेपकस्य गर्भस्थदेहमात्रविषयतया संकोचानुपपत्तेः, उभयथा च दोषादित्यत्र निरोधस्य सहेतुकत्वे निर्हेतुकत्वप्रतिज्ञाविरोधः । अहेतुकत्वे नित्यनिरोधः प्रसज्येत हेत्वभावाविशेषादित्युक्तं तदप्ययुक्तम् ईदृशानामन्येषामपि प्रध्वंसविषयदूषणानां प्रतिसंख्याप्रतिसंख्यानिरोधप्रतिक्षेपकसूत्र एव विवक्षितत्वोपपत्तेः, कार्यकारणतुच्छताविषयदूषणस्यात्र विवक्षितत्वोपपत्तेश्च, नासतो दृष्टत्वादिति सूत्रं शून्यवादिनिरासपरं व्याख्यातं न भावोऽनुपलब्धेरित्यादिसूत्रद्वयं च बाह्यार्थानुमेयताव्युदासपरं वर्णितं, तदयुक्तं स्वारसिकक्रमाभावात्प्रत्यक्षादिना स्थिरतयोपलब्धा बाह्यार्थाः क्षणिकाः क्षणिकाश्चानुमेया, उभयविधाश्चार्था मिथ्याभूताः तद्विषयज्ञानमपि मिथ्येति हि लोकबुद्ध्यवतरणक्रमः, वैभाषिकसौत्रान्तिकयोर्बाह्यार्थस्थिर-

त्वाभ्युपगमाच्च संगतिर्युक्ता, न तु वैभाषिकमाध्यमिकयोर्बाह्यार्थानभ्युपगमाद् योगाचारमाध्यमिकयोः संगतत्वे बुद्ध्यवतरणक्रमान्माध्यमिकस्य पाश्चात्यत्वं युक्तं न तु योगाचारसौत्रान्तिकयोः पौर्वापर्यं युक्तम् उक्तसङ्गत्यभावात् ज्ञानास्तित्वसाम्यात्, सङ्गतिरिति चेत् तर्हि पौर्वापर्यविपर्ययो युक्तः, ज्ञानास्तित्वसाम्यस्यार्थसद्भावप्रतिषेधरूपेण वैषम्यस्य चानुगुणतया सङ्गतेर्वक्तव्यत्वात् । किंच शब्दानौचित्यमपि भवति नासतः सदुत्पत्तिर्दृष्टा, नापि स्वयमसदिति युक्तम् असतः केनापि प्रमाणेनादृष्टत्वादिति हि तद्योजना, तत्रासत इति पदस्य षष्ठ्यन्तत्वे प्रथमं प्रतिज्ञावाक्यमध्याहार्य्यं स्यात्, पञ्चम्यन्तत्वे द्वितीयं प्रतिज्ञावाक्यमध्याहार्य्यं स्यात्, अस्माकं तु न वाक्याध्याहारः, न नीलादिरसत आकार इति पदद्वयाध्याहार एव, एतावांश्चाध्याहारः सर्वेषामवर्जनीयः सू· न भावोऽनुपलब्धेरिति न तादृशस्याप्रत्यक्षस्य भावः, अनुपलब्धेः अनुपलभ्यमानस्य व्याप्तिग्रहणायोगादिति वर्णितं तदयुक्तम् नित्यातीन्द्रियाणामिन्द्रियादीनामनुमानाभावप्रसङ्गात् तेषु कल्पकमनन्यथासिद्धमिह तु बाह्यार्थकल्पकं ज्ञानवैचित्र्यमन्यथासिद्धं संस्कारेण तत्सम्भवादिति चेन्न उत्सूत्रत्वाद्धेतोः । ननु न सर्वेषु हेतुः सूत्रेषु शाब्दः अभिप्रेतहेतुभिराकाङ्क्षापूरणस्य सर्वव्याख्यातृसंमतत्वादिति चेत्, सत्यं निर्दिष्टहेतुर्यैरुपपादकैर्विना न स्थिरीभवति तेषामभिप्रेतत्वं युक्तं निर्दिष्टहेतूपयोगित्वात्, कण्ठोक्तहेतुदौस्थ्येन तत्परिहारानुपयोगिहेत्वन्तरस्याभिप्रेतत्वकल्पनमनुपपन्नं, न हि सम्यञ्चं हेतुं वाचकेन वक्तुमशक्नुवंस्तस्याभिप्रेततासिध्यर्थं दुःस्थं हेतुं सूत्रकारो वदतीति युक्तं शश्वदनुपलभ्यस्याशक्यानुमानत्वं हि दुःस्थं कल्पकहेत्वन्यथासिद्धिरेव हि सम्यग्युक्तिः सर्वथाऽनुपपत्तेश्चेति निर्देशश्च विकल्पितशिरोभेदेषु अनुपपत्तेर्विवक्षितांविवक्षितत्वमवगमयति । न त्वेकस्वरूपस्यैवार्थस्य बह्वनुपपत्तियुक्तत्वम्, उभयथा च दोषादितिवत् अतो रूपादीनामनुमेयत्वे प्रत्यक्षानुभवविरोधादनेकोपपत्तिपरतया व्याख्यानमयुक्तं तत्र चार्थसङ्गतिवशात् शब्दानुरोधाच्च सर्वशून्यवादनिरासपरत्वं युक्तम् । सर्वथाऽनुपपत्त्यधिकरणं समाप्तम् ॥

एकस्मिन्नसंभवाधिकरणम् ॥

# सू० नैकस्मिन्नसम्भवात् ॥ ३१ ॥

सू० निरस्तास्सौगताः, जैना अपि परमाणुकारणत्वादिकं जगतो वदन्तीत्यनन्तरं जैनपक्षः प्रतिक्षिप्यते, ते किल मन्यन्ते जीवाजीवात्मकं जगदेतन्निरीश्वरं, तच्च षड्द्रव्यात्मकं, तानि च द्रव्याणि जीवधर्माधर्मपुद्गलकालाकाशाख्यानि, तत्र जीवा बद्धा योगसिद्धा मुक्ताश्चेति त्रिविधाः, धर्मो नाम गतिमतां गतिहेतुभूतो द्रव्यविशेषोजगद्व्यापी, अधर्मश्च स्थितिहेतुभूतो व्यापी, पुद्गलो नाम वर्णगन्धरसस्पर्शवद्द्रव्यं, तच्च द्विविधं परमाणुरूपं, तत्संघातरूपं च, पवनज्वलनसलिलधरणीतनुभवनादिकं, कालस्त्वभूदस्ति भविष्यतीति व्यवहारहेतुरणुरूपोद्रव्यविशेषः, आकाशोऽप्येकोऽनन्तप्रदेशश्च, तेषु चाणुव्यतिरिक्तानि द्रव्याणि पञ्चास्तिकाया इति च संगृह्यन्ते, जीवास्तिकायो धर्मास्तिकायो ऽधर्मास्तिकायः पुद्गलास्तिकाय आकाशास्तिकाय इति, अनेकदेशवर्तिनि द्रव्येऽस्तिकायशब्दः प्रयुज्यते, जीवानां मोक्षोपयोगिनमपरमपि संग्रहं कुर्वन्ति "जीवाजीवास्रवबन्धनिर्जरसंवरमोक्षा" इति मोक्षसंग्रहेण मोक्षोपायश्च गृहीतः, स च सम्यग्ज्ञानदर्शनचारित्ररूपः, तत्र जीवस्तु ज्ञानदर्शनसुखवीर्यगुणः अजीवश्च जीवभोग्यवस्तुजातम् आस्रवस्त[१]दुपभोगोपकरणभूतमिन्द्रियादिकं, बन्धश्चाष्टविधः घातिकर्मचतुष्टयम-

१ तद्भोगोपकरणभूतमिन्द्रियमिति पा० ।

घातिकर्मचतुष्टयं चेति, तत्राद्यं जीवगुणानां स्वाभाविकानां ज्ञानदर्शनवीर्य्यसुखानां प्रतिघातकरम्, अपरं शरीरसंस्थानतदभिमानतत्स्थितितत्प्रयुक्तसुखदुःखोपेक्षाहेतुभूतं निर्जरं मोक्षसाधनमर्हदुपदेशावगतं तपः, संवरो[1]ज्ञानेन्द्रियनिरोधिसमाधिरूपः, मोक्षस्तु निवृत्तरागादिक्लेशस्य स्वाभाविकात्मस्वरूपाविर्भावः पृथिव्यादिहेतुभूताश्चाणवो वैशेषिकादीनामिव न चतुर्विधाः, अपि त्वेकस्वभावाः। पृथिव्यादिभेदस्तु परिणामकृतः सर्वं च वस्तुजातं सत्त्वासत्त्वनित्यत्वानित्यत्वभिन्नत्वाभिन्नत्वादिभिरनैकान्तिकमिच्छन्ति, स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यं, स्यादस्ति चावक्तव्यं च, स्यान्नास्ति चावक्तव्यं च, स्यादस्ति च नास्ति चावक्तव्यं चेति सर्वंच सप्तभङ्गीनयावतारात्सर्वं वस्तुजातं द्रव्यपर्यायात्मकमिति द्रव्यात्मना सत्त्वैकत्वनित्यत्वाद्युपपादयन्ति, पर्यायात्मना च तद्विपरीतं, पर्यायाश्च द्रव्यस्यावस्थाविशेषाः, तेषां च भावाभावरूपत्वात् सत्त्वासत्त्वादिकं सर्वमुपपन्नमिति । अत्राभिधीयते नैतदुपपद्यते,

## सू० नैकस्मिन्नसम्भवादिति ॥ ३२ ॥

कुतः एकस्मिन्नसम्भवात् एकस्मिन्वस्तुनि अस्तित्वनास्तित्वादेर्विरुद्धस्य छायातपवद्युगपदसम्भवात् ।

१ संवरो नामेन्द्रियनिरोधः इति पा० ।

टी० सू० नैकस्मिन्नसम्भवात्, सङ्गतिमाह "निरस्ता"इति, वैशेषिकबौद्धयोः परमाणुकारणवादिनोरेकान्तत्वपरमाणुचातुर्विध्यसाम्यात्तन्निरासौ सङ्गतौ बौद्धानन्तरमार्हतमतनिरासः प्राप्तः किमेकान्तब्रह्मकारणवादो विचाल्यः? उत ने? ति किं जैनमतं समीचीनयुक्तिमूल? मुत ने? ति किमेकस्य वस्तुनः सत्त्वासत्त्वभिन्नत्वाभिन्नत्वनित्यत्वानित्यत्वाद्यनेकस्वभावत्व सम्भवति? ने? ति किं पर्यायस्वभावाभ्यामेकस्य वस्तुनोऽनेकस्वभावत्वमापादयितुं शक्यते ने? ति यदा शक्यते तदैकस्य वस्तुनोऽनेकस्वभावत्वसम्भवाज्जैनमतस्य समीचीनयुक्तिमूलतया ब्रह्मकारणवादस्याश्रद्धेयता स्यात् । यदा तु न शक्यते तदा वस्तुनोऽनेकस्वभावत्वासम्भवेन जैनमतस्य कुतर्कमूलतया ब्रह्मकारणवादस्य श्रद्धेयतमत्वं, ते किलेत्यादि,-स्थितिहेतुभूतः स्थावरत्वादिहेतुः अप्रवृत्तिहेतुरित्यर्थः । संघातरूपमेव विवृणोति "पवने"ति, अपरिमितशरीरसंस्थानं तदभिमानः तत्स्थितिः तत्प्रयुक्तसुखदुःखोपेक्षा इत्येषां हेतुरित्यर्थः अन्यथा चतुष्टयायोगात्पर्यायोऽवस्था अवस्थाविशेषाणां भावाभावरूपत्वाद्द्रव्यस्य सत्त्वादिकमुपपन्नमित्यर्थः । दूषयति अत्राभिधीयत इत्यादिना, आकारभेदादविरोध इत्यत्राह—

श्रु० एतदुक्तं भवति द्रव्यस्य तत्तद्विशेषणभूतपर्यायशब्दाभिधेयावस्थाविशेषस्य च पृथक्पदार्थत्वान्नैकस्मिन् विरुद्धधर्मसमावेशः सम्भवतीति, तथा ह्येकेनास्तित्वादिनाऽवस्थाविशेषेण विशिष्टस्य तदानीमेव न तद्विपरीतनास्तित्वादिविशिष्टत्वं सम्भवति, उत्पत्तिविनाशाख्यपरिणामविशेषास्पदत्वं च द्रव्यस्यानित्यत्वं, च तद्विपरीतं च नित्यत्वं तस्मिन्कथं समवैति, विरोधिधर्माश्रयत्वं च भिन्नत्वं, तद्विपरीतं चाभिन्नत्वं, कथं वा तस्मिन्समवैति यथाऽश्वत्वमहिषत्वयोर्युगपदेकस्मिन्नसम्भवः । अयमर्थः पूर्वमेव भेदाभेद-

वादिनिरसनसमये तत्तु समन्वयादित्यत्र प्रपञ्चितः, कालस्य पदार्थविशेषणतयैव प्रतीतेस्तस्य पृथक् अस्तित्वनास्तित्वादयो न वक्तव्याः, न च परिहर्त्तव्याः, कालोऽस्ति नास्तीति व्यवहारो व्यवहर्तॄणां जात्याद्यस्तित्वनास्तित्वव्यवहारतुल्यः, जात्यादयो हि द्रव्यविशेषणतयैव प्रतीयन्त इति पूर्वमेवोक्तं, कथं पुनरेकमेव ब्रह्म सर्वात्मकमिति श्चोदितैरुच्यते सर्वचेतनाचेतनशरीरत्वात्सर्वज्ञस्य सर्वशक्तेः सत्यसङ्कल्पस्य पुरुषोत्तमस्येत्युक्तम् ।

टी० "एतदुक्तं भवति" इति, किं द्रव्यावस्थे भिन्ने? उताभिन्ने? उत भिन्नाभिन्ने? इति विकल्पमभिप्रेत्य भेदपक्षे दूषणमाह "द्रव्यस्ये"ति; अभिन्नत्वपक्षेऽपि नाकारभेदादविरोधः, भिन्नाभिन्नत्वपक्षेऽपि तदविरोधनिर्वाहकाकारान्तराभावान्नाविरोध इतीदं पूर्वमुक्तत्वान्नात्र कण्ठोक्तं, पूर्वं प्रस्तुतास्तित्वादेः कथं विरोध इत्यत्राह "तथा ही"ति, सत्त्वासत्त्वादिविरोधो नाकारभेदेन परिह्रियते अपि तु द्रव्यस्यैवोच्यत इति पूर्वं प्रस्तुतं तदनुपपन्नमित्याह "तथा ही"ति, आकारभेदाभ्युपगमे आकारे नास्तित्वादिधर्मः द्रव्ये त्वस्तित्वादिधर्मः अनभ्युपगमे तु द्रव्यमेवोभयधर्मीति विरोधः, सत्त्वासत्त्वनित्यत्वानित्यत्वभिन्नत्वाभिन्नत्वविरोधः क्रमेणोपपादितः, कालस्येति पदार्थविशेषणतयैवेत्यनेन कालस्याणुत्वनिराकरणं फलितम्, अनेककालकल्पनमयुक्तम्, एकस्मिन् कालेऽनेकपदार्थाः सन्तीत्येव प्रतीतेः, कालस्य द्रव्यविशेषणतयाऽस्तित्वं प्रतिपन्नं ततस्तस्य नास्तित्वशङ्का निरवकाशेत्यर्थः । कथमित्यादिना परिचोद्य परिहरति "सर्वे"ति, शरीराणामन्योन्यं ब्रह्मणश्च भेदः शरीरिणो ब्रह्मण एकत्वमित्यर्थः, सर्वज्ञस्येत्यादि विशेषणमेकस्य सर्वचिदचिन्नियन्तृत्वाद्यसम्भावितत्वशङ्काव्यावृत्त्यर्थं । शरीरदोषाणां शरीरिण्यस्पर्शमुपपादयति—

भा० शरीरशरीरिणोस्तद्धर्माणां चात्यन्तवैलक्षण्यमप्युक्तं, किञ्च जीवादीनां षण्णां द्रव्याणामेकद्रव्यपर्यायत्वाभावात्तेषु द्रव्यैकत्वेन पर्यायात्मना चैकत्वानेकत्वाद्ययोदुरुपपादा:, अथोच्येत षडेतानि द्रव्याणि स्वकीयैः पर्यायैः स्वेन स्वेन चात्मना तथा भवन्तीति, एवमपि सर्वमनैकान्तिकमभ्युपगमविरोधः, अन्योन्यतादात्म्याभावात्, अतो न युक्तमिदं जैनमतम् । ईश्वरानधिष्ठितपरमाणुकारणवादे पूर्वोक्तदोषास्तथैवावतिष्ठन्ते ॥

## सू० एवं चात्माकार्त्स्न्यम् ॥ ३३ ॥

एवं भवदभ्युपगमे सत्यात्मनश्चाकार्त्स्न्यम् प्रसज्येत जीवोऽसङ्ख्यातप्रदेशो देहपरिमाण इति हि भवतां स्थितिः, तच हस्त्यादिशरीरेऽवस्थितस्यात्मनस्ततो न्यूनपरिमाणे पिपीलिकाशरीरे प्रविशतोऽल्पदेशव्यापित्वेनाकार्त्स्न्यं प्रसज्येत अपरिपूर्णता प्रसज्येत इत्यर्थः । अथ सङ्कोचविकासधर्मतयाऽऽत्मनः पर्यायशब्दाभिधेयावस्थान्तरापत्त्या विरोधः परिह्रियत इत्युच्यते तत्राह–

## सू० न च पर्य्यायादप्यविरोधो विकारादिभ्यः ॥ ३४ ॥

न च सङ्कोचविकासरूपावस्थान्तरापत्त्याऽपि विरोधः परिहर्तुं शक्यते विकारत्वप्रयुक्तानित्यत्वादिदोषप्रसक्तेर्घटादितुल्यत्वप्रसङ्गात् ॥

टी० "शरीरशरीरिणोरि"ति, अनेकान्तत्वस्य व्यभिचारमाह "कि-ञ्चे"ति, सू॰ एवं चात्माकार्त्स्न्यम्, एवं-शब्दं वाचष्टे "भवदि"ति, बुद्धि-स्यतदभ्युपगमप्रकार एवं-शब्दोक्त इत्यर्थः, यथा पूर्वोक्तदोषः एवं दोषा-न्तरमिति परे। अन्यत्रापि दूषणान्तरे विवक्षितपूर्वोक्तदूषणस्य दृष्टान्तीक-रणादर्शनात् प्रयोजनाभावाच्च धीस्थप्रकारपरत्वेन व्याख्यातम्, तत्र हि दूष्यं जीवस्य देहपरिमाणत्वमन्तर्गतमुपस्थापितं स्यात् असङ्ख्यातप्रदेशः एकरूपसङ्ख्याहीनप्रदेशः एकरूपसङ्ख्याहीनः अनियतप्रदेश इत्यर्थः। उत्तर-सूत्रशङ्कामाह "अथे"ति, सू॰ न च पर्यायादप्यविरोधो विकारादिभ्यः, अवस्थाभेदादविरोधवर्णने विकारत्वमवयवोपगमापगमाभ्यामुपपादयन्ति परे सर्वं तपनातपत्रालोकादीनां सङ्कोचविकासभाजामशीर्णावयवत्वस्य पूर्वमुपपादितत्वात् सङ्कोचविकासयोरवयवापगमोपगमाभ्यां विनाऽपि सम्भवात्तदनुक्तिः, अत एव हि सङ्कोचविकासरूपेत्यवस्याविशेषिता, तेन वृत्तादिगतवृद्धिक्षयादिव्यावृत्तिः. विकार उत्पत्तिर्विनाशश्चानित्यत्वं परि-मितकालवर्तित्वम् । यद्वा विकारो जन्मादिः, अनित्यत्वं विनाशः आदि-शब्दः परात्त्वचैतन्यानाश्रयत्वपरः । ननु त्वन्मते धर्मभूतज्ञानस्य सङ्कोचविकासाभ्युपगमे कथं नित्यत्वादि स्वरूपेण नित्यस्य वस्तुनो निरुपाधिकधर्मत्वादिति ब्रूमः-धर्मभूतज्ञानस्य परात्त्वं चैतन्याश्रयत्वं चेष्टं न[1] तु जीवस्वरूपमेव सङ्कोचविकासभागिति तस्यालोकस्येव अनित्य-त्वपरात्त्वचैतन्यानाश्रयत्वप्रसङ्गो दुर्वारः ॥

## सू० अन्त्यावस्थितेश्चोभयनित्यत्वादवि-शेषः ॥ ३५ ॥

सू० जीवस्य यदन्त्यं परिमाणं मोक्षावस्थागतं तस्य पश्चाद्देहान्त-रपरिग्रहाभावादवस्थितत्वाभावादात्मनश्च मोक्षावस्थस्य तत्परिमाणस्य चोभयोर्नित्यत्वात्तदेवात्मनः स्वाभाविकं

१ तव तु इति पा॰ ।

परिमाणमिति पूर्वमपि तस्मादविशेषः स्यात्, अतो देह-परिमाणत्वमात्मनो न स्यादित्यसङ्गतमेवेदमार्हतमतम् ॥

एकस्मिन्नसम्भवाधिकरणं समाप्तम् ॥

टी० सू० अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः, जीवस्य तावद्गुणादेरिवापरिमाणत्वमनभ्युपगतं विभुत्वं चानिष्टं देहपरिमाणवादेऽणुत्वं चासम्भावितम् । अणुपरिमाणदेहाभावात्, एवं च यथास्वरूपं मोक्षावस्थास्थितं नित्यतया पूर्वमपि सत् तथाऽन्त्यपरिमाणं मोक्षावस्थास्थितम् अदेहोपाधिकं नित्यतया पूर्वमपि सत्स्यात्, तत आत्मनो देहपरिमाणत्वहानिरित्यर्थः । अन्त्यावस्थितेश्चान्त्यपरिमाणस्य नित्यत्वे तस्या भूत्वाभावित्वानुपपत्तेः प्रागपि तदस्तीति तद्विरुद्धपरिमाणावरोधायोगादाद्यं मध्यमं च परिमाणं तदेवेत्याद्यमध्यमपरिमाणयोरपि नित्यत्वादविशेषः एकपरिमाणशरीरतारूपः स्यादिति परे । उभयोराद्यमध्यमावस्थयोरन्त्यपरिमाणस्य नित्यत्वादविशेषः सर्वदाऽणुत्वमेकरूपमहत्त्वं वा स्यादिति च ते चापरे च योजनान्तरमाहुः । तन्न रोचते आत्मनोऽनादित्वात्तद्गतपरिमाणेष्ववस्थाऽन्तरेषु वा कस्यचिदाद्यत्वानुपपत्तेः, आद्य[१]त्वाभावाच्च कस्यचिन्मध्यमत्वानुपपत्तेश्च न चाद्यशब्देनाणुत्वविवक्षोपपन्ना अणुपरिमाणशरीरासम्भवेन देहपरिमाणस्यात्मनोऽणुत्वानुपपत्तेः, आद्यमध्यमयोरभावे कथमन्त्यव्यपदेश? इति चेन्न अन्त्यशब्दस्यावसानवाचित्वादनादेरप्यवसानसम्भवाच्च उभयेषामपि भिन्नाभिन्नत्ववादिनामिदमधिकरणं विरुद्धम् । एकस्मिन् भिन्नाभिन्नत्वाद्यसम्भवस्योक्तत्वात्, भिन्नाभिन्नत्वयोश्च परस्परप्रतिक्षेपकत्वं दर्शितम् । ननु तयोर्मिथः प्रतिक्षेपकत्वं मृदादिद्रव्यरूपेणाभेदस्य घटाद्यवस्थारूपेण भेदस्य च दर्शनादिति चेत् तर्हि साधारणाकारस्यासाधारणाकारस्य च भेदाभेद इति नाममात्रं कृतं स्यात्, ततश्च भेद एवावतिष्ठेत असाधारणधर्मस्य स्वविरोधिधर्माश्रयात्स्वाश्रयस्य व्यावर्तकत्वात् । नन्वभेदोऽप्यवस्थितः किं न स्यात्साधारणाकारस्य स्वाश्रयैक्यनिर्वाहकत्वदर्शनादिति चेन्न साधारणाकारस्य भेदसहस्यैक्यनिर्वाह-

१ आद्याभावाच्चेति पा० ।

कत्वाभावात् असाधारणाकारस्य अभेदासहत्वाच्च एकस्य वस्तुनस्साधारण्यं हि बहुप्रतियोगिकं विरोधिधर्मानाश्रयतालक्षणत्वाद्भेदस्य, विरोधिधर्मसंसर्गस्तं प्रतिक्षिपति, अतो घटत्वाद्यवस्थाविशेषः स्वाभावरूपैर्वा स्वभावाविनाभूतैर्वा शरावत्वपिण्डत्वादिधर्मैराक्रान्तात् मृद्द्रव्यात्स्वाश्रयद्रव्यं भिनत्ति, यदा न भिनत्ति तदा घटत्वादिराकारः स्वयं न स्यात् अभेदस्य स्वाभावरूपत्वात् स्वाभावाविनाभावाद्वा । अतो भिन्नाभिन्नत्वयोरेकस्मिन्नसम्भवो दुर्वारः द्रव्यपर्यायात्मना भिन्नत्वाभिन्नत्वे एकवस्तुनि वदतो विवसनात् किं वैषम्यं युवयोः, पर्यायानपेक्षणस्य द्रव्यस्य पर्यायाणां च नित्यत्वानित्यत्वसत्यत्वासत्यत्वभिन्नाभिन्नत्वादिकं स ब्रूते वयं तु न तथेति चेन्न अवस्थातद्वतोरप्यवस्थान्तरमनपेक्ष्य भिन्नाभिन्नत्वाभ्युपगमात् । यथैकस्य द्रव्यस्य स्वरूपेण नित्यत्वानित्यत्वादिकमवस्थामनपेक्ष्य न शक्यते वक्तुं, तथाऽवस्थातद्वतोः स्वरूपेणाभिन्नत्वे कथमवस्थामनपेक्ष्य भिन्नत्वमाश्रीयते, स्वरूपेण तयोर्भिन्नत्वे कथमवस्थामनपेक्ष्य भिन्नत्वमाश्रीयते स्वरूपेण तयोर्भिन्नत्वे कथं घटमुकुटयोरिवावस्थान्तरमनपेक्ष्याभिन्नत्वमाश्रीयते? अवस्थायाः स्वपरनिर्वाहकत्वादवस्थान्तरनिरपेक्षत्वमिति चेत्तर्हि द्रव्यस्यावस्थान्तरसापेक्षत्वादुभयातिरिक्तमवस्थान्तरसापेक्षत्वादुभयातिरिक्तमवस्थान्तरमाश्रयणीयं ययाऽवस्थया द्रव्यस्य भेदाभेदौ तामेव द्रव्यं तन्निर्वहणायाऽपेक्षते नावस्थान्तरमिति चेन्न, विकल्पासहत्वात्सा यद्यभेदनिर्वाहिका तर्हि भेदनिर्वहणायावस्थान्तरमन्वेष्टव्यं, सा यदि भेदनिर्वाहिका अभेदनिर्वहणायाऽवस्थान्तरमन्वेष्टव्यम्, उभयनिर्वाहकत्वमेकस्य व्यवस्थायाविरुद्धं निर्वाह्यद्वयविरोधात्, न ह्यग्निगतपैङ्गल्यमुष्णत्वशीतत्वयोर्निर्वाहकं भवति । ननु न निर्वाह्यद्वयं विद्यते भिन्नत्वमभिन्नत्वं च सैव घटावस्थेति चेत्तर्हि नास्ति विवादः तस्मादवस्थातद्वतोर्भिन्नाभिन्नत्वं नैवोक्तं स्यात् यथा पटस्य घटत्वं कुड्यत्वं च पटत्वमेवेत्युक्ते पटे घटत्वकुड्यत्वानुक्तिरेव स्यात् तद्वत् एवमवस्थान्तरमनपेक्ष्यावस्थान्तद्वतोर्भिन्नाभिन्नत्वं वदतामर्हतो न वैषम्यम् । अत एव सूत्रयोजनाऽपि न संभवति सत्त्वासत्त्वादेरेकस्मिन्धर्मिण्यसंभवादिति कथमेको भावो ऽस्ति नास्ति चेति भास्करः, न

ह्येकस्मिन्द्रव्ये सन्मात्ररूपे सर्वे गुणपर्यायाः सम्भवन्ति तस्मिन्दर्शने षड्-द्रव्याभ्युपगमात् य[१] च्चोक्तं सन्मात्ररूपमनन्तसर्वपर्यायम् अद्वितीयमभ्युपगम्यते ततो युक्तमिदं दर्शनं, न चैतदभ्युपगन्तुं जैनैः शक्यं तेषां प्रमाणाभावादिति यादवार्यः, । अत्र किंचिद् ब्रूमः किमेकस्मिन् भिन्नाभिन्नत्वाद्यसम्भवमात्रं सूत्रकारेणाभिप्रेतम् ? उत परमते तदसम्भवः, ? आद्ये स्वपक्षव्याघातकत्वं स्याद्धेतोः, द्वितीये वैषम्यं वक्तव्यं, षड्द्रव्याभ्युपगमस्तस्य वैषम्यमिति चेत्ततः किं षण्णां भिन्नस्वभावानां परस्परं द्रव्यपर्यायात्मना भिन्नाभिन्नत्वाभावात् सर्वानेकान्तत्वहानिरिति चेर्त्तार्ह वेदान्तिनामेव सर्वानेकान्त्यवादो घटते न त्वार्हतस्येति सूत्रकारनिर्देशः स्वप्रभितापतिक्षेपायेत, तच्चायुक्तं क्षणिकवादज्ञेयमिथ्यात्वसर्वशून्यवादनिराकरणेषु परपक्षेष्वनुपपन्नानां तेषां स्वपक्षे सामञ्जस्याभ्युपगमाभावात् तेषां श्रुतिविरोधात् अनभ्युपगमश्चेदनेकान्तवादेऽपि श्रुतिविरोधश्च तुल्यः श्रुतिभिर्ब्रह्मणो वैलक्षण्यप्रतिपादनात्, तादात्म्यश्रुतयः सन्तीति चेत्तासां निर्वाहोऽसकृदुक्तः इति न तासामनेकान्तत्वे प्रमाणत्वम् । किञ्च अणुभिश्च महद्भिश्च जायस्व म्रियस्व विज्ञानं चाविज्ञानं च सत्यं चानृतं च नेह नानास्ति नेति नेतीत्यादीनां परमाणुत्र्यणुकक्षणिकवादज्ञेयमिथ्यात्वसर्वमिथ्यात्वपरत्वमापातप्रतिपन्नमाश्रित्य पूर्वाधिकरणेष्वपि परपक्षेष्वसामञ्जस्यं स्वपक्षे तत्सामञ्जस्यं चोच्यत इति न कस्माद्व्याख्यायते, तेषां पूर्वापरवाक्यविरोधात् बहुनुपपत्तिविध्वस्तत्वाच्च तथा निर्वहणमयुक्तमिति चेत्तदनेकान्तवादेऽपि तुल्यं, यथा सत्त्वासत्त्वनित्यत्वानित्यत्वादय एकदैकत्र एकस्य स्वरूपेण न सम्भवन्ति एवं घटस्य घटत्वावस्थायामेव मृदन्तरेण भिन्नमभिन्नत्वं च न सम्भवति, अवस्थातद्वतोश्च तदुभयं न सम्भवति अवस्थातद्वतोश्च तदुभयं न सम्भवति विरोधस्य पूर्वमेवोपपादितत्वात्, अतो वेदान्तमवलम्ब्य भिन्नाभिन्नत्ववादिनामिदमधिकरणं विरुद्धम् । अन्त्यावस्थितेरित्यस्योभयोर्द्रव्यपर्य्याययोर्नित्यत्वादविशेषः अनित्याः पर्यायाः द्रव्यं

---

१ यद्योक्तमिति पा॰ ।

नित्यमिति विभागो न स्यादिति यादवार्थः । तदनादरहेतुः, हेतुहेतुमतोरविशिष्टत्वं नित्यानित्यविभागाभावो ह्युभयोर्नित्यत्वमेव । ननु न साध्यसाधनयोरवैशिष्ट्यम् अनित्याः पर्यायाः द्रव्यं नित्यमिति स्वाभ्युपगमे विरोधः साध्य इति चेन्न अशाब्दत्वात्, अविशेषशब्दो हि तद्वैषम्याभाववाची न त्वभ्युपगमविरोधवाची अशाब्दत्वेऽप्यभिप्रेतत्वे को विरोध इति चेन्न विरोधः किन्तूक्तांशस्य दूषणतया पर्यवसानं नास्ति चेद् दूषणपर्यवसानाय कल्पान्तराभिप्रेतत्वं कल्पनीयम् अविशेष—शब्देन यः पूर्वावस्थायामप्यात्मनो देहानुरूपपरिमाणतारतम्याभावः प्रसञ्जितः तदा ततः किमित्याकाङ्क्षानुदयाद् दूषणं पर्यवस्यति, अतो हेतुहेतुमतोरवैशिष्ट्यकल्पान्तरकल्पनोपेतादपि निर्वाहाद्वरं तदुभयनिर्मुक्तो निर्वाहः ॥ एकस्मिन्नसंभवाधिकरणं समाप्तम् ॥

पशुपत्यधिकरणम् । **सू० पत्युरसामञ्जस्यात् ॥ ३६ ॥**

भा० कपिलकणादसुगतार्हतमतानामसामञ्जस्याद्वेदबाह्यत्वाच्च निःश्रेयसार्थिभिरनादरणीयत्वमुक्तम्, इदानीं पशुपतिमतस्य वेदविरोधादसामञ्जस्याच्चानादरणीयतोच्यते तन्मतानुसारिणश्चतुर्विधाः कापालाः, कालामुखाः, पाशुपताः, शैवाश्चेति, सर्वे चैते वेदविरुद्धां तत्त्वप्रक्रियामैहिकामुष्मिकनिःश्रेयससाधनकल्पनाश्च कल्पयन्ति, निमित्तोपादानयोर्भेदं निमित्तकारणं च पशुपतिमाचक्षते, तथा निःश्रेयससाधनमपि मुद्रिकाषट्कधारणादिकं, यथाऽऽहुः कापालाः "मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः । भगासनस्थमात्मानं ध्यात्वा निर्वाणमृच्छति । कण्ठिकारुचकं चैव कुण्डलं च शिखामणिः । भस्मयज्ञोपवीतं च मुद्राषट्कं प्रचक्षते ॥ आभिर्मुद्रितदेहस्तु न भूय इह

जायत इत्यादिकं, तथा कालामुखा अपि कपालपात्रभोजनशवभस्मस्नानतत्प्राशनलगुडधारणसुराकुम्भस्थापनतदाधारदेवपूजादिकमैहिकामुष्मिकसकलफलसाधनमभिदधतीति । रुद्राक्षकङ्कणं हस्ते जटा चैका च मस्तके कपालं भस्मना स्नानमित्यादि च प्रसिद्धं शैवागमेषु, तथा केनचित्क्रियाविशेषेण विजातीयानामपि ब्राह्मण्यप्राप्तिमुत्तमाश्रमप्राप्तिं चाहुः "दीक्षाप्रवेशमात्रेण ब्राह्मणो भवति क्षणात्कापालं व्रतमास्थाय यतिर्भवति मानवः" इति, तत्रेदमुच्यते पत्युरसामञ्जस्यादिति नैकस्मिन्नसम्भवादित्यतो नेत्यनुवर्तते, पत्युः पशुपतेर्मतं नादरणीयं कुतः असामञ्जस्यात्, असामञ्जस्यं चान्योन्यव्याघाताद्वेदविरोधाच्च मुद्रिकाषट्कधारणभगासनस्थात्मध्यानसुराकुम्भस्थापनतत्स्थदेवतार्चनगूढाचारश्मशानभस्मस्नानप्रणवपूर्वाभिध्यानान्यन्योन्यविरुद्धानि, वेदविरुद्धं चेदं तत्त्वपरिकल्पनमुपासनमाचारश्च वेदाः खलु परं ब्रह्म नारायणमेव जगन्निमित्तमुपादानं च वदन्ति। नारायणः परं ब्रह्म तत्त्वं नारायणः परः नारायणः परो ज्योतिरात्मा नारायणः परः ॥ तदैक्षत बहु स्यां प्रजायेयेति सोऽकामयत बहु स्यां प्रजायेये"ति "तदात्मानं स्वयमकुरुतेत्यादयः परब्रह्मभूतपरमपुरुषवेदनमेव च मोक्षसाधनमुपासनं वदन्ति "वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसस्तु पारे तमेतं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यत"

इत्यादिनैकतां गताः सर्वे वेदान्ताः तदितिकर्त्तव्यताभूतं कर्म च वेदविहितवर्णाश्रमसम्बन्धियज्ञादिकमेव वदन्ति तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन एतमेव लोकमिच्छन्तः प्रव्राजिनः प्रव्रजन्ति इत्यादयः, केवलपरतत्त्वप्रतिपादनपरनारायणानुवाकसिद्धतत्त्वपराः केषुचिदुपासनादिविधिपरेषु वाक्येषु श्रुताः प्रजापतिशिवेन्द्राकाशप्राणादिशब्दा इति शास्त्रदृष्ट्या तूपदेशो वामदेववदित्यत्र प्रतिपादितं, तथा "एको ह वै नारायण आसीन्न ब्रह्मा नेशान" इत्यारभ्य स एकाकी न रमेतेति सृष्टिवाक्योदितं स्रष्टारं नारायणमेव समानप्रकरणस्थाः सदेव सोम्येदमग्र आसीदित्यादिषु साधारणाः सद्ब्रह्मादिशब्दाः प्रतिपादयन्तीति जन्माद्यस्य यत इत्यत्र प्रतिपादितम्, अतो वेदविरुद्धतत्त्वोपासनानुष्ठानाभिधानात्पशुपतिमतमनादरणीयमेव ॥

## सू० अधिष्ठानानुपपत्तेश्च ॥ ३७ ॥

वेदबाह्यानामनुमानाद्धि केवलनिमित्तेश्वरकल्पना तथा सति दृष्टानुसारेण कुलालादिवदधिष्ठानं कर्त्तव्यं, न च कुलालादेर्मृदाद्यधिष्ठानवत्पशुपतेर्निमित्तभूतस्य प्रधानाधिष्ठानमुपपद्यते अशरीरत्वात्सशरीराणामेव हि कुलालादीनामधिष्ठानशक्तिर्दृष्टा, न चेश्वरस्य सशरीरत्वमभ्युपगन्तव्यं तच्छरीरस्य सावयवस्य नित्यत्वे अनित्यत्वे च शास्त्रयोनित्वादित्यत्र दोषस्योक्तत्वात् ॥

## सू० करणवच्चेन्न भोगादिभ्यः ॥ ३९ ॥

यथा भोक्तुर्जीवस्य करणकलेवराद्यधिष्ठानमशरीरस्यैव दृश्यते तद्वन्महेश्वरस्याप्यशरीरस्य च प्रधानाधिष्ठानमुपपद्यत इति चेन्न भोगादिभ्यः पुण्यपापरूपकर्मफलभोगार्थं पुण्यपापरूपादृष्टकारितं हि तदधिष्ठानं तद्वत्पशुपतेरपि पुण्यपापरूपादृष्टवत्तथा तत्फलभोगादि सर्वं प्रसज्येत अतो नाधिष्ठानसम्भवः ॥

टी० सू० पत्युरसामञ्जस्यात्, सङ्गतिमाह "कपिले"ति, प्रधानकारणत्वाभ्युपगमसाम्यात्साङ्ख्यनिरासानन्तरभावित्वे पाशुपतनिरासस्य प्राप्तेऽपि सौगतार्हतमतनिरासानन्तरं तत्प्रतिक्षेपस्तस्यात्यन्तवेदबाह्यत्वज्ञापनाय कृतः, पशुपतिमतं निश्रेयसार्थिभिरुपादेयं नेति ? किमस्य श्रुतिविरोधो ऽस्ति ने ? ति, यदा न श्रुतिविरोधस्तदानीमुपादेयता, यदा तु विरोधस्तदाऽनुपादेयता तत्त्वविपर्ययमाह "निमित्ते"ति अनुष्ठानविपर्ययमाह "तथे"ति, तत्रेदमुच्यते इति व्याघातमाह "मुद्रिके"ति, एकतन्त्रोक्तार्थस्तन्त्रान्तरेण दूषित इत्यन्योन्यव्याघातादुपहतं न केवलं वेदविरोधादित्यर्थः । मुद्रिकाषट्कधारणादयो बहुषु तन्त्रेषूक्ताः क्रमेण परिगणिताः न त्वेकत्र । वैदिकपक्षस्य तद्वैषम्यमाह "वेदाः खल्वि"ति, एकतां गताः सर्वशाखाप्रत्ययनयादिति भावः । सद्ब्रह्मात्मशम्भुशिवादिशब्दनिर्वाहार्थमाह "केवलपरे"ति, नारायणानुवाकानुगुणमुपनिषदन्तरार्थः कथं निर्णीय इत्यत्राह "केवले"ति यथा जुह्वा जुहोतीति वाक्यस्य होमसाधनत्वमात्रपरत्वेन द्रव्यविशेषनिर्णये न तात्पर्यं यस्य पर्णमयी जुहूरित्येतद्वाक्यस्य द्रव्यविशेषनिर्णयपरत्वेन तदनुगुणार्थत्वं जुह्वा जुहोतीति वाक्यस्य भवति, तथा शम्भुराकाशमध्ये ध्येय इत्यादीनां वाक्यानामुपासनविधिपरत्वाच्चोपास्यविशेषनिर्णयपरत्वं, नारायणानुवाकस्य तु उपासनविध्याद्यन्यपरत्वाभावादुपास्यविशेषनिर्णयैकपर-

त्वमस्ति, अतस्तस्तदनुगुणार्थत्वं शम्भुराकाशेत्यादिवाक्यानामभ्युपगन्तव्यमित्यर्थः । कारणवाक्येषु देवतान्तरप्रतीतिरस्तीत्यत्राह "एको ह वा" इति, सद्ब्रह्मात्मशब्दे पूर्वपूर्वं उत्तरोत्तरशब्दं प्रति सामान्यशब्दाः, एवं पूर्वपूर्वं प्रत्युत्तरोत्तरशब्दा विशेषशब्दाः, एवं नारायणशब्दं प्रति शम्भुशिवादयः सामान्यशब्दा शम्भुःस्वयंभूर्द्रुहिणः सुश्रेयसं शिवं भद्रं विश्वात्तं विश्वशम्भुवं शाश्वतं शिवमच्युतं शिवः शिवानामशिवोऽशिवानामित्यादिष्वनेकार्थेषु प्रयोगदर्शनात्, नारायण-शब्दस्य तथाऽर्थान्तरे प्रयोगाभावाच्च, तस्मात्पशुना यजेत "छागोवा मन्त्रवर्णादि"ति नयात्सामान्यशब्दानां विशेषपर्यवसानात् ब्रह्मादिसामान्यशब्दानां नारायणविशेषपर्यवसायित्वं युक्तमित्यर्थः । जन्माद्यस्य यत इत्यत्र प्रतिपादितमिति, यतो वा इमानीत्यादिवाक्ये अस्यार्थस्याभिप्रेतत्वात् सूत्रकारेणापि तथाऽभिप्रेतमित्यर्थः । जन्मादिसूत्रभाष्येण परस्मात्पुंस इत्यन्तेनायमर्थः सूचितः सू॰ अधिष्ठानानुपपत्तेश्च, पौरुषेयवाक्यस्य प्रमाणमूलत्वे बुभुत्सिते सत्यतीन्द्रियार्थे श्रुतिमूलत्वमनुमानमूलत्वं वा सम्भवेत् तत्र श्रुतिमूलत्वं श्रुतिविरुद्धपरावरतत्त्वप्रतिपादनप्रदर्शनादपास्तमित्यनुमानमूलत्वनिरासपरं सूत्रत्रयं शास्त्रयोन्यधिकरण एवाभिप्रेतानां दूषणानामत्राप्यपेक्षितत्वात् कण्ठोक्तिः कृता तेषां वक्ष्यमाणत्वबुद्ध्या शास्त्रयोन्यधिकरणे कण्ठोक्त्यभावः, । वक्ष्यमाणदूषणस्य स्वास्पर्शित्वायाह "वेदबाह्याना"मिति, सू॰ करणवच्चेन्न भोगादिभ्यः, किं शरीरत्वे न जगदधितिष्ठति ? उत तद्व्यतिरिक्तत्वेन ? शरीरत्वेन चेत् भोगादिप्रसङ्गः, न चेच्छरीरान्तरसापेक्षत्वं स्यादित्यर्थः । शरीरनिरपेक्षाधिष्ठानं शरीरे दृष्टमिति चेन्न शरीरत्वप्रयुक्तं तदित्युक्तं भवति तदा जगतः शरीरत्वे भोगादिप्रसङ्ग इत्ययमशरीरत्वाभ्युपगमेन परिहारः, अशरीरत्वानभ्युपगमेन आगमप्रामाण्ये उक्तः शरीरमपि सशरीरेणैवाधिष्ठीयते शरीरं ह्यन्याधिष्ठाने करणभूतं स्वाधिष्ठाने करणं कर्म च यथा दीपोऽन्यप्रकाशहेतुः स्वप्रकाशे स्वयमेव हेतुः, न दीपान्तरसापेक्षः, यथा च मनोयुगपदनेकज्ञानानुत्पत्तिलिङ्गेनानुमीयमानं स्वानुमाने करणभूतं कर्म च तथेति । एवं स्वपरनिर्वाहकत्वेन परिहारः ॥

## सू० अन्तवत्त्वमसर्वज्ञता वा ॥ ३९ ॥

म० वा-शब्दश्चार्थे पशुपतेः पुण्यपापरूपादृष्टवत्त्वे जीववदन्तवत्त्वं सृष्टिसंहाराद्यास्पदत्वमसर्वज्ञता च स्यादित्यनादरणीयमेवेदं मतं "विरोधे त्वनपेक्षं स्यादित्यादिना वेदविरुद्धस्यानादरणीयत्वे सिद्धेऽपि पशुपतिमतस्य वेदविरुद्धताख्यापनार्थं पत्युरसामञ्जस्यादिति पुनरारम्भः। यद्यपि पाशुपतशैवयोर्वेदाविरोधिन इव केचन धर्माः प्रतीयन्ते तथाऽपि वेदविरुद्धनिमित्तोपादानभेदकल्पनापरावरतत्त्वव्यत्ययकल्पनामूलत्वात्सर्वमसमञ्जसमेवेत्यसामञ्जस्यादित्युक्तम् ॥ पशुपत्यधिकरणं समाप्तम्

टी० सू. अन्तवत्त्वमसर्वज्ञता वा, वेदाविरोधिन इवेत्यत्र इवशब्दो विप्रलम्भकत्वद्योतकः। ननु वेदविरुद्धत्वख्यापनार्थत्वमधिकरणस्यायुक्तं तान्त्रिकग्रन्थैरेवार्थविरोधप्रतीतेः, विरोधे प्रतिपक्षे विरोधाधिकरणन्यायाद् वेदविरुद्धस्याप्रामाण्यसिद्धेश्चास्याधिकरणस्य कृतकरत्वप्रसङ्गः, नैवं विरोधस्यापातप्रतिपन्नत्वबुद्ध्या न्यायेनाविरोधे निर्णीतेऽपि तस्यातिविरुद्धेषु कर्मसु प्रतीयमानेषु तत्स्वारस्यभञ्जके श्रुत्यन्तरे चानुपलभ्यमाने कथं बाधविकल्पसमुच्चयसङ्कोचैः प्रत्यक्षश्रुतयो नेतुं शक्यन्ते इति प्रतिपादनार्थत्वादस्य। ननु स्मृत्याऽपि श्रुतिसङ्कोचो दृश्यते न हिंस्यादिति निषेधो हि श्राद्धकल्पस्यमांसविधानेन संकुचति, नैवं मांसेनापि श्राद्धं कर्त्तव्यमित्यवश्यं श्राद्धकर्तव्यताविवादरूपत्वात्तादृशवचनानाम्, अत एव हि तथाऽननुष्ठानम्। यद्वा बहुर्थविरोधः प्रधानप्रतिपाद्यविरोधो वा यासु न विद्यते ताः स्मृतयः श्रुतिं सङ्कोचयन्ति न तु वेदविरोधबहुलाः, प्रधानार्थविरुद्धाश्च विरोधबाहुल्यं तत्र तत्र द्रष्टव्यं दर्शितप्रायं च यद्यपीत्यविरोधमाशङ्क्य प्रधानप्रतिपाद्यविरोधं भाष्यकार एवाह "तथा-

पी''ति, न चाकाशप्राणेन्द्रियादिशब्दानामिव तन्त्रस्थशिवादिशब्दानां परमात्मपरताऽऽश्रयणेन परावरतत्त्वव्यत्यासः परिहर्तुं शक्यते प्रतर्दनविद्यादिषु नारायणादिशब्दवाच्यस्य परतत्त्वस्येन्द्रादिशब्दवाच्यापेक्षयाऽपकृष्टत्वेन व्यपदेशाभावात्, इन्द्रादिशब्दानामिन्द्राद्यर्थद्वारा कारणतत्तदन्तर्यामिभूतपरमात्मपरत्वाश्रयणं न पूर्वापरवाक्यश्रुत्यन्तरविरुद्धं न हीन्द्रस्य नारायणात्परत्वं क्वचिच्छ्रुतं पाशुपतादिषु परत्वेनोक्तं रुद्रं प्रत्यवरत्वेनोक्तस्य तत्त्वस्य कारणत्वान्तर्यामित्वव्याघातात् रुद्रशिवादिशब्दानां नारायणपरत्वेन निर्वाहोऽनुपपन्नः वेदान्तवाक्येषु द्वैताद्वैतयोरेव हि व्याख्यातॄणां विप्रतिपत्तिः नारायणस्य ब्रह्मशिवादीनां च द्वैतं वा अद्वैतं भवतु सर्वथाऽपि नारायणस्यापरत्वं तस्मात्कस्यचित् तत्त्वस्य परत्वं मोक्षप्रदत्वं च श्रुतिविरुद्धमिति सर्वाविगीतं परमपुरुषादन्यस्य परत्वेनोपासनं च मोक्षहेतुरिति श्रुतिविरुद्धं, नान्यः पन्था इति परमपुरुषादन्यस्य मोक्षप्रदत्वनिषेधात् । ननु मोक्षप्रदजगत्कारणविषयात्तन्त्रेषु शिवादिशब्दा वस्तुमात्रविषयाः स्युः भगवद्विषया वा कार्य्यविषया नारायणादिशब्दा भगवतोऽर्थान्तरपराः स्युः अतो न विरोध इति चेन्न अतिप्रसङ्गात्, सर्वशब्दानाममुख्यार्थपरतया विरोधशमने सुगतागमादयोऽपि अविरोधेन नेतुं शक्यन्ते, क्षणिकशब्दः क्षणपरिणामित्वपरः चित्तसन्तति–शब्दोऽपि चित्तस्याविच्छेदपरः नित्यज्ञानरूप आत्मेत्यर्थः, वेदा न प्रमाणमिति उक्तप्रमाणविलक्षणा इत्यर्थः, तेषां पौरुषेयत्वं च पुरुषैरधीतत्वम् अर्थान्तराणि तु व्याख्यातृबुद्धिदोषमूलानि न तु सुगताभिमतानीति किमिति न व्याख्यायते, अतोऽनुष्ठानविरोधः तत्त्वविरोधश्च दुष्परिहरः । ननु कथं मोहनार्थत्वं पाशुपतस्य, उक्तं हि भगवत्प्रणीते तत्प्रतिपादकतया सात्त्विके श्रीमति वाराहे पुराणे पाशुपततन्त्रस्यानुग्रहमूलत्वेन वेदानुगुण्याच्च स्वर्गापवर्गार्थत्वं रुद्ररूपस्य भगवतस्तदुक्तमार्गेण पूजनीयत्वं तन्त्रान्तराणां विप्रपत्ति[1]मूलत्वेन नरकफलत्वं च तत्र यथा महेश्वरवचः "एवमभ्यर्थितस्तैस्तु पुराऽहं द्विजसत्तमाः ! । वेदक्रिया-

१ विप्रलिप्सामूलत्वेनेति पा० ।

समायुक्तां कृतवानस्मि संहिताम् । निश्वासाख्यां ततस्तस्यां लीना वाभ्रव्य-शाण्डिलाः । अल्पापराधा इत्येव शेषा वैलालिकाभवन् । मयैव मोहितास्ते हि भविष्यज्ज्ञानता द्विजाः । इति तत्र निश्वाससंहितायां हि लक्षमात्रप्रमाणतः । सैव पाशुपती दीक्षा योगः पाशुपतश्च सः । एतस्माद्रुद्रमार्गाद्धि यदन्यदिह जायते । तत्क्षुद्रकर्म विज्ञेयं रौद्रं शौचविवर्जितम् । ये रुद्रमुपजीवन्ति कलौ वैलालिका नराः । उच्छिष्टरुद्रास्ते ज्ञेया नाहं तेषु व्यवस्थित इति तथा "तेषां गौतमशापाद्धि भविष्यन्त्यन्वये द्विजा इति प्रक्रम्य "तेषां मध्ये सदाचारा ये ते मच्छासने रताः । ते स्वर्गमपवर्गं च यान्त्येव खलु निश्चयः । वैलालिका ये यास्यन्ति मम सन्ततिदूषकाः । प्राग्गौतमाग्निनिर्दग्धाः पुनर्मद्वचना द्विजाः । नरकं तु गमिष्यन्ति नात्र कार्या विचारणेति, तत्राष्टषष्टितमे विष्णुरूपेण याज्योऽहं सर्वदेवैर्द्विजोत्तम । सात्त्विकी सा समाख्याता वृत्तिर्मे मुनिपुङ्गव! जटामुकुटधारी च नागभूतैः समावृतः । सिद्धान्तनयमार्गस्थैरहं रुद्रेति पूजितः । राजसीं मे तु तां वृत्तिं जानीहि द्विजसत्तमेति सिद्धान्तनयमार्ग-शब्दश्च पाशुपतविषयः न तु शैवादितन्त्रान्तरविषयः । तथाऽर्हद्बुद्धभिक्षूणां वैलालव्रतिकैरहं तमोऽतिरिक्तैर्यष्टव्यस्तांस्तमस्येव पातये इत्यनन्तरं ग्रन्थे वैलालिव्रतिकशब्देन तन्त्रान्तरनिष्ठानां राजसेभ्यः सिद्धान्तनयमार्गस्थेभ्यस्तामसतया पृथगुक्तेः, न च वैलालिव्रतिकशब्दो बौद्धादिविषयः, अस्मिन्नेव ग्रन्थे ततः पृथगुक्तेः न चेतरदुष्टाशयमात्रविषयः वैलालिका ये यास्यन्ति मम सन्ततिदूषका इति रुद्रसम्बन्धित्वावगमात्, न च पाशुपतविषयः सैव पाशुपती दीक्षा योगः पाशुपतश्च सः । एतस्माद्रुद्रमार्गात्तु यदन्यदिह जायते । तत्क्षुद्रकर्म विज्ञेयं रौद्रं शौचविवर्जितं ये रुद्रमुपजीवन्ति कलौ वैलालिका नरा इति पाशुपतनिष्ठेभ्यः पृथग्व्यपदेशात्, अतः पाशुपतेतरतन्त्रनिष्ठानां वैलालिकशब्दोक्ततया परिशेषात्तामसेभ्यस्तन्त्रान्तरेभ्यः सिद्धान्तनयमार्गस्य राजसत्वरूपवैधर्म्ययोगाच्च सिद्धान्तनयशब्दः पाशुपतविषयः रौद्रत्वे तुल्ये सति वैलालिकेभ्यः पूर्वनिर्दिष्टतया स्थानप्रमाणाच्च सिद्धान्तनय शब्दः पाशुपतविषयः सैव पाशुपती दीक्षा योगः पाशुपतश्च स इत्युक्त्वा-

ये रुद्रमुपजीवन्ति कलौ वैतालिका नरा इत्यत्र वैतालिकेभ्यः पूर्वमेव हि पाशुपतमार्गः कीर्त्यते तथा वेदक्रियासमायुक्तां कृतवानस्मि संहितां निश्वासाख्यां ततस्तस्यां लीना बाभ्रव्यशाण्डिलाः । अल्पापराधा इत्येव शेषा वैतालिका भवन् इत्यत्रापि वैतालिकेभ्यः पूर्वमेव हि निश्वासाख्या पाशुपतदीक्षा संहिता व्यपदिश्यते निश्वासाख्यायाः पाशुपतगोचरत्वं तत्रैव स्पष्टं निश्वाससंहितायां हि लक्षमात्रप्रमाणतः सैव पाशुपती दीक्षेति अतः पृथग्व्यपदेशात् तन्त्रान्तरेभ्यो वैधर्म्यात् स्थानप्रमाणाच्च सिद्धान्त-नयशब्दः पाशुपतविषयः अतः पाशुपतमार्गस्तमःपतनहेतुभ्यस्तन्त्रान्त-रेभ्यो विलक्षणोभगवत्तोषकरः स्वर्गापवर्गहेतुश्चावगम्यते, अतोऽनुग्रह-मूलत्ववेदानुसारित्वभगवत्प्रीणनत्वस्वर्गापवर्गार्थत्वात्तामससंमोहनार्थदु-र्गतिनिमित्ततामसतन्त्रान्तरेभ्यो विलक्षणस्य पाशुपतस्य कथमवैदिकत्व-मिति नैवं तन्त्रान्तरेभ्यो विवक्षितस्य वैषम्यस्याल्पतरत्वात् पाशुपतस्य त्रयीबाह्याधिकारत्वमोहनार्थत्वतमोमिश्ररजोमूलत्वैस्तन्निष्ठानां भगव-च्छासनपराङ्मुखत्वोक्त्या च पञ्चरात्रस्येव वेदतुल्यप्रामाण्यप्रतिपादन-परत्वं हि नात्रावगम्यते तथा ह्यष्टषष्टितमे "पौरुषं सूक्तमास्थाय ये यजन्ति द्विजास्तु माम् । संहिताजपमास्थाय ते मां प्राप्स्यन्ति ब्राह्मणाः अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन हि । मार्गेण मां प्रपद्यन्ते ते मां प्राप्स्यन्ति मानवाः । ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते । शूद्रादीनां न तच्छ्रोत्रपदवीमुपयास्यति । एवं मयोक्तं विप्रेन्द्र ! पुरा कल्पे पुरातनं पञ्च-रात्रं सहस्राणां यदि कश्चिद् ग्रहीष्यति । कर्मक्षये च मां कश्चिद्यदि भक्तो भविष्यति । तस्य वेदाः पञ्चरात्रं नित्यं हृदि वसिष्यति । वेदेन पञ्च-रात्रेण भक्त्या यज्ञेन च द्विजाः । प्राप्योऽहं नान्यथा प्राप्यो वर्षलक्षैरपि द्विजे"ति पञ्चरात्रस्य वेदतुल्यविकल्पभाक्त्वात्तदनुगुणं प्रामाण्यमभिहितं, तथा पाशुपतनिष्ठानां रौद्रतन्त्रान्तरनिष्ठानामिव भगवच्छासनपराङ्मुखत्वं तामसयुगानुवर्तितत्वं च तत्रोक्तम् "इतरे राजसैर्भावैस्तामसैश्च समावृताः । भविष्यन्ति द्विजश्रेष्ठ ! मच्छासनपराङ्मुखाः । कृतं त्रेता द्वापरश्च युगानि त्रीणि नारद । सत्त्वस्था मां समेष्यन्ति कलौ रजस्तमोऽधिकाः, इति राज-

सैर्भावैरिति भावशब्दश्चेष्टापरः राजसी वृत्तिर्विवक्षिता, सा च पाशुपती राजसी मे तु तां वृत्तिं जानीहीति सिद्धान्तनयमार्गवृत्तेर्हि राजसत्वं पूर्वमुक्तं सिद्धान्तनय—शब्दस्य पाशुपतगोचरत्वं पृथग्व्यपदेशवैधर्म्यस्थानप्रमाणैः पूर्वमेवोपादितं तामसैर्भावैरिति रौद्रान्तसौगतादिवृत्तय उच्यन्ते तथार्हद्बुद्धभिक्षूणां वैतालव्रतिकैरहं तमोऽतिरिक्तैर्यष्टव्य इति ह्युक्तं भिक्षूणामिति तृतीयार्थे षष्ठीयष्टव्य इति यजमानरूपतोक्तिस्तदभिप्रायेण, अन्यथा तांस्तमस्येव पातय इति विरोधात् अहं यष्टव्य इत्युक्तिर्वस्तुतः सर्वस्य स्वात्मकत्वात् न तु तदभिप्रायेण तामसशास्त्रे जगतो भगवदात्मकत्वानभ्युपगमात्, एवं राजसत्वतामसत्वयोः क्रमस्य च प्रत्यभिज्ञानात्, अनेन तामसतन्त्रान्तरनिष्ठानामिव राजसपाशुपतनिष्ठानां च भगवच्छासनातिलङ्घित्वमुच्यते। तथा च "ये वेदमार्गनिर्मुक्तास्तेषां मोहार्थमेव च नयसिद्धान्तसंज्ञं हि मया शास्त्रं तु दर्शितम्। पाशोऽयं पशुभावस्तु स यदा पतितो भवेत् तदा पाशुपतं शास्त्रं जायते वेदसंज्ञितमिति नयसिद्धान्तसंज्ञस्य पाशुपतस्य मोहनाय प्रवर्तितत्वं वेदानधिकारिणां तत्रैव वेदबुद्ध्या मोहितत्वं चोक्तं तथा राजसस्य पाशुपतस्य तामसानामितरतन्त्राणां चासात्त्विकत्वम् अविशिष्टं प्रतीयते, राजसीं वृत्तिं तमोऽतिरिक्तैरिति ह्युक्तं राजसीमित्यनेन तमोमिश्ररजोमूलत्वं विवक्षितं रजःप्राचुर्यात् पाशुपतस्य रासत्वनिर्देशः तथा हि द्विसप्ततितमे "यत्सत्त्वं स हरिर्देवो योहरिस्तत्परं पदं ये सत्त्वरजसी सोऽपि ब्रह्मणः कामसम्भवः। यो ब्रह्मा सैव वेदस्तु यो वेदः स क्रतुर्बुधाः। यद्रजस्तमसोपेतं सोऽहं नास्त्यत्र संशयः। सत्त्वं रजस्तमश्चैव त्रितयं चैतदुच्यते। सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम्। रजसा सत्त्वयुक्तेन भवेच्छ्रीमान् यशोऽधिकः। तच्च पैतामहं वृत्तं सर्वशास्त्रेषु पठ्यते। यद्वेदबाह्यं कर्म स्यान्मुद्दिश्योपसेव्यते। तद्रौद्रमिति विख्यातं कनिष्ठगतिदं नृणां तद्वै पाशुपतन्नाम कनिष्ठं मोहनं नृणाम्, इति च पाठः यद्धीनं रजसा कर्म केवलं तामसं तु यत् तत्तदुर्गतिप्रदं नृणाम्। इह लोके परत्र चेति सात्त्विकराजसम्पैतामहं वृत्तमुक्तं केवलं तामसं दुर्गतिप्रदमुक्तं, तच्च बौद्धार्हतवैतालिकवृत्तं वेला-

लिकव्रतिकैस्तमोऽतिरिक्तैरिति ह्युक्तं तदुभयातिरिक्तमध्यमश्लोकोक्तं कर्म-राजसतामसमित्यवगम्यते केवलतामसमित्युत्तरत्र विशेषितत्वात्, यद्रज-स्तमसोऽपेतं सोऽहमित्युक्तत्वाच्च तमोमिश्ररजोमयत्वमवगम्यते। ननु च यद्वेदबाह्यमिति श्लोकः वैलालिकविषयः यद्धीनमिति बौद्धार्हतविषयं नैवं बौद्धार्हतवैलालिकानामेककोटिनिविष्टतयोक्तत्वात्पृथक्करणस्य अनु-चितत्वात् तमःपतनं तेषां तुल्यमवगतं तथाऽर्हद्बुद्धभिक्षूणां वैलालिव्रति-कैरिह तमोऽतिरिक्तैर्येष्टव्यस्तांस्तमस्येव पातय इति, अत इहान्तिम-श्लोके दुर्गतिरुच्यमाना बौद्धार्हतवैलालिकानां समाना भवितुमर्हति, अतो मध्यमगतश्लोकः पाशुमतविषयः,[1] यद्वै पाशुपतं नामेति पाठे पाशुपत-विषयत्वं सिद्धं, ततश्च तस्य रजोमिश्रतमोमूलत्वं सात्त्विकराजसप्रबन्धात् कनिष्ठत्वं च स्थितं, वेदबाह्यत्वं च स्थितं मोहनाय प्रवृत्तत्वं च तत्रोक्तं पाशुपतस्य, यथा द्विसप्ततितमे मां विष्णोर्व्यतिरिक्तं ये ब्रह्माणं च द्वि-जोत्तमाः। यजन्ति पापकर्माणस्ते यान्ति नरकं नराः। ये वेदमार्गनिर्मुक्ता-स्तेषां मोहार्थमेव च नयसिद्धान्तसञ्ज्ञं हि मया शास्त्रं तु दर्शितं पाशो-ऽयं पशुभावस्तु स यदा पतितो भवेत्। तदा पाशुपतं शास्त्रं जायते वेद संज्ञितमिति। न च नयसिद्धान्तमार्गो न पाशुपतः किंतु वैलालिकशब्द-वाच्यशैवादिमार्ग इति वाच्यम् अष्टषष्टितमे वैलालिकव्यतिरेकेण नय-सिद्धान्तमार्गस्योक्तत्वात्, तत्र हि सिद्धान्तनयमार्गस्य राजसत्वेन वैला-लिकमार्गस्य तामसत्वेन च भेदो दर्शितः। किञ्च तत्र रुद्रवचः "देवदेव जनः सर्वो मुक्तिमार्गव्यवस्थितः। कथं सृष्टिः प्रभविता नरकेषु च को वसेत्॥ एवमुक्तस्ततो देवैर्मामुवाच जनार्दनः। युगानि त्रीणि सहसा मा-मुपैष्यन्ति मानवः। अन्त्ये युगे प्रविरला भविष्यन्ति मदाश्रयाः। एष मोहं सृजाम्याशु यो जनं मोहयिष्यति। त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय। अल्पायासं दर्शयित्वा फलं दीर्घं प्रदर्शय। कुहकानीन्द्रजालानि विरुद्धाचरणानि च दर्शयित्वा जनं सर्वं मोहयाशु महेश्वर! एवमुक्त-स्तदा तेन देवेन परमेष्ठिना। आत्मा तु गोपितः सद्यः प्रकाशोऽहं

१ तद्वै इति पा०।

कृतस्ततः । तस्मादारभ्य कालात्तु मत्प्रणीतेषु सत्तम! शास्त्रेष्वभिरतो लोको बाहुल्येन न वेद तमिति, मोहनार्थत्वमसात्त्विकयुगप्रवृत्तत्वं तदा भगवतस्तिरोधानं रुद्रस्य प्रकाशितत्वं चोक्तं पाशुपते च भगवत्प्रकाशना-भावात् तस्याप्युक्तलक्षणमोहनार्थग्रन्थान्तर्भावस्सिद्धः सिद्धान्तसंज्ञस्य मोहनार्थत्वोक्तेस्तस्य च तन्त्रान्तरव्यतिरेकस्योपपादिततया पाशुपतत्व-सिद्धेश्च तथा गौतमशापोपहतत्रयीबाह्यजनाधिकारत्वं च पाशुपतस्य तन्त्रान्तराणामप्यविशेषेण प्रतीयते यथा त्रिसप्ततितमे मोहनार्थं तु लोकानां त्वया शास्त्रं पृथक् कृतं तत् । कदा हेतुना केन कृतं देव! वदस्व न इति पृष्टे "दुर्भिक्षाद् गौतमेन रक्षितैरनुमतैर्जिगमिषुभिर्मुनिभिर्गौतमा-तिसन्धानमुक्त्वाऽभिहितम् "एवमुक्तस्तदा तैस्तु गौतमः किमिदं त्विति गोवध्याकारणं मुह्यं स्तावत्पश्यति । योगवित् । ऋषीणां मायया सर्वमिदं जातं विचिन्त्य वै शशाप तां स्तदा भस्म मिथ्याभूतपरांस्तथा । भविष्यथ त्रयीबाह्या वेदकर्मबहिष्कृताः तच्छ्रुत्वा क्रूरवचनं गौतमस्य महामुनेः । ऊचुस्सप्तर्षयो मैवं सर्वकालं द्विजोत्तमाः । भवन्तु किं तु मे वाक्यममोघं नात्र संशयः । त्वद्वाक्यवह्निनिर्दग्धाः सदा कलियुगे द्विजाः । भविष्यन्ति क्रियाहीनाः सर्ववेदबहिष्कृता इति गौतमशापं तल्लघूकरणाय कलौ जन्म-तदनुग्रहाय तद्गोत्रप्रवर्तकैः सप्तर्षिभिर्महेश्वरस्याभ्यर्थनं चोक्त्वा एवम-भ्यर्थितरूपैस्तु पुराऽहं द्विजसत्तमाः । वेदक्रियां समायुक्तां कृतवानस्मि संहितां । निश्वासाख्यां । ततस्तस्यां लीना बाभ्रव्यशाण्डिलाः । अल्पापराधा इत्येव शेषा वैतालिका भवन् ममैव मोहितास्ते तु भविष्यज्ज्ञानता-द्विजाः तस्य निश्वासतायां हि लक्षमात्रप्रमाणतः । सैव पाशुपती दीक्षा योगः पाशुपतश्च सः । एतस्माद्वेदमार्गाद्धि यदन्यदित्यादि तेषां गौतम-शापात् धीत्यादि चोक्तं तस्यापराधतारतम्येऽपि शापोपहतत्रयीबाह्या-धिकारित्वं पाशुपतस्य तन्त्रान्तराणां चाविशिष्टम् । नन्वेवं तर्हि पाशुप-तस्य वेदक्रियासमायुक्तत्वस्वर्गापवर्गप्राप्तिहेतुत्वं कथं घटते उच्यते त्रयी-बाह्याधिकारत्वस्य व्यवस्थितत्वादल्पापराधत्वाच्च बाभ्रव्यादीनां साक्षादेव वैदिकधर्मान्वयेऽत्यन्तत्रयीविरुद्धाचारान्वये चानुपपन्ने सति वेदार्थव्या-

मिश्रावैदिकार्थपरतया नातिविरुद्धं पाशुपततन्त्रं प्रणीतमित्येतावता वैषम्यमिति वेदक्रियासमायुक्तामिति निर्देशो हि वैदिकावैदिकार्थसंकरमवगमयति । ननु कथं तर्हि मोहनार्थत्वम् उच्यते मुनिभिरभ्यर्थितेन त्रयीबाह्यतानिमित्तशापाविरोधतस्त्रातुकामेन महेश्वरेणाथर्वशिरोऽभिहितं स्वोपासनतदङ्गभूतभस्मधारणादिपरं तन्त्रं प्रणीतम् अथर्वशिरश्च प्रतर्दनविद्यान्यायात् परमात्मकरुद्रोपासनपरमिति स्थितं तथा सति विपुलापराधानां तत्र श्रद्धायां सत्यामपि वेदरहस्याप्रकाशनार्थं पाशुपते रुद्रेण स्वस्य नारायणात्मकत्वं नाभिहितम्, अपि त्वर्थवादरूपेणास्य प्रकर्ष एवोक्ता बाभ्रव्यादयस्तु शापवशादस्यधानेन श्रुतिसिद्धभगवदुपासनानर्हा अपि स्वल्पापराधितया वेदविरुद्धोक्तिमर्थवादं ज्ञात्वा ऽथर्वशिरोऽभिप्रायानुरोधेन पाशुपतावगतं रुद्रं नारायणात्मकमुपास्य निस्तीर्णाः । अन्ये तु पापप्राचुर्यादथर्वशिरोहृदयानभिज्ञतया भगवदात्मकत्वं रुद्रस्याजानन्तः पाशुपतानुप्रविष्टा अपि सम्यग्ज्ञानाभावात्तमसि भ्राम्यन्तीति तन्मोहनफलकत्वात्तेषां मोहार्थमेव चेति महेश्वरवचनं घटते । अत एव हि तत्रोच्यते स्पष्टतरं मां विष्णोर्व्यतिरिक्तं ये ब्रह्माणं च द्विजोत्तमाः । यजन्ते पापकर्माणस्ते यान्ति नरकं नराः । ये वेदमार्गनिर्मुक्तास्तेषां मोहार्थमेव च नयसिद्धान्तसंज्ञं हि मया शास्त्रं तु दर्शित'मिति च । नयसिद्धान्तशब्दश्च निश्वासाख्यपाशुपततन्त्रविषय इति दर्शितम् । एवमधिकारिभेदेन भ्रान्त्यभ्रान्तिजननाभिसन्धिमता तदर्थं पुष्कलोपदेशमकुर्वता महेश्वरेण प्रणीतत्वात्पाशुपतस्य मोहफलकत्वमनुग्रहनिबन्धनतया तन्त्रान्तरवैषम्यं च युक्तम् इतरे त्वयोऽप्यस्याधिकरणस्य पाशुपतपरीतार्थत्वमनभ्युपगच्छन्तो निमित्तमात्रेश्वरपक्षनिराकरणपरत्वं वर्णयन्ति तेषु परानपरांश्च प्रतिब्रूमः निमित्त, मात्रेश्वरपक्षं निराचिकीर्षता न केवलमनुमानमेव किन्तु तन्मूलभूत आगमोऽपि निराकार्य्यः तत्प्रामाण्ये जीवति तस्य निरासायोगात्, एवं द्वयोरपि व्युदसनीयत्वे सत्यनुमानं शास्त्रोपक्रम एव निरसनीयं तन्निरासेन विना शास्त्रारम्भानुपपत्तेः, निमित्तमात्रेश्वरविषयागमो योगस्मृतिः पाशुपतागमश्च तत्र एतेन योगः प्रत्युक्त इत्यत्र योगस्मृतेः प्रत्युक्तत्वात्पाशुप-

तन्निरास एव परिशेषादत्र क्रियत इत्यभ्युपगन्तव्यम् एवं च सति शास्त्रोपक्रमेऽनुमानं निरस्तं न वा न चेदपेक्षिताकरणं स्यात् तत्र कृतं चेद्धिहानपेक्षितकरणं स्यात् अत्रैव कृतं निमित्तेश्वरानुमाननिरसनं तत्रोपजीव्यमिति चेत्तर्हि निमित्तमात्रेश्वरागमप्रतिक्षेपस्य क्वचिदप्यकृतत्वात् पुनश्चापेक्षिताकरणं स्यात्, निमित्तमात्रेश्वरागमस्य श्रुतिविरुद्धत्वाद्विरोधाधिकरणन्यायेन तत्प्रतिक्षेपसिद्धिरिति चेत्तर्हि पञ्चरात्रस्याप्यपरीक्ष्यत्वं स्यात्, तत्रापि भवद्भिर्विरुद्धतयाऽभिमतांशस्य विरोधनयेनैव प्रतिक्षिप्तत्वात्, ततश्चोत्पत्त्यसम्भवादित्यादिसूत्रचतुष्टयवैयर्थ्यं स्यात् । तत्र विरोधसम्भवस्याविरोधनिर्वहणाशक्यतायाश्च ज्ञापनार्थं तन्निरूपणमिति चेत्तर्हि तदर्थमेव पाशुपतमपि परीक्ष्यमिति तदकरणे अपपेक्षिताकरणमेव स्यात् यद्युच्येत पाशुपततन्त्रेऽप्याचारांशे वेदविरोधस्य स्फुटतरत्वात् सौगतमतादेरिव निराकरणं तुल्यन्यायतया सिद्धमिति तत्रांशे निमित्तेश्वरवादमात्रमनुमानमूलमिति तन्निरासेन पाशुपतनिरसनमेव फलतः कृतमिति नापेक्षिताकरणप्रसङ्ग इति, अस्त्वेवं तथाऽपि तत्र वेदप्रामाण्याद्यभ्युपगमेन सौगतादिवैलक्षण्यात्तत्र कार्यकारणतत्त्वविपर्यासस्यानुमाननिरसननिरस्तत्वायोगात्तन्निरासार्थमाचारांशे चोत्सर्गापवादाधिकारिविशेषादिना विषयव्यवस्थादिशङ्कापरिहारार्थं विरोधाधिकरणन्यायः स्थापनीय एव तत्त्वानुमाननिरासमात्रान्न सिध्यति तत्त्वानुष्ठानविपर्ययस्यानुमानमूलत्वाभावात्, अतोऽस्मन्मतेऽधिकरणस्य प्रयोजनवत्तरत्वं शास्त्रारम्भोपयोगिनोऽनुमाननिरासस्य स्थानप्राप्तित्वं चेति वैषम्यम् । ननु यादवप्रकाशमते त्वस्याधिकरणस्यानुमानमात्रनिरासपरत्वेन पाशुपतव्युदासफलकत्वाभावेऽपि नापेक्षिताकरणप्रसङ्गः चतुर्णामपि सांख्ययोगपाशुपतपञ्चरात्राणां परीक्षार्थमुत्तराधिकरणमिति व्याख्यातत्वादिति चेन्न उत्पत्त्यसम्भवादित्यादिसूत्राणां वक्ष्यमाणप्रकारेण चतुष्टयपरीक्षार्थत्वानुपपत्तेः, । ननु भवन्मतेऽप्यनुमानं पूर्वमेव निरस्तं चेदधिष्ठानानुपपत्तेरित्यादिसूत्रत्रयप्रणयनमनपेक्षितकरणं स्यान्न प्रयोजनभेदात्, तत्र शास्त्रस्य प्राप्तार्थत्वबाधितविषयत्वाभ्यामप्रामाण्यप्रसङ्गपरिहारार्थस्तन्निरासः । इह तु श्रुतिविरुद्धा-

गप्रामाण्यभङ्गार्थः । अनुमानतः सर्वज्ञे जगत्कारणे सिद्धे हि तद्विषया श्रुतिः प्राप्तार्था स्यात्, तदनुवादस्यानुमानमूलतया तद्विरुद्धाकारसमर्पिका श्रुतिः प्रतिरुद्धा बाधिता वा स्यान्नन्वेवं सति पूर्वोक्तमनुमानदूषणमिह तदुक्तमित्यतिदेष्टव्यम् उक्तार्थस्यान्यत्रोपजीव्यत्वेऽतिदेशदर्शनात् यथाश्रुत्यश्रुतेरिति चेत्तदुक्तं जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातमिति पूर्वभागविचारसिद्धन्यायो विप्रकृष्टोऽपि प्रधानवदेव तदुक्तमित्यादिनाऽतिदिश्यते किं पुनः सन्निकृष्टे शारीरकस्यैवारम्भेऽभिहितः । अतोऽधिष्ठानानुपपत्त्यादिसूत्रत्रयवैयर्थ्यमिति चेन्न कण्ठोक्तत्वाभावे दूषणस्यातिदेशाप्राप्तेः, वक्ष्यमाणदूषणानामुपजीव्यत्वमभिप्रेत्य शास्त्रैकप्रमाणकत्वं हि सूचितं न तु दूषणानां कण्ठोक्तिः, भाष्ये च वक्ष्यमाणं दूषणमनुकृष्य व्याख्यातम् अर्भकौकस्त्वपरिहारादयश्च न निचाय्यत्वादित्यादिभिः कण्ठोक्तत्वादुत्तरत्रातिदिष्टाः तत्र वक्तुमपेक्षितानामपि दूषणानां वक्ष्यमाणत्वबुद्ध्यैव पूर्वं कण्ठोक्त्यभावः, अत एवातिदेशाभावः उपपन्नः, यतो निमित्तमात्रकल्पनायाः तन्मते चोभयोः प्रतिक्षेप्यत्वम्, अत एव सूत्रयोजनायां च नैकस्मिन्निति सूत्रादनुषक्तस्य न-शब्दस्य निषेध्यस्याहर्तव्ये सति पत्युर्मतमादरणीयमित्याध्याहार उचितः । न तु प्रधानपुरुषाधिष्ठातृत्वेन कारणत्वमुपपद्यत इति वा कर्तुः कल्पनेति वा परिग्रह इति वा तथा सत्युभयोः प्रतिक्षेप्यत्वासिद्धेः, अन्तवत्त्वमसर्वज्ञता वेति सूत्रस्य परैरपरैश्चैवमर्थ उक्तः प्रधानपुरुषेश्वराः सर्वज्ञेनेश्वरेण इयत्तया परिच्छिन्नाश्चेदन्तवन्तः स्युः ततश्च शून्यवादप्रसङ्गः सर्वेषां संसारिणां क्रमेण मोक्षादन्तवत्त्वे पुरुषभोगार्थं प्रधानस्येश्वराधिष्ठेयत्वाभावादीश्वरस्य सार्वज्ञ्यमैश्वर्यं च निर्विषयतयाऽनुपपन्ने स्यातां, यदि नेश्वरज्ञानेन प्रधानादयः परिच्छिन्नास्तस्य सार्वज्ञ्यहानिरिति तदयुक्तं, तथा हि न तावच्छून्यवादप्रसङ्गः प्रधानादीनामन्तवत्त्वप्रसङ्गाभावात् अन्तवत्त्वस्य प्रसञ्जकः किं देशतः परिच्छेदः? उत कालतः? उत संख्यातः? न प्रथमः, आराग्रमात्रो ह्यवरोऽपि दृष्टः, नित्यो नित्यानां न जायते म्रियत इत्यणूनामेव नित्यत्वश्रवणेन भाग्यव्याप्तिकत्वात्सांख्यादीनां पक्षे प्रधानस्य पुरुषाणां च कस्यचिदपि पक्षे ईश्वरस्य देशतः

परिच्छिन्नत्वाभावाच्च, न द्वितीयः साध्याविशिष्टत्वप्रसङ्गात् । यद्यनादिमत्त्वं कालतः परिच्छिन्नत्वं तदन्तवत्त्वे प्रयोजकमिति विवक्षितं, तदपि न अविद्यानिवृत्तौ व्यभिचारात्, न तृतीयः, विकल्पासहत्वात्किं वास्तवसंख्यापरिच्छिन्नत्वं विवक्षितम्? उत व्यावहारिकसंख्यापरिच्छिन्नत्वम्? आद्ये घटादिष्वपि त्वन्मतेनासिद्धत्वाद्व्याप्तिशून्यता, द्वितीये त्वेकमेवाद्वितीयमित्येकत्वव्यवहारविषये नित्यतया स्वाभ्युपगते ब्रह्मणि व्यभिचारः, वैशेषिकैः संख्याशून्यत्वेनाभिमतेषु क्रियादिष्वनित्यत्वमस्तीति तद्वदेव संख्याशून्यत्वे स्वाभिमतब्रह्मणोऽप्यनित्यत्वप्रसङ्गः स्यात्तैर्नित्यतयाऽभिमतजातौ व्यभिचारादप्रसक्तिश्चेत्तैर्नित्यतयाऽभिमतदिक्कालादिषु व्यभिचारात् संख्यावत्त्वेऽप्यनित्यत्वाप्रसक्तिः, तेषामपि पक्षीकाराद्दोष इति चेन्नित्यतयाऽभिमतजातेरपि त्वया पक्षीकार्य्यत्वात् अव्यभिचरितं संख्याशून्यत्वे अनित्यत्वं क्रियादेरिव ब्रह्मणः प्रसज्येत, अतः प्रसञ्जकविपर्ययेऽपि प्रसञ्जनीयानिष्टधर्मापत्तिलक्षणप्रतितर्कपरास्तत्वाच्च तर्काभासता, आत्मानन्त्यस्य पूर्वमुपपादितत्वादेकैकस्मिन् कल्पे एकैकमुक्तावपि सर्वमोक्षप्रसक्तिर्न स्यादिति प्रधानपुरुषयोरीश्वराधिष्ठेयत्वसम्भवाच्च तज्ज्ञानशक्त्योर्विषयत्वं सर्वमोक्षाभ्युपगमेऽपि न निर्विषयत्वं प्रधानस्य ज्ञानबाध्यत्वाभावेन सर्वमुक्तदशायामप्यवस्थितिसंभवान्मुक्तानामपीश्वरसाक्षात्कार्यत्वनियम्यत्वोपपत्तेश्च । कदाचित्सर्वमोक्षमिच्छतां पक्षे तदानीमीश्वरेच्छाप्रयत्नादीनां निर्विषयत्वं च नानिष्टमिति न तत्प्रसञ्जनीयम् । अन्ये तु परमाणूनां पुरुषाणां च संख्याया अन्तमीश्वरो गच्छति चेत्सर्वपुरुषमोक्षादीश्वरस्येशनमविषयं स्यात्, अन्तं न गच्छति चेद् असर्वज्ञतेत्यस्य सूत्रस्यार्थमाहुः, तत्रापि वैशेषिकादिषु कदाचित्सर्वमोक्षमिच्छतानायमनिष्टप्रसङ्गः स्यात् तदानीमपि सार्वज्ञ्यस्य न निर्विषयत्वं मुक्तानां परमाणूनां न च नित्यतया साक्षात्कार्यत्वादतीतागामिनामपि साक्षात्कारसम्भवाच्च सर्वमुक्तिमनिच्छतां पक्षे त्वमुक्तात्मविषयमीशनं सम्भवतीति न तस्य निर्विषयत्वप्रसङ्गः सर्वमोक्षाभावश्चात्मानन्त्यादुपपद्यत इत्युक्तम् । नन्वेकोपाधिगृहीतानां भिन्नानां घटादीनां संख्येयत्वदर्शनात्त-

द्विपरीतमानन्त्यं श्रुतिमनपेक्ष्य तर्कमात्रेण कल्पयितुमशक्यमिति चेन्न अनादीनां निमेषकाष्ठाकलामुहूर्तोपाधीनामसंख्येयत्वस्य सर्वाभ्युपगन्तव्यत्वेन तत्त्वेकोपाधिगृहीतत्वे सति भिन्नत्वस्य व्यभिचारादिति । पशुपत्यधिकरणं समाप्तम् ॥

उत्पत्त्यसंभवाधिकरणम् । **सू० उत्पत्त्यसम्भवात् ॥ ४० ॥**

मू० कपिलादितन्त्रसामान्यात् भगवदभिहितपरमनिःश्रेयससाधनावबोधिनि पञ्चरात्रतन्त्रेऽप्यप्रामाण्यमाशङ्क्य निराक्रियते तत्रैवमाशङ्क्यते परमकारणात्परब्रह्मभूताद्वासुदेवात्सङ्कर्षणो नाम जीवो जायते सङ्कर्षणात्प्रद्युम्नसंज्ञं मनो जायते, तस्मादनिरुद्धसंज्ञोऽहङ्कारो जायते इति हि भागवतप्रक्रिया, अत्र जीवस्योत्पत्तिः श्रुतिविरुद्धा प्रतीयते, श्रुतयो हि जीवस्यानादित्वं वदन्ति "न जायते म्रियते वा विपश्चिदित्याद्याः ॥

**सू० न च कर्तुः करणम् ॥ ४१ ॥**

मू० सङ्कर्षणात्प्रद्युम्नसंज्ञं मनो जायते इति कर्तृजीवात्करणस्य मनस उत्पत्तिर्न सम्भवति एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि चेति परस्मादेव ब्रह्मणो मनसोऽप्युत्पत्तिश्रुतेः, अतः श्रुतिविरुद्धार्थप्रतिपादनादस्यापि तन्त्रस्य प्रामाण्यं प्रतिषिध्यत इत्येवं प्राप्ते प्रचक्ष्महे—

टा० सू० उत्पत्त्यसंभवात्, अवान्तरसंगतिमाह "कपिलादी"ति, आशङ्क्येति पूर्वपक्षसूत्रद्वयार्थः । निराक्रियत इति सिद्धान्तसूत्रद्वयार्थ इति विभागः । पञ्चरात्रं किं सांख्यादिवत् क्वचित् प्रमाणं? उत कार्त्स्न्येन प्रमाणं? किमस्य क्वचिच्छ्रुतिविरोधोऽस्ति? उत क्वचिदपि नास्ती? ति किमत्र जीवे,

त्पत्त्यादिकं विवक्षितं? मुत ने? ति, सङ्कर्षणप्रद्युम्नादिशब्दाः किं जीवादिशब्दविशेषणतया निर्दिष्टाः? उत जीवादिशब्दाः सङ्कर्षणादिशब्दविशेषणतया निर्दिष्टा? इति सङ्कर्षणादिशब्दानां जीवादिशब्दविशेषणत्वे जीवोत्पत्त्यादिकं विवक्षितमिति श्रुतिविरोधसद्भावादविरुद्धांशे प्रामाण्यात्तदेकदेशस्योपादेयत्वं, जीवादिशब्दानां सङ्कर्षणादिशब्दविशेषणत्वे जीवोत्पत्त्यादेरविवक्षितत्वेन क्वचिदपि श्रुतिविरोधो नास्तीति कात्स्न्र्येन प्रमाणत्वात् कात्स्न्र्येन निःश्रेयसार्थिभिरुपादेयत्वं सिद्ध्येत् । कथमाशङ्क्यत इत्यत्राह "तत्रैवमिति, परमकारणादित्यादिः पञ्चरात्रग्रन्थः सू॰ न च कर्त्तुः करणम् कर्त्ता जीवः ।

## सू० विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४२ ॥

सू॰ वा-शब्दात्पक्षो विपरिवर्तते, विज्ञानं चादि चेति परं ब्रह्म-विज्ञानादिसङ्कर्षणप्रद्युम्नानिरुद्धानामपि परब्रह्मभावे सति तत्प्रतिपादनपरस्य शास्त्रस्य प्रामाण्यं न प्रतिषिध्यते ।

टी० सू॰ विज्ञानादिभावे वा तदप्रतिषेधः, सिद्धान्तसूत्रतां दर्शयति "वा-शब्दादि"ति, अपि वा कर्तृसामान्यात् एकं वा संयोगरूपचोदनाख्याविशेषादिति वदिति भावः । विज्ञानं चादि चेतीति चैतन्यस्वरूपिणा इति मन्त्रलिङ्गात् भगवान्वासुदेवः परा प्रकृतिरिति वचनाच्च वासुदेवस्य ज्ञानस्वरूपत्वपरमकारणत्वे प्रतिपादिते, तस्माद्विज्ञानादिशब्देन भगवान्वासुदेवः स्यादि[1]ति इति भावः विज्ञानैश्वर्य्यादिगुणसद्भाव इति योजनायां तेषां सङ्कर्षणादीनां वासुदेवत्वमार्थं स्यात्, ततोऽपि शाब्दत्वानुगुणयोजना वरं, सत्यं ज्ञानमनन्तं ब्रह्म तस्माद्वा एतस्मादात्मन आकाशः, संभूतः । यतो वा इमानि भूतानि जायन्त इति ज्ञानस्वरूपस्य ब्रह्मणः परमकारणत्वप्रतिपादकवेदान्तैककण्ठ्यद्योतनार्थं च विज्ञानं चादि चेति व्याख्यातं, सङ्कर्षणेत्यादिना सूत्रस्य वाक्यार्थ उक्तः, । के पुनः सङ्क-

१ स्यादिति इति भावः इति पाठान्तरं युः ' प्रतीमः ।

र्षणादयः, तेषां परब्रह्मभावः कथं तथा ब्रह्मणः उत्पत्तिर्वा कथं शास्त्र-प्रामाण्यं वा कथमित्यत्राह–

भा० एतदुक्तं भवति भागवतप्रक्रियामजानतामिदं चोद्यं यज्जीवोत्पत्तिर्विरुद्धाऽभिहितेति वासुदेवाख्यं परं ब्रह्मैवाश्रितवत्सलं स्वाश्रितसमाश्रयणीयत्वाय स्वेच्छया चतुर्धाऽवतिष्ठत इति हि तत्प्रक्रिया, यथा पौष्करसंहितायां "कर्त्तव्यत्वेन वै यत्र चातुरात्म्यमुपास्यते । क्रमागतैः स्वसंज्ञाभिर्ब्राह्मणैरागमं तु तदित्यादि, तच्च चातुरात्म्योपासनं वासुदेवाख्यपरब्रह्मोपासनमिति सात्वतसंहितायामुक्तं, "ब्राह्मणानां हि सद्ब्रह्म वासुदेवाख्ययाजिनाम् । विवेकदं परं शास्त्रं ब्रह्मोपनिषदं महदि"ति, तद्धि वासुदेवाख्यं परं ब्रह्म सम्पूर्णषाड्गुण्यवपुः सूक्ष्मव्यूहविभवभेदभिन्नं यथाधिकारं भक्तैर्ज्ञानपूर्वेण कर्मणाऽभ्यर्चितं सम्यक् प्राप्यते विभवार्चनाद्व्यूहं प्राप्य व्यूहार्चनात्परं ब्रह्म वासुदेवाख्यं सूक्ष्मं प्राप्यते इति वदन्ति। विभवो हि नाम रामकृष्णादिप्रादुर्भावगणः, व्यूहो नामवासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धरूपश्चतुर्व्यूहः सूक्ष्मं तु केवलषाड्गुण्यविग्रहं वासुदेवाख्यं परं ब्रह्म, यथा पौष्करे "यस्मात्सम्यक् परं ब्रह्म वासुदेवाख्यमव्ययम् । अस्मादवाप्यते शास्त्रात् ज्ञानपूर्वेण कर्मणे"त्यादि, अतः सङ्कर्षणादीनामपि परस्यैव ब्रह्मणः स्वेच्छाविग्रहरूपत्वाद्

टी० "एतदुक्तं भवती"ति, भागवतेत्यादि कर्त्तव्यत्वेनेत्यादिवचनमागमशब्दनिर्वचनपरं स्वसंज्ञाभिः नमः शब्दाद्युपेतैस्तत्तद्व्यूहनामभि-

रित्यर्थः, क्रमागतैरुपास्यवस्तुप्रतिपादनाच्छास्त्रस्यागमत्वमिति श्लोकार्थः चातुरात्म्यमुपास्यत इत्यनेन संकर्षणादिचातुर्विध्यं समाश्रयणीयत्वायेति दर्शितं। संकर्षणादीनां परब्रह्मभावः कथमित्यत्राह "तच्चे"ति, चातुरात्म्योपासनपरशास्त्रस्य वासुदेवाख्यपरब्रह्मोपासनपरत्वदर्शनाच्चातुर्विध्यं वासुदेवस्येति सिद्धं, सङ्कर्षणाद्यर्चनं किमर्थं वासुदेवार्चनं हि मोक्षप्रदं न केवलं चातुरात्म्योपासनमेव प्रतिपाद्यते विभवार्च्चनादिकमपि प्रतिपाद्यत इति शङ्कायामयोगव्यवच्छेदज्ञापनार्थं चातुरात्म्यविवरणार्थं चाह— "तद्वी"ति, सूक्ष्मं परमित्येकार्थं पदद्वयं विभवादयः क इत्यत्राह "विभवो ही"ति, चतुर्व्यूहश्चतुर्विभागः। उक्तार्थे प्रमाणमाह "यथा पौष्कर"इति, अस्मा[1]दित्यादिवचने परस्य ब्रह्मणो वासुदेवाख्यस्य प्राप्यत्वं दर्शितम्, आदि-शब्दोपात्तेषु तत्प्रकरणस्थवचनेषु व्यूहविभवार्च्चनतत्फलादि द्रष्टव्यमित्यर्थः। न केवलं श्रुतिविरोधाभावः तदानुगुण्यमेवास्तीति दर्शयितुम् अजायमान इत्यादिवाक्यमुपात्तम् ।

सू० अजायमानो बहुधा विजायत इति श्रुतिसिद्धस्यैवाश्रितवात्सल्यनिमित्तस्वेच्छाविग्रहसंग्रहरूपजन्मनोऽभिधानात तदभिधायिशास्त्रप्रामाण्यस्याप्रतिषेध इति, तच जीवमनोऽहङ्कारसत्त्वानामधिष्ठातारः संकर्षणप्रद्युम्नानिरुद्धा इति तेषामेव जीवादिशब्दैरभिधानमविरुद्धं, यथाऽऽकाशप्राणादिशब्दैर्ब्रह्मणोऽभिधानम् ॥

## सू० विप्रतिषेधाच्च ॥ ४३ ॥

विप्रतिषिद्धा हि जीवोत्पत्तिस्तस्मिन्नपि तन्त्रे यथोक्तं परमसंहितायाम्। "अचेतना परार्था च नित्या सततविक्रिया। त्रिगुणा कर्म्मिणां क्षेत्रं प्रकृतेरूपमुच्यते।

1 यस्मादित्यादि इति पा०।

व्याप्तिरूपेण सम्बन्धस्तस्याश्च पुरुषस्य च । स ह्यनादिरनन्तश्च परमार्थेन निश्चितः" इति, एवं सर्वास्वपि संहितासु जीवस्य नित्यत्ववचनाज्जीवस्वरूपोत्पत्तिः पञ्चरात्रतन्त्रे प्रतिषिद्धैव, जन्ममरणादिव्यवहारस्तु लोकवेदयोर्जीवस्य यथोपपद्यते तथा नात्मा श्रुतेरित्यत्र

टी० जीवादिसामानाधिकरण्यनिर्वाहमाह "तत्रे"ति, जीवादिशब्दैः संकर्षणादीनां विशेष्यत्वेऽनुकूललिङ्गमुक्तं, संकर्षणादिशब्दैर्जीवादीनां विशेष्यत्वे प्रतिकूललिङ्गमुच्यते सू· विप्रतिषेधाच्च, ॥ विप्रतिषेधो विशेषेण प्रतिषेधो विविधप्रतिषेधो वा यथाश्रुतिविप्रतिपन्नेत्यत्रास्मत्तः श्रवणेन विशेषतः प्रतिपन्नेत्यर्थः तद्वत्, यथा बुद्धिलेपप्रापणं तच्छास्त्रैर्विप्रतिषिद्धमित्यत्र विप्रतिषेध–शब्दः तथाऽयमपि निषेधपर इति भावः । यद्वा विप्रतिषेधो व्याघातः, जीवोत्पत्तिप्रतिषेधप्रतिपादकशास्त्रेण जीवोत्पत्तिवचनस्य व्याघातमभिप्रेत्य व्याघातहेतुभूतजीवोत्पत्तिनिषेधमाह "प्रतिषिद्धा ही"ति, सर्वास्वपि संहितास्वित्यनेन विप्रतिषेधशब्दे विशब्दार्थो विवक्षितः जीवोत्पत्तिः कथ्यतां नाम तथाऽपि न श्रुतिविरोधः श्रुतावपि जीवोत्पत्तिदर्शनादित्याह "जन्मजरामरणादि" इति, तर्हि तस्य निर्वाहः कथमित्यत्राह–

श्रु० वक्ष्यते, अतो जीवस्योत्पत्तिस्तत्रापि प्रतिषिद्धैवेति जीवोत्पत्तिवादनिमित्ताप्रामाण्यशङ्का दूरोत्सारिता, यस्त्वेष केषांचिदुद्घोषः, "साङ्गेषु वेदेषु निष्ठामलभमानः शाण्डिल्यः पञ्चरात्रशास्त्रमधीतवानिति साङ्गे वेदेषु पुरुषार्थनिष्ठा न लब्धे"ति वचनाद् वेदविरुद्धं तन्त्रमिति सोऽप्यनाघ्रातवेदवचसामनाकलिततदुपबृंहणन्यायकलापानां श्रद्धामात्रविजृम्भितः, यथा प्रातः प्रातरनृतं ते वदन्ति पुरो-

दयाज् जुह्वति येऽग्निहोत्रमिति अनुदितहोमनिन्दोदित-
होमप्रशंसार्थमुक्तं यथा च भूमविद्याप्रक्रमे नारदेन ऋ-
ग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमिति-
हासपुराणं पञ्चममित्यारभ्य सर्वं विद्यास्थानमभिधाय
सोऽहं भगवो मन्त्रविदेवास्मि नात्मविदिति भूमविद्याव्यति-
रिक्तासु सर्वासु विद्यास्वात्मवेदनालाभवचनं वक्ष्यमाणभू-
मविद्याप्रशंसार्थं कृतम्, अथवा अस्य नारदस्य साङ्गेषु वे-
देषु यत्परतत्त्वं प्रतिपाद्यते तदलाभनिमित्तोऽयं वादः, एव-
मेव शाण्डिल्यस्येति पश्चाद्वेदान्तवेद्यवासुदेवाख्यपरब्रह्म-
तत्त्वाभिधानादवगम्यते, तथा वेदार्थस्य दुर्ज्ञानतया सुखा-
वबोधार्थः शास्त्रारम्भः परमसंहितायामुच्यते।

टी० "वक्ष्यत" इति, करणाद्याश्रयणशरीरसंयोगकृतज्ञानविकास-
संकोचलक्षणावुत्पत्तिविनाशाविति वक्ष्यत इत्यर्थः। उपसंहरति "अत"
इति, यैर्जीवोत्पत्त्यादिप्रतिपादनेन शास्त्रस्याप्रामाण्यं सिद्धान्तितं तैरेत-
च्छास्त्राविवक्षितमर्थं विवक्षितत्वेनारोप्याप्रामाण्यमुक्तं स्यात्, अतोऽप्रा-
माण्यं पूर्वपक्षीकार्यं न सिद्धान्तीकर्तव्यं तस्मात्परैरुक्तं सूत्रानभिमताप्रा-
माण्यहेतुं दूषयितुमनुवदति "यश्चैव" इति, सोऽपीत्यादिना, निष्ठाम-
लभमान इत्यस्य परोक्तार्थाभ्युपगमेन परिहार उक्तः। अथ अन्यथार्थं वक्ष्यं-
स्तमर्थं दृष्टान्ते शिक्षयति "अथवे"ति, तमेव दार्ष्टान्तिकेऽप्याह "एव-
मि"ति, कथमिवमवगम्यत इत्यत्राह "पश्चाद्वेदान्तवेद्ये"ति, श्रीपञ्चरा-
त्रस्य वेदार्थविशदीकरणरूपतामाह "तथे"ति, तथा उक्तानुगुणमेवेत्यर्थः
संशयेन विना क्वचिदिति संशयोऽनधीतशाखासु श्रुतार्थविरोधोऽस्ति नवे-
त्येवं रूपः। यद्वा प्रतिपन्नेष्वर्थेषु यच्छ्रेयस्तन्न जानामीत्यर्थः॥

मू० "अधीता भगवन्वेदाः साङ्गोपाङ्गाः सविस्तराः । श्रुतानि च मयाऽङ्गानि वाकोवाक्ययुतानि च । न चैतेषु समस्तेषु संशयेन विना क्वचित् । श्रेयोमार्गं प्रपश्यामि येन सिद्धिर्भविष्यति इति, । वेदान्तेषु यथासारं संगृह्य भगवान्हरिः भक्तानुकम्पया विद्वान् । संचिक्षेप यथासुखम् इति च, अतः स भगवान्वे[1]दान्तवेद्यः परब्रह्माभिधानो वासुदेवो निखिलहेयप्रत्यनीककल्याणैकतानानन्तज्ञानानन्दाद्यपरिमितोदारगुणसागरः सत्यसंकल्पश्चातुर्वर्ण्यं चातुराश्रम्यव्यवस्थयाऽवस्थितान्धर्मार्थकाममोक्षाख्यपुरुषार्थाभिमुखान् भक्तानवलोक्यापारकारुण्यसौशील्यवात्सल्यौदार्यमहोदधिः स्वस्वरूपस्वविभूतिस्वाराधनतत्फलयाथात्म्यावबोधिनो वेदान् ।

टी० अधीता भगवन्वेदा इत्यादिश्लोकानामुत्तरश्लोकोऽयं वेदान्तेषु यथासारं संगृह्य भगवान् हरिः । भक्तानुकम्पया विद्वान् संचिक्षेप यथासुखमिति मोक्षधर्मे "यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च गृणन्ति सत्यधर्माणः सत्यं सत्येषु सामस्विति एकायनशाखाविषये पारमेश्वरं वचनं "महतो वेदवृक्षस्य मूलभूतो महानयं स्कन्धभूता ऋगाद्यास्ते शाखाभूतास्तथा मुने इत्यादि द्रष्टव्यं बौद्धाद्युपदेशवदिदमपि विप्रलम्भाय कृतं किं न स्यात् वेदार्थ उच्यते चेत् अत एव वेदा अध्यापयितव्याः किं ग्रन्थनिर्माणेनेत्याशङ्कां परिजिहीर्षुर्वेदान्तेषु यथासारमित्यादि वचनार्थमभिप्रयन्नाह "अतः स भगवानि"ति, अतो वेदार्थस्य दुरवबोधार्थत्वात् भगवानित्यादिविशेषणानि धर्मविप्रलम्भादिसम्भवशङ्काव्यावृत्त्यर्थानि भगवच्छब्देन हे[2]यप्रत्यनीककल्याणैकतानत्वे विवक्षिते, किं प्रमाणमित्यत्राह

१ वेदैकवेद्य इति पा० ।
२ हेयप्रत्यनीकेति पा० ।

'वेदैकवेद्यमिति, पुरुषत्वात्स दोष इत्याद्यनुमानस्य धर्मिग्राहकप्रमाण-बाधमभिप्रेत्यैक-शब्दप्रयोगः, तर्हि ब्रह्म न वासुदेव इत्यत्राह "परब्र-ह्माभिधान" इति, भगवच्छब्दसमाख्याप्रमाणसिद्धमर्थमाह "निखिलहे ये"ति, वक्ष्यमाणव्यवस्थानुगुणविशेषणमाह "सत्यसङ्कल्प"इति, भक्तान् शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनमिति वचनात् भक्तिः सम्यक्-शास्त्रज्ञानहेतुः सात्त्विकजनसंरक्षणाय वेदापाश्रयेण तदुपमर्दनकारिणामसुराणां निरसनाय कृतं बुद्धादिशास्त्रमिति तच्च न रक्षणोपयुक्तम् अतो भक्तरक्षणार्थं कृतेऽस्मिन् प्रबन्धे न दोषगन्ध इति भावः । विप्रलम्भासम्भ-वार्थमाह "अपारे"ति, वेदैरेवालं किं पञ्चरात्रेणेत्यत्राह—

मू० ऋग्यजुःसामाथर्वभेदभिन्नानपरिमितशाखान् विध्यर्थवा-दमन्त्ररूपान् स्वेतरसकलसुरनरदुरवगाहांश्चावधार्य तद-र्थयाथात्म्यावबोधिपञ्चरात्रं शास्त्रं स्वयमेव निरमिमीतेति निरवद्यम् । यत्तु परैः सूत्रचतुष्टयं कस्यचिदिदंशस्य प्रामाण्यनिषेधपरं व्याख्यातं तत्सूत्राक्षरानुगुणं सूत्र-काराभिप्रायविरुद्धं च । तथा हि सूत्रकारेण वेदान्तन्या-याभिधायीनि सूत्राण्यभिधाय ।

टी० "ऋग्यजुःसामाथर्वभेदभिन्नानपरमितशाखानि"ति, विध्यर्थ-वादमन्त्ररूपा"निति, तत्त्वविषयं यदत्रोच्यते तत्सर्वमर्थवादादिषु प्रति-पादितमिति भावः । विलक्षणज्ञानैर्ज्ञायत एव किमनेनेत्यत्राह "स्वेत-रे"ति, निरवद्यं पाशुपतादिषु यदवद्यं तन्नास्त्यत्रेति भावः । ननु बौद्धा-र्हतादयो भगवत्प्रणीताः तद्वदिदं किं न स्यात्? उच्यते अवतारप्रयोजनं हि दुष्कृद्विनाशनं साधुपरित्राणं च तत्र दुष्कृद्विनाशाय बौद्धादिप्रणीतिः, इदं तु नारदशाण्डिल्यादिसाधुपरित्राणार्थेति वैषम्यमिति नारदादयो ह्यत्र श्रोतारः, नारदादिश्रोतृत्वकथनं विप्रलम्भार्थमिति चेन्न सर्वत्राविश्वासप्रसङ्गात्, सर्वशक्तिना भगवता वेदानामपौरुषेयत्वादिख्यापनं विप्र-

लिप्सया कृतमिति शङ्का कर्तुं हि शक्यते । किञ्च वेदोदिता एव अर्थाः सर्वत्र सहस्रशश्च पञ्चरात्रे श्रूयन्ते बौद्धादिषु हि वेदप्रामाण्यनिराकरणादिकं दृश्यते । किञ्च प्रमाणभूतेषु प्रबन्धेषु बुद्धागमादीनां श्रुतिविरोधात् परित्याज्यत्वं श्रूयते न तथा श्रीपञ्चरात्रस्य, प्रत्युत श्रुतिसारार्थविशदीकरणरूपत्वमेव दृश्यते, एवं भारद्वशाण्डिल्यादिसात्त्विकसंरक्षणाय प्रवृत्तत्वाद्वेदविहितानेकार्थप्रतिपादकत्वाद्वेदार्थावगमसौकर्याय प्रवृत्तत्वेन प्रमाणभूतप्रबन्धेषु श्रूयमाणत्वात् वेदार्थविशदीकरणरूपत्वानुगुणं वेदान्तार्थस्य प्रतिपादनदर्शनादतिशङ्कायां वेदेऽप्यनाश्वासप्रसङ्गाच्च दुष्कृद्विनाशार्थप्रवृत्तश्रुतिविरुद्धार्थप्रतिपादकप्रमाणभूतप्रबन्धान्तरनिन्दितबुद्धागमादिसाम्यबुद्धिः, श्रीपञ्चरात्रशास्त्रसमीपं नासादयतीत्यर्थः, एवं परोक्ताप्रामाण्यहेतुर्निराकृतः । अथ परोक्तं सूत्रार्थमनूद्य दूषयति "यत्त्वि"ति, सूत्रचतुष्टयमिति न सूत्रद्वयमित्यर्थः । सूत्राक्षराननुगुणं वा—शब्दतदप्रतिषेधादिसूत्रपदाननुगुणमित्यर्थः । अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात्, एकं वा संयोगरूपचोदनाख्यविशेषादित्यादिषु वा—शब्दः पक्षविपरिवृत्तिपरो दृष्टः, विप्रतिषेध—शब्दोऽपि तदप्रतिषेधवाशब्दसाहचर्यान्निषेधार्थ एवेति भावः । सूत्रकाराभिप्रायविरोधमुपपादयति "तथाही"ति, सूत्रकारेण सूत्रेऽयमर्थ उक्तश्चेत् किमर्थं महाभारते कथनमिति शङ्कायां प्रयोजनभेदं दर्शयति "वेदान्तन्यायाभिधायीनी"ति—

मू० वेदोपबृंहणाय च भारतसंहितां शतसाहस्रिकां कुर्वता मोक्षधर्मे ज्ञानकाण्डेऽभिहितं "गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः । य इच्छेत्सिद्धिमास्थातुं देवतां कां यजेत स" इत्यारभ्य महता प्रबन्धेन पञ्चरात्रशास्त्रप्रक्रियां प्रतिपाद्य "इदं शतसहस्राद्धि भारताख्यानविस्तरात् । आविध्य मतिमन्थानं दध्नो घृतमिवोद्धृतम् । नवनीतं

१ शतसहस्रिकामिति ।

यथा दध्नो द्विपदां ब्राह्मणो यथा । आरण्यकं च वेदेभ्य ओषधिभ्यो यथाऽमृतम् । इदं महोपनिषदं चतुर्वेदसमन्वितं साङ्ख्ययोगकृतां तेन पञ्चरात्रानुशब्दितम् । इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् । ऋग्यजुःसामभिर्जुष्टमथर्वाङ्गिरसैस्तथा । भविष्यति प्रमाणं वा एतदेवानुशासनमिति साङ्ख्ययोगशब्दाभ्यां ज्ञानयोगकर्मयोगावभिहितौ यथोक्तं "ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनामिति, भीष्मपर्वण्यपि "ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः । अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः । सात्वतं विधिमास्थाय गीतः सङ्कर्षणेन य" इति कथमेवं ब्रुवाणो बादरायणो वेदविदग्रेसरो वेदान्तवेद्यपरब्रह्मभूतवासुदेवोपासनार्चनादिप्रतिपादनपरस्य सात्वतशास्त्रस्याप्रामाण्यं ब्रूयात् । ननु च "साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा । किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने" इत्यादिना साङ्ख्यादीनामप्यादरणीयतोच्यते शारीरकेऽपि साङ्ख्यादीनि प्रतिषिध्यन्ते अत इदमपि तन्त्रं तत्तुल्यं नेत्युच्यते यतस्तत्रापीममेव शारीरकोक्तन्यायमवतारयति ।

टी० वेदोपबृंहणाय चेति अधीतशाखार्थस्य संशयविपर्ययादिनिरासको न्यायः अनधीतशाखार्थैकार्थ्येनाधीतशाखार्थज्ञानमुपबृंहणमित्यर्थः, रहस्य इत्यादि महता प्रबन्धेन विस्तरेण इदं श्रेयः एतच्छास्त्रोक्तमेव सांसारिकफलसाधनम्, इदं ब्रह्म एतदुक्तमेव परं प्राप्यं ब्रह्म इदमनुत्तमं हितम् अपवर्गसाधनमित्यर्थः । अथर्वाङ्गिरसैः अथर्वणा अङ्गिरसा च दृष्टैरथर्ववेदप्रदेशैः ऋगादिशब्दैः तत्तदर्थोऽभिप्रेतः । साङ्ख्ययोग-

शब्दो व्याचष्टे "साङ्ख्ये"ति, कर्मज्ञानयोगोपेतमित्यर्थः, महाभारतप्रशस्तत्वहेतोरनैकान्त्यमाह "ननु चे"ति, परिहरति "नेती"ति, यतस्तत्रापीति साङ्ख्यादीनां वेदाविरुद्धांशे प्रामाण्यं कृत्स्नाविरोधस्य श्रीपञ्चरात्रस्य कार्त्स्न्येन प्रामाण्यमिति न्यायमवतारयतीत्यर्थः । तदुपपादयति–

मू॰ किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वेति प्रश्नस्यायमर्थः किं साङ्ख्ययोगपाशुपतवेदपञ्चरात्राणि एकतत्त्वप्रतिपादनपराणि पृथक्तत्त्वप्रतिपादनपराणि वा, यद्येकतत्त्वप्रतिपादनपराणि किं तदेकं तत्त्वं? यदा पृथक्तत्त्वप्रतिपादनपराणि तदैषां परस्परविरुद्धार्थप्रतिपादनपरत्वाद्वस्तुनि विकल्पासम्भवाच्चैकमेव प्रमाणमङ्गीकरणीयं, किं तदेकमित्यस्योत्तरं ब्रुवन् "ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै । साङ्ख्यस्य वक्ता कपिल इत्यारभ्य साङ्ख्ययोगपाशुपतानां कपिलहिरण्यगर्भपशुपतिकृतत्वेन पौरुषेयत्वं प्रतिपाद्य अवान्तरतपानामवेदाचार्य्यः स उच्यते इति वेदानामपौरुषेयत्वमभिधाय पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयमिति पञ्चरात्रतन्त्रस्य वक्ता नारायणः स्वयमेवेत्युक्तवान्, एवं वदतश्चायमाशयः पौरुषेयाणां हि तन्त्राणां परस्परविरुद्धवस्तुवादितया अपौरुषेयत्वेन निरस्तप्रमादादिनिखिलदोषगन्धवेदवेद्यवस्तुविरुद्धाभिधायित्वाच्च यथावस्थितवस्तुनि प्रामाण्यं दुर्लभं वेदवेद्यश्च परब्रह्मभूतो नारायणः, अतस्तत्तन्त्राभिहितप्रधान पुरुषपशुपतिप्रभृतितत्त्वस्य वेदान्तवेद्यपरब्रह्मभूतनारायणात्मकतयैव वस्तुत्वमभ्युपगमनीयमिति तदिदमाह च

"सर्वेषु च नृपश्रेष्ठ ! ज्ञानेष्वेतेषु दृश्यते। यथागमं यथान्यायं निष्ठा नारायणः प्रभुरि"ति यथागमं यथान्यायमिति न्यायानुगृहीतं तत्तदागमोक्तं वस्तु परामृशतो नारायण एव सर्वस्य वस्तुनोनिष्ठेति दृश्यते।

टी० "किमेतानी"ति, एकतत्त्वप्रतिपादनपरत्वे प्रमेयविशेषबुभुत्सा पृथक्तत्त्वप्रतिपादनपरत्वे प्रमाणविशेषबुभुत्सा अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति, उदिते जुहोति अनुदिते जुहोति व्रीहिभिर्यजेत यवैर्यजेत इत्यादिष्वधिकारिभेदेन कालभेदेन फलभेदेन विकल्पः सम्भवत्यनुष्ठाने, सिद्धवस्तुनि तु विकल्पासम्भवेन विरोधादेकमेव प्रमाणं स्यादित्यर्थः । अस्योत्तरमिति प्रष्टुरभिप्रायं विकल्प्योत्तरमाहेति भावः । ज्ञानान्येतानीति किं त्वया तत्तद्ग्रन्थकाराभिप्रायः पृष्टः? उतार्थस्थितिः पृष्टा? तत्तद्ग्रन्थकाराभिप्रायश्चेत् पृथङ् निष्ठान्येव मतानीत्याह- "ज्ञानान्येतानी"ति, "साङ्ख्यस्य वक्ता कपिलः परमर्षिस्स उच्यते । हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः । उमापतिः पशुपतिः श्रीकण्ठो ब्रह्मणः सुतः । उक्तवानिदमव्यग्रं ज्ञानं पाशुपतं शिव" इति एतानि वचनानि आरभ्य शब्दोपात्तानि पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयमिति वक्तव्यवक्तृविशेषणद्वयं श्रूयते । एभिः फलितमाह "एवं वदत" इति, न्यायानुगृहीतवस्तुपरामर्शस्वरूपमाह—

सू० अब्रह्मात्मकतया तत्तत्तन्त्राभिहितानां तत्त्वानां सर्वं खल्विदं ब्रह्म विश्वं नारायण इत्यादिना सर्वस्य ब्रह्मात्मकतामनुसन्दधानस्य च नारायण एव निष्ठेति प्रतीयत इत्यर्थः । अतो वेदान्तवेद्यः परब्रह्मभूतो नारायणः स्वयमेव पञ्चरात्रस्य कृत्स्नस्य वक्तेति तत्स्वरूपतदुपासनाभिधायितन्त्रमिति च तस्मिन्नितरतन्त्रसामान्यं न केनचिदुद्भावयितुं शक्यम्, अतस्तत्रैवेदमुच्यते एवमेकं साङ्ख्ययोगं

वेदारण्यकमेव च। परस्पराङ्गान्येतानि पञ्चरात्रं तु कथ्यत इति साङ्ख्यञ्च योगश्च साङ्ख्ययोगं वेदाश्च आरण्यकानि च वेदारण्यकं परस्पराङ्गान्येतान्येकतत्त्वप्रतिपादनपरत-यैकीभूतान्येकं पञ्चरात्रमिति कथ्यते, एतदुक्तं भवति सा-ङ्ख्योक्तानि पञ्चविंशतितत्त्वानि योगोक्तं च यमनियमा-द्यात्मकं योगं वेदोदितकर्मस्वरूपाण्यङ्गीकृत्य तत्त्वानां ब्रह्मात्मकत्वं, योगस्य च ब्रह्मोपासनप्रकारत्वं कर्मणां च तदाराधनरूपतामभिदधति ब्रह्मस्वरूपं प्रतिपादयन्त्या-रण्यकानि, एतदेव परेण ब्रह्मणा नारायणेन स्वयमेव पञ्चरात्रतन्त्रे विशदीकृतमिति, शारीरके च साङ्ख्योक्त-तत्त्वानामब्रह्मात्मकतामात्रं निराकृतं न स्वरूपं योग-पाशुपतयोश्चेश्वरस्य केवलनिमित्तकारणतापरावरतत्त्ववि-परीतकल्पना वेदवहिष्कृताऽऽचारो निराकृतो न योगस्वरूपं पशुपतिस्वरूपं च, अतः साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा । आत्मप्रमाणान्येतानि न हन्तव्यानि हेतु-भिरिति तत्तदभिहिततत्त्वस्वरूपमात्रमङ्गीकार्य्यं जिनसु-गताभिहिततत्त्ववत्सर्वं न वहिष्कार्य्यमित्युच्यते यथा-ऽऽगमं यथान्यायं निष्ठा नारायणः प्रभुरित्यनेनैकार्थ्यात् ।

टी० "अब्रह्मात्मकतये"ति, वचनान्तरेण विशदयति "अत"इति, परस्पराङ्गानि एकमिति पदद्वयं व्याचष्टे एकीभूतानीत्येतदन्तेन, एकं पञ्चरात्रमित्यार्थमेकत्वमुक्तम् एकवचनान्तत्वात् । यद्वा एकीभूतानीत्यने-नाङ्गाङ्गिभावफलितार्थ उक्तः, एकं पञ्चरात्रमिति एकपदव्याख्यानम्, अत्र किमङ्गि तस्य किमपेक्षितं प्रतिपादयन्त्यङ्गानि भवन्ति तेषु कस्मिंश्च-

शेऽपेता तत्सर्वं पञ्चरात्रमेकमेव कथमासीदित्यत्राह "एतदुक्तं भवती"ति, तर्हि शारीरके तन्निराकरणं कथमित्यत्राह "शारीरके चे"ति, सर्वेषां सांख्यादीनां प्रामाण्यं प्रतिपादयदिव किमपि वचनं दृश्यत इति तद्भ्रमनिवृत्त्यर्थं तस्यार्थमाह "अत"इति उक्तार्थे हेतुमाह–

सू० ॥ उत्पत्त्यसंभवाधिकरणं समाप्तम् ॥

इति श्रीभगवद्रामानुचार्य्यविरचिते शारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य द्वितीयः पादः ॥

---

टी० "अनेनैकार्थ्यादि"ति, न केवलं तत्तदागममात्रपरामर्शः न्यायपरामर्शोऽपि ह्यत्रोक्तः यथान्यायमिति, साङ्ख्यं योग इत्यादिवचनस्यान्यथार्थश्चेद्वेदविरुद्धांऽशेपि प्रामाण्याभिधायीदं वचनं "विरोधे त्वनपेक्षं स्यादि"ति न्यायादप्रमाणं स्यात्, अग्नीषोमीयहिंसादीनामधर्मत्वस्य साङ्ख्ये प्रतिपादनादिति भावः । एवं वेदविरुद्धार्थप्रबन्धप्रामाण्यप्रतिपादकत्वे अस्यापि वचनस्याप्रामाण्यप्रसङ्गान्निष्ठा नारायण इत्याद्यैकार्थ्याच्च साङ्ख्ययोग इत्यादिवचनस्योक्त एवार्थः बौद्धादिग्रन्थेष्वप्यविरुद्धार्थसम्भवात् तत्स्वीकारप्रसङ्ग इति चेन्न तत्र वेदाप्रामाण्यतद्विरुद्धार्थप्रतिपादनं कृतं साङ्ख्यादिषु तु वेदाङ्गीकार एवास्तीति तेष्वस्तीति तेष्वविरुद्धांशस्वीकार इति यथोक्त एवार्थः । अत्र भाष्यकारैः सूत्रकाराभिप्रायानुगुण्यात् तु कार्त्स्न्येन वेदाविरोधात् सूत्रान्तरसामञ्जस्याच्च तन्त्रान्तरसाम्यं व्युदस्तम् । अत्र सूत्रकाराभिप्रायो मोक्षधर्मवचनैरवगम्यते हि तत्र श्रीपञ्चरात्रस्य बहुमुखं प्रामाण्यं प्रपञ्चितं तत्र "गूढं मां प्रश्नविद्राजन् पृच्छसे त्वमिहानघ । न ह्येष तर्कया शक्यं वक्तुं वर्षशतैरपि । ऋते देवप्रसादाद्वै राजन् ज्ञानागमेन वा । गहनं ह्येतदाख्यानमाख्यातव्यं तवारिहन्निति अवाच्यमेतद्वक्तव्यमात्मगुह्यं सनातनमिति च पृष्टार्थस्य परमरहस्यत्वं दुरवबोधत्वमयोग्येष्ववक्तव्यत्वं च दर्शितं, तेनैव प्रथिता ब्रह्म-

मर्यादा लोकभाविनीति लोकहिताय प्रवृत्ततया बाह्यागमव्यावृत्तिर्द-र्शिता । तत्र प्रशासतो राज्यं धर्मेणामित्रघातिनः । नानृतावाक् समभन्मनो दुष्टं च नाभवत् । संस्थिते तु नृपे तस्मिंश्छास्त्रमेतत् सनातनम् अन्तर्धास्यति तत्सत्यमेतद्वः कथितं मया इति योग्यजनभूयिष्ठकाले प्रवृत्तिः कालान्तरे तिरोधानं चेति वैलक्षण्यमुक्तं तत्राप्याविर्भावतिरोभा-वकथनादपौरुषेयशरीरस्य वेदार्थवदनादित्वं दर्शितं, ततश्च बाह्यागमव्यावृत्तिः उत्पद्यन्ते व्ययन्ते च यान्यतो यानि कानिचित् । तान्यर्वाक्कालिकतया निष्फलान्यनृतानि चेति बाह्यागमानामर्वाक्कालिकत्वस्मरणात्, वेदैश्च-तुर्भिः संमितं कृतं मेरौ महागिरौ इति सर्वमर्यादास्थापकमुनिजनभूयिष्ठे मेरौ प्रवृत्तया देशतोऽपि वैलक्षण्यमुक्तम् "एकाग्रमनसोदान्ता ऋषयः संयमे रता इति दिव्यं वर्षसहस्रं वै सर्वे ते मुनयः सममिति नारायणानुशिष्टा हि तदा देवी सरस्वती विवेश तानृषीन् सर्वान् लोकानां हितकाम्यया इति तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तममिति च प्रवर्तकानामृषीणा-मत्र गुणवत्त्वं तपोमहिमवत्त्वं भगवत्प्रसादलब्धसरस्वतीकत्वं बहूनामैक-मत्यं च दर्शितम् । उशना बृहस्पतिश्चैव यदोत्पन्नौ भविष्यतः । तदा प्रव-क्ष्यतः शास्त्रं युष्मन्मतिभिरुद्धृतमिति युष्मत्कृतमिदं शास्त्रं प्रजापालोवसुस्ततः । बृहस्पतेः सकाशाद्वै प्राप्स्यते द्विजसत्तमा इति प्रकृष्टदेवर्षिप-रिग्रहः प्रकृष्टशिष्याधिगमश्च दर्शितः । वेदैश्चतुर्भिः संमितम् इदं महोपनि-षदम् अत्र धर्मार्थकामा हि मोक्षः पश्चाच्चिकीर्षित इति सर्ववेदवेदा-न्तसारत्वं गुडजिह्विकान्यायेन त्रिवर्गप्रतिपादकत्वमोक्षैकपरत्वमनुत्तमहि-तत्वं चोक्तं सर्वं प्रमाणं हि तथा यथैतच्छास्त्रमुत्तमं भविष्यति प्रमाणं वै एतन्मदनुशासनम् । अस्मात्प्रवक्ष्यते धर्मान् मनुः स्वायम्भुवः स्वयमिति मन्वादिभिरप्युपजीव्यत्वमितरप्रबन्धप्रामाण्ये दृष्टान्तभूतत्वमव्यवधानेन भगवदनुशासनरूपत्वं भविष्यति प्रमाणमिति भगवता नियमितत्वं च दर्शितं, तस्य यज्ञो महानासीदश्वमेधो महात्मनः । बृहस्पतिरुपाध्यायः । तस्य होता बभूव ह" ति पञ्चरात्रनिष्ठस्योपरिचरस्याश्वमेधकथनाद्वैदि-कपञ्चरात्रकर्मणां कर्तृसामान्यं दर्शितं प्रीतस्ततो ह भगवान् देवदेवः

पुरातनः । साक्षात्तं दर्शयामास अदृश्योऽन्येन केनचिदिति वेदपञ्चरात्रोक्त कर्मणामव्यवधानेनाराध्यपरदेवतासामान्यं च दर्शितम्, अदृश्येन हृतो-भागो देवेन हरिमेधसेति भगवतः सर्वदेवतासाक्षात्कारिबृहस्पत्यदृश्य-तायाः उपरिचरेण दृष्टतायाश्चोक्तत्वात् अधिकारिवैलक्षण्यं दर्शितम्, एकत-द्वितत्रितवृत्तान्तमुखेनार्थवादरूपं तात्पर्यलिङ्गं दर्शितं "मेरोरुत्तरभागे तु क्षीरोदस्यानुकूलतः स देशो यत्र नस्तप्तं तपः परमदारुणमिति एका-न्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः । गच्छध्वं तत्र मुनयस्तत्रात्मा मे प्रका-शित इति ततो नादृष्टिविषयः तदा प्रतिहतो भवदिति व्रताव्रसा-नेऽस्य शुभान् नरान् न ददृशिमो वयमिति बलिः क्रियोपक्रियते तस्य देवस्य तैर्नरैः । वयं तु तेजसा तस्य सहसा नष्टचेतस इति पुरुषाणां सहस्रेषु तेषु वै शुद्धयोनिषु । अस्मान् न कश्चिन्मनसा चक्षुषा वाऽप्यपूजयदिति भगवद्धर्मनिष्ठपुरुषाध्युषितदेशस्य प्राप्यत्वं तस्य बहुतपोलभ्यत्वं धर्मान्तर-निष्ठैस्तद्धर्मनिष्ठानां दुर्दर्शत्वं तेषां बहुतपोदृश्यत्वं तेषामितराधिकारि-ष्वनादरत्वं तन्मुखेनेतराधिकारिणां निकृष्टत्वं च भगवद्धर्मनिष्ठानां प्रकृ-ष्टत्वं च भगवता स्वयमागत्य दर्शनप्रदानाच्च तेषां महत्त्वं दर्शितम् । एकश्च शब्दो विरतः श्रुतोऽस्माभिरुदीरितः । आकाशं पूरयन्सर्वं शिक्षाक्षरसम-न्वित इति भगवत्स्तोत्रश्रवणस्यापि तपः साध्यतया भगवद् धर्मप्रकर्षो ज्ञापितः, "दृष्टा वः पुरुषाः श्वेताः पञ्चेन्द्रियविवर्जिताः । दृष्टो भवति देवेश एभिर्दृष्टैर्द्विजोत्तमा इति भगवद्दर्शनतुल्यत्वं तेषां दर्शनस्य प्रतिपादितं "प्राप्य श्वेतं महाद्वीपं नारदो भगवान् ऋषिः । ददर्श तानेव नरान् श्वेतांश्चन्द्रप्रभान् शुभान् । पूजयामास शिरसा मनसा तैः सुपूजित इति न ह्येतद् ब्रह्मणा प्राप्तमीदृशं मम दर्शनमिति च भगवद्धर्मनि-ष्ठानां देवर्षिवन्द्यत्वं ब्रह्मादिभ्योऽपि महत्त्वं च दर्शितम् । "उवाच मधुरं भूयो गच्छ नारद मा चिरम् । इमे ह्यनिन्द्रियाहारा मद्भक्ताश्चन्द्रवर्चसः । एकाग्राश्चिन्तयेयुर्मां तेषां विघ्नो भवेदिति चोक्तं नारदसम्भाषणस्यापि विघ्नरूपताकथनेन नारदादपि तेषामासन्नतरत्वं दर्शितम्, "अहो हि दुर-नुष्ठेयो मोक्षधर्मः सनातनः यं हित्वा देवताः सर्वा हव्यकव्यभुजोऽभवन्

नूनमेकान्तिधर्मोऽयं श्रेष्ठो नारायणप्रियः । एकान्तिनो हि पुरुषा गच्छन्ति परमं पदम् । यद्येकान्तिभिराकीर्णं जगत् स्यात् कुरुनन्दन भवेत् कृतयुगप्राप्तिरिति एकान्तभावोपगतास्ते भक्ताः पुरुषोत्तमं ते सहस्रार्चिषं देवं प्रविशन्ति सनातनमिति च कृतयुगैकान्तस्य भगवद्धर्मस्य परममोक्षप्रदत्वं तन्मुखेनाधिकारिवैलक्षण्यं च दर्शितं तथा मया सृष्टः पुरा ब्रह्मा मद्यज्ञमयजत्स्वयम् ततस्तस्मै वरान् प्रीतो ददावहमनुत्तमान् । मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च । एष माता पिता चैव युष्माकं च पितामहः । मयाऽनुशिष्टो भविता सर्वभूतवरप्रदः । अस्यैव चानुजो रुद्रो ललाटाद्यः समुत्थितः ब्रह्माऽनुशिष्टो भविता सोऽपि सर्ववरप्रदः इति सब्रह्मकाः सरुद्राश्च सेन्द्रा देवाः सहर्षिभिः । अर्चयन्ति सुरश्रेष्ठं देवं नारायणं प्रभुमित्यादिभिर्वेदान्तवेद्यपरदेवताया एव सर्वस्मात्परत्वेनात्र प्रतिपाद्यत्वं दर्शितं "वेदैश्चतुर्भिः संमितमित्युपक्रमः इदं महोपनिषदम् इत्युपसंहारः, अभ्यासादिलिङ्गानि दर्शितानि एवमाशयदोषविरहदेशकालप्रवर्तकवक्तृश्रोतृप्रबन्धतदुक्तधर्मतत्कर्तृतत्फलतत्प्रदायिदेवतावैलक्षण्यप्रतिपादनमुखेन भगवच्छास्त्रवैलक्षण्यस्य बहुमुखं प्रपञ्चमभिप्रेत्य महता प्रबन्धेनेत्युक्तिः, तथा भवत्प्रणीते तत् प्रतिपादकतया सात्त्विके श्रीवाराहे च पुराणे मोक्षधर्मानुरोधेन पञ्चरात्रस्य वेदतुल्यप्रामाण्यप्रतिपादनमुखेन पाशुपतादिवैलक्षण्यं दृश्यते अष्टषष्टितमे "पौरुषं सूक्तमास्थाय ये यजन्ति द्विजास्तु मां संहिताजपमास्थाय । ते मां पश्यन्ति ब्राह्मणाः । अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन हि मार्गेण मां प्रपद्यन्ते ते मां पश्यन्ति मानवाः । ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते । शूद्रादीनां न तच्छ्रोत्रपदवीमुपयास्यति । एवं मयोक्तं विप्रेन्द्र पुराकल्पे पुरातनं पञ्चरात्रं सहस्राणां यदि कश्चिद् ग्रहीष्यति । कर्मक्षये च मां कश्चिद् यदि भक्तो भविष्यति । तस्य वेदाः पञ्चरात्रं नित्यं हृदि वसिष्यति । वेदेन पञ्चरात्रेण भक्त्या यज्ञेन तु द्विजाः । प्राप्योऽहं नान्यथा प्राप्यो वर्षलक्षैरपि द्विजे"ति अत्र वेदपञ्चरात्रयोर्विकल्पाभिधानाद्वेदतुल्यत्वं वेदाधिकृतत्रैवर्णिकाधिकाधिकारत्वं वेदा इति इतरायोग्यत्वं पञ्चरात्रयोः समु-

च्छित्य मोक्षसाधनत्वं चोक्तं "त्वं च "रुद्र महाबाहो मोहशास्त्राणि का-रयेत्यादिभिरितरागमानां मोहनार्थत्वं चोक्तं तत्र चोद्यपरिहाराश्च पूर्व-मेव प्रपञ्चेन कृताः, अतश्च पञ्चरात्रस्येतरागमवैलक्षण्यसिद्धिः, । ननु कथं कार्त्स्न्येन वेदाविरुद्धत्वं त्रयीधर्मपरित्यागस्य तत्रोक्तत्वात्, कथं मन्वा-दिस्मृतीनां वेदानुरोधित्वं तेषु त्रयीचोदिताग्निहोत्रपरित्यागमुखेन चतुर्था-श्रमधर्मस्यात्र प्रतिपाद्यमानत्वात् "यदहरेव विरजेत्तदहरेव प्रव्रजेदित्या"दि-भिः प्रत्यक्षश्रुतिभिरेव चतुर्थाश्रमविधानात् तन्मूलानां स्मृतीनां न वेदविरुद्ध-त्वमिति चेत्र किं भोस्त्रयीधर्मेणासंयुक्त इदं धर्मं जिज्ञासिता ओं भोजिज्ञा-तेत्यादिप्रत्यक्षश्रुतिसिद्धत्वात् त्रयीचोदितधर्मविशेषत्यागस्य तन्मूलतया पञ्चरात्रवचसां न वेदविरुद्धत्वम् । ननु कथमुदाहृतवाक्यानां वेदत्वं कथं यदहरेवेत्यादिवाक्यानां वेदत्वं जाबालश्रुत्यादीनां देशान्तरेष्वधीयमान-त्वादिति चेत् एवं तर्हि जाबालबाष्कलमाध्यन्दिनादिशाखानाम् इव देशा-न्तरे बहुभिरविच्छिन्नपारम्पर्यमधीयमानत्वादेव वेदत्वं सिद्धं स्मर्तव्यत्वे सत्यस्मर्य्यमाणकर्तृकत्वादिति हेतुनैव तद्वदेवापौरुषेयत्वं तैत्तिरीया-दिश[1]ब्दानामिवैकायनशाखायाश्चासाधारणकल्पसूत्रवत्त्वादेव वेदत्वं दुर-पह्नवं तथा भूमविद्यायामृग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवनिधिं वाको-वाक्यमेकायनं देवविद्यां ब्रह्मविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्वदेवजन-विद्यामेतद् भगवोऽध्येमीति श्रवणाच्च ऋग्वेदादिवद्वेदत्वसिद्धिः, ऋग्वे-दादेः पृथग्ग्रहणादवेदत्वमिति चेन्न ब्रह्मविद्याया इव ब्राह्मणपरिव्रा-जकन्यायेन श्रैष्ठ्यात् पृथगुपादानोपपत्तेः, ब्रह्मविद्याशब्दो ह्युपनिषद्भागपरः न तु ज्ञानपरः नात्मवदित्युक्तेः एकायनशब्दस्य प्रसिद्ध्यनादरेणार्थान्तर-परत्वकल्पनमयुक्तं प्रसिद्ध्यपवादकाभावात् यथा 'यं वाकेष्वनुवाकेषूपनि-षत्सु च । गृह्णन्ति सत्यधर्माणः सत्य सत्येषु समस्त्विति भारतवचनाच्च श्रुतित्वमवगम्यते । तथा भगवच्छास्त्रेषु चास्य वेदत्वं बहुशोऽवगम्यते

१ तैत्तिरीयादिशाखानामिवेति पा० ।

यथा श्रीकालोत्तरे ऋग्वेदं पूर्वदिग्भागे यजुर्वेदं तु दक्षिणे पश्चिमे सामवेदं स्यादथर्वं चोत्तरे भवेत् । एकानीयशाखोत्यमन्त्रान्सर्वासु दिक्षु च । पाठयेत् पावनान् पश्चादग्निसंस्कारमारभेदिति तथा तत्रैव ततः प्रीतमनानाथः साक्षात् स ब्रह्मसंज्ञितं वेदमेकायनं ब्रह्म व्याकर्तुमकुतोऽभयं व्याजहार स सद् ब्रह्ममयं प्रणवमादितः तत्कारणत्वाद्वेदानां मूलसंज्ञा सनातनी । ततोऽन्यान्यपि दिव्यानि व्यापकान्युपदिष्टवानिति, एवं हि संहितान्तरेष्वपि बहूनि वचनानि तानि विस्तारभयान्न लिख्यन्ते तथेतिहासपुराणवचनैरुपबृंहितप्रदेशविशेषता च श्रुतित्वे हेतुः, द्वे विद्ये वेदितव्ये यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्ममित्यादीनां श्रुतित्वेन सम्प्रतिपन्नानां द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् । शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति यत्तदव्ययमजरमचिन्त्यमजमक्षयम् । अनिर्देश्यमरूपं च पाणिपादाद्यसंयुतं विभुं सर्वगतं नित्यं भूतयोनिमकारणं व्याप्तं व्याप्यं यतः सर्वं यद्वै पश्यन्ति सूरय इत्यादिभिरुपबृंहितत्वदर्शनात् उपबृंहितत्वं हि श्रुतित्वं स्थापयति, एकायनशाखावचनानि च यद्बहून्युपबृंहन्ते पुराणेतिहासवचनैः, सर्वज्ञः सर्वदर्शी सर्वेश्वरः सर्वशक्तिस्समृद्धिमानेव अवृद्धिरन्यून आढ्योऽवशी स्वाधीनोऽनादिरनन्तोव्यपगतनिद्राभयक्रोधतन्द्रिव्यपगतेच्छातमःक्लमव्याधिर्निर्दोषोनिरधिष्ठोनिरवद्य इति श्रुतिर्भगवता पराशरेणोपबृंहिता सर्वज्ञः सर्वदृक् सर्वशक्तिर्ज्ञानबलर्द्धिमान् । अन्यूनश्चाप्यवृद्धिश्च स्वाधीनोऽनादिमान् वशी । क्लमतन्द्रीभयक्रोध कामादिभिरसंयुतः निरवद्यः परः प्राप्तेः निरधिष्ठोऽक्षरक्रम इति एवमेव महाशब्दो मैत्रेयभगवानिति परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ज्ञानशक्तिबलैश्वर्य्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिरित्यनेन सर्वज्ञः सर्वदर्शी सर्वेश्वरः सर्वशक्तिः समृद्धिमानेव निर्दोषो निरधिष्ठोनिरवद्यः ये भगवन्तं वासुदेवमेवं विदुस्त एव तं विदुरिति वाक्यं ह्युपबृंहितं हि ज्ञायते हेयप्रत्यनीकत्वकल्याणगुणकत्वनिमित्तस्य भगवच्छब्दस्य वासुदेवासाधारणत्वप्रतीतिर्ह्युभयत्र प्रतीयते, तथा नासिद्धस्य कृतमस्तीह

किञ्चिन्नासंयतेष्विन्द्रियेष्वेव सिद्धिः । न संयमोऽस्त्यपरित्यज्य कामान् कामत्यागोनान्तरेणाप्रमादम् । अप्रमादो ज्ञानमयोज्ञानं प्रकृतिसंहितं प्रकृतौ कर्म संदध्यात्तथा नित्यं कृतं भवेदिति इयं च श्रुतिरुद्योगपर्वण्युपबृंहिता नाकृतात्मा कृतात्मानं जातु विद्याज्जनार्दनम् । आत्मनस्तु क्रियोपायो नान्यत्रेन्द्रियनिग्रहात् । इन्द्रियाणामुदीर्णानां कामत्यागोऽप्रमादतः अप्रमादो भीमसेन ज्ञानयोनिरसंशयमिति एवं विरुद्धतयाऽभिमतानामर्थानां प्रत्यक्षश्रुतिमूलत्वात् श्रीपञ्चरात्रस्य कार्त्स्न्येन श्रुत्यविरुद्धत्वरूपं साङ्ख्यागमादिभ्यो वैलक्षण्यं सिद्धम् । अत एव ग्रन्थनिर्माणानुप्रविष्टपुरुषाशयदोषनिबन्धनाविरुद्धार्थप्रतीतिरित्यप्ययुक्तम् अतो विरुद्धांशस्त्यज्यत इति सिद्धान्तोऽनुपपन्नः । साङ्ख्याद्यागमानां चावान्तरग्रन्थकर्तृबुद्धिदोषाद्विरुद्धार्थान्वयश्चतुर्णामप्यागमानामादिवक्तृप्रणीतानां न क्वचिदपि वेदविरोध इति साम्यं चानुपपन्नं प्रत्यक्षहेतवोयोगाः साङ्ख्याः शास्त्रविनिश्चया इति तुल्यं शौचं तयोर्युक्तं दया भूतेषु चानघ ? व्रतानां धारणं तुल्यं दर्शनं न समं तयोरिति च मोक्षोपाये । बहवः पुरुषा राजन् साङ्ख्ययोगविचारिणां नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वहेति तत्त्वे च परस्परवैषम्यस्य श्रुत्यर्थवैरूप्यस्य च भगवता व्यासेनोक्तत्वात्, अत्र हि साक्षात्कारान्मोक्षः शास्त्रजन्यविवेकान्मोक्षः, इत्युपायवैषम्यं दृश्यते परमात्मन उपादानत्वानभ्युपगमश्च वेदान्ताद्वैषम्यं प्रतीयते, न ह्यर्वाचीनग्रन्थकारमतं व्यासेनोच्यते । ननु मोक्षधर्मे "एवं तत्त्वमिदं कृत्स्नं साङ्ख्यानां विदितात्मनां यदुक्तं यतिभिर्मुख्यैः कपिलादिभिरीश्वरैः । यस्मिन् विभ्रमाः केचिद् दृश्यन्ते मनुजर्षभ । गुणाश्च यस्मिन् बहवो दोषहानिश्च केवलेति कपिलादिमतस्य विभ्रमादिदोषराहित्यं साद्गुण्यं चोक्तं तथा निष्ठा नारायण इत्युक्त्वा तमेवं शास्त्रकर्त्तारः प्रवदन्ति मनीषिण इति कपिलादिभिर्नारायणस्य प्रतिपादितत्वमुक्तम् अतः श्रुत्यर्थवैरूप्यमवान्तरवक्तृदोषकृतमिति चेन्न तत्र तत्र भगवता व्यासेन भीष्मवाक्यमुखेन स्वमतेन सिद्धान्तस्योक्तत्वात्, विरोधस्यावान्तरवक्तृमूलकत्वे कपिलाद्यादिवक्तृमतेनैव सिद्धान्तो वाच्यः प्रत्यक्षहेतवो योगाः साङ्ख्याः शास्त्रविनिश्चयाः

इति तत्तदभिमतस्यैकैकस्योपायत्वमुक्त्वा उभे चैते मते ज्ञाने नृपते शिष्टसंमते । अनुष्ठिते यथाशास्त्रं नयेतां परमां गतिमिति, समुच्चित्यानुष्ठिताभ्यामुभाभ्यां पुरुषार्थ इति हि सिद्धान्तितं तथा नैते इच्छन्ति साङ्ख्यानां योगानां च परमात्मन उपादानत्वानभ्युपगममुक्त्वा बहूनां पुरुषाणां हि यथैकायोनिरुच्यते तथा तं पुरुषं विश्वमाख्यास्यामि गुणातिगमित्यारभ्य समासतस्तु यद्व्यासः पुरुषैकात्म्यमुक्तवानिति स्वमतेन सिद्धान्त उक्तः, न तु कपिलहिरण्यगर्भादिमतेन पुरुषाणाम् ऐकात्म्यमेकेनात्मनात्मना युक्तत्वम् अनेन जगच्छरीरकः परमात्मा हि सर्वोपादानमित्युक्तं भवति, तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केन चित् क्वचिदिति पुरुषैकात्म्यशब्दविवक्षितस्य स्वेनैव व्याख्यातत्वात् बहूनां पुरुषाणामिति पूर्वमुक्तत्वाच्च एवं सिद्धान्तदशायां कपिलाद्यभिमतत्ववर्णनाभावात्तदागमेष्वर्थवैरूप्यमवर्जनीयं तर्हि कपिलादीनां शास्त्रकर्त्तॄणां भ्रमराहित्यवचनं नारायणप्रतिपादकत्ववचनं च कथं घटत इति चेत् उच्यते कथम् अवान्तरकर्तॄणां भ्रमराहित्यवचनं घटते कपिलादिभिरित्यादि-शब्देन ह्यवान्तरवक्तार उच्यन्ते आदि-शब्दो हिरण्यगर्भादिपर इति चेन्न एवं तत्त्वमिदं कृत्स्नं साङ्ख्यानां विदितात्मनां यदुक्तं कपिलादिभिः यस्मिन् न विभ्रमाः केचिदिति यच्छब्दस्य प्रकृतसाङ्ख्यमतपरामर्शित्वात्, अत आसुरिपञ्चशिखादीनामपि भ्रमाभावस्योक्तत्वात् अवान्तरवक्तॄष्वपि भ्रान्त्यारोपोऽनुपपन्नः नैत इच्छन्तीत्यद्यतनतार्किका विवक्षितार्थ इति चेन्न इच्छन्तीति वर्त्तमाननिर्देशविरोधात् तदात्वेऽपि कुतार्किकाः सन्तीति चेन्न साङ्ख्ययोगविचारिणामिति निर्देशस्य कुतार्किकविषयत्वानुपपत्तेः, एतच्छब्देन हि साङ्ख्ययोगविचारिणः परामृश्यन्ते यदि नेच्छन्तीत्युक्तिः कुतार्किकविषया तदा सिद्धान्ते निमित्तोपादानैक्यं कपिलहिरण्यगर्भोक्तमिति वक्तव्यं न च तथोक्तम्, अतोऽवान्तरवक्तृपरिकल्पनयाऽर्थभेदनिर्वाहोऽनुपपन्नः । ननु तमेव शास्त्रकर्त्तारः प्रवदन्ति इति यस्मिन् न विभ्रमाः केचिदिति शास्त्रप्रणादिवक्तृषु भ्रमे प्रतिषिद्धे मतभेदस्यावान्तरवक्तृमूलत्वे चानु-

पपत्तेऽर्थविरोधः सूत्रकारेण तन्निरसनं च कथं घटत इति चेद् वय-
मपि कथं घटत इति ब्रूमः उभयेषामप्यनुपपत्तेः परिहरणीयत्वाविशेषात्
यद्युच्येत भ्रमादिदोषरहितानामपि वक्तॄणां तदा स्वविवक्षितादधिका-
र्थान्तराकथनं विवक्षितेऽर्थे परोचनार्थोऽतिवादश्च सम्भवतः यथा निर्दो-
षस्यापि वेदस्य हि वेदोदर्शपूर्णमासप्रकरणे वाजपेयं प्रशंसति, नापि कर्म-
प्रकरणे ब्रह्म प्रतिपादयति अतिवदति च प्रतिपिपादयिषितमर्थम् "अक्षय्यं
ह वै चातुर्मास्ययाजिनः सुकृतं भवति न किरिन्द्रत्वदुत्तरोनज्यायान्
अस्ति वृत्रहन्" इत्यादिना, न चैतावता वेदस्य कर्मान्तरतत्त्वान्तरं
चानभिमतमिष्यते अन्यत्र वेदेनैव कर्मान्तरतत्त्वान्तरप्रतिपादनात्, एवं
कपिलादयोऽपि स्वविवक्षितादधिकं तदानीं न वदन्ति विवक्षित-
मतिवदन्ति च साङ्ख्यशास्त्रे प्रकृतिप्राकृतपुरुषतत्त्वविवेकमात्रस्य विव-
क्षितत्वादधिकाप्रतिपादनं नास्मात्परं किञ्चिदित्यतिवादश्च भवति योगे
च यमनियमाद्यङ्गकस्य समाधिपर्यन्तस्य योगस्य तत्र ध्येयभूतस्येश्वर-
स्य क्लेशकर्मादिदोषास्पर्शस्य च प्रतिपिपादयिषितत्वादुपादानत्वानुक्तिः,
न चैतावता तद्वक्तॄणाम् ईश्वरस्तस्योपादानत्वं चानभिमतं भवति अ-
न्यत्र कपिलासुरिसंवादब्रह्मरुद्रसंवादादिषु कपिलहिरण्यगर्भादिभिरेवेश्व-
रस्य तस्य जगदुपादानभावस्य च प्रतिपादितत्वात्, न च तदनुक्तिमा-
त्रेणातिवाददर्शनाच्च साङ्ख्ययोगयोरनादरणीयता च भवति तयोरुपजीव्य-
भूयिष्ठत्वाद्वेदान्तार्थप्रतिपत्त्यनुष्ठानयोस्तदाकाङ्क्षासम्भवात् विप्रलिप्सा-
दिदोषविरहदशायां प्रणीतत्वाच्च, न हि शब्दानुशासने कर्मकलापब्रह्म-
विद्ययोरप्रतिपादनात्तदनादरणीयत्वं, तद्वत् एवं बाहुश्रुत्येन तद्वक्तॄणां हृद-
यमजानन्तमापातप्रतिपन्नमर्थं तात्त्विकमुपपन्नमन्यमानास्तार्किकमन्या ये
प्रत्यवतिष्ठन्ते तेषामुपदेशवशीकार्यताभावात् साङ्ख्यागमानामापातप्रति-
पन्नार्थमात्रपरत्वमन्वारुह्य सूत्रकारैस्तन्निरसनं युक्तं मीमांसाशास्त्रस्य न्याय-
निबन्धनत्वादितिहासपुराणानां तूपदेशप्रधानत्वात्तर्ककार्कश्यं विहाय कपि-
लादीनां प्रबन्धान्तरेषु ब्रह्मजगदुपादानत्वादिप्रतिपादनाविरोधेन सांख्य-
योगार्थप्रतिपादनमपि युक्तं तमेव शास्त्रकर्तारः प्रवदन्ति मनीषिण इति

वचनं च प्रबन्धान्तरेषु कपिलादिभिः परमात्मसद्भावजगदुपादानत्वादिप्रतिपादनं निष्ठानिर्णयस्य हेतुत्वेन वदन्ति भ्रमाभावश्चातिवदनातिरिक्तत्व विषय इति सर्वं संगतम् । एवं सांख्ययोगपाशुपतानामेकदेशप्रामाण्ये नाविरुद्धांशे प्रमाणत्वं तुल्यमिति, एवं तर्हि अतिवदनस्य विवक्षामूलत्वाद्विवक्षाविशेषहेतुमनोवृत्तेश्च गुणत्रयमूलत्वादतिवदनस्योपेक्ष्यत्वाच्च कारणदोषबाधकप्रत्यययावुक्तौ स्यातां, वेदे तु वक्तुरभावात् प्रबलतदतिरिक्तवचनाभावाच्च तदुभयासम्भवः, पञ्चरात्रे तु नार्थवादरूपमपि वेदविरुद्धं वचनं दृश्यते अतः सांख्ययोगपाशुपतपञ्चरात्राणां च वैषम्यं दुरपह्नवं तत्र मुमुक्षोरुपजीव्यभूयिष्ठत्वाभावात् परावरतत्त्वविपर्यासनिषिद्धानुष्ठानतदुभयासंभवनमिश्रिताल्पप्रधानप्रतिपाद्यविरोधस्य दुष्परिहरत्वाच्च पाशुपतमतस्य क्वचिदविरोधेऽपि नात्यन्तादरणीयत्वं सांख्ययोगयोस्तु कतिपयार्थानुक्तेस्त्याज्यताहेतुत्वाभावादापाततो वेदविरोधभ्रमहेतुभूतांशपरित्यागेनादरणीयत्वादेकदेशप्रामाण्येन प्रमाणत्वं पञ्चरात्रे त्वनुक्तांशाभावाद्वेदविरोधभ्रमहेतुभूतातिवादाभावाद्विरुद्धतया भावानामर्थानां चाधीयमानश्रुतिमूलत्वसमर्थनाच्च कार्त्स्न्येन वेदाविरोधात् साकल्येन वेदवत् प्रमाणत्वमिति, अतो भाष्यकारोक्त एवाधिकरणनिष्कर्ष उपपन्नतरः ॥ परे तु विज्ञानादीति विज्ञानैश्वर्य्यशक्त्यादिगुणसद्भावेन सर्वेऽपि वासुदेवा इति चेत् एवमप्युत्पत्त्यसंभवाप्रतिषेधः कथं वासुदेवादीनां चतुर्णां परस्परं भिन्नत्वमयुक्तम् अनेकेश्वरकल्पनानर्थक्यात् एकस्य चत्वारो व्यूहा इति चेत्तदुत्पत्त्यसम्भवः पूर्णषाड्गुण्यतया सर्वेषां तुल्यत्वाभ्युपगमात् असत्यतिशये कार्य्यकारणभावानक्लृप्तेः चतुःसंख्यत्वनियमश्चानुपपन्नः ब्रह्मादिस्तम्बपर्यन्तस्य समस्तस्य जगतो भगवद्व्यूहत्वावगमाद्विप्रतिषेधाच्चेति ज्ञानबलैश्वर्य्यशक्तिवीर्य्यतेजांसि गुणाः आत्मान एवैते भगवन्तो वासुदेवा इति गुणगुणित्वकल्पनादिलक्षणविप्रतिषेधाच्छ्रुतिविप्रतिषेधाच्चासंगतैषा कल्पनेति आहुः तन्न विज्ञानादिशब्दस्य भाष्योक्तनिर्वाहौचित्यं पूर्वमेव दर्शितम् एकं वा संयोगरूपचोदनाख्याविशेषादित्यादिष्विव वा-शब्दस्य सिद्धान्तद्योतकत्वात्, तदप्रतिषेध-शब्दस्योत्पत्त्यसंभवाप्रति-

षेधवाचित्वमयुक्तम् । ननु तच्छब्दो हि प्रकृतपरामर्शी उत्पत्त्यसंभवः प्रकृतः न तु प्रामाण्यमिति चेन्न आद्यसूत्रद्वयस्याप्रामाण्यपरत्वे पक्षविपर्यासद्योतकेन वा-शब्देन प्रामाण्यस्योपस्थापिततया धीस्थस्य तस्य तच्छब्देन परामर्शोपपत्तेः । यद्वा परीक्ष्यमाणं पञ्चरात्रशास्त्रं तावद् बुद्धिस्थम् अबुद्धिस्थस्य परीक्षणायोगात् अतो बुद्धिस्थं शास्त्रं तच्छब्देन परामृश्य तस्याप्रतिषेध इत्युक्ते प्रामाण्याप्रतिषेध इति फलितं स्यात्, अतः फलितार्थपरं भाष्यमिति न किञ्चिदप्यस्वारस्यं चतुर्णामत्यन्तभेदो नाभिमतः एकव्यूहत्वे कार्य्यकारणयोरतिशयाभावादुत्पत्त्यसंभव इति चायुक्तं तत्तद्विग्रहसंस्थानविशेषकार्य्यविशेषरूपातिशयसंभवात् । यदि त्वया कार्य्यकारणत्वतदसाधारणार्थक्रियारूपातिशयोऽवश्यंभावितयाऽभिमतः तर्हि सोऽस्त्येव, यदि तदतिरिक्तातिशयः स तु मृद्घटसुवर्णकुण्डलादिष्वपि नास्तीति व्याप्तिशून्यतया तर्काभासता सर्वेषां पूर्णषाड्गुण्यत्वे कार्य्यव्यवस्थायाः को हेतुरिति चेत् ईश्वरस्वातन्त्र्यमेवेति ब्रूमः । सदा सर्वज्ञस्य सर्वशक्तेरीश्वरस्य कालविशेषे सृष्टिसंहारादिव्यवस्थाभिः स्वातन्त्र्यकृता तद्वत् समस्तजगत ईश्वरव्यूहत्वावगमाच्चतुःसंख्यत्वनियमहानिरिति चासङ्गतं कर्मवश्यानां क्षेत्रज्ञानामकर्मवश्येश्वरव्यूहत्वानुपपत्तेः नृसंहवामनादिभिः संख्यानियमभङ्ग इति चेन्न तेषां विभवकोट्यनुप्रवेशात् यदा भगवदंशत्वं व्यूह-शब्देन विवक्षितं तदा चतुःसंख्यानियमोऽप्यनभिमत इति नानिष्टापत्तिः यदा कार्य्यविशेषावच्छिन्नांशविशेषपरो व्यूहशब्दः तदा चतुःसंख्यानियम उपपद्यत इति तत्रानियम प्रसञ्जनमशास्त्रसिद्धव्यूहशब्दार्थानभिज्ञत्वकृतं गुणगुणित्वकल्पनानुपपत्तिविप्रतिषेधोऽपि स्वाज्ञानविजृम्भितः तत्र शास्त्रे गुणस्य गुणित्वानभ्युपगमात्, यदि क्वचित् ज्ञानादिशब्देन वासुदेवादिसामानाधिकरण्यं दृष्टं न तत्रापि दोषः श्रुतिषु परब्रह्मसमानाधिकरणज्ञानानन्दादिशब्दानामिव तद्गुणसारत्वात्तदुपपत्तेः, अन्यथा यः सर्वज्ञः सर्ववित् सत्यं ज्ञानमित्यादिश्रुतिष्वप्यप्रामाण्यं प्रसजेत्, आपाततोविप्रतिषेधप्रतिपत्तिसामान्यात् वेदनिन्दादिशङ्कापरिहारस्तु दर्शितः अतः श्रुतिविप्रतिषेधासिद्धिः, अतः परोक्तार्थोऽनुप-

पन्नः । अन्ये त्वेवं वर्णयन्ति पूर्वाधिकरणेषु वादिनां तर्कावष्टम्भाः शिष्टापरिगृहीतबाह्यागमाश्च निरस्ताः । अत्र शिष्टपरिगृहीताः साङ्ख्ययोगपाशुपतपञ्चरात्रागमाश्चत्वारः परीक्ष्यन्ते अभात्रे वेदमन्त्राणां पञ्चरात्रोदितेन हीन्त्यादिवचनान्महाभारते निष्ठानिर्णयाध्यायाच्च शिष्टपरिगृहीतत्वं चतुर्णां सिद्धं तत्र स्वतः सर्वज्ञवैदिकेश्वरांशभूतत्वाद्धिरण्यगर्भादीनामीश्वरज्ञानमूलतया साङ्ख्ययोगाद्यागमा वेदविरोधेऽपि प्रमाणमिति पूर्वपक्षं कृत्वा तेषामीश्वराणां सर्वज्ञत्वेऽपि तेषां तत्त्वार्थोपदेष्टृत्वेऽपि ग्रन्थनिर्माणे पुरुषान्तराणाम् अप्यनुप्रवेशात्तेषामज्ञानरागद्वेषादिसम्भवेन सावकाशत्वाद्वेदाविरुद्धांशः प्रमाणं विरुद्धांशस्त्वप्रमाणमिति चाहुः । तत्र चतुर्णामपि वेदानुसारित्वनिर्णयस्य प्रदर्शनार्थं पञ्चरात्रमवलम्ब्य सूत्रकारेण चिन्तितमित्युक्तं, सूत्रयोजनायां च विज्ञानादिभावे वा तदप्रतिषेध इत्यत्र विज्ञानादिषाड्गुण्योद्भवानुद्भवभेदेन विभागमात्रं सङ्कर्षणादीनां न तु मुख्यं जन्म जीवमनोऽहङ्काराधिष्ठातारश्च इति चेत् उच्यते एवं तर्हि नैतन्मतं विप्रतिषिध्यते विरोधाभावात्, श्रुतिविरुद्धं तु विप्रतिषिध्यते विप्रतिषेधाच्चेति सर्वसिद्धान्तैर्वेदानुसारणीयः अन्यथा चतुर्णां परस्परविप्रतिषेधादित्युक्तम्, अत्रोच्यते विप्रतिषेधाच्चेति सूत्रस्य तदप्रतिषेधशब्दोक्तपञ्चरात्राप्रतिषेधोपपादकत्वे सत्येवान्वयस्वारस्यं सर्वैः सिद्धान्तैर्वेदोऽनुसरणीय इति स्वमतिपरिकल्पितप्रतिज्ञावाक्यान्तराध्याहारस्तु ग्रन्थशय्यामार्जवेनानुसंदधानानाम्नधियमधिरोहति अर्थशरीरं च निरूप्यं स्मृतिपाद एव नान्यस्मृत्यनवकाशदोषप्रसङ्गादिति मन्वादिस्मृतिविरोधे सांख्यस्मृतिदौर्बल्ये प्रतिपादिते कथं साङ्ख्यादिस्मृतीनां श्रुतिविरोधेऽपि प्रामाण्यशङ्कोत्थातुमलं चतुर्णामागमानां प्रदर्शनार्थं पञ्चरात्रमधिकृत्य निरूपितमिति चानुपपन्नं साङ्ख्यवैशेषिकसुगतादिमतानामपि प्रदर्शनार्थं तेष्वन्यतमपक्षमात्रप्रतिक्षेपस्याकृतत्वात् तत्र हि निरसनीययुक्तिभेदान्निरासकभेदाच्चाधिकरणभेदः कृतः, एवं जीवाद्युत्पत्तेरागमान्तरेष्वनवगतत्वात् तदसम्भवेन तत्प्रामाण्यप्रतिक्षेपोऽपि न सम्भवति श्रुतिविप्रतिषेधयुक्त्या सर्वं प्रतिक्षिप्तं भवतीति

चेन्न विप्रतिषेधादिति पदस्य तदप्रतिषेध इत्यनेनान्वयात् सर्वागमप्राब-
ल्यप्रतिक्षेपकत्वासिद्धेः । किञ्चाविरोधाधिकरणन्यायेन श्रुतिविरुद्धस्मृति-
प्रामाण्यस्य विध्वस्तत्वादिह तन्निरासवैयर्थ्यं च असाधारणदूषणप्रदर्श-
नार्थोऽयमारम्भ इति चेन्न तर्हि पञ्चरात्रेतरागमानामप्यसाधारणदूषण-
ज्ञापनाय किमित्यधिकरणान्तरञ्चयन्न निबद्धं तत्पक्षमूलयुक्तिनिरासादेव
तन्मूलागमप्रतिक्षेपस्यापि सिद्धेरिति चेत् किं चत्वारोऽप्यागमा । एक-
युक्तिमूलाः? उत भिन्नयुक्तिमूलाः? न प्रथमः, विरुद्धानां तुल्ययुक्तिमूल-
त्वानुपपत्तेः, अनेकयुक्तिमूलत्वे त्वधिकरणान्तरारम्भप्रसङ्गः एकनिरासात्
सर्वनिरासः कृतः स्यादिति चेन्न जीवोत्पत्त्यादीनां तेष्वभावेनोत्पत्त्यसम्भ-
वादिना निरासायोगात् अतः प्रदर्शनार्थत्वमयुक्तं, शिष्टपरिग्रहसाम्यं च
न भवति अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन वेत्यत्र पाशुपततन्त्राप्रसक्तेः
महाभारते मोक्षधर्मे पाशुपततन्त्रोक्ततत्त्वप्रक्रियास्तन्निष्ठाप्रकारस्य च
साक्षाद्वा प्रणाड्या वा तस्य मोक्षोपयोगस्य च संक्षेपेण विस्तरेण वानुप-
न्यासादेव न तुल्यतया परिग्रहः वैराग्यजननद्वारा साक्षात्कारनिष्पादनद्वारा
च साङ्ख्यायोगयोर्दर्शितः, इदं महोपनिषदं चतुर्वेदसमन्वितं साङ्ख्य-
योगकृतान्तेनेति कृत्स्नस्य पञ्चरात्रस्य वेदवेदान्तसारत्वं तदविरुद्धसाङ्ख्य-
योगार्थान्वितत्वं चोक्तं साङ्ख्ययोगयोश्च तत्त्वान्तर्भावानन्तर्भावाभ्याम-
विरोधं नीत्वा प्रत्यक्षहेतवो योगः शास्त्रविनिश्चयाः इत्युपायांशे वैषम्यं
दर्शयित्वान्तर्भावाभ्यां तत्त्वसङ्ख्यान्यूनाधिकभावविरोधमपि दर्शयित्वा
बहवः पुरुषा राजन् साङ्ख्ययोगविचारिणां नैत इच्छन्ति पुरुषमेकं कुरुकु-
लोद्वह इति तयोरौपनिषदसिद्धान्ताद्वैषम्यं च दर्शयित्वा नारायणपरं
साङ्ख्यं योगो नारायणात्मक इति तयोर्नारायणनिष्ठत्वं च वदता
भगवता व्यासेन विरुद्धांशाननादृत्य तयोरौपनिषदमर्मनिष्ठैरुपजीव्यं च
दर्शितमिति अविरुद्धांशे प्रामाण्यमुपजीव्यार्थभूयिष्ठं त्वचोक्तम् अतः पञ्च-
रात्रसाङ्ख्ययोगपाशुपतानां कार्त्स्न्येन प्रमाणत्वं विरुद्धांशप्रहाणेनोपजी-
व्यत्वमुपजीव्यार्थभूयिष्ठत्वाभावं च पश्यतां कथं च तुल्यतया परिग्रह-
शङ्का धियमधिरोहेत् निष्ठानिर्णयस्तु वस्तुस्थित्यभिप्रायेण कृतः ज्ञाना-
न्येतानि राजर्षे विद्धि नानामतानि वा इति हि तत्रैवोक्तं किं च तत्रापि

नारायणस्यैव नित्यत्व कथनं साङ्ख्ययोगपाशुपतेभ्यः पञ्चरात्रस्य वैलक्षण्यं द्योतयति तदनुरोधेन साङ्ख्याद्यागमानां निष्ठाया निर्णीततया पञ्चरात्रस्य साङ्ख्याद्यागमैरनुसरणीयत्वप्रतीतेस्तुल्यत्वेऽनैकार्थत्वे विवक्षिते सच्चिद्रूपवस्तुमात्रनिष्ठत्वं हि सर्वागमानां वक्तव्यं न च तथा कृतं यथा तन्त्रान्तरानुसारेण विषयनिर्णयाकरणात् न तन्त्रान्तरप्रधानताऽवगमः एवं च वस्तुमात्रनिष्ठत्वाप्रतिपादनात्तत्सत्त्वमपि दूरतो निरस्तम् अतः पञ्चरात्रस्य तन्त्रान्तरैरनुविधेयतया तेभ्यो वैलक्षण्यं वेदतुल्यत्वं च सिद्धमिति न परिग्रहतुल्यता न हन्तव्यानि हेतुभिरिति वचनं तु सुगतागमादिव्यावृत्तिपरं न तु परिगणितानामपि पञ्चानां साम्यपरं निरपेक्षस्यानुविधेयस्य वेदस्य सापेक्षाणमनुविधायिनामितरागमानां च साम्यानुपपत्तेः, प्रमाणतामात्रेण साम्यमिति चेन्न कात्स्न्र्येन प्रमाणस्य वेदस्याविरुद्धांशे प्रमाणानां साङ्ख्यागमादीनां च साम्यानुपपत्तेः क्वचित्प्रमितिजननायोगव्यवच्छेदेन साम्यमिति चेन्न सुगतागमादेरपि तुल्यत्वात् सुगतागमादिष्वविरुद्धांशो विप्रलिप्साऽनिवेशित इति करणदोषात्तत्रापि न मानत्वं साङ्ख्यागमादिषु विरुद्धांशस्य कारणदोषाभावात् प्रामाण्यमभिहितमिति चेत्तर्ह्यनेनैव कारणेन सुगतागमादिव्यावृत्तिरूपं साम्यमेव त्वयाभिहितमित्यागतोऽस्यस्मदीयं मार्गमन्यन्यथाऽनुविधेयानुविधायिनां तुल्यप्रामाण्यपरत्वे सति इदमेव वचनं भ्रान्तिमूलं स्यात् अतोऽस्य वाक्यस्य सुगतादिमतव्यावृत्तिपरत्वान्न पञ्चरात्रवैलक्षण्यविरोधित्वं यतः पञ्चरात्रस्य वेदवेदान्ततदविरुद्धप्रबन्धान्तरार्थप्रतिपादकतया कात्स्न्र्येन प्रमाणत्वम् अत एव पञ्चरात्रेऽपि विरुद्धांशस्त्याज्य इति सिद्धान्तोऽप्यनुपपन्नः उत्पत्त्यसंभवाधिकरणं समाप्तम् ॥

इति श्रुतप्रकाशिकायां द्वितीयस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## अथ द्वितीयाध्यायस्य तृतीयः पाद आरभ्यते ॥

---

वियदधिकरणम् ।

### सू० न वियदश्रुतेः ॥ १ ॥

सू० सांख्यादिवेदबाह्यतन्त्राणां न्यायाभासमूलतया विप्रतिषेधाच्च असामञ्जस्यमुक्तम्, इदानीं स्वपक्षस्य विप्रतिषे-

धादिदोषगन्धाभावख्यापनाय ब्रह्मकार्य्यतयाऽभिमतचिदचिदात्मकप्रपञ्चस्य कार्य्यताप्रकारो विशोध्यते ।

टी० सू० न वियदश्रुतेः, पादसङ्गतिमाह "साङ्ख्यादी"ति, अयमर्थः—द्वितीयाध्यायस्य प्रथमे पादे कारणविषये परोक्तदोषाः परिहृताः अत्र तृतीये कार्य्यविषये परोक्तदोषाः परिह्रियन्ते तस्मात्तृतीयः पादः प्रथमेन सङ्गतः, द्वितीयस्तु परपक्षप्रतिक्षेपकपरत्वाच्चरमभावीति चेत् कारणविषये परोक्तदोषपरिहारपक्षप्रतिक्षेपौ सङ्गतौ अनन्तरं कार्य्यविषयपरोक्तदोषपरिहारो युक्त इति सङ्गतिरितीमर्थमभिप्रेत्य ब्रह्मकार्य्यतयाभिमतेत्युक्तं, तत्र चिदचिद्वस्तुनोः कार्य्यत्वं किमेकरूप? मुत भिन्नरूप? मिति संशयिते सति एकरूपमिति पूर्वपक्षः, भिन्नरूपमिति सिद्धान्तश्च पादद्वयेन क्रियत इतीमर्थमभिप्रेत्य चिदचिदात्मकप्रपञ्चस्येत्युक्तं, तत्र प्रथमाधिकरणस्य संशयमाह—

भू० तच्च वियदुत्पद्यते न वेति संशय्यते, किं युक्तं न वियदुत्पद्यत इति, कुतः अश्रुतेः, सम्भावितस्य हि श्रवणसम्भवः, असम्भावितस्य तु गगनकुसुमवियदुत्पत्त्यादेः शब्दाभिधेयत्वं न सम्भवति, न खलु निरवयवस्य सर्वगतस्याकाशस्यात्मन इव उत्पत्तिर्निरूपयितुं शक्यते, अत एव चोत्पत्त्यसम्भवात् छान्दोग्ये सृष्टिप्रकरणे तेजःप्रभृतीनामेवोत्पत्तिराम्नायते "तदैक्षत बहु स्यां प्रजायेये"ति "तत्तेजोऽसृजते"ति तैत्तिरीयिकाथर्वणादिषु, तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापः इत्यादिषु श्रूयमाणा वियदुत्पत्तिरर्थविरोधाद्बाध्यत इत्येवं प्राप्तेऽभिधीयते ॥

## सू० अस्ति तु ॥ २ ॥

अस्ति त्वाकाशस्योत्पत्तिः ।

टी० "तत्रे"ति, किं वियदुत्पद्यते ने? ति संशयः तदर्थमात्मन आकाशः सम्भूत इति वाक्यं वियदुत्पत्तिं प्रतिपादयति ने? ति सम्भूत-शब्दो मुख्योत्पत्तिपरः? उत गौणः? इति अन्यत्र निरवयवद्रव्यस्योत्पत्तिदर्शनमाकाशस्योत्पत्त्यनर्हतामवगमयति ने? ति यदाऽवगमयति तदा सम्भूत-शब्दस्य गौणत्वाद्वाक्यस्योत्पत्तिप्रतिपादनासामर्थ्याच्च वियदुत्पद्यत इति भवति, यदोत्पत्त्यनर्हतां नावगमयति तदा सम्भूतशब्दस्य मुख्यवृत्तितया वाक्यस्योत्पत्तिप्रतिपादकत्वाद्वियदुत्पद्यत इति सिध्यति, श्रुतिः श्रवणं कथमश्रुतिः आत्मन आकाशः सम्भूत इति हि श्रुतिरिति शङ्कायामश्रुतेरसिद्धिपरिहाराय श्रुति-शब्दार्थमाह "श्रवणसम्भव"इति, श्रवणं शब्दजन्यप्रमितिः यथा श्रोतव्य इत्यादिषु शब्दजन्यप्रमितिविषयत्वासम्भवादित्यर्थः, न हि शब्दो योग्यार्थप्रमितिजननशक्तः आदित्यो यूप इत्यादिष्वदर्शनादिति भावः । यद्वोत्पत्तिप्रतिपादनसमर्थश्रुतिवाक्याभावो विवक्षितः अश्रुतेरिति सम्भावितस्य हि श्रवणसम्भव इति सूत्राभिप्रायविवरणम्, एवं सति गौणीत्यनन्तरं श्रुतिनिर्देशस्वारस्यं स्यात् गगनकुसुमोपादानं दृष्टान्तत्वेन कृतम् । असम्भावितत्वमुपपादयति "न खल्वि"ति, निरवयवद्रव्यत्वात् सर्वगतत्वाच्चेति हेतुद्वयं विवक्षितं केवलतर्कस्य कालात्ययापदेशसम्भवात् तद्व्यावृत्त्यर्थं श्रुत्यर्थापत्तिमाह "अत एव चे"ति, तेजःसृष्टिप्राथम्यं श्रुत्यर्थापत्तिः तैत्तिरीयकेति तर्कविरुद्धश्रुतेरपि तर्कानुगृहीतश्रुतिः प्रबलेति भावः । सू॰ अस्ति तु, तु-शब्दाभिप्रेतं हेतुमाह—

सू० अतीन्द्रियार्थविषया हि श्रुतिः प्रमाणान्तराप्राप्तामपि वियदुत्पत्तिं प्रतिपादयितुं समर्थैव, न च श्रुतिप्रतिपन्नेऽर्थे तद्विरोधि निरवयवत्वादिहेतुकमप्यनुमानमुदेतुमलम्

आत्मनोऽप्यनुत्पत्तिर्न निरवयवत्वप्रयुक्तेति वक्ष्यते ॥ पुनश्चोदयति—

**सू० गौण्यसम्भवाच्छब्दाच्च ॥ ३ ॥**

तस्माद्वा एतस्मादात्मन आकाशः संभूत इत्यादि वियदुत्पत्तिश्रुतिर्गौणीति कल्पयितुं युक्तं तत्तेजोऽसृजतेति सिसृक्षोर्ब्रह्मणः प्रथमं तेज उत्पद्यत इति तेजउत्पत्तिप्राथम्येन वियदुत्पत्तिप्रतिपादनासम्भवात् वायुश्चान्तरिक्षं चैतदमृतमिति वियतोऽमृतत्वशब्दाच्च ।

टी० "अतीन्द्रिये"ति, श्रुतिरिति एतत्सूत्रान्यथासिद्धिपरेऽनन्तरसूत्रे गौणीति स्त्रीलिङ्गनिर्देशेनास्तीति श्रुतिः साधकतया विवक्षितेति भावः । किं प्रमाणान्तरागोचरत्वमयोग्यत्वम् ? उत प्रमाणान्तरबाधितत्वं ? प्रमाणान्तरागोचरत्वं चेत् तदुत्पत्तिप्रमितिजननहेतुरेव अतीन्द्रियार्थविषयत्वात् श्रुतेः, द्वितीये पक्षे बाधकप्रमाणं वक्तव्यं तच्च नास्ति धर्मिणः प्रत्यक्षसिद्धत्वमात्रेणागमावगतधर्मबाधश्चेद्यागादेः क्रियात्वात् स्वर्गसाधनत्वं न स्यात् यत्रानन्यथासिद्धप्रत्यक्षसिद्धधर्मविरुद्धधर्म आगमेन प्रतीतः तत्र यूपादित्यैक्यवच्छास्त्रं बाधितं स्यात् प्रत्यक्षस्य पूर्वभावित्वात् नात्र तथाधर्मविरुद्धोपलब्धिः धर्मिग्राहकं प्रमाणं प्रत्यक्षमनुमानं वा तदुभयमपि नित्यत्वानित्यत्वसाधारणमिति न तद्बाधः, अनुमानान्तरं चेत् कालात्ययापदिष्टत्वं कालविशेषावच्छिन्नस्यैव हि नभस उत्पत्तिरुच्यते नेदानीं कालविशेषावच्छिन्नं नभो नः प्रत्यक्षादिगोचरः किन्तु शास्त्रैकसमधिगम्यम् अतो धर्मिग्राहकमानबाधः निरवयवद्रव्यत्वहेतोर्महदादिष्वनैकान्त्यं विशेषणासिद्धिश्च वियदेकदेशोपादानेन पञ्चीकरणवचनात् "आकाशवायुतेजांसि सलिलं पृथिवी तथा । शब्दादिभिर्गुणैर्ब्रह्मन् संयुक्तान्युत्तरोत्तरै"रिति संयोगविशेषवचनाच्च सर्वगतद्रव्यत्वहेतोरपि विशेषणासिद्धिश्च स्यात् महदादीनां सद्भावः शास्त्रप्रामाण्यवादिभिरप्युपगन्तव्य

इत्यर्थः न चेत्यत्र कालात्ययापदेशोऽभिप्रेतः किं तर्ह्यात्मनोऽप्युत्पत्तिमत्त्वं स्यात् निरवयवद्रव्यत्वस्यासाधकत्वादित्यत्राह "आत्मनोऽपी"ति उत्तरसूत्रमवतारयति "पुनरि"ति, सू· गौण्यसम्भवाच्छब्दाच्च, गौणवृत्तेः शब्दधर्मत्वात् तत्रापि स्त्रीलिङ्गान्तत्वाच्च श्रुतिर्विशेष्या प्रस्तुतार्थवशात् श्रुतिविशेषावगम इत्यभिप्रायेणाह "तस्मादि"ति, तेजःप्रभृतेः पश्चात्र वियदुत्पत्तिः सम्भवति पूर्वमपि न तेजःप्राथम्यादित्यर्थः आकाशवत्सर्वगतश्च नित्य इत्यत्र व्याप्तिमात्रेण साम्यविवक्षाया अपि सम्भवात् आकाशशरीरं ब्रह्मेत्यादेः सूक्ष्मनिर्मलस्वरूपत्वाभिप्रायेण निर्वाहसम्भवाच्च पूर्वपक्षसाधकत्वेनानुपन्यासः पूर्वपक्षेऽवान्तरसाध्यविषयहेतुद्वयरूपत्वादसम्भवशब्दयोरेकसूत्रप्रतिपाद्यता, अतो न सूत्रभेदो युक्तः । उत्तरसूत्रशङ्कामाह—

सू० कथमेकस्य संभूतशब्दस्याकाशापेक्षया गौणत्वमग्न्याद्यपेक्षया मुख्यत्वमिति चेत्तत्राह—

## सू० स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ४ ॥

एकस्यैव तस्माद्वा एतस्मादात्मन आकाशः संभूत इत्याकाशे मुख्यत्वासम्भवात् गौणतया प्रयुक्तस्य संभूत—शब्दस्य वायोरग्निरित्यादिष्वनुषक्तस्य मुख्यत्वं स्यादेव ब्रह्मशब्दवत्, यथा ब्रह्म—शब्दः तस्मादेतद्ब्रह्म नामरूपमन्नं च जायत इत्यत्र प्रधाने गौणतया प्रयुक्तस्तस्मिन्नेव प्रकरणे तपसा चीयते ब्रह्म ततोऽन्नमभिजायत इति ब्रह्मणि मुख्यतया प्रयुज्यते तद्वत्, अनुषङ्गे च श्रवणावृत्ताविवाभिधानावृत्तिर्विद्यत एवेत्यर्थः ॥ परिहरति

## सू० प्रतिज्ञाहानिरव्यतिरेकात् ॥ ५ ॥

छान्दोग्यश्रुत्यनुसारेणान्यासां वियदुत्पत्तिवादिनीनां श्रुतीनां गौणत्वं कल्पयितुं न युज्यते, यतः छान्दोग्यश्रुत्यैव

वियदुत्पत्तिरङ्गीकृता येनाश्रुतं श्रुतमित्यादिना, ब्रह्मज्ञानेन सर्वज्ञानप्रतिज्ञानात्, तस्या हि प्रतिज्ञाया अहानिराकाशस्यापि ब्रह्मकार्य्यत्वेन तदव्यतिरेकादेव भवति ॥

टी० "कथ"मिति, सू० स्याच्चैकस्य ब्रह्मशब्दवत्, तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेत्यादिप्रयोगोऽनुसन्धेयः, अन्नं ब्रह्म आनन्दो ब्रह्मेति प्रयोगानुदाहरणं तस्य मुख्यामुख्यविषयत्वाभावात् अन्नादिष्वपि ब्रह्मबुद्धा हि ब्रह्मशब्दप्रयोगः ब्रह्म-शब्दोऽस्मिन् प्रकरणे द्विः प्रयुक्तः अत्र त्वनुषङ्गः तत्कथमेकस्य मुख्यत्वगौणत्वविभाग इत्यत्राह "अनुषङ्गे चे"ति, अनुषङ्गश्रवणावृत्त्योः फलमभिधानावृत्तिरेव अभिधानशब्देनात्र-मुख्यामुख्यसाधारणशब्दव्यापारमात्रं विवक्षितं बोधनार्थं ह्यनुषङ्गः, न ह्येकस्मिन् वाक्येऽनुषङ्गापेक्षाप्रयुक्तत्वात्, अतोऽनुषङ्गोवाक्यान्तरे वाक्यान्तरस्यस्य शब्दस्य गौणत्वं च युक्तं बोधनव्यापारभेदात्, सकृत्प्रयुक्तस्य हि मुख्यत्वगौणत्वविरोधः व्यापारैक्यात् न ह्येकबोधनव्यापारस्य मुख्यत्वगौणत्वे सम्भवतः, प्रयोगभेदेऽप्यविरोधोव्यापारभेदात् अतोऽनुषङ्गेऽपि व्यापारभेदात् मुख्यत्वगौणत्वाविरोधः, तस्मादर्थौचित्यायोभयत्रापि समाधिभङ्गः कार्य्य इति । राद्धान्तसूत्रमवतारयति 'परिहरती"ति, सू० प्रतिज्ञाहानिरव्यतिरेकात्, कार्य्यकारणभावाभावेऽपि नित्यसिद्धमुक्तात्मनामव्यतिरेकोब्रह्मशब्दशरीरत्वेन भवतीति तद्व्यावृत्त्यर्थं ब्रह्मकार्य्यत्वेन तदव्यतिरेकादित्युक्तं, मृत्पिण्डकार्य्यादिदृष्टान्तवशात् कार्य्यतयैवाव्यतिरेकोविवक्षित इति भावः ॥

## सू० शब्देभ्यः ॥ ६ ॥

भू० इतश्च वियदुत्पत्तिश्छान्दोग्ये प्रतीयते "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति प्राक् सृष्टेरेकत्वावधारणशब्दादैतदात्म्यमिदं सर्वमित्येवमादि-शब्देभ्यश्च कार्य्यत्वेन ब्रह्मणोऽव्यतिरेकप्रतीतेः, न च तत्तेजोऽसृजतेति तेजस

उत्पत्तिश्रुतिर्वियदुत्पत्तिं वारयति वियदुत्पत्त्यवचनमात्रेण तेजसः प्रतीयमानं प्राथम्यं श्रुत्यन्तरप्रतिपन्नां वियदुत्पत्तिं न निवारयितुमलम् ॥

**सू० यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥**

तु-शब्दश्चार्थे, ऐतदात्म्यमिदं सर्वमित्यादिभिराकाशस्य विकारत्ववचनेन तस्याकाशस्य ब्रह्मणोऽपि विभाग उत्पत्तिरप्युक्तैव लोकवत्, यथा लोके एते सर्व देवदत्तपुत्रा इत्यभिधाय तेषु केषांचित् तत उत्पत्तिवचनेन सर्वेषामुत्पत्तिरुक्ता स्यात् तद्वत्, एवं च सति वायुश्चान्तरिक्षं चैतदमृतमिति सुराणामिव चिरकालस्थायित्वाभिप्रायम् ॥

**सू० एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥**

अनेनैव हेतुना मातरिश्वनो वायोरप्युत्पत्तिर्व्याख्याता, वियन्मातरिश्वनोः पृथग्योगकरणं तेजोऽस्तथा श्चाहेति मातरिश्वनः परामर्शार्थम् ।

टी० सू० शब्देभ्यः, ऐतदात्म्यमिति वाक्यं कार्य्यभूतं कृत्स्नं कारणभूतब्रह्मात्मकमित्येतदर्थपरत्वादुपात्तम्, आत्म-शब्दोऽन्तर्यामिणमाह एतच्छब्देन कारणत्वं पूर्वप्रस्तुतं विवक्षितं यः कारणावस्थस्यात्मा स एव कार्य्यावस्थस्यापि जगत आत्मेत्यर्थः, आदि-शब्देन सन्मूलाः सौम्येमाः, सर्वं खल्विदं ब्रह्मेत्यादि विवक्षितं, न चेति, न हि घटोत्पत्तिवचनं पटोत्पत्तिं वारयतीत्यर्थः, प्राधान्यं वारयतीत्यत्राह "वियदुत्पत्ती"ति, प्राधान्यं नाम किं स्वकार्यापेक्षया पूर्वत्वं? मुत कार्य्यान्तरपूर्वकत्वाभावः? आद्ये वियदुत्पत्तिरबाधिता स्यात्, न द्वितीयः, पूर्वभाविकार्य्यान्तरनिषेधाश्रवणात् तेजस उत्पत्तिमात्रं श्रुतं नान्यानुत्पत्तिः, अतः प्राथम्यं न श्रुतम्, अतोऽश्रुतेन श्रुतप्रहाणमयुक्तं श्रुते-

नाश्रुतकल्पनं हि युक्तम् । किञ्चान्यानुत्पत्तिश्रवणेऽपि प्राथम्यं केनावगतम्? अन्योत्पत्तिवचनादिति चेत्तह्यार्थेन प्राधा[1]न्येन श्रुतोत्पत्तिबाधनमनुपपन्नम् । किञ्च कुत्र चित्कस्य चिदवचनमन्यत्रापि तत्प्रतिपत्तिं वारयति चेत् सर्वशाखाप्रत्ययनयोर्निर्विषयः स्यादिति भावः । सिद्धान्तेऽपि परमसाध्यहेतुत्वे सत्यसमस्तपदोपात्तत्वाच्छब्देभ्य इति सूत्रभेदः अवान्तरसाध्यविषयहेतुभेदानां परमसाध्येऽपि समस्तपदोपात्तहेतूनामपि ह्येकसूत्रप्रतिपाद्यं, दृष्टं, सू· यावद्विकारं तु विभागो लोकवत्, विकारत्वं कार्य्यत्वम्, ऐतदात्म्यमिदं सर्वमित्यादिभिरित्यत्रादि–शब्देन एकत्वावधारणादि विवक्षितम् । एवं च सतीति असंकुचितार्थत्वे वायोरप्यनुत्पत्तिप्रसङ्ग इति भावः सू· एतेन मातरिश्वा व्याख्यातमिदमति देशसूत्रम् अतो नाधिकाशङ्केत्यभिप्रायेणाह "पृथगि"ति वियन्मातरिश्वनोरुभयोरप्युत्पत्तिर्वक्तव्या तत्रैकसूत्रेण वक्तुं शक्येऽपि सूत्रपृथक्करणमुत्तरत्र परामर्शार्थमित्यर्थः । योगः सूत्रम् ॥

## सू० असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

भा० तु–शब्दोऽवधारणार्थः, असम्भवो ऽनुत्पत्तिः सतो ब्रह्मण एव तद्व्यतिरिक्तस्य कस्यचिदनुत्पत्तिर्न सम्भवति अनुपपत्तेः, एतदुक्तं भवति वियन्मातरिश्वनोरुत्पत्तिप्रतिपादनमुदाहरणार्थम् उत्पत्त्यसम्भवस्तु सतः परमकारणस्य परस्यैव ब्रह्मणः तद्व्यतिरिक्तस्य कृत्स्नस्याव्यक्तमहदहङ्कारतन्मात्रेन्द्रियवियत्पवनादिकस्य प्रपञ्चस्यैकविज्ञानेन सर्वविज्ञानप्रतिज्ञादिभिरवगतकार्य्यभावस्यानुपपत्तिर्नोपपद्यत इति । वियदधिकरणं समाप्तम् ॥

टी० सू· असम्भवस्तु सतोऽनुपपत्तेः, ननु न ब्रह्मणोऽनुत्पत्तिर्वक्तव्या ब्रह्मव्यतिरिक्तवियदादेरुत्पत्तिरुक्ता पुनरनुत्पत्त्यसम्भवः कथ[2]मुच्यते

१ प्राथम्ये नेति पा· ।
२ कथमुच्यते इति पा· ।

अनुपपत्तिश्च कस्येत्यत्राह "एतदुक्तं भवती"ति, महदादीनामनुत्पत्तिर्नि-षिध्यते अनुपपत्तिरेकविज्ञानेन सर्वविज्ञानप्रतिज्ञाहानेरित्यर्थः, आदि-शब्देनैकत्वावधारणादिर्विवक्षितः। परे तु वियदुत्पत्तेरनुत्पत्तेश्च श्रुतिसिद्धत्वाच्छ्रुतयो विप्रतिषिद्धा इति पूर्वः पक्षः, अनुत्पत्तिरेवेति न विप्रतिषेध इति सिद्धान्त्येकदेशी, उत्पत्तिरेवेति न विप्रतिषेध इति सार्वात्सिद्धान्तिन इत्य-धिकरणशरीरं वर्णयन्ति तत्र ब्रूमः विप्रतिषेधमात्रस्य पूर्वपक्षत्वमयुक्तं तस्य परमसाध्यत्वाभावात्, यथा कारणत्वेन आकाशादिष्विति अधिकरणस्य श्रुतिवैविध्यात् संशयमूलत्वेऽपि विप्रतिषेधेन हेतुना ब्रह्मकारणवादाना-दरेण प्रधानकारणवादस्य ज्यायस्त्वे पर्यवसितः पूर्वपक्षः, अतो विप्रति-षेधमात्रस्य पूर्वपक्षीकरणमयुक्तम्, अत एव हि नात्मा श्रुतेरित्यस्य च श्रुतिवैविध्यात् संशयमूलत्वेऽपि न विप्रतिषेधमात्रं पूर्वपक्षितम् अपि तूत्पत्तिं सिद्धान्त्येकदेशिमतं कृत्वा ऽनुत्पत्तिः सिद्धान्तिना, अतोविप्रतिषे-धस्य क्वचित्पर्यवसानमपेक्षितं तत्र किं सृष्टिश्रुतिविप्रतिषेधात् प्रधानका-रणवादग्राह्यत्व ? मुत सृष्टिश्रुतीनामर्थान्तरपरत्व ? मुताप्रामाण्यमेवे ? ति, न तावदाद्यः, प्रधानकारणवादपरत्वेऽपि श्रुतिविप्रतिषेधस्य स्थितत्वात् तत्र वक्तव्यस्य ब्रह्मकारणवादेऽपि तुल्यत्वात्, नाप्यन्यपरत्वम् अन्याभा-वात्, ब्रह्मविदाप्नोतीति प्रकृतं ब्रह्मवेदनं ब्रह्मणः सर्वकारणत्वोक्तिमुखेन स्तूयते अतोऽन्यपरत्वमिति चेच्च कारणं तु ध्येय इति वेद्यब्रह्मणः कार-णत्वलक्षणकत्वाल्लक्षणविप्रतिषेधे लक्ष्यब्रह्मवेदनस्यासम्भवात् स्तुत्यनुप-पत्तेः, नापि वेदाप्रामाण्यं, प्रथमे काण्डे तत्प्रामाण्यस्य समर्थितत्वात् अतः पर्यवसानस्थलाभावेन विप्रतिषेधमात्रस्य पूर्वपक्षीकरणायोगादनुत्पत्तिं पूर्वपक्षीकृत्योत्पत्तेः सिद्धान्तीकरणं युक्तं, सूत्रयोजना चानुपपन्ना, अश्रुतेः छान्दोग्ये वियदुत्पत्त्यश्रवणात् अस्ति तु तैत्तिरीयके वियदुत्पत्तिरस्तीति व्याख्यातं वियदुत्पत्तौ श्रूयमाणायामपि क्वचिच्छ्रवणाभावस्य हेतुतयो-पन्यासोऽनुपपन्नः अनधीतशाखान्तरपुरुषाभिप्रायेण हेतूक्तिरिति चेत्तर्ह्य-नधिगतषष्ठप्रपाठकपुरुषाभिप्रायेण पृथिव्याद्यनुत्पत्तेरप्युपन्यस्य सूत्रकारेण निरसनीयत्वं प्रसज्येत् महीमहीधरादीनां युगपत्सर्गप्रलयौ हि केषां-

चिदनभिमतौ अस्ति त्विति सूत्रस्य विप्रतिषेधसमर्थनाय उत्पत्तिसद्भाव-परतया पूर्वपक्षविषयत्वमप्ययुक्तं सिद्धान्तप्रतिज्ञाया अध्याहार्य्यत्वप्रसङ्गात्, अनध्याहारसम्भवे तदयोगाच्च गौण्यसम्भवादित्यादेश्च सूत्रस्य सिद्धान्त्येकदेशिमतविषयत्वं तु परीक्षाधिकरणशरीरप्रतिक्षेपेण व्युदस्तं भवति यावद्विकारं त्विति सूत्रं विभक्तत्वहेतुना घटादिवन्नभसः कार्य्यत्वानुमानपरवर्णितं तदयुक्तं हेत्वनुपपत्तेः, विभक्तत्वं नाम यद्येकस्मात् कार्य्यतया विभक्तत्वं तदा साध्याविशिष्टो हेतुः। यदि भिन्नत्वं प्रागभावे भावरूपाज्ञाने च व्यभिचारः, तदुभयव्यतिरिक्तत्वे सति भिन्नत्वमात्मनि व्यभिचरति आत्मा ह्यविद्यातत्कार्य्येभ्यो भिन्नः प्रागभावाविद्याव्यतिरिक्तश्च उक्तेभ्योऽतिरिक्तत्वे सति भिन्नत्वं व्यर्थविशेष्यं व्यवच्छेद्याभावात् प्रागभावाविद्या ब्रह्मान्यत्वं कार्य्यत्वे हेतुरिति चेत् सूत्रे विभागपदविरोधः स्यात्, विक्तत्वं हि सौत्रहेतुस्त्वद्योजनायां विभाग-शब्देनापि पूर्वोक्तात् त्रिकादन्यत्वं विवक्षितमिति चेन्न आकाशसहिताच्च चतुष्टयादन्यत्वम् उपाधिः स्यात्, न चैतावता पक्षेतरत्वोपाधिना सर्वानुमानोच्छेदः चतुष्टयस्यापि पक्षत्वाभावेन तदन्यत्वस्य पक्षेतरत्वाभावात्, एतेन मातरिश्वेति सूत्रमतिदेशाधिकरणमित्युक्तम्, तदयुक्तम् अधिकशङ्काया अभावात् सर्वगतद्रव्यत्वादिहेतुप्रसङ्गविरहाच्छङ्का न्यूनतैव सैषाऽनस्तमिता देवता यद्वायुरिति श्रुत्याधिकशङ्केति चेन्न वायुश्चान्तरिक्षं चैतदमृतमित्यमृतत्वश्रवणस्य वियन्मातरिश्वनोस्तुल्यार्थतया परिहारस्य तुल्यत्वात् अनस्तमितशब्दस्यामृत-शब्दार्थतुल्यतया पृथक्परिहरणीयत्वाभावात् च ब्रह्मणोऽपि कारणत्वादेव गगनादेरिव कार्य्यत्वमाशङ्क्य तन्निरासपरम् असम्भव इत्यादिसूत्रमधिकरणान्तरमाहुः। कार्य्यत्वशङ्कानिरासः किं युक्त्या ? उत श्रुत्या ? नाद्यः युक्तेरसम्भवात् । ननु ककार्यत्वानुपपत्तिरेव युक्तिः, न ह्यसतः सदुत्पत्तिः कथमसतः सज्जायेति तस्या व्युदस्तत्वात्, न तावत् सद्विशेषात् सन्मात्रोत्पत्तिः विशेषेभ्यः सामान्योत्पत्त्यदर्शनात्, सामान्येभ्यो हि विशेषोत्पत्तिर्दृष्टा, नापि सन्मात्रात् सन्मात्रोत्पत्तिः, असत्यतिशये प्रकृतिविकारभावानुपपत्तेरिति चेन्न पूर्वकालात् सतः पाश्चात्यसदुत्पत्त्युपपत्तेः

पूर्वापरभावातिरिक्तविशेषो नावश्यापेक्षितः सदृशपरिणामपरम्परायाः शास्त्रप्रामाण्यवादिभिरभ्युपगतत्वात् पूर्वोत्तरज्वालासु सदृशीषु पौर्वापर्यातिरिक्तादर्शनाच्च, अतो युक्तिर्दुःस्थतरेति न तया शङ्कानिरासः, यदि श्रुत्या तर्हि कृतकरत्वप्रसङ्गः, अदृश्यत्वादिगुणको धर्मोक्तेरित्यादिषु नित्यं विभुं सर्वगतं सुसूक्ष्मं स बाह्याभ्यन्तरो ह्यज इति नित्यत्वाजत्वादिधर्मकस्यैव ब्रह्मणो भूतयोनि–शब्देन परमकारणतया निर्दिष्टस्य परमात्मत्वनिर्णयात्तद्विरुद्धाशङ्कोत्थानं हि नोपपद्यते। अपरे तु शब्दादिगुणानां च दिक्कालादीनां सृष्टिश्रवणान्नित्यत्वमाशङ्क्य अद्वितीयश्रुत्यनुपपत्त्या तन्निरासकमधिकरणान्तरं वर्णयन्ति तदप्ययुक्तं शब्दादीनां द्रव्यावस्थारूपाणामुत्पत्त्यन्तरनैरपेक्ष्यस्य सत्कार्य्यवादसमर्थनेनार्थ्यसिद्धत्वात्। पद्भ्यां भूमिर्दिशः–श्रोत्रात् सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि कला मुहूर्त्ताः काष्ठाश्चाहोरात्राश्च सर्वशः अर्धमासा मासा ऋतवः संवत्सरस्य कल्पन्ताम् इति दिक्कालोत्पत्तिश्रवणेन च नित्यत्वशङ्कानुदयात्, तर्कमात्रावष्टम्भपरवादिप्रतिपत्तिनिरासार्थोऽयमारम्भ इति चेन्न तस्य तर्कपादसाध्यत्वेनेहासङ्गतत्वात्, न च नभोभागमात्रं दिशः सूर्यादिगतिविशेषः काल इति च युक्तं नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौस्समवर्त्तत दिशः श्रोत्रादिति सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदिति पृथगुत्पत्तेः श्रवणात्, अत एवोत्पत्तिर्दिक्कालावच्छेदकविषयेति शङ्का च निरस्ता भवति। नाप्युत्पत्तिश्रुतिर्दिक्कालादिदेवतामात्रविषयेति वाच्यम् अधिष्ठेयभेदाभावे अधिष्ठातृदेवताभेदानुपपत्तेः, आदित्यादिगतिविशेष एव कालश्चेदयमिति सूर्यादिसृष्टेः प्रागेव कालदर्शनं रूपान्तरं तद् द्विज! कालसंज्ञमिति प्रधानपुरुषातिरिक्तकालस्मरणं च विरुध्यते, अतस्तन्मतमप्यनुपपन्नं प्रथमाध्यायशेषः पादद्वयेनावसित इत्यन्ये तदयुक्तं पादचतुष्टयस्यापि प्रथमाध्यायशेषत्वात् वेदान्तानां ब्रह्मैककारणतापरत्वं हि प्रथमाध्यायार्थः तत्र साक्षादुपयोगोऽनेकान्तवादिनिरासादीनामपि नास्ति प्राणाद्युपयोगस्तृतीयचतुर्थयोरप्यस्ति कार्य्यदौःस्थ्यस्य कारणदौरथ्यापादकत्वात्तत्परिहारस्य तत्स्थिरीकारहेतुत्वाच्च, अन्त्येऽपि पक्षेऽप्याद्ययोः सूत्रयोर्मा-

तरिश्वविषयसूत्रस्य च योजनावैषम्यं पूर्ववद्वृत्तोत्तरं वेदितव्यं, गौण्यसम्भवादिति श्रुत्यन्तरविरोधादसम्भवः श्रुत्यन्तरं च खं पुराणं वायुः खमिति ह स्माहेति त्रिरात्रं खमेतत् पुष्पान्तमिति च पुराणमेकं खम् अपरं खं पुष्पवद्विनाशीत्युच्यते एवं सति गगनद्वयासम्भवात् घटोत्पत्त्या घटाकाशस्येव ब्रह्माण्डोत्पत्त्या तदवच्छिन्नाकाशस्योत्पत्तिरुपचर्य्यते, अतो न व्योम्नो मुख्योत्पत्तिरित्याहुः । व्योम्न एकत्वे व्योमशब्दस्य कृत्स्नव्योमविषयत्वात् पुराणमित्यादिविशेषणस्य व्यवच्छेद्यासम्भवः परिह्रियते स्याच्चैकस्येति ब्रह्मण एकत्वेऽप्येतद्वै सत्यकाम! परं चापरं चेति ब्रह्मशब्दस्य ब्रह्मैकदेशोपलक्षणतया एकदेशान्तरं यथा व्यवच्छेद्यं तद्वद्व्योमशब्दस्याप्युपपत्तिरित्याहुः । प्रतिज्ञेति शब्देभ्य इत्यन्तमेकं सूत्रं गगनाकार्य्यत्वे प्रतिज्ञाहानिमाशङ्क्य अकार्य्यत्वेऽपि भोक्तृवर्गस्येव नभसोऽपि ब्रह्मव्यतिरिक्तत्वात् प्रतिज्ञाया अहानिरव्यतिरेकश्च आत्मैवेदं सर्वमित्यादिशब्देभ्यः सिद्ध इत्याहुः । एवं गौणीत्यादि शब्देभ्य इत्यन्तं पूर्वपक्षविषयं यावदिति यावन्तो महदादयो विकारास्तावन्तो विभागाः सूक्ष्माः शक्तिरूपाः सवितुरिव प्रभा ब्रह्मणः सन्ति लौकिकपुरुषाणामिवेश्वरस्यापि कार्य्यकारणवन्तो व्यवहाराः श्रूयन्ते, अतः सूक्ष्ममाकाशं परमं व्योम तस्मादस्य तु व्योम्न उत्पत्तिरस्तीत्याहुः । तत्र तावत् खं पुराणमिति श्रुतिविरोधादुत्पत्त्यसम्भवात् गौणीत्ययुक्तं शब्दाच्चेत्यनेन पुनरुक्तिप्रसङ्गात् वायुश्चान्तरिक्षं चैतदमृतमित्यमृतत्वश्रुतेः पुराणत्वश्रुतेश्च को भेदः, यतः पुराणत्वश्रुतिविरोधादसम्भवो न विवक्षितः, अत एव पुराणत्वादिविशेषणस्य व्यवच्छेद्यासम्भवपरिहारपरत्वं, स्याच्चैकस्येति सूत्रस्याप्ययुक्तं प्रतिज्ञाहानिरिति सूत्रस्य च पूर्वपक्षविषयतयैव तत्र शङ्काविशेषपरिहारपरत्वमुपयुक्तं तथा सत्यधिकरणसिद्धान्तसाधकयुक्तेरनुक्तिप्रसङ्गात् यावद्विकारमिति सूत्रं सिद्धान्तसाधकयुक्तिपरं तत्र हि तु-शब्दः श्रुत इति चेन्न तस्य परापरव्योमभेदेन पुराणत्वोत्पत्तिमत्त्वविरोधपरिहारपरत्वेन व्याख्यातत्वात्, परिहारश्च साधकयुक्त्यनन्तर उपन्यस्ते युज्यते अन्यथा व्योम्न एकत्वात् पुराणत्वश्रवणाच्च उत्पत्तिर्गौणीति वदता अन्योन्याश्र-

योद्घाटनस्य सुकरत्वादुत्पत्तेरगौणत्वे ततः पुराणव्योम्नोऽन्यत्वं तस्यान्यत्वादुत्पत्तेरगौणत्वमिति । ननु गगनभेदे प्रमाणोपस्थापकं सूत्रमिति चेत् यदि तयोर्व्योम्नोरुत्पत्त्यनुत्पत्तिभ्यां भेद उपस्थाप्यते तदानीमौपाधिकभेदमाश्रित्य गौणोत्पत्त्या प्रमाणनिर्वाह उपपद्यते, यद्याकारान्तरेण व्योम्नो भेदः अतः तर्ह्युत्पत्तेर्गौणत्वेऽपि स उपपद्यते, उत्पत्तेरगौणत्वे हेतोः सूत्रितत्वाभावात् । किञ्च अव्यक्तात्परमक्षरं परं व्योमेति भवतां मतं तस्य च पुराणत्वमयुक्तम् अक्षरं तमसि लीयत इति लयश्रवणात्, आपेक्षिकं पुराणत्वमस्तीति चेत्तर्हि व्योमभेदाभावेऽपि घटाकाशब्रह्माण्डावच्छिन्नाकाशयोरिव पुराणत्वापुराणत्वयोरविरोधः सुवच इत्युत्पत्तिर्गौणी स्यात्, अत एव प्रलयश्च तत्र गौणः स्यात्, यदा प्रतिज्ञाहानिरिति सूत्रं सिद्धान्तसाधकं तदानीं भवदुक्तशङ्का दूरोत्सारिता स्यात् । तच्च पूर्वं दर्शितं चान्दोग्ये गगनोत्पत्त्यवचनेऽपि तत्सिद्धिप्रतिपादनं चापेक्षितमन्तिमसूत्रे कृतं स्यात् अत एव तु-शब्दोऽपि चार्थो द्रष्टव्यः, अन्यथाऽनुपपत्तेर्दर्शितत्वात् ॥ वियदधिकरणं समाप्तम् ॥

तेजोऽधिकरणम् । **सू० तेजोऽतस्तथा ह्याह ॥ १० ॥**

**भू०** ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य ब्रह्मकार्य्यत्वमुक्तमिदानीं व्यवहितकार्य्याणां किं केवलात्तत्तदनन्तरकारणभूताद्वस्तुन उत्पत्तिः? आहोस्वित् तत्तद्रूपाद्ब्रह्मण? इति चिन्त्यते किं युक्तं केवलात्तद्वस्तुन इति, कुतस्तेजस्तावदतोमातरिश्वन एवोत्पद्यते वायोरग्निरिति ह्याह ॥

**सू० आपः ॥ ११ ॥**

आपोऽपि अतः-तेजस एवोत्पद्यन्ते अग्नेरापः तदपोऽसृजत इत्याह ॥

टी० सू० तेजोऽतस्तथा ह्याह । अवान्तरसङ्गतिमाह "ब्रह्मे"ति, महदादीनां तत्त्वानां किं केवलात् पूर्वपूर्वतत्त्वमात्रादुत्पत्ति? रुत

तत्तद्रूपात् ब्रह्मण? इति किमाकाशाद्वायुरित्यादिषु आकाशादिशब्दा आकाशादिमात्रपरा:? उत तदवस्थब्रह्मपरा? इति किं तेज ऐक्षतेत्यादिष्वभिध्यानलिङ्गं तेजःप्रभृतिशब्दानां तदवस्थब्रह्मपरताम् अवगमयति ने?ति किं तेजःप्रभृतिशब्दानां तदवस्थपरत्वेन लक्षणा स्यान्ने?ति किं तेजःप्रभृतिशब्दानां तदवस्थपरत्वेन लक्षणा स्यान्ने?ति किं तेजःप्रभृतिशब्दानामपर्यवसानवृत्त्या ब्रह्माभिधाने व्युत्पत्तिविरोधादिदोषो भवति ने?ति, यदा भवति तदानीमपर्यवसानेन ब्रह्माभिधानासम्भवेन लक्षणाप्रसङ्गादभिध्यानलिङ्गस्य तेजःप्रभृतिशब्दानां ब्रह्मपरतावगमकत्वाभावादाकाशादिशब्दानामाकाशादिमात्रपरत्वेन केवलाकाशादेरेव वाय्वाद्युत्पत्तिरिति भवति, यदा व्युत्पत्तिभङ्गादिदोषो न भवति तदानीमपर्यवसानेन ब्रह्माभिधानसम्भवेन लक्षणाप्रसङ्गाभावादभिध्यानलिङ्गस्य तेजःप्रभृतिशब्दानां ब्रह्मपरतावगमकत्वादाकाशादिशब्दास्तदवस्थब्रह्मपरा इत्याकाशाद्यवस्थाद् ब्रह्मण एव वाय्वाद्युत्पत्तिरिति सिध्यति। ननु प्रकृत्यधिकरणे कृत्स्नस्य ब्रह्मोपादानकत्वनिश्चयादवस्थितेरित्यादिषु जगद्ब्रह्मणोः शरीरात्मभावसिद्धेस्तत्र चान्तर्यामिब्राह्मणे सर्वतत्त्वानां विशेषतः शरीरत्वावगमाच्च केवलात् तत्तद्वस्तुनो वाय्वाद्युत्पत्तिरिति पूर्वपक्षानुत्थानादरम्भणीयत्वं नैवमेकस्य कार्य्यस्य ब्रह्मप्रसूतत्वकथनात् पश्चात्तत्तत्कारणव्यहिततत्त्वसृष्टिक्रमनिर्देशबलाच्च तेषां तत्त्वानां परमात्मशरीरत्वश्रवणं सृष्ट्यनन्तरानुप्रवेशकृतमौपचारिकं तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः, अभिध्यानं च गौणं सर्वस्य ब्रह्मजत्वश्रुतिश्च पारम्पर्याभिप्रायेति पूर्वपक्षोत्थानात्, सू· आपः, अतस्तथा ह्याहेत्यनुषङ्गः ॥

## सू० पृथिवी ॥ १२ ॥

सू० पृथिव्यद्भ्य उत्पद्यते, अद्भ्यः पृथिवी ता अन्नमसृजन्तेत्याह। नन्वन्न-शब्देन कथं पृथिव्यभिधीयते नचाह-

**सू० अधिकाररूपशब्दान्तरेभ्यः ॥ १३ ॥**

महाभूतसृष्ट्यधिकारात्पृथिव्येवान्न–शब्देनोक्तेति प्रतीयते, अदनीयस्य सर्वस्य पृथिवीविकारत्वात्कारणे कार्य्यशब्दः तथा वाक्यशेषे भूतानां रूपसंशब्दने यदग्नेरोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्येत्यप्तेजसोः सजातीयमेवान्न–शब्दवाच्यं प्रतीयते शब्दान्तरं च समानप्रकरणे अग्नेरापः अद्भ्यः पृथिवीति श्रूयते, अतः पृथिव्येवान्नशब्देनोच्यत इत्यद्भ्य एव पृथिवी जायते उदाहृताः तेजःप्रभृतयः प्रदर्शनार्थाः महदादयोऽपि हि स्वानन्तरवस्तुन एवोत्पद्यन्ते यथाश्रुत्यभ्युपगमाविरोधात्, एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः तत्तेजोऽसृजतेत्यादयो ब्रह्मणः परम्परया कारणत्वेऽप्युपपद्यन्ते इत्येवं प्राप्ते प्रचक्ष्महे–

**सू० तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १४ ॥**

तु–शब्दात् पक्षो व्यावृत्तः, महदादिकार्याणामपि तत्तदनन्तरवस्तुशरीरकः स एव पुरुषोत्तमः कारणं, कुतः तदभिध्यानरूपात्तल्लिङ्गात् अभिध्यानं बहु स्यामिति सङ्कल्पस्तत्तेज ऐक्षत बहु स्यां प्रजायेयेति, ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीत्यात्मनो बहुभवनसङ्कल्परूपेक्षणश्रवणान्महदहङ्काराकाशादीनामपि कार-

णानां तथाविधेक्षापूर्विकैव स्वकार्य्यसृष्टिरिति गम्यते तथाविधं चेक्षणं तत्तच्छरीरकस्य परस्यैव ब्रह्मण उपपद्यते ॥

टी० सू० पृथिवी, अत्राप्यनुषङ्गः उत्तरसूत्रशङ्कामाह 'नन्वि''ति, अधिकाररूपशब्दान्तरेभ्यः, अधिकारः—प्रस्तावः अन्न—शब्दस्य पृथिवीवाचकत्वप्रकारमाह "अदनीयस्ये''ति, कारणे कार्य्योपचार इत्यर्थः । प्रकृतं पूर्वपक्षमाह "उदाहृता"इति, ब्रह्मणः साक्षादेव तेषामुत्पत्तिश्रवणं कथमित्यत्राह "एतस्मादि''ति, सू० तदभिधानादेव तु तल्लिङ्गात् सः, तदभिध्यानं—बहुभवनविषयाभिध्यानं, तल्लिङ्गं—परमात्मलिङ्गं तेजःप्रभृतिष्वीक्षणश्रवणात् सर्वशाखाप्रत्ययन्यायेन महदादीनामपि परमात्मशरीरतयातुल्यन्यायतया तेष्वपीक्षापूर्विका सृष्टिरित्यर्थः । ततः किमित्यत्राह "तथाविधंचे''ति, न केवलमीक्षापूर्वकसृष्ट्या परमात्मनस्तच्छरीरकस्य कारणत्वं गम्यते अपि तु तत्तच्छरीरकत्वं श्रौतमित्याह—

सू० श्रूयते च सर्वशरीरकत्वेन सर्वात्मकत्वं परस्य ब्रह्मणोऽन्तर्यामिब्राह्मणे "यः पृथिव्यां तिष्ठन् योऽप्सु तिष्ठन् यस्तेजसि तिष्ठन् यो वायौ तिष्ठन् य आकाशे तिष्ठन् इत्यादि, सुबालोपनिषदि च यस्य पृथिवी शरीरमित्यारभ्य यस्याहङ्कारः शरीरं यस्य बुद्धिः शरीरं यस्याव्यक्तं शरीरमित्यादि, यच्चोक्तम् एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेत्यादिषु श्रूयमाणा ब्रह्मणः प्राणादिसृष्टिः परम्परयाऽप्युपपद्यत इत्यचोच्यते—

## सू० विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १५ ॥

तु—शब्दोऽवधारणार्थः अव्यक्तमहदहङ्काराकाशादिक्रमाद्विपर्ययेण यः सर्वेषां कार्य्याणां ब्रह्मानन्तर्यरूपः

क्रम एतस्माज्जायते प्राण इत्यादिषु प्रतीयते स च क्रमस्तत्तद्रूपाद्ब्रह्मणस्तत्तत्कार्य्योत्पत्तेरेवोपपद्यते परम्परया कारणत्वे ह्यानन्तर्यश्रवणमुपरुध्येत अत एतस्माज्जायते इत्यादिकमपि सर्वस्य ब्रह्मणः साक्षात्सम्भवोक्तम्भनम् ॥

**सू० अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १६ ॥**

विज्ञानसाधनत्वादिन्द्रियाणि विज्ञानमित्युच्यन्ते यदुक्तमेतस्माज्जायते इत्यादिना सर्वस्य ब्रह्मणोऽनन्तरकार्य्यत्वं श्राव्यते, अतश्चानेन वाक्येन सर्वस्य साक्षाद्ब्रह्मण उत्पत्तिरभिधानलिङ्गावगतेत्युभ्यत इति ।

टी० "श्रूयते चे"ति, ईक्षणश्रवणं हि तेजःप्रभृतीनां न तु महदादीनामतस्तेषामपीक्षापूर्वकसृष्टिसिद्धये तत्कारणानामपि परमपुरुषशरीरत्वमाह "सुबालोपनिषदी"ति, उत्तरसूत्रशङ्कामाह "यच्चोक्तमि"ति, सू० विपर्ययेण तु क्रमोऽत उपपद्यते च, तु-शब्दोऽवधारणार्थ इति "स्युरेव तु पुनर्वै चेत्यवधारणवाचिन" इति हि नैघण्टुकाः, विपर्ययेण क्रमं व्याचष्टे "अव्यक्ते"ति, परोक्तक्रमविपर्ययेणेत्यर्थः, अतः-शब्दं व्याचष्टे "स चे"ति, एतस्माज्जायत इत्यत्र ब्रह्मानन्तर्यप्रतीतिः स्वारस्यसिद्धा, एवं वाक्यस्वारस्येन ब्रह्मानन्तर्यरूपक्रमप्रतिपत्तेर्ब्रह्मण एव तत्तत्कार्य्योत्पत्तिरित्यर्थः । उक्तम्भनं-ज्ञापकम् एतस्मात्प्राणो जायते एतस्मान्मनो जायत इत्यन्वयाभिप्रायेण एवमुक्तम् । सू० अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्, व्याख्येयं पदं व्याचष्टे "विज्ञानेति, अत्रापि न केवलं श्रुत्यन्तरेष्वेवेति भावः ॥ तैस्सह पाठलिङ्गादप्यप्रायन्याया- दित्यर्थः ॥

**सू० तन्नोपपद्यते क्रमविशेषपरत्वादस्य वाक्यस्याचापि सर्वेषां**

क्रमप्रतीतेः, खादिषु तावत् श्रुत्यन्तरसिद्धः क्रमोऽत्रापि प्रतीयते तैः सह पाठलिङ्गाद्भूतप्राणयोरन्तराले विज्ञान-मनसी अपि क्रमेणोत्पद्येते इति प्रतीयते, अतः सर्वस्य साक्षाद्ब्रह्मण एव सम्भवस्योत्तम्भकमिदं वाक्यं न भवति इति चेन्न अविशेषात् एतस्माज्जायते प्राण इत्यनेना-विशेषात् विज्ञानमनसोः खादीनां चैतस्माज्जायते इत्य-नेन साक्षात्सम्भवरूपसम्बन्धस्याभिधेयस्य सर्वेषां प्राणा-दिपृथिव्यन्तानामविशिष्टत्वात्स एव विधेयो न क्रमः श्रुत्यन्तरसिद्धक्रमविरोधाच्च नेदं क्रमपरं, पृथिव्यप्सु प्रली-यत इत्यारभ्य तम एकीभवतीत्यन्तेन क्रमान्तरप्रतीतेः, अतोऽव्यक्तादिशरीरकात् परस्माद्ब्रह्मण एव सर्वकार्याणा-मुत्पत्तिः तेजःप्रभृतयश्च शब्दास्तदात्मभूतं ब्रह्मैवाभिद-धति । नन्वेवं सर्वशब्दानां ब्रह्मवाचित्वे सति तैस्तैश्शब्दै-स्तत्तद्वस्तुव्यपदेशो व्युत्पत्तिसिद्ध उपरुध्यते तत्राह

**सू० चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १७ ॥**

तु—शब्दश्चोदिताशङ्कानिवृत्त्यर्थः निखिलजङ्गमस्थावर-व्यपाश्रयस्तत्तच्छब्दव्यपदेशो भाक्तः वाच्यैकदेशे भज्यत इत्यर्थः ॥

टी० तत्रेति, अविशेषादिति पदं व्याचष्टे "एतस्मादि"ति, अने-नाविशेषात् एतस्माज्जायत इति वाक्यप्रतिपन्नान्वयाविशेषात् । तदेव विवृणोति "एतस्माज्जायते"इति, एतस्मादित्यादिवाक्याभिधेयस्य सा-क्षात्सम्भवरूपस्य सम्बन्धस्य प्राणादिपृथिव्यन्तानामविशिष्टत्वादित्यर्थः

दीपसारयोस्तु एतस्मादिति पञ्चम्यन्तपदान्वयाविशेषादिति शब्दपरं व्याख्यातम् इदं त्वर्थपरं, श्रुत्यन्तरसिद्धक्रमविरोधाच्चेति प्राणो हि वायु-कार्य्यः, स हि खस्यानन्तरमुपपन्नः न भूतेभ्यः प्रागुत्पन्न इत्यर्थः । क्रमवि-रोधे प्रमाणमाह "पृथिव्यप्सु प्रलीयत" इति, व्यवहितकार्याणामपि ब्र-ह्मण उत्पत्तिश्चेत् कथं तेजःप्रभृतिशब्दैरभिधानमित्यत्राह "तेजःप्रभृत-यश्चे"ति, अनन्तरसूत्रं चोद्यपुरःसरमवतारयति 'नन्वि"ति, यत्र शब्दस्य वाचकत्वशक्तिस्तत्र व्युत्पत्तिरस्ति, अतो ब्रह्मवाचकत्वेन व्युत्पत्त्यभावाच्च शब्दस्य तद्वाचकत्वशक्तिरित्यर्थः सू· चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्त स्तद्भावभावित्वात्, हेतुखण्डं कृण्वन्वाक्यार्थं योजयति–

श्रु० समस्तवस्तुप्रकारिणो ब्रह्मणः प्रकारभूतवस्तुग्राहिप्रत्यक्षादिप्रमाणाविषयत्वाद्वेदान्तश्रवणात्प्राक् प्रकार्य्यप्रतीतेः, प्रकारिप्रतीतिभावभावित्वाच्च तत्पर्य्यवसानस्य लोके तत्तद्वस्तुमात्रे वाच्यैकदेशे ते ते शब्दा भक्त्या भक्त्या व्यपदिश्यन्ते, अथवा तेजःप्रभृतिभिः शब्दैस्तत्तद्वस्तुमात्रवाचितया व्युत्पन्नैर्ब्रह्मणो व्यपदेशो भाक्तः स्यात् अमुख्यः स्यादित्याशङ्क्य

टी० "समस्ते"ति, व्युत्पत्त्यभावो न वाचकत्वाभावप्रयुक्तः, अपि तु प्रमाणान्तरागोचरत्वप्रयुक्त इति व्युत्पत्त्यभावस्यान्यथासिद्धिरुक्ता भवति, अस्यां योजनायां द्वितीययोजनार्थ अर्थः सिध्यति सर्वशब्दानां ब्रह्मणि मुख्यत्वे प्रमाणस्यापेक्षितत्वात् । साक्षादर्थमाह "अथ वे"ति, तत्र शङ्कान्तरमाह "तत्र"इति, चराचरव्यपाश्रयस्तद्व्यपदेशश्चराचरमात्रविषयपर्यवसायित्वेन व्युत्पन्नस्तद्वाचिशब्द इत्यर्थः । ब्रह्मभाव–शब्देन ब्रह्मानुप्रवेश उच्यते ब्रह्मणस्तत्र भावो ह्यनुप्रवेशः अस्यां योजनायां सर्वशब्दानां ब्रह्मवाचित्वे प्रमाणोपन्यासः श्रौतः स्यात् व्युत्पत्तिविरोधशङ्कापरिहारस्त्वार्थः सिध्यति, एवं विशेषणभूतपृथिव्यादिषु क्रमनिर्देशामुख्यः

ब्रह्मणस्तत्तद्वस्तुविशिष्टत्वात् सर्वस्य ब्रह्मप्रसूतत्वश्रवणं मुख्यं सर्वतत्त्वानां यावद्द्रव्यसत्ताकविशेषणतया ब्रह्मशरीरत्वं मुख्यम्, अभिध्यानं चात एव मुख्यम्, अतः सर्वश्रुतिमुख्यत्वं सिद्धान्त उक्तं भवति । परे त्वाकाशाद्वायुरित्याकाशादनन्तरं वायुरुत्पन्नः वायोरनन्तरम् अग्निरुत्पन्न इति निर्वाहसम्भवात्तज्जलानिति एतस्माज्जायते प्राणः स तपस्तप्त्वेदं सर्वमसृजतेत्यादिश्रुतिभिरविशेषेण सर्वस्य ब्रह्मजत्वावगमाच्छान्दोग्यश्रुत्यनुसारेण तेजसो ब्रह्मयोनित्वं पूर्वपक्षीकृत्य आत्मनः सम्भूतः पृथिव्या ओषधय इति पूर्वापरपञ्चम्योरुपादानविषयत्वदर्शनान्मध्यपातिन्या अपि तथात्वाद्वायुयोनित्वं तेजसः, ब्रह्मजत्वं तु वायुभावापन्नब्रह्मणो जाततया पारम्पर्येणाप्युपपद्यत इति सिद्धान्तयन्ति तच्चिन्तनीयं सिद्धान्ते किं निरसनीयं, यदि ब्रह्मयोनित्वमात्रं तदा कृत्स्नस्य ब्रह्मोपादानकत्वानुपपत्तिः, यदि वाय्ववस्थानापन्नब्रह्मयोनित्वं निरसनीयं तदयुक्तं त्वन्मतेऽध्यासाधिष्ठानत्वस्योपादानलक्षणत्वात् घटः सन् मृदयं घट इति मृद्वस्यसदात्मकतया घटप्रतीतिवत्तेजोऽस्ति आपस्सन्तीति सद्रूपेण प्रतियमानस्य तेजसोऽपां च वायुस्तेजस्तेजोजलमिति वायोस्तेजोरूपतया प्रतीयमानत्वाभावात् अनवभातस्याधिष्ठानत्वायोगाच्च वायुभावाद्यनापन्नस्यैव सन्मात्रस्य तेजःप्रभृत्युपादानत्वोपपत्तेः, न हि रज्जुः सर्पात्मना भूदलनादेरुपादानं, भूदलनाध्यासदशायां सर्पात्मनाऽनवभातत्वात्, यद्यनवभातमप्यधिष्ठानं स्यात् सर्वं सर्वस्याधिष्ठानं स्यात् अनवभातत्वाविशेषात् गोमयत्वा[1]विशेषात् गोमयत्वानवभासेऽपि गोमयस्य वृश्चिकोपादानत्वमुपपन्नमिति चेन्न परिणामानभ्युपगमात् अनवभातस्य परिणाम उपपद्यते न त्वध्यासाश्रयत्वं दर्शनस्य नियामकत्वात्, न हि पुरोवर्तिनि भास्वरद्रव्येऽनवभाते रजताध्यासः अनवभातमपि बीजमङ्कुरादिपरिणामं भजते वाय्वादिकं तेजोऽध्यासे सत्तयोपकारकमिति चेन्न दिक्कालादृष्टेन्द्रियतद्दोषव्यतिरिक्तस्य भ्रान्तौ गुरुत्वादेरिव सत्तयोपकारकत्वाभावात् अतः सद्रूपेण प्रतीतेर्वाय्वादि रूपेणाप्रतीतेश्च सन्मात्रस्यैवोपादानत्वोप-

१ गोमयत्वाविशेषादिति पुस्तकान्तरे पाठान्तरं नास्ति ।

पत्तेः तर्कापेतश्रुतेरपि तर्कानुगृहीतश्रुतेः प्रबलत्वाच्छान्दोग्यश्रुत्यनुसारेण सद्धेतोनित्यत्वमेव सिद्धान्तीकर्त्तव्यम् आकाशाद्वायुः वायोरग्निरित्यादिष्वाकाशादिशब्दानां लक्षणया सन्मात्रपरत्वं चाश्रयणीयं, लक्षणैव दोष इति चेत् अहो भवतां लक्षणाभीरुत्वं ये सत्यज्ञानानन्ततत्त्वमादिपदानि व्याचक्षते अनन्तरशब्दाध्याहारेणात्मनोवायुः संभूत इति योजनापि वरं तर्कानुगृहीतश्रुत्यन्तरैकार्थ्यात् उपक्रमावगतस्यात्ममात्रात् सम्भवस्य प्रबलत्वाच्च अध्याहारपञ्चमीवैरूप्ययोरनादरणीयत्वात् । किञ्च ब्रह्मयोनित्वाकाशयोनित्वचिन्ता कस्माद्वायौ न कृता सन्मूलत्वश्रवणरूपपूर्वपक्षलिङ्गस्य तत्राभावादिति चेन्न एतस्माज्जायते खं वायुर्ज्योतिराप इति परमात्ममूलत्वावगतेः, अतो न पूर्वपक्षलिङ्गं तेजसि चिन्तायां हेतुः किं तु तदैक्षतेत्यभिध्यानरूपसिद्धान्तलिङ्गवत्त्वमत एव तेजोऽत इत्यादिसूत्राणां पूर्वपक्षविषयत्वमवगम्यते, अत एव पृथिव्यधिकाररूपशब्दान्तरेभ्य इति नाधिकरणान्तरं किं तु पृथिवीति पृथक्सूत्रम्, अम्मात्रात् पृथिव्युत्पत्तिपरं पूर्वपक्षविषयत्वोपपादनात् सिद्धान्तं वक्तुं विषयशुद्धिपरमधिकाररूपशब्दान्तरेभ्य इति सूत्रान्तरम् अतस्य पृथिवीत्वे सिद्धे हि कारणविशेषचिन्ताप्राप्तिः सूत्रान्तरत्वं च हेतोः पूर्वसाध्येनान्वयादवगम्यते पूर्वपक्षसिद्धान्तसूत्रयोर्मध्यपातित्वाच्च पृथगधिकरणत्वं न्याय्यं तेजसि चिन्तनस्य सिद्धान्तयुक्तिनिबन्धत्वादेव अपरेषामपि पक्षे व्याख्यावैषम्यं प्रत्युक्तं वियदादिभूतानामाकाशाद्वायुः तदपोऽसृजतेति स्वातन्त्र्येण स्वकार्ये प्रवृत्तिप्रतिषेधकमधिकरणान्तरं तदभिध्यानादिति सूत्रमाहुः तदयुक्तं रचनानुपपत्तेरित्यत्र अचेतनस्य स्वातन्त्र्येण प्रवृत्तिप्रतिषेधात् तथाऽपि तत्तेज ऐक्षतेति चेतनत्वश्रवणात् संशय इति चेन्न अभिमानिव्यपदेशस्त्वित्यत्र।विद्धक्षणादीनामपि चेतनानुप्रवेशनिबन्धनत्वस्योक्तत्वात् तत्पूर्वपक्षसूत्रमिति चेत्तथाऽपि तस्य सूत्रकारेणाप्रत्याख्यातत्वात् कृतकरत्वम् अत एव भवद्भिरपि परमेश्वरावेशादीक्षणश्रवणमित्युक्तं स्वातन्त्र्यप्रतीतिश्च चमसवदविशेषादित्यत्र दत्तोत्तरा, तत्र बह्वीः प्रजाः सृजमानामिति स्वातन्त्र्ये प्रतीतेऽपि प्रकरणादिना ब्रह्मात्मकत्वावगमेन हि स्वात-

न्त्र्यं निवारितं न स्वतन्त्रा काचित् प्रकृतिः प्रधानं नामाजामन्त्रेणाम्ना- यत इति शक्यते वक्तुं, प्रकरणात्तु सा दैवी शक्तिरिति ह्युक्तं भवद्भिः, इहापि तिस्रो देवता अनुप्रविश्येति प्रकरणेऽनुप्रवेशो ज्ञायते, अतः कृत- करत्वं विपर्ययेण त्विति प्रलयक्रमनिरूपणपरमधिकरणान्तरं परैरुक्तम् अनियतक्रमत्वं सर्गक्रमतुल्यत्वं च पूर्वपक्षीकृत्य प्रलयस्य सर्गप्रतिलोमक्र- मत्वं सिद्धान्तितं स्वकारणव्यतिक्रमेण कार्याप्ययायोगः कार्ये ध्रियमाणे कारणाप्ययायोगश्च हेतुरुक्तः, तत्र तावदधिकरणान्तरारम्भोऽनुपपन्नः प्रलये क्रमवैविध्याश्रवणेन संशयानुपपत्तेः, पृथिव्यप्सु प्रलीयते आपस्तेजसि लीयन्त इत्येकरूप एव हि प्रलयः श्रूयते सदेव सोम्येदमग्र आसीदिदं वा अग्रे नैव किञ्चनासीन द्यौरासीन्न पृथिवी नान्तरिक्षम् इति क्रमानुक्त्या द्युपृथिव्यादिक्रमान्तरोक्त्या च संशय इति चेन्नानुक्तस्यान्यतो ग्राह्यतया उनुक्तेः संशयहेतुत्वायोगात्, इदं वा अग्रे इत्यत्र श्रौतक्रमाभावात् पाठ- क्रमस्य श्रौतक्रमविरोधे दुर्बलत्वाच्च अयमर्थोऽप्यधिकरणे व्युत्पाद्य इति चेन्न भवद्भिर्न द्यौरासीदित्यादिपाठक्रमस्य पूर्वपक्षितत्वाभावात् क्रमा- नियमसर्गक्रमौ हि पूर्वपक्षितौ न द्यौरित्यादि श्रुतिस्त्वण्डान्तर्वर्त्यूर्ध्वाध- रमध्यमरूपसर्वलोकप्रलयपरा, न त्वण्डारम्भकतत्त्वप्रलयपरेत्यवगम्यते दिवो- ऽन्तरिक्षस्य च पृथगुपादानात्, अतो न क्रमान्तरप्रतीतिरतो नारम्भणी- यतैव स्यात्, न च कार्यस्थितिदशायां कारणप्रलयानुपपत्तिः भस्मवृश्चि- कस्थितिदशायां तन्तुगोमयविनाशदर्शनात् न च स्वकारणमतिक्रम्य का- रणकारणे प्रलयश्चानुपपन्नः भस्मवृश्चिकयोस्तन्तुगोमयातिक्रमेण पृथिव्यां प्रलयात् पृथिव्येव भस्मवृश्चिकयोरुपादानं न तन्तुगोमय इति चेत् न विलक्षणादुपादानाद्विलक्षणकार्योत्पत्तौ भवद्भिरेव स्मृतिपादे "दृश्यते त्वि"ति सूत्रव्याख्याने गोमयवृश्चिकादिदृष्टान्तोपन्यासात्, इष्टकादि- दाहे भस्मोत्पत्त्यदर्शनेन पृथिवीमात्रस्य भस्मविशेषत्वोपादानत्वायो- गेन तन्तूनामेव भस्मविशेषोपादानत्वस्याभ्युपगतत्वाच्च अन्तराविज्ञानेति सूत्रमप्यात्मन आकाश इति श्रौतक्रमभङ्गपरिहारपरम् एतस्माज्जायत इत्यादिमन्त्रस्य उत्पत्तिक्रमे विवक्षाराहित्यप्रतिपादकं व्याख्यातं तद-

युक्तं पृथिव्यप्सु प्रलीयत इत्याकाशादूर्ध्वं तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति लीयते महानव्यक्ते लीयत इत्यादि श्रुत्यैव सिद्धस्य क्रमभङ्गस्य दुष्परिहरत्वात्, भूतानामात्मनश्चान्तराल इति व्याख्यानमप्ययुक्तं विज्ञानमनसी इत्यन्तरालावस्थितवस्तुद्वित्वानुपपत्तेर्विज्ञान—शब्दो हि विज्ञायतेऽनेनेतिव्युत्पत्त्या इन्द्रियवर्गपरः प्राणमन इन्द्रियवर्गाणां निर्देशेऽपि प्राणमनादृत्य विज्ञानमनसी इति व्यपदेशः कथमुपपद्यते प्राणोऽपि यथाकथञ्चिदवयवशक्त्या विज्ञानशब्देन विवक्षित इति चेन्न मनसि वाक्यवार्थं सम्भवति मध्यगतं मनोवहिष्कृत्य व्यवहितयोः प्राणेन्द्रियवर्गयोरेकशब्देन विवक्षितत्वे कारणाभावात्, अतो विज्ञानमनसी इति व्यपदेशो भूतप्राणयोरन्तराल इति व्याख्यानस्य युक्ततां सूचयति—

सू० चराचरव्यपाश्रय इत्याद्युच्यते चराचरव्यपश्रयस्तुव्यपदेशस्तद्वाचिशब्दः, चराचरवाचिशब्दो ब्रह्मण्यभाक्तो मुख्य एव, कुतः ब्रह्मभावभावितत्वात् सर्वशब्दानां वाचकभावस्य, नामरूपव्याकरणश्रुत्या हि तथाऽवगतम् ॥ तेजोऽधिकरणं समाप्तम् ॥

टी० सू० चराचरव्यपाश्रयस्त्विति सूत्रमपि देवदत्तो जातो मृत इति लौकिकानां जन्ममरणव्यपदेशाच्चेतनस्य जातकर्मादिविधानाच्च जीवस्य जन्मप्रलयावाशङ्क्य शास्त्रीयकर्मफलभोगानुपपत्त्या "जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत" इति श्रुत्या च तौ न वस्तुतः स्तः शरीरप्रादुर्भावतिरोभावयोर्जन्ममरणशब्दसद्भावात्, स्थावरजङ्गमशरीरविषयौ जन्ममरणशब्दौ जीवात्मन्युपचरितौ जातकर्मादिकं च देहप्रादुर्भावादपेक्षमित्येवमर्थपरं व्याख्यातं तदयुक्तं किमिदमधिकरणं जीवस्य स्वरूपेणोत्पत्तिनिवारकम् ? उत देहोत्पत्त्यादेरात्मनि निवारकं ? नाद्यः जीवस्योत्पत्तिप्रलयनिषेधस्य नात्मा श्रुतेरित्यनन्तराधिकरणसाध्यतया पूर्वोत्तरयोरधिकरणयोरन्यतरस्य पुनरुक्तिप्रसङ्गात्, अत्र देहाश्रयौ जन्मप्रलयौ जीवे निषिद्धौ तत्र वियदादिवत् परस्मादात्मनस्तस्योत्पत्तिर्नात्मा श्रुतेरिति निषिध्यत

इति चेन्न देहात्मभेदासिद्धौ तयोस्तत्र प्रतिषेधाभावात् तद्भेदसिद्धौ यद्देहोत्पत्तिविनाशयोर्देवदत्त इव शरीरजन्ममरणयोर्जीवगतत्वशङ्कानुदया-दारम्भानुपपत्तेः, देहगतोत्पत्त्य देहात्मनि प्रतिषेधाय देहात्मभेद इह सि-षाधयिषित इति चेन्नास्मत्पक्षे प्रथमकाण्ड एव देहात्मभेदस्य सिद्धत्वात्तस्य यावत्फलस्थायित्वशङ्कानिवृत्तये नित्यत्वमात्रस्य समर्थनीयत्वात्, त्वत्पक्षे-चैक आत्मनः शरीरे भावादित्यधिकरणस्य देहात्मभेदसाधकतया व्याख्या-तत्वाच्च पुनरुक्तेरवर्जनीयत्वात् । ननु तत्र लोकायतिकनिरसने तात्पर्य-मिह तु शास्त्रीयकर्मवैयर्थ्यानुपपत्त्या देहातिरिक्तत्वं सिषाधयिषितमिति चेन्न वैषम्यनैर्घृण्याधिकरण एवाकृताभ्यागमकृतविप्रणाशप्रसङ्गमुखेन जी-वतत्कर्मप्रवाहानादित्व[1]समर्थनेन देहातिरेकसिद्धेः कृतकरत्वप्रसङ्गात् कृत-विप्रणाशपरिहारो हि शास्त्रवैफल्यपरिहारः । ननु तवापि नात्मा श्रुते-रित्यधिकरणवैफल्यं स्यात् तत एव जीवानादित्वप्रसिद्धेरिति चेन्न एकत्वा-वधारणप्रतिज्ञादृष्टान्तादिभिः प्राप्ताया जीवोत्पत्तेस्तत्र परिहृतत्वात्, श्रुतिमूलाया उत्पत्तिशङ्काकायास्तत्रापरिहृतत्वेन तदर्थमारम्भणीयत्वात् । किञ्च जन्ममरणशब्दयोर्देहप्रादुर्भावतिरोभावानुविधायित्वेऽपि देहात्मभे-दासिद्धौ भाक्तत्वासिद्धिः, घटविषययोरुत्पत्तिविनाशशब्दयोरभाक्तत्वं हि तत्रार्थभेदाभावात्, देहात्मभेदे सिद्धे विरुद्धस्वभावतयाऽवगतार्थद्वयविषयै-क्यव्यपदेशस्याग्निर्माणवक इत्यादिव्यपदेशस्येव भाक्तत्वं सिध्यतीति न पृथक्समर्थनीयत्वम्, अतस्तत्रवैयर्थ्यं जातकर्मा हि विधिपरिहारपरत्वमप्य-युक्तं शङ्कायाः परिहारस्य वा कण्ठोक्त्यभावे तयोरभिप्रेतत्वकल्पनायो-गात् कण्ठोक्तार्थोपयुक्ततया तदभिप्रेतत्वकल्पनमिति चेत् कण्ठोक्ततया भवदभिमतार्थस्य साध्यत्वानुपपत्तेर्दर्शितत्वात्तदुपयोगितयाऽभिप्रेतत्व-कल्पनानुपपत्तेः, । अन्ये तु तेजोऽत इत्यादिसूत्रजातमेवं व्याचक्षते तेजो-ऽतः ब्रह्मण एवोत्पद्यते न वायोः छान्दोग्ये वायोस्तदुत्पत्त्यश्रवणात् वायोरग्निरिति श्रुतेर्मुख्यार्थमाननजन्यवायुनाऽग्न्युत्पत्त्यनुवादकतयोपपत्तेरिति पूर्वपक्षं कृत्वा एकस्य सम्भूत–शब्दस्य क्वचित्प्रतिपादकस्य क्वचिदनुवाद-

१ अनादित्वसाधनेनेति पा० ।

क्त्वायोगात्, परम्परया ब्रह्मजत्वोपपत्तेश्च वायोरपि तेज उत्पद्यत इति सिद्धान्तितं क्वचिदवचननिमित्तशङ्कायाः आद्याधिकरणे भवद्भिः परिहृतत्वा- त्तत्राप्यवचनमात्रस्य हेतुत्वानुपपत्तेरस्माभिर्दर्शितत्वाच्च पूर्वपक्षोत्थानं न घटते श्रुतेर्मुखवायुना ज्वलनोत्पत्त्यनुवादकतयाऽधिकशङ्कास्पदमिति चेन्न आकाशाद्वायुरिति श्रुतेरपि मुखावच्छिन्नाकाशाद्वायूत्पत्तेरनुवादक- त्वस्य शङ्कास्पदत्वाभावात् तत्रापि शङ्कापरिहारावभिप्रेताविति चेन्न का- रणभूते वायौ कण्ठोक्तयोः कार्य्यभूते तेजस्यभिप्रेततायाः एवोचितत्वात् क्व- चिदवचनस्य हेतुत्वानुपपत्तेर्दर्शितत्वादेव तदप्यनपेक्षितं छान्दोग्ये वायोस्तेज- उत्पत्त्यकथनमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानानुपयोगादित्यप्ययुक्तं, तेज- सोऽपाम् उत्पत्तेरप्यकथनीयत्वप्रसङ्गात् तेजोरूपस्य ब्रह्मण एव कारणत्वात् प्रतिज्ञोपयोग इति चेत् तर्हि वायुरूपस्य ब्रह्मणः कारणत्वात्तत उत्पत्ति- कथनस्यापि नानुपयोगः । आप इति आप एवेदमग्र आसीदिति प्रलये व्यवस्थानश्रवणादापो नोत्पद्यन्ते । यद्वा ब्रह्मण एवोत्पद्यन्ते न तेजसः तस्मादापोऽसृज्यन्त अप एव ससर्जादाविति वचनात् अग्नेराप इति तूष्मणा- स्वेदोत्पत्तिं किरणेभ्यो वृष्टिं वा वदतीति अग्नेरनन्तरं ब्रह्मण आप उत्पद्यन्त इति वार्थ इति द्विविधं पूर्वपक्षं कृत्वा अग्नेराप इति श्रुताव- ध्याहारायोगात् संभूत–शब्दार्थैकरूप्याच्चाग्र आसीदिति श्रुतेः प्रकृत्यन्तर्गत- सूक्ष्माम्बुविषयत्वावान्तरप्रलयविषयत्वयोरन्यतरसंभवाच्च तेजसोऽम्बूत्प- त्तिरिति सिद्धान्तितम् आप एवेदमग्र आसीदिति वाक्यस्य पार्थिवस्य जगतोऽप्सु प्रलयपरत्वेनापामनुत्पत्तिपरत्वाप्रतीतेः पूर्वपक्षानुदयाद्विदम- युक्तम् उत्पत्त्यवचनात् पूर्वपक्षश्चेत् पूर्वमेव परिहृतमिति न शङ्कोत्थानम् अपां ब्रह्मण एवोत्पत्तिर्न तेजस इति च न शङ्कोत्तिष्ठति अवचनस्य पूर्वमेव परिहृतत्वात् अनन्तरशब्दाध्याहारस्य वायोरग्निरित्यत्राप्यनाश- ङ्कितस्य शङ्कार्हत्वे वा तत्रैव परिहर्त्तव्यतया पुनःशङ्कानुपपत्तेः, सूक्ष्माणा- मपां प्रकृतौ स्थितिश्च चिन्त्या किमप्त्वप्रहाणेनावस्थितिरिति? उताप्रहाणेन प्रथमेऽनवस्थितिरेवोक्ता स्यात् घटत्वप्रहाणे तदनवस्थितिवत्, द्वितीये आपस्तेजसि लीयन्त इति श्रुतिविरोधः पृथिव्यधिकारेति अन्न–शब्दस्य प्रसि-

द्वारपरत्वेन छान्दोग्ये पृथिव्युत्पत्त्यवचनाद्नुत्पत्तिं पूर्वपक्षीकृत्य पृथिव्युत्पत्तिसाधकमधिकरणान्तरं वर्णितं तदप्यवचनस्य पृष्टबीजवच्छङ्काङ्कुरजननासामर्थ्याद्वेवायुक्तं तदभिध्यानादिति इदं स ऽमसृजत तस्मादग्निः समिधो यस्य सूर्यः तत्तेजोऽसृजत आत्मन आकाश इत्यादिषु तत्त्वान्तरव्यवहितात् ब्रह्मणस्तदुत्तरतत्त्वसृष्टिरुच्यते तत्त्वानामपि कारणत्वश्रवणात् नियतक्रमाणां तेषामुत्तरोत्तरव्यवधायकत्वाच्चेति पूर्वपक्षं कृत्वा तदैक्षतेत्याद्युक्ताभिध्यानस्य तत्तत्कार्य्येषु तत्सृष्ट्वा तदेवानुप्राविशदित्यनुप्रविष्टतया श्रुतपरमात्मलिङ्गत्वात् स एव सर्वत्रोपादानं तत्त्वान्तराणि तु देवदत्तस्य तु गृहवदपादानानि उपादानत्वेऽप्यात्मनश्च तत्त्वान्तराणां च सहकारणत्वसंभवादुभयेषामप्युपादानतया न व्यवधानमिति सिद्धान्तितं तत्र ब्रूमः वाय्वादेरुपादानाकाशाद्विभज्यमानोंऽशः किं वाय्वादिरूपेण परिणमते न वा? न चेत् पूर्वाधिकरणविरोधः, वायोस्तेजस उत्पत्तिः आपस्तेजसोऽप्युत्पद्यन्त इति हि सिद्धान्तितं परिणमते चेत्तेन परिणामांशेन कस्य व्यवहितकारणत्वमाशङ्क्याव्यवधानेन कारणत्वं समर्थ्यते? किं निमित्तस्य? उतोपादानस्य? न प्रथमः, ईश्वरेण विना तद्व्यवधानस्य निमित्तान्तरस्य जगत्सृष्टिवेलायामसंभवात्, कर्मणामपि सुखदुःखान्वयरूपवैषम्यमात्र एव हि निमित्तत्वं न तु सृष्टिमात्रे, द्वितीये किमीश्वरस्यव्यवधानमाशङ्क्य परिह्रियते? उताकाशस्य? उत सन्मात्रस्य? प्रथमे तत्तत्कार्य्यं प्रति ईश्वरांशस्याव्यवहितोपादानत्वे निर्विकारत्वश्रुतयो निर्विषयाः स्युः, द्वितीयतृतीययोरभिध्यानलिङ्गस्यापक्षधर्मता स्यात्, तृतीयेऽपि किं द्रव्यान्तरव्यवधानं निवार्यते? उतावस्थान्तरव्यवधानं? न प्रथमः, तदनन्यत्वमित्यत्र कृतत्वेनारम्भवैयर्थ्यात्, न द्वितीयः आकाशाद्वायुरिति अवस्थान्तरव्यवधानस्य श्रौततया दुर्निवारत्वात्, आकाशाद्यवस्थं तत्तदवस्थानापन्नं च सन्मात्रमुपादानमिति चेन्न युगपदेकस्य द्रव्यस्याकाशाद्यवस्थापत्त्यनापत्त्योर्विरुद्धत्वात् आकाशाद्यवस्थापन्नेन तदवस्थानापन्नेनांशान्तरेण च सन्मात्रं वाय्वाद्युपादानमिति चेत्तदंशान्तरं किं नियन्त्रंशाद्व्यतिरिक्तं? मुत व्यतिरिक्तं? प्रथमे निर्विकारत्वश्रुतिकोपः, द्वितीयेऽभिध्यानलिङ्गस्यापक्षधर्मता, प्रकृतेः प्रलया-

वस्यपुरुषस्य च सदसम्भवात् अत आत्मनश्च तत्त्वान्तराणां च सहोपादानत्वम् इत्यनुपपन्नम् । अत एव पूर्वाधिकरणेष्वपि वायोश्च तेजस उत्पत्तिः आपस्तेजसोऽप्युत्पद्यन्त इति सिद्धान्तश्चानुपपन्नः वाय्वाद्यवस्थापन्नतत्तद्रहिततदंशद्वयस्य प्रमाणाभावादुक्तोपपत्तिविरोधाच्च तदभिध्यानादिति सूत्रानन्तरमसम्भवस्त्विति सूत्रं निवेश्याधिकरणान्तरं वर्णितम् अस्य पाठक्रमस्य प्रसिद्धिप्राचुर्य्यविरोधात् प्रसिद्धपाठानुरोधे सङ्गतिसद्भावाच्च नात्र निवेशनीयं चिन्तितेभ्य आकाशादिभ्योऽतिरिक्तानीन्द्रियमहदहङ्काराव्यक्तपुरुषपरमात्मतत्त्वानि षोडश तेषां सर्वेषां छान्दोग्यतैत्तिरीययोरश्रवणादनुत्पत्तिं वस्तुत्वात् पृथिव्यादिवत्सर्वेषामुत्पत्तिं च पूर्वपक्षीकृत्य सन्मात्रस्य सन्मात्रात् सद्विशेषाच्चोत्पत्त्यसम्भवेनानुत्पत्तिमेकत्वावधारणप्रतिज्ञानाभ्यामन्येषां सर्वेषाम् उत्पत्तिं च सिद्धान्तयन्ति तत्राश्रवणात् पूर्वपक्षोदयः पूर्वमेव निरस्तः । नित्यं विभुं सर्वगतं सुसूक्ष्मं दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यज इति परस्यात्मनो नित्यत्वाजत्वयोर्धर्मयोः पूर्वनिरूपितवाक्यैरवगतत्वात् सर्वं कार्यमिति शङ्का नोदेति, न हि वस्तुत्वेनाविभुत्वानुमानमाशङ्क्य क्वचिदधिकरणे निराकृतं निरूपितवाक्येषु विभुत्वश्रवणात्, अतःपूर्वपक्षानुत्थितेरधिकरणान्तरत्वमप्ययुक्तं विपर्ययेण त्वित्यादि सूत्रद्वयं भूतव्यतिरिक्ततत्त्वानां सर्गक्रमविषयमधिकरणान्तरं वर्णितं तत्रैतस्माज्जायते प्राणः इन्द्रियेभ्यः परा ह्यर्था इति वाक्यद्वयं विषयः, अत्र प्राण-शब्दो महद्वाची ज्ञानक्रियाशक्त्यवच्छिन्नस्य महतो बुद्धिप्राणशब्दवाच्यत्वात्, मनःशब्दोऽहङ्कारपरः सर्वेन्द्रियशब्देन मनसोऽप्युपात्तत्वादिति ह्यासपुराणेषु खे वायुः प्रलयं याति मनस्याकाशमेव चेति प्रयोगाच्च, एवं चात्मनो महान् जायते महतोऽहङ्कारिदिन्द्रियाणि इन्द्रियेभ्यो भूतानीति क्रमः स्यात्, अयमेव क्रमो ग्राह्यः आकाशादिषु क्रमविवक्षादिषु क्रमविवक्षादर्शनादिति पूर्वपक्षे प्राप्ते एतच्छ्रुत्युक्तविपर्ययक्रमेणेन्द्रियेभ्यः परा इत्यादिश्रुत्यन्तरोक्तक्रमो ग्राह्यः एतस्मादित्यत्र पदार्थनिर्देशमात्रावगमात् तत्र तु कारणतया परत्वेन क्रमविवक्षाप्रतीतेरिति सिद्धान्त उक्तः । तन्मात्रावस्थानि भूतान्यर्थाः शब्दतन्मात्रादिष्वेकैकेन युक्तादहङ्काराच्छ्रोत्राद्युत्प-

त्तिर्वागाद्युत्पत्तिश्च, अत इन्द्रियेभ्योऽर्थानां परत्वम् एतस्मादिति श्रुतिश्चाविरोधेन नेया प्राणात् पूर्वमव्यक्तमुपसंहार्य्यं, न चेन्द्रियकार्य्यत्वं खादीनां सर्वेन्द्रियाणिचेति च शब्दो भिन्नक्रमः सर्वेन्द्रियाणि खादीनि च मनसोऽहङ्काराज्जातानीत्यर्थः अन्तरेति । ननु प्राणशब्दवाच्यस्य महतां खाद्यर्थानां चान्तराले सेन्द्रियवर्ग मन एकत्र श्रूयते अन्यत्र मनश्च बुद्धिश्च अतो विरोधः, न च मनःशब्दवाच्याहङ्कार एव बुद्धि—शब्दाभिधेयः "बुद्धिं तु सारथिं विद्धि मनःप्रग्रहमेव च । विज्ञानसारथिर्यस्तु मनः प्रग्रहवानिति क्रमेण तद्व्यपदेशलिङ्गात् ततश्चाव्यक्तमहद्विज्ञानाहङ्कारतन्मात्राणीति अचित्तत्त्वेष्वेव नव प्रकृतयः स्युरितिचेन्न अविशेषात् बुद्धिमहतोरविशेषात् बुद्धिरेव महान् ज्ञानक्रियाशक्तिभेदेन द्विधा व्यपदेशः परत्वं च न कारणत्वेन आकारान्तरेण परत्वस्यापि साधारणत्वात् पर—शब्दस्य बुद्धिमनसोरविशेषो वा भूतादित्वेनेन्द्रियादित्वेन चावस्थिताहङ्कारविषयत्वसम्भवान्मनोबुद्धिशब्दयोः । यद्वा इन्द्रियमेव मनःविज्ञानमहङ्कारस्स्थानप्रमाणात् महान्महानेव । यद्वा महानात्मेति प्राणशरीरोहिरण्यगर्भ उच्यते प्रजापतिः संवत्सरो महानिति प्रसिद्धेः, अतस्तत्त्वसर्गक्रम उपपन्न इति, तदिदमनुपपन्नम् इन्द्रियेभ्यः परा इत्यादिवाक्यस्य कारणक्रमपरत्वे आनुमानिकमप्येकेषामित्यधिकरणविरोधात्, न च तत्र वैभववादः अन्यत्रापि वैभववादः किं न स्यादिति पर्यनुयोगानतिवृत्तेः, कारणवाक्येषु सर्वेषु सूत्रकारनिष्कर्षेऽनाश्वासप्रसङ्गात् बुद्धेरात्मा महान् पर इत्यत्रौचित्यभङ्गप्रसङ्गात् तद्व्रहितनिर्वाहे सम्भवति तदयोगाच्च अर्थविरोधात्प्रकरणबाधोयुक्त इति चेन्न औचित्यभङ्गेन त्वदुक्तार्थपरत्वमिति चक्रकप्रसङ्गात् मनःशब्दस्य स्वरनिर्वाहे सम्भवति अहङ्कारपरत्वं चायुक्तं मनस इन्द्रियत्वमाश्रित्य विज्ञानशब्दस्याहङ्कारपरत्वमत एव नोपपद्यते विज्ञानशब्दस्याहङ्कारे स्वारस्याभावात् तत्स्थानस्थस्य बुद्धिशब्दस्यापि तत्तुल्यार्थत्वे क्लिष्टत्वादक्लिष्टार्थत्वे स्थानप्रमाणाविरोधाच्च । किञ्च विज्ञानशब्दस्य वा मनःशब्दस्य वाहङ्कारपरत्वे विज्ञानसारथिर्यस्तु बुद्धिं तु सारथिं विद्धि मनःप्रग्रहमेव चेति वाक्यविरोधश्च, न हि हयत्वेन रूपितेन्द्रियसंयमनस्याहङ्कारो हेतुः, महच्छ-

ब्दस्य हिरण्यगर्भपरत्वमप्ययुक्तं हिरण्यगर्भस्य बुद्धिसंज्ञमहत्तत्त्वोपादानत्वाभावात् अव्यक्तमेव हि तदुपादानं कारणतया परत्वस्याविवक्षितत्वे प्रकरणस्वारस्यभङ्गः, एतदुक्तं भवति प्राचीनाधिकरणनिष्कर्षविरोधान्मनःप्राणशब्दयोरमुख्यत्वाच्चक्रकापत्तेश्च मनोबुद्धिविज्ञानशब्दानामस्वारस्यात् बुद्धिविज्ञानशब्दयोरर्थभेदे स्थानविरोधादहङ्कारस्येन्द्रियविजयोपायत्वानुपपत्तेश्च तयोर्वाक्ययोः कार्य्यकारणक्रमपरत्वायोगात् सुबालोपनिषत्प्रतिपन्नाप्ययक्रमस्य विरोधाभावेन संशयानुत्थानाच्च अस्य सूत्रद्वयस्यान्यैरुक्तप्रकारेणाधिकरणान्तरत्वमयुक्तं चराचरेति स चायं पुरुषो जायमानः शरीरमभिसम्पद्यमान इति स उत्क्रामन् म्रियमाण इति देहसंयोगवियोगातिरेकेणात्मनो जन्ममरणश्रवणादुत्पत्तिविनाशौ स्त इति पूर्वपक्षं कृत्वा न जीवो म्रियत इत्यादिश्रुतेरभिसम्पद्यमान इत्यस्य जन्मविवरणरूपत्वसम्भवात् जन्ममरणयोः शरीरगतयोरात्मन्युपचरितत्वाच्च नोत्पत्तिविनाशाविति सिद्धान्तितं, तदयुक्तं पूर्वमनादित्वस्योक्तत्वात् नित्यत्वश्रुत्यादिना जन्ममरणविरहस्यानन्तरमेव वक्ष्यमाणत्वात् सिद्धे देहात्मभेदे तद्धर्मव्यपदेशस्यात्मनि माणवकेऽग्निभावस्येव उपचरितत्वसिद्धेश्च ॥ तेजोऽधिकरणं समाप्तम् ॥

आत्माधिकरणम् ।

## सू॰ नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १८ ॥

सू॰ वियदादेः कृत्स्नस्य परस्माद्ब्रह्मण उत्पत्तिरुक्ता, इदानीं जीवस्याप्युत्पत्तिरस्ति नेति संशय्यते किं युक्तमस्तीति, कुतः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तेः, प्राक्सृष्टेरेकत्वावधारणाच्च वियदादेरिव जीवस्याप्युत्पत्तिवादिन्यः श्रुतयश्च सन्ति "यतः प्रसूता जगतः प्रसूतिः । तोयेन जीवान् विससर्ज भूम्याम् । प्रजापतिः प्रजा असृजत सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्र-

निष्ठाः यतो वा इमानि भूतानि जायन्त इति, एवं सचेतनस्य जगत उत्पत्तिवचनाज्जीवस्याप्युत्पत्तिः प्रतीयते, न च वाच्यं ब्रह्मणोनित्यत्वात्तत्त्वमस्यादिभिर्जीवस्य ब्रह्मत्वावगमात् जीवस्य नित्यत्वमिति ऐतदात्म्यमिदं सर्वं सर्वं खल्विदं ब्रह्मेत्येवमादिभिर्वियदादेरपि ब्रह्मत्वावगमात्तस्यापि नित्यत्वप्रसक्तेः, अतो जीवोऽपि वियदादिवदुत्पद्यत इत्येवं प्राप्तेऽभिधीयते नात्मा श्रुतेरिति, नात्मोत्पद्यते कुतः श्रुतेः, न जायते म्रियते वा विपश्चित् ज्ञाज्ञौ द्वावजावीशानीशानीशावित्यादिभिर्जीवस्योत्पत्तिप्रतिषेधो हि श्रूयते

टी० सू० नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः, अवान्तरसङ्गतिमाह "वियदादे"रिति उत्पत्तिरस्ति नेतीति वियदादिवदुत्पत्तिरस्ति नास्तीति संशय्यत इत्यर्थः । किं जीव उत्पद्यते ने? ति तोयेन जीवा नित्या इति श्रुतिः किमुत्पत्तिं प्रतिपादयति? उत भोक्तृत्वानुगुणज्ञानसंकोचविकासमिति न जायते म्रियते इत्यादिकं जीवोत्पत्तिवचनस्य ज्ञानसंकोचविकासपरतामवगयति? ने? ति किमत्र नित्यत्ववचनमाकाशामृतत्ववचनवत् गौण? मुत मुख्य? मिति मुख्यत्वानङ्गीकारेऽकृताभ्यागमादिकं प्रसज्यते नेति, यदा न प्रसज्यते तदा नित्यत्ववचनस्य गौणतया न जायत इत्यादेश्च जीवोत्पत्तेर्ज्ञानविज्ञाकासरूपतानवगमकत्वात्तोयेन जीवानित्यादिश्रुतेश्च जीवोत्पत्तिप्रतिपादकत्वाज्जीव उत्पद्यत इति भवति, यदा तु अकृताभ्यागमादि प्रसज्यते तदा नित्यत्ववचनस्य मुख्यत्वान्न जायत इत्यादि श्रुतेश्च जीवोत्पत्तेर्ज्ञानसङ्कोचविकासरूपत्वावगमकत्वात्तोयेन जीवानित्यादिश्रुतिरपि तादृगुत्पत्तिपरेति जीवोवियदादिवन्नोत्पद्यत इति सिध्यति । श्रुत्यर्थापत्तिमाह "एकविज्ञानेने"ति, श्रुतिमाह "वियदादे"रिति, । राद्धान्तमाह "एवं प्राप्त"इति । श्रुतिमाह "न जायत" इति, । श्रुत्यर्थापत्तिमाह—

मू० आत्मनो नित्यत्वं च ताभ्यः श्रुतिभ्य एवावगम्यते नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे इत्यादिभ्यः, अतश्च नात्मोत्पद्यते, कथं तर्हि एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपद्यते इत्थमुपपद्यते जीवस्यापि कार्य्यत्वात्कारणकार्य्ययोरनन्यत्वाच्च, एवं तर्हि वियदादिवदुत्पत्तिमत्त्वमङ्गीकृतं स्यात्, नेत्युच्यते कार्य्यत्वं हि नामैकस्य द्रव्यस्यावस्थान्तरापत्तिः तज्जीवस्याप्यस्त्येव, इयांस्तु विशेषः वियदादेरचेतनस्य यादृशोऽन्यथाभावो न तादृशो जीवस्य, ज्ञानसङ्कोचविकासलक्षणो जीवस्यान्यथाभावः, वियदादेस्तु स्वरूपान्यथाभावलक्षणः सेयं स्वरूपान्यथाभावलक्षणोत्पत्तिर्जीवे प्रतिषिध्यते, एतदुक्तं भवति भोग्यभोक्तृनियन्तॄन् विविक्तस्वभावान् प्रतिपाद्य भोग्यगतमुत्पत्त्यादिकं भोक्तरि प्रतिषिध्य तस्य नित्यतां च प्रतिपाद्य भोग्यगतमुत्पत्त्यादिकं भोक्तृगतं चापुरुषार्थाश्रयत्वं नियन्तरि प्रतिषिध्य तस्य नित्यत्वं निरवद्यत्वं सर्वदा सर्वज्ञत्वं सत्यसङ्कल्पत्वं करणाधिपाधिपत्वं विश्वस्य पतित्वं च प्रतिपाद्य सर्वावस्थयोश्चिदचितोस्तं प्रति शरीरत्वं तस्य चात्मत्वं प्रतिपादितम् अतस्सर्वदाचिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्म

टी० "आत्मनो नित्यत्वं चे"ति, ताभ्यः श्रुतिभ्योऽवगम्यमानात्, नित्याच्चेति सूत्रार्थः । चोदयति "कथ"मिति, परिहरति "इत्थ"मिति, पुनश्चोदयति "एवं तर्हि"ति, परिहरति "नेत्युच्यते" इति, जीवस्य कार्य्यत्वं

वियदादिवदुत्पत्त्यनङ्गीकारश्च व्याहताविति शङ्कायां चिदचितोरनुयायि-कार्य्यलक्षणमाह "कार्य्यत्वं ही"ति, तर्हि कोविशेषः? इत्यत्राह "इयांस्त्वि"ति, वियदादेः स्वरूपान्यथाभावलक्षणः जीवस्य ज्ञानसङ्कोचविकासलक्षण इति विभागे किं प्रमाणं? जीवस्यापि स्वरूपान्यथाभावलक्षणं कार्य्यत्वं किं न स्यात् ब्रह्मणोऽपि कार्य्यत्वाभ्युपगमात् स्वरूपान्यथाभावाभ्युपगमे निर्विकारत्वहानिः । धर्मान्यथाभावाभ्युपगमे ज्ञानसंकोचस्य कर्मनिमित्तत्वात् कर्मवश्यत्वप्रसङ्ग इत्यत्राह "एतदुक्त"मिति, भोग्यगतमुत्पत्त्यादिकं भोक्तरि प्रतिषिध्यते न तु स्वासाधारणमित्यर्थः । कारणाधिपाधिपादिशब्दैः श्रुतयः स्मारिताः,। घटकश्रुत्यर्थमाह "सर्वावस्थयो"रिति, आकृत्यधिकरणन्यायं स्मारयति "अतः सर्वदे"ति, सर्वदा चिदचिद्वस्तुशरीरं चेत् कार्य्यकारणभावभेदः कथमित्यत्राह—

सू० कदाचित्स्वस्मादविभक्तव्यपदेशानर्हातिसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरं तिष्ठति तत्कारणावस्थं ब्रह्म कदाचिच्च विभक्तनामरूपस्थूलचिदचिद्वस्तु शरीरं, तच्च कार्य्यावस्थं; तत्र कारणावस्थस्य कार्यावस्थापत्तावचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोग्यत्वाय शब्दादिमत्तया स्वरूपान्यथाभावरूपविकारो भवति, चिदंशस्य च कर्मफलविशेषभोक्तृत्वाय तदनुरूपज्ञानविकासरूपविकारो भवति, उभयप्रकारविशिष्टे नियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवति कारणावस्थाया अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समानः, अत एवैकस्यावस्थान्तरापत्तिरूपविकारापेक्षया येनाश्रुतं श्रुतमित्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृदादिदृष्टान्तः यथा सोम्यैकेनेत्यादिना दर्शितः, ईदृशज्ञानसङ्कोचवि-

कासकरतत्तद्देहसम्बन्धवियोगाभिप्राया जीवस्योत्पत्तिमरणवादिन्यः "प्रजापतिः प्रजा असृजत इत्याद्याः श्रुतयोऽचिदंशवत्स्वरूपान्यथात्वाभावाभिप्राया उत्पत्तिप्रतिषेधवादिन्योनित्यत्ववादिन्यश्च, जायते म्रियते इत्याद्या नित्यो नित्यानामित्याद्याश्च श्रुतयः स्वरूपान्यथात्वज्ञानसङ्कोचविकासरूपोभयविधानिष्टविकाराभावाभिप्रायाः, स वा एष महानज आत्माऽजरोऽमरोऽमृतो ब्रह्म नित्यो नित्यानामित्याद्याः परविषयाः श्रुतयः ॥

टी० "तत्कदाचि"दिति, नामरूपविभागानर्हसूक्ष्मदशापत्तिरूपं कारणत्वं तदर्हस्थूलदशापत्तिरूपं कार्य्यत्वं च तुल्यं चेत्, कथमत्र वक्ष्यमाणविधिनिषेधविषयभूतमवान्तरवैषम्यमुच्यत इत्यत्राह "तत्रे"ति, अचितः स्वरूपान्यथाभावरूपपरिणामित्वे हेतुमाह "भोग्यत्वाये"ति, चितो ज्ञानसङ्कोचविकासरूपकार्य्यत्वे हेतुमाह "भोक्तृत्वाये"ति, परमात्मनस्तत्तदवस्थचिदचिन्नियमनरूपविकारास्पदत्वमाह उभयेत्यादिना, कार्यत्वं ब्रह्मणः कथमित्यत्राह "कारणावस्थाया"इति, विशिष्टं कारणं चेन्मृत्पिण्डदृष्टान्तः कथं घटत इत्याह "अत एवे"ति, यथा मृत्पिण्डदृष्टान्ते पार्थिवत्वाचेतनत्वादिकं नापेक्षितं तथा चिदचिद्विशिष्टत्वं स्वरूपान्यथाभावलक्षणविकाराभावं च ब्रह्मणि न बाधते मृत्पिण्डलोहमण्यादिदृष्टान्तः अपि त्वनेकविशेषणविशिष्टैकद्रव्यावस्थान्तरयोगमात्रे स दृष्टान्तः रूपादिमत्त्वान्मृत्पिण्डादेरित्यर्थः उत्पत्त्यनुत्पत्त्यादिपराणां श्रुतीनां विषयविभागमाह "ईदृशे"ति, अनिष्टविकाराभावाभिप्राया इत्यनिष्ट–शब्दे न सोऽकामयत बहु स्यामित्याद्युक्तेष्टविकारा व्यावृत्ताः । सर्वदा चिदचिद्विशिष्टं ब्रह्म चेदेकत्वावधारणं कथमित्यत्राह–

भा० एवं सर्वदा चिदचिद्वस्तुविशिष्टस्य ब्रह्मणः प्राक्सृष्टेरेकत्वावधारणं च नामरूपविभागाभावादुपपद्यते, तदिदं

तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियते इति हि नामरूपविभागभावाभावाभ्यां नानात्वैकत्वे च वदन्तीति, । ये त्वविद्योपाधिकं जीवत्वं वदन्ति, ये च पारमार्थिकोपाधिकतं, ये च सन्मात्रस्वरूपं ब्रह्म स्वयमेव भोक्तृभोग्यनियन्तृरूपेण त्रिधा ऽवस्थितं वदन्ति सर्वेऽप्येते अविद्याशक्तेरुपाधिशक्तेर्भोक्तृभोग्यनियन्तृशक्तीनां च प्रलयकालेऽवस्थानेऽपि तदानीमेकत्वावधारणं नाम रूपविभागाभावादेवोपपादयन्ति । वैषम्यनैर्घृण्ये न सापेक्षत्वात् न कर्म्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते चेति सूत्राभ्यां जीवभेदस्य तत्कर्मप्रवाहस्य चानादित्वाभ्युपगमाच्च । इयान् विशेषः, एकस्यानाद्यविद्यया ब्रह्म स्वयमेव मुह्यति अन्यस्य पारमार्थिकानाद्युपाधिना ब्रह्म स्वयं[1]मेव बध्यते उपाधिब्रह्मव्यतिरिक्तवस्त्वन्तराभावादपरस्य ब्रह्मैव विचित्राकारेण परिणमते, कर्म्मफलानि चानिष्टानि भुङ्क्ते नियन्तृशस्य भोक्तृत्वाभावेऽपि सर्वज्ञत्वात्स्वस्मादभिन्नं भोक्तारमनुसन्दधातीति स्वयमेव भुङ्क्ते, अस्माकं तु स्थूलसूक्ष्मावस्थचिदचिद्वस्तुशरीरं ब्रह्म कार्यकारणोभयावस्थावस्थितमपि सर्वदा निरस्तनिखिलदोषगन्धं सत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरमवतिष्ठते प्रकारभूतचिदचिद्वस्तुगता अपुरुषार्थाः स्वरूपान्यथाभावाश्चेति सर्वं समञ्जसम् ॥ आत्माऽधिकरणं समाप्तम् ॥

१ ब्रह्मस्वरूपमेव बध्यते इति पा० ।

टी० 'एव''मिति, श्रुत्या नामविभागतदभावाभ्यां नानात्वैकत्ववचनादित्यर्थः, ये त्विति सूत्रेोक्तत्वात् परैरपि तदभ्युपगमादिति हेतुद्वयमुक्तं भवति तर्हि परेषां पक्ष एव स्वीकार्य्य इत्यत्राह "इया''निति, नियन्त्रंशस्य न भोक्तृत्वमित्यत्राह "नियन्त्रंशस्ये'ति, सर्वेऽपि परे त्वश्रुतेरिति पदं छिन्दन्ति तदयुक्तं यथा सुदीप्तात्तोयेन जीवानित्यादिश्रुतिमूले पूर्वपक्षे प्राप्ते सत्यश्रुतेरिति हेतोरसिद्धत्वात् क्वचिदश्रवणस्य पूर्वपक्षहेतुताया व्युदस्तत्वाच्च श्रुतेरिति पदस्योत्तरत्रानुषङ्गदर्शनाच्च उत्क्रान्तिगत्यागतीनामित्यत्र श्रुतेरिति ह्यनुषज्यते श्रवणादित्यध्याहारेण योजनेति चेन्न अनुषङ्गसम्भवेऽध्याहारानुपपत्तेः । किञ्च ब्रह्मण एवाविकृतस्य जीवात्मनाऽवस्थितत्वात् ब्रह्मणश्चानुपपत्तिमत्त्वादभिन्नस्य जीवस्यानुत्पत्तिरिति चानुपपन्नं सर्वं खल्विदं ब्रह्म ब्रह्मैवेदं सर्वं पुरुष एवेदं सर्वमिति तदेव शुक्रममृतं तद्ब्रह्म तदापः स प्रजापतिरिति ज्योतींषि विष्णुर्भुवनानि विष्णुरित्यादिभिः पृथिव्यादीनामपि ब्रह्मानन्यत्वेन हेतोर्व्यभिचारात्, नन्वचित्सामानाधिकरण्यं बाधार्थमिति चेत् जीवसामानाधिकरण्यमपि तथा किन्न स्यात्, तथा सति जीवस्वरूपनिवृत्त्या शास्त्रस्य प्रयोजनपर्यवसानं न स्यादिति सामानाधिकरण्यस्य वस्तुमात्रोपलक्षणत्वेऽप्यहमर्थनिवृत्त्या तस्यापुरुषार्थविश्रान्तिर्दुष्परिहरा, अतः पृथिव्यादिव्यावर्त्तकं ब्रह्मानन्यत्वं जीवस्यासिद्धम् । ब्रह्मैवाविकृतं जीवात्मनाऽवतिष्ठते विकृतं पृथिव्याद्यात्मनाऽवतिष्ठत इति चेन्न जीवस्य ज्ञातृत्वात्, तच्च ज्ञातृत्वं विक्रियात्मकत्वमिति भवदभ्युपगमाच्च विकृतत्वाविकृतत्वरूपवैषम्याभावात् स विकारोऽपरमार्थ इति चेत् पृथिव्यादिविकारोऽप्यपरमार्थ इति पृथिव्यादेरप्यनुत्पत्तिर्जीवोत्पत्तिर्वा स्यात् । ननु पृथिव्यादिधर्मिण एव बाध्या जीवत्वमात्रमिह बाध्यम् अतः स्वरूपनित्यत्वमिति चेन्न पृथिव्यस्तीत्यादिसत्तत्पृथिव्यादिसमानाधिकरणत्वात् सन्मात्रस्य पृथिवीत्वादिधर्ममात्रस्यैवापारमार्थ्येन पृथिवीस्वरूपबाध इति वक्तुं शक्यत्वात् अहमस्मि घटोऽस्तीति जीवस्य घटादेश्च सदव्यतिरेको ह्यविशेषण प्रतीयते । किञ्च न तावत्परिशुद्धं जीवसंज्ञम् अनभ्युपगमात् तत्र

किमन्तःकरणविशिष्टं चैतन्यं जीवः? उत तदुपलक्षितं? प्रथमेऽन्तःकरणस्य सृष्टिसंहारविषयत्वेन तद्विशिष्टरूपस्याप्यादिमत्तया जीवस्योत्पत्तिप्रतिषेधोऽनुपपन्नः, द्वितीये शाखायमारसाभ्यां सह चन्द्रकेदारयोरिवोत्पत्तिप्रसङ्गाभावात्, ब्रह्मणो नित्यत्वस्यान्यत्र सिद्धत्वाच्चाधिकरणोत्थानं न स्यात् श्रुतिवैविध्यार्थपरिहारार्थमारम्भ इति चेत् कथं परिहारः उपाध्युत्पत्तिप्रलयावात्मन्युपचर्येते इतीति चेत् उपाधि—शब्दो यदि देहपरः तदा देहोत्पत्तिप्रलययोरात्मन्युपचरितत्वं चराचरव्यपाश्रय इत्यत्रोक्तमिति कृतकरत्वं स्यात् अन्तःकरणपरश्चेदन्तःकरणस्याद्यन्तवत्त्वात् कर्तृभोक्तृत्वयोरन्तःकरणधर्मत्वाभ्युपगमादन्तःकरणप्रलये ब्रह्मणोऽनुपहितत्वात्तत्र वासनासम्बन्धायोगात् पुनरुक्तताभ्यागमादिप्रसङ्गो दुर्वारः अनुपहितस्वरूपे सर्ववासनासम्बन्धे भोगसङ्करश्च स्यात्, कर्मभोक्तुर्जीवस्यादिमत्त्वं सर्वथा दुष्परिहरं च स्यात्, अनुपहितस्वरूपे कर्तृत्वभोक्तृत्वाभावादुपाध्युपहितस्वरूपस्यादिमत्त्वाच्च औपाधिकभेदाभेदवादेऽप्यन्तःकरणोपहितब्रह्मण एव कर्तृतया भोक्तृतया जीवरूपेण स्थितत्वादुपहिताकारस्यादिमत्त्वाच्च कर्तुर्भोक्तुरादिमत्त्वमवर्जनीयम् । उपाधीनां गत्वरतया क्षणे क्षणे बन्धमोक्षौ प्रतिसन्धानानियमकर्मसङ्करादयश्च स्युः । अन्येषां पक्षेऽप्यश्रुतेरिति पदकल्पनम् पूर्ववद्युदस्तं सर्गाधिकारेषु जीवस्य सृष्टिप्रलयाम्नानाभावपरम् अश्रुतिपदं व्याख्यातं तच्चायुक्तं यस्मिन्निदं सञ्च विचैमीत्युपक्रम्य सर्वे निमेषा जज्ञिरे इत्यतः प्रसूता जगतः प्रसूतिस्तोयेन जीवान्यससर्ज भूम्यामिति श्रुतेः उत्पत्तिप्रलयनिषेधश्रुतीनां विषयविभागश्चानुपपन्नः हिमकरकसैन्धवादीनां जलत्वप्रत्यभिज्ञानायोग्यावस्थान्तरापत्तिः तरङ्गबुद्बुदादीनां जलत्वप्रत्यभिज्ञानयोग्यत्वेऽपि संस्थान्तरापत्तिः विभक्तजलस्य विभाग एव न त्वभूयिष्ठो विकारः न करकादिस्थानीयामहदादयः ब्रह्मधर्मविज्ञानाद्यनन्वृत्तेः तरङ्गस्थानीया जीवाः ज्ञानानन्दादीनाम् अल्पानुवृत्तेः विभक्तजलस्थानीया ईश्वरव्यूहाः ज्ञानाद्यनुवृत्तेः पूर्णत्वात् प्रलयेऽपि पृथिव्यादीनां न विभागशक्तिस्तिष्ठति किन्तु परिणामशक्तिरेव जीवानान्तु विभागशक्तिरवतिष्ठते ईदृशविशेषेण जीवस्य नित्यत्वाविना-

शित्वाजत्ववादा इति ह्युक्तं तत्र ब्रूमः किं विभागशब्देन नामरूपविभागं विवक्षितत्वा नामरूपविभागाभिमानार्हताविभागशक्तिरित्युच्यते? उत जीवानां स्वरूपभेदप्रहाणेन पश्चाद्भेदप्राप्त्यर्हताविवक्षिता? आद्यः पक्षः साधिष्ठतमः । द्वितीये कटकमुकुटादीनामिव जीवानामादिमत्त्वं स्यात् कटकमुकुटादीनां प्रध्वंसे विभागशक्तिर्नास्ति जीवानां तु सा प्रलयेऽस्तीति चेन्न कटकादीनामपि विभागशक्तिमत्त्वेनावैषम्यात् अत एव हि हेमपिण्डात्पुनर्विभागः कटकादीनां भवति । ननु पूर्वं कटकोपयुक्तांशः पश्चादपि कटक एवोपयुज्यते न मुकुट इति नियमानर्हत्वाद्विभागशक्त्यभावः, जीवानां तु प्रतिनियतकर्मभोगानुगुणनियमवत्त्वाद्विभागशक्तिरवतिष्ठत इति चेत् समस्तभेदशून्यानां पुनर्भेदापत्तौ स एवायं पुण्यकृत्नान्य इति नियमानुपपत्तेः स्वे[कार]समस्तव्यावर्तकाकारानन्नुगतौ देवदत्ते यज्ञदत्तप्रत्यभिज्ञानवत् स एवायमिति प्रत्ययस्य भ्रान्तिरूपता स्यात् कर्मशक्तय एव भेद इति चेन्न सर्वासां कर्मशक्तीनां सन्मात्रवृत्तित्वेस्येयं कर्मशक्तिर्जीवस्येति नियमानुपपत्तेः, अतः स्वाभाविकस्वरूपभेदे स्थित एवाविभागापत्तिर्वर्णनीया अन्यथा अकृताभ्यागमादिप्रसङ्गात्, अतो विभागशक्तिरवतिष्ठते न स्वरूपभेद इत्यनुपपन्नं अतस्स्वरूपभेदे नित्ये सत्युत्पत्त्यनुत्पत्तिश्रुत्योर्विषयव्यवस्था कार्या ॥ आत्माधिकरणं समाप्तम् ॥

ज्ञाधिकरणम् । **सू० ज्ञोऽत एव ॥ १९ ॥**

सू० वियदादिवज्जीवो नोत्पद्यत इत्युक्तं, तत्प्रसङ्गेन जीवस्वरूपं निरूप्यते किं सुगतकपिलाभिमतचिन्मात्रमेवात्मनः स्वरूप? मुत कणभुगभिमतपाषाणकल्पस्वरूपमचित्स्वरूपमेवागन्तुकचैतन्यगुणकम्? अथ ज्ञातृत्वमेवास्य स्वरूप? मिति, किं युक्तं चिन्मात्रमिति कुतः, तथा श्रुतेः अन्तर्यामिब्राह्मणे हि य आत्मनि तिष्ठन्निति माध्यन्दिनीयपर्यायस्य स्थाने यो विज्ञाने तिष्ठन्निति काण्वा

अधीयते तथा—"विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चे"ति कर्तुरात्मनो विज्ञानमेव स्वरूपं श्रूयते, स्मृतिषु च "ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः" इत्यादिष्वात्मनो ज्ञानस्वरूपत्वं प्रतीयते। अपरस्तु जीवात्मनो ज्ञानत्वे ज्ञातृत्वे च स्वाभाविकेऽभ्युपगम्यमाने तस्य सर्वगतस्य सर्वदा सर्वत्रोपलब्धिप्रसङ्गात्करणानां च वैयर्थ्यात्सुषुप्तिमूर्च्छादिषु सतोऽप्यात्मनश्चैतन्यानुपलब्धेर्जाग्रत्सामग्र्यां सत्यां ज्ञानोत्पत्तिदर्शनादस्य न ज्ञानं स्वरूपं, नापि ज्ञातृत्वमागन्तुकमेव चैतन्यं सर्वगतत्वं चात्मनोऽवश्याभ्युपेत्यं सर्वत्र कार्य्योपलब्धेः सर्वत्रात्मनः सन्निधानाभ्युपगमाच्छरीरगमनेनैव कार्य्यसम्भवे सति गतिकल्पनायां प्रमाणाभावाच्च

टी० सू. ज्ञोऽत एव, अवान्तरसङ्गतिमाह "वियदादिवदि"ति, जीवस्वरूपस्य निरूपणीयत्वमस्त्येव तथाऽपि कार्य्यताप्रकारनिरूपणत्वाभावात् न पादेन साक्षात्सङ्गतिः, अतो वक्ष्यमाणाधिकरणचतुष्टयस्य प्रसङ्गात् सङ्गतिरित्यर्थः, तत्रास्याधिकरणस्य मुखान्तरेणापि सङ्गतिरप्यस्ति जीवस्य धर्मान्यथाभावलक्षणो विकारो न सम्भवति स्वरूपातिरेकेण ज्ञानाख्यधर्माभावात्, ज्ञानमेव हि स्वरूपमित्युक्ताक्षेपेणोत्थानात्, सेयं सङ्गतिरर्थसिद्धेत्यभिप्रेत्य न कण्ठोक्ता, किमित्यादि, किं जीवश्चैतन्यमात्रवपुः? उत जडस्वरूप एवागन्तुकचैतन्यः? उत स्वतो ज्ञाते? ति किं ज्ञानमात्रवपुष्ट्वे ज्ञानस्वरूपत्वतद्धर्मकत्वपरसर्वश्रुतिसामञ्जस्यम्? उतागन्तुकचैतन्यजडस्वरूपैकत्वे? उत स्वतो ज्ञातृत्वैकरूपत्व? इति ज्ञातृत्वस्य स्वरूपत्वे सर्वत्रोपलब्धिः प्रसज्यते ने? ति, तदर्थं किं जीवः सर्वगतः? उताणु? रिति अणुत्वे विप्रकृष्टार्थग्रहणाग्रहणे सम्भवतो ने? ति, एकजातीयद्रव्ययोर्नियतधर्मधर्मिभाव उपपद्यते ने? ति यदा नोपपद्यते तदा विप्रकृष्टार्थग्रहणाग्रहणासम्भवेन सर्वगतत्वात् सर्वत्रोपलब्धिप्रसङ्गेन ज्ञातृत्वस्य स्वरूपत्वे

सर्वश्रुतिसामञ्जस्याभावात् पक्षान्तरयोरन्यतरत् स्वीकार्यं स्यात्, यद धर्मधर्मिभाव उपपद्यते तदा विप्रकृष्टार्थग्रहणाग्रहणासम्भवेनाणुत्वे सिद्धे सर्वत्रोपलम्भाप्रसङ्गात् सर्वश्रुतिसामञ्जस्येन ज्ञातृत्वस्वरूप आत्मेति सिद्ध्यति, चिन्मात्रमिति मात्रचा ज्ञातृतादिव्यावृत्तिः, चिन्मात्रमिति भावप्रधाननिर्देशः ज्ञानत्वमित्यर्थः, ज्ञातृत्वमेवास्य स्वरूपमिति ज्ञातृत्वं स्वस्य परस्य चावभासप्रतिसम्बन्धित्वं, भासमानं वस्तु यस्मै भाति स हि ज्ञाता, तथात्वं ज्ञातृत्वमहंत्वमित्यर्थः, स्वरूपं स्वाभाविकाकारः, ज्ञानं यथा सत्यमित्यादि च पूर्वपक्षेऽनुसन्धेयम्। अपरस्तु—कणादमतानुसारीत्यर्थः। सर्वत्र कार्योपलब्धेः बुद्धिसुखदुःखाद्युपलब्धेर्देशान्तरे भोग्यवस्तूत्पत्तिश्च विभुत्वहेतुः तदुत्पत्तिरदृष्टसम्बन्धादेव भवति निराश्रयस्य धर्मादेस्तत्र सम्बन्धोऽनुपपन्न इति विभुत्वमभ्युपेत्यं, गतिकल्पनायां प्रमाणाभावाच्चेति गतिकल्पनपक्षे [1]गुणत्वं गतिश्चोभयं कल्प्यमितरपक्षे विभुत्वमेव कल्प्यमिति कल्पनालाघवाद्विभुत्वमेवोपपन्नमिति विभुत्वसम्भवादनन्यथासिद्धं गतेः कल्पकं नास्तीति भावः॥

सू० श्रुतिरपि सुषुप्तिवेलायां ज्ञानाभावं दर्शयति "नाहं खल्वयमेवं संप्रत्यात्मानं जाना[2]त्ययमहमस्मीति नो एव इमानि भूतानी"ति, तथा मोक्षदशायां ज्ञानाभावं दर्शयति "न प्रेत्य संज्ञाऽस्ती"ति ज्ञानस्वरूपमित्यादिप्रयोगस्तु ज्ञानस्य तदसाधारणगुणत्वेन लाक्षणिक इत्येवं प्राप्ते प्रचक्ष्महे ज्ञोऽत एव, ज्ञ एव अयमात्मा ज्ञातृस्वरूप एव न ज्ञानमात्रं, नापि जडस्वरूपः कुतः अत एव—श्रुतेरेवेत्यर्थः नात्मा श्रुतेरिति प्रकृता श्रुतिरतः—शब्देन परामृश्यते तथा छान्दोग्ये प्रजापतिवाक्ये मुक्तामुक्तात्मस्वरूपकथने

१ गुणत्वमिति।
२ जानात्ययमहमस्मीति पा०।

"अथ यो वेदेदं जिघ्राणीति स आत्मा मनसैवैनान्कामा-न्पश्यन् रमते य एते ब्रह्मलोके सत्यकामः सत्यसङ्कल्पः नोपजनं स्मरन्निदं शरीरम्" अन्यत्रापि "न पश्यो मृत्युं पश्यति"। तथा वाजसनेयके कतम आत्मेति पृष्टा "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष" इति "तथा विज्ञातारमरे केन विजानीयात् जानात्येवायं पुरुषः तथा एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः" "एवमेवास्य परिद्रष्टुरिमाः षोडश-कला" इति, यत्तूक्तं ज्ञातृत्वे स्वाभाविके सति सर्वगतस्य तस्य सर्वदा सर्वत्रोपलब्धिः प्रसज्येत इति अत्रोच्यते ॥

**सू० उत्क्रान्तिगत्यागतीनाम् ॥ २० ॥**

नायं सर्वगतः, अपि त्वणुरेवायमात्मा, कुतः उत्क्रान्तिग-त्यागतीनां श्रुतेः उत्क्रान्तिस्तावच्छ्रूयते "तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्य" इति, गतिरपि "ये वै केचास्माल्लोका-त्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती"ति, आगतिरपि "तस्माल्लोकात्पुनरेत्यास्मै लोकाय कर्मणे" इति, विभुत्वे ह्येता उत्क्रान्त्यादयो नोपपद्येरन् ॥

**सू० स्वात्मना चोत्तरयोः ॥ २१ ॥**

च-शब्दोऽवधारणे, यद्यपि शरीरवियोगरूपत्वेन उत्क्रान्तिः स्थिरस्यात्मनः कथंचिदुपपद्यते गत्यागती तु न कथं चिदुपपद्येते अतस्ते स्वात्मनैव संपाद्ये ॥

## सू० नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २२ ॥

"योऽयं विज्ञानमयः प्राणेष्वि"ति जीवं प्रस्तुत्य स वा एष महानज आत्मेति महत्त्वश्रुतेर्नाणुर्जीव इति चेन्नेतराधिकाराज्जीवादितरस्य प्राज्ञस्य तत्राधिकारात्, यद्यप्युपक्रमे जीवः प्रस्तुतः तथाऽपि यस्यानुवित्तः प्रतिबुद्ध आत्मेति मध्ये परः प्रतिपाद्यत इति तत्सम्बन्धीदं महत्त्वं न जीवस्य ॥

## सू० स्वशब्दोन्मानाभ्यां च ॥ २३ ॥

साक्षादणु-शब्द एव श्रूयते "एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेशे"ति उद्धृत्य मानमुन्मानम् अणुसदृशं वस्तूद्धृत्य तन्मानत्वं जीवस्य श्रूयते "बालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः" इति, "स चानन्त्याय कल्पत" इति "आराग्रमात्रो ह्यवरोऽपि दृष्ट" इति च अतोऽणुरेवायमात्मा ॥

टी० ॥ श्रुतिमाह "श्रुतिरपी"ति, राद्धान्तमाह 'एवं प्राप्त"इति, ज्ञ एवेत्यादि, अत इति श्रुतिव्यक्तिभेदेऽप्यतः-शब्दोऽर्थवशादपेक्षितं वाक्यविशेषमुपस्थापयति, एतच्छब्दः प्रकृतजातीयपरामर्शीत्यर्थः मनसैतान् कामान् पश्यन् रमते न पश्यो मृत्युं पश्यतीत्यादयो मुक्तात्मविषयाः अन्योऽन्तर आत्मा विज्ञानमयः, न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत इत्याद्यनुसंधेयम्। अनन्तरसूत्रशङ्कामाह "यत्तूत्क्रमि"ति, । सू० उत्क्रान्तिगत्यागतीनाम्, ये वैकेचेति उत्क्रान्तिशब्दानन्तरगतिशब्द उत्क्रान्त्यनन्तरभाविगतिपर इति भावः, । अस्मिन् सूत्रे श्रुत्यर्थापत्तिर्दर्शिता सू० स्वात्मना चोत्तरयोः, कथं चिच्छब्देन तत्राप्यस्वारस्यं सूचितम् अणुत्वगत्योरुभयोरपि कल्प्यत्वात् परेण कल्पनागौरवमुक्तं तत्र गमनस्य श्रुतिसिद्धत्वेन कल्प्यत्वं ना-

स्ति अतो ऽणुत्वमेव कल्प्यमिति न गौरवं तत्र विभुत्वकल्पनं श्रुतिविरुद्धम् अणुत्वकल्पनं त्वविरुद्धम् इति भिदेत्यर्थः। सू· नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्, अधिकारः प्रस्तावः यस्यानुवित्तः यस्य जीवस्यानुवित्तः विद ज्ञाने उपास्यः इत्यर्थः। यद्वा विदिर्लाभे प्राप्यः प्रतिबुद्ध आत्मा प्राज्ञ आत्मा। सू· स्वशब्दोन्मानाभ्यां च, स्व-शब्दः अणु-शब्दः न त्वणुत्वाक्षेपकशब्द इति भावः। अणुत्वं गतिश्चोभयं श्रौतमतो न कल्पनागौरवम्, अन्यतरश्रौतत्वे च न कल्पनागौरवमित्युक्तम् उत्क्रान्तिगत्यागतीनामित्यादिभिः श्रुत्यर्थापत्तिर्दर्शिता स्वशब्दोन्मानाभ्यां चेति श्रुतिर्दर्शिता बुद्धेरात्मा महान् पर इत्यत्र बहुश्रुत्यर्थापत्तिविरोधात् पूजावाचित्वाच्च महच्छब्दः प्राधान्यपरः। अनन्तरसूत्रशङ्कामाह–

सू॰ अथ स्यादात्मनोऽणुत्वे सकलशरीरव्यापिनी वेदना नोपपद्यत इति तत्र मतान्तरेण परिहारमाह–

**सू॰ अविरोधश्चन्दनवत् ॥ २४ ॥**

यथा हरिचन्दनविन्दुर्देहैकदेशवर्त्यपि सकलदेहव्यापिनमाह्लादं जनयति तद्वदात्माऽपि देहैकदेशवर्त्ती सकलदेशवर्तिनीं वेदनामनुभवति, ॥

**सू॰ अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २५ ॥**

हरिचन्दनविन्द्वादेर्देहदेशविशेषावस्थितिविशेषात्तथा भावः आत्मनस्तु तन्न विद्यत इति चेन्नात्मनोऽपि देहदेशविशेषे स्थित्यभ्युपगमात् हृदयदेशे ह्यात्मनः स्थितिः श्रूयते "हृदि ह्ययमात्मा तत्रैकशतं नाड़ीना"मिति, तथा कतम आत्मेति प्रकृत्य "योऽयं विज्ञानमयः प्राणेषु हृद्य-

न्तर्ज्योति"रिति, आत्मनो हि देहदेशविशेषस्थितिख्यापनाय चन्दनदृष्टान्तः प्रदर्शितः । न तु चन्दनस्य देशविशेषापेक्षा, एकदेशवर्त्तिनः सकलदेहव्यापिकार्य्यकरत्वप्रकारं स्वमतेनाह—

**सू० गुणाद्वाऽऽलोकवत् ॥ २६ ॥**

वा-शब्दो मतान्तरव्यावृत्त्यर्थः, आत्मा स्वगुणेन ज्ञानेन सकलदेहं व्याप्यावस्थितः आलोकवद्यथा मणिद्युमणिप्रभृतीनामेकदेशवर्त्तिनामालोकोऽनेकदेशव्यापी दृश्यते तद्वद्धृदयस्थस्यात्मनो ज्ञानं सकलदेहं व्याप्य वर्त्तते ज्ञातुः प्रभास्थानीयस्य ज्ञानस्य स्वाश्रयादन्यत्र वृत्तिर्मणिप्रभावदुपपद्यत इति प्रथमसूत्रे स्थापितम् । ननूक्तं विज्ञा[1]नमात्रमेवात्मेति तत्कथं ज्ञानस्य स्वरूपव्यतिरिक्तगुणत्वमुच्यते तत्राह—

टी० "अथ स्यादि"ति, वेदना—दुःखानुभवः सुखानुभवस्याप्युपलक्षणमिदम् । सू० अविरोधश्चन्दनवत्, वेदनामनुभवति ओदनपाकं पचतीतिवत् । यद्वा दुःखमनुभवतीत्यर्थः सू० अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि, तत्रैकशतं नाडीनामित्यनेन एकदेशस्थस्य सकलशरीरव्यापिकर्मकरत्वप्रकारो दर्शितः न त्विति हरिचन्दनस्य हृन्नासिकानयनश्रोत्रादिमर्मप्रदेशेषु स्थित्या कार्य्यकरत्वं न तु हृन्मात्र इत्यभिप्रायेण न तु चन्दनस्येत्युक्तम् । अनन्तरसूत्रावतारायाह "स्वमतेने"ति, यद्यप्येकस्मिन्नवयविनि देशविशेषस्थित्या सर्वत्र कार्य्यकरत्वं तथा च सौभर्यादीनां बहुषु देहावयवेष्वणोरात्मनो देशविशेषस्थित्या कार्य्यकरत्वं न सिद्ध्यतीत्यभिप्रायेण निर्वाहान्तरोक्तिरिति भावः । सू० गुणाद्वाऽऽलोकवत्, अयुत-

१ ज्ञानमात्रमेवात्मेति तु पा० ।

सिद्धविशेषणस्य कथं देशान्तरे वृत्तिरित्यत्राह "ज्ञातुरि"ति, । अनन्तरसूत्रमवतारयति "नन्वि"ति,

**सू० व्यतिरेको गन्धवत्तथा च दर्शयति ॥ २७ ॥**

स्व० यथा पृथिव्या गन्धस्य गुणत्वेनोपलभ्यमानस्य ततो व्यतिरेकः तथा जानामीति ज्ञातुर्गुणत्वेन प्रतीयमानस्य ज्ञानस्यात्मनो[१] व्यतिरेकसिद्धिं दर्शयति च श्रुतिः जानात्येवायं पुरुष इति, ॥

**सू० पृथगुपदेशात् ॥ २८ ॥**

स्वशब्देनैव ज्ञानं विज्ञातुः पृथगुपदिश्यते "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत" इति ॥

यत्तूक्तं यो विज्ञाने तिष्ठन् विज्ञानं यज्ञं तनुते ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थत इत्यादिषु ज्ञानमेवात्मेति व्यपदिश्यत इति तत्राह—

**सू० तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥**

तु— शब्दश्चोद्यं व्यावर्तयति तद्गुणसारत्वात् विज्ञानगुणसारत्वादात्मनो विज्ञानमिति व्यपदेशः विज्ञानमेवास्य सारभूतो गुणः यथा प्राज्ञस्यानन्दः सारभूतो गुण इति प्राज्ञ आनन्द—शब्देन व्यपदिश्यते यदेष आकाश आनन्दो न स्यात् आनन्दो ब्रह्मेति व्यजानादिति प्राज्ञस्य ह्यानन्दस्सारभूतो गुणः स एको ब्रह्मण आनन्दः आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने"ति यथा वा "सत्यं ज्ञानमनन्तं ब्रह्मे"ति विपश्चितः प्राज्ञस्य ज्ञान—शब्देन व्यपदेशः "सह ब्रह्मणा विपश्चिता यस्सर्वज्ञ इत्यादिषु प्राज्ञस्य ज्ञानं सारभूतो गुण इति विज्ञायते ॥

१ प्रतीयमानस्य ज्ञानस्यात्मनोऽव्यतिरेकः सिद्धः, दर्शयति च श्रुतिरिति पा० ।

सू० यावदात्मभावित्वाच्च न दोषस्तद्द-र्शनात् ॥ ३० ॥

विज्ञानस्य यावदात्मभाविधर्मत्वेन तद्व्यपदेशो न दोषः तथा च खण्डादयो यावत्स्वरूपभाविगोत्वादिधर्मशब्देन गौरिति व्यपदिश्यमाना दृश्यन्ते–

टी० सू० व्यतिरेको गन्धवत्तथा च दर्शयति, जानामीति धर्मधर्मिणोः प्रकृतिप्रत्ययवाच्ययोर्भेदानुभवो दर्शितः तथा चेति सूत्रखण्डं व्याचष्टे "दर्शयति चे"ति, सू० पृथगुपदेशात्, सर्वसूत्रे सुरभिकुसुममितिवद्विशिष्टवाचिनः शब्देन विशेष्याद्विशेषणतया व्यतिरेक उक्तः, अत्र तु विशेषणविशेष्ययोः पृथक्शब्देनाभिधानमिति भिदा । अनन्तरसूत्रशङ्कामाह "यस्त्वि"ति, सू० तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्, सार–शब्देन प्रधानत्वं विवक्षितं तच्च यावदात्मभावित्वम्, आनन्दज्ञानयोर्गुणत्वप्रदर्शनार्थं स एको ब्रह्मण आनन्दः यः सर्वज्ञो विपश्चितेत्यादि श्रुतिरुदाहृता गुणवाचिशब्देन गुण्यभिधानं लाक्षणिकमित्यत्राह सू० "यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्, न हि गोत्वादयो यादात्मभाविन इत्यत्राह–

मू० स्वरूपनिरूपणधर्मत्वादित्यर्थः च–कारो ज्ञानवदात्मनोऽपि स्वप्रकाशत्वेन ज्ञानमिति व्यपदेशे न दोष इति समुच्चिनोति, ॥ यत्तोक्तं सुषुप्त्यादिषु ज्ञानाभावान्न ज्ञानस्य स्वरूपानुबन्धिधर्मत्वमिति तत्राह–

सू० पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियो-गात् ॥ ३१ ॥

तु–शब्दश्चोदिताशङ्कानिवृत्त्यर्थः, अस्य ज्ञानस्य सुषुप्त्यादिष्वपि विद्यमानस्य जागर्यादिष्वभिव्यक्तिसम्भ-

वाल्यस्वरूपानुबन्धिधर्मत्वोपपत्तिः पुंस्त्वादिवत्, यथा पुंस्त्वाद्यसाधारणस्य धातोर्बाल्यावस्थायां सतोऽप्यनभिव्यक्तस्य युवत्वेऽभिव्यक्तौ पुंसस्तद्वत्ता न कादाचित्की भवति, सप्तधातुमयत्वं हि शरीरस्य स्वरूपानुबन्धि "तत्सप्तधातु त्रिमलं द्वियोनि चतुर्विधाहारमयं शरीर"मिति शरीरस्वरूपव्यपदेशात्, सुषुप्त्यादिष्वप्यहमर्थः प्रकाशत इति प्रागेवोक्तं, तस्य विद्यमानस्य ज्ञानस्य विषयगोचरत्वं जागर्य्यादावुपलभ्यते, एते चात्मनो ज्ञातृत्वादयो धर्माः प्रागेवोपपादिताः, अतो ज्ञातृत्वमेव जीवात्मनः स्वरूपम् ।

टी० "स्वरूपनिरूपणे"ति, अणुत्वादयोऽपि हि यावदात्मभाविन इति तद्व्यावृत्त्यर्थं च स्वरूपनिरूपणधर्मत्वादित्युक्तं स्वरूपं धर्मिस्वरूपम् आत्म–शब्दः स्वरूपपर इत्यर्थः । चकारार्थमाह "चकारा"दिति, अनन्तरसूत्रशङ्कामाह "यच्चोक्त"मिति, सू० पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्, जागर्यादिष्वित्यत्रादि–शब्देन स्वप्नदशा विवक्षिता, पुंस्त्व–शब्देन धातुर्लक्षितः, आदि–शब्देन योषितोऽप्युपलक्षणमिति गम्यते बाल्ये स नास्तीति शङ्कायामाह "सप्तधातुमयत्वं ही"ति, ज्ञानस्योपलब्धिर्विषयसम्बन्धसापेक्षेत्युक्तं भवति, विद्यमानस्यानभिव्यक्तस्य कदाचिदभिव्यक्तिमात्रे दृष्टान्तोऽयं विषयसम्बन्धार्हत्वं प्रकाशार्हत्वं च तदानीमप्यस्तीति न स्वयं प्रकाशत्वहानिः, एवं स्वयं प्रकाशस्वरूपज्ञानोपलब्धेर्विषयसम्बन्धसापेक्षत्वेऽहमर्थस्यापि तथात्वं स्यादित्यत्राह "सुषुप्त्यादिष्वपी"ति, तस्येति विषयसम्बन्ध उपलब्धिश्च जागर्यादावित्यर्थः अहंप्रत्ययगोचरत्वे जडत्वादिप्रसङ्गमाशङ्क्याह "एते चात्मन"इति, नित्योपलब्ध्याद्यप्रसङ्गार्थमाह–

सू० स चायमात्माऽणुपरिमाणः न प्रेत्य संज्ञाऽस्तीत्यपि न

मुक्तस्य ज्ञानाभाव उच्यते अपि तु "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती"ति संसारदशायां यद्भूतानुविधायित्वप्रयुक्तं जन्मनाशादिदर्शनं तन्मुक्तस्य न विद्यते "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः नोपजनं स्मरन्निदं शरीरं मनसैतान्कामान्पश्यन् रमत इत्यादिश्रुत्यैकार्थ्यात् ॥

संप्रति ज्ञानात्मवादे तस्य सर्वगतत्वे दूषणमाह—

## सू० नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमोवाऽन्यथा ॥ ३२ ॥

अन्यथा—सर्वगतत्वपक्षे तस्य ज्ञानमात्रत्वपक्षे च नित्यमुपलब्ध्यनुपलब्धी सदैव प्रसज्येयाताम्, अन्यतरनियमो वा उपलब्धिरेव वा नित्यं स्यादनुपलब्धिरेव वा, एतदुक्तं भवति लोके तावद्वर्तमानयोरात्मोपलब्ध्यनुपलब्ध्योरयं ज्ञानात्मा सर्वगतो हेतुः स्यात् उपलब्धेरेव वा अनुपलब्धेरेव वा उभयहेतुत्वे सर्वदा सर्वत्रोभयं प्रसज्येत यद्युपलब्धेरेव सर्वस्य सर्वदा सर्वत्रानुपलम्भो न स्यात्, अथानुपलब्धेरेव सर्वदा सर्वत्रोपलब्धिर्न स्यादिति, अस्माकं शरीरस्यान्तरेवावस्थितत्वादात्मनस्तत्रैवोपलब्धिर्नान्यत्रेति व्यवस्थासिद्धिः करणायत्तोपलब्धेरपि सर्वेषामात्मनां सर्वगतत्वेन सर्वैः करणैः सर्वदा संयुक्तत्वात् अदृष्टादेरप्यनियमादुक्तदोषः समानः ॥ ज्ञाधिकरणं समाप्तम् ॥

टी० "स चाय"मिति, न प्रेत्येति देहात्माभिमानभ्रमो नास्ती-

त्यर्थः । संप्रतीति ज्ञानात्मवादे विभुत्वपक्षे दूषणं जडात्मवादे विभुत्वेन दूषणमुभयं सूत्रविवक्षितं, व्याख्यास्यते च तत्र प्रथमपक्षे दूषणं प्रतिजानीते "संप्रती"ति, सू॰ नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा, नित्योपलब्धिः प्रसज्यतां कथं नित्यानुपलब्धिप्रसङ्गः? उभयप्रसङ्गो वा कथ? मित्यत्राह "एतदुक्त"मिति, विकल्पशिरस्त्रयाभिप्रायेण दूषणत्रयमुच्यत इत्यर्थः । लोके तावदिति आत्मा कुत्रचिदुपलभ्यते न गङ्गातीरादिषूपलभ्यते एवं विद्यमानयोरुपलब्ध्यनुपलब्ध्योरुभयोरपि हेतुस्स्यादित्येकं शिरः उपलब्धेरेव वा अनुपलब्धेरेव वेति इत्यत्रापि हेतुः स्यादित्यनुवर्त्तते, एवं शिरस्त्रयं विवक्षितं किमुपलब्धिरेव स्वरूपम्? उतानुपलब्धिरेव? उतोभय? मित्यर्थः, हेतु–शब्दप्रयोगो हेत्वन्तरनैरपेक्ष्यार्थः । उक्तदूषणस्य स्वपक्षास्पर्शित्वमाह "अस्माक"मिति, जडात्मपक्षे विभुत्वे दूषणमाह "करणायत्ते"ति,–

कर्त्रधिकरणम् । **सू॰ कर्त्ता शास्त्रार्थवत्त्वात्** ॥ ३३ ॥

अयमात्मा ज्ञाता स चाणुपरिमाण इत्युक्तम्, इदानीं किं स एव कर्त्ता? उत स्वयमकर्त्तैव सन्नचेतनानां गुणानां कर्तृत्वमात्मन्यध्यस्यतीति चिन्त्यते, किमत्र युक्तम् अकर्त्तैवात्मेति कुतः आत्मनो ह्यकर्तृत्वं गुणानामेव च कर्तृत्वमध्यात्मशास्त्रेषु श्रूयते तथा हि कठवल्लीषु जीवस्य न जायते म्रियत इत्यादिना जन्मजरामरणादिकं सर्वं प्रकृतिधर्मं प्रतिषिध्य हननादिषु क्रियासु कर्तृत्वमपि प्रतिषिध्यते "हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् उभौ तौ न विजानीतो नायं हन्ति न हन्यत" इति, हन्तारमात्मानं जानन्न जानात्यात्मानमित्यर्थः । तथा च भगवता

स्वयमेव जीवस्याकर्तृत्वं स्वरूपं कर्तृत्वाभिमानस्तु व्यामोह इत्युच्यते "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्त्ताऽहमिति मन्यते॥ नान्यं गुणेभ्यः कर्त्तारं यदा द्रष्टाऽनुपश्यति। कार्य्यकारणकर्तृत्वे हेतुः" प्रकृतिरुच्यते। पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते इति च, अतः पुरुषस्य भोक्तृत्वमेव प्रकृतेरेव तु कर्तृत्वमेवं प्राप्त प्रचक्ष्महे।

टी० अदृष्टादेरप्यनियमादिति तत्तत्कर्मानुष्ठानहेतुभूतशरीराणां सर्वात्मसाधारणत्वाददृष्टानियम इत्यर्थः। उक्तदोषः समान इति करणादेकं किमुपलब्धेर्हेतुः? उतानुलब्धेः? उतोभयोरिति? विकल्प्य पूर्ववद्दूषणं व्यक्तमिति भावः। परेषां सूत्राक्षरास्वारस्यं द्रष्टृ-शब्दस्येव ज्ञ-शब्दस्य ज्ञप्तिवाचित्वाभावात्, धीरो मनीषी ज्ञः प्राज्ञ इत्यभिधानविदः। अत एवानुत्पन्नत्वेनाविकृतब्रह्मण एवोपाधिना जीवभावेनावस्थानात्तस्य च चैतन्यस्वरूपत्वादिति व्याख्यानमपि क्लिष्टम् एतच्छब्देन साध्यतया प्रकृतानुत्पत्तिपरामर्शे तस्याः साक्षादेव ज्ञानस्वरूपत्वसाधकत्वाभावात् तदुपपादकब्रह्मानन्यत्वं, तेन ब्रह्मप्रतिपादकवाक्यजातं तेन तस्य ज्ञानस्वरूपत्वं च लक्षयित्वा तेन परमसाध्यस्योपपादनीयत्वात्साधकतया प्रकृतपरामर्शित्वं तु युक्तं प्रकृतत्वाविशेषेऽपि पूर्वसूत्रस्यपञ्चमी तुल्यार्थेन प्रत्ययेन साधकविषयस्वप्रकृत्यर्थसाम्यस्य च ज्ञाप्यमानतया योग्यतावशाच्छ्रुतिविशेषे प्रतिपन्ने तस्या व्यवधानेन ज्ञानस्वरूपताप्रतिपादने विलम्बनयाभावाच्च ज्ञानमात्रस्वरूपत्वे साध्ये ज्ञातृत्ववादिनीनां धर्मधर्मिभेदनिर्देशपराणां धर्मनित्यत्व वादिनीनां जानात्येवायम् अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मेत्येवमादीनां श्रुतीनां बाधो दुस्तरः,। तत्र नानुच्छित्तिरेव धर्मतया विवक्षिता अविनाशीत्यनेन पुनरुक्तिप्रसङ्गात् अत उच्छेदरहितज्ञानधर्मकत्वं विवक्षितम् अपरैस्त्वत एवेति पदं ताभ्यः श्रुति-

भ्य इति व्याख्यातं तदप्यविरुद्धं श्रुतेरिति तु व्याख्यानं ततोऽप्युचितम् उत्तरसूत्रस्थायाः षष्ठ्या अन्वयसामर्थ्येन श्रुतेरिति पदानुषङ्गस्य सूत्रकृताऽभिप्रेतत्वावगमात्, न ह्युत्क्रान्तिगत्यागतीनां ताभ्य इत्यन्वयो घटते श्रुतिभ्य इति अध्याहारे तु घटे[1]त अध्याहारसाकाङ्क्षपदानुषङ्गादपि निरपेक्षपदानुषङ्गोहि युज्यते अश्रुतेरिति पदस्यानुपपत्तिश्च पूर्वमेव दर्शिता अन्ये तु यत एवं नात्यन्तिकनाशः प्रलये जीवस्य किन्तु विभागशक्त्यवशेष एव अत एव ज्ञत्वमपि सिद्धं, तस्यामवस्थायां यद्वैतं न पश्यति पश्यद्वैतं न पश्यतीति ज्ञात्वाविनाशित्ववचनमस्ति हीति व्याचक्षते तदपि कल्प्यान्तरसाकाङ्क्षहेतूपस्थापकत्वादपि तद्विलम्बानपेक्षहेतूपस्थापकत्वस्य न्याय्यतया प्रत्युक्तं प्रलये विभागशक्त्यवशेषावस्थानं हि न साक्षादेव ज्ञानस्वरूपत्वसाधकं किन्तु प्रलयविषयश्रुत्युपस्थापनद्वारेण । किञ्च ज्ञाननित्यत्वं चैवमुपपादयन्ति सर्वाः संविदोऽङ्गारादर्चिष इव नवनीतपिण्डाद् घृतमिव पुरुषाद्विभज्यन्ते तेन संयुज्यन्ते च, अतो ज्ञाननित्यत्वे न कारकवैयर्थ्यमिति । तत्र किञ्चिद्विमर्शनीयम् । किञ्च नवनीतपिण्डस्येवात्मनः स्वरूपैकदेश एव विभज्यमानो विषयेषु प्रसर्पति संकुचति च? उत तदपृथक्सिद्धं ज्ञानतया तत्सजातीयं द्रव्यान्तर?मिति, यदि प्रथमपक्षः परिगृह्यते तत्र ब्रूमः अणुत्वं तावत् भवदभिमतं तत्स्वरूपाद्विभक्तश्चन्द्रादिषु प्रसृतः किमात्मैकदेश? उत कृत्स्नात्मा? कृत्स्नात्मा चेच्चन्द्रग्रहणवेलायां शरीरं निरात्मकं स्यात्, यद्येकदेशः प्रसृतः स चेदखण्डितः प्रसृतो न पुनरेति आत्माऽपि शरीरात् बहिराकृष्टः स्यादिति शरीरं निरात्मकं स्यात्, यदि खण्डितोऽपसर्पन्मृत्पिण्डविशीर्णधूलीपटलवन्न पुनरेयात् तदानीमात्मैकदेशहानिः स्यात्, एवं त्रिचतुरपर्यायैरात्मोच्छित्तिः स्यात्, अनुच्छेदे च ज्वालाया इव प्रतिक्षणोत्पत्तिरात्मनः स्यात्, यद्यखण्डित एव प्रसृत्य पुनः संकुचति पटग्रहणदशायां घटग्रहणाय पूर्वप्रसृप्त एवांशः प्रसर्पति? उत प्राक्प्रसृप्तांशे शरीरस्थे पूर्वं शरीरस्थांशः पश्चात्प्रसर्पति? द्वितीये पक्षे धर्मधर्मिभावाव्यवस्थानाच्छरीरस्थस्य धर्मिणोऽहंप्रत्ययवेद्यस्यात्मत्वाद्-

[1] घटते इति पा० ।

र्मित्वाद्विषयसम्बन्धिज्ञानानामिच्छादीनामिव स्वस्मै भासमानत्वाभावा-च्च प्रत्यक्त्वाप्रत्यक्त्वधर्मधर्मित्वादीनामंशभेदेनानियतत्वादात्मांशस्य कदाचिदनात्मत्वं प्रत्यगंशस्य कदाचित्पराक्त्वं धर्मिण एव कदाचित्स्वधर्मत्वं च स्यात्, ततश्च कटकमुकुटादीनामिवाहमर्थस्य कर्तृभोक्तुरादिमत्त्वं स्यात्, अहमर्थस्यैव कर्तृत्वभोक्तृत्वयोगात् अहंभावस्य चात्मन्यनियतप्रदेशवृत्तित्वाच्च। यदि प्रथमः पक्षो रोचते तर्हि प्रसर्पणाप्रसर्पणरूपविरुद्धस्वभावभाक्त्वाद्धर्मधर्मिणोर्भिन्नद्रव्यत्वम् अन्यधर्मज्ञानस्यान्यं प्रति धर्मत्वाभावादपृथक्सिद्धधर्मत्वं तस्य च सङ्कोचविकासभाक्त्वं चाभ्युपगन्तव्यं तथा सति धर्मान्यथाभावरूपावस्थापत्तिरुत्पत्त्यादिस्वरूपान्यथाभावाभावान्नित्यत्वमित्यचिद्वैषम्यमास्थेयम् उत्क्रान्ति इत्यादिसूत्रगणमधिकरणान्तरं परे व्याचक्षते तदयुक्तं तत्त्वचिन्तोपयोगित्वात्परिमाणचिन्तनस्य उपयोगश्च फलिफलभावे दर्शितः तत्र परेऽणुत्वं पूर्वपक्षीकृत्य विभुत्वमेव सिद्धान्तयन्ति तत्र न तावदियं परब्रह्मविषयाचिन्ता तद्विभुत्वस्य बहुधिकरणसिद्धत्वात्, अल्पपरिमाणश्रुतीनां च निचाय्यत्वादेवमित्यनेन कृतनिर्वाहत्वाच्च शङ्कानुत्थानात्, जीवविषयेऽणुत्वस्य पूर्वपक्षीकरणमयुक्तम् अणुत्वश्रुतीनां निरवकाशत्वप्रसङ्गात्, औपाधिकाकारविषयत्वं तासामिति चेत् किमणुत्वं यावज्जीवभावमवतिष्ठते? उत न? प्रथमे यावत्क्षीरभावभाविनो माधुर्य्यस्येव यावद्द्रव्यभाविनोऽणुत्वस्यौपाधिकत्वमयुक्तं, द्वितीये जीवस्यामोक्षस्थायित्वं न सिद्ध्येत्, ततश्च वेदान्तानामनारम्भः स्याज्जीवभावनिवृत्तिर्हि परेषां मोक्षः, अवच्छेदकोपाध्यपगमे ब्रह्मताऽऽपन्नस्य पुनरुपाध्यन्तरेण जीवभावापत्तौ घटागमापायितया घटच्छिद्रस्येवादिमत्त्वं जीवस्य प्रसज्येत् । ननूपासनार्थमल्पपरिमाणत्वं पूर्वं निरूपितमत्र ब्रह्मणो जीवभावेनाणुत्वस्य स्वाभाविकत्वनिराकरणमधिकरणकृत्यमिति चेच उपाध्यसम्भवात्, न तावदविद्या, तस्य अणुत्वाभावेन तदवच्छिन्नस्याप्यणुत्वानुपपत्तेः, यद्वाध्यवसायादिवृत्तिभेदेन बुद्ध्यादिशब्दवाच्यं मनो बुद्ध्याख्यं महत्तत्त्वं वोपाधिः तर्हि तस्माज्जायते प्राणो मनः महानव्यक्ते लीयते इत्यादिश्रुत्यवग-

तान्मनआदिसर्गात्पूर्वं जीवभावाभावात् जीवस्यादिमत्त्वं स्यात् । ननु यथा त्वन्मते जीवात्मधर्मभूतस्य ज्ञानस्य विभोरपि कर्मणाऽत्यन्तसङ्कोचः प्रलयदशायामप्युपद्यते तथा प्रलयदशायामन्तःकरणाद्यभावेऽपि कर्मकृतमणुत्वं जीवस्य सम्भवतीति चेत् न अवच्छेदकाभावचोद्यस्य सङ्कोचसद्भावप्रतिबन्द्या परिहारायोगात् स्वतो विकासशक्तियुक्तस्य धर्मभूतस्य ज्ञानस्य विकासप्रतिबन्धकं कर्माभ्युपगम्यते न तु विकसितस्यैकदेशावच्छेदकमिष्यते त्वन्मतेऽपि सर्वगतस्यैव सतो ब्रह्मणः क्वचित्प्रदेशेऽणुत्वमवच्छेदकपरिमितद्रव्यसापेक्षं विकासप्रतिबन्धकेन कर्मणा न सम्पत्स्यते अत आमोक्षस्थायिनः कस्यचिदुपाधेरसम्भवाज्जीवाणुत्वस्यौपाधिकत्वमयुक्तम् । किञ्च बालाग्रशतभागस्य आराग्रमात्र इत्यादिष्वणुत्वश्रुतिषूपाधिर्न श्रूयते यथा परमात्मनो विभुत्वश्रुतिषु, तस्य चाणुत्वमुपाधिपूर्वकमुच्यते एष आत्माऽन्तर्हृदयेऽणीयान्व्रीहेरित्यादिषु अत उपाध्यनुक्तेः परमात्मविभुत्ववज्जीवाणुत्वमपि नोपाधिकृतम् । किञ्च एषोऽणुरात्मा चेतसा वेदितव्य इत्यणुपरिमाणस्य मुमुक्षुवेदितव्यत्वश्रवणाच्चाणुत्वं स्वाभाविकं न ह्यौपाधिकाकारो जीवस्य स्थूलत्वादिवच्छोकमोहादिवच्च मुमुक्षोरनुसन्धेयः, तेन प्रद्योतेनैष आत्मा निष्क्रामतीत्यत्रात्म-शब्दस्य निष्कृष्टात्मविषयत्वात्तस्य निष्क्रमणार्हत्वावगमाच्चाणुत्वं स्वाभाविकं न ह्यात्म-शब्द उपाधिसंसृष्टपरः लक्षणाप्रसङ्गात्, उपाधीनां जीवस्य च पृथक्पृथगुत्क्रमणश्रवणाच्चाणुत्वं निरुपाधिकं तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति हि श्रूयते मनश्च प्राणशब्दवाच्येष्वन्तर्भूतं दशमे पुरुषे प्राणा आत्मैकादश इति श्रुतेः, मनोव्यतिरिक्ता बुद्धिरणुत्वोपाधिरिति चेत् बुद्धिर्वाऽन्यद्वा तत्किञ्चिदुपाधित्वेनोच्यतां तत्किं मनोवृत्तिरूप? मुत तत्त्वान्तरम्? आद्ये मनसः पृथगुत्क्रान्तिश्रवणात् जीवस्य तद्वृत्तितोऽपि पृथगुत्क्रान्तिः सिद्धा । तत्त्वान्तरत्वे च समष्टिरूपस्य तस्याणुत्वाभावान्नोपाधित्वं, व्यष्टिरूपत्वे च देहसंघाततदाश्रयतदाश्रितेष्वन्यतमेन भवितव्यं संघातरूपत्वे तस्याणुत्वाभावादनुपाधित्वं देहाश्रयतया जीवोपकरणत्वे मुख्यप्राणान्तर्भावात्ततः पृथगु-

त्क्रान्तिसिद्धिः, देहस्थतया जीवोपकरणत्वे प्राण-शब्दवाच्येष्वन्तर्भावा- त्ततः पृथगुत्क्रमणं सिद्धम् । किञ्च न केवलमुपाध्यनुक्तेरेवाणुत्वस्य स्वाभाविकत्वावगमः किन्तु निरुपाधिकस्वरूपस्याणुत्ववैशिष्ट्यावगमाच्च तदवगमः एषोऽणुरात्मेत्यात्मा ह्यणुत्वेन विशिष्यते न तु बद्धः आत्म-शब्दो ह्यात्ममात्रवाची न तूपाधिसंसृष्टवाची । ननु स चाऽनन्त्याय कल्पत इति श्रुतिरणुत्वस्यौपाधिकत्वमवगमयतीति चेन्न स इत्यणुत्वविशिष्टं जीवं परामृश्य विधीयमानस्यानन्त्यस्य तदविरोधेन वर्णनीयत्वात् वस्तुमात्रपरत्वे हि तच्छब्दस्य प्रकृतपरामर्शित्वं न स्यात्, न हि घटे प्रस्तुते मृन्मात्रं परामर्शमर्हति विशेषणप्रहाणेऽपि स्वारस्यं न स्यात् यो बालः स युवेत्युक्ते यथा कालभेदादविरोधः एवं यः पूर्वमणुः स पश्चादानन्त्याय कल्पत इत्यर्थ इति चेन्न उपक्रमावगतस्याणुत्वस्य चरमावगतेनान्यथासिद्धेनानन्त्येन सङ्कोचायोगात्, बाल्ययौवनयोः क्रमभावस्य प्रत्यक्षसिद्धत्वादगत्या बाल-शब्दः सङ्कोचितः, इह तु गत्यन्तरसद्भावात्तदनुपपन्नं, गत्यन्तरं चात्रैव वक्ष्यामः स्वरूपेणानन्त्यस्य दुर्निरूपत्वाच्चाणुत्वश्रुतिसङ्कोचो निष्फलः तथा हि पूर्वमणुस्वरूपस्य जीवस्यानन्त्यं नामाऽनन्तेन ब्रह्मणैक्यापत्तिर्वा ? स्वरूपशैथिल्येन मृत्पिण्डस्येव प्रसर्पणं वा ? पटवद्वेष्टितस्य स्वरूपस्य प्रसारितत्वं वा संभाव्यते ? प्रथमं तावदशाब्दत्वादनुपपन्नं, न हि देवत्वाय कल्पत इत्युक्ते देवैरन्यैरैक्यमुक्तं स्यात्, अपि तु स्वस्य देवत्वजातियोग एव, अरोगत्वाय कल्पत इत्युक्ते स्वेतरनिरामयपुरुषान्तरैक्यं न सिद्ध्येत्किन्तु स्वस्यारोग्यगुणयोग एवमानन्त्यशब्दोऽपि प्रकृत्यर्थभूतविशेषणान्वयं धर्मिणो दर्शयति न तु वस्त्वन्तरं तेनैक्यापत्तिं भेदनिवृत्तिं वा प्रकृत्यंशस्य प्रत्ययांशस्य वा तद्वाचित्वाभावात्संयुक्तमेतत् नरमक्षरं च नित्यो नित्यानामिति नित्यत्वाक्षरत्वश्रुतिविरोधात् स्वरूपशैथिल्येन प्रसर्पणमनुपपन्नम् आत्मन्युपचयापचयविरहस्य प्रामाणिकत्वात्स्वरूपनि[1]वृत्तिरनुपपन्ना वेष्टितस्य प्रसरणमपि नाशङ्कनीयम् एकस्मिंश्छरीरे कृत्स्नस्य ब्रह्मणो वेष्टितत्वेन शरीरान्तरस्य जीवशून्यत्वप्रसङ्गात्, ब्र-

१ स्वरूपवृद्धिरपि इति पा० ।

ह्मण एव ह्युपाधिना जीवभावो भवद्भिरभ्युपगम्यते जीवबहुत्वमिच्छताम-प्यश्रुतवेष्टनकल्पने गौरवं प्रसज्येत । नन्वनन्यथासिद्धे कल्पके गौरवमपि न दोषः, सत्यमिह तु तदन्यथासिद्धेः कल्पनमयुक्तम् अणुत्वोपाध्यवच्छिन्नस्यैव देहान्तरावस्थितजीवस्याङ्गुष्ठपरिमाणत्वं श्रूयते "प्राणाधिपः सञ्चरति स्वकर्मभिरङ्गुष्ठमात्रो रवितुल्यरूप" इति, तथा "ऽस्य सोम्य महतो वृक्षस्य मूले हन्यादिति" वृक्ष-शब्देन शरीरं प्रस्तुत्य "स एष जीवेनानुभूत इति प्रविष्टत्वं चोक्त्वाऽस्य "अस्य यदेकां शाखां जीवो जहाति सा शुष्यति द्वितीयां जहाति सा शुष्यति सर्वं जहाति सर्वं शुष्यती"ति पाणिपादादिषु जीवावस्थानं तत्प्रहाणेन तस्य शोषश्चोक्तः । न च वेष्टितस्वरूपविकासेनैवाङ्गुष्ठपरिमाणत्वं कृत्स्नशरीरावस्थानं चेति वाच्यम् अणुत्वोपाधेरनपगमादेव, न हि देहान्तस्थितिदशायामणुत्वोपाध्यपगमो भवतामिष्टः, अतोऽङ्गुष्ठपरिमाणत्वं हृदयद्वारकमभ्युपेत्यम् आपादमस्तकावस्थानं धर्मभूतज्ञानेनेत्यभ्युपगन्तव्यम्, एवमणुत्वव्यतिरिक्तपरिमाणस्य सद्वारकत्वं धर्मभूतज्ञानेनान्यत्रावस्थानं च श्रुत्यन्तरबलेन क्लृप्तमिति क्लृप्तप्रकारेणानन्त्यश्रुतिनिर्वाहे सम्भवति कल्पकान्यथासिद्धेर्वेष्टनकल्पनमयुक्तं सङ्कोचकान्यथासिद्धेरेव प्रथमावगताणुत्वसङ्कोचश्चानुपपन्नः, अतस्तदविरोधाय क्लृप्तप्रकारेणानन्त्यं प्रभाभूतज्ञानद्वारा वर्णनीयमित्यानन्त्यश्रुत्याऽपि नाणुत्वस्यौपाधिकत्वसिद्धिः यतोऽणुत्वं न पूर्वपक्षीकार्य्यमत एव व्यतिरेको गन्धवदिति सूत्रमपि न पूर्वपक्षविषयं गुणस्य ज्ञानस्य स्वाश्रयातिरिक्तप्रदेशवृत्तित्वसमर्थनपरं तस्य युक्तिशून्यत्वात्, तच्च दृष्टान्तस्य पुष्पगन्धस्य साध्यविकलत्वात्, न हि परागाद्याश्रयं विना गन्धः प्रसरति । तद्गुणेति अन्तःकरणगुणा इच्छाद्वेषादयः तत्सारोऽयम् अतोऽणुत्वव्यपदेश उपाधिकृत इत्युक्तम् । तदयुक्तम् अन्तःकरणस्याप्रकृतस्य तच्छब्देन परामर्शायोग्यत्वात् प्राज्ञवदिति दृष्टान्तः साधनविकलः तस्यान्तःकरणावच्छेदकत्वाभावात् दहराद्युपासनेष्वणुत्वस्यौपाधिकत्वमात्रं साम्यमिति चेन्न प्रयुक्तहेत्वतिरिक्तस्य हेतोर्दृष्टान्ते कल्पनस्य क्लिष्टत्वात्, अक्लिष्टत्वे सम्भवति तदयोगाच्च, दार्ष्टान्तिकस्यैव दृष्टान्तत्वं प्रसज्जे-

त्परमात्मनो जीवत्वेनाणुत्वे जीवस्यैव दृष्टान्तत्वाज्जीवभानेनाणुत्वस्योपासनार्थतयाऽणुत्वं दृष्टान्त इति चेन्न अहिकुण्डलवदितिवदवस्थाविशेषवाचिशब्दाभावात्, अतो दृष्टान्तदार्ष्टान्तिकभावस्वारस्यसिद्धधर्मिभेदोऽवतिष्ठत एव, स चास्मत्पक्ष एव सिध्यति संसृष्टयोर्वियोगनियमात् जीवान्तःकरणयोर्वियोगे सति जीवस्यासत्त्वमसंसारित्वं वा स्यादिति शङ्कायां यावदात्मनः संसारस्तावद्भावित्वात् अन्तःकरणस्य नोक्तदोष इत्यनन्तरसूत्रं व्याख्यातं, तदप्ययुक्तम् आत्म-शब्दस्य संसारिविशिष्टवाचित्वाभावान्न हि देवदत्तशब्द एव दण्डिनमुपस्थापयति सुषुप्तिप्रलययोरप्रबोधेनान्तःकरणाभावान्न यावदात्मभावित्वमिति शङ्कापरिहारार्थत्वमनन्तरसूत्रस्याप्ययुक्तं महानव्यक्ते लीयत इति बुद्धिलक्षणस्य महच्छब्दवाच्यान्तःकरणस्य लयश्रवणात् शक्तिरूपेण तदानीमप्यवतिष्ठत इति चेत् शक्ति-शब्देन किमविद्यामात्रं विवक्षितम्? उतान्तःकरणोत्पादनार्हमचिद्द्रव्यम्? उतावस्थाविशेषापन्नमचित्तत्त्वं? प्रथमे अविद्याया अणुत्वाभावादणुपरिमितत्वं जीवस्यामोक्षस्थायि न भवेत्, द्वितीये घटस्येवान्तःकरणस्य न यावदात्मभावित्वसम्भवः, न हि मृन्मात्रं घटोत्पादनार्हमिति घटोऽवस्थितो भवति, तृतीये लयश्रुतिविरोधः, न हि मृन्मात्रदशायां घटाद्यवस्थासम्भवः एतावद्दूषणमपरेषामपि तुल्यं प्रतिजीवमणवो ऽनाद्यविद्या बह्वः सन्तीति तासां स्थूलतापत्तिः सृष्टिः, सूक्ष्मतापत्तिर्लय इति चेन्न तस्य अणुत्वाप्रहाणे सर्षपादेरिव स्वपरिमाणावस्थायां न प्रलयः, द्वितीयेऽणुत्वप्रहाणे जीवस्यामोक्षस्थायित्वाभावः । ननु स्वपरिमाणाप्रहाणेऽपि इच्छाद्वेषादिकार्य्यजननानर्हत्वादेव प्रलीनत्वमिति चेत् प्राणाकाशादिप्रलयस्यापि तथात्वप्रसङ्गात्, एतस्माज्जायते प्राणो मन इति प्राणादीनामविशेषेण उत्पत्त्यादिकं श्रूयते । नित्योपलब्धीति अन्तःकरणानभ्युपगमे आत्मेन्द्रियसन्निधानान्नित्यमुपलब्धिर्न चेदनुपलब्धिर्वा प्रसजेत् आत्मनीन्द्रियेऽपि वा शक्तिप्रतिबन्धः कल्पनीय आत्मनो निर्विकारत्वात्सोऽनुपपन्नः अकस्मादिन्द्रियेषु च सोऽनुपपन्न इति व्याख्यातं तदप्ययुक्तम् अन्तःकरणाभ्युपगमे ऽपिनित्यानुपलम्भादिप्रसङ्गस्य शक्तिप्रतिबन्धकल्पनानुपपत्तेश्च तुल्यत्वात्, अन्तः-

करणस्यावधानानवधानाभ्यां नित्योपलम्भाद्यप्रसङ्ग इति चेन्न लाघवन्यायेनात्मन एवावधानानवधानाभ्यां तदप्रसङ्ग इति कल्पनस्य युक्तत्वात् आत्मनो निर्विकारत्वेऽपि इच्छाद्वेषादिवत् प्रतिबन्धशक्तिमत्त्वमपि युज्यते । इच्छाद्वेषादिकमपरमार्थं इति चेत् शक्तिप्रतिबन्धोऽपि तादृश एवात्मनि कल्प्यताम् इन्द्रियेषु तत्कल्पनमपि नाकस्माद् भवति अदृष्टदेशकालादिसापेक्षत्वात्, यद्यन्यत्र मना अभूवमिति श्रुतिवशादन्तःकरणाभ्युपगमः, तर्ह्यन्यथासिद्ध्युपहतदुर्बलतर्कं विहाय श्रुतिबलमेव सूत्रयितव्यम् अतः सूत्रवैयर्थ्यमेव भवति, अन्येषां तु पक्षो न विरुद्धो व्यतिरेकोगन्धवदिति सूत्रस्य ज्ञातृत्वे प्रमाणोपस्थापकत्वमेव युक्तं न तु गुणस्य स्वाश्रयानतिवृत्तित्वशङ्कापरिहारार्थत्वं गन्धदृष्टान्तेन तस्या दुष्परिहरत्वात्, गन्धाश्रयद्रव्यसूक्ष्मावयवविशरणाद्धि दूरे गन्धोपलब्धिः । न च प्रविरलमेव द्रव्यं गुण इत्युच्यत इति च युक्तं तूलस्य गुणत्वाप्रसिद्धेः, न च विशीर्णविरलद्रव्यं गुणः अयश्चूर्णस्यायोगुणत्वाप्रसिद्धेः, स्वाभ्युपगतं गुणगुणिनोरभेदमाश्रित्य गुणत्वव्यवहार इति चेन्न बहुलद्रव्यस्याप्यभिन्नत्वाविशेषेण गुणव्यवहारप्रसङ्गात् । विरलत्वं नाम किं सान्तरत्वं ? तदा ज्ञानस्य गुणत्वं न स्यात् प्रसृप्तज्ञानस्य जालस्येव सच्छिद्रत्वादर्शनात् । यदि सूक्ष्मत्वं विरलत्वं तर्ह्यात्मस्वरूपस्यापि गुणत्वं स्यात् अङ्गारे सत्यर्चिषां नाशे पुनरपि प्रभोत्थानं युक्तं परिणामित्वात् पुनर्ज्ञातप्रभोत्थानमयुक्तमिति शङ्कानिरासार्थं मणिप्रभादृष्टान्तविषयं "यावदात्मभावित्वादि"ति, सूत्रमित्ययुक्तं गुणाद्वाऽऽलोकवदित्यत्रैव प्रभाप्रभावद्दृष्टान्तस्याभिहितत्वाच्च रत्नप्रभान्यायेन धर्मधर्मिभावे सम्भवति प्रभाऽनुत्थानशङ्काऽनुपपत्तेः, तत्र प्रदीपप्रभादृष्टान्त एवाभिप्रेतः न तु मणिप्रभादृष्टान्त इति चेत् आलोक–शब्दस्य साधारणस्य सङ्कोचकाभावाद्धि ज्ञानव्यपदेशामुख्यत्वदोषपरिहारस्यापेक्षितत्वेन तदकरणानुपपत्तेश्च ॥ ज्ञाधिकरणं समाप्तम् ॥

कर्त्रधिकरणम् । **सू० कर्त्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥**

**भू० आत्मैव कर्त्ता न गुणाः कस्मात् शास्त्रार्थवत्त्वात् शास्त्राणि**

हि "यजेत स्वर्गकामः" "मुमुक्षुर्ब्रह्मोपासीत" इत्येवमादीनि स्वर्गमोक्षादिफलस्य भोक्तारमेव कर्तृत्वे नियुञ्जते, न ह्यचेतनस्य कर्तृत्वेऽन्यो नियुज्यते शासनाच्च शास्त्रं, शासनं च प्रवर्तनं शास्त्रस्य च प्रवर्तकत्वं बोधजननद्वारेण, अचेतनं च प्रधानं न बोधयितुं शक्यम्, अतः शास्त्राणामर्थवत्त्वं भोक्तुश्चेतनस्यैव कर्तृत्वे भवेत्तदुक्तं "शास्त्रफलं प्रयोक्तरी"ति ॥

टी० सू० कर्ता शास्त्रार्थवत्त्वात्, अवान्तरसङ्गतिमाह "अयमात्मे"ति, ज्ञातृत्वाद्धि कर्तृत्वमतः कर्तृत्वोपयुक्तज्ञातृत्वनिरूपणानन्तरं कर्तृत्वनिरूपणादिह सङ्गतिरिति भावः । किमात्मैव कर्ता? उत प्रधान? मिति किमात्मनः कर्तृत्वे एव ज्योतिष्टोमादिशास्त्राणाम् अर्थवत्त्व? मुत प्रधानस्य कर्तृत्व? इति, कर्तृत्वनिषेधः किमात्मनः कर्तृत्वे सम्भवति ने? ति च यदा प्रधानस्य कर्तृत्वे शास्त्राणामर्थवत्त्वं यदा चात्मनः कर्तृत्वे कर्तृत्वनिषेधश्च न न सम्भवति तदा प्रधानं कर्तृ स्यात्, यदाऽऽत्मन एव कर्तृत्वे शास्त्राणामर्थवत्त्वं कर्तृत्वनिषेधश्च विषयवान्स्यात् तदानीमात्मैव कर्ता स्यात्. हन्ता चेन्मन्यते हन्तुमित्यत्र हन्तुमिति पदमुदन्तद्वितीयान्तं सेतुं जन्तुमितिवत् हन्तारमित्यर्थः । आत्मानमित्यध्याहर्तव्यमित्याह हन्तारमिति अस्मिन्वाक्ये हननक्रियायामेव कर्तृत्वनिषेधः प्रतीयते नान्यक्रियायामित्यत्राह "तथा चे"ति, उपबृंहणवाक्ये सर्वक्रियाकर्तृत्वनिषेधाद्धन्ता चेदित्यत्रोक्तं हननमुपलक्षणार्थमित्यर्थः । एवं प्राप्त इत्यादि शास्त्रार्थवत्त्वात् शास्त्राणामर्थवत्त्वायेत्यर्थः प्रयोजनतया हेतुत्वं शास्त्रशब्दस्यावयवार्थेनात्मन एव कर्तृत्वमुपपादयति "शासनाच्चे"ति, भोक्तुरेव कर्तृत्वाच्चेतनस्यैव भोक्तृत्वाच्छास्त्रस्य बोधजननद्वारा प्रवर्तकत्वादचेतने बोधजननायोगाच्च चेतनः कर्तेत्यर्थः । तदुक्तमिति कर्मविचार इत्यर्थः । परोक्तश्रुतिवाक्यार्थमाह—

भू० यदुक्तं हन्ता चेन्मन्यते इत्यादिना, हननक्रियायामकर्तृत्वमात्मनः श्रूयते इति तदात्मनो नित्यत्वेन हन्तव्यत्वाभावादुच्यते, यच्च प्रकृतेः क्रियमाणानीत्यादिना गुणानामेव कर्तृत्वं स्मर्य्यत इति तत्सांसारिकप्रवृत्तिष्वस्य कर्तृता सत्त्वरजस्तमोगुणसंसर्गकृता न स्वरूपप्रयुक्तेति प्राप्ताप्राप्तविवेकेन गुणानामेव कर्तृत्वमित्युच्यते, तथा च तत्रैवोच्यते "कारणं गुणसङ्गोऽस्य सदसद्योनिजन्म" स्विति तथा तत्रैवात्मनश्च कर्तृत्वमभ्युपेत्योच्यते "तत्रैवं सति कर्त्तारमात्मानं केवलं तु यः । पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिरि"ति, "अधिष्ठानं तथा कर्त्ता करणं च पृथग्विधम् । विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चम"मित्यधिष्ठानादिदैवपर्य्यन्तसापेक्षे सत्यात्मनः कर्तृत्वे य आत्मानमेव केवलङ्कर्त्तारं मन्यते न स पश्यतीत्यर्थः,

**सू० उपादानाद्विहारोपदेशाच्च ॥ ३४ ॥**

स यथा महाराज इति प्रकृत्य एवमेवैष एतान्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तत इति प्राणानामुपादाने विहारे च कर्तृत्वमुपदिश्यते ॥

टी० "यदुक्त"मिति, आत्मनो हन्तव्यत्वाभावादस्य हन्तृत्वं नास्तीत्यर्थः । स्मृतिवचनस्यार्थमाह "यच्चे"ति, प्रकृतेरित्यादिना चोद्यानुवादः । तस्याभिप्रेतार्थमाह "तत्सांसारिके"त्यादि, गुणानामेव कर्तृतेति तस्मिन्वचने प्रतीयमानार्थानुवादः, प्राप्ताप्राप्तविवेकेन—अन्वयव्यतिरेकनिरूपणेनेत्यर्थः । गुणानामेव कर्तृतेति वचनस्येदं तात्पर्यं सांसारिकप्रवृत्तिष्वस्य कर्तृत्वमन्वयव्यतिरेकवशात्सत्त्वरजस्तमःसंसर्गकृतमिति संसारदशायां

प्रवृत्तिः सांसारिकप्रवृत्तिः । गुणसङ्गकृतत्वं स्पष्टयति "तथा चे"ति, तथेति केवलम्—अधिष्ठानादिरहितमित्यर्थः तत्रैवमित्यादिवचनस्याप्यात्मनः कर्तृत्वनिषेधपरत्वभ्रमव्यावृत्त्यर्थम् एवं सति केवलमिति, पदार्थविशदार्थमाह "अधिष्ठान"मिति, अधिष्ठानं शरीरं, चेष्टा-शब्देन पञ्चवृत्तिप्राणो लक्ष्यते सापेक्षे सतीत्यन्तेन एवं सतीत्यस्य व्याख्यानं, "शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः"॥ इत्यस्य वचनस्यानन्तरं हि तत्रैवं सतीत्यादि इति वचनम् सू॰ उपादानाद्विहारोपदेशाच्च, गृहीत्वेत्युपादानमुक्तं परिवर्तेत इति विहार उक्तः, इन्द्रियप्रेरणे शरीरप्रेरणे च कर्तृत्वमुक्तमित्यर्थः ॥

## सू॰ व्यपदेशाच्च क्रियायां न चेन्निर्देश-विपर्ययः ॥ ३५ ॥

सू॰ "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चे"ति लौकिकवैदिकक्रियासु कर्तृत्वव्यपदेशाच्च कर्ता । विज्ञान—शब्देन नात्मनो व्यपदेशः अपि त्वन्तःकरणस्य बुद्धेरिति चेत् एवं सति निर्देशविपर्ययः स्याद्बुद्धेः करणत्वाद्विज्ञानेनेति करणविभक्तिनिर्देशः स्यात् ॥

## सू॰ उपलब्धिवदनियमः ॥ ३६ ॥

आत्मनोऽकर्तृत्वे दोष उच्यते, यथाऽऽत्मनो विभुत्वे नित्योपलब्ध्यनुपलब्धिप्रसङ्ग इत्यादिनोपलब्धेरनियमः उक्तः तद्वदात्मनोऽकर्तृत्वे प्रकृतेश्च कर्तृत्वे तस्याः सर्वपुरुषसाधारणत्वात्सर्वाणि कर्माणि सर्वेषां भोगाय स्युः, नैव वा कस्यचिदात्मनो विभुत्वाभ्युपगमात्सन्निधानमपि सर्वेषामविशिष्टम्, अत एव चान्तःकरणादीनामपि नियमो नोपपद्यते यदायत्ता व्यवस्था स्यात्, ॥

सू० शक्तिविपर्ययात् ॥ ३७ ॥

बुद्धेः कर्तृत्वे कर्त्तुरन्यस्य भोक्तृत्वानुपपत्तेः भोक्तृत्वशक्तिरपि तस्या एव स्यादित्यात्मनो भोक्तृत्वशक्तिर्हीयेत भोक्तृत्वं च बुद्धेरेव संपद्यत इत्यात्मसद्भावे प्रमाणाभावश्च स्या"त्पुरुषोऽस्ति भोक्तृभावा"दिति हि तेषामभ्युपगमः,

सू० समाध्यभावाच्च ॥ ३८ ॥

बुद्धेः कर्तृत्वे मोक्षसाधनभूतसमाधावपि सैव कर्त्री स्यात्स च समाधिः प्रकृतेरन्योऽस्मीत्येवंरूपः, न च प्रकृतेरन्योऽस्मीति प्रकृतिः समाधातुमलम्, अतोऽप्यात्मैव कर्त्ता ॥ नन्वात्मनः कर्तृत्वेऽभ्युपगम्यमाने सर्वदा कर्तृत्वं नोपरमेतेत्यत्राह—

सू० यथा च तक्षोभयथा ॥ ३९ ॥

वागादिकरणसंपन्नोऽप्यात्मा यदेच्छति तदा करोति यदा तु नेच्छति तदा न करोति, यथा तक्षा वास्यादिकरणसन्निधानेऽपीच्छानुगुण्येन करोति न करोति च ॥

टी० सू॰ व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः, यज्ञं तनुते कर्माणि तनुते इति लौकिकवैदिकक्रियाकर्तृत्वमुक्तं, विज्ञानेनेति तत्राप्युपचरितत्वे सति स एव दोष इति भावः । सू॰ उपलब्धिवदनियमः, यो यदन्तःकरणो यत्कर्म चक्रे तदन्तःकरणेनैव तेनानुभाव्यमित्यत्राह "अत एव"चेति, । सू॰ शक्तिविपर्ययात्, ततः किमित्यत्राह "भोक्तृत्वं चे"ति, कथं प्रमाणाभाव इत्यत्राह "पुरुषोऽस्ती"ति, सू॰ समाध्यभावाच्च, अचेतनत्वादपि प्रकृतेः समाधिर्नोपपद्यते प्रकृतेरन्योऽस्मीत्येवंरूपत्वाच्च नोपपद्यत इत्यर्थः । अनन्तरसूत्रशङ्कामाह "नन्वि"ति, सू॰ यथा च तक्षोभयथा च, उक्तदूषणं त्वत्पक्ष एव प्रसजतीत्याह—

सू० बुद्धेस्त्वचेतनायाः कर्तृत्वे तस्याः भोगवाञ्छादिनियमकारणाभावात्सर्वदा कर्तृत्वमेव स्यात् ॥ कर्त्रधिकरणं समाप्तम् ॥

टी० "बुद्धेस्त्व"ति, परे चापरे च समाध्यभावादित्यन्तं सूत्रजातमात्मनः कर्तृत्वसमर्थनपरमधिकरणं वर्णयित्वा यथा च तक्षोभयथेति सूत्रं कर्तृत्वस्यौपाधिकत्वप्रतिपादकमधिकरणान्तरं वर्णयन्ति, तत्रोच्यते कर्ता शास्त्रेत्यत्र कर्तृत्वस्य स्वाभाविकतया पारमार्थ्यं किं प्रतिपिपादयिषितम्? उतौपाधिकत्वेनापारमार्थ्यम्? उत कर्तृत्वमात्रं? प्रथमेऽनन्तराधिकरणविरोधः, द्वितीयेऽनन्तरेण पुनरुक्तिः, तत्र ह्यौपाधिकत्वं समर्थनीयं मतं, तृतीये संशयाभावादनारम्भणीयता देहस्य वा तदतिरिक्तस्य वा कस्यचिदात्मतयाऽभिमतस्य कर्तृत्वं हि सर्वजनसंमतम्, अहमिदं करोमीति हि सर्वेषां प्रतिपत्तिः। ननु प्रकृतिरेव करोति सांख्यपक्षनिरासार्थ आरम्भ इति चेन्न प्रकृतिगतस्य वान्तःकरणगतस्य वा कर्तृत्वस्यात्मन्यध्यस्तत्वाभ्युपगमस्य युवयोरविशिष्टत्वात् । ननु प्रकृतिरेव करोति तत्पक्षः अतस्तन्निरासेन बुद्ध्युपहित आत्मा कर्तेति समर्थनार्थमधिकरणमिति चेत् किं बुद्ध्युपधानेन कर्तृत्वं परमात्मन उच्यते? उत जीवात्मनां? नाद्यः अन्तःकरणसृष्टौ बुद्ध्युपधानेन विना कर्तृत्वस्याभ्युपगन्तव्यत्वात्, अन्यथा बुद्ध्युपधानात्कर्तृत्वं कर्तृत्वाद् बुद्ध्युपधानमित्यन्योन्याश्रयप्रसङ्गात्, प्रलयावस्थायामन्तःकरणान्तराभ्युपगमे एकत्वावधारणविरोधाच्च । नापि द्वितीयः त्वन्मते बुद्ध्युपधानात् पूर्वं जीवपरमात्मविभागाभावेन जीवगतकर्तृत्वं बुद्ध्युपधाननिबन्धनमिति वक्तुमशक्यत्वात्, जीवत्वं कर्तृत्वं च बुद्ध्युपहितस्य ब्रह्मण इति चेन्न बुद्धेरनादित्वे महतो लयश्रुतिविरोधात्, आदिमत्त्वे जीवानामादिमत्त्वप्रसङ्गात्, बुद्धिसृष्टावन्योन्याश्रयस्य पूर्वोक्तस्य दुस्तरत्वाच्च । विज्ञानं यज्ञमित्यादिवाक्यविषयस्य व्यपदेशाच्च क्रियायामिति सूत्रस्य विज्ञानशब्दवाच्यजीवस्य कर्तृत्वप्रतिपादकत्वात्, तथा भवद्भिर्व्याख्यातत्वाच्च, विज्ञान-शब्दस्य बुद्धिमात्रविषयत्वनिर्बन्धश्चानुपपन्नः, न हीदं सूत्रं पूर्वपक्षविषयं व्याख्यातं तथा सति यथा च तक्षेति सिद्धान्तसूत्रं स्यात्, ततश्च तस्य पृथगधिकरणत्वानुपपत्तिः विज्ञान-शब्द-

